काशी संस्कृत ग्रन्थमाला १२७

शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनशाखीयं

# शतपथब्राह्मणम्

( विस्तृतानुसन्धानपूर्वकभूमिकासर्वक्रतुप्रयोग-काण्डक्रानुक्रमणिकासहितम् )

( सम्पूर्णम् )

श्री काशी संस्कृत ग्रन्थमाला १२७

शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनशाखीयं

# शतपथब्राह्मणम्

विस्तृतानुसन्धानपूर्वकभूमिकासर्वक्रतुप्रयोगकण्डिका-
नुक्रमणिकासहितम्

( सम्पूर्णम् )

काशीहिन्दूविश्वविद्यालयधर्मविज्ञानविभागभूतपूर्वाध्यक्षेण
महामहोपाध्यायेन शास्त्ररत्नाकरेण
पण्डित चिन्नस्वामिशास्त्रिणा
तच्छिष्येण जयगुरमहाराजसंस्कृतकालेजाध्यक्षेण न्यायमीमांसासाहित्याचार्येण
पद्मभूषणेन
पण्डित पट्टाभिरामशास्त्रिणा च
भूमिकाटिप्पण्यादिभिस्संशोधितम्
काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालये वेदसङ्कायाध्यक्षेण
वेदसाहित्याचार्येण
पण्डित रामनाथदीक्षितेन
सम्पादितम्



चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा प्रचारक
पो० आ० चौखम्भा, पो० बा० नं० १३९
जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी
मुद्रक : विद्याविलास प्रेस, वाराणसी
संस्करण : द्वितीय; वि० सं० २०४०
मूल्य : रु० २५०-००



अन्य प्राप्तिस्थान
चौखम्भा विश्वभारती
पोस्ट बाक्स नं० ८४
चौक ( चित्रा सिनेमा के सामने )
वाराणसी-२२१००१ ( भारत )
फोन : ६५४४४

THE
KASHI SANSKRIT SERIES
127
*****

# ŚATAPATHA BRĀHMAṆA

OF
THE WHITE YAJURVEDA
IN THE MĀDHYANDINA RECENSION
**( Complete Volume )**
together with comprehensive
**Brāhmaṇa Index, Critical Introduction And Notes.**

*Edited by*
VEDAVIŚĀRADA MĪMĀMSAKEŚARĪ
Pandit A. CHINNASWAMI ŚĀSTRI
Principal of the College of Theology
*Ex., Prof. of Mīmāmsā & Dharmaśastra, B. H. U.*

AND
HIS PUPIL
PADMABHŪṢAṆA
Pandit PATTĀBHIRĀMA ŚĀSTRY
*Asst. Professor of Mīmāmsā, B. H. U.*

AND
Pandit RĀMANĀTHA DĪKṢITA
*Ex. Professor of Veda, Dean, Faculty of Oriental Learning and Theology, B. H. U. VARANASI*

CHAUKHAMBHA SANSKRIT SANSTHAN
*Publisher and Distributor of Oriental Cultural Literature*
P. O. Chaukhambha, P. Box No. 139
'adau Bhawan, K. 37/116, Gopal Mandir Lane
VARANASI-221001 ( INDIA )

* श्रीः *

शुक्लयजुर्वेदीयमाध्यन्दिनशाखीयं

# शतपथब्राह्मणम्

*हविर्यज्ञाख्यं प्रथमं काण्डम् ॥

॥ ॐ ॥ व्रतमुपैष्यन्। अन्तरेणाहवनीयं च गार्हपत्यं च प्राङ्तिष्ठन्नपऽउपस्पृशति तद्यदपऽ उपस्पृशत्यमेध्यो वै पुरुषो यदनृतं व्वदति तेन पूतिरन्तरतो मेध्या वाऽआपो मेध्यो भूत्वा व्वतमुपायानीति पवित्रं वाऽआपः पवित्रपूतो व्वतमुपायानीति तस्माद्वाऽअपऽ उपस्पृशति ॥ १ ॥ सोऽग्निमेवाभीक्षमाणो व्वतमुपैति । (१)"अग्ने व्वतपते व्वतं चरिष्यामि तच्छकेयं तन्मे राध्यता"मित्यग्निर्वै देवानां व्वतपतिस्तस्माऽएवैतत्प्राह व्वतं चरिष्यामि तच्छकेयं तन्मे राध्यतामिति नात्र तिरोहितमिवास्ति ॥ २ ॥ अथ सᳬस्थिते विसृजते । (२)"अग्ने व्वतपते व्वतमचारिषं तदशकं तन्मेऽराधी"त्यशकद्ध्येतद्यो यज्ञस्य सᳬस्थामगन्नराधि ह्यस्मै यो यज्ञस्य सᳬस्थामगन्नेतेन न्वेव भूयिष्ठाऽ इव व्रतमुपयन्त्यनेन त्वेवोपेयात् ॥ ३ ॥ द्वयं वाऽइदं न तृतीयमस्ति । सत्यं चैवानृतं च सत्यमेव देवाऽ अनृतं मनुष्याऽ (३)"इदमहमनृतात्सत्यमुपैमी"ति तन्मनुष्येभ्यो देवानुपैति ॥ ४ ॥ स वै सत्यमेव व्वदेत् । एतद्ध वै देवा व्वतं चरन्ति यत्सत्यं तस्मात्ते यशो यशो ह भवति यऽ एवं व्विद्वान्त्सत्यं व्वदति ॥५॥ अथ सᳬस्थिते व्विसृजते । (४)"इदमहं यऽ एवास्मि सोऽस्मी"त्यमानुषऽइव वाऽएतद्भवति

---

* काण्डमिदं काण्वशतपथे द्वितीयकाण्डत्वेन परिगणितम् ।

१. मा. सं. १. ५.
२. मा. सं. २. २८.
३. मा. सं. १. ५.
४. मा. सं. २. २८.

यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहꣳसत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिदमहं य एवास्मि सोऽस्मी(१)त्येव व्रतं विसृजेत ॥६॥ अथातोऽशनानशनस्यैव । तदुहाषाढः सावयसोऽनशनमेव व्रतं मेने मनो ह वै देवा मनुष्यस्याजानन्ति त ऽएनमेतद्व्रतमुपयन्तं विदुः प्रातर्नो यक्ष्यत ऽ इति तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स ऽ उपवसथः ॥ ७ ॥ तन्न्वेवानवक्लृप्तम् । यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु नैवाऽश्नीयात् ॥ ८ ॥ तदु होवाच याज्ञवल्क्यः । यदि नाश्नाति पितृदेवत्यो भवति यद्यु ऽअश्नाति देवानत्यश्नातीति स यदेवाशितमनशितं तदश्नीयादिति यस्य वै हविर्न गृह्णन्ति तदशितमनशितꣳ स यदश्नाति तेनापितृदेवत्यो भवति यद्यु तदश्नाति यस्य हविर्न गृह्णन्ति तेनो देवान्नात्यश्नाति ॥ ९ ॥ स वाऽआरण्यमेवाश्नीयात् । (२)या वा ऽआरण्याऽ ओषधयो यद्वा वृक्ष्यं तदु ह स्माहापि बर्कुर्वार्ष्णो माषान्मे पचत न वाऽएतेषाꣳ हविर्गृह्णन्तीति तदु तथा न कुर्याद्व्रीहियवयोर्वाऽ (३)एतदुपचं यच्छमीधान्यं तद्व्रीहियवावेवैतेन भूयाꣳसौ करोति तस्मादारण्यमेवाश्नीयात् ॥१०॥ सऽआहवनीयागारे वैताꣳ रात्रिꣳ शयीत । गार्हपत्यागारे वा देवान्वाऽएषऽ उपावर्त्तते यो व्रतमुपैति स यानेवोपावर्त्तते तेषामेवैतन्मध्ये शेतेऽधः शयीताधस्तादिव हि श्रेयसऽ उपचारः ॥ ११ ॥ स वै प्रातरपऽ एव । प्रथमेन कर्मणाभिपद्यतेऽपः प्रणयति यज्ञो वाऽआपो यज्ञमेवैतत्प्रथमेन कर्मणाभिपद्यते ताः प्रणयति यज्ञमेवैतद्वितनोति ॥ १२ ॥ स प्रणयति । (४)"कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ती"त्येताभिरनिरुक्ताभिर्व्याहृतिभिरनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत् प्रजापतिमेवैतद्यज्ञं युनक्ति॥१३॥ यद्वेवापः प्रणयति । अद्भिर्वाऽइदꣳ सर्व्वमाप्तं तत्प्रथमेनैवैतत्कर्मणा

१. त्येवं. क. २. या वारण्या. क. ३. उपजं. क. ४. मा. सं. १. ६.

सर्व्वमाप्नोति ॥ १४ ॥ यद्वेवास्यात्र । होता वाध्वर्युर्वा ब्रह्मा वाग्नीध्रो वा स्वयं वा यजमानो नाभ्यापयति तदेवास्यैतेन सर्वमाप्तं भवति ॥ १५ ॥ यद्वेवापः प्रणयति । देवान्ह वै यज्ञेन यजमानांस्तानसुररक्षसानि ररक्षुर्न यक्ष्यध्वऽइति तद्यदरक्षंस्तस्माद्रक्षाꣳसि ॥ १६ ॥ ततो देवाऽएतं व्वज्रं ददृशुः । यदपो व्वज्रो वाऽआपो व्वज्रो हि वाऽआपस्तस्माद्येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति ततऽएतं वज्रमुदयच्छंस्तस्याभयेऽनाष्ट्रे निवाते यज्ञमतन्वत तथोऽएवैष एतं व्वज्रमुद्यच्छति तस्याभयेऽनाष्ट्रे निवाते यज्ञं तनुते तस्मादपः प्रणयति ॥ १७ ॥ ताऽउत्सिच्योत्तरेण गार्हपत्यꣳ सादयति । योषा वाऽआपो व्वृषाग्निर्गृहा वै गार्हपत्यस्तद्गृहेष्वेवैतन्मिथुनं प्रजननं क्रियते व्वज्रं वाऽएषऽउद्यच्छति योऽपः प्रणयति यो वाऽअप्रतिष्ठितो व्वज्रमुद्यच्छति नैनꣳ शक्नोत्युद्यन्तुꣳ सꣳ हैनꣳ शृणोति ॥ १८ ॥ स यद्गार्हपत्ये सादयति । गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति तथो हैनमेष व्वज्रो न हिनस्ति तस्माद्गार्हपत्ये सादयति ॥ १९ ॥ ताऽउत्तरेणाहवनीयं प्रणयति । योषा वाऽआपो व्वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियतऽएवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमुपशेते ॥ २० ॥ ता नान्तरेण सञ्चरेयुः । नेन्मिथुनं चर्यमाणमन्तरेण सञ्चरानिति ता नातिहृत्य सादयेन्नोऽअनाप्ताः सादयेत्स यदतिहृत्य सादयेदस्ति वाऽअग्नेश्चापां च व्विभ्रातृव्यमिव स यथेव ह तदग्नेर्भवति यत्रास्याप उपस्पृशन्त्यग्नौ ह्याधि भ्रातृव्यं वर्धयेद्यदतिहृत्य सादयेद्यद्युऽअनाप्ताः सादयेन्नो हाभिस्तं काममभ्यापयेद्यस्मै कामाय प्रणीयन्ते तस्मादु समप्रत्येवोत्तरेणाहवनीयं प्रणयति ॥ २१ ॥ अथ तृणैः परिस्तृणाति । द्वन्द्वं पात्राण्युदाहरति शूर्पं चाग्निहोत्रहवणीं च स्फ्यं च कपालानि च शम्यां च कृष्णाजिनं चोलूखलमुसले दृषदुपले तद्दश दशाक्षरा वै व्विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वं

द्वन्द्वं वै वीर्यं यदा वै द्वौ सꣳरभेतेऽअथ तद्वीर्यं भवति द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते ॥ २२ ॥ Cf. का. श. २.१.१.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

## १. १. २.

अथ शूर्पं चाग्निहोत्रहवणीं चादत्ते। (१)"कर्मणे वां व्वेषाय वा"-मिति यज्ञो वै कर्म यज्ञाय हि तस्मादाह कर्मणे वामिति व्वेषाय वामिति व्वेवेष्टीव हि यज्ञम् ॥१॥ अथ व्वाचं यच्छति। व्वाग्वै यज्ञोऽविक्षुब्धो यज्ञं तनवाऽइत्यथ प्रतपति (२)"प्रत्युष्टꣳरक्षः प्रत्युष्टाऽ अरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽ अरातय" इति वा ॥२॥ देवा ह वै यज्ञं तन्वानाः। तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुस्तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षाꣳस्यतोऽपहन्ति ॥ ३ ॥ अथ प्रैति। (३)"उर्व्वन्तरिक्षमन्वेमी"त्यन्तरिक्षं वाऽअनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्ब्रह्मणैवैतदन्तरिक्षमभयमनाष्ट्रं कुरुते ॥ ४ ॥ स वाऽअनसऽ एव गृह्णीयात्। अनो ह वाऽअग्रे पश्चेव वाऽइदं यच्छालꣳ स यदेवाग्रे तत्करवाणीति तस्मादनसऽ एव गृह्णीयात् ॥ ५ ॥ भूमा वाऽअनः। भूमा हि वाऽअनस्तस्माद्यदा बहु भवत्यनोवाह्यमभूदित्याहुस्तद्भूमानमेवैतदुपैति तस्मादनसऽ एव गृह्णीयात् ॥६॥ यज्ञो वाऽअनः। यज्ञो हि वाऽअनस्तस्मादनसऽ एव यजूꣳषि सन्ति न कौष्ठस्य न कुम्भ्यै भस्त्रायै ह स्मर्षयो गृह्णन्ति तदृषीन्प्रति भस्त्रायै यजूꣳष्यासुस्तान्येतर्हि प्राकृतानि यज्ञाद्यज्ञं निर्मिमाऽइति तस्मादनस एव गृह्णीयात् ॥ ७ ॥ उतो पात्र्यै गृह्णन्ति। अनन्तरायमु तर्हि यजूꣳषि जपेत्स्फ्यमु (४)तद्वैधस्तादुपोह्य गृह्णीयाद्यतो

१. मा. सं. १. ६. २. मा. सं. १. ७. ३. मा. सं. १. ७. ४. तर्ह्यवस्तद्. क.

युनजाम ततो व्विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो व्विमुञ्चन्ति ॥८॥ तस्य वाऽएतस्यानसः । अग्निरेव धूरग्निर्हि वै धूरथ य एनद्वहन्त्यग्निदग्धमिवैषां व्वहं भवत्यथ यज्जघनेन कस्तम्भीं प्रउगं व्वेदिरेवास्य सा नीडऽ एव हविर्धानम् ॥ ९ ॥ स धुरमभिमृशति । (१)“धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वाम” इत्यग्निर्वाऽएष धुर्यस्तमेतदत्येष्यन्भवति हविर्ग्रहीष्यंस्तस्माऽएवैतान्निह्नुते तथो हैतमेषोऽतियन्तमग्निर्धुर्यो न हिनस्ति ॥ १० ॥ तद्ध स्मैतदारुणिराह । अर्धमासशो वाऽअहꣳसपत्नान्धूर्वामीत्येतद्ध स्म स तदभ्याह ॥ ११ ॥ अथ जघनेन कस्तम्भीमीषामभिमृश्य जपति । (२)“देवानामसि व्वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् । अह्रुतमसि हविर्धानं दृꣳहस्व मा ह्वा”रित्यनऽ एवैतदुपस्तौत्युपस्तुताद्रातमनसो हविर्गृह्णानीति मा ते यज्ञपतिर्ह्वार्षीदिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वलमाशास्ते ॥ १२ ॥ अथाक्रमते । (३)“व्विष्णुस्त्वा क्रमतामि”ति यज्ञो वै व्विष्णुः स देवेभ्य इमां व्विक्रान्तिं व्विचक्रमे यैषामियं व्विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैषऽ एतस्मै व्विष्णुर्यज्ञो व्विक्रान्तिं व्विक्रमते ॥१३॥ अथ प्रेक्षते । “उरु व्वाताये”ति प्राणो वै व्वातस्तद्ब्रह्मणैवैतत्प्राणाय व्वातायोरुगायं कुरुते ॥ १४ ॥ अथापास्यति । “अपहतꣳ रक्ष” ऽ इति यद्यत्र किञ्चिदापन्नं भवति यद्यु नाभ्येव मृशेत्तन्नाष्ट्राऽ एवैतद्रक्षाꣳस्यतोऽपहन्ति ॥१५॥ अथाभिपद्यते । “यच्छन्तां पञ्चे”ति पञ्च वाऽइमाऽ अङ्गुलयः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतदत्र दधाति ॥ १६ ॥ अथ गृह्णाति । (४)“देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं गृह्णामी”ति सविता वै देवानां प्रसविता तत्सवितृप्रसूतऽ एवैतद्गृह्णात्यश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू पूष्णो हस्ताभ्यामिति पूषा भागदुघोऽशनं पाणिभ्यामुपनि-

---

१. मा. सं. १. ८.  २. मा. सं. १. ९.  ३. मा. सं. १. ९.  ४. मा. सं. १. १०.

धाता सत्यं देवाऽ अनृतं मनुष्यास्तत्सत्येनैवैतद्गृह्णाति ॥ १७ ॥ अथ देवताया॑ऽआदिशति । सर्वा ह वै देवताऽ अध्वर्युꣳ हविर्ग्रहीष्यन्तमुपतिष्ठन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति ताभ्य एवैतत्सह सतीभ्योऽसमदं करोति ॥ १८ ॥ यद्वेव देवताया॑ऽआदिशति । यावतीभ्यो ह वै देवताभ्यो हवीꣳषि गृह्यन्तऽऋणमु हैव तास्तेन मन्यन्ते यदस्मै तं कामꣳसमर्धयेयुर्यत्काम्या गृह्णाति तस्माद्वै देवताया॑ऽआदिशत्येवमेव यथापूर्वꣳ हवीꣳषि गृहीत्वा ॥१९॥ अथाभिमृशति । "भूताय त्वा नारातय"ऽइति तद्यतऽ एव गृह्णाति तदेवैतत्पुनराप्याययति ॥ २० ॥ अथ प्राङ्प्रेक्षते । "स्वरभिविख्येषमि"ति परिवृतमिव वाऽएतदनो भवति तदस्यैतच्चक्षुः पाप्मगृहीतमिव भवति यज्ञो वै स्वरहर्देवाः सूर्य्यस्तत्स्वरेवैतदतोऽभिविपश्यति ॥ २१ ॥ अथावरोहति । "दृꣳहन्तां दुर्याः पृथिव्या"मिति गृहा वै दुर्यास्ते हेतऽ ईश्वरो गृहा यजमानस्य योऽस्यैषोऽध्वर्युर्यज्ञेन चरति तं प्रयन्तमनु प्रच्योतोस्तस्येश्वरः कुलं विक्षोब्धोस्तानेवैतदस्यां पृथिव्यां दृꣳहति तथा नानुप्रच्यवन्ते तथा न विक्षोभन्ते तस्मादाह दृꣳहन्तां दुर्याः पृथिव्यामित्यथ प्रैत्युर्वन्तरिक्षमन्वेमीति सोऽसावेव बन्धुः ॥ २२ ॥ स यस्य गार्हपत्ये हवीꣳषि श्रपयन्ति । गार्हपत्ये तस्य पात्राणि सꣳसादयन्ति जघनेनो तर्हि गार्हपत्यꣳ सादयेद्यस्याहवनीये हवीꣳषि श्रपयन्त्याहवनीये तस्य पात्राणि सꣳसादयन्ति जघनेनो तर्ह्याहवनीयꣳ सादयेत्पृथिव्यास्त्वा नाभौ सादयामीति मध्यं वै नाभिर्मध्यमभयं तस्मादाह पृथिव्यास्त्वा नाभौ सादयामीत्यदित्याऽउपस्थऽइत्युपस्थऽइवैनदभार्षुरिति वाऽआहुर्यत् सुगुप्तं गोपायन्ति तस्मादाहादित्याऽउपस्थऽइत्यग्ने हव्यꣳ रक्षेति तदग्नये चैवैतद्धविः परिददाति गुप्त्याऽअस्यै च पृथिव्यै तस्मादाहाग्ने हव्यꣳरक्षेति ॥ २३ ॥ Cf. का. श. २.१.२

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥

१. १. ३.

पवित्रे करोति ।(१) "पवित्रे स्थो व्वैष्णव्या"विति यज्ञो वै व्विष्णुर्यज्ञियेस्थऽ इत्येवैतदाह ॥ १ ॥ ते वै द्वे भवतः । अयं वै पवित्रं योऽयं पवते सोऽयमेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ् च प्रत्यङ् च ताविमौ प्राणोदानौ तदेतस्यैवानुमात्रां तस्माद् द्वे भवतः ॥ २ ॥ अथोऽअपि त्रीणि स्युः । व्यानो हि तृतीयो द्वे(२) त्त्वेव भवतस्ताभ्यामेताः प्रोक्षणीरुत्पूय ताभिः प्रोक्षति तद्यदेताभ्यामुत्पुनाति ॥ ३ ॥ व्वृत्रो ह वाऽइदꣳ सर्वं व्वृत्वा शिश्ये । यदिदमन्तरेण द्यावापृथिवी स यदिदꣳ सर्वं व्वृत्वा शिश्ये तस्माद्वृत्रो नाम ॥ ४ ॥ तमिन्द्रो जघान । स हतः पूतिः सर्वतऽ एवापोऽभिप्रसुस्राव सर्वत इव ह्ययꣳ समुद्रस्तस्मादु हैकाऽ आपो बीभत्साञ्चक्रिरे ताऽ उपर्युपर्यति (३)पुप्रुविरेऽत इमे दर्भास्ता हैताऽ अनापूयिताऽ आपोऽस्ति वाऽइतरासु सꣳसृष्टमिव यदेना व्वृत्रः पूतिरभिप्रास्रवत्तदेवासामेताभ्यां पवित्राभ्यामपहन्त्यथ मेध्याभिरेवाद्भिः प्रोक्षति तस्माद्वाऽएताभ्यामुत्पुनाति ॥५॥ सऽ उत्पुनाति । (४)"सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभि"रिति सविता वै देवानां प्रसविता तत्सवितृप्रसूतऽ एवैतदुत्पुनात्यच्छिद्रेण पवित्रेणेति यो वाऽअयं पवतऽएषोऽच्छिद्रं पवित्रमेतेनैतदाह सूर्य्यस्य रश्मिभिरित्येते वाऽउत्पवितारो यत् सूर्य्यस्य रश्मयस्तस्मादाह सूर्यस्य रश्मिभिरिति ॥ ६ ॥ ताः सव्ये पाणौ कृत्वा । दक्षिणेनोदिङ्गयत्यु पस्तौत्येवैनाऽ एतन्महयत्येव (५)"देवीरापोऽग्रेगुवोऽअग्रेपुव"ऽ इति देव्यो ह्यापस्तस्मादाह देवीराप इत्यग्रेगुव इति ता यत् समुद्रं गच्छन्ति तेनाग्रेगुवोऽग्रेपुवऽ इति ता यत्प्रथमाः सोमस्य राज्ञो भक्षयन्ति तेनाग्रेपुवोऽ(६)"ग्रऽइममद्य यज्ञं नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवमि"ति साधु यज्ञꣳ साधु यजमानमित्येवैतदा-

---

१. मा. सं. १. १२. २. त्वेव. ख. ग. ३. पुप्लुविरे. क.
४. मा. सं. १. १२. ५. मा. सं. १. १२. ६. मा. सं. १. १२.

ह ॥७॥(१)"युष्मा इन्द्रोऽवृणीत वृत्रतूर्य्ये"ऽइति । एताऽउ हीन्द्रोऽवृणीत वृत्रेण स्पर्धमान एताभिर्ह्येनमहँस्तस्मादाह युष्माऽ इन्द्रोऽवृणीत वृत्रतूर्य्येऽइति ॥८॥ (२)"यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्ये"ऽइति । एता उ हीन्द्रमवृणत वृत्रेण स्पर्धमानमेताभिर्ह्येनमहँस्तस्मादाह यूयमिन्द्रमवृणीध्वं वृत्रतूर्य्येऽ इति॥९॥ (३)"प्रोक्षिताः स्थे"ति । तदेताभ्यो निह्नुतेऽथ हविः प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यमेवैतत्करोति ॥१०॥ स प्रोक्षति । (४)अग्नये त्वा जुष्टं प्रोक्षामी"ति तद्यस्यै देवतायै हविर्भवति तस्यै मेध्यं करोत्येवमेव यथापूर्वँ हवीँषि प्रोक्ष्य ॥ ११ ॥ अथ यज्ञपात्राणि प्रोक्षति । (५)"दैव्याय कर्म्मणे शुन्धध्वं देवयज्याया"ऽइति दैव्याय हि कर्म्मणे शुन्धति देवयज्यायै(६) "यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामी"ति तद्यदेवैषामत्राशुद्धस्तक्षा वान्यो वामेध्यः कश्चित्पराहन्ति तदेवैषामेतदद्भिर्मेध्यं करोति तस्मादाह यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामीति ॥ १२ ॥ Cf. का. श. २. १. ३.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥

## १. १. ४.

अथ कृष्णाजिनमादत्ते । यज्ञस्यैव सर्व्वत्वाय(७) यज्ञो ह देवेभ्योऽपचक्राम स कृष्णो भूत्वा चचार तस्य देवाऽ अनुविद्य त्वचमेवावच्छायाजह्रुः ॥ १ ॥ तस्य यानि शुक्लानि च कृष्णानि च लोमानि तान्यृचां च साम्नां च रूपं यानि शुक्लानि तानि साम्नाँ रूपं यानि कृष्णानि तान्यृचां यदि वेतरथा यान्येव कृष्णानि तानि साम्नाँ रूपं यानि शुक्लानि तान्यृचां यान्येव बभ्रूणीव हरीणि तानि यजुषाँ

---

१. मा. सं. १. १३. २. मा. सं. १. १३. ३. मा. सं. १. १३.
४. मा. सं. १. १३. ५. मा. सं. १. १३. ६. मा. सं. १. १३.
७. See. तै. सं. ६.१.३.

रूपम् ॥ २ ॥ सैषा त्रयी विद्या यज्ञः । तस्याऽएतच्छिल्पमेष वर्णस्त-द्यत्कृष्णाजिनं भवति यज्ञस्यैव सर्वत्वाय तस्मात्कृष्णाजिनमधि दीक्षन्ते यज्ञस्यैव सर्वत्वाय तस्मादध्यवहननमधिपेषणं भवत्यस्कन्नᳪं हविरसदिति तद्यदेवात्र तण्डुलो वा पिष्टं वा स्कन्दात्तद्यज्ञे यज्ञः प्रतितिष्ठादिति तस्मादध्यवहननमधिपेषणं भवति ॥ ३ ॥ अथ कृष्णाजिनमादत्ते । "शर्मासी"ति चर्म वाऽएतत्कृष्णस्य तदस्य तन्मानुषᳪं शर्म देवत्रा तस्मादाह शर्मासीति तदवधूनो"त्यवधूतᳪं रक्षोऽवधूताऽअरातयऽ"इति तन्नाष्ट्राऽएवैतद्रक्षाᳪंस्यतोऽपहन्त्यतिनत्येव पात्राण्यवधूनोति यद्व्यस्यामेध्यमभूत्तद्व्यस्यै तदवधूनोति ॥ ४ ॥

( अर्धप्रपाठकः )

तत्प्रतीचीनग्रीवमुपस्तृणाति । "अदित्यास्त्वगसि प्रति त्वादितिर्वेत्त्वि"तीयं वै पृथिव्यदितिस्तस्याऽअस्यै त्वग्यदिदमस्यामधि किञ्च तस्मादाहादित्यास्त्वगसीति प्रति त्वादितिर्वेत्त्विति प्रति हि स्वः संजानीते तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्योऽन्यᳪं हिनसात इत्यभिनिहितमेव सव्येन पाणिना भवति ॥ ५ ॥ अथ दक्षिणेनोलूखलमाहरति । नेदिह पुरा नाष्ट्रा रक्षाᳪंस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहितमेव सव्येन पाणिना भवति ॥ ६ ॥ अथोलूखलं निदधाति । "अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्न"ऽइति वा तद्यथैवादः सोमᳪं राजानं ग्रावभिरभिषुण्वन्त्येवमेवैतदुलूखलमुसलाभ्यां दृषदुपलाभ्याᳪं हविर्यज्ञमभिषुणोत्यद्रयऽइति वै तेषामेकं नाम तस्मादाहाद्रिरसीति वानस्पत्यऽइति वानस्पत्यो ह्येष ग्रावासि पृथुबुध्न इति ग्रावा ह्येष पृथुबुध्नो ह्येष "प्रति त्वादित्यास्त्वग्वेत्त्वि"ति तत्संज्ञामेवैतत्कृष्णाजिनाय च वदति नेदन्योऽन्यᳪं हिनसातऽइति ॥ ७ ॥ अथ हवि-

---

१. मा. सं. १. १४.　२. मा. सं. १. १४.　३. एवं लिखितपुस्तकेष्वस्ति ।
४. मा. सं. १. १४.　५. मा. सं. १. १४.　६. मा. सं. १. १४.

रावपति। "अग्नेस्तनूरसि व्वाचो व्विसर्जन"मिति यज्ञो हि तेनाग्नेस्तनूर्व्वाचो व्विसर्जनमिति यां वा अमूँ हविर्ग्रहीष्यन्वाचं यच्छत्यत्र वै तां व्विसृजते तद्यदेतामत्र व्वाचं व्विसृजतऽएष हि यज्ञऽउलूखले प्रत्यष्ठादेष हि प्रासारि तस्मादाह व्वाचो व्विसर्जनमिति ॥ ८ ॥ स यदिदं पुरा मानुषीं व्वाचं व्याहरेत्। तत्रो व्वैष्णवीमृचं वा यजुर्व्वा जपेद्यज्ञो वै व्विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्ति"र्देवेभ्यो वीतये त्वा गृह्णामी"ति देवानवदित्यु हि हविर्गृह्यते ॥९॥ अथ मुसलमादत्ते। "बृहद्ग्रावासि वानस्पत्य"ऽइति बृहद्ग्रावा ह्येष वानस्पत्यो ह्येष तदवदधाति "सऽइदं देवेभ्यो हविः शमीष्व सुशमि शमीष्वे"ति सऽइदं देवेभ्यो हविः सुँस्कुरु साधु सꣳस्कृतꣳसुसꣳस्कुर्वित्येवैतदाह ॥ १० ॥ अथ हविष्कृतमुद्वादयति। "हविष्कृदेहि हविष्कृदेही"ति वाग्वै हविष्कृद्वाचमेवैतद्विसृजते व्वागु वै यज्ञस्तद्यज्ञमेवैतत्पुनरुपह्वयते ॥ ११ ॥ तानि वाऽएतानि। चत्वारि व्वाचऽएहीति ब्राह्मणस्यागह्याद्रवेति व्वैश्यस्य च राजन्यबन्धोश्चाधावेति शूद्रस्य स यदेव ब्राह्मणस्य तदाहैतद्धि यज्ञियतममेतदु ह वै व्वाचः शान्ततमं यदेहीति तस्मादेहीत्येव ब्रूयात् ॥ १२ ॥ तद्ध स्मैतत्पुरा। जायैव हविष्कृदुपोत्तिष्ठति तदिदमप्येतर्हि यऽएव कश्चोपोत्तिष्ठति स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति तद्यदेतामत्र व्वाचं प्रत्युद्वादयन्ति ॥ १३ ॥ मनोर्ह वाऽऋषभ आस। तस्मिन्नसुरघ्नी सपत्नघ्नी व्वाक्प्रविष्टास तस्य ह स्म श्वसथाद्रवथादसुररक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिरे पापं बत नोऽयमृषभः सचते कथं न्विमं दभ्नुयामेति किलाताकुलीऽइति हासुरब्रह्मावासतुः ॥ १४ ॥ तौ होचतुः। श्रद्धादेवो वै मनुरावं नु व्वेदावेति तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनेनर्षभेणेति तथेति तस्यालब्धस्य सा व्वागपचक्राम ॥ १५ ॥ सा मनोरेव जायां मना-

१. मा. सं. १. १५.  २. मा. सं. १. १५.  ३. मा. सं. १. १५.
४. मा. सं. १. १५.  ५. मा. सं. १. १५.  ६. See आप. श्रौ. १. २२. १२.

वीं प्रविवेश । तस्यै ह स्म यत्र व्वदन्त्यै शृण्वन्ति ततो ह स्मैवासुररक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिरऽइतो वै नः पापीयः सचते भूयो हि मानुषी व्वाग्वदतीति किलातकुली हैवोचतुः श्रद्धादेवो वै मनुरावं न्वेव व्वेदावेति तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनयैव जाययेति तथेति तस्याऽआलब्धायै सा व्वागपचक्राम ॥१६॥ सा यज्ञमेव यज्ञपात्राणि प्रविवेश । ततो हैनां न शेकतुर्निर्हन्तुᳬं सैषासुरघ्नी सपत्नघ्नी व्वागुद्वदति स यस्य हैवं विदुषऽ एतामत्र व्वाचं प्रत्युद्वादयन्ति पापीयाᳬंसो हैवास्य सपत्ना भवन्ति ॥१७॥ स समाहन्ति । "कुक्कुटोऽसि मधुजिह्वऽ" इति मधुजिह्वो वै स देवेभ्य आसीद्विषजिह्वोऽसुरेभ्यः स यो देवेभ्यऽआसीः स नऽएधीत्येवैतदाहे"षमूर्जमा वद त्वया व्वयᳬं सङ्घातᳬं सङ्घातं जेष्मे"ति नात्र तिरोहितमिवास्ति ॥ १८ ॥ अथ शूर्पमादत्ते । "व्वर्षवृद्धमसी"ति व्वर्षवृद्धᳬं ह्येतद्यदि नडानां यदि व्वेणूनां यदीषीकाणां व्वर्षमु ह्येवैता व्वर्धयति ॥ १९ ॥ अथ हविर्निर्व्वपति । "प्रति त्वा व्वर्षवृद्धं व्वेत्त्वि"ति व्वर्षवृद्धाऽउ ह्येवैते यदि व्रीहयो यदि यवा व्वर्षमु ह्येवैतान् वर्धयति तत्संज्ञामेवैतच्छूर्पाय च व्वदति नेदन्योऽन्यᳬं हिनसातऽइति ॥ २० ॥ अथ निष्पुनाति । "परापूतᳬं रक्षः परापूताऽअरातय"ऽइत्यथ तुषान्प्रहन्त्य"पहतᳬं रक्ष"ऽइति तन्नाष्ट्राऽएवैतद्रक्षाᳬंस्यतोऽपहन्ति ॥२१॥ अथापविनक्ति । "व्वायुर्वो व्विविनक्त्वि"त्ययं वै व्वायुर्योऽयं पवतऽएष वाऽइदᳬं सर्व्वं विविनक्ति यदिदं किञ्च व्विविच्यते तदेनानेष एवैतद्विविनक्ति स यदैतऽएतत्प्राप्नुवन्ति यत्रैनानध्यपविनक्ति ॥ २२ ॥ अथानुमन्त्रयते । "देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना" सुप्रतिगृहीताऽअसन्नित्यथ त्रिः फलीकरोति त्रिवृद्धि यज्ञः ॥ २३ ॥

---

१. मा. सं. १. १६.　२. मा. सं. १. १६.　३. मा. सं. १. १६.
४. मा. सं. १. १६.　५. मा. सं. १. १६.　६. मा. सं. १. १६.
७. स्यपहन्ति. क. पा.　८. मा. सं. १. १६.　९. मा. सं. १. १६.

तद्धैके "देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमि"ति फलीकुर्वन्ति तदु तथा न कुर्य्यादादिष्टं वाऽएतद्देवतायै हविर्भवत्यथैतद्धैश्वदेवं करोति यदाह देवेभ्यः शुन्धध्वमिति तत्समदं करोति तस्मादु तूष्णीमेव फलीकुर्य्यात् ॥ २४ ॥ Cf. का.श. २.१.३. तै. ब्रा. ३. २. ५. ६.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( इति प्रथमोऽध्यायः )

## १. १. ५.

स वै कपालान्येवान्यतरऽउपदधाति । दृषदुपलेऽअन्यतरस्तद्वाऽएतदुभयꣳ सह क्रियते तद्यदेतदुभयꣳ सह क्रियते ॥ १ ॥ शिरो ह वाऽएतद्यज्ञस्य यत्पुरोडाशः । स यान्येवेमानि शीर्ष्णः कपालान्येतान्येवास्य कपालानि मस्तिष्कऽएव पिष्टानि तद्वाऽएतदेकमङ्गमेकꣳ सह करवाव समानं करवावेति तस्माद्वाऽएतदुभयꣳ सह क्रियते ॥२॥ स यः कपालान्युपदधाति । स ऽउपवेषमादत्ते "धृष्टिरसी"-ति स यदेनेनाग्निं धृष्णिववोपचरति तेन धृष्टिरथ यदेनेन यज्ञऽउपालभतऽउपेव वाऽएनेनैतद्वेवेष्टि तस्मादुपवेषो नाम ॥ ३ ॥ तेन प्राचोऽङ्गारानुदूहति । "अपाग्नेऽअग्निमामादं जहि निष्क्रव्यादꣳ सेधे"त्ययं वाऽआमाद्येनेदं मनुष्याः पक्त्वाश्नन्त्यथ येन पुरुषं दहन्ति स क्रव्यादेतावेवैतदुभावतोऽपहन्ति ॥ ४ ॥ अथाङ्गारमास्कौति । "आ देवयजं वहे"ति यो देवयाट् तस्मिन्हवीꣳषि श्रपयाम तस्मिन्यज्ञं तनवामहाऽइति तस्माद्वाऽआस्कौति ॥ ५ ॥ तं मध्यमेन कपालेनाभ्युपदधाति । देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्यऽआसङ्गाद्बिभयाञ्चक्रुर्नेन्नोऽधस्तान्नाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानित्यग्निर्हि रक्षसामपहन्ता तस्मादेवमुपदधाति तद्यदेषऽएव भवति नान्य

१. मा. सं. १. १७. २. मा. सं. १. १७. ३. मा. सं. १. १७.

ऽएष हि यजुष्कृतो मेध्यस्तस्मान्मध्यमेन कपालेनाभ्युपदधाति ॥ ६ ॥ स ऽउपदधाति । "ध्रुवमसि पृथिवीं दृꣳहे"ति पृथिव्या ऽएव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते "ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाये"ति बह्वी वै यजुःष्वाशीस्तद्ब्रह्म च क्षत्रं चाशास्तऽउभे वीर्य्ये सजातवनीति भूमा वै सजातास्तद्भूमानमाशास्तऽउपदधामि भ्रातृव्यस्य वधायेति यदि नाभिचरेद्यद्यु ऽ अभिचरेदमुष्य वधायेति ब्रूयादभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति ॥ ७ ॥ अथाङ्गारमास्कौति । नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति ॥ ८ ॥ अथाङ्गारमध्यूहति । "अग्ने ब्रह्म गृभ्णीष्वे"ति नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानित्यग्निर्हि रक्षसामपहन्ता तस्मादेनमध्यूहति ॥ ९ ॥ अथ यत्पश्चात्तदुपदधाति । "धरुणमस्यन्तरिक्षं दृꣳहे"त्यन्तरिक्षस्यैव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते "ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाये"ति ॥१०॥ अथ यत्पुरस्तात्तदुपदधाति । "धर्त्रमसि दिवं दृꣳहे"ति दिवऽ एव रूपेणैतदेव दृꣳहत्येतेनैव द्विषन्तं भ्रातृव्यमवबाधते "ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाये"ति ॥११॥ अथ यद्दक्षिणतस्तदुपदधाति । "विश्वाभ्यस्त्वाशाभ्यऽउपदधामी"ति स यदिमांल्लोकानति चतुर्थमस्ति वा न वा तेनैवैतद्द्विषन्तं भ्रातृव्यमवबाधतेऽनद्धा वै तद्यदिमांल्लोकानति चतुर्थमस्ति वा न वानद्धो तद्यद्विश्वा ऽआशास्तस्मादाह "विश्वाभ्यस्त्वाशाभ्यऽ उपदधामी"ति तूष्णीं वै वेतराणि कपालान्युपदधाति "चितस्थोर्ध्वचित"ऽ इति वा ॥१२॥ अथा-

---

१. मा. सं. १. १७.   २. मा. सं. १. १७.   ३. मा. सं. १. १८.
४. तस्मादेवमिति. क.ख.   ५. मा. सं. १. १८.   ६. मा. सं. १. १८.
७. मा. सं. १. १८.   ८. मा. सं. १. १८.   ९. मा. सं. १. १८.

ङ्गारैरभ्यूहति। "भृगूणामङ्गिरसां तपसा तप्यध्वमि"त्येतद्वै तेजिष्ठं तेजो यद्भृग्वङ्गिरसाᳬंसुतप्तान्यसान्निति तस्मादेनमभ्यूहति ॥१३॥ अथ यो दृषदुपलेऽउपदधाति। स कृष्णाजिनमादत्ते शर्मा-सी"ति तदवधूनोत्य"वधूतᳬं रक्षोऽवधूता ऽ अरातय"ऽ इति सोऽसावेव बन्धुस्तत्प्रतीचीनग्रीवमुपस्तृणात्य "दित्यास्त्वगसि प्रति त्वादितिर्व्वेत्त्वि"ति सोऽसावेव बन्धुः ॥१४॥ अथ दृषदमुपद-धाति। "धिषणासि पर्व्वती प्रति त्वादित्यास्त्वग्वेत्त्वि"ति धिषणा हि पर्व्वती हि प्रति त्वादित्यास्त्वग्वेत्त्विति तत्संज्ञामेवैतत्कृष्णाजि-नाय च व्वदति नेदन्योऽन्यᳬं हिनसातऽ इतीयमेवैषा पृथिवी रूपे-ण ॥ १५ ॥ अथ शम्यामुदीचीनाग्रामुपदधाति। "दिवस्कम्भनीर-सी"त्यन्तरिक्षमेव रूपेणान्तरिक्षेण हीमे द्यावापृथिवी व्विष्टब्धे तस्मा-दाह दिवस्कम्भनीरसीति ॥१६॥ अथोपलामुपदधाति। "धिषणा-सि पार्व्वतेयी प्रति त्वा पर्वती व्वेत्त्वि"ति कनीयसी ह्येषा दुहितेव भवति तस्मादाह पार्वतेयीति प्रति त्वा पर्व्वती वेत्त्विति प्रति हि स्वः सञ्जानीते तत्संज्ञामेवैतद्दृषदुपलाभ्यां व्वदति नेदन्योऽन्यᳬं हि-नसातऽइति द्यौरेवैषा रूपेण हनूऽएव दृषदुपले जिह्वैव शम्या तस्मा-च्छम्यया समाहन्ति जिह्वया हि व्वदति ॥१७॥ अथ हविरधिवपति। "धान्यमसि धिनुहि देवानि"ति धान्यᳬंहि देवान्धिनवदित्यु हि हविर्गृह्यते ॥१८॥ अथ पिनष्टि। "प्राणाय त्वोदानाय त्वा व्यानाय त्वा दीर्घामनुप्रसितिमायुषे धा"मिति प्रोहति "देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना। चक्षुषे त्वे"ति ॥१९॥ *(शतम् ॥१००॥) तद्यदेवं पिनष्टि। जीवं वै देवानाᳬं हविरमृतममृ-

---

१. मा. सं. १. १८. २. तस्मादेवं. क. ख. ३. मा. सं. १. १९.
४. मा. सं. १. १९. ५. मा. सं. १. १९. ६. मा. सं. १. १९.
७. मा. सं. १. १९. ८. मा. सं. १. १९. ९. मा. सं. १. १९.
१०. मा.सं. १.२०. See मै.सं.४.१.७. and तै.सं.१.१.६. ११. मा. सं. १. २०.
* अत्र आदितः कण्डिकानां संख्या शतं भवतीति तदवगमायेदं शतसंख्यानिवे-

तानामुथैतद्दुलूखलमुसलाभ्यां दृषदुपलाभ्याᳪँहविर्यज्ञं घ्नन्ति ॥२०॥ स यदाह। प्राणाय त्वोदानाय त्वेति तत्प्राणोदानौ दधाति व्यानाय त्वेति तद्व्यानं दधाति दीर्घामनु प्रसितिमायुषे धामिति तदायुर्दधाति देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना सुप्रतिगृहीतान्यसान्निति चक्षुषे त्वेति तच्चक्षुर्दधात्येतानि वै जीवतो भवन्त्येवमु हैतज्जीवमेव देवानाᳪँ हविर्भवत्यमृतममृतानां तस्मादेवं पिनष्टि पिᳪँषन्ति पिष्टान्यभीन्धते कपालानि ॥ २१ ॥ अथैकऽआज्यं निर्व्वपति। यद्वाऽआदिष्टं देवतायै हविर्गृह्यते यावद्देवत्यं तद्भवति तदितरेण यजुषा गृह्णाति न वाऽएतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्मादनिरुक्तेन यजुषा गृह्णाति महीनां पयोऽसीति मह्यऽइति ह वाऽएतासामेकं नाम यद्गवां तासां वाऽएतत्पयो भवति तस्मादाह महीनां पयोऽसीत्येवमु हास्यैतत्खलु यजुषैव गृहीतं भवति तस्माद्वेवाह महीनां पयोऽसीति ॥ २२ ॥

Cf. का. श. २. १. ४. तै. ब्रा. ३. २. ७. मै. सं. १. ४. ७, ८.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे प्रथमकाण्डे प्रथमपाठके पञ्चमं ब्राह्मणम् ॥

## १. १. ६.

पवित्रवति संव्वपति। पात्र्यां पवित्रेऽअवधाय "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याᳪँ संव्वपामी"ति सोऽसावेवैतस्य यजुषो बन्धुः ॥१॥ अथान्तर्वेद्युपविशति। अथैकऽउपसर्जनीभिरैति ताऽआनयति ताः पवित्राभ्यां प्रतिगृह्णाति "समाप ओषधीभिरि"ति सᳪँह्येतदापऽओषधिभिरेताभिः पिष्टाभिः सङ्गच्छन्ते "समोषधयो रसेने"ति सᳪँह्येतदोषधयो रसेनैताः पिष्टाऽअद्भिः

शनम्। मूलपुस्तकेष्वेवमेवोपलभ्यते प्राचीनसम्प्रदायश्चायम्। एवमुत्तरत्रऽपि द्रष्टव्यम्।

१. मा. सं. १. २०. २. मा. सं. १. २१. ३. मा. सं. १. २१.

सङ्गच्छन्तऽआपो ह्येतासाᳬ रसः “संᳬ रेवतीर्जगतीभिः पृच्यन्तामि”ति रेवत्यऽ आपो जगत्य ओषधयस्ता उ ह्येतदुभय्यः सम्पृच्यन्ते “सं मधुमतीर्म्मधुमतीभिः पृच्यन्ता”मिति सᳬ रसवत्यो रसवतीभिः पृच्यन्तामित्येवैतदाह ॥ २ ॥ अथ संयौति। “जनयत्यै त्वा संयौमी”ति यथा श्रियेऽन्नाद्यायेमाः प्रजा यजमानाय यच्छेदेवं वै तत्संयौत्यधिवक्ष्यंन्नु वै संयौति यथा वाऽअधिवृक्तोऽग्नेराधि जायेतैवं वै तत्संयौति ॥ ३ ॥ अथ द्वेधा करोति। यदि द्वे हविषी भवतः पौर्णमास्यां वै द्वे हविषी भवतः स यत्र पुनर्न सᳬ हरिष्यन्त्स्यात्तदभिमृशती“दमग्नेरिदमग्नीषोमयो”रिति नाना वाऽएतदग्रे हविर्गृह्णन्ति तत्सहावघ्नन्ति तत्सह पिᳬ षन्ति तत्पुनर्नाना करोति तस्मादेवमभिमृशत्यधिवृणक्त्येवैष पुरोडाशमधिश्रयत्यसावाज्यम् ॥ ४ ॥ तद्वाऽएतत्। उभयᳬ सह क्रियतेऽतद्यदेतदुभयᳬ सह क्रियतेऽर्धो ह वाऽएष आत्मनो यज्ञस्य यदाज्यमर्धो यदिह हविर्भवति स यश्चासावर्धो य उ चायमर्धस्ता ऽउभावग्निं गमयावेति तस्माद्वाऽएतदुभयᳬ सह क्रियतऽएवमु हैषऽआत्मा यज्ञस्य सन्धीयते ॥ ५ ॥ सोऽसावाज्यमधिश्रयति। “इषे त्वे”ति वृष्ट्यै तदाह यदाहेषे त्वेति तत्पुनरुद्वासयत्यूर्जेत्वेति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह ॥ ६ ॥ अथ पुरोडाशमधिवृणक्ति। “घर्मोऽसी”ति यज्ञमेवैतत्करोति यथा घर्म्मं प्रवृञ्ज्यादेवं प्रवृणक्ति विश्वायुरिति तदायुर्दधाति ॥७॥ तं प्रथयति। “उरुप्रथा उरु प्रथस्वे”ति प्रथयत्येवैनमेतदुरु ते यज्ञपतिः प्रथतामिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदाशिषमाशास्ते ॥ ८ ॥ तं न सत्रा पृथुं कुर्य्यात्। मानुषᳬ ह कुर्य्यात्पृथुं कुर्याद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्न सत्रा पृथुं कुर्यात् ॥ ९ ॥ अश्वशफमात्रं कुर्य्या-

१. मा. सं. १. २१. २. मा. सं. १. २१. ३. मा. सं. १. २२.
४. मा. सं. १. २२. ५. मा. सं. १. २२. ६. मा. सं. १. २२.
७. मा. सं. १. २२. ८, ९, See. आप. श्रौ. १. २५. ४. and ६.

दित्यु हैकऽआहुः । कस्तद्वेद यावानश्वशफो यावन्तमेव स्वयं मनसा न स्त्रा पृथुं मन्येतैवं कुर्य्यात् ॥ १० ॥ तमद्भिरभिमृशति । सकृद्वा त्रिर्व्वा तद्यदेवास्यात्रावघ्नन्तो वा पिᳪषन्तो वा क्षण्वन्ति[1] वा व्वि वा व्वृहन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादद्भिरभिमृशति ॥ ११ ॥ सोऽभिमृशति[2] । "अग्निष्टे[3] त्वचं मा हिᳪसी"दित्यग्निना वाऽएनमेतदभितप्स्यन्भवत्येष[4] ते त्वचं मा हिᳪसीदित्येवैतदाह ॥ १२ ॥ तं पर्य्यग्निं करोति । अच्छिद्रमेवैनमेतदाग्निना परिगृह्णाति नेदेनं नाष्ट्रा रक्षाᳪसि प्रमृशानित्यग्निर्हि रक्षसामपहन्ता तस्मात्पर्य्यग्निं करोति ॥ १३ ॥ तᳪ श्रपयति । "देवस्त्वा[5] सविता श्रपयत्वि"ति न वाऽएतस्य मनुष्यः श्रपयिता देवो ह्येष तदेनं देव ऽएव सविता श्रपयति "व्वर्षिष्ठेऽधि[6] नाक"ऽइति देवत्रो ऽएतदाह यदाह व्वर्षिष्ठेऽधि नाकऽइति तमभिमृशति श्रुतं व्वेदानीति तस्माद्वाऽअभिमृशति[8] ॥ १४ ॥ सोऽभिमृशति । "मा भेर्मा संविक्था" ऽइति[9] मा त्वं भैषीर्मा संविक्था यत्त्वाहममानुषᳪ[10] सन्तं मानुषोऽभिमृशामीत्येवैतदाह ॥ १५ ॥ यदा श्रुतोऽथाभिवासयति । नेदेनमुपरिष्टान्नाष्ट्रा रक्षाᳪस्यवपश्यानिति नेद्वेव नग्नऽइव मुषितऽइव शयाताऽइत्यु चैव तस्माद्वाऽअभिवासयति ॥ १६ ॥ सोऽभिवासयति । "अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य[11] प्रजा भूयादि"ति नेदेतदनु यज्ञो वा यजमानो वा ताम्याद्यदिदमभिवासयामीति तस्मादेवमभिवासयति ॥ १७ ॥ अथ पात्रीनिर्णेजनम् । अङ्गुलि-

---

१. क्षिण्वन्तीति ग. २. मृशति इति ग. ३. मा. सं. १. २२.
४. एतमिति क. ५. मा. सं. १. २२. ६. मा. सं. १. २२.
७. See का. सं. ३१. ७. and मै. सं. ४. १. ९. ८. अभिमृशति इति ग.
९. मा. सं. १. २३. १०. यन्त्वाहमिति क. ११. मा. सं. १. २३.

प्रणेजनमाप्त्येभ्यो निनयति तद्यदाप्त्येभ्यो निनयति ॥ १८ ॥
Cf. का. श. २. २. १. तै. ब्रा. ३. २. ८. (आदितः कण्डिकाः १२१)

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥

प्रथमः प्रपाठकस्समाप्तः ॥



## अथ द्वितीयः प्रपाठकः ॥

### १. २. १.

चतुर्धा विहितो ह वाऽअग्रेऽग्निरास । स यमग्रेऽग्निँ होत्राय प्रावृणत स प्राधन्वद्यं द्वितीयं प्रावृणत स प्रैवाधन्वद्यं तृतीयं प्रावृणत स प्रैवाधन्वदथ योऽयमेतर्ह्यग्निः स भीषा निलिल्ये सोऽपः प्रविवेश तं देवा ऽअनुविद्य सहसैवाद्भ्य ऽआनिन्युः सोऽपोऽभितिष्ठेवावष्ठ्यूता स्थ याऽ अप्रपदनँ स्थ याभ्यो वो मामकामं नयन्तीति तत ऽआप्त्याः सम्बभूवुस्त्रितो द्वित ऽएकतः ॥ १ ॥ तऽइन्द्रेण सह चेरुः । यथेदं ब्राह्मणो राजानमनुचरति स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान तस्य हैतेऽपि वध्यस्य विदाञ्चक्रुः शश्वद्धैनं त्रित ऽएव जघानात्यह तदिन्द्रोऽमुच्यत देवो हि सः ॥ २ ॥ तऽ उ हैतऽऊचुः । उपैवेमऽएनो गच्छन्तु येऽस्य वध्यस्यावेदिषुरिति किमिति यज्ञऽ एवैषु मृष्टामिति तदेष्वेतद्यज्ञो मृष्टे यदेभ्यः पात्रीनिर्णेजनमङ्गुलिप्रणेजनं निनयन्ति ॥ ३ ॥ तऽउ हाप्त्याऽ ऊचुः । अत्येव वयमिदमस्मत्परो नयामेति कमभीति यऽ एवादक्षिणेन हविषा यजाताऽइति तस्मान्नादक्षिणेन हविषा यजेताप्त्येषु ह यज्ञो मृष्टऽ आप्त्याऽ उ ह तस्मिन्मृजते योऽदक्षिणेन हविषा यजते ॥ ४ ॥ ततो देवाः । एतां

दर्शपूर्णमासयोर्द्दक्षिणामकल्पयन्यदन्वाहार्यं नेददक्षिणᳪ हविरसदिति तन्नाना निनयति तथैभ्योऽसमदं करोति तदभितपति तथैषाᳯ श्टतं भवति स निनयति "त्रिताय त्वा द्विताय त्वैकताय त्वे"ति पशुर्ह वाऽएषऽ आलभ्यते यत्पुरोडाशः ॥ ५ ॥ पुरुषᳯ ह वै देवाः। अग्रे पशुमालेभिरे तस्यालब्धस्य मेधोऽपचक्राम सोऽश्वं प्रविवेश तेऽश्वमालभन्त तस्यालब्धस्य मेधोऽपचक्राम स गां प्रविवेश ते गामालभन्त तस्यालब्धस्य मेधोऽपचक्राम सोऽविं प्रविवेश तेऽविमालभन्त तस्यालब्धस्य मेधोऽपचक्राम सोऽजं प्रविवेश तेऽजमालभन्त तस्यालब्धस्य मेधोऽपचक्राम ॥ ६ ॥ सऽइमां पृथिवीं प्रविवेश। तं खनन्तऽ इवान्वीषुस्तमन्वविन्दंस्ताविमौ व्रीहियवौ तस्मादप्येतावेतर्हि खनन्तऽइवैवानुविन्दन्ति स यावद्वीर्यवद्ध वाऽअस्यैते सर्व्वे पशवऽआलब्धास्स्युस्तावद्वीर्यवद्धास्य हविर्हविरेव भवति यऽएवमेतद्वेदात्रो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति ॥ ७ ॥ यदा पिष्टान्यथ लोमानि भवन्ति। यदापऽआनयत्यथ त्वग्भवति यदा संयौत्यथ माᳯसं भवति सन्ततऽ इव हि स तर्हि भवति सन्ततमिव हि माᳯसं यदा श्टतोऽथास्थि भवति दारुणऽइव हि स तर्हि भवति दारुणमिव ह्यस्थ्यथ यदुद्वासयिष्यन्नभिघारयति तं मज्जानन्दधात्येषो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति ॥८॥ स यं पुरुषमालभन्त। स किम्पुरुषोऽभवद्यावश्वं च गां च तौ गौरश्च गवयश्चाभवतां यमविमालभन्त सऽ उष्ट्रोऽभवद्यमजमालभन्त स शरभोऽभवत्तस्मादेतेषां पशूनां नाशितव्यमपक्रान्तमेधा हैते पशवः ॥ ९ ॥ Cf. का. श. २. २. १. काठ. सं. ३१. ७.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे प्रथमकाण्डे द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥

---

१. अत्र वाक्यसमाप्तिः ग पुस्तके. अन्वहार्यमिति ओदनस्य नाम.
२. मा. सं. १. २३. See. तै. सं. १. १. ८. २. ३. See. ऐ. ब्रा. ६-२.
४. हविरेवेति ग. ५. किम्पुरुष इति ख. ग.

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । स प्रहृतश्चतुर्धाऽभवत्तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा रथस्तृतीयं वा यावद्वाथ यत्र प्राहरत्तच्छकलोऽशीर्यत स पतित्वा शरोऽभवत्तस्माच्छरो नाम यदशीर्यतैवमु स चतुर्धा वज्रोऽभवत् ॥ १ ॥ ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति । द्वाभ्याᳪं राजन्यबन्धवः संव्याधे यूपेन च स्फ्येन च ब्राह्मणा रथेन च शरेण च राजन्यबन्धवः ॥२॥ स यत्स्फ्यमादत्ते । यथैव तदिन्द्रो वृत्राय वज्रमुदयच्छदेवमेवैषऽएतं पाप्मने द्विषते भ्रातृव्याय वज्रमुद्यच्छति तस्माद्वै स्फ्यमादत्ते ॥ ३ ॥ तमादत्ते । "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददेऽध्वरकृतं देवेभ्य" इति सविता वै देवानां प्रसविता तत्सवितृप्रसूतऽ एवैनमेतदादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनाध्वर्यू तत्तयोरेव बाहुभ्यामादत्ते न स्वाभ्यां पूष्णो हस्ताभ्यामिति पूषा भागदुघस्तत्तस्यैव हस्ताभ्यामादत्ते न स्वाभ्यां वज्रो वाऽएष तस्य न मनुष्यो भर्त्ता तमेताभिर्देवताभिरादत्ते ॥ ४ ॥ आददेऽध्वरकृतं देवेभ्यऽइति । अध्वरो वै यज्ञो यज्ञकृतं देवेभ्यऽइत्येवैतदाह तᳪं सव्ये पाणौ कृत्वा दक्षिणेनाभिमृश्य जपति सᳪं श्यत्येवैनमेतद्यज्जपति ॥ ५ ॥ स जपति । "इन्द्रस्य बाहुरसि दक्षिण"ऽइत्येष वै वीर्यवत्तमो यऽइन्द्रस्य बाहुर्दक्षिणस्तस्मादाहेन्द्रस्य बाहुरसि दक्षिणऽइति "सहस्रभृष्टिः शततेजा"ऽइति सहस्रभृष्टिर्वै स वज्रऽआसीच्छततेजा यं तं वृत्राय प्राहरत्तमेवैतत्करोति ॥६॥ "वायुरसि तिग्मतेजा"ऽइति । एतद्वै तेजिष्ठं तेजो यदयं योऽयं पवतऽएष हीमाँल्लोकांस्तिर्य्यङ्ङनुपवते सᳪं श्यत्येवैनमेत"द्द्विषतो वध" ऽइति यदि नाऽभिचरेद्यद्युऽअभिचरेदमुष्य वधऽइति ब्रूयात्तेन सᳪंशि-

१. मा. सं. १. २४. २. जपति. इति. ग. ३ मा. सं. १. २४.
४. मा. सं. १. २४. ५. मा. सं. १. २४. ६. मा. सं. १. ४२.

तेन नात्मानमुपस्पृशति न पृथिवीं नेदनेन व्वज्रेण सꣳशितेनात्मानं वा पृथिवीं वा हिनसानीति तस्मान्नात्मानमुपस्पृशति न पृथिवीम् ॥ ७ ॥ देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ते ह स्म यद्देवाऽअसुरान् जयन्ति ततो ह स्मै वैनान् पुनरुपोत्तिष्ठन्ति ॥ ८ ॥ ते ह देवाऽऊचुः । जयामो वाऽअसुराँस्ततस्त्वेव नः पुनरुपोत्तिष्ठन्ति कथं न्वेनाननपजय्यं जयेमेति ॥ ९ ॥ स हाग्निरुवाच । उदञ्चो वै नः पलाय्य मुच्यन्त ऽइत्युदञ्चो ह स्मैवैषां पलाय्य मुच्यन्ते ॥ १० ॥ स हाग्निरुवाच । अहमुत्तरतः पर्य्येष्याम्यथ यूयमितऽउपसꣳरोत्स्यथ तान्त्सꣳरुध्येभिश्च लोकैरभिनिधास्यामो यदु चेमांल्लोकानति चतुर्थं ततः पुनर्न सꣳहास्यन्तऽइति ॥ ११ ॥ सोऽग्निरुत्तरतः पर्यैत् । अथेमऽइतऽउपसमरुन्धँस्तान्त्सꣳरुध्यैभिश्च लोकैरभिन्यदधुर्यदु चेमांल्लोकानतिं चतुर्थं ततः पुनर्न समजिहत तदेतन्निदानेन यत् स्तम्बयजुः ॥१२॥ स योऽसावग्नीदुत्तरतः पर्येति । अग्निरेवैष निदानेन तानध्वर्युरेवेतऽउपसꣳरुणद्धि तान्त्सꣳरुध्यैभिश्च लोकैरभिनिदधाति यदु चेमांल्लोकानति चतुर्थं ततः पुनर्न सञ्जिहते तस्मादप्येतर्ह्यसुरा न सञ्जिहते येन ह्येवैनान्देवाऽअवाबाधन्त तेनैवैनानप्येतर्हि ब्राह्मणा यज्ञेऽवबाधन्ते ॥ १३ ॥ यऽउऽएव यजमानायारातीयति । यश्चैनं द्वेष्टि तमेवैतदेभिश्च लोकैरभिनिदधाति यदु चेमांल्लोकानति चतुर्थꣳस वाऽएभिश्च लोकैरभिनिदधद्यदु चेमांल्लोकानति चतुर्थमस्याऽएव सर्व्वꣳहरत्यस्याꣳहीमे सर्व्वे लोकाः प्रतिष्ठिताः किꣳ हि हरेद्यदन्तरिक्षꣳ हरामि दिवꣳ हरामीति हरेत्तस्मादस्याऽएव सर्व्वꣳ हरति ॥ १४ ॥ अथ तृणमन्तर्धाय प्रहरति । नेदनेन व्वज्रेण सꣳशितेन पृथिवीꣳहिनसानीति तस्मात्तृणमन्तर्धाय प्रहरति ॥ १५ ॥ स प्रहरति । "पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषमि"

१. लोकैरभिन्यदधुरिति ख.ग.   २. मा. सं. १. २५.

त्युत्तरमूलामिव वाऽएनामेतत्करोत्याददानस्तामेतदाहौषधीनां ते मूलानि मा हिंᳬसिषमिति"व्व्रजं गच्छ गोष्ठानमित्याभिनिधास्यन्नेवैतदनपक्रामि कुरुते तद्ध्यनपक्रामि यद्व्रजेऽन्तस्तस्मादाह व्व्रजं गच्छ गोष्ठानमिति "व्वर्षतु ते द्यौ"रिति यत्र वाऽअस्यै खनन्तः क्रूरीकुर्व्वन्त्यपघ्नन्ति शान्तिरापस्तदाद्भिः शान्त्या शमयति तदाद्भिः सन्दधाति तस्मादाह व्वर्षतु ते द्यौरिति "बधान देव सवितः परमस्यां पृथिव्या"-मिति देवमेवैतत्सवितारमाहान्धे तमसि बधानेति यदाह परमस्यां पृथिव्यामिति "शतेन पाशै"रित्यमुचे तदाह "योऽस्मान् द्वेष्टि यं च व्वयं द्विष्मस्तमतो मा मौगि"ति यदि नाभिचरेद्यद्युऽअभि चरेदमुमतो मा मौगिति ब्रूयात् ॥ १६ ॥ अथ द्वितीयं प्रहरति । "अपाररुं पृथिव्यै देवयजनाद्वध्यास"मित्यररुर्ह वै नामासुररक्षसमास तं देवाऽअस्याऽअपाघ्नत तथोऽएवैनमेतद्देषोऽस्याऽअपहते "व्व्रजं गच्छ गोष्ठानं व्वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳬशतेन पाशैर्योऽस्मान्द्वेष्टि यं च व्वयं द्विष्मस्तमतो मा मौगि"ति ॥ १७ ॥ तमग्नीदभिनिदधाति । अररो दिवं मा पप्तऽइति यत्र वै देवाऽअररुमसुररक्षसमपाघ्नत स दिवमपिपतिषत्तमग्निरभिन्यदधादररो दिवं मा पप्तऽइति स न दिवमपतत्तथोऽएवैनमेतदध्वर्युरेवास्माल्लोकादन्तरेति दिवोऽध्यग्नीत्तस्मादेवं करोति ॥ १८ ॥ अथ तृतीयं प्रहरति । द्रप्सस्ते द्यां मा स्कन्नित्ययं वाऽअस्यै द्रप्सो यमस्याऽइमᳬ रसं प्रजाऽउपजीवन्त्येष ते दिवं मा पप्तदित्येवैतदाह व्व्रजं गच्छ गोष्ठानं व्वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याᳬशतेन पाशैर्योस्मान्द्वेष्टि यं च व्वयं द्विष्मस्तमतो मा मौगिति ॥ १९ ॥ स वै त्रिर्यजुषा हरति । त्रयो वाऽइमे लोकाऽएभिरेवैनमेतल्लोकैरभिनिदधात्यद्धा वै तद्यदिमे लोकाऽअद्धो तद्यद्यजुस्तस्मात्त्रिर्यजुषा हरति ॥२०॥ तूष्णीं चतुर्थम्।

१. मा. सं. १. २५. २. मा. सं. १. २५. ३. मा. सं. १. २५.
४. मा. सं. १. २५. ५. मा. सं. १. २५. ६. मा. सं. १. २६.

स यदिमांल्लोकानति चतुर्थमस्ति वा न वा तेनैवैतद्विषन्तं भ्रातृव्यमवबाधते[1]ऽनद्धा वै तद्यदिमांल्लोकानति चतुर्थमस्ति वा न वानद्धो तद्यत्तूष्णीं तस्मात्तूष्णीं चतुर्थम् ॥ २१ ॥ Cf. का. श. २. २. २. तै. ब्रा. ३. २. ९. काठ. सं. ३१. ८. मै. सं. ४.१. १०.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे प्रथमकाण्डे द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥

१. २. ३.

देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततो देवाऽअनुव्यमिवासुरथ हासुरा मेनिरेऽस्माकमेवेदं खलु भुवनमिति ॥१॥ ते होचुः । हन्तेमां पृथिवीं व्विभजामहै तां व्विभज्योपजीवामेति तामौक्ष्णैश्चर्मभिः पश्चात्प्राञ्चो व्विभजमानाऽअभीयुः ॥२॥ तद्वै देवाः शुश्रुवुः । विभजन्ते ह वाऽइमामसुराः पृथिवीं प्रेत तदेष्यामो यत्रेमामसुरा व्विभजन्ते के ततः स्याम यदस्यै न भजेमहीतिं ते यज्ञमेव व्विष्णुं पुरस्कृत्येयुः ॥३॥ ते होचुः । अनु नोऽस्यां पृथिव्यामा भजतास्त्वेव नोऽप्यस्यां भागऽइति ते हासुराऽअसूयन्तऽइवोचुर्यावदेवैष व्विष्णुरभिशेते तावद्वो दद्मऽइति ॥ ४ ॥ व्वामनो ह व्विष्णुरास । तद्देवा न जिहीडिरे महद्वै नोदुर्ये नो यज्ञसम्मितमदुरिति॥५॥ ते प्राञ्चं व्विष्णुं निपाद्य । छन्दोभिरभितः पर्यगृह्णन् "गायत्रेण[2] त्वा छन्दसा परिगृह्णामी"ति दक्षिणत"स्त्रैष्टुभेन[3] त्वा छन्दसा परिगृह्णामी"ति पश्चा"ज्जागतेन[4] त्वा छन्दसा परिगृह्णामी"त्युत्तरतः ॥ ६ ॥ तं छन्दोभिरभितः परिगृह्य । अग्निं पुरस्तात् समाधाय तेनार्चन्तः श्राम्यन्तश्चेरुस्तेनेमाᳪं सर्व्वां पृथिवीᳪं समविन्दन्त तद्यदेनेनेमाᳪं सर्व्वाᳪं समविन्दन्त तस्माद्वेदिर्नाम तस्मादाहुर्यावती व्वेदिस्तावती

१. मबाधत इति. ख. पु.     २. मा. सं. १. २७.
३. मा. सं. १. १७.     ४. मा. सं. १. २७.

पृथिवीत्येतया हीमाᳫं सर्व्वाᳫं समविन्दन्तैवᳫं ह वाऽइमाᳫं सर्व्वाᳫं सपत्नानाᳫं संवृङ्क्ते निर्भजत्यस्यै सपत्नान्यऽएवमेतद्वेद ॥ ७ ॥ सोऽयं विष्णुर्ग्लानः । छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमास स तत ऽएवौषधीनां मूलान्युपमुम्लोच ॥ ८ ॥ ते ह देवा ऽऊचुः । क नु विष्णुरभूत् क नु यज्ञोऽभूदिति ते होचुश्छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमस्त्यत्रैवान्विच्छतेति तं खनन्तऽइवान्वीषुस्तं त्र्यङ्गुलेऽन्वविन्दंस्तस्मात्त्र्यङ्गुला व्वेदिः स्यात्तदु हापि पाञ्चिस्त्र्यङ्गुलामेव सौम्यस्याध्वरस्य व्वेदिं चक्रे ॥ ९ ॥ तदु तथा न कुर्य्यात् । ओषधीनां वै स मूलान्युपाम्लोचत्तस्मादोषधीनामेव मूलान्युच्छेत्तवै ब्रूयाद्यन्वेवात्र विष्णुमन्वविन्दंस्तस्माद्वेदिर्नाम ॥१०॥ तमनुविद्योत्तरेण परिग्रहेण पर्यगृह्णन् । "सुक्ष्मा चासि शिवा चासी"-ति दक्षिणतऽइमामेवैतत्पृथिवीᳫं संव्विद्य सुक्ष्माᳫं शिवामकुर्व्वत "स्योना चासि सुषदा चासी"ति पश्चादिमामेवैतत् पृथिवीᳫं संव्विद्य स्योनाᳫं सुषदामकुर्व्वतो"र्ज्जस्वती चासि पयस्वती चे"त्युत्तरतऽइमामेवैतत्पृथिवीᳫं संव्विद्य रसवतीमुपजीवनीयामकुर्व्वत॥११॥ स वै त्रिः पूर्व्वं परिग्रहं परिगृह्णाति । त्रिरुत्तरं तत्षट्कृत्वः षड्वाऽऋतवः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्परिगृह्णाति ॥ १२ ॥ षड्भिर्व्याहृतिभिः पूर्व्वं परिग्रहं परिगृह्णाति । षड्भिरुत्तरं तद्द्वादश कृत्वो द्वादश वै मासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्परिगृह्णाति ॥ १३ ॥ व्याममात्री पश्चात्स्यादित्याहुः । एतावान्वै पुरुषः पुरुषसम्मिता हि त्र्यरत्निः प्राची त्रिवृद्धि यज्ञो नात्र मात्रास्ति यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्य्यात् ॥ १४ ॥ अभितोऽग्निमᳫंसाऽउन्नयति । योषा वै व्वेदिर्व्वृषाग्निः परिगृह्य वै योषा व्वृषाणᳫं शेते मिथुनमेवैतत्प्रज-

---

१. मा. सं. १. २७. २. मा. सं. १. २७. ३. मा. सं. १. २७.

ननं क्रियते तस्मादभितोऽग्निमुꣳसा उन्नयति ॥१५॥ सा वै पश्चाद्वरीयसी स्यात्। मध्ये सꣳह्वारिता पुनः पुरस्तादुर्व्यैवमिव हि योषां प्रशꣳसन्ति पृथुश्रोणिर्व्विमृष्टान्तराꣳसा मध्ये सङ्ग्राह्येति जुष्टामेवैनामेतद्देवेभ्यः करोति ॥१६॥ सा वै प्राक्प्रवणा स्यात्। प्राची हि देवानां दिगथोऽउदक्प्रवणोदीची हि मनुष्याणां दिग्दक्षिणतः पुरीषं प्रत्युदूहत्येषा वै दिक् पितृणाꣳ सा यद्दक्षिणाप्रवणा स्यात् क्षिप्रेह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः पुरीषं प्रत्युदूहति पुरीषवतीं कुर्व्वीत पशवो वै पुरीषं पशुमतीमेवैनामेतत्कुरुते ॥ १७ ॥ तां प्रतिमार्ष्टि। देवा ह वै सङ्ग्रामꣳ सन्निधास्यन्तस्ते होचुर्हन्त यदस्यै पृथिव्याऽअनामृतं देवयजनं तच्चन्द्रमसि निदधामहै स यदि नऽइतोऽसुरा जयेयुस्तत एवार्चन्तः श्राम्यन्तः पुनरभिभवेमेति स यदस्यै पृथिव्याऽअनामृतं देवयजनमासीत्तच्चन्द्रमसि न्यदधत तदेतच्चन्द्रमसि कृष्णं तस्मादाहुश्चन्द्रमस्यस्यै पृथिव्यै देवयजनमित्यपि ह वाऽअस्यै तस्मिन्देवयजनऽइष्टं भवति तस्माद्वै प्रतिमार्ष्टि ॥१८॥ स प्रतिमार्ष्टि। "पुरा क्रूरस्य विसृपो व्विरप्शिन्नि"ति सङ्ग्रामो वै क्रूरꣳ सङ्ग्रामे हि क्रूरं क्रियते हतः पुरुषो हतोऽश्वः शेते पुरा ह्येतत्सङ्ग्रामान्यदधत तस्मादाह पुरा क्रूरस्य विसृपो व्विरप्शिन्नित्यु "दादाय[2] पृथिवीं जीवदानु"मित्युदादाय हि यदस्यै पृथिव्यै जीवमासीत्तच्चन्द्रमसि न्यदधत तस्मादाहो"दादाय[2] पृथिवीं जीवदानु"मिति "यामैरयंश्चन्द्रमसि[3] स्वधाभि"रिति यां चन्द्रमसि *ब्रह्मणा दधुरित्येवैतदाह"तामु[4] धीरासोऽअनुदिश्य यजन्त"ऽइत्येतेनो ह तामनुदिश्य यजन्तेऽपि ह वाऽअस्यैतस्मिन्देवयजनऽइष्टं भवति यऽएवमेतद्वेद ॥१९॥ अथाह"प्रोक्षणीरासादये[5]"ति। व्वज्रो वै स्फ्यो ब्राह्मणश्चेमं पुरा यज्ञमभ्यजूगुपतां व्वज्रो वाऽआपस्तद्वज्रमेवैतदभिगुप्त्याऽआसादयति स वाऽ उपर्य्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्यच्छत्यथ यन्निहि-

१. मा. सं. १. २८. २. मा. सं. १. २८. ३. मा. सं. १. २८.
* 'ब्राह्मणाः' इति उव्वटादृतः पाठः। ४. मा. सं. १. २८. ५. मा. सं. १. २८.

तऽएव स्फ्ये प्रोक्षणीरासादयेद्वज्रौ ह समृच्छेयातां तथो ह वज्रौ न समृच्छेते तस्मादुपर्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्यच्छति ॥ २० ॥ अथैतां वाचं वदति । "प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः सम्मृड्ढि पत्नीᳬं सन्नह्याज्येनोदेही"ति सम्प्रैषऽएवैष स यदि कामयेत ब्रूयादेतद्यद्यु कामयेताऽपि नाद्रियेत स्वयमु ह्येवैतद्वेदेदमतः कर्म कर्त्तव्यमिति ॥ २१ ॥ अथोदञ्चᳬं स्फ्यं प्रहरति । अमुष्मै त्वा वज्रं प्रहरामीति यद्यभिचरेद्वज्रो वै स्फ्यः स्तृणुते हैवैनेन ॥ २२ ॥ अथ पाणीऽअवनेनिक्ते । यद्ध्यस्यै क्रूरमभूत्तद्ध्यस्याऽएतदहार्षीत्तस्मात्पाणीऽअवनेनिक्ते ॥ २३ ॥ स ये ह्याग्रऽईजिरे । ते ह स्मावमर्शं यजन्ते ते पापीयाᳬंस आसुरथ ये नेजिरे ते श्रेयाᳬंस आसुस्ततोऽश्रद्धा मनुष्यान्विवेद ये यजन्ते पापीयाᳬंसस्ते भवन्ति यऽउ न यजन्ते श्रेयाᳬंसस्ते भवन्तीति ततऽइतो देवान्हविर्न जगामेतः प्रदानाद्धि देवाऽउपजीवन्ति ॥२४॥ ते ह देवाऽऊचुः । बृहस्पतिमाङ्गिरसमश्रद्धा वै मनुष्यानविदत्तेभ्यो विधेहि यज्ञमिति स हेत्योवाच बृहस्पतिराङ्गिरसः कथा न यजध्वऽइति ते होचुः किं काम्या यजेमहि ये यजन्ते पापीयाᳬंसस्ते भवन्ति यऽउ न यजन्ते श्रेयाᳬंसस्ते भवन्तीति ॥ २५ ॥ स होवाच । बृहस्पतिराङ्गिरसो यद्वै शुश्रुम देवानां परिषूतं तदेष यज्ञो भवति यच्छृतानि हवीᳬंषि क्लृप्ता वेदिस्तेनावमर्शमचारिष्ट तस्मात्पापीयाᳬंसोऽभूत तेनानवमर्शं यजध्वं तथा श्रेयाᳬंसो भविष्यथेत्या क्रियतऽइत्या बर्हिषस्तरणादिति बर्हिषा ह वै खल्वेषा शाम्यति स यदि पुरा बर्हिषस्तरणात् किञ्चिदापद्येत बर्हिरेव तत्स्तृणन्नपास्येदथ यदा बर्हिस्तृणन्त्यपि पदाभितिष्ठन्ति स यो हैवं विद्वाननवमर्शं यजते श्रेयान् हैव भवति तस्मादनवमर्शमेव यजेत॥२६॥

Cf. का.श.२.२.३.तै.ब्रा.३.२.८.९. का.सं.३१.८. मै.सं.४.१०.१०.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥
( इति द्वितीयोऽध्यायः )

स वै स्रुचः सम्मार्ष्टि । तद्यत्स्रुचः सम्मार्ष्टि यथा वै देवानां चरणं[1] तद्वाऽअनु मनुष्याणां तस्माद्यदा मनुष्याणां परिवेषणमुपक्लृप्तं भवति ॥ १ ॥ अथ पात्राणि निर्णेनिजति । तैर्निर्णिज्य परिवेविषत्येवं वाऽएष देवानां यज्ञो भवति यच्छृतानि हवीꣳषि क्लृप्ता वेदिस्तेषामेतान्येव पात्राणि यत्स्रुचः ॥ २ ॥ स यत्सम्मार्ष्टि । निर्णेनेक्त्येवैनाऽएतन्निर्णिक्ताभिः प्रचराणीति तद्वै द्वयेनैव देवेभ्यो निर्णेनिजत्येकेन मनुष्येभ्योऽद्भिश्च ब्रह्मणा च देवेभ्यऽआपो हि[2] कुशा ब्रह्म यजुरेकेनैव मनुष्येभ्योऽद्भिरेवैवम्वेतन्नाना भवति ॥ ३ ॥ अथ स्रुवमादत्ते । तं प्रतपति "प्रत्युष्टꣳ[3] रक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽअरातय"ऽइति वा ॥ ४ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्यऽआसङ्गाद्बिभयाञ्चक्रुस्तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षाꣳस्यतोऽपहन्ति ॥ ५ ॥

( अर्धप्रपाठकः )

स वाऽइत्यग्रेरन्तरतः सम्मार्ष्टि । "अनिशितोऽसि[4] सपत्नक्षि"दिति यथानुपरतो यजमानस्य सपत्नान् क्षिणुयादेवमेतदाह "वाजिनं[5] त्वा वाजेध्यायै सम्मार्ज्मी"ति यज्ञियं त्वा यज्ञाय सम्मार्ज्मीत्येवैतदाहैतेनैव सर्व्वाः स्रुचः सम्मार्ष्टि वाजिनीं त्वेति स्रुचं तूष्णीं प्राशित्रहरणम् ॥ ६ ॥ स वाऽइत्यग्रेरन्तरतः सम्मार्ष्टीति । मूलैर्बाह्यतऽइतीव वाऽअयं प्राणऽइतीवोदानः प्राणोदानावेवैतद्दधाति तस्मादितीवेमानि लोमानीतीवेमानि ॥ ७ ॥ स वै संम्मृज्य[6] सम्मृज्य प्रतप्य प्रतप्य प्रयच्छति । यथावमर्शं निर्णिज्यानवमर्शमुत्तमं परिक्षालयेदेवं तत्तस्मात्प्रतप्य प्रतप्य प्रयच्छति ॥ ८ ॥ स वै स्रुवमेवाग्रे

---

१. वरणमिति. ख. पु. २. हि इति ग. पु. ३. मा. सं. १. २९.
४. मा. सं. १. २९. ५. मा. सं. १. २९. ६. सम्मृज्य. इति. ग.

सम्मार्ष्टि । अथेतराः स्रुचो योषा वै स्रुग्वृषा स्रुवस्तस्माद्यद्यपि बह्व्यऽइव स्त्रियः सार्धं यन्ति यऽएव तास्वपि कुमारकऽइव पुमान् भवति सऽएव तत्र॰ प्रथमऽएत्यनूच्यऽइतरास्तस्मात्स्रुवमेवाग्रे सम्मार्ष्ट्यथेतराः स्रुचः ॥ ९ ॥ स वै तथैव सम्मृज्यात् । यथाग्निं नाभिव्युक्षेद्यथा यस्माऽअशनमाहरिष्यन्त्स्यात्तं पात्रनिर्णेजनेनाभिव्युक्षेदेवं तत्तस्मादु तथैव सम्मृज्याद्यथाग्निं नाभिव्युक्षेत् प्राङिवैवोत्क्रम्य ॥१०॥ तद्धैके । स्रुक्सम्मार्जनान्यग्नावभ्यादधति व्वेदस्याहाभूवन्त्स्रुचऽएभिः सममार्जिषुरिदं वै किञ्चिद्यज्ञस्य नेदिदं बहिर्द्धा यज्ञाद्भवदिति तदु तथा न कुर्याद्यथा यस्माऽअशनमाहरेत्तं पात्रनिर्णेजनं पाययेदेवं तत्तस्मादु परास्येदेवैतानि ॥ ११ ॥ अथ पत्नीꣳ सन्नह्यति । जघनार्द्धो वाऽएष यज्ञस्य यत्पत्नी प्राङ् मे यज्ञस्तायमानो यादिति युनक्त्येवैनामेतद्युक्ता मे यज्ञमन्वासाताऽइति ॥ १२ ॥ योक्त्रेण सन्नह्यति । योक्त्रेण हि योग्यं युञ्जन्त्यस्ति वै पत्न्याऽअमेध्यं यदवाचीनं नाभेरथैतदाज्यमवेक्षिष्यमाणा भवति तदेवास्याऽएतद्योक्त्रेणान्तर्द्दधात्यथ मेध्येनैवोत्तरार्धेनाज्यमवेक्षते तस्मात्पत्नीꣳ सन्नह्यति ॥ १३ ॥ स वाऽअभिवासः सन्नह्यति । ओषधयो वै व्वासो व्वरुण्या रज्जुस्तदोषधीरेवैतदन्तर्द्दधाति तथो हैनामेषा व्वरुण्या रज्जुर्न्न हिनस्ति तस्मादभिवासः सन्नह्यति ॥ १४ ॥ स सन्नह्यति । "अदित्यै रास्नासी"तीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वाऽएतस्य पत्नी भवति तदस्याऽएतद्रास्नामेव करोति न रज्जुꣳ ह्विरो वै रास्ना तामेवास्याऽएतत्करोति ॥ १५ ॥ स वै न ग्रन्थिं कुर्य्यात् । व्वरुण्यो वै ग्रन्थिर्व्वरुणो ह पत्नीं गृह्णीयाद्यद्ग्रन्थिं कुर्य्यात्तस्मान्न ग्रन्थिं करोति ॥१६॥ ऊर्ध्वमेवोद्गूहति । "व्विष्णोर्व्वेष्योऽसी"ति सा वै न पश्चात्प्राची देवानां यज्ञमन्वासीतेयं वै पृथिव्यदितिः सेयं देवानां पत्नी सा पश्चात्प्राची देवानां यज्ञमन्वास्ते तद्धेमामभ्यारोहेत् सा

१. See. तै. ब्रा. ३. ३. ३. १. २. मा. सं. १. ३०. ३. मा. सं. १. ३०.

पत्नी क्षिप्रेऽमुं लोकमियात्तथो ह पत्नी ज्योग्जीवति तदस्या ऽएवैतन्निह्नुते तथो हैनामियं न हिनस्ति तस्मादु दक्षिणतऽइवैवान्वासीत ॥ १७ ॥ अथाज्यमवेक्षते । योषा[1] वै पत्नी रेतऽआज्यं मिथुनमेवैतत्प्रजननं क्रियते तस्मादाज्यमवेक्षते ॥ १८ ॥ सावेक्षते । "अदब्धेन[2] त्वा चक्षुषावपश्यामी"त्यनार्त्तेन त्वा चक्षुषावपश्यामीत्येवैतदाहा"ग्नेर्जिह्वासी"[3]ति यदा वाऽएतदग्नौ जुह्वत्यथाग्नेर्जिह्वाऽइवोत्तिष्ठन्ति तस्मादाहाग्नेर्जिह्वासीति "सुहूर्देवेभ्य"[4]ऽइति साधु देवेभ्यऽइत्येवैतदाह "धाम्ने[5] धाम्ने मे भव यजुषे यजुषऽ"इति सर्व्वस्मै मे यज्ञायैधीत्येवैतदाह ॥ १९ ॥ अथाज्यमादाय प्राङुदाद्रवति[6] । तदाहवनीयेऽधिश्रयति यस्याहवनीये हवींꣳषि श्रपयन्ति सर्व्वो मे यज्ञऽआहवनीये शृतोऽसदित्यथ यदमुत्राग्रेऽधिश्रयति पत्नीꣳ ह्यवकाशयिष्यन् भवति न हि तदवकल्पते यत्सामि प्रत्यग्घरेत्पत्नीमवकाशयिष्यामीत्यथ यत्पत्नीं नावकाशयेदन्तरियाद्ध यज्ञात् पत्नीं तथो ह यज्ञात्पत्नीं[7] नान्तरेति तस्मादु सार्धमेव व्विलाप्य प्रागुदाहरत्यवकाश्य पत्नीं यस्यो पत्नी न भवत्यग्रऽएव तरयाहवनीयेऽधिश्रयति तत्ततऽआदत्ते तदन्तर्व्वेद्यासादयति ॥ २० ॥ तदाहुः[8] । नान्तर्व्वेद्यासादयेदतो वै देवानां पत्नीः संयाजयन्त्यवसभाऽअह देवानां पत्नीः करोति परः पुꣳसो हास्य पत्नी भवतीति तदु होवाच याज्ञवल्क्यो यथादिष्टं पत्न्याऽअस्तु कस्तदाद्रियेत यत्परः पुꣳसा वा पत्नी स्याद्यथा वा यज्ञो व्वेदिर्यज्ञऽआज्यं यज्ञाद्यज्ञं निर्मिमाऽइति तस्मादन्तर्व्वेद्येवासादयेत् ॥२१॥ प्रोक्षणीषु पवित्रे भवतः । ते ततऽआदत्ते ताभ्यामाज्यमुत्पुनात्येको वाऽउत्पवनस्य बन्धुर्मेध्यमेवैतत्करोति ॥ २२ ॥ सऽउत्पुनाति । "सवितुस्त्वा[9] प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः

---

१. योषा इति. ग. पु. २. मा. सं. १. ३०. ३. मा. सं. १. ३०.
४. मा. सं. १. ३० ५. मा. सं. १. ३०. ६. प्राङुदाहरतीति. ग. पु.
७. पत्नीमिति. ख. पु. ८. तदाहुः इति. ग. पु. ९. मा सं १. ३१.

भि''रिति सोऽसावेव बन्धुः ॥ २३ ॥ ( शतम् २०० ) अथाज्यलिप्ताभ्यां पवित्राभ्याम् । प्रोक्षणीरुत्पुनाति ''सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभि''रिति सोऽसावेव बन्धुः ॥२४॥ तद्यदाज्यलिप्ताभ्यां पवित्राभ्याम् । प्रोक्षणीरुत्पुनाति तदप्सु पयो दधाति तदिदमप्सु पयो हितमिदᳬंहि यदा व्वर्षत्यथौषधयो जायन्तऽओषधीर्जग्ध्वापः पीत्वा ततऽएष रसः सम्भवति तस्माद्दु रसस्यो चैव सर्व्वत्वाय ॥ २५ ॥ अथाज्यमवेक्षते । तद्धैके यजमानमवख्यापयन्ति तदु होवाच याज्ञवल्क्यः कथं नु न स्वयमध्वर्यवो भवन्ति कथᳬंस्वयं नान्वाहुर्यत्र भूयस्यऽइवाशिषः क्रियन्ते कथं न्वेषामत्रैव श्रद्धा भवतीति यां वै कां च यज्ञऽऋत्विजऽआशिषमाशासते यजमानस्यैव सा तस्मादध्वर्युरेवावेक्षेत ॥ २६ ॥ सोऽवेक्षते । सत्यं वै चक्षुः सत्यᳬं हि वै चक्षुस्तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति यऽएव ब्रूयादहमदर्शमिति तस्माऽएव श्रद्दध्याम तत्सत्येनैवैतत्समर्द्धयति ॥२७॥ सोऽवेक्षते । ''तेजोसि शुक्रमस्यमृतमसी''ति सऽएष सत्यऽएव मन्त्रस्तेजो ह्येतच्छुक्रᳬं ह्येतदमृतᳬं ह्येतत्तत्सत्येनैवैतत्समर्द्धयति ॥२८॥ Cf. का. श. २. २. ४. तै. ब्रा. ३. ३. १–४. का. सं. ३१. ९. मै. सं. ४. १. ११.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥

---

१. अत्र कण्डिकानामादितः द्वितीयशतसंख्या पूर्णा भवति.
२. मा. सं. १. ३१.    ३. सर्वत्वायेति. ग. पु.
४. see तै. ब्रा. ३. ३. ५. १. and आप. श्रौ. १. ६. ६.
५. मा. सं. १. ३१.    ६. स. इति. ग. पु.

पुरुषो वै यज्ञः। पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुतऽएष वै तायमानो यावानेव पुरुषस्तावान् विधीयते तस्मात्पुरुषो यज्ञः ॥१॥ तस्येयमेव जुहूः। इयमुपभृदात्मैव ध्रुवा तद्वाऽआत्मनऽएवेमानि सर्व्वाण्यङ्गानि प्रभवन्ति तस्मादु ध्रुवायाऽएव सर्व्वो यज्ञः प्रभवति ॥२॥ प्राणऽएव स्रुवः। सोऽयं प्राणः सर्व्वाण्यङ्गान्यनुसञ्चरति तस्मादु स्रुवः सर्व्वाऽअनु स्रुचः सञ्चरति ॥ ३ ॥ तस्यासावेव द्यौर्जुहूः। अथेदमन्तरिक्षमुपभृदियमेव ध्रुवा तद्वाऽअस्याऽएवेमे सर्व्वे लोकाः प्रभवन्ति तस्मादु ध्रुवायाऽएव सर्व्वो यज्ञः प्रभवति ॥ ४ ॥ अयमेव स्रुवो योऽयं पवते। सोऽयमिमान्त्सर्व्वांल्लोकाननुपवते तस्मादु स्रुवः सर्व्वाऽअनु स्रुचः सञ्चरति ॥ ५ ॥ सऽएष यज्ञस्तायमानः। देवेभ्यस्तायत ऋतुभ्यश्छन्दोभ्यो यद्धविस्तद्देवानां यत्सोमो राजा यत्पुरोडाशस्तत्तदादिश्य गृह्णात्यमुष्मै त्वा जुष्टं गृह्णामीत्येवमु हि तेषाम्[1] ॥६॥ अथ यान्याज्यानि गृह्यन्ते। ऋतुभ्यश्चैव तानि छन्दोभ्यश्च गृह्यन्ते तत्तदनादिश्याज्यस्यैव रूपेण गृह्णाति स वै चतुर्जुहवां गृह्णात्यष्टौ कृत्वऽउपभृति ॥ ७ ॥ स यच्चतुर्जुह्वां गृह्णाति। ऋतुभ्यस्तद् गृह्णाति प्रयाजेभ्यो हि तद्गृह्णात्यृतवो हि प्रयाजास्तत्तदनादिश्याज्यस्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्याद्वसन्ताय त्वा ग्रीष्माय त्वेति गृह्णीयात्तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति ॥८॥ अथ यदष्टौकृत्वऽउपभृति गृह्णाति। छन्दोभ्यस्तद्गृह्णात्यनुयाजेभ्यो[2] हि तद् गृह्णाति छन्दांᳬसि ह्यनुयाजास्तत्तदनादिश्याज्यस्यैव रूपेण गृह्णात्यजामितायै जामि ह कुर्याद्गायत्र्यै त्वा त्रिष्टुभे त्वेति गृह्णीयात्तस्मादनादिश्याज्यस्यैव रूपेण गृह्णाति ॥ ९ ॥ अथ यच्चतुर्ध्रुवायां गृह्णाति। सर्व्वस्मै तद्यज्ञाय गृह्णाति तत्तदनादिश्याज्यस्यैव रूपेण

---

१. हैतेषामिति ख. ग. पु.  २. See. तै. ब्रा. ३. ३. ५. ५.

गृह्णाति कस्माऽउह्यादिशेद्यतः सर्व्वाभ्यऽएव देवताभ्योऽवद्यति तस्मा दनादिश्याज्यस्यैव रूपेण गृह्णाति ॥१०॥ यजमान ऽएव जुहूमनु। योऽस्माऽअरातीयति सऽउपभृतमन्वत्तैव जुहूमन्वाद्यऽउपभृतमन्वत्तैव जुहूराद्यऽउपभृत्स वै चतुर्जुह्वां गृह्णात्यष्टौ कृत्वऽउपभृति ॥११॥स यच्चतुर्जुह्वां गृह्णाति। अत्तारमेवैतत्परिमिततरं कनीयाᳬसं करोत्यथ यदष्टौ कृत्व ऽउपभृति गृह्णात्याद्यमेवैतदपरिमिततरं भूयाᳬसं करोति तद्धि समृद्धं यत्रात्ता कनीयानाद्यो भूयान् ॥१२॥ स वै चतुर्जुह्वां गृह्णन्। भूयऽआज्यं गृह्णात्यष्टौ कृत्वऽउपभृति गृह्णन् कनीय ऽआज्यं गृह्णाति ॥ १३ ॥ स यच्चतुर्जुह्वां गृह्णन्। भूयऽआज्यं गृह्णात्यत्तारमेवैतत्परिमिततरं कनीयाᳬसं कुर्व्वंस्तस्मिन्वीर्यं बलं दधात्यथ यदष्टौ कृत्व ऽउपभृति गृह्णन् कनीयऽआज्यं गृह्णात्याद्यमेवैतदपरिमिततरं भूयाᳬसं कुर्व्वंस्तमवीर्यमबलीयाᳬसं करोति तस्मादुत राजापारां व्विशं प्रावसायाप्येकव्वेश्मनैव जिनाति त्वद्यथा त्वत्कामयते तथा सचतऽएतेनो ह तद्वीर्येण यज्जुह्वां भूयऽआज्यं गृह्णाति स यज्जुह्वां गृह्णाति जुह्वैव तज्जुहोति यदुपभृति गृह्णाति जुह्वैव तज्जुहोति ॥१४॥ तदाहुः। कस्माऽउ तर्ह्युपभृति गृह्णीयाद्यदुपभृता न जुहोतीति स यद्धोपभृता जुहुयात्पृथग्घैवेमाः प्रजाः स्युर्नैवात्ता स्यान्नाद्यः स्यादथ यत्तज्जुह्वैव समानीय जुहोति तस्मादिमा व्विशः क्षत्रियाय बलिᳬहरन्त्यथ यदुपभृति गृह्णाति तस्मादु क्षत्रियस्यैव व्वशे सति व्वैश्यं पशवऽउपतिष्ठन्तेऽथ यत्तज्जुह्वैव समानीय जुहोति तस्माद्यदोत क्षत्रियः कामयतेऽथाह वैश्यमपि यत्ते परो निहितं तदाहरेति तं जिनाति त्वद्यथा त्वत्कामयते तथा सचतऽएतेनो ह तद्वीर्येण ॥ १५ ॥ तानि वाऽएतानि। छन्दोभ्यऽआज्यानि गृह्यन्ते स यच्चतुर्जुह्वां गृह्णाति गायत्र्यै तद् गृह्णात्यथ यदष्टौ कृत्वऽउपभृति गृह्णाति त्रिष्टुब्जगतीभ्यां तद्गृह्णात्यथ यच्चतुर्ध्रुवायां गृह्णात्य-

१. गृह्णाति. इति. ग. २. पृथगिति ग. पु. ३. वैश्यमयि इति. ग. पु.

तुष्टुभे तद्गृह्णाति व्वाग्वाऽअनुष्टुब्वाचो वाऽइदꣳ सर्व्वं प्रभवति तस्माद्ध्रुवायाऽएव सर्व्वो यज्ञः प्रभवतीयं वाऽ अनुष्टुबस्यै वाऽ इदꣳ सर्व्वं प्रभवति तस्माद्ध्रुवायाऽएव सर्व्वो यज्ञः प्रभवति ॥ १६ ॥ स गृह्णाति । "धाम[1] नामासि प्रियं देवाना"मित्येतद्वै देवानां प्रियतमं धाम यदाज्यं तस्मादाह धाम नामासि प्रियं देवानामित्य"नाधृष्टं[2] देवयजनमसी"ति व्वज्रो ह्याज्यं तस्मादाहानाधृष्टं देवयजनमसीति ॥ १७ ॥ सऽएतेन यजुषा । सकृज्जुह्वां गृह्णाति त्रिस्तूष्णीमेतेनैव यजुषा सकृदुपभृति गृह्णाति सप्तकृत्वस्तूष्णीमेतेनैव यजुषा सकृद्ध्रुवायां गृह्णाति त्रिस्तूष्णीं *तदाहुस्त्रिस्त्रिरेव यजुषा गृह्णीयात्त्रिवृद्धि यज्ञऽइति तदु नु सकृत्सकृदेवात्रो ह्येव त्रिर्गृहीतꣳ सम्पद्यते ॥ १८ ॥ Cf· का. श. २. ३. १., तै. ब्रा. ३. ३. ५.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥

## १. २. ६.

प्रोक्षणीरध्वर्युरादत्ते । सऽइध्ममेवाग्रे प्रोक्षति "कृष्णोऽस्याखरेष्ठोऽग्नये[3] त्वा जुष्टं प्रोक्षामी"ति तन्मेध्यमेवैतदग्नये करोति ॥ १ ॥ अथ व्वेदिं प्रोक्षति । "व्वेदिरसि[4] बर्हिषे त्वा जुष्टां प्रोक्षामी"[5]ति तन्मेध्यामेवैतद्बर्हिषे करोति ॥२॥ अथास्मै बर्हिः प्रयच्छति[6] । तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्षति "बर्हिरसि[7] स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामी"ति तन्मेध्यमेवैतत्स्रुग्भ्यः करोति ॥ ३ ॥ अथ याः प्रोक्षण्यः परिशिष्यन्ते । ताभिरोषधीनां मूलान्युपनिनयत्य"दित्यै[8] व्युन्दनमसी"तीयं वै

१. मा. सं. १. ३१. २. मा. सं. १. ३१. * See. तै. ब्रा. ३. ३. ४. ४.
३. मा. सं. २. १. ४. मा. सं. २. १. ५. प्रोक्षामीति क.
६. प्रयच्छन्तीति. ख. ७. मा. सं. २. १. ८. मा. सं. २. २.

पृथिव्यदितिस्तदस्या ऽएवैतदोषधीनां मूलान्युपोनत्ति ताऽइमाऽआर्द्रमूलाऽओषधयस्तस्माद्यद्यपि शुष्काण्यग्राणि भवन्त्यार्द्राण्येव मूलानि भवन्ति ॥ ४ ॥ अथ विस्रᳬंस्य ग्रन्थिम् । पुरस्तात्प्रस्तरं गृह्णाति "विष्णोस्स्तुपोऽसी"ति यज्ञो वै विष्णुस्तस्येयमेव शिखा स्तुपऽएतामेवास्मिन्नेतद्दधाति पुरस्ताद् गृह्णाति पुरस्ताद्ध्ययᳬं स्तुपस्तस्मात्पुरस्ताद् गृह्णाति ॥ ५ ॥ अथ संनहनं विस्रᳬंसयति । प्रक्लृप्तᳬं हैवास्य स्त्री विजायतऽइति तस्मात्सन्नहनं विस्रᳬंसयति तद्दाक्षिणायाᳬं श्रोणौ निदधाति नीविर्हैवास्यैषा दक्षिणतऽइव हीयं नीविस्तस्माद्दक्षिणायाᳬं श्रोणौ निदधाति तत्पुनरभिच्छादयत्यभिच्छन्नेव हीयं नीविस्तस्मात्पुनरभिच्छादयति ॥ ६ ॥ अथ बर्हिस्तृणाति । अयं वै स्तुपः प्रस्तरोऽथ यान्यवाञ्चि लोमानि तान्येवास्य यदितरं बर्हिस्तान्येवास्मिन्नेतद्दधाति तस्माद्बर्हिस्तृणाति ॥ ७ ॥ योषा वै वेदिः । तामेतद्देवाश्च पर्यासते ये चेमे ब्राह्मणाः शुश्रुवाᳬंसोऽनूचानास्तेष्वेवैनामेतत्पर्यासीनेष्वनग्नां करोत्यनग्नतायाऽएव तस्माद्बर्हिस्तृणाति ॥ ८ ॥ यावती वै वेदिः । तावती पृथिव्योषधयो बर्हिस्तदस्यामेवैतत्पृथिव्यामोषधीर्दधाति ताऽइमाऽअस्यां पृथिव्यामोषधयः प्रतिष्ठितास्तस्माद्बर्हिस्तृणाति ॥ ९ ॥ तद्वै बहुलᳬं स्तृणीयादित्याहुः । यत्र वाऽअस्यै बहुलतमा ओषधयस्तदस्याऽउपजीवनीयतमं तस्माद्बहुलᳬंस्तृणीयादिति तद्वै तदाहर्तयैवाधि त्रिवृत्स्तृणाति त्रिवृद्धि यज्ञोऽथोऽअपि प्रवर्हᳬंस्तृणीयात्[2] "स्तृणन्ति बर्हिरानुषगि"[3]ति ह्यृषिणाभ्यनूक्तमधरमूलᳬं स्तृणात्यधरमूलाऽइव हीमाऽअस्यां पृथिव्यामोषधयः प्रतिष्ठितास्तस्मादधरमूलᳬं स्तृणाति ॥ १० ॥ स स्तृणाति । "ऊर्णम्रदसं[3] त्वा स्तृणामि स्वासस्थां देवेभ्य"ऽइति साध्वीं देवेभ्यऽइत्येवैतदाह यदाहोर्णम्रदसं त्वेति स्वासस्थां देवेभ्यऽइति स्वासदां देवेभ्यऽइत्येवैतदाह ॥ ११ ॥ अथाग्निं कल्पयति । शिरो वै

१. मा. सं. २. २. २. प्रवर्हं इति. ग. ३. मा. सं. २. २.

यज्ञस्याहवनीयः पूर्वार्धो वै शिरः पूर्वार्धमेवैतद्यज्ञस्य कल्पयत्युपर्युपरि प्रस्तरं धारयन् कल्पयत्ययं वै स्तुपः प्रस्तर एतमेवास्मिन्नेतत्प्रति दधाति तस्मादुपर्युपरि प्रस्तरं धारयन् कल्पयति ॥ १२ ॥ अथ परिधीन् परिदधाति । तद्यत्परिधीन्परिदधाति यत्र वै देवा अग्रेऽग्निँ होत्राय प्रावृणत तद्धोवाच न वाऽअहमिदमुत्सहे यद्वो होता स्यां यद्वो हव्यं वहेयं त्रीन्पूर्वान्प्रावृढ्वं ते प्राधन्विषुस्तान्नु मेऽवकल्पयत वाऽथ वाऽअहमेतदुत्साक्ष्ये यद्वो होता स्यां यद्वो हव्यं वहेयमिति तथेति तानस्मा एतानवाकल्पयंस्त एते परिधयः ॥ १३ ॥ स होवाच । वज्रो वै तान्वषट्कारः प्रावृणग्वज्राद्वै वषट्काराद्बिभेमि यन्मा वज्रो वषट्कारो न प्रवृञ्ज्यादेतैरेव मा परिधत्त तथा मा वज्रो वषट्कारो न प्रवर्क्ष्यतीति तथेति तमेतैः पर्यदधुस्तं न वज्रो वषट्कारः प्रावृणक् तद्धस्मैवैतदग्नये नह्यति यदेतैः परिदधाति ॥ १४ ॥ त उ हैत ऊचुः । इदमु चेदस्मान्यज्ञे युङ्क्थास्त्वेवास्माकमपि यज्ञे भाग इति ॥ १५ ॥ तथेति देवा अब्रुवन् । यद्वहिष्परिधि स्कन्त्स्यति तद्युष्मासु हुतमथ यद्वा उपर्युपरि होष्यन्ति तद्वोऽविष्यत्यथ यदग्नौ होष्यन्ति तद्वोऽविष्यतीति स यदग्नौ जुह्वति तदेनानवत्यथ यदेनानुपर्युपरि जुह्वति तदेनानवत्यथ यद्वहिष्परिधि स्कन्दति तदेतेषु हुतं तस्मादु ह नाग इव स्कन्नँ स्यादिमां वै ते पृथिवीं प्राविशन्यद्वा इदं किञ्च स्कन्दत्यस्यामेव तत्सर्वं प्रतितिष्ठति ॥ १६ ॥ स स्कन्नमभिमृशति । "भुवंपतये स्वाहा भुवनपनये स्वाहा भूतानां पतये स्वाहे"त्येतानि वै तेषामग्नीनां नामानि यद्भुवपतिर्भुवनपतिर्भूतानां पतिस्तद्यथा वषट्कृतꣳ हुतमेवमस्यैतेष्वग्निषु भवति ॥ १७ ॥ तद्धैके । इध्मस्यैवैतान् परिधीन् परिदधति तदु तथा न कुर्यादनवक्लृप्ता ह तस्यैते भवन्ति यानिध्मस्य परिदधात्यभ्याधानाय ह्येवेध्मः क्रियते तस्यो हैवैतेऽवक्लृप्ता भवन्ति यस्यैतानन्यानाहरन्ति

१. पूर्वोर्धे इति. ग. पूर्व्वार्धे इति. क. २. तद्धस्मैवेति. ख. पु. ३. मा. सं. २. २.

परिधय ऽइति तस्मादन्यानेवाहरेयुः ॥ १८ ॥ ते वै पालाशाः स्युः । ब्रह्म वै पलाशो ब्रह्माग्निरग्नयो हि तस्मात्पालाशाः स्युः ॥ १९ ॥ यदि पालाशान्न विन्देत् । अथोऽअपि व्वैकङ्कतास्स्युर्यदि व्वैकङ्कतान्न विन्देदथोऽअपि का[1]र्ष्मर्यमयाः स्युर्यदि कार्ष्मर्यमयान्न विन्देदथो ऽअपि बैल्वाः स्युरथो खादिरा ऽअथोऽऔदुम्बराऽएते हि वृक्षा यज्ञियास्तस्मादेतेषां व्वृक्षाणां भवन्ति ॥ २० ॥ Cf. का. श. २. ३. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥

द्वितीयः प्रपाठकस्समाप्तः ॥
( कण्डिकाः ) *१२२ ॥

## अथ तृतीयः प्रपाठकः ॥

### १. ३. १.

ते वाऽआर्द्राः स्युः । एतद्ध्येषां जीव[2]मेतेन स[3]तेजसऽएतेन व्वीर्यवन्तस्तस्मादार्द्राः स्युः ॥ १ ॥ स मध्यममेवाग्रे परिधिं परिदधाति । "[4]गन्धर्व्वस्त्वा व्विश्वावसुः परिदधातु व्विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडित"ऽइति ॥ २ ॥ अथ दक्षिणं परिदधाति । "[5]इन्द्रस्य बाहुरसि दक्षिणो व्विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडित"इति[6] ॥ ३ ॥ अथोत्तरं परिदधाति । "मि[7]त्राव्वरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा व्विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडित"ऽइत्यग्नयो हि तस्मादाहा-

---

१. कार्ष्मर्यमया इति. ग. पु.
* द्वितीयप्रपाठकस्थकण्डिकानां संख्येयम् ।
२. जीवमेतेनेति. कं.
३. सतेजस इति क.
४. मा. सं. २. ३.
५. मा. सं. २. ३.
६. इति ख.
७. मा. सं. २. ३.

ग्निरिड्ऽईडितऽइति ॥ ४ ॥ अथ समिधमभ्यादधाति । स मध्यममेवाग्रे परिधिमुपस्पृशति तेनैतानग्रे समिन्धेऽथाग्नावभ्यादधाति तेनोऽअग्निं प्रत्यक्षꣳसमिन्धे ॥ ५ ॥ सोऽभ्यादधाति[1] । "व्वीतिहोत्रं[2] त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वर"ऽइत्येतया गायत्र्या गायत्रीमेवैतत्समिन्धे सा गायत्री समिद्धान्यानि छन्दाꣳसि समिन्धे छन्दाꣳसि समिद्धानि देवेभ्यो यज्ञं व्वहन्ति ॥ ६ ॥ अथ यां द्वितीयाꣳ समिधमभ्यादधाति । व्वसन्तमेव तया समिन्धे स व्वसन्तः समिद्धोऽन्यानृतून्त्समिन्धऽऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति सोभ्यादधाति "समिदसी"[3]ति समिद्धि[4] व्वसन्तः ॥ ७ ॥ अथाभ्याधाय जपति । "सूर्यस्त्वा[5] पुरस्तात्पातु कस्याश्चिदभिशस्त्या"ऽइति गुप्त्यै वाऽअभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोति नेत्पुरस्तान्नाष्ट्रा रक्षाꣳस्यभ्यवचरानिति सूर्यो हि नाष्ट्राणाꣳ रक्षसामपहन्ता ॥ ८ ॥ अथ यामेवामूं तृतीयाꣳ समिधमभ्यादधाति । अनुयाजेषु ब्राह्मणमेव तया समिन्धे स ब्राह्मणः समिद्धो देवेभ्यो यज्ञं व्वहति ॥ ९ ॥ अथ स्तीर्णां व्वेदिमुपावर्त्तते । स द्वे तृणेऽ आदाय तिरश्ची निदधाति "सवितुर्बाहू[6] स्थ"ऽइत्ययं वै स्तुपः प्रस्तरोऽथास्यैते भुवावेव तिरश्ची निदधाति तस्मादिमे तिरश्च्यौ भ्रुवौ क्षत्रं वै प्रस्तरो व्विशऽइतरं बर्हिः क्षत्रस्य चैव व्विशश्च व्विधृत्यै तस्मात्तिरश्ची निदधाति तस्माद्वेव व्विधृती नाम ॥ १० ॥ तत्प्रस्तरꣳ स्तृणाति । "ऊर्णम्रदसं[7] त्वा स्तृणामि स्वासस्थं देवेभ्य"ऽइति साधुं देवेभ्य ऽइत्येवैतदाह यदाहोर्णम्रदसं त्वेति स्वासस्थं देवेभ्यऽइति स्वासदं देवेभ्य[8] इत्येवैतदाह ॥ ११ ॥ तमभिनिदधाति । "आ[9] त्वा व्वसवो रुद्रा ऽआदित्याः स-

---

१. दधाति इति क. २. मा. सं. २. ४. ३. मा. सं. २. ५.

४. See. तै. सं. २. ६. १. ५. मा. सं. २. ५. ६. मा. सं. २. ५.

७. मा. सं. २. ५. ८. देवेभ्य. इति क. ९. मा. सं. २. ५.

दन्त्वि"त्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्याऽएते त्वा सीदन्त्वित्येवैतदाहाभिनिहितऽएव सव्येन पाणिना भवति ॥ १२ ॥ अथ दाक्षिणेन जुहूं प्रतिगृह्णाति । नेदिह पुरा नाष्ट्रा रक्षाᳪंस्याविशानिति ब्राह्मणो हि रक्षसामपहन्ता तस्मादभिनिहित ऽएव सव्येन पाणिना भवति ॥ १३ ॥ अथ जुहूं प्रतिगृह्णाति । "घृताच्यसि जुहूर्नाम्ने"ति घृताची हि जुहूर्हि नाम्ना "सेदं प्रियेण धाम्ना प्रियᳪं सदऽआसीदे"ति "घृताच्यस्युपभृन्नाम्ने"त्युपभृतं घृताची ह्युपभृद्धि नाम्ना "से दं प्रियेण धाम्ना प्रियᳪं सदऽआसीदे"ति "घृताच्यासि ध्रुवा नाम्ने"ति ध्रुवां घृताची हि ध्रुवा हि नाम्ना "सेदं प्रियेण धाम्ना प्रियᳪंसद आसीदे"ति "प्रियेण धाम्ना प्रियᳪंसदऽआसीदे"ति यदन्यद्धविः॥१४॥स वाऽउपरि जुहूᳪंसादयति। अथऽइतराः स्रुचः क्षत्रं वै जुहूर्व्विशऽइतराः स्रुचः क्षत्रमेवैताद्विशऽउत्तरं करोति तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजाऽउपासते तस्मादुपरि जुहूᳪं सादयत्यथ ऽइतराः स्रुचः ॥ १५ ॥सोऽभिमृशति । "ध्रुवाऽअसदन्नि"ति ध्रुवा ह्यसद"न्नृतस्य योना"विति यज्ञो वा ऋतस्य योनिर्यज्ञे ह्यसदं"स्ता व्विष्णो पाहि पाहि यज्ञं पाहि यज्ञपति"मिति तद्यजमानमाह"पाहि मां यज्ञन्य"मिति तदप्यात्मानं यज्ञान्नान्तरेति यज्ञो वै व्विष्णुस्तद्यज्ञायैवैतत्सर्व्वं परिददाति गुप्त्यै तस्मादाह ता व्विष्णो पाहीति ॥१६॥

Cf. का. श. २. ३. २., तै. सं. ३. ३. ६., मै. सं. ४. १. १३., काठ. सं. ३१. १०.

इति शुक्लयजुर्वेदीयमाध्यन्दिनीये शतपथब्राह्मणे
प्रथमकाण्डे तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥

---

१. मा. सं. २. ६. २. मा. सं. २. ६. ३. मा. सं. २. ६.
४. मा. सं. २. ६. ५. मा. सं. २. ६. ६. मा. सं. २. ६.
७. क्षत्रमेवेति. क.ग. पु. ८. मा. सं. २. ६. ९. मा. सं. २. ६.
१०. मा. सं. २. ६. ११. यज्ञं इति. क. १२. मा. सं. २. ६.

इन्धे ह वाऽएतदध्वर्युः । इध्मेनाग्निं तस्मादिध्मो नाम समिन्धे सामिधेनीभिर्होता तस्मात्सामिधेन्यो नाम ॥ १ ॥ सऽआह । "अग्नये समिध्यमानायानुब्रूही"त्यग्नये ह्येतत्समिध्यमानायान्वाह ॥ २ ॥ तदु हैकऽआहुः । अग्नये समिध्यमानाय होतरनुब्रूहीति तदु तथा न ब्रूयादहोता वाऽएष पुरा भवति यदैवैनं प्रवृणीते[1]ऽथ होता तस्मादु ब्रूयादग्नये समिध्यमानायानुब्रूहीत्येव[2] ॥ ३ ॥ आग्नेयीरन्वाह । स्वयैवैनमेतद्देवतया समिन्धे गायत्रीरन्वाह गायत्रं वाऽअग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसा समिन्धे व्वीर्यं गायत्री ब्रह्म गायत्री व्वीर्येणैवैनमेतत्समिन्धे ॥ ४ ॥ एकादशान्वाह । एकादशाक्षरा वै त्रिष्टुब्ब्रह्म गायत्री क्षत्रं त्रिष्टुबेताभ्यामेवैनमेतदुभाभ्यां व्वीर्याभ्याᳫं समिन्धे तस्मादेकादशान्वाह ॥ ५ ॥ स वै त्रिः प्रथमामन्वाह । त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात्त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ॥ ६ ॥ ताः पञ्चदश सामिधेन्यः सम्पद्यन्ते । पञ्चदशो वै व्वज्रो व्वीर्यं व्वज्रो व्वीर्य्यमेवैतत्सामिधेनीरभिसम्पादयति तस्मादेतास्वनूच्यमानासु यं द्विष्यात्तमङ्गुष्ठाभ्यामवबाधेतेदमहममुमवबाधऽइति तदेनमेतेन व्वज्रेणावबाधते ॥ ७ ॥ पञ्चदश वाऽअर्द्धमासस्य रात्रयः । अर्द्धमासशो वै संवत्सरो भवन्नेति तद्रात्रीराप्नोति ॥ ८ ॥ पञ्चदशानामु वै गायत्रीणाम् । त्रीणि च शतानि षष्टिश्चाक्षराणि त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि तदहान्याप्नोति तद्वेव संवत्सरमाप्नोति ॥९॥ सप्तदश सामिधेनीः । इष्ट्याऽअनुब्रूयादुपाᳫंशु तस्यै देवतायै यजति यस्याऽइष्टिं निर्व्वपति द्वादश वै मासाः संवत्सरस्य पञ्चर्त्तवऽएषऽएव प्रजापतिः सप्तदशः सर्व्वं वै प्रजापतिस्तत्सर्व्वेणैव तं काममनपराधᳫंराध्नोति यस्मैकामायेष्टिं निर्व्वपत्युपाᳫंशु देवतां यजत्यनिरुक्तं वाऽउपाᳫंशु सर्व्वं वाऽअनिरुक्तं तत्सर्व्वेणैव तं काामम-

---

१. प्रवृणीते इति. क. ग. पु.    २. ब्रूहीति. ग.

नपराधꣳ राध्नोति यस्मै कामायेष्टिं निर्व्वपत्येषऽइष्टेरुपचारः ॥१०॥ एकविꣳशतिꣳ सामिधेनीः।अपि दर्शपूर्णमासयोरनुब्रूयादित्याहुर्द्वादश वै मासाः संवत्सरस्य पञ्चर्त्तवस्त्रयो लोकास्तद्विꣳशतिरेषऽएवैकविꣳशो यऽएष तपति सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मादेकविꣳशतिमनुब्रूयात् ॥ ११ ॥ ता हैता गतश्रेरेवानुब्रूयात् । यऽइच्छेन्न श्रेयांस्यान्न पापीयानिति थाहूराय हैव स तेऽन्वाहुस्ताहङ्वा हैव भवति पापीयान्वा यस्यैवं विदुषऽएताऽअन्वाहुः सोऽएषा मीमाꣳसैव न त्वेवैताऽअनूच्यन्ते ॥ १२ ॥ त्रिरेव प्रथमां त्रिरुत्तमामनवानन्ननुब्रूयात् । त्रयो वाऽइमे लोकास्तदिमानेवैतल्लोकान्त्सन्तनोतीमांल्लोकान्त्स्पृणुते त्रयऽइमे पुरुषे प्राणाऽएतमेवास्मिन्नेत्सन्ततमव्यवच्छिन्नं दधात्येतदनुवचनम् ॥ १३ ॥ स यावदस्य व्वंशः[1] स्यात् । एवमेवानुविवक्षेत्तस्यैतस्य परिचक्षोत[2] साम्युवान्यादनवानन्ननुविवक्षंस्तत्कर्म विवृह्येत सा परिचक्षा[3] ॥ १४ ॥ स यद्येतन्नोदाशꣳसेत । अप्येकैकामेवानवानन्ननुब्रूयात्तदेकैकयैवेमांल्लोकान्त्सन्तनोत्येकैकयेमांल्लोकान्स्पृणुतेऽथ यत्प्राणं दधाति गायत्री वै प्राणः स यत्कृत्स्नां गायत्रीमन्वाह तत्कृत्स्नं प्राणं दधाति तस्मादेकैकामेवानवानन्ननुब्रूयात् ॥ १५ ॥ ता वै सन्तताऽअव्यवच्छिन्नाऽअन्वाह । संवत्सरस्यैवैतदहोरात्राणि सन्तनोति तानीमानि संवत्सरस्याहोरात्राणि सन्ततान्यव्यवच्छिन्नानि परिप्लवन्ते द्विषतऽउच्चैवैतद्भ्रातृव्याय नोपस्थानं करोत्युपस्थानꣳ ह कुर्याद्यदसन्तताऽअनुब्रूयात्तस्माद्वैसन्तताऽअव्यवच्छिन्नाऽअन्वाह ॥ १६ ॥ Cf. का. श. २. ३. ३., तै. सं. २. ५. ७.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे प्रथमकाण्डे तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥

( इति तृतीयोऽध्यायः )

---

१. वच इति. ग. २. परिचक्षोत इति. क. ३. परिचक्षा इति. ग.

हिङ्कृत्यान्वाह । नासामा यज्ञोऽस्तीति वाऽआहुर्न वाऽअहिङ्कृत्य साम गीयते स यद्धिङ्करोति तद्धिङ्कारस्य रूपं क्रियते प्रणवेनैव साम्नो रूपमुपगच्छत्यों३ ॐ३मित्येतेनो ह्यस्यैष सर्व्वऽएव ससामा यज्ञो भवति ॥ १ ॥ यद्वेव हिङ्करोति । प्राणो वै हिङ्कारः प्राणो हि वै हिङ्कारस्तस्मादपिगृह्य नासिके न हिङ्कर्त्तुंशक्नोति व्वाचा वाऽऋचमन्वाह व्वाक्च वै प्राणश्च मिथुनं तदेतत्पुरस्तान्मिथुनं प्रजननं क्रियते सामिधेनीनां तस्माद्वै हिङ्कृत्यान्वाह ॥ २ ॥ स वाऽउपांशु हिङ्करोति । अथ यदुच्चैर्हिङ्कुर्य्यादन्यतरदेव कुर्याद्वाचमेव तस्मादुपांशु हिङ्करोति ॥ ३ ॥ स वाऽएति च प्रेति चान्वाह । गायत्रीमेवैतदर्व्वाचीं च पराचीं च युनक्ति पराच्यह देवेभ्यो यज्ञं व्वहत्यर्व्वाची मनुष्यानवति तस्माद्वाऽएति च प्रेति चान्वाह ॥ ४ ॥ यद्वेवेति च प्रेति चान्वाह । प्रेति वै प्राणऽएत्युदानः प्राणोदानावेवैतद्दधाति तस्माद्वाऽएति च प्रेति चान्वाह ॥ ५ ॥ यद्वेवेति च प्रेति चान्वाह । प्रेति वै रेतः सिच्यतऽएति प्रजायते प्रेति पशवो व्वितिष्ठन्तऽएति समावर्त्तन्ते सर्व्वं वाऽइदमेति च प्रेति च तस्माद्वाऽएति च प्रेति चान्वाह ॥ ६ ॥ सोऽन्वाह । प्र वो व्वाजाऽअभिद्यवऽइति तन्नु प्रेति भवत्यग्नऽआयाहि व्वीतयऽइति तद्वेति भवति ॥७॥ तदु हैकऽआहुः । उभयं वाऽएतत्प्रेति सम्पद्यतऽइति तदु तदातिविज्ञान्यमिव "प्र वो व्वाजाऽअभिद्यव"ऽइति तन्नु प्रेत्यग्नऽआयाहि व्वीतयऽइति तद्वेति ॥८॥ सोऽन्वाह । प्र वो व्वाजाऽअभिद्यवऽइति तन्नु प्रेति भवति व्वाजाऽइत्यन्नं वै व्वाजाऽअन्नमेवैतदभ्यनूक्तमभिद्यवऽइत्यर्द्धमासा वा ऽअभिद्यवोऽर्द्धमासानेवैतदभ्यनूक्तंहविष्मन्तऽइति पशवो वै हविष्मन्तः पशूनेवैतदभ्यनूक्तम् ॥९॥ घृताच्येति । व्विदेघो ह माथवोऽग्निं व्वैश्वानरं मुखे बभार तस्य गोतमो राहूगण ऋषिः पुरोहितऽआस तस्मै ह स्मामन्त्र्यमाणो न प्रतिशृणोति नेन्मेऽग्निर्व्वैश्वानरो

मुखान्निष्पद्याताऽइति ॥ १० ॥ तम्मृग्भिर्ह्वयितुं दध्रे । व्वीतिहोत्रं त्वा कवे द्युमन्तंꣳसमिधीमहि । अग्ने बृहन्तमध्वरे[1] व्विदेघेति[2] ॥ ११ ॥ स न प्रतिशुश्राव । उदग्ने शुचयस्तव शुक्रा भ्राजन्तऽईरते । तव ज्योतीꣳष्यर्च्चयो व्विदेघाऽइति ॥ १२ ॥ स ह नैव प्रतिशुश्राव । तं त्वा घृतस्नवीमहऽइत्येवाभिव्याहरदथाऽस्य घृतकीर्त्तावेवाग्निर्व्वैश्वानरो मुखादुज्जज्वाल तन्न शशाक धारयितुꣳसोऽस्य मुखान्निष्पेदे सऽइमां पृथिवीं प्रापादः[3] ॥ १३ ॥ तर्हि व्विदेघो माथवऽआस । सरस्वत्याꣳ स ततऽएव प्राङ्दहन्न भीयायेमां पृथिवीं तं गोतमश्च राहूगणो व्विदेघश्च माथवः पश्चाद्दहन्तमन्वीयतुः स इमाः सर्व्वा नदीरतिददाह सदानीरेत्युत्तराद्गिरेर्न्निर्द्धावति ताꣳहैव[4] नातिददाह ताꣳह स्म तां पुरा ब्राह्मणा न[5] तरन्त्यनतिदग्धाग्निना व्वैश्वानरेणेति ॥ १४ ॥ ततऽएतर्हि । प्राचीनं बहवो ब्राह्मणास्तद्धाक्षेत्रतरमिवास स्रावितरमिवास्वदितमग्निना व्वैश्वानरेणेति ॥ १५ ॥ तदु हैतर्हि । क्षेत्रतरामिव ब्राह्मणाऽउ हि नूनमेनद्यज्ञैरसिष्वदन्त्सापि जघन्ये नैदाघे समिवैव कोपयति तावच्छीतानतिदग्धा ह्यग्निना व्वैश्वानरेण ॥ १६ ॥ स होवाच । व्विदेघो हं माथवः क्वाहं भवानीत्यतऽएव ते प्राचीनं भुवनमिति होवाच सैषाप्येतर्हि कोसलविदेहानां मर्यादा ते हि माथवाः ॥ १७ ॥ अथ होवाच । गोतमो राहूगणः कथं नु मं आमन्त्र्यमाणो न प्रत्यश्रौषीरिति स होवाचाऽग्निर्मे व्वैश्वानरो मुखेऽभूत्स नेन्मे मुखान्निष्पद्यातै तस्मात्ते न प्रत्यश्रौषमिति ॥ १८ ॥ तदु कथमभूदिति । यत्रैव त्वं घृतस्नवीमहऽइत्यभिव्याहार्षीस्तदेव मे घृतकीर्त्तावग्निर्व्वैश्वानरो मुखादुदज्वालीत्तं नाशकं धारयितुꣳस मे मुखान्निरपादीति ॥ १९ ॥ स यत्सामिधेनीषु घृतवत् । सामिधेनमेव तत्समेवैनं तेनेन्धे व्वीर्यमेवाऽस्मिन्दधाति ॥ २० ॥ तदु घृताच्येति । "देवान्

१. मध्वरे इति ग. २. विदेघेति. ग. ३. प्रापाद इति. ग.
४. ह इतिं नाऽस्ति क. ग. पुस्तकयोः । ५. न इति क. पु.

जिगाति सुम्नयुरि"ति यजमानो वै सुम्नयुः स हि देवान् जिगीषति स हि देवान् जिघांसति तस्मादाह देवान् जिगाति सुम्नयुरिति सैषाग्नेयी सत्यनिरुक्ता सर्व्वं वाऽअनिरुक्तं सर्व्वेणैवैतत्प्रतिपद्यते ॥२१॥ "[2]अग्नऽआयाहि व्वीतय"ऽइति । तद्वेति भवति व्वीतयऽइति समन्तिकमिव ह वाऽइमेऽग्रे लोकाऽआसुरित्युन्मृश्या हैव द्यौरास ॥ २२ ॥ ते देवाऽअकामयन्त । कथं नु नऽइमे लोका व्वितरां स्युः कथं नऽइदं व्वरीयऽइव स्यादिति तानेतैरेव त्रिभिरक्षरैर्व्यनयन् वीतयऽइति त ऽइमे व्विदूरं लोकास्ततो देवेभ्यो व्वरीयोऽभवद्वरीयो ह वाऽ[3]अस्मै भवति यस्यैवं व्विदुषऽएतामन्वाहुर्व्वीतय ऽ इति ॥२३॥ "गृणानो हव्य दातय"ऽ इति । यजमानो वै हव्यदातिर्गृणानो यजमानायेत्येवैतदाह "निहोता सत्सि बर्हिषी"त्यग्निर्व्वै होतायं लोको बर्हिरस्मिन्नेवैतल्लोकेऽग्निं दधाति सोऽयमस्मिंल्लोकेऽग्निर्हितः सैषेममेव लोकमभ्यनूक्तेममेवैतया लोकं जयति यस्यैवं व्विदुष ऽएतामन्वाहुः ॥ २४ ॥ "तं[5] त्वा समिद्भिरङ्गिर"ऽइति । समिद्भिर्ह्येतमङ्गिरसऽऐन्धताङ्गिरऽइत्यङ्गिराऽउ ह्यग्निर्घृतेन व्वर्द्धयामसीति तत्सामिधेनं पदं समेवैनं तेनेन्धे व्वीर्यमेवास्मिन्दधाति ॥ २५ ॥ ( शतम् ३०० ॥ ) "बृहच्छोचा यविष्ठ्ये"ति । बृहदु ह्येष शोचति समिद्धो यविष्ठ्येति यविष्ठो ह्यग्निस्तस्मादाह यविष्ठ्येति सैषैतमेव लोकमभ्यनूक्तान्तरिक्षलोकमेव तस्मादाग्नेयी सत्यनिरुक्ताऽनिरुक्तो ह्येष लोकऽएतमेवैतया लोकं जयति यस्यैवं व्विदुष ऽएतामन्वाहुः ॥२६॥ "सं नः पृथु श्रवाय्यमि"ति । अदो वै पृथु यस्मिन्देवा ऽएतच्छ्रवाय्यं यस्मिन्देवा "ऽअच्छा देव व्विवाससी"त्यच्छ देव व्विवासस्यैतन्नो गमयेत्येवैतदाह ॥ २७ ॥ "बृहदग्ने सुवीर्यमि"ति । अदो वै बृहद्यस्मिन्देवा ऽएतत्सुवीर्यं यस्मि-

---

१. ऋ. सं. ३. १. २८. १. सुम्नयुरिति क. पु.  २. ऋ. सं. ४. ५. २२. ५.
३. अस्येति. ग.  ४. वृणान. इति. ग. पु.  ५. ऋ. सं. ४. ५. २३. १.
६. आदितः कण्डिका संख्येयम् ॥  ७. ऋ. सं. ४. ५. २३. २.

न्देवाः सैषैतमेव लोकमभ्यनूक्ता दिवमेवैतमेवैतया लोकं जयति यस्यैवं विदुष ऽएतामन्वाहुः ॥२८॥ सोऽन्वाह । "[1]ईडेन्यो नमस्य"ऽ इतीडेन्यो ह्येष नमस्यो ह्येष "तिरस्तमाꣳसि दर्शत" ऽइति तिरऽइव ह्येष तमाꣳसि समिद्धो ददृशे "समग्निरिध्यते वृषे"ति सꣳ हीध्यते वृषा "[2]वृषो ऽअग्निः समिध्यतऽइति सꣳहीध्यते ॥२९॥ "अश्वो न देववाहन" ऽइति । अश्वो ह वाऽएष भूत्वा देवेभ्यो यज्ञं वहति यद्वै नेत्यृच्योमिति तत्तस्मादाहाश्वो न देववाहन ऽइति ॥ ३० ॥ "तꣳ हविष्मन्तऽईडत"ऽइति । हविष्मन्तो ह्येतं मनुष्या ऽईडते तस्मादाह तꣳ हविष्मन्तऽईडतऽइति॥३१॥ "[3]वृषणं त्वा वयं वृषन्वृषणः समिधीमही"ति । सꣳ ह्येनमिन्धते"ऽग्ने दीद्यतं बृहदि"ति दीदयेव ह्येष बृहत्समिद्धः ॥ ३२ ॥

( [5]अर्धप्रपाठकः ६४ )

तं वाऽएतम् । वृषण्वन्तं त्रिचमन्वाहाग्नेय्यो वाऽएताः सर्वाः सामिधेन्यो भवन्तीन्द्रो वै यज्ञस्य देवतेन्द्रो वृषैतेनो हाऽस्यैताः सेन्द्राः सामिधेन्यो भवन्ति तस्माद्वृषण्वन्तं त्रि[4]चमन्वाह ॥ ३३ ॥ सोऽन्वाह । "[6]अग्निं दूतं वृणीमह"ऽइति । देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे तान् स्पर्धमानान् गायत्र्यन्तरा तस्थौ या वै सा गायत्र्यासीदियं वै सा पृथिवीयꣳ हैव तदन्तरा तस्थौ त ऽउभयऽएव विदाञ्चक्रुर्यतरान्वै न ऽइयमुपावर्त्स्यति ते भविष्यन्ति परेतरे भविष्यन्तीति तामुभयऽएवोपमन्त्रयाञ्चक्रिरेऽग्निरेव देवानां दूत ऽआस सहरक्षा ऽइत्यसुररक्षसमसुराणाꣳ साग्निमेवानुप्रेयाय तस्मादन्वाहाग्निं दूतं वृणीमहऽइति स हि देवानां दूत ऽआसी"द्धोतारं विश्ववेदसमि"ति ॥ ३४ ॥ तदु हैकेऽन्वाहुः । होता यो विश्ववे-

१. ऋ. सं. ३१. ३०. ३.
२. ऋ. सं. ३०. १. ३०. ४.
३. ऋ. सं. ३. १. ३०. ५.
४. त्रिचमन्वाहेति क. ग. पु.
५. तृतीयप्रपाठकादितस्संख्येयम् ।
६. ऋ. सं. १. १. २२. १.

दस्ऽइति नेदरमित्यात्मानं ब्रवाणीति तदु तथा न ब्रूयात् मानुषꣳ ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्माद्यथैवऽर्च्चानूक्तमेवमेवानुब्रूयाद्धोतारं विश्ववेदसमित्येवास्य यज्ञस्य सुक्रतुमित्येष हि यज्ञस्य सुक्रतुर्यदग्निस्तस्मादाहास्य-यज्ञस्य सुक्रतुमिति सेयं देवानुपाववर्त्त ततो देवा ऽअभवन् परासुरा भवति ह वा ऽआत्मना परास्य सपत्ना भवन्ति यस्यैवं विदुष ऽएता-मन्वाहुः ॥ ३५ ॥ तां वाऽअष्टमीमनुब्रूयात् । गायत्री वाऽएषा निदानेनाष्टाक्षरा वै गायत्री तस्मादष्टमीमनुब्रूयात् ॥ ३६ ॥ तद्धैके । पुरस्ताद्धाय्ये दधत्यन्नं धाय्ये मुखतऽइदमन्नाद्यं दध्म ऽइति वदन्त-स्तदु तथा न कुर्य्यादनवक्लृप्ता ह तस्यैषा भवति यः पुरस्ताद्धाय्ये दधाति दशमी वा हि तर्ह्येकादशी वा सम्पद्यते तस्यो हैवैषावक्लृप्ता भवति यस्यैतामष्टमीमन्वाहुस्तस्मादुपरिष्टादेव धाय्ये दध्यात् ॥३७॥ "समिध्यमानो ऽअध्वर"ऽइति । अध्वरो वै यज्ञः समिध्यमानो यज्ञ-ऽइत्येवैतदाहा"ग्निः पावक ऽईड्य" इति पावको ह्येष ऽईड्यो ह्येष "शोचिष्केशस्तमीमह"ऽइति शोचन्तीव ह्येतस्य केशाः समिद्धस्य "समिद्धोऽअग्नऽआहुते"त्यतः प्राचीनꣳ सर्व्वमिध्ममभ्यादध्याद्यदन्यत्समिधोऽपवृङ्क्तऽइव ह्येतद्धोता यद्वाऽअन्यत्समिध ऽइध्मस्यातिरिच्यतेऽतिरिक्तं तद्यद्वै यज्ञस्यातिरिक्तं द्विषन्तꣳ हास्य तद्भ्रातृव्यमभ्यति-रिच्यते तस्मादतः प्राचीनꣳ सर्व्वमिध्ममभ्यादध्याद्यदन्यत्समिधः ॥ ३८ ॥ "देवान्यक्षि स्वध्वरे"ति । अध्वरो वै यज्ञो देवान्यक्षि सुय-ज्ञियेत्येवैतदाह "त्वꣳ हि हव्यवाडसी"त्येष हि हव्यवाड्यदग्नि-

---

१. सुक्रतुरिति. ग. पु.   २. ऋ. सं. ३. १. २८. ४.   ३. ऋ. सं. ४. १. २२. ४.

'प्रवो वाजा अभिद्यव' इत्यारभ्य 'आ जुहोता दुवस्यत' इत्यन्ता एकादश ऋचस्सामिधेन्य इत्युच्यन्ते । आसां यद्यपि ब्राह्मणेऽत्र विनियोगो दृश्यते, तथाऽपि हौत्रत्वेन अनाध्वर्यवत्वान्न यजुस्संहितायामासां पाठः । ऋक्संहितायामितस्ततः पठिता एव ता आश्वलायनेन प्रतीकग्रहणेन सामिधेनीकार्ये विनियुक्ताः । यद्यपि तैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमप्रपाठके सामिधेनीप्रकरणेऽनयैवाऽऽनुपूर्व्या आसां पाठो दृश्यते, तथाऽपि तास्त-

स्तस्मादाह त्वꣳ हि हव्यवाडसीत्या॰ "जुहोता दुवस्यताग्निं प्रयत्यध्वरे व्वृणीध्वꣳ हव्यवाहनमि"ति सम्प्रेष्यत्येवैतया जुहुत च यजत च यस्मै कामायाथ समैन्धिढ्वं तत्कुरुतेत्येवैतदाहा"ग्निं प्रयत्यध्वर"ऽइत्यध्वरो वै यज्ञोऽग्निं प्रयति यज्ञऽइत्येवैतदाह "वृणीध्वꣳ हव्यवाहनमि"त्येष हि हव्यवाहनो यदग्निस्तस्मादाह व्वृणीध्वꣳ हव्यवाहनमिति ॥ ३९ ॥ तं वाऽएतम् । अध्वरवन्तं त्रिचमन्वाह देवान्ह वै यज्ञेन यजमानान्त्सपत्ना ऽअसुरा दुधूर्षाञ्चक्रुस्ते दुधूर्षन्तऽ एव न शेकुर्धूर्व्वितुं त पराबभूवुस्तस्माद्यज्ञोऽध्वरो नाम दुधूर्षन्ह वाऽएनꣳ सपत्नः पराभवति यस्यैवं विदुषोऽध्वरवन्तं त्रिचमन्वाहुर्य्यावद्वेव सौम्येनाऽध्वरेणेष्ट्वा जयति तावज्जयति ॥४०॥ Cf. का. श. २. ३. ४., तै. सं. २. ५. ७, ८.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥

## १. ३. ४.

एतद्ध वै देवा ऽअग्निं गरिष्ठे युञ्जन् । यद्धोतृत्वऽइदं नो हव्यं व्वहेति तमेतद्गरिष्ठे युक्त्वोपामदन्वीर्यवान्वै त्वमस्यलं वै त्वमेतस्माऽअसीति वीर्यं समादधतो यथेदमप्येतर्हि ज्ञातीनां यं गरिष्ठे युञ्जन्ति तमुपमदन्ति वीर्यवान्वै त्वमस्यलं वै त्वमेतस्माऽअसीति व्वीर्यं

---

च्छाखाध्येतॄणामुपयोगार्थं तत्र पठिता इति नाऽत्र विनियोगमर्हन्ति । तत्र च प्रमाणं सप्तमैकादशमन्त्रयोः पाठवैलक्षण्यमेव । अतो दाशतयीगता एवेमा ऋचः । अतश्च यत् कैश्चिदत्र ब्राह्मण उदाहृतानां सामिधेन्यृचां तैत्तिरीयशाखीयत्वमुल्लिखितं तत्प्रामादिकमेवेति ध्येयम् *

१. ऋ. सं. ४. १. २२. ५.   २. प्रयत्यध्वरे इति. क. ग. पु.

समादुधतः स यदुत ऽऊर्ध्वमन्वाहोपस्तौत्येवैनमेतद्वीर्यमेवास्मिन्दधाति ॥१॥ "अग्ने महाँ २॥ ऽअसि ब्राह्मण भारते"ति। ब्रह्म ह्यग्निस्तस्मादाह ब्राह्मणेति भारतेत्येष हि देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुरेषुऽउ वा ऽइमाः प्रजाः प्राणो भूत्वा बिभर्त्ति तस्माद्वेवाह भारतेति ॥ २ ॥ अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मादार्षेयं प्रवृणीते ॥ ३ ॥ परस्तादर्व्वाक् प्रवृणीते । परस्ताद्ध्यर्व्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पतयऽउ चैवैतं निह्नुतऽइदछं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्व्वाक् प्रवृणीते ॥ ४ ॥ स ऽआर्षेयमुक्त्वाह । *"देवेद्धो मन्विद्ध" ऽइति देवा ह्येतमग्रऽऐन्धत तस्मादाह देवेद्ध ऽइति मन्विद्धऽइति मनुर्ह्येतमग्र ऽऐन्ध तस्मादाह मन्विद्ध इति ॥ ५ ॥ "ऋषिष्टुत" ऽइति । ऋषयो ह्येतमग्रेऽस्तुवंस्तस्मादाहर्षिष्टुत ऽइति ॥६॥ "व्विप्रानुमदित" ऽइति । एते वै व्विप्रा यदृषय ऽएते ह्येतमन्वमदंस्तस्मादाह व्विप्रानुमदित इति ॥७॥ "कविशस्त" इति । एते वै कवयो यदृषय ऽएते ह्येतमशꣳसंस्तस्मादाह कविशस्त ऽइति ॥ ८ ॥ "ब्रह्मसꣳशित" ऽइति । ब्रह्मसꣳशितो ह्येष "घृताहवन" ऽइति घृताहवनो ह्येषः ॥९॥ "प्रणीर्यज्ञानाꣳरथीरध्वराणामि"ति । एतेन वै सर्व्वान्यज्ञान्प्रणयन्ति ये च पाकयज्ञा ये चेतरे तस्मादाह प्रणीर्यज्ञानामिति ॥१० ॥ रथीरध्वराणामिति । रथो ह वाऽएष भूत्वा देवेभ्यो यज्ञं व्वहति तस्मादाह रथीरध्वराणामिति ॥११॥ "अतूर्त्तो होता तूर्णिर्हव्यवाडि"ति । न ह्येतꣳरक्षाꣳसि तरन्ति तस्मादाहातूर्त्तो होतेति तूर्णिर्हव्यवाडिति सर्व्वꣳ ह्येष पाप्मानं तरति तस्मादाह तूर्णिर्हव्यवाडिति ॥१२॥

---

* 'देवेद्धो मन्विद्ध' इत्यादयोऽपि मन्त्रा न संहितायां पठिताः, क्वचित्तु परिशिष्टे पठिता अत्र ब्राह्मणे विनियुक्ताः । आश्वलायनेन तु श्रौतसूत्र इम एव तूद्धृताः । तैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमप्रपाठके तृतीयानुवाके पठितास्तु पूर्ववदन्य एवेत्यवगन्तव्यम् ।

1. इति क. ग. पु.

"आस्पात्रं जुहूर्देवानामि"ति । देवपात्रं वाऽएष यदग्निस्तस्मादग्नौ सर्व्वेभ्यो देवेभ्यो जुह्वति देवपात्रꣳ ह्येष प्राप्नोति ह वै तस्य पात्रं यस्य पात्रं प्रेप्स्यति यऽएवमेतद्वेद ॥१३॥ "चमसो देवपान" ऽइति । चमसेन ह वाऽएतेन भूतेन देवा भक्षयन्ति तस्मादाह चमसो देवपान ऽइति ॥१४॥ "अराँ२॥ऽइवाग्ने नेमिर्देवांस्त्वं परिभूरसी"ति । यथारान्नेमिः सर्व्वतः परिभूरेवं त्वं देवान्त्सर्व्वतः परिभूरसीत्येवैतदाह ॥ १५ ॥ "आवह देवान्यजमानाये"ति । तदस्मै यज्ञाय देवानावोढवाऽआहा"ग्निमग्नऽआवहे"ति तदाग्नेयायाज्यभागायाग्निमावोढवाऽआह "सोममावहे"ति तत्सौम्यायाज्यभागाय सोममावोढवाऽआहा"ग्निमावहे"ति तद्य ऽएष ऽउभयत्राच्युत आग्नेयः पुरोडाशो भवति तस्माऽअग्निमावोढवाऽआह ॥१६॥ अथ यथादेवतम् । "देवाँ २ ॥ ऽआज्यपाँ २ ॥ ऽआवहे"ति तत्प्रयाजानुयाजानावोढवाऽआह प्रयाजानुयाजा वै देवा ऽआज्यपा ऽ"अग्निꣳ होत्रायावहे"ति तदग्निꣳ होत्रायावोढवाऽआह स्वं महिमानमावहेति तत्स्वं महिमानमावोढवाऽआह व्वाग्वाऽअस्य स्वो महिमा तद्वाचमावोढवाऽआहा "च व्वह जातवेदः सुयजा च यजे"ति तद्या ऽएवैतद्देवता ऽआवोढवाऽआह ता एवैतदाहा चैनावहानुष्ठ्या च यजेति यदाह सुयजा च यजेति ॥ १७ ॥ स वै तिष्ठन्नन्वाह । अन्वाह ह्येतदसौ ह्यनुवाक्या तदसावेवैतद्भूत्वान्वाह तस्मात्तिष्ठन्नन्वाह ॥ १८ ॥ आसीनो याज्यां यजति । इयꣳ हि याज्या तस्मान्न कश्चन तिष्ठन्याज्यां यजतीयꣳ हि याज्या तदियमेवैतद्भूत्वा यजति तस्मादासीनो याज्यां यजति ॥ १९ ॥ Cf. का. श. २. ४. १., तै. सं. २. ५. ९.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥

यो ह वा ऽअग्निः सामिधेनीभिः समिद्धः। अतितराᳫं ह वै स ऽइतरस्मादग्नेस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः ॥ १ ॥ स यथा हैवाग्निः। सामिधेनीभिः समिद्धस्तपत्येवᳫं हैव ब्राह्मणः सामिधेनीर्व्विद्वाननुब्रुवंस्तपत्यनवधृष्यो हि भवत्यनवमृश्यः ॥ २ ॥ सोऽन्वाह। "प्र व" ऽइति प्राणो वै प्रवान् प्राणमेवैतया समिन्धेऽ"ग्नऽआ याहि व्वीतय"ऽइत्यपानो वाऽएतवानपानमेवैतया समिन्धे "बृहच्छोचा यविष्ठ्ये"त्युदानो वै बृहच्छोचा ऽउदानमेवैतया समिन्धे ॥३॥ "स नः पृथु श्रवाय्यमि"ति। श्रोत्रं वै पृथु श्रवाय्यᳫं श्रोत्रेण हीदमुरु पृथु शृणोति श्रोत्रमेवैतया समिन्धे ॥ ४ ॥ "ईडेन्यो नमस्य" ऽइति। व्वाग्वाऽईडेन्या व्वाग्घीदᳫं सर्व्वमीट्टे व्वाचेदᳫं सर्व्वमीडितं व्वाचमेवैतया समिन्धे ॥ ५ ॥ "अश्वो न देववाहन" ऽइति। मनो वै देववाहनं मनो हीदं मनस्विनं भूयिष्ठं वनीवाह्यते मनऽएवैतया समिन्धे ॥ ६ ॥ "अग्ने दीद्यतं बृहदि"ति। चक्षुर्व्वै दीदयेव चक्षुरेवैतया समिन्धे ॥ ७ ॥ "अग्निं दूतं व्वृणीमह"ऽइति। य ऽएवायं मध्यमः प्राणऽएतमेवैतया समिन्धे सा हैषां तस्था प्राणानामतो ह्यन्यऽऊर्ध्वाः प्राणा ऽअतोऽन्येऽवाञ्चोऽन्तस्था ह भवत्यन्तस्थामेनं मन्यन्ते यऽएवमेतामन्तस्थां प्राणानां व्वेद ॥ ८ ॥ "शोचिष्केशस्तमीमह" ऽइति। शिश्नं वै शोचिष्केशᳫं शिश्नᳫं हीदᳫं शिश्निनं भूयिष्ठᳫं शोचयति शिश्नमेवैतया समिन्धे ॥ ९ ॥ "समिद्धोऽअग्नऽआहुते"ति। य ऽएवायमवाङ्प्राण ऽएतमेवैतया समिन्धऽ"आ जुहोता दुवस्यते"ति सर्व्वमात्मानᳫं समिन्धऽआ नखेभ्योऽथो लोमभ्यः ॥१०॥ स यद्येनं प्रथमायाᳫं सामिधेन्यामनुव्याहरेत्। तं प्रतिब्रूयात् "प्राणं वा ऽएतदात्मनो ऽग्नावाधाः प्राणेनात्मन ऽआर्त्तिमारिष्यसी"ति तथा

---

१. इतरस्तस्मादिति. ख. पु. २. मृश्यः इति. ग. पु. ३. सर्वमीट्टे इति. ग. पु.

हैव स्यात् ॥ ११ ॥ यदि द्वितीयस्यामनुव्याहरेत् । तं प्रतिब्रूया-"दपानं वाऽएतदात्मनोऽग्नावाधा ऽअपानेनात्मन ऽआर्त्तिमारिष्यसी"-ति तथा हैव स्यात् ॥ १२ ॥ यदि तृतीयस्यामनुव्याहरेत् । तं प्रतिब्रूया"दुदानं वाऽएतदात्मनोऽग्नावाधा ऽउदानेनात्मन ऽआर्त्तिमारिष्यसी"ति तथा हैव स्यात् ॥ १३ ॥ यदि चतुर्थ्यामनुव्याहरेत् । तं प्रतिब्रूया"च्छ्रोत्रं वाऽएतदात्मनोऽग्नावाधाः श्रोत्रेणात्मन ऽआर्त्तिमारिष्यसि बधिरो भविष्यसी"ति तथा हैव स्यात् ॥ १४ ॥ यदि पञ्चम्यामनुव्याहरेत् । तं प्रतिब्रूयात्"वाचं वाऽएतदात्मनोऽग्नावाधा व्वाचात्मन ऽआर्त्तिमारिष्यसि मूको भविष्यसी"ति तथा हैव स्यात् ॥ १५ ॥ यदि षष्ठ्यामनुव्याहरेत् । तं प्रतिब्रूया"न्मनो वाऽएतदात्मनोऽग्नावाधा मनसात्मन ऽआर्त्तिमारिष्यासि मनोमुषिगृहीतो मोमुघश्चरिष्यसी"ति तथा हैव स्यात् ॥ १६ ॥ यदि सप्तम्यामनुव्याहरेत्। तं प्रति ब्रूया"च्चक्षुर्व्वाऽएतदात्मनोऽग्नावाधाश्चक्षुषात्मन ऽआर्त्तिमारिष्यस्यन्धो भविष्यसी"ति तथा हैव स्यात् ॥ १७ ॥ यद्यष्टम्यामनुव्याहरेत् । तं प्रतिब्रूया"न्मध्यं वाऽएतत्प्राणमात्मनोऽग्नावाधा मध्येन प्राणेनात्मन ऽआर्त्तिमारिष्यस्युदूध्माय मरिष्यसी"ति तथा हैव स्यात् ॥ १८ ॥ यदि नवम्यामनुव्याहरेत् । तं प्रतिब्रूया"च्छिश्नं वाऽएतदात्मनोऽग्नावाधाः शिश्नेनात्मनऽआर्त्तिमारिष्यासि क्लीबो भविष्यसीति तथा हैव स्यात् ॥ १९ ॥ यदि दशम्यामनुव्याहरेत् । तं प्रतिब्रूया"दवाञ्चं वाऽएतत्प्राणमात्मनो ऽग्नावाधा ऽअवाचा प्राणेनात्मन ऽआर्त्तिमारिष्यस्यपिनद्धो मरिष्यसी"ति तथा हैव स्यात् ॥ २० ॥ यद्येकादश्यामनुव्याहरेत् । तं प्रतिब्रूया"त्सर्व्वं वाऽएतदात्मानमग्नावाधाः सर्व्वेणात्मनार्त्तिमारिष्यासि क्षिप्रेऽमुं लोकमेष्यसी"-ति तथा हैव स्यात् ॥ २१ ॥ स यथा हैवाग्निरुं । सामिधेनीभिः

१. मोमुय इति. ख. पु. २. स्युध्मायेति. ख. पु.

समिद्धमापद्यार्त्तिं न्येत्येवꣳ हैव ब्राह्मणꣳ सामिधेनीर्विद्वाꣳꣳसम नुब्रुवन्तमनुव्याहृत्यार्त्तिं न्येति ॥२२॥ Cf का. श. २. ४. १.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥

## १. ३. ६.

तं वाऽएतमग्निꣳ समौन्धिषत । "समिद्धे देवेभ्यो जुहवामे"ति तस्मिन्नेतेऽएव प्रथमेऽआहुती जुहोति मनसे चैव व्वाचे च मनश्च ह वै व्वाक् च युजौ देवेभ्यो यज्ञं व्वहतः॥ १ ॥ स यदुपाꣳशु क्रियते । तन्मनो देवेभ्यो यज्ञं व्वहत्यथ यद्वाचा निरुक्तं क्रियते तद्वाग्देवेभ्यो यज्ञं व्वहत्येतद्वाऽइदं द्वयं क्रियते तदेतेऽएवैतत्सन्तर्पयति तृप्ते प्रीते देवेभ्यो यज्ञं व्वहात ऽइति ॥ २ ॥ स्रुवेण तमाघारयति । यं मनसऽआघारयति व्वृषा हि मनो व्वृषा हि स्रुवः ॥३॥ स्रुचा तमाघारयति। यं व्वाचऽआघारयति योषा हि व्वाग्योषा हि स्रुक्॥४॥ तूष्णीं तमाघारयति । यं मनसऽआघारयति न स्वाहेति चनाऽनिरुक्तꣳ हि मनोऽनिरुक्तꣳ ह्येतद्यत्तूष्णीम् ॥ ५ ॥ मन्त्रेण तमाघारयति । यं व्वाचऽआघारयति निरुक्ता हि व्वाङ्निरुक्तो हि मन्त्रः ॥ ६ ॥ आसीनस्तमाघारयति । यं मनसऽआघारयति तिष्ठंस्तं यं व्वाचे मनश्च ह वै व्वाक् च युजौ देवेभ्यो यज्ञं व्वहतो यतरो वै युजोर्ह्रसीयान् भवत्युपवहं वै तस्मै कुर्व्वन्तिं व्वाग्वै मनसो ह्रसीयस्यपरिमिततरमिव हि मनः परिमिततरेव हि व्वाक्तद्वाचऽएवैतदुपवहं करोति ते सयुजौ देवेभ्यो यज्ञं व्वहतस्तस्मात्तिष्ठन्वाचऽआघारयति॥ ७ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्तऽएतद्दक्षिणतः प्र-

१. विद्वाꣳसꣳसमन्विति. ग. पु.   २. हैवेति. ग. पु.
३. स्रुक् इति. क.   ४. तूष्णीमिति. ग. पु.

त्युदश्रयन्नुच्छ्रितामिव हि व्वीर्यं तस्माद्दक्षिणतस्तिष्ठन्नाघारयति स यदुभयत ऽआघारयति तस्मादिदं मनश्च व्वाक्च समानमेव सन्नानेव शिरो ह वै यज्ञस्यैतयोरन्यतर ऽआघारयोर्मूलमन्यतरः ॥ ८ ॥ स्रुवेण तमाघारयति । यो मूलं यज्ञस्य स्रुचा तमाघारयति यः शिरो यज्ञस्य ॥ ९ ॥ तूष्णीं तमाघारयति । यो मूलं यज्ञस्य तूष्णीमिव हीदं मूलं नो ह्यत्र व्वाग्वदति ॥ १० ॥ मन्त्रेण तमाघारयति । यः शिरो यज्ञस्य व्वाग्घि मन्त्रः शीर्ष्णो हीयमधि व्वाग्वदति ॥ ११ ॥ आसीनस्तमाघारयति । यो मूलं यज्ञस्य निषण्णमिव हीदं मूलं तिष्ठंस्तमाघारयति यः शिरो यज्ञस्य तिष्ठतीव हीदꣳशिरः ॥ १२ ॥ स स्रुवेण पूर्व्वमाघारमाघार्याह । "अग्निमग्नीत्सम्मृड्ढी"ति यथा धुरमध्यूहेदेवं तद्यत्पूर्व्वमाघारमाघारयत्यध्युह्य हि धुरं युञ्जान्ति[1] ॥ १३ ॥ अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो देवेभ्यो यज्ञं व्वहादिति तस्मात्सम्मार्ष्टि परिक्रामꣳ सम्मार्ष्टि परिक्रामꣳ हि योग्यं युञ्जन्ति त्रिस्त्रिस्सम्मार्ष्टि त्रिवृद्धि यज्ञः[2] ॥ १४ ॥ स सम्मार्ष्टि । "अग्ने[3] व्वाजजिद्वाजं त्वा सरिष्यन्तं त्वा[4] व्वाजजितꣳ सम्मार्ज्मी"ति यज्ञं त्वा व्वक्ष्यन्तं यज्ञियꣳ सम्मार्ज्मीत्येवैतदाहाथोपरिष्टात्तूष्णीं त्रिस्तद्यथा युक्त्वा प्राजेत्प्रेहि व्वहेत्येवमेवैतत्कुशयोपक्षिपति प्रेहि देवेभ्यो यज्ञं व्वहेति तस्मादुपरिष्टात्तूष्णीं त्रिस्तद्यदेतदन्तरेण कर्म क्रियते तस्मादिदं मनश्च व्वाक्च समानमेव सन्नानेव ॥ १५ ॥ Cf. का. श. २. ४. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥

तृतीयः प्रपाठकस्समाप्तः ॥

कण्डिकाः १२८* ॥

---

१. युञ्जन्ति. क. ग. पु. २. यज्ञः इति. ग. पु. ३. मा. सं. २. ७.
४. त्वेति नाऽस्ति. ख.पु. * तृतीयप्रपाठकस्थकण्डिकानां संख्येयम् ।

## अथ चतुर्थः प्रपाठकः ॥

### १. ४. १.

स स्रुचोत्तरमाघारमाघारयिष्यन् । पूर्व्वेण स्रुचावञ्जलिं निदधाति "नमो देवेभ्यः स्वधा पितृभ्य" ऽइति तद्देवेभ्यश्चैवैतत्पितृभ्यश्चार्त्विज्यं करिष्यन्निन्हुते "सुयमे मे भूयास्तामि"ति स्रुचावादत्ते सुभरे मे भूयास्तं भर्त्तुं वाञ्छं शकेयमित्येवैतदाहा "स्कन्नमद्य देवेभ्यऽ आज्यꣳ सम्भ्रियासमि"त्यविक्षुब्धमद्य देवेभ्यो यज्ञं तनवाऽ इत्येवैतदाह ॥ १ ॥ "अङ्घ्रिणा व्विष्णो मा त्वावक्रमिषमि"ति । यज्ञो वै व्विष्णुस्तस्माऽएवैतन्निन्हुते मा त्वावक्रमिषमिति "व्वसुमतीमग्ने ते छायामुपस्थेषमि"ति साध्वीमग्ने ते छायामुपस्थेषमित्येवैतदाह ॥२॥ "व्विष्णोस्थानमसी"ति । यज्ञो वै व्विष्णुस्तस्यैव ह्येतदन्तिकं तिष्ठति तस्मादाह व्विष्णोस्थानमसीती"त ऽइन्द्रो व्वीर्यमकृणोदि"त्यतो ह्रीन्द्रस्तिष्ठन्दक्षिणतो नाष्ट्रा रक्षाꣳस्यपाहन्स्तस्मादाहेत ऽइन्द्रो व्वीर्यमकृणोदि"त्यूर्ध्वोऽध्वर ऽआस्थादि"त्यध्वरो वै यज्ञ ऽऊर्ध्वो यज्ञ ऽआस्थादित्येवैतदाह ॥ ३ ॥ "अग्ने व्वेर्होत्रं व्वेर्दूत्यमि"ति । उभयं वा ऽएतदग्निर्देवानाꣳ होता च दूतश्च तदुभयं व्विद्धि यद्देवानामसीत्येवैतदाहा "वंतां त्वां द्यावापृथिवी ऽअव त्वं द्यावापृथिवी" ऽइति नात्र तिरोहितमिवास्ति "स्विष्टकृद्देवेभ्य ऽइन्द्र ऽआज्येन हविषाभूत्स्वाहे" तीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्र ऽआज्येनेति व्वाचे वा ऽएतमाघारमाघारयतीन्द्रो व्वागित्यु वाऽआहुस्तस्माद्वेवाहेन्द्रऽआज्येनेति ॥ ४ ॥ अथासꣳस्पर्शयन्स्रुचौ पर्य्येत्य । ध्रुवया समनक्ति शिरो वै यज्ञस्योत्तर ऽआघार ऽआत्मा वै ध्रुवा तदात्मन्येवैतच्छिरःप्रतिदधाति

---

१. मा. सं. २. ७. २. मा. सं. २. ७. ३. मा. सं. २. ८.
४. मा. सं. २. ८. ५. मा. सं. २. ८. ६. मा. सं. २. ८.
७. मा. सं. २. ८. ८. मा. सं. २. ८. ९. मा. सं. २. ९.
१०. मा. सं. २. ९. ११. मा. सं. २. ९. १२. आज्येनेति. क. ग.पु.

शिरो वै यज्ञस्योत्तर ऽआघारः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्यो- ऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर ऽइत्याहुः ॥ ५ ॥ यजमान ऽएव ध्रुवामनु । योऽस्माऽअरातीयति स ऽउपभृतमनु स यद्धोपभृता समञ्ज्याद्यो यजमानायारातीयति तस्मिञ्छ्रियं दध्यात्तद्यजमान ऽ एवैतच्छ्रियं दधाति तस्माद्ध्रुवया समनक्ति ॥ ६ ॥ स समनक्ति । "सं[1] ज्योतिषा ज्योतिरि"ति ज्योतिर्वा ऽइतरस्यामाज्यं भवति ज्योतिरितरस्यां ते ह्येतदुभे ज्योतिषी सङ्गच्छेते तस्मादेवꣳ समनक्ति ॥ ७ ॥ [2]अथातो मनसश्चैव व्वाचश्च । अहं भद्र ऽ उदितं मनश्च ह वै व्वाक्चाहं भद्रऽऊदाते ॥ ८ ॥ तद्ध मन ऽउवाच । अहमेव त्वच्छ्रेयो- ऽस्मि न वै मया त्वं किं चनानभिगतं व्वदसि सा यन्मम त्वं कृता- नुकरानुवर्त्मास्यहमेव त्वच्छ्रेयोऽस्मीति ॥ ९ ॥ अथ ह व्वागुवाच । अहमेव त्वच्छ्रेयस्यस्मि यद्वै त्वं व्वेत्थाहं तद्विज्ञपयाम्यहꣳ संज्ञपया- मीति ॥१०॥ ते प्रजापतिं प्रतिप्रश्नमेयतुः । स प्रजापतिर्मनसऽएवा- नूवाच मन ऽएव त्वच्छ्रेयो मनसो वै त्वं कृतानुकरानुवर्त्मासि श्रेयसो वै पापीयान् कृतानुकरोऽनुवर्त्मा भवतीति ॥११॥ सा ह व्वाक्परो- क्ता व्विसिष्मिये । तस्यै गर्भः पपात सा ह व्वाक् प्रजापतिमुवाचाह- व्यवाडेवाहं तुभ्यं भूयासं यां मा परावोच ऽइति तस्माद्यत्किं च प्राजापत्यं यज्ञे क्रियतऽ उपाꣳश्वेव तत् क्रियतेऽ हव्यवाड्ढि व्वाक् प्रजा- पतयऽआसीत् ॥ १२ ॥ तद्धैतद्देवाः । रेतश्चर्मन्वा यस्मिन्वा बभ्रु- स्तद्ध स्म पृच्छन्त्यत्रैव त्या३दिति ततोऽत्रिः सम्बभूव तस्मादप्यात्रे य्या [3]यौषितैनस्व्येतस्यै हि योषायै व्वाचो देवताया ऽएते सम्भूताः ॥ १३ ॥ Cf. का. श. २. ४. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥
( इति चतुर्थोऽध्यायः )

---

१. मा. सं. २. ९. २. See तै. सं. २. ५. ११. ४. ३. योषितेति. ग. पु.

स वै प्रवरायाश्रावयति । तद्यत्प्रवरायाश्रावयति यज्ञो वाऽआश्रावणं यज्ञमभिव्याहृत्याथ होतारं प्रवृणाऽइति तस्मात्प्रवरायाश्रावयति ॥ १ ॥ स ऽइध्मसन्नहनान्येवाभिपद्याश्रावयति । स यद्धानारभ्य यज्ञमध्वर्युराश्रावयेद्वेपनो वा ह स्यादन्यां र्वार्त्तिमाच्छेंत् ॥२॥ तद्धैके । र्वेदे स्तीर्णायै बर्हिरभिपद्याश्रावयन्तीध्मस्य वा शकलमपच्छिद्याभिपद्याश्रावयन्तीदं वै किञ्चिद्यज्ञस्येदं यज्ञमभिपद्याश्रावयाम ऽइति र्वदन्तस्तदु तथा न कुर्यादेतद्वै किञ्चिद्यज्ञस्य यैरिध्मः सन्नद्धो भवत्यग्निंर्ठं सम्मृजन्ति तद्धेव खलु यज्ञमभिपद्याश्रावयति तस्मादिध्मसन्नहनान्येवाभिपद्याश्रावयेत् ॥ ३ ॥ सऽआश्राव्य । य ऽएव देवानाᳪं होता तमेवाग्रे प्रवृणीतेऽग्निमेव तदग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहाग्रेऽग्निं प्रवृणीते तदग्नये निह्नुते ऽथ यो देवानाᳪं होता तमग्रे प्रवृणीते तदु देवेभ्यो निन्हुते ॥ ४ ॥ स आह । "अग्निर्दैवो दैव्यो होते"त्यग्निर्हि देवानाᳪं होता तस्मादाहाग्निर्दैवो दैव्यो होतेति तदग्नये चैवैतद्देवेभ्यश्च निन्हुते यदहाग्रेऽग्निमाह तदग्नये निह्नुतेऽथ यो देवानाᳪं होता तमग्रऽआह तदु देवेभ्यो निन्हुते ॥५॥ "देवान्यक्षद्विद्वांश्चिकित्वानि"ति । एष वै देवाननु विद्वान्यदग्निः स ऽएनाननु विद्वाननुष्ठ्या यक्षदित्येवैतदाह ॥ ६ ॥ "मनुष्वद्भरतव"दिति । मनुर्ह वाऽअग्रे यज्ञेनेजे तदनुकृत्येमाः प्रजा यजन्ते तस्मादाह मनुष्वदिति मनोर्यज्ञऽइत्यु वाऽ आहुस्तस्माद्वेवाह [2]मनुष्वदिति ॥७॥ भरतवदिति । एष हि [3]देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुरेष ऽउवाऽइमाः प्रजाः प्राणो भूत्वा बिभर्त्ति तस्माद्वेवाह भरतवदिति ॥ ८ ॥ अथार्षेयं प्रवृणीते । ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति तस्मा-

---

१. चैव देवेभ्य इति ग. पु. २. मनुष्वदिति. क.[१]ग. पु. ३. देवेभ्य इति ग. पु.

दार्षेयं प्रवृणीते ॥९॥ परस्तादर्वाक्प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पतयऽउचैवैतन्निह्नुत ऽइदꣳ हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्वाक्प्रवृणीते॥१०॥स ऽआर्षेयमुक्त्वाह । ब्रह्मण्वादिति ब्रह्म ह्यग्निस्तस्मादाह ब्रह्मण्वदित्या च वक्षदिति तद्याऽएवैतद्देवता ऽआवोढवाऽआह ता ऽएवैतदाहा च व्वक्षदिति ॥११॥ "ब्राह्मणा ऽअस्य यज्ञस्य प्रावितार"ऽइति । एते वै ब्राह्मणा यज्ञस्य प्रावितारो येऽनूचाना ऽएते ह्येनं तन्वतऽएतऽएनं जनयन्ति तदु तेभ्यो निन्हुते तस्मादाह ब्राह्मणाऽअस्य यज्ञस्य प्रावितारऽइति ॥ १२ ॥ "असौ मानुष"ऽइति । तदिमं[1] मानुषꣳ होतारं प्रवृणीते होता ह्येष पुराथैतर्हि होता ॥ १३ ॥ स प्रवृतो होता जपति । देवताऽउपधावति यथानुष्ठ्या देवेभ्यो व्वषट्कुर्याद्यथानुष्ठ्या देवेभ्यो हव्यं व्वहेद्यथा न ह्वलेदेवं देवता ऽउपधावति ॥ १४ ॥ तत्र जपति । "एतत्त्वा देव सवितर्वृणत"ऽइति तत्सावितारं प्रसवायोपधावति स हि देवानां प्रसविता"ग्निꣳ होत्राये"ति तदग्नये चैवैतद्देवेभ्यश्च निह्नुते यदहाग्रेऽग्निमाह तदग्नये निह्नुतेऽथ यो देवानाꣳ होता तमग्र ऽआह तदु देवेभ्यो निह्नुते ॥ १५ ॥ सह पित्रा व्वैश्वानरेणेति । संव्वत्सरो वै पिता व्वैश्वानरः प्रजापतिस्तत्संवत्सरायैवैतत्प्रजापतये निह्नुते[2]ऽ"ग्ने पूषन् बृहस्पते प्र च व्वद प्र च यजे"त्यनुवक्ष्यन्वा ऽएतद्यक्ष्यन् भवति तदेताभ्यऽएवैतद्देवताभ्यो निन्हुते यूयमनुब्रूत यूयं यजतेति ॥ १६ ॥ (शतम्[3] ४००) "व्वसूनाꣳ रातौ स्याम । रुद्राणामुर्व्यायाꣳ स्वादित्याऽअदितये स्यामानेहस" ऽइत्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्या ऽएतेषामभिगुप्तौ स्यामेत्येवैतदाह ॥ १७ ॥ "जुष्टामद्य देवेभ्यो व्वाचमुद्यासमि"ति । जुष्टमद्य देवेभ्योऽनूच्यासमित्येवैतदाह तद्धि समृद्धं यो जुष्टं देवेभ्यो ऽनुब्रवत् ॥ १८ ॥ "जुष्टां ब्रह्मभ्य" इति । जुष्टमद्य

---

१. तदिमं मानुषमिति. क. ग. पु. २. निह्नुत इति. क. ग. पु.

३ अत्र कण्डिकानामादितश्चतुर्थशतसंख्या पूर्णा भवति।

ब्राह्मणेभ्योऽनूच्यासमित्येवैतदाह तद्धि समृद्धं यो जुष्टं ब्राह्मणेभ्योऽनुब्रवत् ॥१९॥ "जुष्टां नराशꣳसाये"ति। प्रजा वै नरस्तत्सर्व्वाभ्यः प्रजाभ्य आह तद्धि समृद्धं यश्च वेद यश्च न साध्वन्ववोचत्साध्वन्ववोचादित्येव व्विसृज्यन्ते "यदद्य होतृवर्ये जिह्मं चक्षुः परापतत्। अग्निष्टत्पुनराभ्रियाज्जातवेदा व्विचर्षणि"रिति यथा यानग्नेऽग्नीन् होत्राय प्रावृणत ते प्राधन्वन्नेवं यन्मेऽत्र प्रवरेणामायि तन्मे पुनराप्याययेत्येवैतदाह तथो हास्यैतत्पुनराप्यायते ॥ २० ॥ अथाध्वर्युं चाऽऽग्नीधं च सम्मृशति। मनो वाऽअध्वर्युर्व्वाग्घोता तन्मनश्चैवैतद्वाचं च सन्दधाति ॥ २१ ॥ तत्र जपति। "षण्मोर्व्वीरꣳहसस्पान्त्वग्निश्च[2] पृथिवी चापश्च व्वाजश्चाहश्च[3] रात्रिश्चे"त्येता मा देवता ऽआर्त्तेर्गोपायन्त्वित्येवैतदाह तस्यो हि न ह्वलास्ति यमेता देवता ऽआर्त्तेर्गोपायेयुः ॥ २२ ॥ अथ होतृषदनमुपावर्त्तते। स होतृषदनादेकं तृणं निरस्यति "निरस्तः परावसुरि"ति परावसुर्ह वै नामासुराणाꣳहोता स तमेवैतद्धोतृषदनान्निरस्यति॥२३॥ अथ होतृषदनऽउपविशति। "इदमहमर्व्वावसोः सदने सीदामी"त्यर्व्वावसुर्व्वै नाम देवानाꣳ होता तस्यैवैतत्सदने सीदति॥ २४॥ तत्र जपति। "व्विश्वकर्म्मंस्तनूपा ऽअसि मा मोदोषिष्टं मा मा हिꣳसिष्टमेष वां लोक"ऽइत्युदङ्ङेजत्यन्तरा वाऽएतदाहवनीयं च गार्हपत्यं चास्ते तदु ताभ्यां निह्नुते मा मो दोषिष्टं मा मा हिꣳसिष्टमिति तथो हैनमेतौ न हिꣳस्तः ॥ २५ ॥ अथाग्निमीक्षमाणो जपति। "व्विश्वे देवाः शास्तन मा [4]यथेह होता व्वृतो मनवै यन्निषद्य। प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो व्वहानी"ति यथा येभ्यः पक्वꣳ स्यात्तान् ब्रूयादनु मा शास्त यथा व ऽआहरिष्यामि यथा वः परिवेक्ष्यामीत्येवमेवैतद्देवेषु प्रशासनमिच्छते-

---

१ नराशꣳसायेति. क. पु. २ पान्त्विति. क. पु. ३. व्वातश्चेति ख. पु.

४ यथेहेति. ग. पु.

ऽनुमा शास्त यथा वोऽनुष्ठ्या व्वषट्कुर्यामनुष्ठ्या हव्यं व्वहेयमिति तस्मादेवं जपति ॥ २६ ॥ Cf का. श. २. ४. ३.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥

१. ४. ३.

अग्निर्होता व्वेत्वग्नेर्होत्रमिति । अग्निरिदᳫं होता व्वेत्वित्येवैतदाहाग्नेर्होत्रमिति तस्यो हि होत्रं व्वेत्तु प्रावित्रमिति यज्ञो वै प्रावित्रं व्वेत्तु यज्ञमित्येवैतदाह "साधु ते यजमान देवते"ति साधु ते यजमानदेवता यस्य तेऽग्निर्होतेत्येवैतदाह "घृतवतीमध्वर्यो स्रुचमास्यस्वे"ति तदध्वर्युं प्रसौति स यदेकामिवाह ॥ १ ॥ यजमानऽएव जुहूमनु । योऽस्मा ऽअरातीयति स ऽउपभृतमनु स यद्द्वे ऽइव ब्रूयाद्यजमानाय द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्यादत्तैव जुहूमन्वाद्यऽ उपभृतमनु स यद्द्वेऽइव ब्रूयादत्त्र ऽआद्यं प्रत्युद्यामिनं कुर्यात्तस्मादेकामिवैवाह ॥ २ ॥ "देवयुवं व्विश्ववारामि"ति । उपस्तौत्येवैनामेतन्महयत्येव यदाह देवयुवं व्विश्ववारामिती[1]"डामहै देवाँ २ ॥ ऽईडेन्यान्नमस्याम नमस्यान्यजाम यज्ञिया"नितीडामहै तान्देवान्य ऽईडेन्या नमस्याम तान्ये नमस्या यजाम यज्ञियानिति म[2]नुष्या वा ऽईडेन्याः पितरो नमस्या देवा यज्ञियाः ॥ ३ ॥ या वै प्रजा यज्ञेऽनन्वाभक्ताः। पराभूता वै ता ऽएवमेवैतद्या ऽइमाः प्रजा ऽअपराभूतास्ता यज्ञ ऽआभजति मनुष्याननु पशवो देवाननु वयाᳫंस्योषधयो व्वनस्पतयो यदिदं किञ्चैवमु तत्सर्व्वं यज्ञऽआभक्तम् ॥ ४ ॥ ता वाऽएताः । नव व्याहृतयो भवन्ति नवेमे पुरुषे प्राणा ऽएतानेवास्मिन्नेतद्दधाति तस्मा-

१. विश्ववारामिति. ग. पु; २. See. तै. सं. २. ५.९.६.

न्नव व्याहृतयो भवन्ति ॥ ५ ॥ यज्ञो ह देवेभ्योऽपचक्राम । तं देवा ऽअन्वमन्त्रयन्ता नः शृणुप न ऽआवर्त्तस्वेति सो ऽस्तु तथेत्येव देवानुपाववर्त्त तेनोपावृत्तेन देवा ऽअयजन्त तेनेष्ट्वैतदभवन्यदिदं देवाः॥६॥

( काण्डस्याऽर्द्धम् ॥ ४१९ ॥ )

स यदाश्रावयति । यज्ञमेवैतदनुमन्त्रयतऽआ नः शृणुप न ऽआवर्त्तस्वेत्यथ यत्प्रत्याश्रावयति यज्ञ ऽएवैतदुपावर्त्ततेऽस्तु तथेति तेनोपावृत्तेन रेतसा भूतेनर्त्त्विजः सम्प्रदायं चरन्ति यजमानेन परोक्षं यथा पूर्णपात्रेण सम्प्रदायं चरेयुरेवमेनेनऽर्त्विजः सम्प्रदायं चरन्ति तद्वाचैवैतत्सम्प्रदायं चरन्ति व्वाग्घि यज्ञो व्वागु हि रेतस्तदेतेनैवैतत्सम्प्रदायं चरन्ति ॥ ७ ॥ सो ऽ नुब्रूहीत्येवोक्त्वाऽध्वर्य्युः । नाऽपव्याहरेन्नोऽएव होतापव्याहरेद्वा श्रावयत्यध्वर्य्युस्तदग्नीधं यज्ञ ऽउपावर्त्तते ॥ ८ ॥ सोऽग्नीन्नापव्याहरेत् । आ प्रत्याश्रावणात्प्रत्याश्रावयत्याग्नीत्तत्पुनरध्वर्य्यु यज्ञ ऽउपावर्त्तते ॥ ९ ॥ सोऽध्वर्युर्नापव्याहरेत् । आ यजेति व्वक्तोर्यजेत्येवाध्वर्युर्होत्रे यज्ञꣳ सम्प्रयच्छति ॥ १० ॥ स होता नाऽपव्याहरेत् । आवषट्कारात्तं व्वषट्कारेणाग्नावेव योनौ रेतो भूतꣳ सिञ्चत्यग्निर्व्वै योनिर्यज्ञस्य स ततः प्रजायतऽइति नु हविर्यज्ञेऽथ सौम्येध्वरे ॥ ११ ॥ स वै ग्रहं गृहीत्वाऽध्वर्य्युः । नाऽपव्याहरेदोपाकरणादुपावर्त्तध्वमित्येवाध्वर्य्युरुद्गातृभ्यो यज्ञꣳ सम्प्रयच्छति ॥ १२ ॥ त ऽ उद्गातारो नापव्याहरेयुः । ओत्तमाया ऽएषोत्तमेत्येवोद्गातारो होत्रे यज्ञꣳ सम्प्रयच्छन्ति ॥ १३ ॥ स होता नापव्याहरेत् । आ व्वषट्कारात्तं व्वषट्कारेणाग्नावेव योनौ रेतो भूतꣳ सिञ्चत्यग्निर्व्वै योनिर्यज्ञस्य स ततः प्रजायते ॥ १४ ॥ स यद्ध सोऽपव्याहरेत् । यं यज्ञ ऽउपावर्त्तते यथा पूर्णपात्रं परासिञ्चेदेवꣳ ह स यजमानं परासिञ्चेत्स यत्र हैवमृत्विजः सम्विदाना यज्ञेन चरन्ति सर्वमेव तत्र कल्पते न

मुह्यति तस्मादेवमेव यज्ञो भर्त्तव्यः ॥ १५ ॥ ता वाऽएताः । पञ्च व्याहृतयो भवन्त्यो "आवयास्तु श्रौषड्यज येयजामहे व्वौषडि"ति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः सम्वत्सरस्यैषैका यज्ञस्य मात्रैषा सम्पत् ॥ १६ ॥ तासाᳬसप्तदशाक्षराणि । सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञ ऽएषैका यज्ञस्य मात्रैषा सम्पत् ॥ १७ ॥ ओ श्रावयेति वै देवाः । पुरोव्वातᳬ ससृजिरेऽस्तु श्रौषडित्यभ्राणि समप्लावयन्य-जेति व्विद्युतं ये यजामह ऽ इति स्तनयित्नुं व्वषट्कारेणैव प्रावर्ष-यन् ॥ १८ ॥ स यदि व्वृष्टिकामः स्यात् । यदीष्ट्या वा यजेत दर्श-पूर्णमासयोर्व्वैव ब्रूयाद्वृष्टिकामो वाऽअस्मीति तत्रो ऽ अध्वर्य्युं ब्रूया-त्पुरोव्वातं च व्विद्युतश्च मनसा ध्यायेत्यभ्राणि मनसा ध्यायेत्यग्नीधᳬ स्तनयित्नुं च व्वर्षं च मनसा ध्यायेति होतारᳬ सर्वाण्येतानि मनसा ध्यायेति ब्रह्माणं व्वर्षति हैव तत्र यत्रैवमृत्विजः सम्विदाना यज्ञेन चरन्ति ॥ १९ ॥ ओश्रावयेति वै देवाः । व्विराजमभ्याजुहु-वुरस्तु श्रौषडिति व्वत्समुपावासृजन्यजेत्युदजयन्ये यजामह ऽ इत्यु-पासीदन्वषट्कारेणैव व्विराजमदुहतेयं वै व्विराडस्यैवाऽएष दोहऽ-एवᳬ ह वा ऽ अस्माऽइयं व्विराट् सर्व्वान् कामान्दुहे यऽएवमेतं व्विराजो दोहं व्वेद ॥ २० ॥ Cf. का. श. २. ४. ४.

इति शुक्लयजुर्वेदीये माध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥

१. तै. सं. १. ६. ११. १, २.

ऋतवो ह वै प्रयाजाः । तस्मात्पञ्च भवन्ति पञ्च ह्यृतवः ॥१॥ देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरऽएतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भवष्यित्यस्माकमयं भविष्यतीति ॥ २ ॥

( अर्धप्रपाठकः ६१ )

ततो देवाः । अर्चन्तः श्राम्यन्तश्चेरुस्तऽएतान्प्रयाजान् ददृशुस्तैरयजन्त तैर्ऋतून्त्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात्सपत्नानन्तरायँस्तस्मात्प्रयाजाः प्रजया ह वै नामैतद्यत्प्रयाजाऽइति तथोऽएवैष ऽएतैर्ऋतून्त्संवत्सरं प्रजयत्यृतुभ्यः संवत्सरात्सपत्नानन्तरेति तस्मात्प्रयाजैर्यजते ॥ ३ ॥ ते वाऽआज्यहविषो भवन्ति । व्वज्रो वाऽआज्यमेतेन वै देवा व्वज्रेणाज्येनर्तून्त्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात्सपत्नानन्तरायँस्तथोऽएवैषऽएतेन व्वज्रेणाज्येनऽर्तून्त्संवत्सरं प्रजयत्यृतुभ्यः संवत्सरात्सपत्नानन्तरेति तस्मादाज्यहविषो भवन्ति ॥ ४ ॥ एतद्वै संवत्सरस्य स्वं पयः । यदाज्यं तत्स्वेनैवैनमेतत्पयसा देवाः स्व्यकुर्वत तथोऽएवैनमेषऽएतत्स्वेनैव पयसा स्वीकुरुते तस्मादाज्यहविषो भवन्ति ॥५॥ स यत्रैव तिष्ठन् प्रयाजेभ्य ऽआश्रावयेत् । तत ऽएव नापक्रामेत्सङ्ग्रामो वाऽएष सन्निधीयते यः प्रयाजैर्यजते यतरो वै संयत्तयोः पराजयतेऽप वै सङ्क्रामत्यँभितरामु वै जयन् क्रामति तस्मादभितरामभितरामेव क्रामेदभितरामभितरामाहुतीर्जुहुयात् ॥ ६ ॥ तदु तथा न कुर्यात् । यत्रैव तिष्ठन् प्रयाजेभ्य ऽआश्रावयेत्तत ऽएव नापक्रामेद्यत्रोऽएव समिद्धतमं मन्येत तदाहुतीर्जुहुया-

१. प्रयाजा इति. ग. पु.                २. देवा इति. ग. पु.

३. अभिक्रमणमिदं तैत्तिरीयशाखायां विहितं—'अभिक्रामं जुहोति' इति । तस्य खण्डनं क्रियत इति भाति ३००. तै. सं. १. ६. १. ४.

त्समिद्धहोमेन ह्येव समृद्धा ऽआहुतयः ॥ ७ ॥ स ऽआश्राव्याह । समिधो यजेति तद्वसन्त समिन्द्धे स व्वसन्तः समिद्धोऽन्यानृतून्त्स-मिन्ध ऽऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति तद्वेव खलु सर्व्वानृतून्निराहाथ यज यजेत्येवोत्तरानाहाजामितायै जामि ह कुर्य्याद्यत्तनूनपातं यजेडो यजेति ब्रूयात्तस्माद्यज यजेत्येवोत्तरानाह ॥ ८ ॥ स वै समिधो यजति । स व्वसन्तो वै समिद्वसन्तमेव तद्देवा ऽअवृञ्जत व्वसन्तात्सपत्नानन्तरायन्वसन्तम्वेवैषऽएतद्वृङ्क्ते व्वस-न्तात्सपत्नानन्तरेति तस्मात्समिधो यजति ॥ ९ ॥ अथ तनूनपातं यजति । ग्रीष्मो वै तनूनपाद्ग्रीष्मो ह्यासां प्रजानां तनूस्तपति ग्री-ष्ममेव तद्देवाऽअवृञ्जत ग्रीष्मात्सपत्नानन्तरायन् ग्रीष्मम्वेवैषऽएत-द्वृङ्क्ते ग्रीष्मात्सपत्नानन्तरेति तस्मात्तनूनपातं यजति ॥ १० ॥ अथेडो यजति । व्वर्षा वा ऽइडऽइति हि व्वर्षाऽइडो यदिदं क्षुद्र-ᳪसरीसृपं ग्रीष्महेमन्ताभ्यान्नित्यक्तं भवति तद्वर्षा ऽईडितमिवान्नमि-च्छमानं चरति तस्माद्वर्षा ऽइडो व्वर्षा ऽएव तद्देवा ऽअवृञ्जत व्वर्षा-भ्यः सपत्नानन्तरायन्वर्षा ऽउ ऽएवैष ऽएतद्वङ्क्ते व्वर्षाभ्यः सपत्नान-न्तरेति तस्मादिडो यजति ॥ ११ ॥ अथ बर्हिर्यजति । शरद्वै बर्हि-रिति हि शरद्वर्हिर्या ऽइमा ऽओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति ता व्वर्षा व्वर्द्धन्ते ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे तस्माच्छरद्वर्हिः शरदमेव तद्देवाऽअवृञ्जत शरदः सपत्नानन्तरायं-च्छरदम्वेवैषऽएतद्वृङ्क्ते शरदः सपत्नानन्तरेति तस्माद्वर्हिर्यजति ॥ १२ ॥ अथ स्वाहा स्वाहेति यजति । अन्तो वै यज्ञस्य स्वाहा-कारोऽन्त ऋतूनाᳪ हेमन्तो व्वसन्ताद्धि पराद्धर्योऽन्तेनैव तदन्तं देवा ऽअवृञ्जतान्तेनान्तात्सपत्नानन्तरायन्नन्तेनोऽएवैष ऽएतदन्तं वृङ्क्ते-ऽन्तेनान्तात्सपत्नानन्तरेति तस्मात्स्वाहास्वाहेति यजति ॥ १३ ॥ तद्वाऽएतत् । व्वसन्तऽएव हेमन्तात्पुनरसुरे तस्माद्ध्येष पुनर्भवति पुनर्ह वाऽअस्मिँल्लोके भवति यऽ एवमेतद्वेद ॥ १४ ॥ स वै व्य-

न्तु व्वेत्त्विति यजति । अजामितायै जामि ह कुर्याद्यद्व्यन्तु व्यन्त्विति वैव यजेद्वेतु व्वेत्त्विति वा व्यन्त्विति वै योषा व्वेत्त्विति व्वृषा मिथुनमेवैतत्प्रजननं क्रियते तस्माद्व्यन्तु वेत्त्विति यजति ॥ १५ ॥ अथ चतुर्थे प्रयाजे समानयति बर्हिषि । प्रजा वै बर्ही रेत ऽआज्यं तत्प्रजास्वेवैतद्रेतः सिच्यते तेन रेतसा सिक्तेनेमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि ॥ १६ ॥ सङ्ग्रामो वाऽएष सन्निधीयते[1] । यः प्रयाजैर्यजते यतरं वै संयत्तयोर्मित्रमागच्छति स जयति तदेतदुपभृतोऽधि जुहूं मित्रमागच्छति तेन प्रजयति तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि ॥ १७ ॥ यजमान ऽएव जुहूमनु[2] । योऽस्माऽअरातीयति स ऽउपभृतमनु यजमानायैवैतद्द्विषन्तं भ्रातृव्यं बलिꣳ हारयत्यत्त्रैव जुहूमन्वाद्यऽउपभृतमन्वत्रऽएवैतदाद्यं बलिꣳ हारयति तस्माच्चतुर्थे प्रयाजे समानयति ॥ १८ ॥ स वाऽअनवमृशन्त्समानयति । स यद्धावमृशेद्यजमानं द्विषता भ्रातृव्येणावमृशेदत्तारमाद्येनावमृशेत्तस्मादनवमृशन्त्समानयति ॥ १९ ॥ अथोत्तरां जुहूमभ्यूहति । यजमानमेवैतद्द्विषति भ्रातृव्येऽध्यूहत्यत्तारमाद्येऽध्यूहति तस्मादुत्तरां जुहूमभ्यूहति ॥२०॥ देवा ह वा ऽऊचुः । हन्त विजितमेवानु सर्व्वं यज्ञꣳ सꣳस्थापयाम यदि नोऽसुररक्षसान्यासजेयुः सꣳस्थित ऽएव नो यज्ञः स्यादिति ॥ २१ ॥ तऽउत्तमे प्रयाजे । स्वाहाकारेणैव सर्व्वं यज्ञꣳ समस्थापयन्त्स्वाहाग्निमिति तदाग्नेयमाज्यभागꣳसमस्थापयन्त्स्वाहा सोममिति तत्सौम्यमाज्यभागꣳ समस्थापयन्त्स्वाहाग्निमिति तद्य ऽएष ऽउभयत्राच्युत ऽआग्नेयः पुरोडाशो भवति तꣳ समस्थापयन् ॥ २२ ॥ अथ यथादेवतꣳ[3] । "स्वाहा देवा ऽआज्यपा" ऽइति

---

१. सन्निधीयत इति. ग. पु.  २. जुहूमनु इति. ग. पु.

३. यथादेवतꣳ इति. ग. पु.

तत्प्रयाजानुयाजान्त्समस्थापयन् प्रयाजानुयाजा वै देवा ऽआज्यपा जुषाणो ऽअग्निराज्यस्य व्वेत्त्विति तदग्निꣳ स्विष्टकृतꣳ समस्थापयन्नग्निर्हि स्विष्टकृत्स ऽएषोऽप्येतर्हि तथैव यज्ञः सन्तिष्ठते यथैवैनं देवाः समस्थापयंस्तस्मादुत्तमे प्रयाजे स्वाहा स्वाहेति यजति यावन्ति हवीꣳषि भवन्ति व्विजितमेवैतदनु सर्वं यज्ञꣳ सꣳस्थापयति तस्माद्यदत ऽऊर्ध्वं व्विलोम यज्ञे क्रियेत न तदाद्रियेत सꣳस्थितो मे यज्ञ ऽइति ह व्विद्यात्सहैष यज्ञो यातयामेवास यथा व्वषट्कृतꣳ हुतꣳ स्वाहाकृतम् ॥ २३ ॥ ते देवा ऽअकामयन्त । कथं न्विमं यज्ञं पुनराप्याययेमायातयामानं कुर्याम तेनायातयाम्ना प्रचरेमेति ॥२४॥ स यज्जुह्वामाज्यं परिशिष्टमासीत् । येन यज्ञꣳ समस्थापयंस्तेनैव यथापूर्वꣳ हवीꣳष्यभ्यघारयन्पुनरेवैनानि तदाप्याययन्नयातयामान्यकुर्व्वन्नयातयाम ह्याज्यं तस्मादुत्तमं प्रयाजमिष्ट्वा यथापूर्वꣳ हवीꣳष्यभिघारयति पुनरेवैनानि तदाप्याययत्ययातयामानि करोत्ययातयाम ह्याज्यं तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृत ऽएव तत्पुनराप्याययत्ययातयाम करोत्यथ यद्वा स्विष्टकृतेऽवद्यति न ततः पुनरभिघारयति नो हि ततः काञ्चन हविषोऽन्नावाहुतिꣳ होष्यन् भवति ॥ २५ ॥ Cf. का. श. २. ५. १.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥

स वै समिधो यजति । प्राणा वै समिधः प्राणानेवैतत्समिन्द्धे प्राणैर्ह्ययं पुरुषः समिद्धस्तस्मादभिमृशेति ब्रूयाद्यद्युपतापी स्यात्स यद्युष्णः स्यादेव तावच्छथंसेत समिद्धो हि स तावद्भवति यद्यु शीतः स्यान्नाशथंसेत तत्प्राणानेवास्मिन्नेतद्दधाति तस्मात्समिधो यजति ॥ १ ॥ अथ तनूनपातं यजति । रेतो वै तनूनपाद्रेत ऽएवैतत्सिञ्चति[1] तस्मात्तनूनपातं यजति ॥ २ ॥ अथेडो यजति । प्रजा वा ऽइडो यदा वै रेतः सिक्तं प्रजायतेऽथ तदीडितमिवान्नमिच्छमानं चरति तत्प्रैवैतज्जनयति तस्मादिडो यजति ॥ ३ ॥ अथ बर्हिर्यजति । भूमा वै बर्हिर्भूमानमेवैतत्प्रजनयति तस्माद्बर्हिर्यजति ॥ ४ ॥ अथ स्वाहास्वाहेति यजति । हेमन्तो वा ऽऋतूनाᳪं स्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते तस्माद्धेमन् म्लायन्त्योषधयः प्र वनस्पतीनां पलाशानि मुच्यन्ते प्रतितरामिव वयाथंसि भवन्त्यधस्तरामिव वयाथंसि पतन्ति विपतितलोमेव पापः पुरुषो भवति हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते स्वी ह वै तमर्धं कुरुते श्रियेऽन्नाद्याय यस्मिन्नर्द्धे भवति य ऽएवमेतद्वेद ॥ ५ ॥ देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ते दण्डैर्धनुर्भिर्न व्यजयन्त ते हाविजयमाना ऽऊचुर्हन्त वाच्येव ब्रह्मन्विजिगीषामहै स यो नो वाचं व्याहृतां मिथुनेन नानुनिष्क्रामात्स सर्व्वं पराजयाताऽथ सर्व्वमितरे जयानिति तथेति देवा ऽअब्रुवंस्ते देवा ऽइन्द्रमब्रुवन्व्याहरेति ॥ ६ ॥ स ऽइन्द्रोऽब्रवीत् । एको ममेत्यथास्माकमेकेतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनथं ह्येकश्चैका च ॥ ७ ॥ द्वौ ममेतीन्द्रोऽब्रवीत् । अथास्माकं द्वेऽइतीतरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनᳪं हि द्वौ च द्वे च ॥ ८ ॥ त्रयो ममेतीन्द्रोऽब्रवीत् । अथास्माकं तिस्रऽइती-

---

1. एवैतदिति. क. पु.

तरेऽब्रुवंस्तदु तन्मिथुनमेवाविन्दन्मिथुनᳬं हि त्रयश्च तिस्रश्च ॥ ९ ॥
चत्वारो ममेतीन्द्रोऽब्रवीत् । अथास्माकं चतस्रऽइतीतरेऽब्रुवंस्तदु तान्मिथुनमेवाविन्दन्मिथुनᳬं हि चत्वारश्च चतस्रश्च ॥ १० ॥ पञ्च ममेतीन्द्रोऽब्रवीत् । ततऽइतरे मिथुनं नाविन्दन्नो ह्यत ऽऊर्ध्वं मिथुनमस्ति पञ्च पञ्चेति ह्येवैतदुभयं भवति ततोऽसुराः सर्व्वं पराजयन्त सर्व्वस्माद्देवा ऽ असुरानजयन्त्सर्व्वस्मात्सपत्नानसुरान्निरभजन् ॥ ११ ॥
तस्मात्प्रथमे प्रयाजऽइष्टे ब्रूयात् । "एको ममेत्येका तस्य योऽस्मान्द्वेष्टी"ति यद्यु न द्विष्यात् "योऽस्मान्द्वेष्टि यं च व्वयं द्विष्म"ऽइति ब्रूयात् ॥ १२ ॥
"द्वौ ममे"ति द्वितीये प्रयाजे । "द्वे तस्य योऽस्मान्द्वेष्टि यं च व्वयं द्विष्म" ऽइति ॥ १३ ॥ "त्रयो ममे"ति तृतीये प्रयाजे । तिस्रस्तस्य "योऽस्मान्द्वेष्टि यं च व्वयं द्विष्म" ऽइति ॥ १४ ॥ "चत्वारो ममे"ति चतुर्थे प्रयाजे । चतस्रस्तस्य "योऽस्मान्द्वेष्टि यं च व्वयं द्विष्म" ऽइति ॥ १५ ॥
"पञ्च ममे"ति पञ्चमे प्रयाजे । "न तस्य किं चन योऽस्मान्द्वेष्टि यं च व्वयं द्विष्म" ऽइति स पञ्च पञ्चेत्येव भवन् पराभवति तथास्य सर्व्वᳬं संवृङ्क्ते सर्व्वस्मात्सपत्नान्निर्भजति य ऽएवमेतद्वेद ॥ १६ ॥ Cf. का. श. २. ५. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥

( इति पञ्चमोऽध्यायः )

१. ४. ६.

ऋतवो ह वै देवेषु यज्ञे भागमीषिरे । आ नो यज्ञे भजत मा नो यज्ञादन्तर्गतास्त्वेव नोऽपि यज्ञे भागऽइति ॥ १ ॥ तद्वै देवा

१. चत्वार. ग. पु. २. नजयन्निति. क. पु. ३. प्रयाज इति. क. ग. पु.
४. प्रयाज इति. ग. पु. ५. प्रयाज इति. ग. पु. ६. यज्ञभाग इति. क. पु.

न जज्ञुः। तऽऋतवो देवेष्वजानत्स्वसुरानुपावर्त्तन्ताप्रियान्देवानां द्विषतो भ्रातृव्यान् ॥ २ ॥ ते है तामेधतु मेधां चक्रिरे। यामेषामेतामनुश्रृण्वन्ति कृषन्तो ह स्मैव पूर्व्वे व्वपन्तो यन्ति लुनन्तोऽपरे मृणन्तः शश्वद्धैभ्योऽकृष्टपच्याऽएवौषधयः पेचिरे ॥ ३ ॥ तद्धै देवानामागऽआस। कनीयऽ इन्वतो द्विषन् द्विषतेऽरातीयति किम्वेतावन्मात्रमुपजानीत यथेदमितोऽन्यथासादिति ॥४॥ ते होचुः। ऋतूनेवानुमन्त्रयामहाऽइति केनेति प्रथमानेवैनान्यज्ञे यजामेति ॥ ५ ॥ स हाग्निरुवाच। अथ यन्मां पुरा प्रथमं यजथ क्वाहं भवानीति न त्वामायतनाच्च्यावयामऽइति ते यदृतूनभिह्वयमाना ऽअथाग्निमायतनान्नाच्यावयंस्तस्मादग्निरच्युतो न ह वाऽआयतनाच्च्यवते यस्मिन्नायतने भवति यऽएवमेतमग्निमच्युतं व्वेद ॥ ६ ॥ ते देवा ऽअग्निमब्रुवन्। पुरे ह्येनांस्त्वमेवानुमन्त्रयस्वेति स हेत्याग्निरुवाचर्त्तवोऽविदं वै वो देवेषु यज्ञे भागमिति कथं नोऽविदऽइति प्रथमानेव वो यज्ञे यक्ष्यन्तीति ॥ ७ ॥ त ऋतवोऽग्निमब्रुवन्। आ वयं त्वामस्मासु भजामो यो नो देवेषु यज्ञे भागमविदऽइति स ऽएषोऽग्निर्ऋतुष्वाभक्तः समिधोऽ अग्ने तनूनपादग्न ऽ इडो ऽ अग्ने बर्हिरग्ने स्वाहाग्निमित्याभक्तो ह वै तस्यां पुण्यकृत्यायां भवति यामस्य समानो ब्रुवाणः करोत्यग्निमते ह वा ऽ अस्मा ऽ अग्निमन्त ऋतवऽओषधीः पचन्तीदᳪं सर्व्वं यऽएवमेतमग्निमृतुष्वाभक्तं व्वेद ॥८॥ तदाहुः। यदुत्तमान् प्रयाजानावाहयन्त्यथ कस्मादेनान् प्रथमान्यजन्तीत्युत्तमान्ह्येनान्यज्ञेऽवाकल्पयन् प्रथमान्वो यजामेत्यब्रुवंस्तस्मादुत्तमानावाहयन्ति प्रथमान्यजन्ति ॥ ९ ॥ चतुर्थेन वै प्रयाजेन देवाः। यज्ञमाप्नुवंस्तं पञ्चमेन समस्थापयन्नथ यदृत ऽऊर्ध्वमसᳪं स्थितं यज्ञस्य स्वर्गमेव तेन लोकᳪं समाश्नुवत ॥ १० ॥ ते स्वर्गं लोकं यन्तः। असुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्तेऽग्निं पुरस्तादकुर्व्वत रक्षोहणᳪं

१. प्रथमं इति. ग. पु. २. मायतनादिति. क. पु.

रक्षसामपहन्तारमग्निं मध्यतोऽकुर्व्वत रक्षोहणꣳ रक्षसामपहन्तारमग्निं पश्चादकुर्व्वत रक्षोहणꣳ रक्षसामपहन्तारम् ॥ ११ ॥ स यद्येनान् पुरस्तात् । असुररक्षसान्यासिसंक्षन्नग्निरेव तान्यपाहन्रक्षोहा रक्षसामपहन्ता यदि मध्यतऽआसिसंक्षन्नग्निरेव तान्यपाहन्रक्षोहा रक्षसामपहन्ता यदि पश्चादासिसंक्षन्नग्निरेव तान्यपाहन्रक्षोहा रक्षसामपहन्तातऽएवꣳ सर्व्वतोऽग्निभिर्गुप्यमानाः स्वर्गं लोकꣳ समाश्नुवत ॥ १२ ॥ तथोऽएवैषऽएतत् । चतुर्थेनैव प्रयाजेन यज्ञमाप्नोति तं पञ्चमेन सꣳस्थापयत्यथ यद्वत ऽऊर्ध्वमसꣳस्थितं यज्ञस्य स्वर्गमेव तेन लोकꣳ समश्नुते ॥ १३ ॥ स यदाग्नेयमाज्यभागं यजति । आग्निमेवैतत्पुरस्तात्कुरुते रक्षोहणꣳ रक्षसामपहन्तारमथ यदाग्नेयः पुरोडाशो भवत्यग्निमेवैतन्मध्यतः कुरुते रक्षोहणꣳ रक्षसामपहन्तारमथ यदाग्निꣳ स्विष्टकृतं यजत्यग्निमेवैतत्पश्चात् कुरुते रक्षोहणꣳ रक्षसामपहन्तारꣳ ॥ १४ ॥ स यद्येनं पुरस्तात् । असुररक्षसान्यासिसंक्षन्त्याग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि मध्यतऽआसिसंक्षन्त्याग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि पश्चादसिसंक्षन्त्याग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता सऽएवꣳ सर्व्वतोऽग्निभिर्गुप्यमानः स्वर्गं लोकꣳ समश्नुते ॥ १५ ॥ स यद्येनं पुरस्तात् । यज्ञस्यानुव्याहरेत्तं प्रतिब्रूयान्मुख्यामार्त्तिमारिष्यस्यन्धो वा बधिरो वा भविष्यसीत्येता वै मुख्या ऽआर्त्तयस्तथा हैव स्यात् ॥१६॥ यदि मध्यतो यज्ञस्यानुव्याहरेत् । तं प्रति ब्रूयादप्रजा ऽअपशुर्भविष्यसीति प्रजा वै पशवो मध्यं तथा हैव स्यात् ॥ १७ ॥ यद्यन्ततो यज्ञस्यानुव्याहरेत् । तं प्रति ब्रूयादप्रतिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकमेष्यसीति तथा हैव स्यात् तस्मादुह नानुव्याहारीव स्यादुत ह्येवंवित्परो भवति ॥ १८ ॥ संवत्सरꣳ ह वै प्रयाजैर्जय जयति । स ह न्वेवैनं जयति योऽस्य द्वाराणि वेद किꣳ हि स तैर्गृहैः कुर्याद्यानन्ततो

नु व्यव विद्याद्यथायथास्य ते भुवन्ति तुस्य व्वसन्तु ऽएव द्वारꣳ हेमन्तो द्वारं तं वुाऽएतुꣳ संवत्सरꣳ स्वर्गं लोकं प्रपद्यते सुर्व्वं वै संवत्सरः सुर्व्वं वुाऽअक्षय्युमेतेनो हास्याक्षय्युꣳ सुकृतं भवत्यक्षय्यो लोकः ॥ १९ ॥ तुदाहुः । किं देवुत्यान्युाज्यानुीति प्राजापत्यानुीति ह ब्रूयादुनिरुक्तो वै प्रजुापतिरुनिरुक्तान्युाज्यानि तुानि हैतुानि यजमानदेवुत्यान्येव युजमानो ह्येव स्वे यज्ञे प्रजुापतिरेतेन ह्युक्ता ऋत्विजस्तन्वते तं जनुयन्ति ॥२०॥ सऽआज्यस्योपस्तीर्य । द्विर्हविषोऽवदायाथोपुरिष्टादुाज्यस्याभिघारयति सैषाज्येन मिश्राहुतिर्हूयते युजमानेन हैवैषैतन्मिश्रा हूयते यदि ह वाऽ अपि दूरे सन्युजते यद्यन्तिके यथा हैवान्ते स तु ऽइष्टꣳ स्यादेवꣳहैवैवं व्विदुष ऽइष्टं भवति यद्यु ह्यापि बह्विव पापं करोति नो हैवु बहिर्द्धा यज्ञाद्भवति यऽ एवुमेतद्वेद॥२१॥

Cf. का. श. २. ५. ३.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥

चतुर्थः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ॥ १२१ ॥ )



१. यथास्य त इति ग. पु. २. लोक इति ग. पु.

# अथ पञ्चमः प्रपाठकः ॥

१. ५. १.

यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं नऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभव-न्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम तद्धाऽऋषीणामनुश्रुतमास ॥१॥ यज्ञेन ह वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं नऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्निति तमन्वेष्टुं दध्रिरे ॥ २ ॥ तेऽर्चन्तः श्राम्यन्तश्चेरुः । श्रमेण ह स्म वै तद्देवा जयन्ति यदेषां जय्यमासर्षयश्च तेभ्यो देवा वैव प्ररोचयाञ्चक्रुः स्वयं वैव दध्रिरे प्रेत तदेष्यामो यतो देवाः स्वर्गं लोकꣳ समाश्नुवतेति ते[3] किं प्ररोचते किं प्ररोचतऽ इति चेरुरेत्पुरोडाशमेव कूर्म्मं भू-त्वा सर्प्पन्तं ते ह सर्व्वऽएव मेनिरेऽयं वै यज्ञऽइति ॥ ३ ॥ ते हो-चुः । अश्विभ्यां तिष्ठ सरस्वत्यै तिष्ठेन्द्राय तिष्ठेति स सर्प्पैवाग्नये तिष्ठेति ततस्तस्थावग्नये वाऽअस्थादिति तमग्नावेव परिगृह्य सर्व्व-हुतमजुहवुराहुतिर्हि देवानां तत ऽएभ्यो यज्ञः प्रारोचत तमसृजन्त तमतन्वत सोऽयं परोऽवरं यज्ञोऽनूच्यते पितैव पुत्राय ब्रह्मचारिणे ॥ ४ ॥ स वा ऽएभ्यस्तत्पुरोऽदाशयत् । यऽएभ्यो यज्ञं प्रारोचय-त्तस्मात्पुरोदाशः पुरोदाशो ह वै नामैतद्यत्पुरोडाशऽइति स ऽएषऽ उ-भयत्राच्युत ऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति ॥ ५ ॥ स नु पौर्णमासꣳ हविः । नामावास्यमग्नीषोमीय ऽएव पौर्णमासꣳ हविः सान्नाय्यमामावास्यं यज्ञऽएवैष ऽउभयत्रावक्लृप्तो नेद्यज्ञादयानीति-न्वेव पुरस्तात्पौर्णमासस्य क्रियतऽएवं वामावास्यस्यैतन्नु तद्यस्मादत्र

---

१. यज्ञमिति. क. ग. पु. २. धीत्वा इति ग. पु. ३. See. तै. सं. २.६.५.

क्रियते ॥ ६ ॥ यद्यु ऽएनमुपधावेत् । इष्ट्या मा याजयेत्येतयैव या-जयेद्यत्कामा वाऽएतमृषयोऽजुहवुः सऽएभ्यः कामः समार्ध्यत यत्कामो ह वाऽएतेन यज्ञेन यजते सोऽस्मै कामः समृध्यते यस्यै वैकस्यै च देवतायै हविर्गृह्यतेऽग्नौ वै तस्यै जुह्वत्यग्नाऽ उ चेद्धोप्यन्त्स्यात्किमन्यस्यै देवतायाऽ आदिशेत्तस्मादग्नयऽएव ॥ ७ ॥ अग्निर्वै सर्व्वा देवताः । अग्नौ हि सर्व्वाभ्यो देवताभ्यो जुह्वति तद्यथा सर्व्वा देवता ऽउपधावेदेवं तत्तस्मादग्नयऽ एव ॥ ८ ॥ ( शतम्[1] ५०० ॥ ) अग्निर्व्वै देवानामद्धातमाम् । यं वाऽअद्धातमां मन्येत तमुपधावेत्तस्मादग्नयऽएव ॥९॥ अग्निर्व्वै देवानां मृदुहृदयतमः । यं वै मृदुहृदयतमं मन्येत तमुपधावेत्तस्मादग्नयऽएव ॥१०॥ अग्निर्व्वै देवानां नेदिष्ठम् । यं वै नेदिष्ठमुपसर्त्तव्यानां मन्येत तमुपधावेत्तस्मादग्नयऽएव ॥ ११ ॥ स यदीष्टिं कुर्व्वीत । सप्तदश सामिधेनीरनुब्रूयादुपांशु देवतां यजति तद्धीष्टिरूपं मूर्द्धन्वत्यौ याज्यानुवाक्ये स्यातां व्वार्त्रघ्नावाज्यभागौ व्विराजौ संयाज्ये ॥ १२ ॥ Cf. का. श. २. ५. ४

इति शुक्लयजुर्वेदीय माध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥

## १. ५. २.

त्वष्टुर्ह वै पुत्रः । त्रिशीर्षा षडक्षऽआस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवꣳरूपऽआस तस्माद्विश्वरूपो नाम ॥ १ ॥ तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्माऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥ २ ॥ स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुकऽइव बभ्रुरिव हि सोमो राजा[2] ॥३॥ अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोभि माद्यत्कऽइव वदत्यभिमाद्यन्निव हि सुरां पीत्वा व्वदति ॥ ४ ॥ अथ

१. आदितः कण्डिकानां संख्येयम् । २. राजा इति. ग.

यदन्यस्माऽअशनायास । ततस्तित्तिरिः समभवत्तस्मात्स विश्वरूप-
तमऽइव सन्त्येव घृतस्तोकाऽइव त्वन्मधुस्तोकाऽइव त्वत्पर्णेष्वाश्चु-
तिताऽएवँ[1] रूपमिव हि स तेनाशनमावयत् ॥५॥ स त्वष्टा चुक्रोध
कुविन्मे पुत्रमबधीदिति सोऽपेन्द्रमेव सोममाजह्रे स यथायथँ सोमः
प्रसुत ऽएवमपेन्द्र ऽ[2]एवास ॥६॥ इन्द्रो ह वाऽईक्षाञ्चक्रे । इदं वै मा-
सोमादन्तर्यन्तीति स यथा बलीयानबलीयसऽएवमनुपहूत ऽएव यो
द्रोणकलशे शुक्र ऽआस तं भक्षयाञ्चकार स हैनं जिहिँस सोऽस्य
विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्रावाथ सर्व्वेभ्योऽ-
न्येभ्यः प्राणेभ्योऽद्रवत्तददः सौत्रामणीतीष्टिस्तस्यां [3]तद्व्याख्यायते
यथैनं देवा ऽअभिषज्यन् ॥ ७ ॥ स त्वष्टा चुक्रोध । कुविन्मेऽनुप-
हूतः सोममबभक्षदिति स स्वयमेव यज्ञवेशसं चक्रे स यो द्रोणक-
लशे शुक्रः परिशिष्ट ऽआस तं प्रवर्त्तयाञ्चकारेन्द्रशत्रुर्व्वर्द्धस्वेति सो-
ऽग्निमेव प्राप्य सम्बभूवान्तरैव सम्बभूवेत्यु हैकऽआहुः सोऽग्नीषो-
मावेवाभिसम्बभूव सर्व्वा विद्याः सर्व्वं यशः सर्व्वमन्नाद्यँ सर्व्वाँ
[4]श्रीँ ॥ ८ ॥ स यद्वर्त्तमानः समभवत् । तस्माद्वृत्रोऽथ यदपात्सम-
भवत्तस्माद्दहिस्तं दनुश्च दनायूश्च मातेव च पितेव च परिजगृहतु-
स्तस्माद्दानव ऽइत्याहुः ॥ ९ ॥ अथ यदब्रवीदिन्द्रशत्रुर्व्वर्द्धस्वेति ।
तस्मादु हैनमिन्द्रऽएव [5]जघानाथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्व्व-
र्द्धस्वेति शश्वदु ह सऽएवेन्द्रमहनिष्यत् ॥ १० ॥ अथ यदब्रवद्वि-
र्द्धस्वेति । तस्मादु ह स्मेषुमात्रमेव तिर्यङ्वर्द्धतऽ इषुमात्रं प्राङ्-
क्सोऽवैवावरँ समुद्रं दधावव पूर्व्वँ स यावत्स ऽआस सहैव ता-
वदन्नादऽआस ॥ ११ ॥ तस्मै ह स्म पूर्व्वाह्णे [6]देवाः । अशनमभिह्र-
रन्ति मध्यन्दिने मनुष्या ऽअपराह्णे पितरः ॥ १२ ॥ स वा ऽ इन्द्र-

---

१. रूपँहीति ग.पु. २. एवास इति क. पु. ३. तद्व्याख्यायत इति ग. पु.
४. श्रीमिति. ग. पु. ५. जघानेति. ग. पु. ६. देवा इति. ग. पु.

स्तुथैवनुत्तश्चरन्। अग्नीषोमा ऽ उपमन्त्रयाञ्चक्रे ऽ ग्नीषोमौ युवं वै मम स्थो युवयोरहमस्मि न युवयोरेष किञ्चन कं मऽइमं दस्युं व्वर्धयथ ऽउप मा वर्त्तेथामिति॥१३॥ तौ होचतुः। किमावयोस्ततः स्यादिति ताभ्यामेतमग्नीषोमीयमेकादशकपालं पुरोडाशं निरवपत्त-स्मादग्नीषोमीय ऽएकादशकपालः पुरोडाशो भवति ॥१४॥ तावेन-मुपावव्वृततुः। तावनु सर्व्वे देवाः प्रेयुः सर्व्वा व्विद्याः सर्व्वं यशः सर्व्वमन्नाद्यꣳ सर्व्वा श्रीस्तेनेष्ट्वेन्द्रऽएतदभवद्यदिदमिन्द्रऽएषऽउ पौर्णमासस्य बन्धुः स यो हैवं व्विद्वान् पौर्णमासेन यजत ऽ एताꣳ हैव श्रियं गच्छत्येवं यशो भवत्येवमन्नादो भवति ॥ १५ ॥ तद्वेव खलु हतो व्वृत्रः[1]। स यथा दृतिर्न्निष्पीत ऽएवꣳ संल्लीनः[2] शिश्ये यथा निर्धूतसक्तुर्भस्त्रैवꣳ संल्लीनः शिश्ये तमिन्द्रोऽभ्यादुद्राव हनि-ष्यन्[3] ॥ १६ ॥ स होवाच। मानु मे प्रहार्षीस्त्वं वै तदेतर्हसि यदहं व्येव मा कुरु मामुया भूवमिति स वै मेऽन्नमेधीति तथेति तं द्वेधा-न्वभिनत्तस्य यत्सौम्यं न्यक्तमास तं चन्द्रमसं चकाराथ यदस्यासु-र्य्यमास तेनेमाः प्रजा ऽउदरेणाविध्यत्तस्मादाहुर्व्वृत्र ऽएव तर्ह्यन्नाद ऽआसीद्वृत्रऽएतर्हीतीदꣳ हि यदसावापूर्यतेऽस्मादेवैतल्लोकादाप्याय-तेऽथ यदिमाः प्रजाऽअशनमिच्छन्तेऽस्माऽएवैतद्वृत्रायोदराय बलिꣳ हरन्ति स यो हैवमेतं व्वृत्रमन्नादं व्वेदान्नादो हैव भवति ॥ १७ ॥ ताऽउ हैता देवताऽऊचुः। याऽइमाऽअग्नीषोमावन्वाजग्मुरग्नीषोमौ युवं वै नो भूयिष्ठभाजौ स्थो ययोर्वामिदं युवयोरस्मानन्वाभजत-मिति ॥ १८ ॥ तौ होचतुः। किमावयोस्ततः स्यादिति यस्यै कस्यै च देवतायै हविर्न्निर्व्वपांस्तद्वां पुरस्तादाज्यस्य यजानिति तस्माद्यस्यै कस्यै च देवतायै हविर्न्निर्व्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति तन्न सौम्येऽध्वरे न पशौ यस्यै कस्यै च देवतायै हविर्[4]न्निर्वपा-

---

१. वृत्रः इति. ग. पु. २. संलीन इति ग. पु. ३. हनिष्यन् इति. ग. पु.
४. हविरिति नाऽस्ति. ग.

निति ह्यब्रुवन् ॥ १९ ॥ स हाग्निरुवाच । मय्येव वः सर्व्वेभ्यो जुह्वतु तद्वोऽहं मय्याभजामीति तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुरग्निः सर्व्वा देवता इति ॥२०॥ अथ ह सोम उवाच । मामेव वः सर्व्वेभ्यो जुह्वतु तद्वोऽहं मय्याभजामीति तस्मात्सोमᳬं सर्व्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुः सोमः सर्व्वा देवता इति ॥२१॥ अथ यदिन्द्रे सर्वे देवास्तस्थानाः[1] । तस्मादाहुरिन्द्रः सर्व्वा देवताऽइन्द्रश्रेष्ठा देवा इत्येतद्ध वै देवास्त्रेधैकदेवत्या अभवन्त्स यो हैवमेतद्वेदैकधा हैव स्वानाᳬं श्रेष्ठो भवति ॥ २२ ॥ द्वयं वाऽइदं न तृतीयमस्ति । आर्द्रं चैव शुष्कं च यच्छुष्कं तदाग्नेयं यदार्द्रं तत्सौम्यमथ यदिदं द्वयमेवा[2]ऽथ किमेतावत्क्रियत इत्यग्नीषोमयोरेवाज्यभागावग्नीषोमयोरुपाᳬंशुयाजोऽग्नीषोमयोः पुरोडाशो यदुत एकतमेनैवेदᳬं सर्व्वमाप्नोत्यथ किमेतावत्क्रियतऽइत्यग्नीषोमयोर्ह्येवैतावती व्विभूतिः प्रजातिः ॥२३॥ सूर्य एवाग्नेयः । चन्द्रमाः सौम्योऽहरेवाग्नेयᳬं रात्रिः सौम्या य एवापूर्यतेऽर्द्धमासः स आग्नेयो योऽपक्षीयते स सौम्यः ॥२४॥ आज्यभागाभ्यामेव । सूर्याचन्द्रमसावाप्नोत्युपाᳬंशुयाजेनैवाहोरात्रेऽआप्नोति पुरोडाशेनैवार्द्धमासावाप्नोतीत्यु हैकऽआहुः ॥२५॥ तदु होवाचासुरिः । आज्यभागाभ्यामेवातो यतमे वा यतमे वा द्वे आप्नोत्युपाᳬंशुयाजेनैवा[3]तो यतमे वा यतमे वा द्वे आप्नोति पुरोडाशेनैवा[4]तो यतमे वा यतमे वा द्वे आप्नोति सर्व्वं मऽआप्तमसत्सर्व्वं जितᳬं सर्व्वेण व्वृत्रᳬं हनानि सर्वेण द्विषन्तं भ्रातृव्यᳬं हनानीति तस्माद्वाऽ एतावत्क्रियत इतिं ॥२६॥ तदाहुः । किमिदं जामि क्रियतेऽग्नीषोमयोरेवाज्यस्याग्नीषोमयोः पुरोडाशस्य यदनन्तर्हितं तेन जामीत्यनेन ह त्वेवाजाम्याज्यस्येतरं पुरोडाशस्येतरं तदन्यदिवेतरमन्यादिवेतरं भवत्यृचमनूच्य जुषाणेन यजत्यृचमनूच्यर्चा यजति तदन्यदिवेतर-

१. तस्थाना इति. ग. पु.

२. वाप्येति. ग. पु.

३. वातोऽहोरात्रेऽआप्नोतीति. ग. पु.

४. वातोऽर्धमासावाप्नोतीति. ग. पु.

मन्यदिवेतरं भवत्यनेन ह त्वेवाजाम्युपाꣳश्वाज्यस्य यजत्युच्चैः पुरोडाशस्य स यदुपाꣳशु तत्प्राजापत्यꣳ रूपं तस्मात्तस्यानुष्टुभमनुवाक्यामन्वाह व्वाग्घ्यनुष्टुब्वाग्घि प्रजापतिः ॥ २७ ॥ एतेन वै देवाः । उपाꣳशुयाजेन यं यमसुराणामकामयन्त तमुपत्सर्य व्वज्रेण व्वषट्कारेणाघ्नंस्तथोऽएवैष ऽएतेनोपाꣳशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपत्सर्य व्वज्रेण व्वषट्कारेण हन्ति तस्मादुपाꣳशुयाजं यजति ॥ २८ ॥ स वा ऽ ऋचमनूच्य जुषाणेन यजति । तदन्विमा ऽअन्यतरतोदन्ताः प्रजाः प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्तोऽन्यतरतो ह्येतदस्थि करोति ॥ २९ ॥ अथर्चमनूच्यर्चा यजति । तदन्विमा ऽउभयतोदन्ताः प्रजाः प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्त ऽउभयतो ह्येतदस्थि करोत्येता वाऽइमा द्वय्यः प्रजा ऽअन्यतरतोदन्ताश्चैवोभयतोदन्ताश्च स यो हैवं व्विद्वानग्नीषोमयोः प्रजातिं यजति बहुर्हैव प्रजया पशुभिर्भवति ॥३०॥ स वै पौर्णमासेनोपवत्स्यन् । न सत्रा सुहितऽइव स्यात्तेनेदमुदरमसुर्यं व्विलनात्याहुतिभिः प्रातर्दैवमेष ऽउ पौर्णमासस्योपचारः ॥ ३१ ॥ स वै सम्प्रत्येवोपवसेत् । सम्प्रति व्वृत्रꣳ हनानि सम्प्रति द्विषन्तं भ्रातृव्यꣳ हनानीति ॥ ३२ ॥ स वा ऽ उत्तरामेवोपवसेत् । समिव वा ऽ एष क्रमते यः सम्प्रत्युपवसत्यनद्धा वै सङ्क्रान्तयोर्यदीतरो वेतरमभिभवतीतरो वेतरमथ य ऽउत्तरामुपवसति यथा पराञ्चमावृत्तꣳ सम्पिꣳष्यादप्रत्यालभमानꣳ सोऽन्यतो घात्येव स्यादेवं तद्य ऽउत्तरामुपवसति ॥३३॥ स वै सम्प्रत्येवोपवसेत् । यथा वा ऽ अन्यस्य हतꣳ सम्पिꣳष्यादेवं तद्य ऽउत्तरामुपवसति सोऽन्यस्यैव कृतानुकरोऽन्यस्योपावसायी भवति तस्मादु सम्प्रत्येवोपवसेत् ॥३४॥ प्रजापतेर्ह वै प्रजाः ससृजानस्य । पर्व्वाणि

---

१. See तै. सं. २. ६. २. २. २. करोतीति. ग. पु.

३. उपवत्स्यन् इति. ग. पु. ४. व्विनातीति. ख. पु. ५. उपचार इति ग. पु.

व्विसस्रꣳसुः स वै संवत्सरऽएव प्रजापतिस्तस्यैतानि पर्वाण्यहो-
रात्रयोः सन्धी पौर्णमासी चामावास्या चर्त्तुमुखानि ॥ ३५ ॥ स
व्विस्रस्तैः पर्वभिः । न शशाक सꣳहातुं तमेतैर्हविर्यज्ञैर्देवा ऽअभिष-
ज्यन्नग्निहोत्रेणैवाहोरात्रयोः सन्धी तत्पर्वाभिषज्यंस्तत्समदधुः पौर्ण-
मासेन चैवामावास्येन च पौर्णमासीं चामावास्यां च तत्पर्वाभिषज्यं-
स्तत्समदधुश्चातुर्मास्यैरेवर्त्तुमुखानि तत्पर्वाभिषज्यंस्तत्समदधुः ॥३६॥
स सꣳहितैः पर्वभिः । इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यꣳ
स यो हैवंविद्वान्त्सम्प्रत्युपवसति सम्प्रति हैव प्रजापतेः पर्व भिष-
ज्यत्यवति हैनं प्रजापतिः सऽएवमेवान्नादो भवति यऽएवं विद्वान्त्स-
म्प्रत्युपवसति तस्मादु सम्प्रत्येवोपवसेत् ॥ ३७ ॥ चक्षुषी ह वा
ऽएते यज्ञस्य यदाज्यभागौ । तस्मात्पुरस्ताज्जुहोति पुरस्ताद्धीमे
चक्षुषी तत्पुरस्तादेवैतच्चक्षुषी दधाति तस्मादिमे पुरस्ताच्चक्षुषी
॥ ३८ ॥ उत्तरार्धपूर्वार्धे[1] हैके । आग्नेयमाज्यभागं जुह्वति दक्षिणार्ध-
पूर्वार्धे सौम्यमाज्यभागमेतत्पुरस्ताच्चक्षुषी दध्मऽइति व्वदन्तस्तदु
तदाविज्ञान्यमिव हवीꣳषि ह वाऽआत्मा यज्ञस्य स यदेव पुरस्ता-
द्धविषां जुहोति तत्पुरस्ताच्चक्षुषी दधाति यत्रो ऽ एव समिद्धतमं
मन्येत तदाहुतीर्जुहुयात्समिद्धहोमेन ह्येव समृद्धा ऽआहुतयः ॥३९॥
स वा ऽ ऋचमनूच्य जुषाणेन यजति । तस्मादिमेऽअस्थन्त्सत्यन-
स्थिके चक्षुषी ऽ आश्लिष्टे ऽ अथ यदृचमनूच्यर्चा यजेदस्थि हैव
कुर्यान्न चक्षुः ॥ ४० ॥ ते वाऽएते । अग्नीषोमयोरेव रूपमन्वायत्ते
यच्छुक्लं तदाग्नेयं यत्कृष्णं तत्सौम्यं यदि वेतरथा यदेव कृष्णं तदा-
ग्नेयं यच्छुक्लं तत्सौम्यं यदेव व्वीक्षते तदाग्नेयꣳ रूपꣳ शुष्के ऽइव
हि व्वीक्षमाणस्याक्षिणी भवतः शुष्कमिव ह्याग्नेयं यदेव स्वपिति
तत्सौम्यꣳ रूपमार्द्रे ऽ इव हि सुषुपुषोऽक्षिणी भवत आर्द्रे ऽइव हि

१. अयं तैत्तिरीयशाखास्थविधेरेवाऽनुवादस्तस्यैव च खण्डनम् । तत्रैव—"पूर्वार्धे जुहोति तस्मात् पूर्वार्धे चक्षुषी प्रबाहुक् जुहोति तस्मात् प्रबाहुक् चक्षुषी । उत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमाय" ( तै. सं. २. ६. २. ) इति दर्शनात् ।

सोम ऽआजरसꣳ ह वाऽअस्मिँल्लोके चक्षुष्मान् भवति सचक्षुरमुष्मिँल्लोके सम्भवति यऽएवमेतौ चक्षुषी ऽ आज्यभागौ वेद ॥ ४१ ॥
Cf. का. श. २. ६. १, तै. सं. २. ६. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥

१. ५. ३.

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान्मन्यमानो नास्तृषीतीव बिभ्यन्निलयां चक्रे स पराः परावतो जगाम देवा ह वै विदां चक्रुर्हतो वै वृत्रोऽथेन्द्रो न्यलेष्टेति ॥ १ ॥ तमन्वेष्टुं दध्रिरे । अग्निर्देवतानाꣳ हिरण्यस्तूप ऽऋषीणां बृहती छन्दसां तमग्निरनुविवेद तेनैताꣳ रात्रिꣳ सहाजगाम स वै देवानां वसुर्वीरो ह्येषाम् ॥ २ ॥ ते देवा ऽअब्रुवन् । अमा वै नोऽद्य वसुर्वसति यो नः प्रावात्सीदिति ताभ्यामेतद्यथा ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्याꣳ समानमोदनं पचेदजं वा तदह मानुषꣳ हविर्देवानामेवमाभ्यामेतत्समानꣳ हविर्निरवपन्नैन्द्राग्नं द्वादशकपालं पुरोडाशं तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥३॥ स ऽइन्द्रोऽब्रवीत् । यत्र वै वृत्राय वज्रं प्राहरं तद्भ्यस्मये स कृशऽइवास्मि न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति तथेति देवा ऽअब्रुवन् ॥४॥ ते देवा ऽअब्रुवन् । न वाऽइममन्यत्सोमाद्धिनुयात्सोममेवास्मै सम्भरामेति तस्मै सोमꣳ समभरन्नेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष ऽएताꣳ रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति स ऽइहापश्चौषधीश्च प्रविशति स वै देवानां वस्वन्नꣳ ह्येषां तद्यदेष ऽएताꣳ रात्रिमिहामा वसति तस्मादमावास्या नाम

१ तैत्तिरीयशाखायाम्—अन्वेषणमिदं पितृभिः कृतं, तैरेव चोपलब्ध इन्द्र इत्युक्तम् । See तै. सं. २. ५. ३. ७. २. इहैवापश्चेति. क. ग. पु.

॥ ५ ॥ तं गोभिरनुविष्ठाप्य समभरन् । यदोषधीराश्नंस्तदोषधिभ्यो यदपोऽपिबंस्तदद्भ्यस्तमेवꣳ सम्भृत्यातच्य तीव्रीकृत्य तमस्मै प्रायच्छन् ॥ ६ ॥ सोऽब्रवीत् । धिनोत्येव मेदं नैव तु मयि श्रयते यथेदं मयि श्रयातै तथोपजानीतेति तꣳ शृतेनैवाश्रयन् ॥ ७ ॥

( अर्धप्रपाठकः ॥ ६० ॥ )

तद्वाऽएतत् । समानमेव सत्पय ऽएव सदिन्द्रस्यैव सत्तत्पुनर्नानेवाचक्षते यदब्रवीद्धिनोति मेति तस्माद्दध्यथ यदेनꣳ शृतेनैवाश्रयंस्तस्माच्छृतꣳ ॥८॥ स यथाꣳशुराप्यायेत । एवमाप्यायतापपाप्मानꣳ हरिमाणमहतैष ऽउऽआमावास्यस्य बन्धुः स यो हैवं विद्वान्त्सन्नयत्येवꣳ हैव प्रजया पशुभिराप्यायतेऽप पाप्मानꣳ हते तस्माद्वै सन्नयेत् ॥ ९ ॥ तदाहुः । नासोमयाजी संनयेत्सोमाहुतिर्वाऽएषा सानवरुद्धासोमयाजिनस्तस्मान्नासोमयाजी संनयेदिति ॥ १० ॥ तदु समेव नयेत् । नन्वत्रान्तरेण शुश्रुम सोमेन नु मा याजयताथ मऽएतदाप्यायनꣳ सम्भरिष्यथेत्यब्रवीदिति न वै मेदं धिनोति यन्मा धिनवत्तन्मे कुरुतेति तस्माऽएतदाप्यायनꣳ समभरंस्तस्मादप्यसोमयाजी समेव नयेत् ॥ ११ ॥ वार्त्रघ्नं वै पौर्णमासम् । इन्द्रो ह्येतेन वृत्रमहन्नथैतदेव वृत्रहत्यं यदामावास्यं वृत्रꣳ ह्यस्माऽएतज्जघ्नुषऽआप्यायनमकुर्वन् ॥ १२ ॥ तद्वाऽएतदेव वार्त्रघ्नम् । यत्पौर्णमासमथैष ऽएव वृत्रो यच्चन्द्रमाः स यत्रैषऽएताꣳ रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदेनमेतेन सर्व्वꣳ हन्ति नास्य किञ्चन परिशिनष्टि सर्व्वꣳ ह वै पाप्मानꣳ हन्ति न पाप्मनः किं चन परिशिनष्टि य ऽएवमेतद्वेद ॥ १३ ॥ तद्धैके दृष्ट्वोपवसन्ति । श्वो नोदेते-

---

१. अनुवादोऽयं तैत्तिरीयशाखीयविधेरेव। तत्र ह्येवं श्रूयते—"नासोमयाजी सन्नयेदनागतं वा एतस्य पयो योऽसोमयाजी" (तै. सं. २. ५. ५.) इति। तस्यैव चाऽनन्तरस्मिन् खण्डे खण्डनम्।

त्यदो हैव देवानामविक्षीणमन्नं भवत्यथैभ्यो व्वयमित ऽउपप्रदास्या-
मऽइति तद्धि समृद्धं यदक्षीणऽएव पूर्वस्मिन्नन्नेऽथापरमन्नमागच्छ-
ति स ह वह्वन्नऽएव भवत्यसोमयाजी तु क्षीरयाज्यदो हैव सोमो
राजा भवति ॥ १४ ॥ अथ यथैव पुरा[1] । केवलीरोषधीरश्नन्ति केव-
लीरपः पिबन्ति ताः केवलमेव पयो दुह्रऽएवं तदेष वै सोमो रा-
जा देवानामन्नं यच्चन्द्रमाः स यत्रैषऽएताᳬं रात्रिं न पुरस्तान्न
पश्चाद्ददृशे तदिमं लोकमागच्छति सऽइहापश्चौषधीश्च प्रविशति
तदेनमद्भ्यऽओषधिभ्यः सम्भृत्याहुतिभ्योऽधि जनयति सऽएषऽआ-
हुतिभ्यो जातः पश्चाद्ददृशे ॥ १५ ॥ तद्वाऽएतत् । अविक्षीणमेव
देवानामन्नाद्यं परिप्लवतेऽविक्षीणᳬं ह वाऽअस्यास्मिँलोकेऽन्नं
भवत्यक्षय्यममुष्मिँलोके सुकृतं य ऽएवमेतद्वेद ॥ १६ ॥ तद्वाऽएताᳫँ
रात्रिम् । देवेभ्योऽन्नाद्यं प्रच्यवते तदिमं लोकमागच्छति ते देवा
ऽअकामयन्त कथं नु न इदं पुनरागच्छेत्कथं नऽइदं परागेव न प्रण-
श्येदिति तद्यऽएव संनयन्ति तेष्वाशᳫँसन्तऽएतऽएव नः सम्भृत्य
प्रदास्यन्तीत्याह वाऽअस्मिन्त्स्वाश्च निष्ट्याश्च शᳬंसन्ते य ऽएवमे-
तद्वेद यो वै परमतां गच्छति तस्मिन्नाशᳫँसन्ते ॥१७॥ तद्वाऽएष
ऽएवेन्द्रः । य ऽएष तपत्यथैष ऽएव व्वृत्रो यच्चन्द्रमाः सोऽस्यैष भ्रा-
तृव्यजन्मेव तस्माद्यद्यपि पुरा व्विदूरमिवोदितोऽथैनमेताᳬं रात्रिमु-
पैवं न्याप्लवते सोऽस्य व्यात्तमापद्यते ॥ १८ ॥ तं ग्रसित्वोदेति ।
स न पुरस्तान्न पश्चाद्ददृशे ग्रसते ह वै द्विषन्तं भ्रातृव्यमयमेवा-
स्ति नास्य सपत्नाः सन्तीत्याहुर्य ऽएवमेतद्वेद ॥ १९ ॥ तं निर्धीय
निरस्यति । स ऽएष धीतः पश्चाद्ददृशे स पुनराप्यायते स ऽएतस्यै-
वान्नाद्याय पुनराप्यायते यदि ह वाऽअस्य द्विषन् भ्रातृव्यो व्वणिज्य-
या वा केनचिद्वा सम्भवत्येतस्य हैवान्नाद्याय पुनः सम्भवति य
ऽएवमेतद्वेद ॥२०॥ तद्धैके महेन्द्रायेति कुर्व्वन्ति । इन्द्रो वाऽएष पुरा[2]

---

१. पुरा इति क. ग. पु.   २. See तै. सं. ६. ५. ५. ३.

व्वृत्रस्य व्वधादथ व्वृत्रꣳहत्वा यथा महाराजो विजिग्यानऽएवं महेन्द्रोऽभवत्तस्मान्महेन्द्रायेति तद्विन्द्रायेत्येव कुर्यादिन्द्रो वाऽएष पुरा व्वृत्रस्य व्वधादिन्द्रो वृत्रं जघ्निवांस्तस्माद्विन्द्रायेत्येव कुर्य्यात् ॥२१॥

Cf. क. श. २. ६. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥

( इति षष्ठोऽध्यायः )

१. ५. ४.

स वै पर्णशाखया वत्सानपाकरोति । तद्यत्पर्णशाखया व्वत्सानपाकरोति यत्र वै गायत्री सोममच्छापतत्तदस्याऽआहरन्त्याऽअपादस्ताभ्यायत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णोऽभवत्तस्मात्पर्णो नाम तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति तस्मात्पर्णशाखया व्वत्सानपाकरोति ॥१॥ तमाच्छिनत्ति । "इषे त्वोर्ज्जे त्वे"ति वृष्ट्यै तदाह यदाहेषे त्वेत्यूर्जे त्वेति यो व्वृष्टादूर्ग्रसो जायते तस्मै तदाह ॥२॥ अथ मातृभिर्व्वत्सान्त्समवार्जन्ति । स व्वत्सꣳ शाखयोपस्पृशति "व्वायव स्थे"त्ययं वै वायुर्योऽयं पवतऽएष वाऽइदꣳ सर्वं प्रप्यायति यदिदं किं च व्वर्षत्येष वाऽएतासां प्रप्यायिता तस्मादाह "व्वायवस्थेत्युपायवस्थे"त्यु हैकऽआहुरुप हि द्वितीयोऽवतीति तदु तथा न ब्रूयात् ॥३॥ अथ मातृणामेकाꣳशाखयोपस्पृशति । व्वत्सेन व्याकृत्य "देवो वः सविता प्रार्पयत्वि"ति सविता वै देवानां प्रसविता सवितृप्रसूता यज्ञꣳ सम्भरानिति तस्मादाह देवो वः सविता प्रार्पयत्विति ॥४॥ "श्रेष्ठतमाय कर्मणे"ऽइति । यज्ञो वै श्रेष्ठतमं

१. मा. सं. १. १.　　२. मा. सं. १. १.　　३. See. तै. सं. १. १. १.
४ मा. सं. १. १.　　५. मा. सं. १. १.　　६. See. तै. ब्रा. ३. २ १.

कर्म यज्ञाय हि तस्मादाह श्रेष्ठतमाय कर्मणऽइति ॥५॥ "आप्यायध्वम-घ्न्याऽइन्द्राय भागमि"ति। तद्यथैवादो देवतायै हविर्गृह्णन्नादिशत्येवमे-वैतद्देवतायाऽआदिशति यदाहाप्यायध्वमघ्न्याऽइन्द्राय भागमिति॥६॥ "प्रजावतीरनमीवाऽअयक्ष्मा" ऽइति । नात्र तिरोहितमिवास्ति "मा वस्तेनऽईशत माघशꣳस"ऽइति मा वो नाष्ट्रा रक्षाꣳसीशतेत्येवैतदाह "ध्रुवाऽअस्मिन् गोपतौ स्यात बह्वी"रित्यनपक्रमिण्योऽस्मिन्यजमाने बह्व्यः स्यातेत्येवैतदाह ॥७॥ अथाहवनीयागारस्य वा पुरस्तात् । गार्हपत्यागारस्य वा शाखामुपगूहति "यजमानस्य पशून् पाही"ति तद्ब्रह्मणैवैतद्यजमानस्य पशून् परिददाति गुप्त्यै ॥८॥ तस्यां पवित्रं करोति। "वसोः पवित्रमसी"ति यज्ञो वै वसुस्तस्मादाह वसोः पवित्रमसीति ॥ ९ ॥ अथ यवाग्वैताꣳ रात्रिमग्निहोत्रं जुहोति । आदिष्टं वा ऽ एतद्देवतायै हविर्भवति यत्पयः स यत्पयसा जुहुयाद्यथान्यस्यै देवतायै हविर्गृहीतं तदन्यस्यै जुहुयादेवं तत्तस्माद्यवाग्वैताꣳ रात्रिमग्निहोत्रं जुहोति जुह्वत्यग्निहोत्रमुपक्लृप्तोखा भवत्यथाहोपसृष्टां प्रब्रूतादिति यदा प्राहोपसृष्टेति ॥ १० ॥ अथोखामादत्ते ।" द्यौरसि पृथिव्यसी"त्युपस्तौत्येवैनामेतन्महयत्येव यदाह द्यौरसि पृथिव्यसीति "मातरिश्वनो घर्म्मोऽसी"ति यज्ञमेवैतत्करोति यथा घर्मं प्रवृञ्ज्यादेवं प्रवृणक्ति "विश्वधाऽअसि परमेण धाम्ना दृꣳहस्व मा ह्वारि"ति दृꣳहत्येवैनामेतदशिथिलां करोति "मा ते यज्ञपतिर्ह्वार्षी"दिति यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदह्वलामाशास्ते ॥ ११ ॥ अथ पवित्रं निदधाति । तद्वै प्राङ्निदध्यात्प्राची हि देवानां दिगथोऽउदगुदीची हि मनुष्याणां दिगयं वै पवित्रं योऽयं पवते सोऽयमिमांल्लोकांस्तिर्यङ्ङनुपवते तस्मादुदङ्निदध्यात् ॥ १२ ॥ तद्यथैवादः ।

१. मा. सं. १. १. २. मा सं. १. १. ३. मा. सं. १. १.
४. मा. सं. १. १. ५. मा. सं. १. १. ६. मा. सं. १ .२.
७. मा. सं. १. २. ८. मा. सं. १. २. ९. मा. सं. १. २.
१०. मा. सं. १. २.

सोमꣳ राजानं पवित्रेण सम्पावयन्त्येवमेवैतत्सम्पावयत्युदीचीनदशं वै तत्पवित्रं भवति येन तत्सोमꣳ राजानꣳ सम्पावयन्ति तस्मादुदङ्ङ्निदध्यात् ॥१३॥ तन्निदधाति । "[1]व्वसोः पवित्रमसी"ति यज्ञो वै व्वसुस्तस्मादाह व्वसोः पवित्रमसीति "[2]शतधारꣳ सहस्रधारमि"त्युपस्तौत्येवैनदेतन्महयत्येव यदाह शतधारꣳ सहस्रधारमिति ॥१४॥ अथ व्वाचंयमो भवति । आ तिसृणां दोग्धोर्व्वाग्वै यज्ञोऽविक्षुब्धो यज्ञं तनवाऽइति ॥ १५ ॥ तदानीयमानमभिमन्त्रयते । "[3]देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वे"ति तद्यथैवादः सोमꣳ राजानं पवित्रेण सम्पावयन्त्येवमेवैतत्सम्पावयति ॥१६॥ अथाह "[4]कामधुक्ष" ऽइति । अमूमिति "सा व्विश्वायुरि"त्यथ द्वितीयां पृच्छति कामधुक्ष ऽइत्यमूमिति "सा [5]व्विश्वकर्मे"त्यथ तृतीयां पृच्छति कामधुक्षऽइत्यमूमिति "सा[6] व्विश्वधाया ऽइति तद्यत्पृच्छति व्वीर्य्याण्येवास्वेतद्दधाति तिस्रो दोग्धि त्रयो वाऽइमे लोका ऽएभ्य ऽएवैनदेतल्लोकेभ्यः सम्भरत्यथ कामं व्वदति ॥ १७ ॥ अथोत्तमां दोहयित्वा । येन दोहयति पात्रेण तस्मिन्नुदस्तोकमानीय पल्यङ्ग्य प्रत्यानयति यदत्र पयसोऽहायि तदिहाप्यसदिति रसस्यो वैव सर्वत्वायेदꣳ हि यदा व्वर्षत्यथौषधयो जायन्तऽओषधीर्ज्जग्ध्वापः पीत्वा तत ऽएष रसः सम्भवति तस्मादु रसस्यो वैव सर्वत्वाय तदुद्वास्यातनक्ति तीव्रीकरोत्येवैनदेतत्तस्मादुद्वास्यातनक्ति ॥ १८ ॥ स [7]आतनक्ति । "[8]इन्द्रस्य त्वा भागꣳ सोमेनातनच्मी"ति तद्यथैवादो देवतायै हविर्गृह्णन्नादिशत्येवमेवैतद्देवताया ऽआदिशति यदाहेन्द्रस्य त्वा भागमिति सोमेनातनच्मीति स्वदयत्येवैनदेतद्देवेभ्यः ॥ १९ ॥ अथोदकवतोत्तानेन पात्रेणापिदधाति । नेदेनदुपरिष्टान्नाष्ट्रा रक्षाꣳस्यवमृशानिति

---

१. मा. सं. १. ३. २. मा. सं. १. ३. ३. मा. सं. १ ३.
४. मा. सं. १. ३. ५. मा. सं. १. ४. ६. मा. सं. १. ४.
७. आतनक्तीति. क. ग. पु. ८. मा. सं. १. ४.

व्वज्रो वाऽआपस्तद्वज्रेणैवैतन्नाष्ट्रा रक्षाᳬंस्यतोऽपहन्ति तस्मादुदकुव-तोत्तानेन पात्रेणापिदधाति ॥२०॥ सोऽपिदधाति । व्विष्णो[1] हव्यᳬं रक्षे"ति यज्ञो वै व्विष्णुस्तद्यज्ञायैवैतद्धविः परिददाति गुप्त्यै तस्मादाह व्विष्णो हव्यᳬं रक्षेति ॥ २१ ॥ Cf. का. श. २. ६. ३, तै. ब्रा. ३. २. ३, मै. सं. ४. १. ३, का. सं. ३१. २, कपि. सं. ४७. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥

१. ५. ५.

ऋणᳬं[2] ह वै जायते योऽस्ति । स जायमान ऽएव देवेभ्यऽ ऋषिभ्यः पितृभ्यो मनुष्येभ्यः ॥ १ ॥ स यदेव यजेत । तेन देवेभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोति यदेनान्यजते यदेभ्यो जुहोति॥२॥ अथ यदेवानु[3]ब्रुवीत । तेनर्षिभ्यऽ ऋणं जायते तद्ध्येभ्य ऽएतत्करोत्यृषीणान्निधिगोप ऽइति ह्यनूचानमाहुः[4] ॥ ३ ॥ अथ यदेव प्रजामिच्छेत । तेन पितृभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोति यदेषाᳬं सन्तताव्यवच्छिन्ना प्रजा भवति ॥ ४ ॥ अथ यदेव व्वासयेत । तेन मनुष्येभ्य ऽऋणं जायते तद्ध्येभ्य ऽएतत्करोति यदेनान्वासयते यदेभ्योऽशनं ददाति स य ऽएतानि सर्वाणि करोति स कृतकर्म्मा तस्य सर्व्वमाप्तᳬं सर्व्वं जितम्[4] ॥५॥ स येन देवेभ्य ऽऋणं जायते । तदेनांस्तदवदयते यद्यजतेऽथ यदग्नौ जुहोति तदेनांस्तदवदयते तस्माद्यत्किञ्चाग्नौ जुह्वति तदवदानं नाम ॥ ६ ॥ तद्वै चतुरवत्तं भवति । इदं वाऽअनुवाक्याथ याज्याथ व्वषट्कारोऽथ सा देवता चतुर्थी यस्यै देवतायै हविर्भवत्येवᳬं हि देवताऽअवदानान्यन्वायत्ताऽअव-

---

१. मा. सं. १. ४. २. See. तै. ६. ३. १०. ५.
३. अनुब्रुवीत् इति. ग. पु. ४. माहुः इति. ग. पु. ४. जितᳬंइति. ग. पु.

दानानि वा देवता ऽअन्वायत्तान्यतिरिक्तॐ ह तदवदानं यत्पञ्चमं कस्माऽउ हि तदवद्येत्तस्माच्चतुरवत्तं भवति ॥ ७ ॥ उतो पञ्चावत्तमेव भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्सरस्यैषो पञ्चावत्तस्य सम्पद्बहुर्हैव प्रजया पशुभिर्भवति यस्यैवं व्विदुषः पञ्चावत्तं क्रियतऽएतद्ध न्वेव प्रज्ञातं कौरुपाञ्चालं यच्चतुरवत्तं तस्माच्चतुरवत्तं भवति ॥ ८ ॥ स वै यावन्मात्रमिवैवावद्येत् । मानुषॐ ह कुर्य्याद्यन्महदवद्येद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्माद्यावन्मात्रमिवैवावद्येत् ॥ ९ ॥ सऽआज्यस्योपस्तीर्य । द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति द्वे वाऽआहुती सोमाहुतिरेवान्याज्याहुतिरन्या तत ऽएषा केवली यत्सोमाहुतिरथैषाज्याहुतिर्यद्धविर्यज्ञो यत्पशुस्तदाज्यमेवैतत्करोति तस्मादुभयत ऽआज्यं भवत्येतद्वै जुष्टं देवानां यदाज्यं तज्जुष्टमेवैतद्देवेभ्यः करोति तस्मादुभयत ऽआज्यं भवति ॥१०॥ असौ वाऽअनुवाक्येयं याज्या । तेऽउभे योषे तयोर्मिथुनमस्ति व्वषट्कारऽएव तद्वाऽएषऽएव व्वषट्कारो यऽएष तपति सऽउद्यन्नेवामूमधिद्रवत्यस्तं यन्निमाममधिद्रवति तदेतेन व्वृष्णेमां प्रजातिं प्रजायेते यैनयोरियं प्रजातिः ॥११॥ सोऽनुवाक्यामनूच्य । याज्यामनुद्रुत्य पश्चाद्वषट्करोति पश्चाद्वै परीत्य व्वृषा योषामधिद्रवति तदेतेऽउभे पुरस्तात्कृत्वा व्वृष्णा व्वषट्कारेणाधिद्रावयति तस्मादु सह वैव व्वषट्कारेण जुहुयाद्वषट्कृते वा ॥ १२ ॥ देवपात्रं वाऽएष यद्वषट्कारः । तद्यथा पात्रऽउद्धृत्य प्रयच्छेदेवं तदथ यत्पुरा व्वषट्काराज्जुहुयाद्यथाधो भूमौ निदिग्धं तदमुया स्यादेवं तत्तस्मादु सह वैव व्वषट्कारेण जुहुयाद्वषट्कृते वा ॥ १३ ॥ ( [1]शतम् ६०० )॥ तद्यथा योनौ रेतः सिञ्चेत् । एवं तदथ यत्पुरा व्वषट्काराज्जुहुयाद्यथा योनौ रेतः सिक्तं तदमुया स्यादेवं तत्तस्मादु सह वैव व्वषट्कारेण जुहुयाद्वषट्कृते वा ॥१४॥

१. आदितःकण्डिकानां संख्येयम् ।

असौ वाऽअनुवाक्येयं याज्या । सा वै गायत्रीयं त्रिष्टुबसौ स वै गायत्रीमन्वाह तदमूमनुब्रुवन्नसौ ह्यनुवाक्येमामन्वाहेयꣳ हि गायत्री ॥ १५ ॥ अथ त्रिष्टुभा यजति । तदनया यजन्नियꣳ हि याज्यामुष्याऽअधि व्वषट्करोत्यसाऽउ हि त्रिष्टुप्तदेने सयुजौ करोति तस्मादिमे सम्भुञ्जातेऽअनयोरनु सम्भोगमिमाः सर्वाः प्रजा ऽअनु सम्भुञ्जते ॥ १६ ॥ स वाऽअङ्खयन्निवैवानुवाक्यामनुब्रूयात् । असौ ह्यनुवाक्या बृहद्ध्यसौ बार्हतꣳ हि तद्रूपं क्षिप्रऽएव याज्यया त्वरेतेयꣳ हि याज्या रथन्तरꣳ हीयꣳ राथन्तरꣳ हि तद्रूपꣳ ह्वयति वाऽअनुवाक्यया प्रयच्छति याज्यया तस्मादनुवाक्यायै रूपꣳहुवे हुवामहऽआगच्छेदं बर्हिः सीदेति यद्ध्वयति हि तया प्रयच्छति याज्यया तस्माद्याज्यायै रूपं व्वीहि हविर्जुषस्व हविराब्वृषाय स्वाद्धि पिब प्रेति यत्प्र हि तया यच्छति ॥ १७ ॥ सा या पुरस्ताल्लक्षणा । सानुवाक्या स्यादसौ ह्यनुवाक्या तस्या ऽअमुष्याऽ अवस्ताल्लक्ष्म चन्द्रमा नक्षत्राणि सूर्य्यः[1] ॥ १८ ॥ अथ योपरिष्टाल्लक्षणा । सा याज्या स्यादियꣳ हि याज्या तस्या ऽअस्या ऽउपरिष्टाल्लक्ष्मौषधयो व्वनस्पतय ऽआपोऽग्निरिमाः प्रजाः[2] ॥१९॥ सा ह न्वेव समृद्धानुवाक्या । यस्यै प्रथमात्पदाद्देवतामभिव्याहरति सोऽएव समृद्धा याज्या यस्याऽउत्तमात् पदाद्देवतायाऽधि व्वषट्करोति व्वीर्य्यं वै देवतर्चस्तदुभयत ऽएवैतद्वीर्य्येण परिगृह्य यस्यै दवतायै हविर्भवति तस्यै प्रयच्छति ॥ २० ॥ स वै व्वागिति करोति । व्वाग्वै व्वषट्कारो व्वाग्रेतो रेतऽएवैतत्सिञ्चति षडित्यृतवो वै षट् तदृतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्मादेवं व्वषट्करोति ॥ २१ ॥ देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुरेतावेवार्धमासौ यऽएवापूर्य्यते

---

१. सूर्य्य इति. क. गु. पु.   २. प्रजा इति. क. पु.

तं देवा ऽउपायन्यो ऽपक्षीयुते तमसुराः ॥ २२ ॥ ते देवा ऽअकामयन्त । कथं न्विममपि संवृञ्जीमहि यो ऽयमसुराणामिति ते ऽर्चन्तः श्राम्यन्तश्चेरुस्त ऽएत ँ हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासौ ताभ्यामयजन्त ताभ्यामिष्ट्वैतमपि समवृञ्जत ॥ २३ ॥ य ऽएषो ऽसुराणामासीत् । यदा वा ऽएता ऽउभौ परिप्लवेते ऽअथ मासो भवति मासशः संवत्सरः सर्व्वं वै संव्वत्सरः सर्व्वमेव तद्देवा ऽअसुराणा ँ समवृञ्जत सर्वस्मात्सपत्नानसुरान्निरभजन्त्सर्वं स्वेवैष ऽएतत्सपत्नाना ँ संवृङ्क्ते सर्वस्मात्सपत्नान्निर्भजाति य ऽएवमेतद्वेद ॥२४॥ स यो देवानामासीत् । स यवा युवत हि तेन देवा यो ऽसुराणा ँ सो ऽयवा न हि तेनासुरा ऽअयुवत ॥२५॥ अथो ऽइतरथाहुः । य ऽएव देवानामासीत्सो ऽयवा न हि तमसुरा ऽअयुवत यो ऽसुराणा ँ स यवा युवत हि तं देवाः सब्दमुहः सगरा रात्रिर्यव्या मासाः सुमेकः संव्वत्सरः स्वेको ह वै नामैतद्यत्सुमेक ऽइति यवा च हि वा ऽअयवा यवेतविाथ येनैतेषा ँ होता भवति तद्यावहोत्रमित्याचक्षते ॥२६॥ Cf. का. श. २. ६. ४.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे

प्रथमकाण्डे पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥

पञ्चमः प्रपाठकस्समाप्तः ॥

कांडिकासंख्या ॥ १२१ ॥



यज्ञेन वै देवाः । दिवमुपोदक्रामन्नथ योऽयं देवः पशूनामीष्टे सऽइहाहीयत तस्माद्वास्तव्य ऽइत्याहुर्व्वास्तौ हि तदहीयत ॥ १ ॥ स येनैव देवा दिवमुपोदक्रामन् । तेनोऽएवार्च्चन्तः श्राम्यन्तश्चेरुरथ योऽयं देवः पशूनामीष्टे यऽइहाहीयत ॥ २ ॥ सऽऐक्षत । अहास्यहान्तर्यन्त्यु मा यज्ञादिति सोऽनूच्चक्राम सऽआयतयोत्तरत ऽउपोत्पेदे स[2] ऽएष स्विष्टकृतः कालः[3] ॥ ३ ॥ ते देवाऽअब्रुवन् । मा विस्रक्षीरिति ते वै मा यज्ञान्मान्तर्गताहुतिं मे कल्पयतेति तथेति स समवृहत्स नास्यत्स न कं चनाहिनत् ॥ ४ ॥ ते देवा ऽअब्रुवन् । यावन्ति नो हवीꣳषि गृहीतान्यभूवन्त्सर्वेषां तेषाꣳ हुतमुपजानीत यथास्माऽआहुतिं कल्पयामेति ॥ ५ ॥ तेऽध्वर्युमब्रुवन् । यथापूर्वꣳ हवीꣳष्यभिघारयैकस्माऽअवदानाय पुनराप्याययायातयामानि कुरुत त ऽएकैकमवदानमवद्येति ॥६॥ सोऽध्वर्युः । यथापूर्वꣳ हवीꣳष्यभ्यघारयदेकस्माऽअवदानाय पुनराप्याययदयातयामान्यकरोत्तत ऽएकैकमवदानमवाद्यत्तस्माद्वास्तव्य ऽइत्याहुर्वास्तु हि तद्यज्ञस्य यद्धुतेषु हविष्षु तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते सर्व्वत्रैव स्विष्टकृदन्वाभक्तः सर्व्वत्र ह्येवैनं देवा ऽअन्वाभजन् ॥७॥ तद्वाऽअग्नयऽइति क्रियते । अग्निर्वै स देवस्तस्यैतानि नामानि शर्वऽइति यथा प्राच्याऽआचक्षते भवऽइति यथा बाहीकाः पशूनां पती रुद्रोऽग्निरिति तान्यस्याशान्तान्येवेतराणि नामान्यग्निरित्येव शान्ततमं तस्मादग्नयऽइति क्रियते स्विष्टकृतऽइति ॥ ८ ॥ ते होचुः । यत्त्वय्यमुत्र सत्ययक्ष्महि तन्नः स्विष्टं कुर्व्विति तदेभ्यः स्विष्टमकरोत्तस्मात्स्विष्टकृतऽइति[4] ॥ ९ ॥ सोऽनुवाक्यामनूच्य सम्पश्यति । ये तथा-

---

१. देवाः इति. क. पु. २. यऽएष इति. क. ख. पु.

३. कालः इति क. पु. ४. इति इति. क. ग. पु.

ग्निꣳ स्विष्टकृतं "मयाडग्निरग्नेः प्रिया धामानी"ति तदाग्नेयमाज्यभागमाह "यादसोमस्य प्रिया धामानी"ति तत्सौम्यमाज्यभागमाह "याडग्नेः प्रिया धामानी"ति तद्य ऽएषऽउभयत्राच्युतऽआग्नेयः पुरोडाशो भवति तमाह ॥ १० ॥ अथ यथादेवतम्[2] । "अयाड्देवानामाज्यपानां प्रिया धामानी"ति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवाऽआज्यपा "यक्षदग्नेर्होतुः प्रिया धामानी"ति तदग्निꣳहोतारमाह तदस्माऽएतां देवाऽआहुतिं कल्पयित्वाथैनेनैतद्भूयः समशाम्यन् प्रियऽएनं धामन्नुपाह्वयन्त तस्मादेवꣳ सम्पश्यति ॥ ११ ॥ तद्धैके । देवतां पूर्वां कुर्वन्त्ययाट्कारादग्नेरयाट्सोमस्यायाडिति तदु तथा न कुर्य्याद्विलोम ह ते यज्ञे कुर्व्वन्ति ये देवतां पूर्व्वां कुर्व्वन्त्ययाट्कारादिदꣳ हि प्रथममभिव्याहरन्नयाट्कारमेवाभिव्याहरति तस्मादयाट्कारमेव पूर्वं कुर्यात् ॥ १२ ॥ "यक्षत्स्वं महिमान"मिति । यत्र वाऽअदो देवताऽआवाहयति तदपि स्वं महिमानमावाहयति तदतः प्राङ्नैव किं चन स्वाय महिम्नऽइति क्रियते तदत्र तं प्रीणाति तथो हास्यैषोऽमोघायावाहितो भवति तस्मादाह यक्षत्स्वं महिमानमिति[3] ॥ १३ ॥ "आ यजतामेज्याऽइष"ऽइति । प्रजा वाऽइषस्ताऽएवैतद्यायजूकाः करोति ताऽइमाः प्रजा यजमानाऽअर्चन्त्यः श्राम्यन्त्यश्चरन्ति ॥ १४ ॥ "सोऽअध्वरा जातवेदा जुषताꣳ हवि"रिति । तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाह जुषताꣳ हविरिति ॥ १५ ॥ तद्यदेतेऽअत्र । याज्यानुवाक्ये ऽअवक्लृप्ततमे भवतस्तृतीयसवनं वै स्विष्टकृद्वैश्वदेवं वै तृतीयसवनं "पिप्रीहि देवां २॥ ऽउशतो यविष्ठे"ति तदनुवाक्यायै वैश्वदेव"मग्ने यदद्य विशोऽअध्वरस्य होत"

---

१. 'अयाडग्निरग्नेः' इत्यारभ्य जुषतां हविः' इत्यन्तो भागः "पि प्री हि देवान्" "अग्ने यदद्य" इत्यृचौ च तैत्तिरीयब्राह्मणे ३. ५. ६. द्रष्टव्याः ।

२. देवतम् इति क. पु. ३. महिमानमिति इति क. पु.

रिति तद्याज्यायै व्वैश्वदेवं तद्यदेते॒ऽएव॒ꣳ रूपे भवतस्तेनोऽएते तृतीयसवनस्य रूपं तस्माद्वाऽएतेऽअत्र याज्यानुवाक्येऽ अवक्लृप्ततमे भवतः ॥ १६ ॥ ते वै त्रिष्टुभौ भवतः। व्वास्तु वा ऽ एतद्यज्ञस्य यत्स्विष्टकृद्वीर्य्यं वै व्वास्त्विन्द्रियं व्वीर्यं त्रिष्टुबिन्द्रियमेवैतद्वीर्यं व्वास्तौ स्विष्टकृति दधाति तस्मात्त्रिष्टुभौ भवतः ॥ १७ ॥ उतो ऽ अनुष्टुभावेव भवतः। व्वास्त्वनुष्टुब्वास्तु स्विष्टकृद्वास्तावेवैतद्वास्तु दधाति पेसुकं वै व्वास्तु पिस्यति ह प्रजया पशुभिर्यस्यैवं व्विदुषोऽनुष्टुभौ भवतः ॥ १८ ॥ तदु[1] ह भाल्लवेयः। अनुष्टुभमनुवाक्यां चक्रे त्रिष्टुभं याज्यामेतदुभयं परिगृह्णामीति स रथात्पपात स पतित्वा बाहुमपिशश्रे स परिममृशे यत्किमकरं तस्मादिदमापदिति[2] स हैतदेव मेने यद्विलोम यज्ञेऽकरमिति तस्मान्न विलोम कुर्य्यात्सच्छन्दसावेव स्यातामुभे वैवानुष्टुभाऽउभे वा त्रिष्टुभौ ॥ १९ ॥ स वा ऽ उत्तरार्धादवद्यति। उत्तरार्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्धादवद्यत्युत्तरार्धे जुहोत्येतस्यै वै[3] दिशऽउदपद्यत तं ततऽएवाशमयंस्तस्मादुत्तरार्धादवद्यत्युत्तरार्धे जुहोति ॥ २० ॥ स वा ऽ अभ्यर्धऽ इवेतराभ्य ऽआहुतिभ्यो जुहोति। इतराऽआहुतीः पशवो वाऽनुप्रजायन्ते रुद्रियः स्विष्टकृद्रुद्रियेण ह[4] पशून् प्रसजेद्यदितराभिराहुतिभिस्सꣳसृजेत्तेऽस्य गृहाः पशवऽउपमूर्य्यमाणाऽईयुस्तस्मादभ्यर्धऽइवेतराभ्यऽआहुतिभ्यो जुहोति ॥ २१ ॥ एष वै स यज्ञः। येन तद्देवा दिवमुपोदक्रामन्नेषऽआहवनीयोऽथ यऽइहाहीयत स गार्हपत्यस्तस्मादेतं गार्हपत्यात्प्राञ्चमुद्धरन्ति ॥ २२ ॥ तं वाऽअष्टासु व्विक्रमेष्वादधीत। अष्टाक्षरा वै गायत्री गायत्र्यैवैतद्दिवमुपोत्क्रामति ॥२३॥ एकादशस्वादधीत। एकादशाक्षरा वै त्रिष्टुप्त्रिष्टुभैवैतद्दिवमुपोत्क्रामति ॥ २४ ॥ द्वादशस्वादधीत। द्वादशाक्षरा वै जगती जगत्यैवै-

---

१. तदुहेति. क. ग. पु. २. मापदीति. इति .ख पु.
३. वै दिश. इति. क. ग. पु. ४. ह इति नाऽस्ति क. ग. पुस्तकयोः

तद्दिवमुपोत्क्रामति नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येत तदा-
दधीत स यद्वाऽअप्यल्पकमिव प्राञ्चमुद्धराति तेनैव दिवमुपोत्क्रा-
मति ॥ २५ ॥ तदाहुः । आहवनीये हवीꣳषि श्रपयेयुरतो वै देवा
दिवमुपोदक्रामंस्तेनोऽएवार्चन्तः श्राम्यन्तश्चेरुस्तस्मिन्हवीꣳषि श्रप-
याम तस्मिन्यज्ञं तनवामहाऽ इत्यपस्खलऽइव ह स हविषां यद्गा-
र्हपत्ये श्रपयेयुर्यज्ञऽआहवनीयो यज्ञे यज्ञं तनवामहाऽइति ॥ २६ ॥
[1]उतो गार्हपत्यऽएव श्रपयन्ति। आहवनीयो वाऽएष न वाऽएष तस्मै
यदस्मिन्नश्रृतꣳ श्रपयेयुस्तस्मै वाऽएष यदस्मिञ्छृतं जुहुयुरित्यतो
यतरथा कामयेत तथा कुर्यात् ॥ २७ ॥ स हैष यज्ञ ऽउवाच ।
नग्नताया वै बिभेमीति का तेऽनग्नतेत्यभितऽएव मा परिस्तृणीयु-
रिति तस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति का
ते तृप्तिरिति ब्राह्मणस्यैव तृप्तिमनुतृप्येयमिति तस्मात्सꣳस्थिते यज्ञे
ब्राह्मणं तर्प्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्प्पयति ॥२८॥ Cf.का. श. २.७.१.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे षष्ठप्रपाठके प्रथमं ब्राह्मणम् ॥

१. ६. २.

प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ । दिवं वोषसं वा मिथु-
न्येनया स्यामिति ताꣳ सम्बभूव ॥ १ ॥ तद्वै देवानामागऽआस ।
यऽइत्थꣳ स्वां दुहितरमस्माकꣳ स्वसारं करोतीति ॥ २ ॥ ते ह
देवा ऽऊचुः । योऽयं देवः पशूनामीष्टेऽतिसन्धं वा ऽ अयं चरति
यऽइत्थꣳ स्वां दुहितरमस्माकꣳ स्वसारं करोति विध्येममिति तꣳ
रुद्रोऽभ्यायत्य विव्याध तस्य सामि रेतः प्रचस्कन्द तथेन्नूनं तदास
॥ ३ ॥ तस्मादेतदृषिणाभ्यनूक्तम् । पिता यत्स्वां दुहितरमधिष्कन्

१. उतो इति. क. ग. पु.

क्ष्मया रेतः सञ्जग्मानो निषिञ्चदिति तदाग्निमारुतमित्युक्थं तस्मिंस्त-द्व्याख्यायते यथा तद्देवा रेतः प्राजनयंस्तेषां यदा देवानां क्रोधो व्यैदथ प्रजापतिमभिषज्यंस्तस्य तꣳ शल्यं निरकृन्तन्त्स वै यज्ञ ऽएव प्रजापतिः ॥४॥ ते होचुः । उपजानीत यथेदं नामुयासत् कनीयो ह्या-हुतेर्यथेदꣳ स्यादिति ॥५॥ ते होचुः । भगायैनद्दक्षिणत ऽआसीनाय परिहरत तद्भगः प्राशिष्यति तद्यथाहुतमेवं भविष्यतीति तद्भगाय दक्षिणत ऽआसीनाय पर्याजह्रुस्तद्भगो ऽवेक्षां चक्रे तस्याक्षिणी निर्ददाह तथेन्नूनं तदास तस्मादाहुरन्धो भग ऽइति ॥ ६ ॥ ते होचुः । नो न्वेवात्राशमत्पूष्ण ऽएनत्परिहरतेति तत्पूष्णे पर्याजह्रुस्तत्पूषा प्राश तस्य दतो निर्जघान तथेन्नूनं तदास तस्मादाहुरदन्तकः पूषेति तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति यथादन्तकायैवम् ॥७॥ ते होचुः । नो न्वेवात्राशमद्बृहस्पतय ऽएनत्परिहरतेति तद्बृहस्पतये पर्याजह्रुः स बृहस्पतिः सवितारमेव प्रसवायोपाधावत्स-विता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रासुवत्तदेनꣳ सवितृप्रसूतं नाहिनत्ततो ऽर्वाचीनꣳ शान्तं तदेतन्नि-दानेन यत्प्राशित्रम् ॥ ८ ॥ स यत्प्राशित्रमवद्यति । यदेवात्राविद्धं यज्ञस्य यद्रुद्रियं तदेवैतान्निर्मिमीते ऽथाप ऽउपस्पृशति शान्तिरापस्त दद्भिः शमयत्यथेडां पशून्त्समवद्यति ॥ ९ ॥ स वै यावन्मात्रमिवै-वावद्येत् । तथा शल्यः प्रच्यवते तस्माद्यावन्मात्रमिवैवावद्येदन्यतरत ऽ आज्यं कुर्य्यादधस्ताद्वोपरिष्टाद्वा तथा स्वदन्निस्सरणवद्भवति तथा निस्रवति तस्मादन्यतरत ऽआज्यं कुर्यादधस्ताद्वोपरिष्टाद्वा ॥ १० ॥ स ऽआज्यस्योपस्तीर्य । द्विर्हविषो ऽवदायाथोपरिष्टादाज्यस्याभिघार-यति तद्यथैव यज्ञस्यावदानमेवमेव तत् ॥११॥ तन्न पूर्वेण परिहरेत् ।

---

१. पर्याजहुरिति. ख. पु. २. होचुरिति. क. पु. ३. अदन्तकायैवमिति. क. पु.
४. होचुरिति क. पु. ५. प्राशित्रमिति. क. पु. ६. तत् इति. क. पु.

पूर्व्वेण हैके परिहरन्ति पुरस्ताद्धै प्रत्यञ्चो यजमानं पशवऽउपतिष्ठन्ते रुद्रियेण ह पशून् प्रसजेद्यत्पूर्व्वेण परिहरेत्तेऽस्य गृह्याः पशवऽउपमूर्यमाणाऽईयुस्तस्मादित्येव तिर्यक्प्रजिहीत तथा ह रुद्रियेण पशून्न प्रसजति तिर्यगेवैनं निर्मिमीते ॥ १२ ॥ तत्प्रतिगृह्णाति। "देवस्य[१] त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामी"ति ॥ १३ ॥ तद्यथैवादो[२] बृहस्पतिः। सवितारं प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रासुवत्तदेनꣳ सवितृप्रसूतं नाहिनदेवमेवैष ऽएतत्सवितारमेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुवेति तदस्मै सविता प्रसविता प्रसौति तदेनꣳ सवितृप्रसूतं न हिनस्ति ॥ १४ ॥ तत्प्राश्नाति। "अग्नेष्ट्वास्येन[३] प्राश्नामी"ति न वाऽअग्निं किंचन हिनस्ति तथो हैनमेतन्न हिनस्ति ॥ १५ ॥ तन्न दद्भिः खादेत्। नेन्मऽइदꣳ रुद्रियं दतो हिनसदिति तस्मान्न दद्भिः खादेत् ॥ १६ ॥ अथापऽआचामति। शान्तिरापस्तदद्भिः शान्त्या शमयतेऽथ परिक्षाल्य पात्रम् ॥ १७ ॥ अथास्मै ब्रह्मभागं पर्य्याहरन्ति। ब्रह्मा वै यज्ञस्य दक्षिणतऽआस्तेऽभिगोप्ता सऽएतं भागं प्रतिविदानऽआस्ते यत्प्राशित्रं तदस्मै पर्य्याहार्षुस्तत्प्राशीदथ यमस्मै ब्रह्मभागं पर्य्याहरन्ति तेन भागी स यदत ऽऊर्ध्वमसꣳस्थितं यज्ञस्य तदभिगोपायति तस्माद्वाऽअस्मै ब्रह्मभागं पर्य्याहरन्ति ॥ १८ ॥ स वै व्वाचंयमऽएव स्यात्। "ब्रह्मन् प्रस्थास्यामी"त्येतस्माद्धचसो व्विवृहन्ति वाऽएते यज्ञं क्षेण्वन्ति[४] ये मध्ये यज्ञस्य पाकयज्ञिययेडया चरन्ति ब्रह्मा वाऽऋत्विजां भिषक्तमस्तद्ब्रह्मा सन्दधाति न ह सन्दध्याद्यद्वावद्यमानऽआसीत तस्माद्वाचंयमऽएव स्यात् ॥ १९ ॥ स यदि पुरा मानुषीं व्वाचं व्याहरेत्। तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै व्विष्णु-

---

१. मा. सं. २. ११. २. तद्यथैवाद इति. क. ग. पु.

३. मा. सं. २. ११. ४. क्षण्वन्तीति. क. ग. पु.

स्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः ॥ २० ॥ स यत्राह "ब्रह्मन् प्रस्थास्यामी"ति तद्ब्रह्मा जपत्ये"तं ते देव सवितर्यज्ञं प्राहुरि"ति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता "बृहस्पतये ब्रह्मण"ऽइति बृहस्पतिर्वै देवानां ब्रह्मा तद्यऽएव देवानां ब्रह्मा तस्माऽएवैतत्प्राह तस्मादाह बृहस्पतये ब्रह्मणऽइति "तेन यज्ञमव तेन यज्ञपतिं तेन मामवे"ति नात्र तिरोहितमिवास्ति ॥२१॥ "मनो जूतिर्जुषतामाज्यस्ये"ति । मनसा वाऽइदᳪ सर्वमाप्तं तन्मनसैवैतत्सर्वमाप्नोति "बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञᳪ समिमं दधात्वि"ति यद्विवृढं तत्सन्दधाति "विश्वे देवास ऽइह मादयन्ता"मिति सर्व्वे वै विश्वे देवाः सर्वैर्णैवैतत्सन्दधाति स यदि कामयेत ब्रूयात् "प्रतिष्ठे"ति यद्यु कामयेतापि नाद्रियेत ॥ २२ ॥ Cf. का. श. २. ७. २, तै. सं. २. ६. ८.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे षष्ठप्रपाठके द्वितीयं ब्राह्मणम् ॥
( इति सप्तमोऽध्यायः )

## १. ६. ३.

मनवे ह वै प्रातः । अवनेग्यमुदकमाजह्रुर्यथेदं पाणिभ्यामवनेजनायाहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणीऽआपेदे ॥ १ ॥ स हास्मै व्वाचमुवाद । बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघऽइमाः सर्व्वाः प्रजा निर्व्वोढा ततस्त्वा पारयितास्मीति कथं ते भृतिरिति ॥ २ ॥ स होवाच । यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्यऽएव मत्स्यं गिलति कुम्भ्यां माग्रे

---

१. मा. सं. २. १२.   २. मा. सं. २. १२.   ३. मा. सं. २. १२.
४. मा. सं. २. १३.   ५. मा. सं. २. १३.   ६. मा. सं. २. १३.
७. मा. सं. २. १३.   ८. प्रातः इति. क. ग. पु.

बिभरासि स यदा तामतिवर्धाऽअथ कर्षूं खात्वा तस्यां मा बिभरासि सं यदा तामतिव्वर्धाऽअथ मा समुद्रमभ्यवहरासि तर्हि वाऽअतिनाष्ट्रो भवितास्मीति ॥३॥ शश्वद्ध झषऽआस । स हि ज्येष्ठं व्वर्धतेऽथेतिथीᳬं समां तदौघ ऽआगन्ता तन्मा नावमुपकल्प्योपासासै सऽऔघऽउत्थिते नावमापद्यासै ततस्त्वा पारयितास्मीति ॥ ४ ॥ तमेवं भृत्वा समुद्रमभ्यवजहार । स यतिथीं तत्समां परिदिदेश ततिथीᳬं समां नावमुपकल्प्योपासां चक्रे सऽ औघऽउत्थिते नावमापेदे तᳬं स मत्स्यऽउपन्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमतिदुद्राव ॥५॥ स होवाच । अपीपरं वै त्वा व्वृक्षे नावं प्रतिबध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावद्यावदुदकᳬं समवायात्तावत्तावदन्ववसर्पासीति स ह तावत्तावदेवान्ववससर्प्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्प्पणमित्यौघो ह ताः सर्व्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे ॥ ६ ॥

( अर्धप्रपाठकः ५६ )

सोऽर्चंच्छ्राम्यंश्चचार प्रजाकामः । तत्रापि पाकयज्ञेनेजे स घृतं दधि मस्त्वामिक्षामित्यप्सु जुहवांचकार ततः संवत्सरे योषित्सम्बभूव सा ह पिब्दमानेवोदेयाय तस्यै ह स्म घृतं पदे सन्तिष्ठते तया मित्रावरुणौ सञ्जग्माते ॥७॥ ताᳬं होचतुः कासीति । मनोर्दुहितेत्यावयोर्ब्रूष्वेति नेति होवाच यऽएव मामजीजनत तस्यैवाहमस्मीति तस्यामपि त्वमीषाते तद्वा जज्ञौ तद्वा न जज्ञावति त्वेवेयाय सा मनुमाजगाम ॥८॥ ताᳬं ह मनुरुवाच कासीति । तव दुहितेति कथं भगवति मम दुहितेति या ऽअमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मामजीजनथाः साशीरास्मि तां मा यज्ञेऽवकल्पय यज्ञे चेद्वै मावकल्पयिष्यासि बहुः प्रजया पशुभिर्भविष्यासि यामु मया कां चा-

---

१. स यदेति. ग. पु. २. होवाच अपीपरं इति. क. ग. पु.

शिषमाशासिष्यसे सा ते सर्व्वा समर्धिष्यत ऽ इति तामेतन्मध्ये यज्ञस्यावाकल्पयन्मध्यꣳ ह्येतद्यज्ञस्य यदन्तरा प्रयाजानुयाजान् ॥९॥ तयार्च्चंछ्राम्यंश्चचार प्रजाकामः । तयेमां प्रजातिं प्रजज्ञे येयं मनोः प्रजातिर्याम्वेनया कां चाशिषमाशास्त सास्मै सर्व्वा समार्ध्यत ॥१०॥ सैषा निदानेन यदिडा । स यो हैवं व्विद्वानिडया चरत्येताꣳ हैव प्रजातिं प्रजायते यां मनुः प्राजायत याम्वेनया कां चाशिषमाशास्ते सास्मै सर्व्वा समृध्यते ॥११॥ सा वै पञ्चावत्ता भवति । पशवो वाऽइडा पाङ्क्ता वै पशवस्तस्मात्पञ्चवत्ता भवति ॥१२॥ स समवदायेडाम् । पूर्व्वार्धे पुरोडाशस्य प्रशीर्य पुरस्ताद्ध्रुवायै निदधाति ताꣳ होत्रे प्रदाय दक्षिणात्येति ॥ १३ ॥ स होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते मनसस्पतिना ते हुतस्याश्नामीषे प्राणायेति ॥१४॥ अथ होतुरिह निलिम्पति । तद्धोतौष्ठयोर्निलिम्पते व्वाचस्पतिना ते हुतस्याश्नाम्यूर्ज्जऽउदानायेति ॥१५॥ एतद्ध वै मनुर्बिभयाञ्चकार । इदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै मऽइह रक्षाꣳसि यज्ञं न हिꣳस्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्यऽइत्येव प्रापयत तथोऽएवैनामेषऽएतत्पुरा रक्षोभ्यः पुरा रक्षोभ्यऽइत्येव प्रापयतेऽथ यत्प्रत्यक्षं न प्राश्नाति नेदनुपहूतां प्राश्नानीत्येतदेवैनां प्रापयते यदोष्ठयोर्निलिम्पते ॥ १६ ॥ अथ होतुः पाणौ समवद्यति । समवत्तामेव सतीं तदेनां प्रत्यक्षꣳ होतरि श्रयति तयात्मंच्छ्रितया होता यजमानायाशिषमाशास्ते तस्माद्धोतुः पाणौ समवद्यति ॥१७॥ अथोपाꣳशूपह्वयते । एतद्ध वै मनुर्बिभयां चकारेदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै मऽइह रक्षाꣳसि यज्ञं न हन्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्यऽइत्येवोपाꣳशूपाह्वयत तथोऽएवैनामेषऽएतत्पुरा रक्षोभ्यः पुरा रक्षोभ्यऽइत्येवोपाꣳशूपह्वयते॥१८॥ स ऽउपह्वयते। उपहूतꣳ रथन्तरꣳ सह पृथिव्योप माꣳ रथन्तरꣳ सह पृथिव्या ह्वयतामुपहूतं व्वामदेव्यꣳ सहा-

न्तरिक्षेणोप मां व्वामदेव्यꣳ सहान्तरिक्षेण ह्वयतामुपहूतं बृहत्सह दिवोप मां बृहत्सह दिवा ह्वयतामिति तदेतामेवैतदुपह्वयमानऽइमांश्च लोकानुपह्वयतऽएतानि च सामानि ॥१९॥ उपहूता गावः सहर्षभा-ऽइति । पशवो वाऽइडा तदेनां परोक्षमुपह्वयते सहर्षभाऽइति स मि-थुनामेवैनामेतदुपह्वयते ॥ २० ॥ उपहूता सप्तहोत्रेति । तदेनाꣳ सप्तहोत्रा सौम्येनाध्वरेणोपह्वयते ॥ २१ ॥ उपहूतेडा ततुरिति । तदेनां प्रत्यक्षमुपह्वयते ततुरिति सर्व्वꣳ ह्येषा पाप्मानं तरति तस्मादाह ततुरिरिति ॥ २२ ॥ उपहूतः सखा भक्षऽइति । प्राणो[1] वै सखा भक्षस्तत्प्राणमुपह्वयतऽउपहूतꣳ हेगिति तच्छरीरमुपह्वयते तत्सर्वामुपह्वयते ॥ २३ ॥ अथ प्रतिपद्यते । "इडोपहूतोपहूतेडो-पोऽअस्मां३॥ऽइडा ह्वयतामिडोपहूते"ति तदुपहूतामेवैनामेतत्सतीं प्रत्यक्षमुपह्वयते या वै सासीद्गौर्वै सासीच्चतुष्पदी वै गौस्तस्माच्च-तुरुपह्वयते ॥ २४ ॥ स वै चतुरुपह्वयमानः । अथ नानेवोपह्वयते-ऽजामितायै जामि ह कुर्याद्यदिडोपहूतेडोपहूतेत्येवोपह्वयेतोपहूते-डेति वेडोपहूतेति तदर्वाचीमुपह्वयतऽउपहूतेडेति तत्पराचीमुपोऽ-अस्मां३॥ऽइडा ह्वयतामिति तदात्मानं चैवैतन्नान्तरेत्यन्यथेव च भव-तीडोपहूतेति तत्पुनरर्वाचीमुपह्वयते तदर्वाचीं चैवैनामेतत्पराचीं चो-पह्वयते ॥२५॥ मानवी घृतपदीति । मनुर्ह्येतामग्रेऽजनयत तस्मादाह मानवीति घृतपदीति यदेवास्यै घृतं पदे समतिष्ठत तस्मादाह घृत-पदीति ॥ २६ ॥ उत मैत्रावरुणीति । यदेव मित्रावरुणाभ्याꣳ सम-गच्छत सऽएव मैत्रावरुणो न्यङ्गो "ब्रह्मा देवकृतोपहूते"ति ब्रह्मा ह्येषा[2] देवकृतोपहूतोपहूता "दैव्याऽअध्वर्यवऽउपहूता मनुष्या"ऽइति तद्दैवां-श्चैवैतदध्वर्यूनुपह्वयते ये च मानुषा व्वत्सा वै दैव्याऽअध्वर्यवोऽथ यऽइतरे ते मानुषाः ॥२७॥ "यऽइमं यज्ञमवान्ये च यज्ञपतिं व्वर्धा"-निति । एते वै यज्ञमवन्ति ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानाऽएते

१. प्राणो वै इति. क. पु. २. ह्येषां इति. क. ग. पु.

ह्येनं तन्वतऽएतऽएनं जनयन्ति तदु तेभ्यो निह्नुते व्वत्साऽउ वै यज्ञपतिं व्वर्धन्ति यस्य ह्येते भूयिष्ठा भवन्ति स हि यज्ञपतिर्व्वर्धते तस्मा दाह "ये च यज्ञपतिं व्वर्धानि"ति॥२८॥"उपहूते द्यावापृथिवी पूर्व्वजेऽऋतावरी देवी देवपुत्रे"ऽइति । तदिमे द्यावापृथिवीऽउपह्वयते ययोरिदꣳ सर्व्वमभ्युपहूतोऽयं यजमानऽइति तद्यजमानमुपह्वयते तद्यदत्र नाम न गृह्णाति परोऽक्षꣳ ह्यत्राशीर्यदिडायां मानुषꣳ ह कुर्याद्यन्नाम गृह्णीयादृध्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेदृध्यृद्धं यज्ञे करवाणीति तस्मान्न नाम गृह्णाति ॥ २९ ॥ उत्तरस्यां देवयज्यायामुपहूतऽइति । तदस्माऽएतज्जीवातुमेव परोक्षमाशास्ते जीवन् हि पूर्वमिष्ट्वाथाऽपरं यजते ॥ ३० ॥ तदस्मा ऽएतत्प्रजामेव परोक्षमाशास्ते । यस्य हि प्रजा भवत्यमुं लोकमात्मनैत्यथास्मिँल्लोके प्रजा यजते तस्मात्प्रजोत्तरा दे[1]वयज्या ॥ ३१ ॥ तदस्माऽएतत्पशूनेव परो क्षमाशास्ते । यस्य हि पशवो भवन्ति स पूर्व्वमिष्ट्वाथापरं यजते ॥ ३२ ॥ "भू[2]यासि हविष्करणऽउपहूत"ऽइति । तदस्माऽएतज्जीवातुमेव परोक्षमाशास्ते जीवन् हि पूर्वमिष्ट्वाथ भूयोभूयऽएव हविष्करोति ॥ ३३ ॥ तदस्माऽएतत्प्रजामेव परोक्षमाशास्ते । यस्य हि प्रजा भवत्येकऽआत्मना भवत्यथोत दशधा प्रजया हविष्क्रियते तस्मात्प्रजा भूयो हविष्करणम् ॥ ३४ ॥ तदस्माऽएतत्पशूनेव परोक्षमाशास्ते । यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाथ भूयो भूयऽएव ह[3]विष्करोति ॥ ३५ ॥ एषा वा ऽआशीः । "जीवेयं प्रजा मे स्याच्छ्रियं गच्छेयमि"ति तद्यत्पशूनाशास्ते तच्छ्रियमाशास्ते श्रीर्हि पशवस्तदेताभ्यामेवैतदाशीर्भ्याꣳ सर्व्वमाप्तं तस्माद्वाऽएतेऽअत्र द्वेऽआशिषौ क्रियेते ॥ ३६ ॥ "देवा मऽइदꣳ हविर्जुषन्तामि"ति । तास्मिन्नुपहूतऽइति त[4]द्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते

१. देवयज्या इति. ग. पु.      २. भूयसीति. क. पु.
३. हविष्करोति. क. ग. पु.      ४. तद्यज्ञस्यैवैतदिति. क. ग. पु.

तेन हि महज्जयति तस्मादाह जुषन्तामिति ॥ ३७ ॥ (शतम्[1] ७००)
तां वै प्राश्नन्त्येव । नाग्नौ जुह्वति पशवो वाऽइडा नेत्पशूनग्नौ प्रवृण-
जामेति तस्मान्नाग्नौ जुह्वति ॥ ३८ ॥ प्राणेष्वेव हूयते । होतरि त्वद्य-
जमाने त्वदध्वर्यौ त्वदथ यत्पूर्वार्धे पुरोडाशस्य प्रशीर्य पुरस्ताद्ध्रु-
वायै निदधाति यजमानो वै ध्रुवा तद्यजमानस्य प्राशितं भवत्यथ
यत्प्रत्यक्षं न प्राश्नाति नेदसꣳस्थिते यज्ञे प्राश्नानीत्येतदेवास्य प्रा-
शितं भवति सर्वे प्राश्नन्ति सर्वेषु मे हुतासदिति पञ्च प्राश्नन्ति
पशवो वाऽइडा पाङ्क्ता वै पशवस्तस्मात्पञ्च प्राश्नन्ति ॥३९॥ अथ
यत्र प्रतिपद्यते । तच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति तदत्र
पितॄणां भाजनेन चतस्रो वाऽअवान्तरदिशोऽवान्तरादिशो वै पितर-
स्तस्माच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति ॥४०॥ अथ यात्राहो-
पहूते द्यावापृथिवीऽइति । तदग्नीधऽआदधाति तदग्नीत्प्राश्नात्यु“प-
[2]हूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात् स्वाहोप-
हूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात् स्वाहे”ति द्यावापृ-
थिव्यो वाऽएष यदाग्नीध्रस्तस्मादेवं प्राश्नाति ॥४१॥ अथ यत्राशि-
षमाशास्ते । तज्जपति “[3]मयीदमिन्द्रऽइन्द्रियं[4] दधात्वस्मान् रायो मघ-
वानः सचन्ताम् । अस्माकꣳसन्त्वाशिषः सत्या नस्सन्त्वाशिष”ऽइत्या-
शिषामेवैष प्रतिग्रहस्तद्याऽएवात्रऽर्त्विजो यजमानायाशिषऽआशासते
ताऽएवैतत्प्रतिगृह्यात्मन् कुरुते ॥४२॥ अथ पवित्रयोर्मार्जयन्ते । पाक-
यज्ञिययेव[5] वाऽएतदिडयाचारिषुः पवित्रपूता यदतऽऊर्ध्वमसꣳस्थितं
यज्ञस्य तत्तनवामहाऽइति तस्मात्पवित्रयोर्मार्जयन्ते ॥ ४३ ॥ अथ ते
पवित्रे प्रस्तरेऽपिसृजति । यजमानो वै प्रस्तरः प्राणोदानौ पवित्रे यज-

---

१. आदितः कण्डिकानां संख्येयम् ।
२. मा. सं. २. १०, ११.
३. मा. सं. २. १०.
४. इन्द्रियमिति. क. ग. पु.
५. यज्ञिययेति. क. ग. पु.

माने तत्प्राणोदानौ दधाति तस्मात्ते पवित्रे प्रस्तरेऽपिसृजति ॥४४॥
का. श. २.७. ३, तै. सं. २. ६. ७.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे षष्ठप्रपाठके तृतीयं ब्राह्मणम् ॥

१. ६. ४.

ते वाऽएतेऽउल्मुकेऽउदूहन्ति । अनुयाजेभ्यो यातयामेव वाऽएतदग्निर्भवति देवेभ्यो हि यज्ञमूहिवान् भवत्ययातयाम्न्यनुयाजांस्तनवामहाऽइति तस्माद्वाऽएतेऽउल्मुकेऽउदूहन्ति ॥१॥ ते पुनरनुसꣳस्पर्शयन्ति । पुनरेवैतदग्निमाप्याययन्त्ययातयामानं कुर्वन्त्ययातयाम्नि यदतऽऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहाऽइति तस्मात्पुनरनुसꣳस्पर्शयन्ति ॥२॥ अथ समिधमभ्यादधाति । समिन्द्धऽएवैनमेतत्समिद्धे यदतऽऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहाऽइति तस्मात्समिधमभ्यादधाति ॥३॥ ताꣳ होताऽनुमन्त्रयते । "एषा तेऽअग्ने समित्तया व्वर्धस्व चा च प्यायस्व । व्वर्धिषीमहि च व्वयमा च प्यासिषीमही"ति तद्यथैवादः समिध्यमानायान्वाहैवमेवैतदन्वाह तदेतद्धोतुः कर्म स यदि मन्येत न होता व्वेदेत्यपि स्वयमेव यजमानोऽनुमन्त्रयेत॥४॥अथ सम्मार्ष्टि । युनक्त्येवैनमेतद्युक्तो यदत ऊर्ध्वमसꣳस्थितं यज्ञस्य तद्वहादिति तस्मात्सम्मार्ष्टि सकृत्सकृत्संमार्ष्टि त्रिस्त्रिर्वाऽअग्रे देवेभ्यः सम्मृजन्ति नेत्तथा करवाम यथा देवेभ्यऽइति तस्मात्सकृत्सकृत्सम्मार्ष्ट्यजामितायै जामि ह कुर्याद्यत्त्रिः पूर्वं त्रिरपरं तस्मात्सकृत्सकृत्सम्मार्ष्टि ॥५॥ स सम्मार्ष्टि । "अग्ने व्वाजजिद्वाजं त्वा सरिष्यन्तं व्वाजजितꣳ सम्मार्ज्मी"ति सरिष्यन्तमिति वाऽअग्रऽआह सरिष्यन्निव हि तर्हि भवत्यथात्र ससृवाꣳसमिति ससृवेव ह्यत्र भवति तस्मादाह ससृवाꣳसमिति ॥ ६ ॥ अथानुयाजान्यजति । या वाऽएतेन यज्ञेन देवता ह्वयति याभ्यऽएष यज्ञस्तायते सर्व्वा वै तत्ता

१. मा. सं. २. १४. २. मा. सं. २. १४.

ऽइष्ट्वा भवन्ति तद्यत्तासु सर्वास्विष्टास्वथैतत्पश्चेवानुयजति तस्माद-
नुयाजा नाम ॥७॥ अथ यदनुयाजान्यजति । छन्दाᳬंसि वाऽअनु-
याजाः पशवो वै देवानां छन्दाᳬंसि तद्यथेदं पशवो युक्ता मनुष्ये-
भ्यो वहन्त्येवं छन्दाᳬंसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र
छन्दाᳬंसि देवान्त्समतर्प्पयन्नथ छन्दाᳬंसि देवाः समतर्प्पयंस्तदत-
स्तत्प्रागभूद्यच्छन्दाᳬंसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्यद्देनान्त्समती
तृपन् ॥८॥ अथ यदनुयाजान्यजति । छन्दाᳬंसि वाऽअनुयाजाश्छ-
न्दाᳬंस्येवैतत्सन्तर्प्पयति तस्मादनुयाजान्यजति तस्माद्येन वाहनेन
धावयेत्तद्विमुच्य ब्रूयात्पाययतैनत्सुहितं कुरुतेत्येषऽउ वाहनस्या-
पह्नवः[2] ॥९॥ स वै खलु बर्हिः प्रथमं यजति । तद्धै कनिष्ठं छन्दः
सद्गायत्री प्रथमा छन्दसां युज्यते तदु तद्वीर्येणैव यच्छ्येनो
भूत्वा दिवः सोममाहरत्तदयथायथं मन्यन्ते यत्कनिष्ठं छन्दः
सद्गायत्री प्रथमा छन्दसां युज्यतेऽथात्र यथायथं देवाश्छन्दा-
ᳬंस्यकल्पयन्ननुयाजेषु नेत्यापवस्यसमसदिति ॥ १० ॥ स वै
खलु बर्हिः प्रथमं यजति । अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्ने-
वैतल्लोकऽओषधीर्दधाति ताऽइमाऽअस्मिंल्लोकऽओषधयः प्रतिष्ठिता-
स्तदिदᳬं सर्व्वं जगदस्यां तेनेयं जगती तज्जगतीं प्रथमामकुर्व्वन्॥११॥
अथ नराशᳬंसं द्वितीयं यजति। अन्तरिक्षं वै नराशᳬंसः प्रजा वै
नरस्ता ऽइमा ऽअन्तरिक्षमनु वावद्यमानाः प्रजाश्चरन्ति यद्धै वदति श-
ᳬंसतीति वै तदाहुस्तस्मादन्तरिक्षं नराशᳬंसोऽन्तरिक्षमु वै त्रिष्टुप्तत्त्रि-
ष्टुभं द्वितीयामकुर्व्वन्॥१२॥ अथाग्निरुत्तमः । गायत्री वाऽअग्निस्तद्गा-
यत्रीमुत्तमामकुर्व्वन्नेवं यथायथेन क्लृप्तेन छन्दाᳬंसि प्रत्यतिष्ठंस्तस्मादि-
दमपापवस्यसम्॥१३॥ देवान्यजेत्येवाध्वर्युराह । देवं देवमिति सर्वेषु
होता देवानां वै देवाः सन्ति छन्दाᳬंस्येव पशवो ह्येषां गृहा हि
पशवः प्रतिष्ठो हि गृहाश्छान्दाᳬंसि वाऽअनुयाजास्तस्माद्देवान्यजे-

१. नाम इति. क. पु.  २. अपह्नव इति. ग. पु.

त्येवाध्वर्युराह देवं देवमिति सर्वेषु होता ॥१४॥ "व्वसुवने व्वसुधेय- स्ये"ति । देवताया॒ऽएव व्वषट्क्रियते देवतायै हूयते न वाऽअत्र देव- तास्त्यनुयाजेषु देवं बर्हिरिति तत्र नाग्निर्नेन्द्रो न सोमो देवो नरा- शᳬसऽइति नातऽएकं चन यो वाऽअत्राग्निर्गायत्री सा निदानेन ॥१५॥ अथ यद्वसुवने व्वसुधेयस्येति यजति । अग्निर्वै व्वसुवनि- रिन्द्रो व्वसुधेयोऽस्ति वै छन्दसां देवतेन्द्राग्नी ऽएवैवमु हैतद्देवता- याऽएव व्वषट्क्रियते देवतायै हूयते ॥१६॥ अथोत्तममनुयाजामिष्ट्वा समानीय जुहोति । प्रयाजानुयाजा वाऽएते तद्यथैवादः प्रयाजेषु यजमानाय द्विषन्तं भ्रातृव्यं बलिᳬ हारयत्यत्रऽआद्यं बलिᳬ हार- यत्येवमेवैतदनुयाजेषु बलिᳬ हारयति॥१७॥ Cf. का. श. २. ७. ४.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे षष्ठप्रपाठके चतुर्थं ब्राह्मणम् ॥

षष्ठः प्रपाठकस्समाप्तः ॥

( कण्डिकाः १११. )

---

१. ७. १.

स वै स्रुचौ व्यूहति । "अग्नीषोमयोरुज्जितिमनूज्जेषं व्वाजस्य मा प्रसवेन प्रोहामी"ति जुहूं प्राचीं दक्षिणेन पाणिनाग्नीषोमौ तम- पनुदतां योऽस्मान्द्वेष्टि यं च व्वयं द्विष्मो व्वाजस्यैनं प्रसवेनापोहा- मीत्युपभृतं प्रतीचीᳬ सव्येन पाणिना यदि स्वयं यजमानः ॥ १ ॥ यद्युऽअध्वर्युः । "अग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो व्वाजस्यैनं प्रसवेन प्रोहाम्यग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनापोहामी"ति पौर्णमास्यामग्नीषोमीयᳬ हि पौर्णमासᳬ हविर्भवति ॥२॥ अथामावास्यायाम् । "इन्द्राग्न्योरुज्जि- तिमनूज्जेषं व्वाजस्य मा प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां योऽ-

१. स निदानेनेति. क. ग. पु. २. मा. सं. २. १५. ३. मा. सं. २. १५.

स्मान्द्वेष्टि यं च व्वयं द्विष्मो व्वाजस्यैनं प्रसवेनापोहामी''ति यदि स्वयं यजमानः ॥३॥ यद्युऽअध्वर्य्युः। ''इन्द्राग्न्योरुज्जितिमनूज्जयत्वयं यजमानो व्वाजस्यैनं प्रसवेन प्रोहामिन्द्राग्नी तमपनुदतां यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि व्वाजस्यैनं प्रसवेनापोहामी''त्यमावास्यायामैन्द्राग्नꣳ ह्यामावास्यꣳ हविर्भवत्येवं यथादेवतं व्यूहति तद्यदेवं व्यूहति ॥ ४ ॥ यजमानऽएव जुहूमनु । योऽस्माऽअरातीयति सऽउपभृतमनु प्राञ्चमेवैतद्यजमानमुदूहत्यपाञ्चं तमपोहति योऽस्माऽअरातीयत्यत्तैव जुहूमन्वाद्यऽउपभृतमनु प्राञ्चमेवैतदत्तारमुदूहत्यपाञ्चमाद्यमपोहति ॥ ५ ॥ तद्वाऽएतत्। समानऽएव कर्मन् व्याक्रियते तस्मादु समानादेव पुरुषादत्ता चाद्यश्च जायेतेऽइदꣳ हि चतुर्थे पुरुषे तृतीये सङ्गच्छामहऽइति व्विदेवं दीव्यमाना जात्याऽआसतऽएतस्मादु तत्[1] ॥ ६ ॥ अथ जुह्वा परिधीन्त्समनक्ति । यया देवेभ्योऽहौषीद्यया यज्ञꣳ समतिष्ठिपत्तयैवैतत्परिधीन् प्रीणाति तस्माज्जुह्वा परिधीन्त्समनक्ति ॥७॥ स समनक्ति । ''व्वसुभ्यस्त्वा[3] रुद्रेभ्यस्त्वादित्येभ्यस्त्वे'' त्येते वै त्रय्या[4] देवा यद्वसवो रुद्राऽआदित्याऽएतेभ्यस्त्वेत्येवैतदाह ॥ ८ ॥ अथ परिधिमभिपद्याश्रावयति । परिधिभ्यो ह्येतदाश्रावयति यज्ञो वाऽआश्रावणं यज्ञेनैवैतत्प्रत्यक्षं परिधीन् प्रीणाति तस्मात्परिधिमभिपद्याश्रावयति ॥ ९ ॥ सऽआश्राव्याह । ''इषिता दैव्या होतार''ऽइति दैव्या वाऽएते होतारो यत्परिधयोऽग्नयो हीष्टा दैव्या होतारऽइत्येवैतदाह यदाहेषिता दैव्या होतारऽइति भद्रवाच्यायेति स्वयं वाऽएतस्मै देवा युक्ता भवन्ति यत्साधु व्वदेयुर्यत्साधु कुर्युस्तस्मादाह भद्रवाच्यायेति प्रेषितो मानुषः सूक्तवाकायेति तदिमं मानुषꣳ होतारꣳ सूक्तवाकाय प्रसौति ॥१०॥ अथ प्रस्तरमादत्ते। यजमानो वै प्रस्तरस्तद्यत्रास्य यज्ञोऽगंस्तदेवैतद्यजमानꣳ स्वगाकरो-

---

१. जुहूमनु इति. ग. पु. २. तदिति. ग. पु. ३. मा. सं. २, १६
४. त्रयो देवा इति. ग. पु.

ति देवलोकं वाऽअस्य यज्ञोऽगन्देवलोकमेवैतद्यजमानमपिनयति ॥ ११ ॥ स यदि वृष्टिकामः स्यात् । एतेनैवाददीत "सञ्ज्ञानाथां द्यावापृथिवी"ऽइति यदा वै द्यावापृथिवी संज्ञानातेऽअथ वर्षति तस्मादाह सञ्ज्ञानाथां द्यावापृथिवीऽइति "मित्रावरुणौ त्वा वृष्ट्यावतामिति तद्यो वर्षस्येष्टे स त्वा वृष्ट्यावत्वित्येवैतदाहायं वै वर्षस्येष्टे योऽयं पवते सोऽयमेकऽइवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः प्राङ्च प्रत्यङ्च ताविमौ प्राणोदानौ प्राणोदानौ वै मित्रावरुणौ तद्यऽएव वर्षस्येष्टे स त्वा वृष्ट्यावत्वित्येवैतदाह तमेतेनैवाददीत यदा ह्येव कदा च वृष्टिः शंमिव तमनक्त्याहुतिमेवैतत्करोत्याहुतिर्भूत्वा देवलोकं गच्छादिति ॥ १२ ॥ स वाऽअग्रं जुह्वामनक्ति । मध्यमुपभृति मूलं ध्रुवायामग्रमिव हि जुहूर्मध्यमिवोपभृन्मूलमिव ध्रुवा ॥ १३ ॥ सोऽनक्ति । "व्यन्तु वयोक्तꣳ रिहाणा"ऽइति वयऽएवैनमेतद्भूतमस्मान्मनुष्यलोकाद्देवलोकमभ्युत्पातयति तन्नीचैरिव हरति द्वयं तद्यस्मान्नीचैरिव हरेद्यजमानो वै प्रस्तरोऽस्याऽएवैनमेतत्प्रतिष्ठायै नोद्धन्तीहोऽएव वृष्टिं नियच्छति ॥ १४ ॥ स हरति । "मरुतां पृषतीर्गच्छे"ति देवलोकं गच्छेत्येवैतदाह यदाह मरुतां पृषतीर्गच्छेति "वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह"-तीयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरियं भूत्वा दिवं गच्छेत्येवैतदाह ततो नो वृष्टिमावहेति वृष्टाद्वाऽऊर्ग्रसः सुभूतं जायते तस्मादाह ततो नो वृष्टिमावहेति ॥ १५ ॥ अथैकं तृणमपगृह्णाति । यजमानो वै प्रस्तरः स यत्कृत्स्नं प्रस्तरमनुप्रहरेत् क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति यावद्ध्वेवास्येह मानुषमायुस्तस्माऽएवैतदपगृह्णाति ॥ १६ ॥ तन्मुहूर्त्तं धारयित्वानुप्रहरति । तद्यत्रास्येतरऽआत्मा-

---

१. ३. मा. सं. २. १६. २. सञ्ज्ञानाथे इति, ग. पु. ४. समिवेति, क. ग. पु.
५. मा. सं. २. १६. ६. मा. सं. २. १६. ७. मा. सं. २. १६.

गंस्तदेवास्यैतद्भ्रमयत्यथ यन्नानुप्रहरेदन्तरियाद्ध यजमानं लोकात्तथो ह यजमानं लोकान्नान्तरेति ॥ १७ ॥ तं प्राञ्चमनुसमस्यति । प्राची हि देवानां दिगथोऽउदञ्चमुदीची हि मनुष्याणां दिक्तमङ्गुलिभिरेव योयुप्येरन्न काष्ठैर्दारुभिर्वाऽइतरछं शवं व्यृषन्ति नेत्तथा करवाम यथेतरछं शवमिति तस्मादङ्गुलिभिरेव योयुप्येरन्न काष्ठैर्यदा होता सूक्तवाकमाह ॥ १८ ॥ अथाग्नीदाहानुप्रहरेति । तद्यत्रास्येतरऽआत्मागंस्तदेवास्यैतद्गमयेत्येवैतदाह तूष्णीमेवानुप्रहृत्य "चक्षुष्पाऽअग्नेऽसि चक्षुर्मे पाही"[1]त्यात्मानमुपस्पृशति तेनोऽअप्यात्मानं नानुप्रवृणक्ति ॥ १९ ॥ अथाह "संव्वदस्वे"ति । संवादयैनं देवैरित्येवैतदाहागानग्नीदित्यगन् खल्वित्येवैतदाहागन्नितीतरःप्रत्याह 'श्रावये'ति तं वै देवैः श्रावय तमनुबोधयेत्येवैतदाह 'श्रौषडि'ति व्विदुर्व्वाऽएनमनु वाऽएनमभुत्सतेत्येवैतदाहैवमध्वर्युश्चाग्नीच्च देवलोकं यजमानमपिनयतः ॥२०॥ अथाह "स्वगा दैव्या होतृभ्य"ऽइति । दैव्या वाऽएते होतारो यत्परिधयोऽग्नयो हि तानेवैतत्स्वगाकरोति तस्मादाह स्वगा दैव्या होतृभ्यऽइति "स्वस्तिर्मानुषेभ्य" ऽइति तदस्मै मानुषाय होत्रेऽह्वलामाशास्ते[2] ॥ २१ ॥ अथ परिधीननुप्रहरति । स मध्यममेवाग्रे परिधिमनुप्रहरति "यं[3] परिधिं पर्यधत्थाऽअग्ने देव पणिभिर्गुह्यमानः । तं तऽएतमनु जोषं भराम्येष नेत्त्वदपचेतयाता"ऽइत्य "ग्नेः प्रियं पाथोऽपीतमि"[4]तीतरावनुसमस्यति ॥ २२ ॥ अथ जुहूं चोपभृतं च सम्प्रगृह्णाति । अदो हैवाहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूं चोपभृतं च सम्प्रगृह्णाति ॥ २३ ॥ स वै व्विश्वेभ्यो देवेभ्यः सम्प्रगृह्णाति । यद्वाऽअनादिष्टं देवतायै हविर्गृह्यते सर्व्वा वै तस्मिन्देवताऽअपित्विन्यो मन्यन्ते न वाऽएतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं तस्माद्विश्वेभ्यो देवेभ्यः सम्प्रगृह्णात्येतदु व्वैश्वदेवँ हविर्यज्ञे ॥ २४ ॥ स सम्प्रगृह्णाति । "सँ

---

१. मा. सं. २. १६.  २. आशास्ते इति, क, ग, पु.
३. मा. सं. २. १७.  ४. मा. सं. २. १८.

स्रवभागा स्थेषा बृहन्त''ऽइति सᳬंस्रवो ह्येव खलु परिशिष्टो भवति ''प्रस्तरेष्ठाः परिधेयाश्च देवा''ऽइति प्रस्तरश्च हि परिधयश्चानुप्रहृता भवन्ती''मां व्वाचमभि व्विश्वे गृणन्त''ऽइत्येतदु व्वैश्वदेवं करो''त्यासद्यास्मिन् बर्हिषि मादयध्वᳬं स्वाहा व्वाडि''ति तद्यथा व्वषट्कृतᳬं हुतमेवमस्यैतद्भवति ॥ २५ ॥ स यस्यानसो हविर्गृह्णन्ति । अनसस्तस्य धुरि व्विमुञ्चन्ति यतो युनजाम ततो व्विमुञ्चामेति यतो ह्येव युञ्जन्ति ततो व्विमुञ्चन्ति यस्यो पात्र्यै स्फ्ये तस्य यतो युनजाम ततो व्विमुञ्चमेति यतो ह्येवं युञ्जन्ति ततो व्विमुञ्चन्ति ॥ २६ ॥ युजौ ह वाऽएते यज्ञस्य यत्स्रुचौ । तेऽएतद्युङ्क्ते यत्प्रचरति स यं निधायावद्येद्यथा व्वाहनमवाच्छेदेवं तत्तेऽएतत्स्विष्टकृति व्विमोचनमार्गच्छतस्ते तत्सादयति तद्विमुञ्चति तेऽएतत्पुनः प्रयुङ्क्तेऽनुयाजेषु सोऽनुयाजैश्चरित्वैतद्विमोचनमागच्छाति ते तत्सादयति तद्विमुञ्चति तेऽएतत्पुनः प्रयुङ्क्ते यत्सम्प्रगृह्णाति तद्यां गतिमभियुङ्क्ते तां गतिं गत्वा व्विमुञ्चते यज्ञं वाऽअनु प्रजास्तस्मादयं पुरुषो युङ्क्तेऽथ व्विमुञ्चतेऽथ युङ्क्ते तद्यां गतिमभियुङ्क्ते तां गतिं गत्वान्ततो व्विमुञ्चते स सादयति ''घृताची स्थो धुर्यौ पातᳬं सुम्ने स्थः सुम्ने मा धत्त''मिति साध्व्यौ स्थः साधौ मा धत्तमित्येवैतदाह॥२७॥

Cf. का. श. २. ८. १.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे

प्रथमकाण्डे सप्तमप्रपाठके प्रथमं ब्राह्मणम् ॥

( इत्यष्टमोऽध्यायः )

१. ७. २.

स यत्राह । ''इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मा-

---

१. मा. सं. २, १८.  २. मा. सं. २. १८.  ३. मा. सं. २. १८.

४. युनजाम इति. क. ग.  ५. ह्येवमिति. ग. पु.

६. आगच्छतस्ते तत्सादयतीति. क. पु.  ७. मा. सं, २, १९,

८. नाऽयं सांहितिको मन्त्रः ।

नुषः सूक्तवाकाये''ति यदतो होतान्वाह सूक्तैव तदाह यजमानायैवैतदाशिषमाशास्ते तद्वाऽएतदुपरिष्टाद्यज्ञस्याशिषमाशास्ते द्वयं तद्यस्मादुपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥१॥ यज्ञं वाऽएष जनयति। यो यजतऽएतेन ह्युक्ता ऋत्विजस्तन्वते तं जनयन्त्यथाशिषमाशास्ते तामस्मै यज्ञऽआशिषᳬं सन्नमयति यामाशिषमाशास्ते यो माजीजनतेति तस्माद्वाऽउपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥ २ ॥ देवान्वाऽएष प्रीणाति। यो यजतऽएतेन यज्ञेनर्ग्भिरिव त्वद्यजुर्भिरिव त्वादाहुतिभिरिव त्वत्स देवान् प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भूत्वाथाशिषमाशास्ते तामस्मै देवाऽआशिषᳬं सन्नमयन्ति यामाशिषमाशास्ते यो नोऽप्रैषीदिति तस्माद्वाऽउपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥ ३ ॥ अथ प्रतिपद्यते। ''इदं द्यावापृथिवी भद्रमभूदि''ति भद्रᳬं ह्यभूद्यो यज्ञस्य सᳬंस्थामगन्ना''ध्र्म सूक्तवाकमुत नमोवाकमि''त्युभयं वाऽएतद्यज्ञऽएव यत्सूक्तवाकश्च नमोवाकश्चारात्स्म यज्ञमविदाम यज्ञमित्येवैतदाहा''ग्ने त्वᳬं सूक्तवागस्युपश्रुती दिवस्पृथिव्यो''रित्यग्निमेवैतदाह त्वᳬं सूक्तवागस्युपश्रृण्वत्योरनयोर्द्यावापृथिव्योरि''त्योमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्ता''मित्यन्नवत्यौ तेऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्येवैतदाह ॥ ४ ॥ ''शङ्गवी जीवदानू''ऽइति। शंगवी ते जीवदानू स्तामित्येवैतदाहा''त्रस्नूऽअप्रवेदे''ऽइतिमाह कस्माच्चन प्रत्रासीर्मो तऽइदं पुष्टं कश्चन प्रविदतेत्येवैतदाह ॥५॥ ''उरुगव्यूतीऽअभयङ्कृता''विति। उरुगव्यूती तेऽभये स्तामित्येवै-

---

१. सूक्तऽइवेति ग. पु. २. यज्ञेनऽर्ग्भिरिवेति. क. ग पु.

३. नोऽप्रैषीदिति इति. क. ग. पु.

४. सूक्तवाकमन्त्रस्समग्रोऽऽश्वलायनश्रौतसूत्रे पठितः। तैत्तिरीयब्राह्मणे तु किञ्चिदिव वैपरीत्येन पठितः। See तै. ब्रा. ३. ५. १०, आश्व. श्रौ. १. ९. १.

५. यज्ञ यजमान इति. क. ग. पु. ६. शंगवी इति. क. ग. पु.

७. अप्रवेदेऽइति माह कस्माच्चन प्रत्रासीरिति. क. ग. पु.

तदाह "व्यृष्टिद्यावा रीत्यापे"ति व्यृष्टिमत्यौ ते स्तामित्येवैतदाह॥६॥ "शम्भुवौ मयोभुवा"विति। शम्भुवौ ते मयोभुवौ स्तामित्येवैतदाहो"र्जस्वती च पयस्वती" चेति रसवत्यौ तऽउपजीवनीये स्तामित्येवैतदाह ॥ ७ ॥ "सूपचरणा च स्वधिचरणा चे"ति। सूपचरणाह तेऽसावस्तु यामधस्तादुपचरसि स्वधिचरणो तऽइयमस्तु यामुपरिष्टादधिचरसीत्येवैतदाह "तयोराविदी"ति तयोरनुमन्यमानयोरित्येवैतदाह ॥ ८ ॥ "अग्निरिद ँ हविः। अजुषतावीवृधत महो ज्यायोऽकृते"ति तदाग्नेयमाज्यभागमाह "सोमऽइद ँ हविरजुषतावीवृधत महो ज्यायोऽकृते"ति तत्सौम्यमाज्यभागमाहा"ग्निरिद ँ हविरजुषतावीवृधत महो ज्यायोऽकृते"ति तद्य ऽएषऽउभयत्राच्युत ऽआग्नेयः पुरोडाशो भवति तमाह ॥ ९ ॥ अथ यथादेवतम्। "देवाऽआज्यपा ऽआज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रते"ति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा वै देवाऽआज्यपा ऽ"अग्निर्होत्रेणेद ँ हविरजुषतावीवृधत महो ज्यायोऽकृते"ति तदग्नि ँ होत्रेणाहाजुषतेत्येवं या ऽइष्टा देवता भवन्ति ताः सम्पश्यत्यसौ हविरजुषतासौ हविरजुषतेति तद्यज्ञस्यैवैतत्समृद्धिमाशास्ते यद्धि देवा हविर्जुषन्ते तेन हि महज्जयति तस्मादाहाजुषतेत्यवीवृधतेति यद्वै देवा हविर्जोषयन्ते तदपि गिरिमात्रं कुर्व्वते तस्मादाहावीवृधतेति ॥ १० ॥ महो ज्यायोऽकृतेति। यज्ञो वै देवानां महस्त ँ ह्येतज्ज्यायाᳮसमिव कुर्व्वते तस्मादाह महो ज्यायोऽकृतेति ॥ ११ ॥ "अस्यामृधेद्धोत्रायां देवङ्गमाया"मिति। अस्या ँ राध्नोतु होत्रायां देवङ्गमायामित्येवैतदाहा"शास्तेऽयं यजमानोऽसा"विति नाम गृह्णाति तदेनं प्रत्यक्षमाशिषा सम्पादयति ॥ १२ ॥ "दीर्घायुत्वमाशास्त"ऽइति। सा यामुत्रोत्तरा देवयज्या तदिह प्रत्यक्षं दीर्घायुत्व ँ ॥ १३ ॥ "सुप्रजास्त्वमाशा-

---

१. यामधस्तादिति क. ग. पु. २, ४. ज्यायोऽकृतेति ख. पु.

३. कुर्व्वत इति. क. ग. पु.

स्त''ऽइति । तद्यदमुत्र भूयो हविष्करणं तदिह प्रत्यक्षꣳ सुप्रजास्त्वं प्रशासनꣳ स कुर्य्याद्यऽएवं कुर्या''दुत्तरां देवयज्यामाशास्त''ऽइति त्वेव ब्रूयात्तदेव जीवातुं तत्प्रजां तत्पशून्[१] ॥ १४ ॥ ''भूयो हविष्करणमाशास्त''ऽइति । तद्धेव त''त्सजातवनस्यामाशास्त''ऽइति प्राणा वै सजाताः प्राणैर्हि सह जायते तत्प्राणानाशास्ते ॥ १५ ॥ ''दिव्यं धामाशास्तऽ''इति । देवलोके मेऽप्यसदिति वै यजते यो यजते तद्देवलोकऽएवैनमेतदपित्विनं करोति ''यदनेन हविषाशास्ते तदश्यात्तदृध्या''दिति यदनेन हविषाशास्ते तदस्मै सर्वꣳ समृध्यतामित्येवैतदाह ॥ १६ ॥ ता वाऽएताः[२] । पञ्चाशिषः करोति तिस्र इडायां ता ऽअष्टावष्टाक्षरा वै गायत्री व्वीर्यं गायत्री व्वीर्यमेवैतदाशिषोऽभिसम्पादयति ॥ १७ ॥ नातो भूयसीः कुर्यात् । अतिरिक्तꣳ ह कुर्याद्यदतो भूयसीः कुर्याद्यद्वै यज्ञस्यातिरिक्तं द्विषन्तꣳ हास्य तद्भ्रातृव्यमभ्यतिरिच्यते तस्मान्नातो भूयसीः कुर्यात् ॥ १८ ॥ अपीद्वै कनीयसीः सप्त । ''तदस्मै देवा रासन्ता''मिति तदस्मै देवा ऽअनुमन्यन्तामित्येवैतदाह ''तदग्निर्देवो देवेभ्यो व्वनुतां व्वयमग्नेः परि मानुषा''ऽइति तदग्निर्देवो देवेभ्यो व्वनुतां व्वयमग्नेरध्यस्माऽएतद्वनवामहाऽइत्येवैतदाह ॥ १९ ॥ ''इष्टं च व्वित्तञ्चे''[३]ति । ऐषिषुरिव[४] वाऽएतद्यज्ञं तमविदंस्तस्मादाहेष्टं च व्वित्तं चे''त्युभे चैनं द्यावापृथिवीऽअꣳहसस्पाता''मित्युभे चैनं द्यावापृथिवीऽआर्त्तेर्गोपायतामित्येवैतदाह ॥२०॥ तदु हैकऽआहुः । उभे च मेति तथा होताशिषऽआत्मानं नान्तरेतीति तदु तथा न ब्रूयाद्यजमानस्य वै यज्ञऽआशीः किं नु तत्रर्त्विजां यां वै काञ्च यज्ञऽऋत्विजऽआशिषमाशासते यजमानस्यैव सा न ह सऽएतां क चनाशिषं प्रतिष्ठापयति यंऽआहोभे[५] च मेति तस्मादु ब्रूयादुभे चैनमित्येव ॥२१॥ ''इह गति-

---

१. पशून् इति. क. पु. २. एताः इति. क. पु. ३. वित्तं चेति इति. क. पु. ४. ऐषिषुरिति. क. ग. पु. ५. यऽआहेति. क. ग. पु.

र्व्वामस्ये''ति । तद्यदेव यज्ञस्य साधु तदेवास्मिन्नेतद्दधाति तस्मादाहेह गतिर्व्वामस्येति॥२२॥''इदं च नमो देवेभ्य'' ऽइति । तद्यज्ञस्यैवैतत्सꣳस्थां गत्वा नमो देवेभ्यः करोति तस्मादाहेदं च नमो देवेभ्य ऽइति ॥२३॥ अथ शंयोराह । शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सꣳस्थां विदां चकार स देवलोकमपीयाय तत्तदन्तर्हितमिव मनुष्येभ्यऽआस ॥२४॥ तद्वाऽऋषीणामनुश्रुतमास । शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य सꣳस्थां विदां चकार स देवलोकमपीयायेति ते तामेव यज्ञस्य सꣳस्थामुपायन् याꣳ शंयुर्बार्हस्पत्योऽवेद्यच्छंयोरब्रुवंस्तां वेवैषऽएतद्यज्ञस्य सꣳस्थामुपैति याꣳ शंयुर्बार्हस्पत्योऽवेद्यच्छंयोराह तस्माद्वै शंयोराह ॥२५॥ स प्रतिपद्यते । ''तच्छंयोरावृणीमह''ऽइति तां यज्ञस्य सꣳस्थामावृणीमहे याꣳ शंयुर्बार्हस्पत्योऽवेदित्येवैतदाह ॥२६॥ ''गातुं यज्ञाय गातुं यज्ञपतय''ऽइति । गातुꣳह्येष यज्ञायेच्छति गातुं यज्ञपतये यो यज्ञस्य सꣳस्थां ''दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य''ऽइति स्वस्ति नो देवत्रास्तु स्वस्ति मनुष्यत्रेत्येवैतदाहो''र्ध्वं जिगातु भेषज''मित्यूर्ध्वं नोऽयं यज्ञो देवलोकं जयत्वित्येवैतदाह ॥२७॥ ''शं नोऽअस्तु द्विपदे शं चतुष्पद'' ऽइति । एतावद्वाऽइदꣳ सर्व्वं यावद्द्विपाच्चैव चतुष्पाच्च तस्माऽएवैतद्यज्ञस्य सꣳस्थां गत्वा शं करोति तस्मादाह शं नोऽअस्तु द्विपदे शं चतुष्पदऽइति ॥२८॥ अथानयेत्युपस्पृशति । अमानुष ऽइव वाऽएतद्भवति यदार्त्विज्ये प्रवृतऽइयं वै पृथिवी प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति तदु खलु पुनर्मानुषो भवति तस्मादनयेत्युपस्पृशति ॥ २९ ॥ Cf. का. श. २. ८. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे सप्तमप्रपाठके द्वितीयं ब्राह्मणम् ॥

१. इति क. पु.   २. ऊर्ध्वो ख. पु.   ३. तस्मादनयेत्युपस्पृशतीति. क. ग. पु.

ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति । जुहूं च स्रुवं चाध्वर्य्युरादत्ते व्वेदꣳहोताज्यविलापनीमग्नीत् ॥ १ ॥

( अर्द्धप्रपाठकः ॥ ५७ ॥ )

तद्धैकेषामध्वर्युः । पूर्व्वेणाहवनीयं पर्येति तदु तथा न कुर्याद्बहिर्धा ह यज्ञात्स्याद्यत्तेनेयात् ॥२॥ जघनेनो हैव पत्नीम् । एकेषामध्वर्युरेति नोऽएव तथा कुर्यात्पूर्व्वार्धो वै यज्ञस्याध्वर्युर्ज्जघनार्धः पत्नी यथा भसत्तः शिरः प्रतिदध्यादेवं तद्बहिर्धा हैव यज्ञात्स्याद्यत्तेनेयात् ॥३॥अन्तरेणो हैव पत्नीम् । एकेषामध्वर्युरेति नोऽएव तथा कुर्यादन्तरियाद्ध यज्ञात्पत्नीं यत्तेनेयात्तस्मादु पूर्वेणैव गार्हपत्यमन्तरेणाहवनीयं चैति तथा ह न बहिर्धा यज्ञाद्भवति यथोऽएवादः प्रचरन्नन्तरेण सञ्चरति स ऽउऽएवास्यैष सञ्चरो भवति ॥ ४ ॥ अथ पत्नीः संयाजयन्ति । यज्ञाद्धै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमानाऽअन्ततो यज्ञस्य प्रजायन्ते तदेनाऽएतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पत्नीः संयाजयन्ति ॥ ५ ॥ चतस्रो देवता यजति । चतस्रो वै मिथुनं द्वन्द्वं वै मिथुनं द्वे द्वे हि खलु भवतो मिथुनमेवैतत्प्रजननं क्रियते तस्माच्चतस्रो देवता यजति ॥६॥ ता वाऽआज्यहविषो भवन्ति । रेतो वाऽआज्यꣳरेतऽएवैतत्सिञ्चति तस्मादाज्यहविषो भवन्ति ॥ ७ ॥ तेनोपाꣳशु चरन्ति । तिर ऽइव वै मिथुनेन चर्यते तिरऽइवैतद्यदुपाꣳशु तस्मादुपाꣳशु चरन्ति ॥ ८ ॥ अथ सोमं यजति । रेतो वै सोमो रेतऽएवैतत्सिञ्चति तस्मात्सोमं यजति ॥ ९ ॥ अथ त्वष्टारं यजति । त्वष्टा वै सिक्तꣳरेतो व्विकरोति तदेषऽएवैतत्सिक्तꣳरेतो व्विकरोति तस्मात्त्वष्टारं यज-

१. अग्नीदिति. क. पु. २. अध्वर्युरिति. क. पु. ३. तेनेयात् इति क. पु.
४. यजतीति. क. ग. पु.

ति ॥ १० ॥ अथ देवानां पत्नीर्यजति । पत्नीषु वै योनौ रेतः प्रतिष्ठितं तत्ततः प्रजायते तत्पत्नीष्वेवैतद्योनौ रेतः सिक्तं प्रतिष्ठापयति तत्ततः प्रजायते तस्माद्देवानां पत्नीर्यजति ॥ ११ ॥ स यत्र देवानां पत्नीर्यजति । तत्पुरस्तात्तिरः करोत्युप ह वै तावद्देवता ऽआसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो जुह्वत्विति ताभ्य ऽएवैतात्तिरः करोति तस्मादिमा मानुष्य स्त्रियस्तिर ऽइवैव पुꣳसो जिघत्सन्ति या ऽइव तु ता ऽइवेति ह स्माह याज्ञवल्क्यः ॥१२॥ अथाग्निं गृहपतिं यजति । अयं वाऽअग्निर्लोकऽइममेवैतल्लोकमिमाः प्रजा ऽअभि प्रजनयति ता ऽइमं लोकमिमाः प्रजा ऽअभिप्रजायन्ते तस्मादग्निं गृहपतिं यजति ॥ १३ ॥ तदिडान्तं भवति । न ह्यत्र परिधयो भवन्ति न प्रस्तरो यत्र वाऽअदः प्रस्तरेण यजमानꣳ स्वगाकरोति पतिं वाऽअनु जाया तदेवास्यापि पत्नी स्वगाकृता भवतीयासि तꣳ ह कुर्याद्यत्प्रस्तरस्य रूपं कुर्यात्तस्मादिडान्तमेव स्यादुतो प्रस्तरस्यैव रूपं क्रियते ॥ १४ ॥ स यदि प्रस्तरस्य रूपं कुर्यात्[1] । यथैवादः प्रस्तरेण यजमानꣳ स्वगाकरोत्येवमेवैतत्पत्नीꣳ स्वगाकरोति ॥ १५ ॥ स यदि प्रस्तरस्य रूपं कुर्यात् । व्वेदस्यैकं तृणमाच्छिद्याग्रं जुह्वामनक्ति मध्यꣳ स्रुवे बुध्नꣳ स्थाल्याम्[2] ॥१६॥ अथाग्नीदाह "नुप्रहरे"ति । तूष्णीमेवानुप्रहृत्य "चक्षुष्पा ऽअग्नेऽसि चक्षुर्म्मे पाहि"त्यात्मानमुपस्पृशति तेनोऽअप्यात्मानं नानुप्रवृणक्ति ॥ १७ ॥ अथाह "संव्वदस्वे"[3]ति । "अगानग्नीदगच्छ्रावय । श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि" ति ॥ १८ ॥ अथ जुहूं[4] च स्रुवं च सम्प्रगृह्णाति । अदो हैवाहुतिं करोति यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तस्माज्जुहूं च स्रुवं च सम्प्रगृह्णाति ॥ १९ ॥ स वाऽअग्नये सम्प्रगृह्णाति । "अग्ने-[5]

---

१. कुर्यादिति. क पु. २. स्थाल्यामिति. क. पु. ३. संवदस्वेतीति क. पु. ४. जुहूं च इति. क. पु. ५. मां. सं. २, २०.

ऽदब्धायोऽशीतमे''त्यमृतो ह्यग्निस्तस्मादाहादब्धायवित्यशीतमेत्यशिष्टो ह्यग्निस्तस्मादाहाशीतमेति ''पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या''ऽइति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाहा''विषं नः पितुं कृणि''त्यन्नं वै पितुरनमीवं नऽइदमकिल्बिषमन्नं कुर्वित्येवैतदाह ''सुषदा योना''वित्यात्मन्येतदाह ''स्वाहा व्वाडि''ति तद्यथा व्वषट्कृतꣳ हुतमेवमस्यैतद्भवति॥२०॥ (शतसंख्या ॥८००॥) अथ व्वेदं पत्नी व्विस्रꣳसयति। योषा वै व्वेदिर्व्वृषा व्वेदो मिथुनाय वै व्वेदः क्रियतेऽथ यदेनेन यज्ञऽउपालभते मिथुनमेवैतत्प्रजननं क्रियते ॥२१॥ अथ यत्पत्नी व्विस्रꣳसयति । योषा वै पत्नी व्वृषा व्वेदो मिथुनमेवैतत्प्रजननं क्रियते तस्माद्वेदं पत्नी व्विस्रꣳसयति ॥ २२ ॥ सा व्विस्रꣳसयति । ''व्वेदोऽसि येन त्वं देव व्वेद देवेभ्यो व्वेदोऽभवस्तेन मह्यं व्वेदो भूया'' ऽइति यदि यजुषा चिकीर्षेदेतेनैव कुर्यात् ॥२३॥ तमा व्वेदेः सꣳस्तृणाति । योषा वै व्वेदिर्व्वृषा व्वेदः पश्चाद्वै परीत्य व्वृषा योषामधिद्रवति पश्चादेवैनामेतत्परीत्य व्वृष्णा व्वेदेनाधिद्रावयति तस्मादा व्वेदेः सꣳस्तृणाति॥२४॥ अथ समिष्टयजुर्जुहोति प्राञ्चे यज्ञोऽनुसन्तिष्ठाताऽइत्यथ यद्धुत्वा समिष्टयजुः पत्नीः संयाजयेत्प्रत्यङ्ु हैवास्यैष यज्ञः सन्तिष्ठेत तस्माद्वाऽएतर्हि समिष्टयजुर्जुहोति। प्राञ्चे यज्ञोऽनुसन्तिष्ठाताऽइति॥२५॥अथ यस्मात्समिष्टयजुर्नाम। या व्वाऽएतेन यज्ञेन देवता ह्वयति याभ्यऽएष यज्ञस्तायते सर्व्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्व्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्टयजुर्नाम ॥२६॥ अथ यस्मात्समिष्टयजुर्जुहोति। या व्वाऽएतेन यज्ञेन देवता ह्वयति याभ्यऽएष यज्ञस्तायतऽउप ह वै ताऽआसते यावन्न समिष्टयजुर्जुह्वतीदं नु नो जुह्वत्विति ताऽएवैतद्यथायथं व्यवसृजति यत्र यत्रासां चरणं तदनु यज्ञं व्वाऽएत-

१. मा. सं. २. २०. २. मा. सं. २. २०. ३. मा. सं. २. २०.
४. आदितः कण्डिकानां संख्येयम् । ५. मा. सं. २. २१. ६. यत्रेति. ग. पु.

दजीजनत यदेनमुतत तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात् समिष्टयजुर्जुहोति ॥२७॥ स जुहोति । "देवा गातुविद" इति गातुविदो हि देवा "गातुं वित्त्वे"ति यज्ञं वित्त्वेत्येवैतदाह "गातुमिते"ति तदेतेन यथायथं व्यवसृजति "मनसस्पतऽइमं देवयज्ञᳬ स्वाहा वाते धा"ऽइत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञᳬ सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञᳬ सन्दधाति तस्मादाह स्वाहा वाते धाऽइति ॥२८॥ अथ बर्हिर्जुहोति । अयं वै लोको बर्हिरोषधयो बर्हिरस्मिन्नेवैतल्लोकऽओषधीर्दधाति ताऽइमा ऽअस्मिंल्लोक ऽ ओषधयः प्रतिष्ठितास्तस्माद्बर्हिर्जुहोति ॥२९॥ तां वाऽअतिरिक्तां जुहोति । समिष्टयजुर्ह्यवान्तो यज्ञस्य यद्ध्यूर्ध्वᳬ समिष्टयजुषोऽतिरिक्तं तद्यदा हि समिष्टयजुर्जुहोत्यथैताभ्यो जुहोति तस्मादिमा ऽअतिरिक्ता ऽअसम्मिता ऽओषधयः प्रजायन्ते॥३०॥स जुहोति । "सं बर्हिरङ्क्ताᳬ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः। समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहे"ति ॥३१॥ अथ प्रणीता दक्षिणतः परीत्य निनयति । युङ्क्ते वाऽएतद्यज्ञं यदेनं तनुते स यन्न निनयेत्पराङ् हाविमुक्तऽएव यज्ञो यजमानं प्रक्षिणीयात्तथो ह यज्ञो यजमानं न प्रक्षिणाति तस्मात्प्रणीता दक्षिणतः परीत्य निनयति ॥३२॥ स निनयति । "कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति पोषाये"ति तत्पुष्टिमुत्तमां यजमानाय निराह स येनैव प्रणयति तेन निनयति येन ह्येव योग्यं युञ्जन्ति तेन विमुञ्चन्ति योक्त्रेण हि योग्यं युञ्जन्ति योक्त्रेण विमुञ्चन्त्यथ फलीकरणान् कपालेनाधोऽधः कृष्णाजिनमुपास्यति "रक्षसां भागोऽसी"ति ॥ ३३ ॥ देवाश्च च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरऽएतस्मिन्यज्ञे प्रजापतौ पितरि सम्वत्सरेऽस्मा-

---

१. मा. सं. २. २१. २, ३. मा. सं २. २१. ४. मा. सं २. २१.
५. मा. सं. २. २२. ६. मा. स. २. २३. ७. मा. सं. २. २३.

कमयं भविष्यत्यस्माकमयं भविष्यतीति ॥३४॥ ततो देवाः । सर्व्वं यज्ञꣳ सम्वृज्याथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनाग्निरभजन्नस्ना पशोः फलीकरणैर्हविर्यज्ञात्सुनिर्भक्ताऽअसन्नित्येष वै सुनिर्भक्तो यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्त्यैव स तावच्छꣳसतऽउत हि व्वशो लब्ध्वाह किं मा बभक्थेति स यभ्वैभ्यो देवा भागमकल्पयंस्तमेवैभ्यऽएषऽएतद्भागं करोत्यथ यद्ध्नोऽधः कृष्णाजिनमुपास्यत्यनग्नावेवैभ्यऽएतदन्धे तमसि प्रवेशयति तथोऽएवास्नक्पशो रक्षसां भागोऽसीत्यनग्नावन्धे तमसि प्रवेशयति तस्मात्पशोस्तेदनीं न कुर्व्वन्ति रक्षसाꣳ हि स भागः ॥३५॥ Cf. का. श. २. ८. ३; तै. सं. ३. ६. ९. १०.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे सप्तमप्रपाठके तृतीयं ब्राह्मणम् ॥

१. ७. ४.

सꣳस्थिते यज्ञे । दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा ह्युदग्भवति तस्माद्दक्षिणतः परीत्य पूर्णपात्रं निनयति देवलोके मेऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥१॥ स एष देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौ तिष्ठतः प्रति तमोषतो यः प्रत्युष्योऽस्त्यु तꣳ सृजेते योऽतिसृज्यः शान्तिरापस्तदेतमेवैतत्पन्थानꣳ शमयति ॥२॥ पूर्णं निनयति । सर्व्वं वै पूर्णꣳ सर्व्वेणैवैनमेतच्छमयति सन्ततमव्यवच्छिन्नं निनयति सन्ततेनैवैनमेतदव्यवच्छिन्नेन शमयति ॥३॥ यद्वेव पूर्णपात्रं निनयति । यद्वै यज्ञस्य मिथ्या क्रियते व्यस्य तद्वृहन्ति क्षण्वन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति ॥४॥ पूर्णं निनयति । सर्व्वं वै पूर्णꣳ सर्व्वेणैवैतत्सन्दधाति सन्ततमव्यव-

१ देवा इति. क. पु.

छिन्नं निनयति सन्ततेनैवैतदव्यवच्छिन्नेन सन्दधाति ॥५॥ तदञ्ज-
लिना प्रतिगृह्णाति । "[1]सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा
सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्ट"
मिति यद्विवृढं तत्सन्दधाति ॥६॥ अथ मुखमुपस्पृशते । द्वयं तद्य-
स्मान्मुखमुपस्पृशतेऽमृतं वाऽआपोऽमृतेनैवैतत्सꣳस्पृशतऽएतदु चैवै-
तत्कर्मात्मन् कुरुते तस्मान्मुखमुपस्पृशते॥७॥अथ विष्णुक्रमान् क्रमते ।
देवान्वाऽएष प्रीणाति यो यजतऽएतेन यज्ञेनर्ग्भिरिव त्वद्यजुर्भिरिव
त्वदाहुतिभिरिव त्वत्स देवान् प्रीत्वा तेष्वपित्वी भवति तेष्वपित्वी भू-
त्वा तानेवाभिप्रक्रामति॥८॥यद्वेव विष्णुक्रमान् क्रमते । यज्ञो वै विष्णुः
स देवेभ्य ऽइमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथ-
मेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष ऽएत-
स्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते तस्माद्विष्णुक्रमान् क्रमते तद्वाऽइत
ऽएव पराचीनं भूयिष्ठाऽइव क्रमन्ते॥९॥तदु तत् "पृथिव्यां विष्णुर्व्यक्र-
ꣳस्त । गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्वि-
ष्मोऽन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वे-
ष्टि यं च वयं द्विष्मो दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भ-
क्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्म" ऽइत्येवमिमांल्लोकान्त्समारुह्याथैषा
गतिरेषा प्रतिष्ठा य ऽएष तपति तस्य ये रश्मयस्ते सुकृतोऽथ यत्परं भाः
प्रजापतिर्वा स स्वर्गो वा लोकस्तदेवमिमांल्लोकान्त्समारुह्याथैतां गति-
मेतां प्रतिष्ठां गच्छति परस्तात्त्वेवार्वाङ्[2] क्रमेत य ऽइतोऽनुशासनं चिकी-
र्षेद्द्वयं तद्यस्मात्परस्तादर्वाङ् क्रमेत ॥१०॥ अपसरणतो ह वाऽअग्रे देवा
जयन्तोऽजयन् । दिवमेवाग्रे ऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्ना-
ननुदन्त तथोऽएवैष ऽएतदपसरणत ऽएवाग्रेऽजयन् जयति दिवमेवाग्रे-
ऽथेदमन्तरिक्षमथेतोऽनपसरणात्सपत्नान्नुदतऽइयं वै पृथिवी प्रतिष्ठा
तदस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति॥११॥तदु तत् "[3]दिवि विष्णुर्व्यक्र-

---

१. मा. सं. २. २४. २. अर्वाङ्क्रमेत इति. क. ग. पु. ३. मा. सं. २. २५.

ᳪंस्त । जागतेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च व्वयं द्विष्मोऽन्तरिक्षे व्विष्णुर्व्यक्रᳪंस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च व्वयं द्विष्मः पृथिव्या व्विष्णुर्व्यक्रᳪंस्त गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च व्वयं द्विष्मोऽस्मादन्नादस्यै प्रतिष्ठाया''ऽइत्यस्याᳯं हीदᳪं सर्व्वमन्नाद्यं प्रतिष्ठितं तस्मादाहास्मादन्नादस्यै प्रतिष्ठायाऽइति ॥१२॥ अथ प्राङ् प्रेक्षते । प्राची हि देवानां दिक्तस्मात्प्राङ् प्रेक्षते ॥१३॥ स प्रेक्षते । ''अगन्म स्व''रिति देवा व्वै स्वरगन्म देवानित्येवैतदाह ''सं ज्योतिषाभूमे''ति सं देवैरभूमेत्येवैतदाह ॥१४॥ अथ सूर्यमुदीक्षते । सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रतिष्ठां गच्छति तस्मात्सूर्यमुदीक्षते ॥१५॥ स ऽउदीक्षते । ''स्वयम्भूरसि श्रेष्ठो रश्मि''रित्येष वै श्रेष्ठो रश्मिर्यत्सूर्य्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो रश्मिरिति ''व्वर्चोदा ऽअसि व्वर्चो मे देही''ति त्वेवाहं ब्रवीमीति ह स्माह याज्ञवल्क्यस्तद्ध्येव ब्राह्मणेनैष्टव्यं यद्ब्रह्मवर्च्चसी स्यादित्युतो ह स्माहौपोदिते य ऽएष वाव मह्यं गा दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोऽस्मै कामः समृध्यते ॥१६॥ अथावर्त्तते । ''सूर्य्यस्यावृतमन्वावर्त्त''ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्त्तते ॥१७॥ अथ गार्हपत्यमुपतिष्ठते । द्वयं तद्यस्माद्गार्हपत्यमुपतिष्ठते गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति यावद्वेवास्येह मानुषमायुस्तस्माऽएवैतदुपतिष्ठते तस्माद्गार्हपत्यमुपतिष्ठते ॥१८॥ सऽउपतिष्ठते । ''अग्ने गृहपते सुगृहपतिस्त्वयाग्नेऽहं गृहपतिना भूयासᳪं सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूया'' ऽइति नात्र तिरोहितमिवास्त्य ''स्थूरिणौ गार्हपत्यानि

---

१. इति. क. ग. पु. २. प्रेक्षत इति. क. ग. पु. ३. मा. सं. २. २५.
४. मा. सं. २. २५. ५. मा. सं. २. २६. ६. मा. सं. २. २६.
७. मा. सं. २. २६. ८. उपतिष्ठते । अग्ने इति. क. ग. पु. ९. मा. सं. २. २७.
१०. मा. सं. २. २७.

सन्त्विव''त्यनार्त्तानि नौ गार्हपत्यानि सन्त्वित्येवैतदाह ''शतꣳ हिमा'' ऽइति शतं वर्षाणि जीव्यासमित्येवैतदाह तदप्येतद्ब्रुवन्नाद्रियेतापि हि भूयाꣳसि शताद्वर्षेभ्यः पुरुषो जीवति तस्मादप्येतद्ब्रुवन्नाद्रियेत ॥१९॥ अथावर्त्तते । ''सूर्यस्यावृतमन्वावर्त्त''ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्त्तते ॥२०॥ अथ पुत्रस्य नाम गृह्णाति । इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति यदि पुत्रो न स्यादप्यात्मन ऽएव नाम गृह्णीयात् ॥२१॥ अथाहवनीयमुपतिष्ठते । प्राङ्मे यज्ञोऽनुसन्तिष्ठाताऽइति तूष्णीमुपतिष्ठते ॥२२॥ अथ व्रतं विसृजते । ''इदमहं यऽ एवास्मि सोऽस्मी''त्यमानुषऽइव वाऽएतद्भवति यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहꣳ सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिदमहं यऽएवास्मि सोऽस्मीत्येव व्रतं विसृजेत ॥२३॥

Cf. का. श. २. ८. ४. तै. सं. १. ७. ५. ७.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
प्रथमकाण्डे सप्तमप्रपाठके चतुर्थं ब्राह्मणम् ॥

इति सप्तमः प्रपाठकस्समाप्तः ॥

( इति नवमोऽध्यायः )

( कण्डिकासंख्या ११४ )

## इति शुक्लयजुर्वेदीये माध्यन्दिनीयशतपथब्राह्मणे हविर्यज्ञनाम प्रथमं काण्डं समाप्तम् ॥

( प्रथमकाण्डकण्डिकासङ्ख्या ८३८ )

---

१. मा. सं. २. २७.
२. मा. सं. २. २७.
३. प्रतिष्ठां इति. क. ग. पु.
४. उपतिष्ठत इति. क. ग. पु.
५. मा. सं. २. २८.
६. सप्तमप्रपाठकस्थकण्डिकानां संख्या ।

# अथ एकपान्नाम द्वितीयं काण्डम्॥

॥ तत्र प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

( अग्न्याधेयम् , पुनराधेयम् , अग्निहोत्रम् , अग्न्युपस्थानम् ,
पिण्डपितृयज्ञः, आग्रयणेष्टिः, दाक्षायणयज्ञः,
चातुर्मास्यानि चात्र काण्डेऽभिधीयन्ते )

( अग्न्याधेयम् )

२. १. १.

*हरिः ॐ । स यद्वाऽइतश्चेतश्च सम्भरति । तत्सम्भाराणाꣳ सम्भारत्वं यत्र यत्राग्नेर्न्यक्तं ततस्ततः सम्भरति तद्यशसेव त्वदेवैनमेतत्समर्धयति पशुभिरिव त्वन्मिथुनेनेव त्वत्सम्भरन् ॥१॥ अथोल्लिखति । तद्यदेवास्यै पृथिव्याऽअभिष्ठितं वाभिष्ठ्यूतं वा तदेवास्याऽएतदुद्धन्त्यथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वाऽउल्लिखति ॥२॥ अथाद्भिरभ्युक्षति। एष वाऽअपाꣳ सम्भारो यदद्भिरभ्युक्षति तद्यदपः सम्भरत्यन्नं वाऽआपोऽन्नꣳ हि वाऽआपस्तस्माद्यदेमं लोकमापऽआगच्छन्त्यथेहान्नाद्यं जायते तदन्नाद्येनैवैनमेतत्समर्द्धयति ॥३॥ योषा वाऽआपः । वृषाग्निर्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयत्यद्भिर्वाऽइदꣳ-सर्वमाप्तमद्भिरेवैनमेतदाप्त्वाधत्ते तस्मादपः सम्भरति ॥४॥ अथ हिरण्यꣳ सम्भरति । अग्निर्ह वाऽअपोऽभिदध्यौ मिथुन्याभिः स्यामिति ताः सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्तस्मादेतदग्निसङ्काशमग्नेर्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि प्रासिञ्चत्तस्मादेनेन न धावयति न किं चन करोत्यथ यशो देवरेतसꣳ हि तद्यशसैवैनमेतत्समर्द्धयति सरेतसमेव कृत्स्नमग्निमाधत्ते तस्माद्धिरण्यꣳ सम्भरति ॥५॥ अथो-

---

* काण्डमिदं काण्वशतपथे प्रथमकाण्डत्वेन परिगणितम् ।

१. मिथुनेन. घ. २. तास्विति. घ.

षान्त्सम्भरति । असौ ह वै द्यौरस्यै पृथिव्याऽएतान् पशून् प्रददौ तस्मा-
त्पशव्यमूषरमित्याहुः पशवो ह्येवैते साक्षादेव तत्पशुभिरेवैनमेतत्सम-
र्द्धयति तेऽमुतऽआगताऽअस्यां पृथिव्यां प्रतिष्ठितास्तमनयोर्द्यावापृथि-
व्यो रसं मन्यन्ते तदनयोरेवैनमेतद्द्यावापृथिव्यो रसेन समर्द्धयति
तस्मादूषान्त्सम्भरति ॥६॥ अथाखुकरीषꣳ सम्भरति । आखवो ह
वाऽअस्यै पृथिव्यै रसं विदुस्तस्मात्तेऽधोऽध इमां पृथिवीं चरन्तः
पीविष्ठाऽअस्यै हि रसं विदुस्ते यत्र तेऽस्यै पृथिव्यै रसं व्विदुस्ततऽ
उत्किरन्ति [1]तदस्याऽएवैनमेतत्पृथिव्यै रसेन समर्द्धयति तस्मादाखुक-
रीषꣳ सम्भरति पुरीष्यऽइति वै तमाहुर्यः श्रियं गच्छति समानं वै
पुरीषं च करीषं च तदेतस्यैवावरुध्यै [2]तस्मादाखुकरीषꣳ सम्भरति
॥७॥ अथ शर्कराः सम्भरति । देवाश्च वाऽअसुराश्चोभये प्राजाप-
त्याः पस्पृधिरे सा हेयं पृथिव्यलेलायद्यथा पुष्करपर्णमेवं ताꣳ ह स्म
व्वातः संव्वहति सोपैव देवाञ्जगामोपासुरान्त्सा यत्र देवानुपजगाम॥८॥
तद्धोचुः । हन्तेमां प्रतिष्ठां दृꣳहामहै तस्यां ध्रुवायामशिथिलायाम-
ग्नीऽआदधामहै ततोऽस्यै सपत्नान्निर्भक्ष्यामऽइति ॥९॥ तद्यथा शङ्कु-
भिश्चर्म विहन्यात् । एवमिमां प्रतिष्ठाꣳशर्कराभिः पर्यबृꣳहन्त[3] सेयं
ध्रुवाशिथिला प्रतिष्ठा तस्यां ध्रुवायामशिथिलायामग्नीऽआदधत ततो-
ऽस्यै सपत्नान्निरभजन् ॥१०॥ तथोऽएवैष ऽएतत् । इमां प्रतिष्ठाꣳ
शर्कराभिः परिबृꣳहते तस्यां ध्रुवायामशिथिलायामग्नीऽआधत्ते ततो-
ऽस्यै सपत्नान्निर्भजति तस्माच्छर्कराः सम्भरति॥११॥ तान्वाऽएतान्।
पञ्च सम्भारान्त्सम्भरति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सर-
स्य ॥१२॥ तदाहुः । षडेवर्तवः संवत्सरस्येति न्यूनमु तर्हि मिथुनं
प्रजननं क्रियते न्यूनाद्वाऽइमाः प्रजाः प्रजायन्ते तच्छ्रः श्रेयसमुत्तरावत्त-
स्मात्पञ्च भवन्ति यद्यु षडेवर्तवः संवत्सरस्येत्यग्निरेवैतेषाꣳ षष्ठस्त-
थोऽएवैतदन्यूनं भवति ॥१३॥ [4]तदाहुः । नैवैकञ्चन सम्भारꣳ सम्भरे-

---

१. तस्मादस्या इति. घ. २. तस्मादाखुकरीषमिति. ग. पु. ३. बृꣳहन्त घ.
४. तदाहुः इति. ग. पु.

दित्यस्यां वाऽएते सर्व्वे पृथिव्यां भवन्ति स यदेवास्यामाधत्ते तत्सर्व्वान्सम्भारानाप्नोति तस्मान्नैवैकञ्चन सम्भारꣳ सम्भरेदिति तदु समेव भरेद्यद्धैवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति यदु सम्भारैः सम्भृतैर्भवति तदु भवति तस्मादु समेव भरेत् ॥१४॥ Cf. का. श. १. १. १; तै. ब्रा. १. १. ३; मै. सं. १. ६. ३; का. सं. ८. २; कपि. सं. ६. ७; शा. ब्रा. १. १.

इति शुक्लयजुर्वेदीयमाध्यान्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

२. १. २.

कृत्तिकास्वग्नीऽआदधीत । एता वाऽअग्निनक्षत्रं यत्कृत्तिकास्तद्धै सलोम योऽग्निनक्षत्रेऽग्नी आदधातै तस्मात्कृत्तिकास्वादधीत ॥१॥ एकं द्वे त्रीणि । चत्वारीति वाऽअन्यानि नक्षत्राण्यथैता ऽएव भूयिष्ठा यत्कृत्तिकास्तद्भूमानमेवैतदुपैति तस्मात्कृत्तिकास्वादधीत ॥२॥ एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्व्वाणि ह वाऽअन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतस्तस्मात्कृत्तिकास्वादधीत ॥३॥ अथ यस्मान्न कृत्तिकास्वादधीत । ऋक्षाणाꣳ ह वाऽएता ऽअग्रे पत्न्य ऽआसुः सप्तर्षीनु ह स्म वै पुरर्क्षा ऽइत्याचक्षते ता मिथुनेन व्यार्ध्यन्तामी ह्युत्तरा हि सप्त ऽऋषय ऽउद्यन्ति पुर ऽएता अशमिव वै तद्यो मिथुनेन व्यृद्धः स नेन्मिथुनेन व्यृध्याऽइति तस्मान्न कृत्तिकास्वादधीत ॥४॥ तद्वेव दधीत । अग्निर्व्वाऽएतासां मिथुनमग्निनैता मिथुनेन समृद्धास्तस्मादेव दधीत ॥५॥ रोहिण्यामग्नीऽआदधीत । रोहिण्याꣳ ह वै प्रजापतिः प्रजाकामोऽग्नीऽआदधे ऽस प्रजा असृजत ता ऽअस्य प्रजाः सृष्टा ऽएकरूपा ऽउपस्तब्धास्तस्थू रोहिण्यऽ इवैव तद्वै रोहिण्यै रोहिणीत्वं बहुर्हैव प्रजया पशुभिर्भवति य ऽएवं

१. तस्मात्. घ. २. समेव घ. ३. एता. घ.
४, ५. आदधीत इति. ग. ६. तस्मादेव. घ.

विद्वान् रोहिण्यामाधत्ते ॥६॥ रोहिण्यामु ह वै पशवः।अग्नीऽआदधिरे मनुष्याणां कामꣳरोहेमेति ते मनुष्याणां काममरोहन्यमु हैव तत्पशवो मनुष्येषु काममरोहंस्तमु हैव पशुषु कामꣳरोहति य ऽएवं विद्वान् रोहिण्यामाधत्ते ॥७॥ मृगशीर्षेऽग्नीऽआदधीत । एतद्वै प्रजापतेः शिरो [1]यन्मृगशीर्षꣳ श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर ऽइत्याहुः।श्रियꣳ ह गच्छति य ऽएवं विद्वान्मृगशीर्षऽआधत्ते[2] ॥८॥ अथ यस्मान्न मृगशीर्षऽआदधीत । प्रजापतेर्वाऽएतच्छरीरं यत्र वाऽएनं तदविध्यंस्तदिषुणा त्रिकाण्डेनेत्याहुः[3] स एतच्छरीरमजहाद्वास्तु वै शरीरमयज्ञियं निर्वीर्य्यं तस्मान्न मृगशीर्षऽआदधीत ॥९॥ तद्वेव दधीत । न वाऽएतस्य देवस्य वास्तु नायज्ञियं न शरीरमस्ति [4]यत्प्रजापतेस्तस्मादेव दधीत पुनर्वस्वोः पुनराधेयमादधीतेति ॥१०॥ फल्गुनीष्वग्नीऽआदधीत । एता वाऽइन्द्रनक्षत्रं यत्फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता ऽएतत्परोक्षमाचक्षते फल्गुन्य ऽइति को ह्येतस्यार्हति गुह्यं नाम [5]ग्रहीतुमिन्द्रो वै यजमानस्तत्स्वऽएवैतन्नक्षत्रेऽग्नी आधत्तऽइन्द्रो यज्ञस्य देवतैतेनो हास्यैतत्सेन्द्रमग्न्याधेयं भवति पूर्वयोरादधीत पुरस्तात्क्रतुर्हैवास्मै भवत्युत्तरयोरादधीत श्वः श्रेयसꣳ हैवास्माऽउत्तरावद्भवति ॥११॥ हस्तेऽग्नीऽआदधीत । यऽइच्छेत्प्र मे दीयेतेति तद्धाऽअनुष्ठ्या यद्धस्तेन प्रदीयते प्र हैवास्मै दीयते ॥१२॥ चित्रायामग्नीऽआदधीत । देवाश्च वाऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे तऽउभयऽएवामुं लोकꣳ [6]समारुरुक्षांचक्रुर्दिवमेव ततोऽसुरा रौहिणमित्यग्निं चिक्यिरेऽ[7]नेनामुं लोकꣳ समारोक्ष्यामऽ[8]इति ॥१३॥ इन्द्रो ह वाऽईक्षां चक्रे । इमं चेद्वाऽइमे चिन्वते ततऽएव नोऽभिभवन्तीति स ब्राह्मणो ब्रुवाणऽएकेष्टकां प्रवध्येयाय ॥१४॥ स होवाच ।

---

१. यन्मृगशीर्ष इति. ख.　२. आधत्ते. घ.　३. See ऐ. ब्रा. ३. ३. ९.
४. यदिति. घ.　५. ग्रहीतुमिति. घ.　६. समारुरुक्षाञ्चक्रुः. घ.
७. अनेनामुमिति. घ.　८. इति. घ.

हन्ताहमिमामप्युपदधाऽइति तथेति तामुपाधत्त तेषामल्पकादेवाग्निर-सञ्चितऽआस ॥१५॥ अथ होवाच । अन्वाऽअहं तां दास्ये या ममेहेति तामभिपद्या बबर्ह तस्यामावृढायामग्निर्व्यवशशादाग्नेर्व्यवशादमःन्वसुरा व्यवशेदुः स ताऽएवेष्टका व्वज्ञान् कृत्वा ग्रीवाः प्रचिच्छेद ॥१६॥ ते ह देवाः समेत्योचुः । चित्रं वाऽअभूम यऽइयतः सपत्नानवधिष्मेति तद्वै चित्रायै चित्रात्वं चित्रᳫँ ह भवति हन्ति सपत्नान् हन्ति द्विषन्तं भ्रातृव्यं यऽएवं व्विद्वांश्चित्रायामाधत्ते तस्मादेतत्क्षत्रियऽएव नक्षत्रमुपेत्सेँज्जिघाᳫँसतीव ह्येष सपत्नान्वीव जिगीषते ॥१७॥ नाना ह वाऽएतान्यग्रे क्षत्राण्यासुः । यथैवासौ सूर्य्यऽएवं तेषामेषऽउद्यन्नेव वीर्य्यं क्षत्रमादत्त तस्मादादित्यो नाम यदेषां वीर्य्यं क्षत्रमादत्त ॥१८॥ ते ह देवा ऽऊचुः । यानि वै तानि क्षत्राण्यभूवन्न वै तानि क्षत्राण्यभूवन्निति तद्वै नक्षत्राणां नक्षत्रत्वं तस्मादु सूर्य्यनक्षत्रऽएव स्यादेष ह्येषां व्वीर्य्यं क्षत्रमादत्त यद्यु नक्षत्रकामः स्यादेतद्वाऽअनपराद्धं नक्षत्रं यत्सूर्य्यः स ऽएतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत तदुपेत्सेँत्तस्मादु सूर्य्यनक्षत्रऽएव स्यात् ॥१९॥ Cf. का. श. १. १. २; तै. ब्रा. १. १. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥

## २. १. ३.

वसन्तो ग्रीष्मो व्वर्षाः[3] । ते देवा ऽऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य ऽएवापूर्य्यतेऽर्द्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्व्वाह्णो देवा ऽअपराह्णः पितरः ॥१॥ ते वाऽएतऽऋतवः । देवाः पितरः स यो हैवं व्विद्वान्“देवाः पितर” इति ह्वयत्या हास्य देवा देवहूयं गच्छन्त्या पितरः पितृहूयमवन्ति हैनं

१. व्यवशादिति. ग. २. चित्रात्वᳫँ इति. ग. ३. व्वर्षाः इति. ग. घ.

देवा देवहूयेऽवन्ति पितरः पितृहूये य ऽएवं विद्वान्देवाः पितर ऽइति ह्वयति ॥२॥ स यत्रोदगावर्त्तते । देवेषु तर्हि भवति देवांस्तर्ह्यभिगोपायत्यथ यत्र दक्षिणा व्वर्तते पितृषु तर्हि भवति पितॄंस्तर्ह्यभिगोपायति॥३॥ स यत्रोदगावर्त्तते । तर्ह्यग्नीऽआदधीतापहतपाप्मानो देवा अप पाप्मानँ हतेऽमृता देवानामृतत्वस्याशास्ति सर्व्वमायुरेति यस्तर्ह्याधत्तेऽथ यत्र दक्षिणा वर्त्तते यस्तर्ह्याधत्तेऽनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा ह्यायुषो म्रियते यस्तर्ह्याधत्ते ॥४॥ ब्रह्मैव व्वसन्तः । क्षत्रं ग्रीष्मो व्विडेव व्वर्षास्तस्माद्ब्राह्मणो व्वसन्तऽआदधीत ब्रह्म हि व्वसन्तस्तस्मात्क्षत्रियो ग्रीष्मऽआदधीत ᳚ । ँहि ग्रीष्मस्तस्माद्वैश्यो व्वर्षास्वादधीत व्विड्ढि व्वर्षाः ॥५॥ स यः कामयेत । ब्रह्मवर्चसी स्यामिति व्वसन्ते स ऽआदधीत ब्रह्म वै व्वसन्तो ब्रह्मवर्चसी हैव भवति ॥६॥ अथ यः कामयते । क्षत्रँ श्रिया यशसा स्यामिति ग्रीष्मे स ऽआदधीत क्षत्रं वै ग्रीष्मः क्षत्रँ हैव श्रिया यशसा भवति ॥७॥ अथ यः कामयेत । बहुः प्रजया पशुभिः स्यामिति व्वर्षासु सऽआदधीत व्विड्वै व्वर्षाऽअन्नं व्विशो बहुर्हैव प्रजया पशुभिर्भवति य ऽएवं व्विद्वान्वर्षास्वाधत्ते॥८॥ ते वाऽएतऽऋतवः । उभयऽएवापहतपाप्मानः सूर्य ऽएवैषां पाप्मनोऽपहन्तोद्यन्नेवैषामुभयेषां पाप्मानमपहन्ति तस्माद्यदैवैनं कदा च यज्ञ उपनमेदथाग्नीऽआदधीत न श्वःश्वमुपासीत को हि मनुष्यस्य श्वो व्वेद ॥९॥ Cf. का. श. १. १. ३.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥

२. १. ४.

यदहरस्य श्वोऽग्न्याधेयँ स्यात् । दिवैवाश्नीयान्मनो ह वै देवा

---

१. २. उदङ्ङावर्तत इति. ख. घ. ३. पाप्मानमिति. घ.
४. आधत्ते इति. घ. ५. व्वर्षाः घ. ६. क्षत्रमिति. ग. घ. ७. प्रजयेति. घ.
८. आधत्ते. घ. आधत्ते. ग. ९. यदहरस्येति. घ.

मनुष्यस्याजानन्ति तेऽस्यैतच्छ्वोऽग्न्याधेयं विदुस्तेऽस्य[1] विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स ऽउपवसथः[2] ॥१॥ तन्न्वेवानवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु दिवैवाश्नीयात्तद्वपि काममेव नक्तमश्नीयान्नो ह्यनाहिताग्नेर्व्रतचर्यास्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताग्निस्तस्माद्वपि काममेव नक्तमश्नीयात् ॥२॥ तद्धैकेऽजमुपबध्नन्ति । आग्नेयोऽजो ऽग्नेरेव सर्वत्वायेति[3] वदन्तस्तदु तथा न कुर्याद्यद्यस्याजः स्यादग्नीध ऽएवैनं प्रातर्दद्यात्तेनैव तं काममाप्नोति तस्मादु तन्नाद्रियेत ॥३॥ अथ चातुष्प्राश्यमोदनं पचन्ति छन्दाꣳस्यनेन प्रीणीम ऽइति यथा येन वाहनेन स्यन्त्स्यन्त्स्यात्तत्सुहितं कर्त्तवै ब्रूयादेवमेतदिति[4] वदन्तस्तदु तथा न कुर्याद्यद्वाऽअस्य ब्राह्मणाः कुले वसन्त्यृत्विजश्चानृत्विजश्च तेनैव तं काममाप्नोति तस्मादु तन्नाद्रियेत ॥४॥ तस्य सर्पिरासेचनं कृत्वा । सर्पिरासिच्याश्वत्थीस्तिस्रः[5] समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधति शमीगर्भमेतदाप्नुम ऽइति वदन्तः स यः पुरस्तात्संवत्सरमभ्यादध्यात्स ह तं काममाप्नुयात्तस्मादु तन्नाद्रियेत ॥५॥ तदु होवाच भाल्लवेयः । यथा वा ऽअन्यत्करिष्यन्त्सोऽन्यत्कुर्याद्यथान्यद्वदिष्यन्त्सोऽन्यद्वदेद्यथान्येन पथैष्यन्त्सोऽन्येन प्रतिपद्येतैवं तद्य ऽएतं चातुष्प्राश्यमोदनं पचेदपराद्धिरेव सेति न हि तदवकल्पते यस्मिन्नग्नावृचा वा साम्ना वा यजुषा वा समिधं वाभ्यादध्यादाहुतिं वा जुहुयाद्यत्तं दक्षिणा वा हरेयुरनु वा गमयेयुर्दक्षिणा वा ह्येनꣳ हरन्त्यन्वाहार्यपचनो भविष्यतीत्यनु वा गमयन्ति[6] ॥६॥ अथ जाग्रति जाग्रति

---

१. विदुस्ते इति. घ. २. उपवसथः इति. ग.घ.

३. See मै. सं. १.६.४; and आप. श्रौ. ५.७.१७.

४. See मै. सं. १. ६. १२; तै. ब्रा. १. १. ९. ८.

५. सर्पिरासेचनमिति. घ.

६. See मै. सं. १. ६. १२. and तै. ब्रा. १. १. ९. ३. अनयोरेव ब्राह्मणभागयोरत्र खण्डनमिति प्रतिभाति ।

देवाः । तद्देवानेवैतदुपावर्त्तते । स सदेवतरः श्रान्ततरस्तपस्वितरोऽग्नीऽआधत्ते तद्ध्यपि काममेव स्वप्यान्नो ह्यनाहिताग्नेर्व्रतचर्य्यास्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताग्निस्तस्माद्ध्यपि काममेव स्वप्यात् ॥७॥ तद्धैकेऽनुदिते मथित्वा । तमुदिते प्राञ्चमुद्धरन्ति तदु तदुभेऽअहोरात्रे परिगृह्णीमः प्राणोदानयोर्मनसश्च व्वाचश्च पर्य्याप्त्याऽइति व्वदन्तस्तदु तथा न कुर्य्यादुभौ हैवास्य तथानुदितऽआहितौ भवतोऽनुदिते हि मथित्वा तमुदिते प्राञ्चमुद्धरन्ति स य ऽउदितऽआहवनीयं मन्थेत्स ह तत्पर्य्याप्नुयात् ॥८॥ अहर्वै देवाः । अनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा ह्यायुषो म्रियते योऽनुदिते मन्थत्यपहतपाप्मानो देवा ऽअप पाप्मानꣳ हतेऽमृता देवा नामृतत्वस्याशास्ति सर्व्वमायुरेति श्रीर्देवाः श्रियं गच्छति यशो देवा यशो ह भवति य ऽएवं विद्वानुदिते मन्थति ॥९॥ तदाहुः । यन्नर्चा न साम्ना न यजुषाग्निराधीयतेऽथ केनाधीयतऽइति ब्रह्मणो हैवैष ब्रह्मणाधीयते व्वाग्वै ब्रह्म तस्यै व्वाचः सत्यमेव ब्रह्म ता वाऽएताः सत्यमेव व्याहृतयो भवन्ति तदस्य सत्येनैवाधीयते ॥१०॥ भूरिति वै प्रजापतिः । इमामजनयत भुव ऽइत्यन्तरिक्षꣳ स्वरिति दिवमेतावद्वाऽइदꣳ सर्व्वं यावदिमे लोकाः सर्व्वेणैवाधीयते ॥११॥ भूरिति वै प्रजापतिः । ब्रह्माजनयत भुव ऽइति क्षत्रꣳ स्वरिति व्विशमेतावद्वाऽइदꣳसर्वं यावद्ब्रह्मक्षत्रं व्विट्सर्व्वेणैवाधीयते ॥१२॥ भूरिति वै प्रजापतिः । आत्मानमजनयत भुव ऽइति प्रजाꣳ स्वरिति पशूनेतावद्वाऽइदꣳ सर्वं यावदात्मा प्रजा पशवः सर्व्वेणैवाधीयते ॥१३॥ स वै भूर्भुव ऽइति । एतावतैव गार्हपत्यमादधात्यथ यत्सर्वैरादध्यात्केनाहवनीयमादध्याद्धेऽअक्षरे परिशिनष्टि तेनोऽएतान्ययातयामानि भवन्ति तैस्सर्वैः पञ्चभिराहवनीयमादधाति भूर्भुवः स्वरिति तान्यष्टावक्षराणि सम्पद्यन्तेऽष्टाक्षरा वै गायत्री गायत्र-

---

१. अत्र 'तस्मिन्नुपव्युषमरणी निष्टपेत् । तं मथित्वा प्राञ्चमुद्धरति' इति तैत्तिरीयब्राह्मणगतं वाक्यद्वयं पर्यालोचनीयम् । तस्यैवेदं खण्डनम् ।

मग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते ॥१४॥ देवान् ह वाऽअग्नीऽआधास्यमानान् । तानसुररक्षसानि ररक्षुर्नाग्निर्जनिष्यते नाग्नीऽआधास्यध्वऽइति तद्यद्रक्षंस्तस्माद्रक्षाᳬंसि ॥१५॥

( अर्द्धप्रपाठकः ॥५७॥ )

ततो देवा ऽएतं व्वज्रं ददृशुः । यदश्वं तं पुरस्तादुदश्रयंस्तस्याभयेऽनाष्ट्रे निवातेऽग्निरजायत तस्माद्यत्राग्निं मन्थिष्यन्त्स्यात्तदश्वमानेतवै ब्रूयात्स पूर्व्वेणोपतिष्ठते व्वज्रमेवैतदुच्छ्रयति तस्याभयेऽनाष्ट्रे निवातेऽग्निर्जायते ॥१६॥ स वै पूर्व्ववाट् स्यात् । स ह्यपरिमितं व्वीर्यमभिवर्द्धते यदि पूर्व्ववाहं न विन्देदपि य ऽएव कश्चाश्वः स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादेष ह्येवानडुहो बन्धुः ॥१७॥ तं यत्र प्राञ्चᳬं हरन्ति । तत्पुरस्तादश्वं नयन्ति तत्पुरस्तादेवैतन्नाष्ट्रा रक्षाᳬंस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण हरन्ति ॥१८॥ तं वै तथैव हरेयुः । यथैनमेष प्रत्यङ्ङुपा[1]चरेदेष वै यज्ञो यदग्निः प्रत्यङ् हैवैनं यज्ञः प्रविशति तं क्षिप्रे यज्ञ ऽउपनमत्यथ यस्मात्पराङ् भवति पराङु हैवास्माद्यज्ञो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात् ॥१९॥ एष उ वै प्राणः । तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं प्राणः प्रविशत्यथ यस्मात्पराङ् भवति पराङु हैवास्मात्प्राणो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्मात्प्राणोऽभूदितीश्वरो ह य[2]त्तथैव स्यात् ॥२०॥ शत[3]म् ॥९००॥ अयं वै यज्ञो योऽयं पवते । [4]तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं यज्ञः प्रविशति तं क्षिप्रे यज्ञ ऽउपनमत्यथ यस्मात्पराङ् भवति पराङु हैवास्माद्यज्ञो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात् ॥२१॥ एष उ वै प्राणः । [5]तं वै तथैव हरेयुर्यथैनमेष प्र-

---

१. चरेदिति. घ. २. तदेवेति. घ. ३. आदितश्शतसंख्येयम् ।
४. यं इति. घ. ५. ते इति. ग.

त्यङ्ङुपाचरेत्[1]प्रत्यङ् ह्वैवैनं प्राणः प्रविशत्यथ यस्मात्पराङ् भवति पराङु ह्वैवास्मात्प्राणो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्मात्प्राणोऽभूदितीश्वरो ह यत्तथैव स्यात्तस्मादु तथैव हरेयुः ॥२२॥ अथाश्वमाक्रमयति । तमाक्रमय्य[2] प्राञ्चमुन्नयति तं पुनरावर्तयति तमुदञ्चं प्रमुञ्चति व्वीर्यं वाऽअश्वो नेदस्मादिदं पराग्वीर्यमसदिति तस्मात्पुनरावर्तयति ॥२३॥ तमश्वस्य पदऽआधत्ते । व्वीर्यं वाऽअश्वो व्वीर्यऽएवैनमेतदाधत्ते तस्मादश्वस्य पदऽआधत्ते ॥२४॥ स वै तूष्णीमेवाग्रऽउपस्पृशति । अथोद्यच्छत्यथोपस्पृशति भूर्भुवः स्वरित्येव तृतीयेनादधाति त्रयो वाऽइमे लोकास्तदिमानेवैतल्लोकानाप्नोत्येतं न्वेकम् ॥२५॥ अथेदं द्वितीयं । तूष्णीमेवाग्रऽउपस्पृशत्यथोद्यच्छति भूर्भुवः स्वरित्येव द्वितीयेनादधाति यो वाऽअस्यामप्रतिष्ठितो भारमुद्यच्छति नैनꣳ शक्नोत्युद्यन्तुꣳ सꣳ हैनꣳ श्रृणाति ॥२६॥ स यत्तूष्णीमुपस्पृशति । तदस्यां प्रतिष्ठायां प्रतितिष्ठन्ति सोऽस्यां प्रतिष्ठित ऽआधत्ते तथा न व्यथते तदु हैतत्पञ्चेव दध्रिरऽआसुरिः पाञ्चिर्माधुकिः[3] सर्वं वाऽअन्यदियसितमिव प्रथमेनैवोद्यत्यादध्याद्भूर्भुवः स्वरिति तदेवानियसितमित्यतो यतमथा कामयेत तथा कुर्यात् ॥२७॥ अथ पुरस्तात्परीत्य । पूर्व्वार्धमुल्मुकानामभिपद्य जपति द्यौरिव भूम्ना पृथिवीव व्वरिम्णेति यथासौ द्यौर्बह्वी नक्षत्रैरेवं बहुर्भूयासमित्येवैतदाह यदाह द्यौरिव भूम्नेति पृथिवीव व्वरिम्णेति यथेयं पृथिव्युर्व्वेवमुरुर्भूयासमित्येवैतदाह तस्यास्ते पृथिवि देवयजनि पृष्ठऽइत्यस्यै ह्येनं पृष्ठऽआधत्तेऽग्निमन्नादमन्नाद्यायादधऽइत्यन्नादोऽग्निरन्नादो भूयासमित्येवैतदाह सैषाशीरेव स यदि कामयेत जपेदेतद्यद्यु कामयेतापि नाद्रियेत ॥२८॥ अथ सर्पराज्या ऽऋग्भिरुपतिष्ठते । "आयं[4] गौः पृश्नि-

१. प्रत्यङिति. घ.  २. आक्रमय्येति घ.  ३. माधुकिः इति. घ.

४. See. तै. सं. १. ५. ४. १. मन्त्रत्रयमिदं माध्यन्दिनसंहितायां तृतीयाध्याये ( ३. ६. ८. ) ऋग्वेदे ( ८. ८. ४५ ) च पठितम् । अत्राऽपि पुनः पाठः किमर्थं इति न ज्ञायते ।

रक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ त्रिᳬशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रति वस्तोरह द्युभि''रिति तद्यदेवास्यात्र सम्भारैर्वा नक्षत्रैर्वर्त्तुभिर्व्वाधानेन वानाप्तं भवति तदेवास्यैतेन सर्वमाप्तं भवति तस्मात्सर्पराज्ञ्या ऽऋग्भिरुपातिष्ठते ॥२९॥ तदाहुः[1] । न सर्पराज्ञ्या ऽऋग्भिरुपतिष्ठेतेतीयं वै पृथिवी सर्पराज्ञी स यदेवास्यामाधत्ते तत्सर्व्वान् कामानाप्नोति तस्मान्न[2] सर्पराज्ञ्या ऽऋग्भिरुपतिष्ठेतेति ॥३०॥ Cf. का. श. १. १. ४; तै. ब्रा. १. १. ५; मै. सं. १. ६. ४; काठ. सं. ८. ५.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे प्रथमपाठके चतुर्थं ब्राह्मणम् ॥

( इति प्रथमोऽध्यायस्समाप्तः )

## २. १. ५.

उद्धृत्याहवनीयं पूर्णाहुतिं जुहोति । तद्यत्पूर्णाहुतिं जुहोत्यन्नादं वाऽएतमात्मनो जनयते[3] यदग्निं तस्माऽएतदन्नाद्यमपिदधाति यथा कुमाराय वा जाताय वत्साय वा स्तनमपिदध्यादेवमस्माऽएतदन्नाद्यमपिदधाति ॥१॥ स ऽएतेनान्नेन शान्तः । उत्तराणि हवीᳬषि श्रप्यमाणान्युपरमति शश्वद्ध वाऽअध्वर्युं वा यजमानं वा प्रदहेत्तौ[4] ह्यस्य नेदिष्ठं चरतो यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वाऽएतामाहुतिं जुहोति ॥ २ ॥ तां वै पूर्णां जुहोति । सर्व्वं वै पूर्णᳬ सर्व्वेणैवैनमेतच्छमयति स्वाहाकारेण जुहोत्यनिरुक्तो वै स्वाहाकारः सर्व्वं वाऽअनिरुक्तᳬ सर्व्वेणैवैनमेतच्छमयति ॥३॥ यां वै प्रजापतिः । प्रथमामाहुतिमजुहोत्स्वाहेति वै तामजुहोत्सो स्विदेषा निदानेन तस्मात्स्वाहेति

---

१ तदाहुरिति. घ॰ — २. See तै. सं. १. ५. ४. १.

३. जनयते इति. घ. — ४. प्रवहेदिति. घ.

जुहोति तस्यां व्वरं ददाति सर्व्वं वै व्वरः सर्वेणैवेनमेतच्छमयति ॥४॥ तद्धाहुः । एतामेवाहुतिᳬं हुत्वाथोत्तराणि हवीᳬंषि नाद्रियेतैतयैव तं काममाप्नोति यमभिकाममुत्तराणि हवीᳬंषि निर्व्वपतीति ॥५॥ स वाऽअग्नये पवमानाय निर्व्वपति । प्राणो वै पवमानः प्राणमेवास्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधात्यन्नᳬं हि प्राणोऽन्नमेषाहुतिः ॥६॥ अथाग्नये पावकाय निर्व्वपति । अन्नं वै पावकमन्नमेवास्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधात्येषा ह्येव प्रत्यक्षमन्नमाहुतिः ॥७॥ अथाग्नये शुचये निर्व्वपति । व्वीर्यं वै शुचि यद्वाऽअस्यैतदुज्ज्वलत्येतदस्य व्वीर्यᳬं शुचि व्वीर्यमेवास्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधाति यदाह्येवास्मिन्नेतामाहुतिं जुहोत्यथास्यैतद्वीर्यᳬं शुच्युज्ज्वलति ॥८॥ तस्मादाहुः । एतामेवाहुतिᳬंहुत्वाथोत्तराणि हवीᳬंषि नाद्रियेतैतयैव[1] तं काममाप्नोति यमभिकाममुत्तराणि हवीᳬंषि निर्व्वपतीति तदु निर्व्वपेदेवोत्तराणि हवीᳬंषि परोक्षमिव वाऽएतद्यददस्तदिदमितीव ॥९॥ स[2] यदग्नये पवमानाय निर्व्वपति । प्राणो वै पवमानो यदा वै जायतेऽथ प्राणोऽथ यावन्न[3] जायते मातुर्वैव तावत्प्राणमनु प्राणिति यथा वा तज्जातऽएवास्मिन्नेतत्प्राणं दधाति ॥१०॥ अथ यदग्नये पावकाय निर्व्वपति । अन्नं वै पावकं तज्जातऽएवास्मिन्नेतदन्नं दधाति ॥११॥ अथ यदग्नये शुचये निर्व्वपति । व्वीर्यं वै शुचि यदा वाऽअन्नेन व्वर्धतेऽथ व्वीर्यं तदन्नेनैवैनमेतद्वर्द्धयित्वाथास्मिन्नेतद्वीर्यᳬं शुचि दधाति तस्मादग्नये शुचये ॥१२॥ तद्वेतदेव सद्विपर्यस्तमिव । अग्निर्ह यत्र देवेभ्यो मनुष्यानभ्युपाववर्त्त तद्धेक्षां चक्रे मैव सर्वेणैवात्मना मनुष्यानभ्युपावृतमिति ॥१३॥ स ऽएतास्तिस्रस्तनूरेषु लोकेषु व्विन्यधत्त । यदस्य पवमानᳬं रूपमासीत्तदस्यां पृथिव्यां न्यधत्ताथ यत्पावकं तदन्तरिक्षेऽथ यच्छुचि तद्दिवि तद्वाऽऋषयः प्रतिबुबुधिरे यऽउ तर्ह्यृषय आसुरसर्व्वेण वै न ऽआत्मनाग्निरभ्युपावृतदिति तस्माऽएतानि

---

१. नाद्रियेतैतयेति. घ.   २. स यदग्नय इति. घ.   ३. यावत् इति. घ.

हवीꣳषि निरवपन् ॥१४॥ स यदग्नये पवमानाय निर्व्वपति । यदे-
वास्यास्यां पृथिव्याꣳ रूपं तदेवास्यैतेनाप्नोत्यथ यदग्नये पावकाय
निर्व्वपति यदेवास्यान्तरिक्षे रूपं तदेवास्यैतेनाप्नोत्यथ यदग्नये शुचये
निर्व्वपति यदेवास्य दिवि रूपं तदेवास्यैतेनाप्नोत्येवमु कृत्स्नमेवाग्नि-
मनपनिहितमाधत्ते तस्मादु निर्व्वपेदेवोत्तराणि हवीꣳषि ॥१५॥ केव-
लबर्हिः प्रथमꣳ हविर्भवति । समानबर्हिंषी ऽउत्तरे ऽअयं[1] वै लोकः
प्रथमꣳ हविरथेदमन्तरिक्षं द्वितीयं द्यौरेव तृतीयं बहुलेव वा ऽइयं
पृथिवी लेलयेवान्तरिक्षं लेलयेवासौ द्यौरुभे चिदेनां प्रत्युद्यामिनीस्ता-
मिति तस्मात्समानबर्हिंषि ॥१६॥ अष्टाकपालाः सर्वे पुरोडाशा भव-
न्ति । अष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसा-
धत्ते तानि सर्व्वाणि चतुर्विंꣳशतिः[2] कपालानि सम्पद्यन्ते चतुर्विंꣳश-
त्यक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसाधत्ते गायत्र्यो
याज्यानुवाक्या भवन्ति गायत्रमग्नेश्छन्दः स्वेनैवैनमतच्छन्दसाधत्ते
॥१७॥ अथादित्यै चरुं निर्व्वपति । प्रच्यवत ऽइव वा ऽएषो ऽस्माल्लोकाद्य
ऽएतानि हवीꣳषि निर्व्वपतीमान्[3] हि लोकांत्समारोहन्नेति ॥१८॥ स य-
ददित्यै चरुं निर्व्वपति । इयं वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्यामे-
वैतत्प्रतिष्ठायां प्रतितिष्ठति तस्माददित्यै चरुं[4] निर्व्वपति ॥१९॥ तस्यै
विराजौ संयाज्ये स्यातामित्याहुः[5] । विराड्ढीयमित्यथो त्रिष्टुभौ त्रिष्टु-
ब्भीयमित्यथो जगत्यौ जगती हीयमिति विराजावित्येव स्याताम्
॥२०॥ तस्यै धेनुर्द्दक्षिणा । धेनुरिव वा ऽइयं मनुष्येभ्यः सर्व्वान् कामा-
न्दुहे माता धेनुर्म्मातेव वा ऽइयं मनुष्यान् बिभर्ति तस्माद्धेनुर्द्दक्षिणैतन्न्वे-
कमयनम् ॥२१॥ अथेदं द्वितीयम् । आग्नेयमेवाष्टाकपालं पुरोडाशं
निर्व्वपति परोक्षमिव वा ऽएतद्यदग्नये पवमानायाग्नये पावकायाग्नये
शुचय ऽइतीवाथाञ्जसैवैनमेतत्प्रत्यक्षमाधत्ते तस्मादग्नये ऽथादित्यै चरुं

---

१. अयं वै लोक इति. घ. २. कपालानि. इति. घ. ३. निर्व्वपतीति
४. चरुं इति. ग. ५. स्यातामिति घ.

निर्व्वपति स य ऽएव चरोर्बन्धुः स बन्धुः ॥२२॥ Cf. का. श. १. २. १; मै. सं. १. ६. ७; ८; तै. ब्रा. १. १. ५.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥

२. १. ६.

घ्नन्ति वाऽएतद्यज्ञम्। यदेनं तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुꣳ संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्याꣳहविर्यज्ञं घ्नन्ति ॥१॥ स ऽएष यज्ञो हतो न ददक्षे। तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य[1] हतस्य व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध ऽएव यज्ञो भवति तस्माद्दक्षिणा ददाति ॥२॥ ता वै षड्दद्यात्। षड्वाऽऋतवः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयति ॥३॥ द्वादश दद्यात्। द्वादश वै मासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो[2] यावत्यस्य मात्रा तावतीभिर्दक्षयति ॥४॥ चतुर्विंꣳशतिं दद्यात्। चतुर्विꣳशतिर्वै संवत्सरस्यार्द्धमासाः संवत्सरो यज्ञः प्रजापतिः स[3] यावनेव यज्ञो यावत्यस्य मात्रा तावतीभिर्द्दक्षयत्येषा मात्रा दक्षिणानां दद्यात्त्वेव यथाश्रद्धं[4] भूयसीस्तद्यद्दक्षिणा ददाति॥५॥ द्वया वै देवा देवाः। अहैव देवा अथ ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा[5] विभक्त ऽएव यज्ञ ऽआहुतय ऽएव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाꣳ शुश्रुवुषामनूचानानामाहुतिभिरेव देवान् प्रीणाति दक्षिणाभिर्मनुष्यदेवान् ब्राह्मणाञ्छुश्रुवुषोऽनूचानास्तऽएनमुभये देवाः प्रीताः सुधायां दधति ॥६॥ तद्यथा योनौ रेतो दध्यात्। एवमेवैतदृत्विजो यजमानं लोके दधति तद्यदेभ्य ऽएत-

१. यज्ञस्येति. घ. २. यज्ञः इति. ग. घ. ३. स इति नास्ति घ. पु.
४. यथाश्रद्धमिति. घ. ५. द्वेधा इति ग.

ह्वदाति ये मेदᳪं सम्प्रापिपन्निति नु दक्षिणानाम् ॥७॥ देवाश्च वाऽ-असुराश्च । उभये प्राजापत्याः पस्पृधिरे तऽउभयऽएवानात्मान ऽआसु-र्मर्त्या ह्यासुरनात्मा हि मर्त्यस्तेषूभयेषु मर्त्येष्वग्निरेवामृत ऽआस तᳪं ह स्मोभयेऽमृतमुपजीवन्ति स यᳪं ह स्मैषां घ्नन्ति तद्धस्मै व स भवति ॥८॥ ततो देवाः । तनीयाᳪंस इव परिशिशिषिरे तेऽर्चन्तः श्राम्यन्तश्चेरुरुतासुरान्त्सपत्नान्मर्त्यानभिभवेमेति तऽएतदमृतमग्न्याधे-यं ददृशुः ॥९॥ ते होचुः । हन्तेदममृतमन्तरात्मन्नादधामहै तऽइदम-मृतमन्तरात्मन्नाधायामृता भूत्वा स्तर्या भूत्वा स्तर्यान्त्सपत्नान्मर्त्यान-भिभविष्याम ऽइति ॥१०॥ ते होचुः । उभयेषु वै नोऽयमग्निः प्रत्येवा-सुरेभ्यो ब्रवामेति ॥११॥ ते होचुः । आ वै व्वयमग्नी धास्यामहेऽथ यूयं किं करिष्यथेति ॥१२॥ ते होचुः । अथैनं व्वयं न्येव धास्याम-हेऽत्र तृणानि दहात्र दारूणि दहात्रौदनं पचात्र माᳫंसं पचेति स यं तमसुरा न्यदधत तेनानेन मनुष्या भुञ्जते ॥१३॥ अथैनं देवाः । अ-न्तरात्मन्नादधत तऽइममृतमन्तरात्मन्नाधायामृता भूत्वा स्तर्या भूत्वा-स्तर्यान्त्सपत्नान्मर्त्यानभ्यभवंस्तथोऽएवैष एतदमृतमन्तरात्मन्नाधत्ते नामृतत्वस्याशास्ति सर्वमायुरेत्यस्तर्यो हैव भवति न हैनᳪं सपत्न-स्तुस्तूर्षमाणश्च न स्तृणुते तस्माद्यदाहिताग्निश्चानाहिताग्निश्च स्पर्धे-तेऽआहिताग्निरेवाभिभवत्यस्तर्यो हि खलु स तर्हि भवत्यमृतः ॥१४॥ तद्यत्रैनमदो मन्थन्ति । तज्जातमभिप्राणिति प्राणो वाऽअग्निर्जातमेवै-नमेतत्सन्तं जनयति स पुनरपानिति तदेनमन्तरात्मन्नाधत्ते सोऽस्यै-षोऽन्तरात्मन्नग्निराहितो भवति ॥१५॥ तमुद्दीप्य समिन्द्धे । इह यक्ष्यऽइह सुकृतं करिष्यामीत्येवैनमेतत्समिन्द्धे योऽस्यैषोऽन्तरात्मन्न-ग्निराहितो भवति ॥१६॥ अन्तरेणागाद्व्यवृतदिति । न ह वाऽअस्यैतं कश्चनान्तरेणैति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति

---

१. श्राम्यन्त इति. घ. २. भूत्वाऽस्तर्या इति. घ. ३. एतदमृतमिति. घ.
४. आधत्ते इति. घ. ५. कश्चनान्तरेणेति. घ.

तस्मादु तन्नाद्रियेत यदनुगच्छेन्न ह वाऽअस्यैषोऽनुगच्छति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥१७॥ ते वाऽएते प्राणाऽएव यदग्नयः । प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च व्यानोऽन्वाहार्यपचनः ॥१८॥ तस्य वाऽएतस्याग्न्याधेयस्य । सत्यमेवोपचारः स यः[1] सत्यं व्वदति यथाग्निᳬं समिद्धं तं घृतेनाभिषिञ्चेदेवᳬंहैनᳪं स ऽउद्दीपयति तस्य भूयो भूय ऽएव तेजो भवति श्वः[2] श्वः श्रेयान् भवत्यथ योऽनृतं[3] व्वदति यथाग्निᳬं समिद्धं तमुदकेनाभिषिञ्चेदेवᳪं हैनᳬंस जासयति तस्य कनीयः कनीय ऽएव तेजो भवति श्वः श्वः पापीयान् भवति तस्मादु सत्यमेव व्वदेत् ॥१९॥ तदु ह्याप्यरुणमौपवेशिं ज्ञातय ऽऊचुः । स्थविरो वाऽअस्यग्नीऽआधत्स्वेति स होवाच ते मैतद्ब्रूथ व्वाचंयम एवैधि न वाऽआहिताग्निनानृतं व्वदितव्यं न वदञ्जातु[4] नानृतं व्वदेत्तावत्सत्यमेवोपचार ऽइति ॥२०॥ Cf का. श. १. २. २.

इति शुक्लयजुर्वेदीयमाध्यान्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥

प्रथमप्रपाठकश्च समाप्तः ॥

( कण्डिकासंख्या ॥ ११४ ॥ )

---

## ( पुनराधानविधिः )

### २. २. १.

व्वरुणो हैनद्राज्यकाम ऽआदधे । स राज्यमगच्छत्तस्माद्यश्च व्वेद यश्च न व्वरुणो राजेत्येवाहुः सोमो यशस्कामः स यशोऽभवत्तस्माद्यश्च सोमे लभते यश्च नोभावेवागच्छतो यश ऽएवैतद्द्रष्टुमागच्छन्ति

---

१ यः इति. ग. २. श्व इति. घ. ३. योऽनृतमिति. घ. ४. जातु इति. घ.

यशो ह भवति राज्यं गच्छति य ऽएवं विद्वानाधत्ते[1] ॥१॥ अग्नौ ह वै देवाः । सर्व्वाणि रूपाणि निदधिरे यानि च ग्राम्याणि यानि चारण्यानि विजयं वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा ॥२॥ तान्यु हाग्निर्निचकमे । तैः संगृह्यर्तून् प्रविवेश पुनरेम ऽइति देवा ऽएदग्निं तिरोभूतं तेषाᳪंहेयसेवास किमिह कर्तव्यं केह प्रज्ञेतीव[2] ॥३॥ तत एतत्त्वष्टा पुनराधेयं ददर्श । तदादधे तेनाग्नेः प्रियं धामोपजगाम सोऽस्माऽउभयानि रूपाणि प्रतिनिःससर्ज यानि च ग्राम्याणि यानि चारण्यानि तस्मादाहुस्त्वाष्ट्राणि वै रूपाणीति त्वष्टुर्ह्येव सर्वᳪं रूपमुप ह त्वेवान्याः प्रजा यावत्सो यावत्स ऽइव तिष्ठन्ते ॥४॥ तस्मै कं पुनराधेयमादधीत । एवᳫं हैवाग्नेः प्रियं धामोपगच्छति सोऽस्माऽउभयानि रूपाणि प्रतिनिःसृजति यानि च ग्राम्याणि यानि चारण्यानि तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते परमता वै सा स्पृहयन्त्यु हास्मै तथा पुष्यति लोक्यत्वेवापि ॥५॥ आग्नेयोऽयं यज्ञः । ज्योतिरग्निः पाप्मनो दग्धा सोऽस्य पाप्मानं दहति स ऽइह ज्योतिरेव श्रिया यशसा भवति ज्योतिरमुत्र पुण्यलोकत्वैतन्नु तद्यस्मादादधीत ॥६॥ स वै व्वर्षास्वादधीत । व्वर्षा वै सर्वऽऋतवो वर्षा हि वै सर्वऽऋतवोऽथादो व्वर्षमकुर्मादो व्वर्षमकुर्मेति संवत्सरान्त्संपश्यन्ति व्वर्षा ह त्वेव सर्वेषामृतूनाᳫं रूपमुत हि तद्वर्षासु भवति यदाहुर्ग्रीष्मऽइव वाऽअद्येत्युतो तद्वर्षासु भवति यदाहुः शिशिरऽइव वाऽअद्येति व्वर्षाद्विर्षाः ॥७॥ अथैतदेव परोक्षᳪं रूपम् । यदेव पुरस्ताद्वाति तद्वसन्तस्य रूपं यत्स्तनयति तद्ग्रीष्मस्य यद्वर्षति तद्वर्षाणां यद्विद्योतते तच्छरदो यद्वृष्ट्वोद्गृह्णाति तद्धेमन्तस्य व्वर्षाः सर्व्वऽऋतव ऋतून् प्राविशद्दतुभ्य ऽएवैनमेतन्निर्मिमीते ॥८॥ आदित्यस्त्वेव सर्व्वऽऋतवः । यदैवोदेत्यथ व्वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ व्वर्षा यदापराह्णोऽथ

---

१. आधत्ते इति. घ. २ प्रज्ञेति वेति. घ.

शरद्ध्वैवास्तमेत्यथ हेमन्तस्तस्मादु मध्यन्दिनऽएवादधीत तर्हि ह्येषोऽस्य लोकस्य नेदिष्ठं भवति तन्नेदिष्ठादेवैनमेतन्मध्यान्निर्मिमीते ॥९॥ छाययेव वाऽअयं पुरुषः । पाप्मनानुषक्तः सोऽस्यात्र कनिष्ठो भवत्यधस्पदमिवेयस्यते तत्कनिष्ठमेवैतत्पाप्मानमवबाधते तस्मादु मध्यन्दिनऽएवादधीत ॥१०॥ तं वै दर्भैरुद्धरति । दारुभिर्व्वै पूर्व्वमुद्धरति दारुभिः पूर्व्वं दारुभिरपरं जामि कुर्यात्समदं कुर्यादापो दर्भा ऽआपो व्वर्षा ऋतून् प्राविशदद्भिरेवैनमेतदद्भ्यो निर्मिमीते तस्माद्दर्भैरुद्धरति ॥११॥ अर्क्कपलाशाभ्यां । व्रीहिमयमपूपं कृत्वा यत्र गार्हपत्यमाधास्यन् भवति तन्निदधाति तद्गार्हपत्यमादधाति ॥१२॥ अर्क्कपलाशाभ्यां । यवमयमपूपं कृत्वा यत्राहवनीयमाधास्यन् भवति तन्निदधाति तदाहवनीयमादधाति पूर्व्वाभ्यामेवैनावेतदग्निभ्यामन्तर्दध्म ऽइति व्वदन्तस्तदु तथा न कुर्याद्द्वात्रिभिर्ह्येवान्तर्हितौ भवतः ॥१३॥ आग्नेयमेव । पञ्चकपालं पुरोडाशं निर्व्वपति. तस्य पञ्चपदाः पङ्क्त्यो याज्यानुवाक्या भवन्ति पञ्च वाऽऋतव ऽऋतून् प्राविशदृतुभ्य एवैनमेतान्निर्मिमीते ॥१४॥ सर्व्व ऽआग्नेयो भवति । एवꣳ हि त्वष्टाग्नेः प्रियं धामोपागच्छत्तस्मात्सर्वं आग्नेयो भवति ॥१५॥ तेनोपाꣳशु चरन्ति । यद्वै ज्ञातये वा सख्ये वा निष्केवल्यं चिकीर्षति तिर इव वैतेन बोभवद्वैश्वदेवोऽन्यो यज्ञोऽथैष निष्केवल्य ऽआग्नेयो यद्वै तिर इव तदुपाꣳशु तस्मादुमापाꣳशु चरन्ति ॥१६॥ उच्चैरुत्तममनुयाजं यजति । कृतकर्मेव हि स तर्हि भवति सर्व्वो हि कृतमनुबुध्यते ॥१७॥ सऽ आश्राव्याह । समिधो यजेति तदाग्नेयꣳ रूपं परोक्षं त्वग्नीन्यजेति त्वेव ब्रूयात्तदेव प्रत्यक्षमाग्नेयꣳ रूपम् ॥१८॥ स यजति । अग्नऽआज्यस्य व्यन्तु व्वौषगग्निमाज्यस्य व्वेतु व्वौषगग्निनाज्यस्य व्यन्तु व्वौषगग्निराज्यस्य व्वेतु व्वौषगिति ॥१९॥ अथ स्वाहाग्निमित्याह । आग्नेयमाज्यभागꣳ स्वाहाग्निं पवमानमिति यदि पवमानाय भ्रियेरन्त्स्वाहाग्निमिन्दुमन्तमिति

---

१. धामोपागच्छदिति. घ.    २. इवैतेनेति. ग.    ३. वौषगितीति. ग.

यद्यग्नय इन्दुमते म्रियेरन्त्स्वाहाग्निꣳ स्वाहाग्नीनाज्यपाञ्जुषाणोऽअग्निराज्यस्य व्वेत्विति यजति ॥२०॥ अथाऽऽहाग्नयेऽनुब्रूहीति । आग्नेयमाज्यभागꣳ सोऽन्वाहा"ग्निꣳस्तोमेन बोधय समिधानोऽअमर्त्यम् । हव्या देवेषु नो दध"दिति स्वपितीव खलु वाऽएतद्यदुद्वासितो भवति सम्प्रबोधयत्येवैनमेतत्समुदीपयति जुषाणोऽअग्निराज्यस्य व्वेत्विति यजति ॥२१॥ अथ यद्यग्नये पवमानाय म्रियेरन् । अग्नये पवमानायानुब्रूहीति ब्रूयात्सोऽन्वाहा"ग्नऽआयूꣳषि पवसऽआसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुना"मिति तथाहाग्नेयो भवति सोमो वै पवमानस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणोऽअग्निः पवमान ऽआज्यस्य व्वेत्विति यजति ॥२२॥ अथ यद्यग्नय इन्दुमते म्रियेरन् । अग्नयऽइन्दुमतेऽनुब्रूहीति ब्रूयात्सोऽन्वाहे"ह्यूषु ब्रवाणि तेऽग्नऽइत्थेतरा गिरः । एभिर्वर्द्धासऽइन्दुभि"रिति तथा ह्याग्नेयो भवति सोमो वाऽऽइन्दुस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणोऽअग्निरिन्दुमानाज्यस्य व्वेत्विति यजत्येवमु सर्वमाग्नेयं करोति ॥२३॥ अथाहाग्नयेऽनुब्रूहीति हविषः । अग्निं यजाग्नये स्विष्टकृतेऽनुब्रूह्यग्निꣳ स्विष्टकृतं यजेत्यथ यद्देवान्यजेत्यग्नीन्यजेत्येवैतदाह ॥२४॥ स यजति । अग्नेर्व्वसुवने व्वसुधेयस्य व्वेतु व्वौझगग्नाऽउ व्वसुवने व्वसुधेयस्य व्वेतु व्वौझग्देवोऽअग्निः स्विष्टकृदिति स्वयमाग्नेयस्तृतीय ऽएवं वाग्नेयाननुयाजान् करोति॥२५॥ ता वाऽएताः । षड्विभक्तीर्यजति चतस्रः प्रयाजेषु द्वेऽअनुयाजेषु षड्वाऽऋतव ऋतून् प्राविशद्दतुभ्य एवैनमेतन्निर्मिमीते ॥२६॥ द्वादश वा त्रयोदश वाक्षराणि भवन्ति । द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरमृतून् प्राविशद्दतुभ्यऽएवैनमेतत्संवत्सरान्निर्मिमीते न द्वे चन सहाजामितायै जामि ह कुर्याद्यद्द्वे चित्सह स्यातां व्य-

१. अग्नयेऽनुब्रूहीति. घ.

२. ऋ. सं ४. १. ६; तै. सं ४. १. ११. ४; वाजसनेयिसंहितायां नेयमृक् पठिता।

३. मा. सं. १९. ३८. ४. मा. सं. २६. १३.

५. यजेत्यग्नीनिति. घ.

न्तु व्वेत्वित्येव प्रयाजानाᳫं रूपं व्वसुवने व्वसुधेयस्येत्यनुयाजानाम् ॥२७॥ तस्य हिरण्यं दक्षिणा । आग्नेयो वाऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणानड्वान्वा स हि व्वहेनाग्नेयोऽग्निदग्धमिव ह्यस्य व्वहं भवति देवानाᳫं हव्यवाहनोऽग्निरिति व्वहति वाऽएष मनुष्येभ्यस्तस्मादनड्वान् दक्षिणा ॥२८॥ Cf. का. श. १. २. ३; तै. सं. १. ५. १. ५; and तै. ब्रा. १. ३. १. मै. सं. १. ७. २, ३; काठ. सं. ८. १५; कपिष्ठ. सं. ८. ३.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥

## ( अग्निहोत्रम् )

### २. २. २.

प्रजापतिर्ह वाऽइदमग्रऽएक ऽएवास । स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत सोऽग्निमेव मुखाज्जनयाञ्चक्रे तद्यदेनं मुखादजनयत तस्मादन्नादोऽग्निः स यो हैवमेतमग्निमन्नादं व्वेदान्नादो हैव भवति ॥१॥ तद्वाऽ एनमेतदग्रे देवानामजनयत । तस्मादग्निरग्निर्ह वै नामैतद्यदग्निरिति स जातः पूर्व्वः प्रेयाय यो वै पूर्व्व ऽएत्यग्रऽएतीति वै तमाहुः सोऽएवास्याग्निता ॥२॥ सऽ ऐक्षत प्रजापतिः । अन्नादं वाऽइममात्मनोऽजीजने यदग्निं न वाऽइह मदन्यदन्नमस्ति यं वाऽअयं नाद्यादिति काल्वालीकृता हैव तर्हि पृथिव्यास नौषधय आसुर्न व्वनस्पतयस्तदेवास्य मनस्यास ॥३॥ अथैनमग्निर्व्यात्तेनोपपर्य्याववर्त्त । तस्य भीतस्य स्वो महिमापचक्राम व्वाग्वाऽअस्य स्वो महिमा व्वागस्यापचक्राम सऽ [1]आत्मन्येवाहुतिमीषे स ऽउदमृष्ट तद्यदुदमृष्ट तस्मादिदं चालोमकमिदं च तत्र व्विवेद घृताहुतिं वैव पयऽआहुतिं वोभयᳫं ह त्वेव तत्पय ऽएव ॥४॥ सा हैनं नाभिराधयाञ्चकार । केशमिश्रेव हास तां [2]व्यौक्षदोषं धयेति तत ओषधयः सम-

१. आत्मन्नेवेति. ग. २. वौक्षदिति. घ.

भवंस्तस्मादोषधयो नाम स द्वितीयमुदमृष्ट तत्रापरामाहुतिं विवेद घृताहुतिं वैव पयऽ आहुतिं वोभयᳫं ह त्वेव तत्पय एव ॥५॥ सा हैनमभिराधयाञ्चकार । स व्यचिकित्सज्जुहवानी३मा हौषा३मिति तᳫं स्वो महिमाभ्युवाद जुहुधीति स प्रजापतिर्व्विदाञ्चकार स्वो वै मा महिमाहेति स स्वाहेत्येवाजुहोत्तस्मादु स्वाहेत्येव हूयते तत एष उदियाय य एष तपति ततोऽयं प्रबभूव योऽयं पवते तत एवाग्निः पराङ् पर्य्यावर्वत ॥६॥ स हुत्वा प्रजापतिः । प्र चाजायतात्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत स यो हैवं विद्वानग्निहोत्रं जुहोत्येताᳫं हैव प्रजातिं प्रजायते यां प्रजापतिः प्राजायतैवमु हैवात्स्यतोऽग्नेर्मृत्योरात्मानं त्रायते ॥७॥ स यत्र म्रियते । यत्रैनमग्नावभ्यादधति तदेषोऽग्नेरधिजायतेऽथास्य शरीरमेवाग्निर्दहति तद्यथा पितुर्व्वा मातुर्व्वा जायेतैवमेषोऽग्नेरधिजायते शश्वद्ध वाऽएष न सम्भवति योऽग्निहोत्रं न जुहोति तस्माद्वाऽअग्निहोत्रᳫं होतव्यम् ॥८॥ तद्वा एतत् । एव व्विचिकित्सायै जन्म यत्प्रजापतिर्व्यचिकित्सत्स व्विचिकित्सञ्छ्रेयस्यभ्रियत यः प्र चाजायतात्स्यतश्चाग्नेर्मृत्योरात्मानमत्रायत स यो हैवमेतद्विचिकित्सायै जन्म व्वेद यद्ध किं च व्विचिकित्सति श्रेयसि हैव भ्रियते ॥९॥ स हुत्वा न्यमृष्ट । ततो व्विकङ्कतः समभवत्तस्मादेष याज्ञियो यज्ञपात्रीयो वृक्षस्तत एते देवानां वीरा अजायन्ताग्निर्योऽयं पवते सूर्यः स यो हैवमेतान् देवानां व्वीरान् वेदाहास्य व्वीरो जायते ॥१०॥ तऽउ हैतऽऊचुः । व्वयं वै प्रजापतिं पितरमनु स्मो हन्त व्वयं तत्सृजामहै यदस्मानन्वसदिति ते परिश्रित्य गायत्रेणापहिङ्कारेण तुष्टुविरे तद्यत्पर्यश्रयन्त्स समुद्रोऽथेयमेव पृथिव्यास्तावः ॥११॥ ते स्तुत्वा प्राञ्च ऽउच्चक्रमुः । पुनरेम इति देवा एद्वाᳫं सम्भूताᳫं सा हैनानुदीक्ष्य हिञ्चकार ते देवा व्विदाञ्चक्रुरेष साम्नो हिङ्कार इत्युप-

---

१. एव इति. घ. २. योऽयं पवत इयि. ग.

३. एवेति. घ. ४. प्रजापतिरिति. घ.

हिङ्कारꣳ हैव पुरा ततः सामास स एष गवि साम्नो हिङ्कारस्तस्माद्देषोपजीवनीयोपजीवनीयो ह वै भवति य ऽएवमेतं गवि साम्नो हिङ्कारं व्वेद ॥१२॥ ते होचुः । भद्रं वाऽइदमजीजनामहि ये गामजीजनामहि यज्ञो ह्येवेयं नो ह्यृते गोर्यज्ञस्तायतेऽन्नꣳ ह्येवेयं यद्धि किञ्चान्नं गौरेव तदिति ॥१३॥ तद्वाऽएतदेवैतासां नाम । एतद्यज्ञस्य तस्मादेतत्परिहरेत्साधु पुण्यामिति बह्व्यो ह वाऽअस्यैता भवन्त्युपनामुक एनं यज्ञो भवति य ऽएवं व्विद्वानेतत्परिहरति साधु पुण्यमिति ॥१४॥ तामु हाग्निरभिदध्यौ । मिथुन्येनया स्यामिति ताꣳ सम्बभूव तस्याꣳ रेतः प्रासिञ्चत्तत्पयोऽभवत्तस्मादेतदामायां गवि सत्यꣳ शृतमग्नेर्हि रेतस्तस्माद्यदि कृष्णायां यदि रोहिण्याꣳ शुक्लमेव भवत्याग्निसङ्काशमग्नेर्हि रेतस्तस्मात्प्रथमदुग्धमुष्णं भवत्यग्नेर्हि रेतः ॥१५॥ ते होचुः । हन्तेदं जुहवामहाऽइति कस्मै न इदं प्रथमाय होष्यन्तीति मह्यमिति हैवाग्निरुवाच मह्यमिति योऽयं पवते मह्यमिति सूर्यस्ते न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुः प्रजापतिमेव पितरं प्रत्ययाम स यस्मै न इदं प्रथमाय होतव्यं वक्ष्यति तस्मै न इदं प्रथमाय होष्यन्तीति ते प्रजापतिं पितरं प्रतीत्योचुः कस्मै न इदं प्रथमाय[1] होष्यन्तीति ॥१६॥ स होवाच । अग्नयेऽग्निरनुष्ठ्या स्वꣳ रेतः प्रजनयिष्यते तथा प्रजनिष्यध्वऽइत्यथ तुभ्यमिति सूर्यमथ[2] यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवतऽइति तदेभ्य इदमप्येतर्हि तथैव जुह्वत्यग्नयऽएव सायꣳ सूर्याय प्रातरथ यदेव हू मानस्य व्यश्नुते तदेवैतस्य योऽयं पवते ॥१७॥ ते हुत्वा देवाः । इमां प्रजातिं प्राजायन्त यैषामियं प्रजातिरिमां व्विजितिं व्यजयन्त येयमेषां व्विजितिरिममेव[3] लोकमग्निरजयदन्तरिक्षं वायुर्दिवमेव सूर्यः स यो हैवं विद्वानग्निहोत्रं जुहोत्येताꣳ हैव प्रजातिं प्रजायते यामेतऽएतत्प्राजायन्तैतां व्विजितिं व्विज-

---

१. प्रथमायेति. घ. २. सूर्य इति. ग. घ. ३. विजितिरिममेवेति. घ.

यते यामेतऽएतद्यजयन्त्यैतैरु हैव सलोको भवति य एवं व्विद्वानग्निहोत्रं जुहोति तस्माद्वाऽअग्निहोत्रꣳहोतव्यम् ॥१८॥ Cf. का. श. १. २. ४; तै. ब्रा. २. १. २; मै. सं. १. ८. १.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥

( इति द्वितीयकाण्डे द्वितीयोऽध्यायस्समाप्तः )

२. २. ३.

सूर्यो ह वाऽअग्निहोत्रम् । तद्यदेतस्या ऽअग्रऽआहुतेरुदैत्तस्मात्सूर्योऽग्निहोत्रꣳ ॥१॥ स यत्सायमस्तमिते जुहोति । य ऽइदं तस्मिन्निह सति जुहवानीत्यथ यत्प्रातरनुदिते जुहोति य ऽइदं तस्मिन्निह सति जुहवानीति तस्माद्वै सूर्योऽग्निहोत्रमित्याहुः[1] ॥२॥ (शतम् १०००[2] ॥) अथ यदस्तमेति । तदग्नावेव योनौ गर्भो भूत्वा प्रविशति तं गर्भं भवन्तमिमाः सर्व्वाः प्रजा अनु गर्भा भवन्तीलिता हि शेरे सञ्जानाना ऽअथ यद्रात्रिस्तिर ऽएवैतत्करोति तिर ऽइव हि गर्भाः॥३॥स यत्सायमस्तमिते जुहोति । गर्भमेवैतत्सन्तमभिजुहोति गर्भꣳसन्तमभिकरोति स यद्गर्भꣳ सन्तमभिजुहोति तस्मादिमे गर्भा अनश्नन्तो जीवन्ति ॥४॥ अथ यत्प्रातरनुदिते जुहोति । प्रजनयत्येवैनमेतत्सोयं तेजो भूत्वा व्विभ्राजमान उदेति शश्वद्ध वै नोदियाद्यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वाऽएतामाहुतिं जुहोति ॥५॥

( अर्धप्रपाठकः ५१ )

स यथाहिस्त्वचो निर्मुच्येत । एवꣳ रात्रेः पाप्मनो निर्मुच्यते यथाह वाऽअहिस्त्वचो निर्मुच्येतैवꣳसर्व्वस्मात्पाप्मनो निर्मुच्यते य ऽएवं व्विद्वानग्निहोत्रं जुहोति तदेतस्यैवानु प्रजातिमिमाः सर्व्वाः प्रजा ऽअनु प्रजायन्ते व्वि हि सृज्यन्ते यथार्थꣳ ॥६॥ स यः पुरादित्यस्यास्तमयात् । आहवनीयमुद्धरत्येते वै

१. मित्याहुः इति. क.   २. आदितः कण्डिकानां संख्येयम् ।

विश्वे देवा रश्मयोऽथ यत्परं भाः प्रजापतिर्वा स ऽइन्द्रो वैतदु ह वै विश्वे देवा ऽअग्निहोत्रं जुह्वतो गृहानागच्छन्ति स यस्यानुद्धृतमागच्छन्ति तस्माद्देवा अपप्रयन्ति तद्वाऽअस्मै तद्व्यृध्यते यस्माद्देवा ऽअपप्रयन्ति तस्यानु व्यृद्धिं यश्च व्वेद यश्च नानुद्धृतमभ्यस्तमगादित्याहुः ॥७॥ अथ यः पुरादित्यस्यास्तमयात् । आहवनीयमुद्धरति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्स यस्योद्धृतमागच्छन्ति तस्याहवनीयं प्रविशन्ति तस्याहवनीये निविशन्ते ॥८॥ स यत्सायमस्तमिते जुहोति । अग्नावेवैभ्य ऽएतत्प्रविष्टेभ्यो जुहोत्यथ यत्प्रातरनुदिते जुहोत्यप्रेतेभ्य ऽएवैभ्य ऽएतज्जुहोति तस्मादुदितहोमिनां विच्छिन्नमग्निहोत्रं मन्यामहऽइति ह स्माहासुरिर्यथा शून्यमावसथमाहरेदेवं तदिति ॥९॥ द्वयं वाऽइदं जीवनम् । मूलि चैवामूलं च तदुभयं देवानाꣳ सन्मनुष्या उपजीवन्ति पशवो मूला ऽओषधयो मूलिन्यस्ते पशवो मूलाऽओषधीर्मूलिनीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति ॥१०॥ स यत्सायमस्तमिते जुहोति । अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषामिदꣳ सदुपजीवाम इति स यत्ततो रात्र्याश्नाति हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता ॥११॥ अथ यत्प्रातरनुदिते जुहोति । अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषामिदꣳसदुपजीवाम ऽइति स यत्ततोऽह्नाश्नाति हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता ॥१२॥ तदाहुः । समेवान्ये यज्ञास्तिष्ठन्तेऽग्निहोत्रमेव न सन्तिष्ठतेऽपि द्वादशसंवत्सरमन्तवदेवाथैतदेवानन्तꣳ सायꣳ हि हुत्वा व्वेद प्रातर्होष्यामीति प्रातर्हुत्वा व्वेद पुनः सायꣳ होष्यामीति तदेतदनुपस्थितमग्निहोत्रं तस्यानुपस्थितिमन्वनुपस्थिता इमाः प्रजाः प्रजायन्तेऽनुपस्थितो ह वै श्रिया प्रजया प्रजायते य एवमेतदनुपस्थितमग्निहोत्रं व्वेद॥१३॥तद्दुग्ध्वाधिश्रयति । शृतमसदिति तदाहुर्यर्ह्युदन्तं तर्हि शृतं तर्हि जुहुयादिति तद्वै नोदन्तं कुर्यादुप ह दहेद्यदुदन्तं कुर्यादप्रजज्ञि वै रेत ऽउपदग्धं तस्मान्नोदन्तं कुर्यात् ॥१४॥

अधिश्रित्यैव जुहुयात् । यन्न्वेवैतदग्ने रेतस्तेन न्वेवं श्रृतं यद्वेनदग्ना-
वधिश्रयन्ति तेनोऽएव श्रृतं तस्मादधिश्रित्यैव जुहुयात् ॥ १५ ॥ तद-
वज्ज्योतयति । श्रृतं न्वेदानीत्यथापः प्रत्यानयति शान्त्यै न्वेव रसस्यो
चैव सर्व्वत्वायेदᳬं हि यदा व्वर्षत्यथौषधयो जायन्तऽओषधीर्जग्ध्वापः
पीत्वा तत एष रसः सम्भवति तस्मादु रसस्यो चैव सर्व्वत्वाय तस्मा-
द्यद्येनं क्षीरं केवलं पानेऽभ्याभवेदुदस्तोकमाश्चोतयितवै ब्रूयाच्छान्त्यै
न्वेव रसस्यो चैव सर्वत्वाय ॥१६॥ अथ चतुरुन्नयति । चतुर्धाविहि-
तᳬं हीदं पयोऽथ समिधमादायोदाद्रवति समिद्धहोमायैव सोऽनु-
पसाद्य पूर्वामाहुतिं जुहोति स यदुपसादयेद्यथा यस्माऽअशनमाहरि-
ष्यन्त्स्यात्तदन्तरा निदध्यादेवं तदथ यदनुपसाद्य यथा यस्माऽअशन-
माहरेत्तस्माऽआहृत्यैवोपनिदध्यादेवं तदुपसाद्योत्तरां नानावीर्येऽएवैने
ऽएतत्करोति मनश्च ह वै व्वाक्चैतेऽआहुती तन्मनश्चैवैतद्वाचं च व्याव-
र्तयति तस्मादिदं मनश्च वाक्च समानमेव सन्नानेव॥१७॥स वै द्विरग्नौ
जुहोति। द्विरुपमार्ष्टि द्विः प्राश्नाति चतुरुन्नयति तद्दश दशाक्षरा वै व्वि-
राड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयति ॥१८॥ स यदग्नौ
जुहोति । तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यदुपमार्ष्टि तत्पितृषु
चौषधिषु च जुहोति तस्मात्पितरश्चौषधयश्च सन्त्यथ यद्धुत्वा प्रा-
श्नाति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्ति ॥१९॥ या वै प्रजा
यज्ञेऽनन्वाभक्ताः । पराभूता वै ता एवमेवैतद्या इमाः प्रजा अपरा-
भूतास्ता यज्ञमुखऽआभजति तेनो ह पशवोऽन्वाभक्ता यन्मनुष्या-
ननु पशवः ॥२०॥ तदु होवाच याज्ञवल्क्यः । न वै यज्ञ इव मन्त-
वै पाकयज्ञ इव वाऽइतीदᳬं हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यति सर्व्वं
तदग्नौ जुहोत्यथैतदग्नौ हुत्वोत्सृप्याचामति निर्लेढि तदस्य पाकयज्ञ-
स्येवेति तदस्य तत्पशव्यᳬं रूपं पशव्यो हि पाकयज्ञः ॥२१॥ सैषै-
काहुतिरेवाग्रे । यामेवामूं प्रजापतिरजुहोदथ यदेतऽएतत्पश्चेवाध्रिय-
न्ताग्निर्योऽयं पवते सूर्यस्तस्मादेषा द्वितीयाहुतिर्हूयते ॥२२॥ सा या
पूर्व्वाहुतिः । साग्निहोत्रस्य देवता तस्मात्तस्यै जुहोत्यथ योत्तरा स्वि-

ष्टकृद्भाजनमेव सा तस्मात्तामुत्तरार्द्धे जुहोत्येषा हि दिक् स्विष्टकृतस्तन्मिथुनायैवैषा द्वितीयाहुतिर्हूयते द्वन्द्वᳩं हि मिथुनं प्रजननम् ॥२३॥ तद्द्वयमेवैतेऽआहुती । भूतं चैव भविष्यच्च जातं च जनिष्यमाणं चागतं चाशा चाद्य च श्वश्च तद्द्वयमेवानु ॥२४॥ आत्मैव भूतं । अद्धा हि तद्यद्भूतमद्धो तद्यदात्मा प्रजैव भविष्यदनद्धा हि तद्यद्भविष्यदनद्धो तद्यत्प्रजा ॥२५॥ आत्मैव जातम् । अद्धा हि तद्यज्जातमद्धो तद्यदात्मा प्रजैव जनिष्यमाणमनद्धा हि तद्यज्जनिष्यमाणमनद्धा तद्यत्प्रजा ॥२६॥ आत्मैवागतम् । अद्धा हि तद्यदागतमद्धो तद्यदात्मा प्रजैवाशानद्धा हि तद्यदाशानद्धो तद्यत्प्रजा ॥२७॥ आत्मैवाद्य । अद्धा हि तद्यदद्याद्धो तद्यदात्मा प्रजैव श्वोऽनद्धा हि तद्यच्छ्वोऽनद्धो तद्यत्प्रजा ॥ २८ ॥ सा या पूर्वाहुतिः । सात्मानमभि हूयते तां मन्त्रेण जुहोत्यद्धा हि तद्यन्मन्त्रोऽद्धो तद्यदात्माऽथ योत्तरा सा प्रजामभि हूयते तां तूष्णीं जुहोत्यनद्धा हि तद्यत्तूष्णीमनद्धो तद्यत्प्रजा॥२९॥स जुहोति । "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे"त्यथ प्रातः "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहे"ति तत्सत्येनैव हूयते यदा ह्येव सूर्योऽस्तमेत्यथाग्निर्ज्योतिर्यदा सूर्य उदेत्यथ सूर्यो ज्योतिर्यद्वै सत्येन हूयते तद्देवान् गच्छति ॥३०॥ तदु हैतदेवारुणये ब्रह्मवर्चसकामाय तक्षानूवाचाग्निर्व्वर्चो ज्योतिर्व्वर्चः सूर्यो व्वर्चो ज्योतिर्व्वर्च्च ऽइति ब्रह्मवर्च्चसी हैव भवति यऽ एवं विद्वानग्निहोत्रं जुहोति ॥३१॥ तद्वस्त्वेव प्रजननस्येव रूपम् । "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे"ति तदुभयतो ज्योती रेतो देवतया परिगृह्णात्युभयतःपरिगृहीतं वै रेतः प्रजायते तदुभयत एवैतत्परिगृह्य प्रजनयति ॥३२॥ अथ प्रातः । "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहे"ति तदुभयतो ज्योती रेतो देवतया परिगृह्णात्युभयतःपरिगृहीतं वै रेतः प्रजायते तदुभयत एवैतत्परिगृह्य प्रजनयति तत्प्रजननस्य रूपम् ॥३३॥ तदु होवाच जीवलश्चैलकिः ।

---

१. तद्द्वयमेवानु इति ग.

गर्भमेवारुणिः करोति न प्रजनयतीति स एतेनैव सायं जुहुयात् ॥३४॥ अथ प्रातः। "ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहे"ति तद्बहिर्धा ज्योती रेतो देवतया करोति बहिर्धा वै रेतः प्रजातं भवति तदेनत्प्रजनयति ॥३५॥ तदाहुः। अग्नावेवैतत्सायꣳ सूर्यं जुहोति सूर्ये प्रातरग्निमिति तद्वै तदुदितहोमिनामेव यदा ह्येव सूर्योऽस्तमेत्यथाग्निर्ज्योतिर्यदा सूर्यऽउदेत्यथ सूर्यो ज्योतिर्नास्य सा परिच्चक्षेयमेव परिच्चक्षा यत्तस्यै नाम्ना देवतायै हूयते याग्निहोत्रस्य देवताग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति तत्र नाग्नये स्वाहेत्यथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तत्र न सूर्याय स्वाहेति ॥३६॥ अनेनैव जुहुयात्। "सजूर्देवेन सवित्रे"ति तत्सवितृमत्प्रसवाय सजूरात्र्येन्द्रवत्येति तद्रात्र्या मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता जुषाणोऽअग्निर्वेतु स्वाहेति तदग्नये प्रत्यक्षं जुहोति ॥३७॥ अथ प्रातः। "सजूर्देवेन सवित्रे"ति तत्सवितृमत्प्रसवाय सजूरुषसेन्द्रवत्येत्यह्नेति वा तदह्ना वोषसा वा मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता "जुषाणः सूर्यो वेतु स्वाहे"ति तत्सूर्याय प्रत्यक्षं जुहोति तस्मादेवमेव जुहुयात् ॥३८॥ ते होचुः। को न इदꣳ होष्यतीति ब्राह्मण एवेति ब्राह्मणेदं नो जुहुधीति किं मे ततो भविष्यतीत्यग्निहोत्रोच्छिष्टमेवेति स यत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टमथ यत्स्थाल्यां यथा परीणहो निर्वपेदेवं तत्तस्मात्तद्य एव कश्च पिबेत्तद्वै नाब्राह्मणः पिबेदग्नौ ह्यधिश्रयन्ति तस्मान्नाब्राह्मणः पिबेत् ॥३९॥ Cf. का. श. १. ३. १. तै. ब्रा. २. १. ३, ४. मै. सं १. ८. ३, ४. काठ. सं. ६. ३, ४.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥

## २. २. ४.

### ( अग्न्युपस्थानम् )

एता ह वै देवता योऽस्ति। तस्मिन्वसन्तीन्द्रो यमो राजा

नडो नैषिधोऽनश्नन्त्साङ्गमनोऽसन् पाᳪँसवः ॥१॥ तद्वाऽएष एवेन्द्रः । यदाहवनीयोऽथैष एव गार्हपत्यो यमो राजाथैष एव नडो नैषिधो यदन्वाहार्यपचनस्तद्यदेतमहरहर्दक्षिणतऽआहरन्ति तस्मादाहुरहरहर्व्वै नडो नैषिधो यमᳪँ राजानं दक्षिणतऽउपनयतीति॑ ॥२॥ अथ यऽएष सभायामग्निः । एष एवानश्नन्त्साङ्गमनस्तद्यदेतमनशित्वेवोपसङ्गच्छन्ते तस्मादेषोऽनश्नन्नथ यदेतद्भस्मोद्धृत्य परावपन्त्येषऽएवासन् पाᳪँसवः स यो हैवमेतद्वेदैवं मय्येता देवता व्वसन्तीति सर्वान् हैवैतांल्लोकान् जयति सर्वांल्लोकाननुसञ्चरति॥३॥तेषामुपस्थानम् । यदेव सायं प्रात॑राहवनीयमुप च तिष्ठतऽउप चास्ते तदेव तस्योपस्थानमथ यदेव प्रतिपरेत्य गार्हपत्यमास्ते वा शेते वा तदेव तस्योपस्थानमथ यत्रैव संव्रजन्नन्वाहार्यपचनमुपस्मरेत्तदेव तं मनसोपतिष्ठेत तदेव तस्योपस्थानम्॥४॥अथ प्रातः । अनशित्वा मुहूर्तᳪँ सभायामासित्वापि कामं पल्ययेत तदेव तस्योपस्थानमथ यत्रैव भस्मोद्धृतमुपनिगच्छेत्तदेव तस्योपस्थानमेवमु हास्यैता देवता ऽउपास्थिता भवन्ति ॥५॥ यजमानदेवत्यो वै गार्हपत्यः । अथैष भ्रातृव्यदेवत्यो यदन्वाहार्यपचनस्तस्मादेतं नाहरहराहरेयुर्न ह वाऽअस्य सपत्ना भवन्ति यस्यैवं विदुष ऽएतं नाहरहराहरन्त्यन्वाहार्यपचनो वाऽएषः ॥६॥ उपवसथऽएवैनमाहरेयुः । यत्रैवास्मिन् यक्ष्यन्तो भवन्ति तथो हास्यैषोऽमोघायाहृतो भवति ॥७॥ नवावसिते वैनमाहरेयुः । तस्मिन् पचेयुस्तद्ब्राह्मणा ऽअश्नीयुर्यद्यु तन्न विन्देद्यत्पचेदपि गोरेव दुग्धमधिश्रयितवै ब्रूयात्तस्मिन् ब्राह्मणान् पाययितवै ब्रूयात्पापीयाᳪँसो ह वाऽअस्य सपत्ना भवन्ति यस्यैवं व्विदुष एवं कुर्वन्ति तस्मादेवमेव चिकीर्षेत् ॥८॥ तद्यत्रैतत्प्रथमᳪँ समिद्धो भवति । धूप्यतऽइव तर्हि हैष भवति रुद्रः स यः कामयेत यथेमा रुद्रः प्रजा ऽअश्रद्धयेव त्वत्सहसेव त्वन्निघातमिव त्वत्सचतऽएवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्नो-

१. उपनयतीति. इति. ग. घ. २. प्रातराहवनीयमिति. ग. घ.

ति हैवैतदन्नाद्यं यऽएवं विद्वांस्तर्हि जुहोति ॥९॥ अथ यत्रैतत्प्रदीप्ततरो भवति । तर्हि हैष भवति वरुणः स यः कामयेत यथेमा वरुणः प्रजा गृह्णन्निव त्वत्सहसेव त्वन्निग्रातमिव त्वत्सचतऽएवमन्नमद्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति ॥१०॥ अथ यत्रैतत्प्रदीप्तो भवति । उच्चैर्धूमः परमया जूत्या बल्बलीति तर्हि हैष भवतीन्द्रः स यः कामयेतेन्द्र इव श्रिया यशसा स्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति ॥११॥ अथ यत्रैतत्प्रतितरामिव । तिरश्चीवार्च्चिः स शाम्यतो भवति तर्हि हैष भवति मित्रः स यः कामयेत मैत्रेणेदमन्नमद्यामिति यमाहुः सर्व्वस्य वाऽअयं ब्राह्मणो मित्रं न वाऽअयं कं चन हिनस्तीति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं यऽएवं विद्वांस्तर्हि जुहोति ॥१२॥ अथ यत्रैतदङ्गाराश्चाकश्यन्तऽइव । तर्हि हैष भवति ब्रह्म स यः कामयेत ब्रह्मवर्चसी स्यामिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति ॥१३॥ एतेषामेकꣳसंवत्सरमुपेत्सेत्। स्वयं जुहुयादि वास्यान्यो जुहुयादथ योऽन्यथान्यथा जुहोति यथापो वाभिखनन्नन्यद्वान्नाद्यꣳ स सामि निवर्तेतैवं तदथ यः सार्धं जुहोति यथापो वाभिखनन्नन्यद्वान्नाद्यं तत्क्षिप्रेऽभितृन्द्यादेवं तत् ॥१४॥ अभ्रयो ह वाऽएता अन्नाद्यस्य यदाहुतयः । अभि हैवैतदन्नाद्यं तृणत्ति यऽएवं विद्वानग्निहोत्रं जुहोति॥१५॥ सा या पूर्व्वाहुतिः । ते देवा ऽअथ योत्तरा ते मनुष्या ऽअथ यत्स्रुचि परिशिनष्टि ते पशवः ॥१६॥ स वै कनीय इव पूर्व्वामाहुतिं जुहोति । भूय ऽइवोत्तरां भूयऽइव स्रुचि परिशिनष्टि ॥१७॥ स यत्कनीय इव पूर्व्वामाहुतिं जुहोति । कनीयाꣳसो हि देवा मनुष्येभ्योऽथ यद्भूयऽइवोत्तरां भूयाꣳसो हि मनुष्या देवेभ्योऽथ यद्भूय इव स्रुचि परिशिनष्टि भूयाꣳसो हि पशवो मनुष्येभ्यः कनीयाꣳसो ह वाऽअस्य भार्या भवन्ति भूयाꣳसः पशवो य ऽएवं विद्वानग्निहोत्रं जुहोति तद्वै

समृद्धं यस्य कनीयाᳫंसो भार्या ऽअसन् भूयाᳫंसः पशवः* ॥१८॥

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥

द्वितीयः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ॥ १०३ ॥ )

## अथ तृतीयः प्रपाठकः ॥

### २. ३. १.

यत्र वै प्रजापतिः प्रजाः ससृजे । स यत्राग्निᳫं ससृजे स इदं जातः सर्व्वमेव दग्धुं दध्रऽइत्येवाबिलमेव ता यास्तर्हि प्रजा आसुस्ता हैनᳫं सम्पेष्टुं दध्रिरे सोऽतितिक्षमाणः पुरुषमेवाभ्येयाय ॥१॥ स होवाच । न वाऽअहमिदं तितिक्षे हन्त त्वा प्रविशानि तं मा जनयित्वा बिभृहि स यथैव मां त्वमस्मिंल्लोके जनयित्वा भरिष्यस्येवमेवाहं त्वाममुष्मिंल्लोके जनयित्वा भरिष्यामीति तथेति तं जनयित्वाबिभः ॥२॥ स यदग्नीऽआधत्ते । तदेनं जनयति तं जनयित्वा बिभर्ति स यथा हैवैष एतमस्मिंल्लोके जनयित्वा बिभर्त्येवमु हैवैष एतममुष्मिंल्लोके जनयित्वा बिभर्ति ॥३॥ तन्न साम्युद्वासयेत । सामि हास्मै स ग्लायति स यथा हैवैष एतस्माऽअस्मिंल्लोके सामि ग्लायत्येवमु हैवेष एतस्माऽअमुष्मिंल्लोके सामि ग्लायति तस्मान्न साम्युद्वासयेत ॥४॥ स यत्र म्रियते । यत्रैनमग्नावभ्यादधाति तदेषोऽग्नेरधिजायते स एष पुत्रः सन् पिता भवति ॥५॥ तस्मादेतदृषिणाभ्यनूक्तᳫं । "शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोरि"ति पुत्रो ह्येष सन्त्स पुनः पिता भवत्येतन्नु तद्यस्मादग्नीऽआदधीत ॥६॥ तद्वाऽएष ऽएव मृत्युः ।

---

* इदमग्निमं चेति ब्राह्मणद्वयं महोपस्थानविधायकं काण्वशतपथे नास्ति । किन्तु इतः आग्रयणेष्टिविधिरारब्धः ।    मा. सं. २५. २२.

य एष तपति तद्यदेष एव मृत्युस्तस्माद्या एतस्मादर्व्वाच्यः प्रजास्ता म्रियन्तेऽथ याः पराच्यस्ते देवास्तस्मादु तेऽमृतास्तस्येमाः सर्व्वाः प्रजा रश्मिभिः प्राणेष्वभिहिता यथाश्वोऽश्वाभिधान्या वाभीशुभिर्व्वैवमस्येमास्सर्व्वाः प्रजा रश्मिभिः प्राणेष्वभिहितास्तस्मादु रश्मयः प्राणानभ्यवतायन्ते ॥७॥ स यस्य कामयते । तस्य प्राणमादायोदेति स म्रियते स यो हैतं मृत्युमनतिमुच्याथामुं लोकमेति यथा हैवास्मिंल्लोके न संयतमाद्रियते यदा यदैव कामयतेऽथ मारयत्येवमु हैवामुष्मिंल्लोके पुनः पुनरेव प्रमारयति ॥८॥ स यत्सायमस्तमिते द्वेऽआहुती जुहोति । तदेताभ्यां पूर्वाभ्यां पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठत्यथ यत्प्रातरनुदिते द्वेऽआहुती जुहोति तदेताभ्यामपराभ्यां पद्भ्यामेतस्मिन्मृत्यौ प्रतितिष्ठति स एनमेष उद्यन्नेवादायोदेति तदेतं मृत्युमतिमुच्यते सैषाग्निहोत्रे मृत्योरतिमुक्तिरति ह वै पुनर्मृत्युं मुच्यते य एवमेतामग्निहोत्रे मृत्योरतिमुक्तिं व्वेद॥९॥यथावाऽइषोरनीकम् । एवं यज्ञानामग्निहोत्रं येन वाऽइषोरनीकमेति सर्वा वैतेनेषुरेत्येतेनो हास्य सर्वे यज्ञक्रतव ऽएतं मृत्युमतिमुक्ताः ॥१०॥अहोरात्रे ह वाऽअमुष्मिंल्लोके परिप्लवमाने । पुरुषस्य सुकृतं क्षिणुतोऽर्वाचीनं वाऽअतोऽहोरात्रे तथो हास्याहोरात्रे सुकृतं न क्षिणुतः ॥११॥ स यथा रथोपस्थे तिष्ठन् । उपरिष्टाद्रथचक्रे पल्यङ्गमानेऽउपावेक्षेतैवं परस्तादर्व्वाचीनोऽहोरात्रेऽउपावेक्षते न ह वाऽअस्याहोरात्रे सुकृतं क्षिणुतो य ऽएवमेतामहोरात्रयोरतिमुक्तिं व्वेद ॥१२॥ पूर्वेणाहवनीयं परीत्य । अन्तरेण गार्हपत्यं चैति न वै देवा मनुष्यं व्विदुस्तऽएनमेतदन्तरेणातियन्तं व्विदुरयं वै न इदं जुहोतीत्यग्निर्वै पाप्मनोऽपहन्ता तावस्याहवनीयश्च गार्हपत्यश्चान्तरेणातियतः पाप्मानमपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ॥१३॥ उत्तरतो वाऽअग्निहोत्रस्य द्वारꣳ । स यथा द्वारा प्रपद्येतैवं तदथ यो दक्षिणत एत्यास्ते यथा बहिर्धा चरेदेवं तत् ॥१४॥ नौर्हवाऽएषा स्वर्ग्या । यदग्निहोत्रं तस्याऽएतस्यै नावः स्वर्ग्याया आहवनीयश्चैव गार्हपत्यश्च नौमण्डेऽअथैष एव नावाजो यत्क्षीरहोता ॥१५॥ स य-

त्प्राङुपोदैति । तदेनां प्राचीमभ्यजति स्वर्गं लोकमभि तया स्वर्गं लोकꣳ समश्नुते तस्या उत्तरत ऽआरोहणꣳ सैनꣳस्वर्गं लोकꣳ समापयत्यथ यो दक्षिणत एत्यास्ते यथा प्रतीर्णायामागच्छेत्स व्विहीयेत स तत एव बहिर्धा स्यादेवं तत् ॥१६॥ अथ यामेताꣳ समिधमभ्यादधाति सेष्टका येन मन्त्रेण जुहोति तद्यजुर्येनैतामिष्टकामुपदधाति यदा वाऽइष्टकोपधीयतेऽथाहुतिर्हूयते तदस्योपहितास्वेवेष्टकास्वेता आहुतयो हूयन्ते या ऽएता अग्निहोत्राहुतयः ॥१७॥ प्रजापतिर्व्वाऽअग्निः । संवत्सरो वै प्रजापतिः संवत्सरे संवत्सरे ह वाऽअस्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते संवत्सरे संवत्सरे चित्यमग्निमाप्नोति य एवं व्विद्वानाग्निहोत्रं जुहोत्येतदु हास्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते चित्यमग्निमाप्नोति ॥१८॥ सप्त च वै शतान्यशीतीनामृचः । व्विꣳशतिश्च स यत्सायं प्रातरग्निहोत्रं जुहोति ते द्वेऽआहुती ता ऽअस्य संवत्सरऽआहुतयः सम्पद्यन्ते ॥१९॥ सप्त चैव शतानि व्विꣳशतिश्च । संवत्सरे संवत्सरे ह वाऽअस्याग्निहोत्रं महतोक्थेन सम्पद्यते संवत्सरे संवत्सरे महदुक्थमाप्नोति य एवं व्विद्वानग्निहोत्रं जुहोत्येतदु हास्याग्निहोत्रं महतोक्थेन सम्पद्यते महदुक्थमाप्नोति ॥२०॥

इति शुक्लयजुर्वेदीयमाध्यान्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥

२. ३. २.

अग्नौ ह वै देवाः । सर्व्वान् पशून्निदधिरे ये च ग्राम्या ये चारण्या व्विजयं वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा ॥१॥ तानु हाग्निर्निचकमे । तैः संगृह्य रात्रिं प्रविवेश पुनरेम इति देवा एदाग्निं तिरोभूतं ते ह व्विदां चक्रुरिह वै प्राविक्षद्रात्रिं वै प्राविक्षदिति तमेतत्प्रत्यायत्याꣳरात्रौ सायमुपातिष्ठन्त देहिनः पशून् पुनर्नः पशून्देहीति तेभ्योऽग्निः पशून् पुनरददात् ॥२॥ तस्मै कमग्नीऽउपातिष्ठते । अग्नी वै दातारौ तावेवैतद्याचते सायमुपातिष्ठेत सा-

यꣳ हि देवा उउपातिष्ठन्त दत्तो हैवास्माऽएतौ पशून्य एवं विद्वा-नुपतिष्ठते ॥३॥ अथ यस्मान्नोपतिष्ठेत । उभये ह वाऽइदमग्रे सहा-सुर्देवाश्च मनुष्याश्च तद्यद्ध स्म मनुष्याणां न भवति तद्ध स्म देवा-न्याचन्तऽइदं वै नो नास्तीदं नोऽस्त्विति ते तस्याऽएव याञ्च्यायै द्वेषेण देवास्तिरोभूता नेद्धिनसानि नेद्द्वेष्योऽसानीति तस्मान्नोपति-ष्ठेत ॥४॥ अथ यस्मादुपैव तिष्ठेत । यज्ञो वै देवानामाशीर्यजमानस्य तद्वाऽएष एव यज्ञो यदाहुतिराशीरेव यजमानस्य तद्यदेवास्यात्र तदे-वैतदुपतिष्ठमानः कुरुते तस्मादुपैव तिष्ठेत ॥५॥ अथ यस्मान्नोपतिष्ठेत । यो वै ब्राह्मणं वा सꣳसमानोऽनु चरति क्षत्रियं वायं मे दास्यत्ययं मे गृहान् करिष्यतीति यो वै तं वाद्येन वा कर्मणा वाभिरिराधयिषति तस्मै वै स देयं मन्यतेऽथ य आह किं नु त्वं ममासि यो मे न ददा सीतीश्वर एनं द्वेष्टोरीश्वरो निर्व्वेदं गन्तोस्तस्मान्नोपतिष्ठेतैतादित्त्वेवैष एतं याचते यदिन्द्धे यज्जुहोति तस्मान्नोपातिष्ठेत ॥६॥ अथ यस्मादु-पैव तिष्ठेत । उत वै याचन्दातारं लभतऽएवोतो भर्ता भार्यं नानुबु-ध्यते स यदैवाह भार्यो वै तेऽस्मि बिभृहि मेत्यथैनं व्वेदाथैनं भार्यं मन्यते तस्मादुपैव तिष्ठेतेदमित्तु समस्तं यस्मादुपातिष्ठेत ॥७॥ प्रजा-पतिर्वाऽएष भूत्वा । यावत ईष्टे यावदेनमनु तस्य रेतः सिञ्चति यदग्निहोत्रं जुहोतीदमेवैतत्सर्व्वमुपतिष्ठमानोऽनुविकरोतीदꣳ सर्व्वम-नुप्रजनयति ॥८॥ स वाऽउपवत्या प्रतिपद्यते । इयं वाऽउप ह्येयेने-यमुप यद्धीदं किं च जायतेऽस्यां तदुपजायतेऽथ यन्न्यृच्छत्यस्यामेव तदुपोप्यते तदह्ना रात्र्या भूयो भूय एवाक्षय्यं भवति तदक्षय्येणैवैत-द्भूम्ना प्रतिपद्यते ॥९॥ स आह । [2]उपप्रयन्तोऽअध्वरमित्यध्वरो वै यज्ञ उपप्रयन्तो यज्ञमित्येवैतदाह मन्त्रं वोचेमाग्नयऽइति मन्त्रमु ह्यस्माऽए-तद्वक्ष्यन् भवत्यारे अस्मे च शृण्वतऽइति यद्यप्यस्मदारकादस्यथ न

१ See तै. सं. १. ५. १०.

१ "उपप्रयन्तः" इत्यारभ्य "परिते दूडभ०" इत्यन्ता महोपस्थानमन्त्रा माध्यन्दिनसंहितायां ११–३६ कण्डिकासूक्ताः ॥

एतुच्छृण्वेवैवमेवैतन्मन्यस्वेत्येवैतदाह ॥१०॥ "अग्निर्मूर्धा दिवः । ककुत्पतिः पृथिव्या अयम् । अपाᳫँ रेताᳫँसि जिन्वती"त्यन्वेव धावति तद्यथा याचन् कल्याणं व्वदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्माऽअसीत्येवमेषा ॥११॥ अथैन्द्राग्नी । "उभा वामिन्द्राग्नीऽआहुवध्याऽउभा राधसः सह मादयध्यै । उभा दाताराविषाᳫँ रयीणामुभा व्वाजस्य सातये हुवे वा"मित्येष वाऽइन्द्रो य एष तपति स यदस्तमेति तदाहवनीयं प्रविशति तदुभावेवैतत्सह सन्ताऽउपतिष्ठतऽउभौ मे सह सन्तौ दत्तामिति तस्मादैन्द्राग्नी ॥ १२ ॥ "अयं ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः । तं जानन्नग्नऽआरोहाथा नो व्वर्धया रयि"मिति पुष्टं वै रयिर्भूयो भूयऽएव नऽइदं पुष्टं कुर्व्वित्येवैतदाह ॥१३॥ "अयमिह प्रथमः । धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः । यमप्नवानो भृगवो व्विरुरुचुर्वनेषु चित्रं व्विभ्वं व्विशे विश"ऽइत्यन्वेव धावति तद्यथा याचन् कल्याणं व्वदेदामुष्यायणो वै त्वमस्यलं वै त्वमेतस्माऽअसीत्येवमेषा यथोऽएवैष तथोऽएवैनमेतदाह यदाह व्विभ्वं व्विशे व्विशऽइति विभूर्ह्येष व्विशे विशे ॥१४॥ अस्य प्रत्नाम् । अनु द्युतᳫँ शुक्रं दुदुह्रेऽअह्रयः । पयः सहस्रसामृषिमिति परमा वाऽएषा सनीनां यत्सहस्रसनिस्तदेतस्यैवावरुद्ध्यै तस्मादाह पयः सहस्रसामृषिमिति ॥१५॥ तदेतत्समाहार्यᳫँषडृचम् । तस्योपवती प्रथमा प्रत्नवत्युत्तमावाचाम तद्यस्मादुपवत्यथाद एव प्रत्नं यावन्तो ह्येव सनाग्रे देवास्तावन्त एव देवास्तस्माददः प्रत्नं तदिमेऽएवान्तरेण सर्वे कामास्तेऽस्माऽइमे सञ्जानाने सर्वान् कामान्त्सन्नमतः ॥१६॥ स वै त्रिः प्रथमां जपति । त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात्त्रिः प्रथमां जपति त्रिरुत्तमाम् ॥१७॥ यद्ध वाऽअत्राग्निहोत्रं जुह्वत् । वाचेन वा कर्मणा वा मिथ्या करोत्यात्मनस्तदवद्यत्यायुषो वा वर्चसो वा प्रजायै वा ॥१८॥ तदु खलु तनूपाऽअग्नेऽसि । तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनं तन्मऽआपृणेति ॥१९॥ यद्ध वाऽअत्राग्निहोत्रं

जुह्वत् । वाद्येन वा कर्मणा वा मिथ्या करोत्यात्मनस्तदुवद्यत्यायुषो वा व्वर्चसो वा प्रजायै वा तन्मे पुनराप्याययेत्येवैतदाह तथो ह्यस्यै- तत्पुनराप्यायते ॥२०॥ इन्धानास्त्वा । शतꣳ हिमा द्युमन्तꣳ समि- धीमहीति शतं व्वर्षाणि जीव्यास्मेत्येवैतदाह तावत्त्वा महान्तꣳसमि- महीति यदाह द्युमन्तꣳ समिधीमहीति व्वयस्वन्तो व्वयस्कृतꣳ सह- स्वन्तः सहस्कृतमिति व्वयस्वन्तो व्वयं भूयास्म व्वयस्कृत्त्वं भूया इत्ये- वैतदाह सहस्वन्तो व्वयं भूयास्म सहस्कृत्वं भूया इत्येवैतदाहाग्ने सपत्नदम्भनमदब्धासोऽअदाभ्य"मिति त्वया व्वयꣳ सपत्नान् पापीयसः क्रियास्मेत्येवैतदाह ॥२१॥ "चित्रावसो स्वस्ति ते पारमशीये"ति । त्रिरेतज्जपति रात्रिर्वै चित्रावसुः सा हीयꣳ संगृह्येव चित्राणि व्वसति तस्मान्नारकाच्चित्रं ददृशे ॥२२॥ एतेन ह स्म वाऽऋषयः । रात्रेः स्वस्ति पारꣳ समश्नुवतऽएतेनो ह स्मैनान्रात्रेर्नाष्ट्रा रक्षाꣳसि न विन्दन्त्येतेनोऽएवैष एतद्रात्रेः स्वस्ति पारꣳ समश्नुतऽएतेनोऽएनꣳ रात्रेर्नाष्ट्रा रक्षाꣳसि न विन्दन्त्येतावन्नु तिष्ठन् जपति ॥२३॥ अथा- सीनः । "स त्वमग्ने सूर्यस्य" व्वर्च्चसा गथाऽइति तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति तेनैतदाह "समृषीणाꣳ स्तुतेने"ति तद्यदुपतिष्ठते तेनैतदाह "सं प्रियेण धाम्ने"त्याहुतयो वाऽअस्य प्रियं धामाहुतिभिरेव तदाह "समहमायुषा सं व्वर्च्चसा सं प्रजया सꣳरायस्पोषेण ग्मिषी- ये"ति यथा त्वमेतैः समगथा एवमहमायुषा व्वर्च्चसा प्रजया रायस्पोषे- णेति यद्ब्रूमेति तदेवमहमेतैः सङ्गच्छाऽइत्येवैतदाह ॥२४॥ अथ गाम- भ्यैति । "अन्धः स्थान्धो वो भक्षीय महः स्थ महो वो भक्षीये"ति यानि वो व्वीर्याणि यानि वो महाꣳसि तानि वो भक्षीयेत्येवैतदाहो"र्ज स्थोर्जं वो भक्षीये"ति रस स्थ रसं वो भक्षीयेत्येवैतदाह "रायस्पोष स्थ रायस्पोषं वो भक्षीये"ति भूमा स्थ भूमानं वा भेक्षीतेत्येवैतदाह ॥ २५ ॥ "रेवती रमध्व"मिति रेवन्तो हि पशवस्तस्मादाह रेवती रमध्वमित्यस्मिन्योनावस्मिन् गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षये । "इहैव स्त मापगाते"त्यात्मन एवतदाह मदेव मापगातेति ॥ २६ ॥ अथ

गामभिमृशति। "सᳫंहितासि विश्वरूपी"ति विश्वरूपा इव हि पशवस्तस्मादाह विश्वरूपी"त्यूर्जा माविश गौपत्येने"त्यूर्जेति यदाह रसेनेति तदाह गौपत्येनेति यदाह भूम्नेति तदाह ॥२७॥ अथ गार्हपत्यमभ्यैति। स गार्हपत्यमुपतिष्ठतऽ"उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम्। नमो भरन्त एमसी"ति नम एवास्माऽएतत्करोति यथैनं न हिᳫंस्यात् ॥२८॥ "राजन्तमध्वराणां। गोपामृतस्य दीदिविम्। वर्धमानᳫंस्वे दम"इति स्वं वै तऽइदं यन्मम तन्नो भूयो भय एव कुर्वित्येवैतदाह ॥२९॥ "स नः पितेव सूनवे। अग्ने सूपायनो भव। सचस्वा नः स्वस्तय"ऽइति यथा पिता पुत्राय सूपचरो नैवैनं केन चन हिनस्त्येवं नः सूपचरऽएधि मैव त्वा केन चन हिᳫंसिषन्नित्येवैतदाह ॥३०॥ अथ द्विपदाः। "अग्ने त्वं नोऽअन्तम उत त्राता शिवो भवा वरूथ्यः। वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमᳫं रयिं दाः॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः। स नो बोधि श्रुधी हवमुरुष्याणोऽअघायतः समस्मा"दिति ॥३१॥ यद्वा आहवनीयमुपतिष्ठते। पशूंस्तद्याचते तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठतऽउच्चावचा इव हि पशवोऽथ यद्गार्हपत्यं पुरुषांस्तद्याचते तद्वायत्रं प्रथमं त्रिचं गायत्रं वाऽअग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसोपप्रैति ॥३२॥ अथ द्विपदाः। पुरुषच्छन्दसं वै द्विपदा द्विपाद्वाऽअयं पुरुषः पुरुषानेवैतद्याचते पुरुषान्हि याचते तस्माद्द्विपदाः पशुमान्ह वै पुरुषवान् भवति यऽएवं विद्वानुपतिष्ठते ॥३३॥ अथ गामभ्यैति। "इडऽएह्यदितऽएही"तीडा हि गौरदितिर्हि गौस्तामभिमृशति "काम्या एते"ति मनुष्याणाᳫं ह्येतासु कामाः प्रविष्टास्तस्मादाह काम्या एतेति "मयि वः कामधरणं भूयादि"त्यहं वः प्रियो भूयासमित्येवैतदाह ॥३४॥ अथान्तरेणाहवनीयं च गार्हपत्यं च। प्राङ् तिष्ठन्नग्निमीक्षमाणो जपति "सोमानᳫं स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः॥ यो रेवान्योऽअमीवहा वसुवित्पुष्टिवर्धनः। स नः सिषक्तु यस्तुरः॥

मा नः शꣳसोऽअररुषो धूर्त्तिः प्रणङ्मर्त्यस्य । रक्षाणो ब्रह्मणस्पत''ऽइति ॥३५॥ यद्वाऽआहवनीयमुपतिष्ठते । ''दिवं तदुपतिष्ठतेऽथ यद्गार्हपत्यं पृथिवीं तदथैतदन्तरिक्षमेषा हि दिग्बृहस्पतेरेताꣳ ह्येतद्दिशमुपतिष्ठते तस्माद्बार्हस्पत्यं जपति ॥३६॥ ''महि त्रीणामवोऽस्तु । द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ न हि तेषाममाचन नाध्वसु वारणेषु । ईशे रिपुरघशꣳसः ॥ ते हि पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्र''मिति तत्रास्ति नाध्वसु वारणेष्वित्येते ह वाऽअध्वानो वारणा यऽइमेऽन्तरेण द्यावापृथिवीऽएतान्ह्येतदुपातिष्ठते तस्मादाह नाध्वसु वारणेष्विति ॥३७॥ अथैन्द्री । इन्द्रो वै यज्ञस्य देवता सेन्द्रमेवैतदग्न्युपस्थानं कुरुते ''कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुष''ऽइति यजमानो वै दाश्वान्न यजमानाय दुह्यसीत्येवैतदाह ॥३८॥ अथ सावित्री । सविता वै देवानां प्रसविता तथो हास्माऽएते सवितृप्रसूता एव सर्वे कामाः समृध्यन्ते ''तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदया''दिति ॥३९॥ अथाग्नेयी । तदग्नयऽएवैतदात्मानमन्ततः परिददाति गुप्त्यै ''परि ते दूडभो रथोऽस्माँ ३॥ऽअश्नोतु विश्वतः । येन रक्षसि दाशुष'' इति यजमाना वै दाश्वाꣳसो यो ह वाऽअस्यानाधृष्यतमो रथस्तेनैष यजमानानभिरक्षति स यस्तेऽनाधृष्यतमो रथो येन यजमानानभिरक्षसि तेन नः सर्वतोऽभिगोपायेत्येवैतदाह त्रिरेतज्जपति ॥४०॥ अथ पुत्रस्य नाम गृह्णाति। ''इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनव''दिति यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात् ॥ ४१ ॥ Cf तै. सं. १. ५. ७, ८. मै. सं. १. ५. ९–१२. काठ. सं. ७–६–८.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे द्वितीयकाण्डे तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ (३. ४)

इति द्वितीयकाण्डे तृतीयोऽध्यायस्समाप्तः ॥

२. ३. ३.

( क्षुल्लकोपस्थानम् )

अथ हुतेऽग्निहोत्रऽउपतिष्ठते । '‘भूर्भुवः स्व’’रिति तत्सत्येनैवैतद्वाचꣳ समर्धयति यदाह भूर्भुवः स्वरिति तया समृद्धयाशिषमाशास्ते ‘‘सुप्रजाः प्रजाभिःस्या’’मिति तत्प्रजामाशास्ते ‘‘सुवीरो वीरै’’रिति तद्वीरानाशास्ते ‘‘सुपोषः पोषै’’रिति तत्पुष्टिमाशास्ते ॥१॥ यद्वाऽअदो दीर्घमग्न्युपस्थानम् । आशीरेव साशीरियं तदेतावतैवैतत्सर्वमाप्नोति तस्मादेतेनैवोपतिष्ठेतैतेन न्वेव वयमुपचराम इति ह स्माहासुरिः ॥२॥ अथ प्रवत्स्यन् । गार्हपत्यमेवाग्रऽउपतिष्ठतेऽथाहवनीयꣳ ॥३॥ स गार्हपत्यमुपतिष्ठते । ‘‘नर्य प्रजां मे पाही’’ति प्रजाया ह्येष ईष्टे तत्प्रजामेवास्माऽएतत्परिददाति गुप्त्यै ॥४॥ अथाहवनीयमुपतिष्ठते । ‘‘शꣳस्य पशून्मे पाही’’ति पशूनाꣳ ह्येष ईष्टे तत्पशूनेवास्माऽएतत्परिददाति गुप्त्यै ॥५॥ अथ प्र वा व्रजति प्र वा धावयति । स यत्र वेलां मन्यते तत्स्यन्त्वा वाचं विसृजतेऽथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव तमुपेयात् ॥६॥ स आहवनीयमेवाग्रऽउपतिष्ठते । अथ गार्हपत्यं गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥७॥ स आहवनीयमुपतिष्ठते । ‘‘आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम् । अग्ने सम्राडभि द्युम्नमभि सह आयच्छस्वे’’त्यथोपविश्य तृणान्युपलुम्पति ॥ ८ ॥ अथ गार्हपत्यमुपतिष्ठते । ‘‘अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः । अग्ने गृहपतेऽभिद्युम्नमभि सह आयच्छस्वे’’त्यथोपविश्य तृणान्युपलुम्पत्येतन्नु जपेनैतेन न्वेव भूयिष्ठा इवोपतिष्ठन्ते ॥९॥ स वै खलु तूष्णीमेवोपतिष्ठेत । इदं वै यस्मिन्वसति ब्राह्मणो वा राजा वा श्रेयान्मनुष्यो न्वेव तमेव नार्हति वक्तुमिदं मे त्वं गोपाय प्राह

---

१. मा. सं. ३. ३७. २. मा. सं. ३. ३८. ३. मा. सं. ३. ३९.

वत्स्यामीत्यथास्मिन्नेते श्रेयाꣳसो व्वसन्ति देवा अग्नयः क उ तान्-ईति व्वक्तुमिदं मे यूयं गोपायत प्राहं व्वत्स्यामीति ॥१०॥ मनो ह वै देवा मनुष्यस्याजानन्ति । स व्वेद गार्हपत्यः परिदां मेदमुपागादिति तूष्णीमेवाहवनीयमुपतिष्ठते स व्वेदाहवनीयः परिदां मेदमुपागादिति ॥११॥ अथ प्र वा व्रजति प्र वा धावयति । स यत्र व्वेलां मन्यते तत्स्यन्त्वा वाचं विसृजतेऽथ प्रोष्य परेक्ष्य यत्र वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव तमुपेयात् ॥१२॥ स आहव-नीयमेवाग्रऽउपतिष्ठते । अथ गार्हपत्यं तूष्णीमेवाहवनीयमुपतिष्ठते तूष्णीमुपविश्य तृणान्युपलुम्पति तूष्णीमेव गार्हपत्यमुपातिष्ठते तूष्णी-मुपविश्य तृणान्युपलुम्पति ॥१३॥ अथातो गृहाणामेवोपचारः । एतद्ध वै गृहपतेः प्रोषुष आगताद्गृहाः समुत्त्रस्ता इव भवन्ति कि-मयमिह व्वदिष्यति किं वा करिष्यतीति स यो ह तत्र किञ्चिद्वदति वा करोति वा तस्माद्गृहाः प्रत्रसन्ति तस्येश्वरः कुलं विक्षोब्धोरथ यो ह तत्र न व्वदति न किं चन करोति तं गृहा उपसꣳश्रयन्ते न वाऽअयमिहावादीन्न किं चनाकरादिति स यदिहापि सुक्रुद्ध इव स्याच्छ्व एव ततस्तत्कुर्याद्यद्वादिष्यन्वा करिष्यन्वा स्यादेष उ गृहा-णामुपचारः ॥१४॥ ( ४. १. )॥ Cf. मै. सं. १. ५. १४.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥

## २. ३. ४.

### ( पिण्डपितृयज्ञः )

प्रजापतिं वै भूतान्युपासीदन् । प्रजा वै भूतानि व्वि नो धेहि यथा जीवामेति ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्यो-पासीदंस्तानब्रवीद्यज्ञो व्वोऽन्नममृतत्वं व ऊर्ग्वः सूर्यो वो ज्योतिरिति ॥१॥ अथैनं पितरः । प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्ता-नब्रवीन्मासि मासि वोऽशनꣳ स्वधा वो मनोजवो नश्चन्द्रमा

वो ज्योतिरिति ॥२॥ अथैनं मनुष्याः । प्रावृता उपस्थं कृत्वोपासीदंस्तानब्रवीत्सायं प्रातर्वोऽशनं प्रजा वो मृत्युर्वोऽग्निर्वो ज्योतिरिति ॥३॥ अथैनं पशव उपासीदन् । तेभ्यः स्वैषमेव चकार यदैव यूयं कदा च लभाध्वै यदि काले यद्यनाकालेऽथैवाश्नाथेति तस्मादेते यदैव कदा च लभन्ते यदि काले यद्यनाकालेऽथैवाश्नन्ति ॥४॥ अथ हैनᳪं शश्वदप्यसुरा उपसेदुरित्याहुः । तेभ्यस्तमश्च मायां च प्रददावस्त्यहैवासुरमायेतीव पराभूता ह त्वेव ताः प्रजास्ता इमाः प्रजास्तथैवोपजीवन्ति यथैवाभ्यः प्रजापतिर्व्यदधात् ॥५॥ नैव देवा अतिक्रामन्ति । न पितरो न पशवो मनुष्या एवैकेऽतिक्रामन्ति तस्माद्यो मनुष्याणां मेद्यत्यशुभे मेद्यति विह्वर्च्छति हि न ह्ययनाय चन भवत्यनृतᳪं हि कृत्वा मेद्यति तस्मादु सायंप्रातराश्येव स्यात्स यो हैवं विद्वान्त्सायंप्रातराशी भवति सर्वᳪं हैवायुरेति यदु ह किं च व्वाचा व्याहरति तदु हैव भवत्येतद्धि देवसत्यं गोपायति तद्धैतत्तेजो नाम ब्राह्मणं य एतस्य व्रतᳪं शक्नोति चरितुम् ॥ ६ ॥ तद्वाऽएतत् । मासिमास्येव पितृभ्यो ददतो यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददात्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स एतांᳪं रात्रिं क्षीयते तस्मिन्क्षीणे ददाति तथैभ्योऽसमदं करोत्यथ यदक्षीणे दद्यात्समदᳪं ह कुर्याद्देवेभ्यश्च पितृभ्यश्च तस्माद्यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददाति ॥७॥ स वाऽअपराह्णे ददाति । पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणां तस्मादपराह्णे ददाति ॥८॥ स जघनेन गार्हपत्यम् । प्राचीनावीती भूत्वा दक्षिणासीन एतं गृह्णाति स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति ॥९॥ तᳪं श्रपयति । तस्मिन्नधिश्रितऽआज्यं प्रत्यानयत्यग्नौ वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैव पितॄणां तस्मादधिश्रित ऽआज्यं प्रत्यानयति ॥१०॥ स उद्वास्याग्नौ द्वेऽआहुती जुहोति देवेभ्यः । देवान्वाऽएष

उपावर्तते य आहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाचारीत्तदु देवेभ्यो निह्नुते स देवैः प्रसूतोऽथैतत्पितृभ्यो ददाति तस्मादुद्धास्याग्नौ द्वेऽआहुती जुहोति देवेभ्यः ॥११॥ स वाऽअग्नये च सोमाय च जुहोति । स यदग्नये जुहोति सर्वत्र ह्येवाग्निरन्वाभक्तोऽथ यत्सोमाय जुहोति पितृदेवत्यो वै सोमस्तस्मादग्नये च सोमाय च जुहोति ॥१२॥ स जुहोति । "अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहे"त्यग्नौ मेक्षणमभ्यादधाति तत्स्विष्टकृद्भाजनमथ दक्षिणेनान्वाहार्यपचनꣳ सकृदुल्लिखति तद्वेदिभाजनꣳसकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुल्लिखति ॥१३॥ अथ परस्तादुल्मुकं निदधाति । स यदनिधायोल्मुकमथैतत्पितृभ्यो दद्यादसुररक्षसानि हैषामेतद्विमथ्नीरंस्तथो हैतात्पितॄणामसुररक्षसानि न विमथ्नते तस्मात्परस्तादुल्मुकं निदधाति ॥१४॥ स निदधाति । "येरूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मा"दित्यग्निर्हि रक्षसामपहन्ता तस्मादेवं निदधाति ॥१५॥ अथोदपात्रमादायावनेजयति । 'असाववनेनिक्ष्वे'त्येव यजमानस्य पितर'मसाववनेनिक्ष्वे'ति पितामह'मसाववनेनिक्ष्वे'ति प्रपितामहं तद्यथाऽऽशिष्यतेऽभिषिञ्चेदेवं तत्॥१६॥अथ सकृदाच्छिन्नान्युपमूलं दिनानि भवन्ति । अग्रमिव वै देवानां मध्यमिव मनुष्याणां मूलमिव पितॄणां तस्मादुपमूलं दिनानि भवन्ति सकृदाच्छिन्नानि भवन्ति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदाच्छिन्नानि भवन्ति ॥१७॥ तानि दक्षिणोपस्तृणाति । तत्र ददाति स वाऽइति ददातीतीव वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवं पितॄणां तस्मादिति ददाति ॥१८॥ स ददाति । "असावेतत्त"ऽइत्येव यजमानस्य पित्रे "ये च त्वामन्वि"त्यु हैकऽआहुस्तदु तथा न ब्रूयात्स्वयं वै तेषाꣳ सह येषाꣳ

१. मा. सं. २. ३०.

२ एतत्ते तत ये च त्वामनु, एतत्ते पितामह प्रपितामह ये च त्वामनु' इत्येव तैत्तिरीये पाठः । तै. सं. ३. ७. ५. ३.

सह तस्मादु ब्रूयादसावेतत्तऽइत्येव यजमानस्य पित्रेऽसावेतत्तऽइति पितामहायासावेतत्तऽइति प्रपितामहाय तद्यदितः पराग्ददाति सकृदु ह्येव पराञ्चः पितरः ॥१९॥ तत्र जपति। "अत्र पितरो मादयध्वं यथाभागमावृषायध्वमि"ति यथाभागमश्नीतेत्येवैतदाह ॥२०॥ अथ पराङ् पर्यावर्तते । तिर इव वै पितरो मनुष्येभ्यस्तिर इवैतद्भवति स वाऽआ तमितोरासीतेत्याहुरेतावान्ह्यसुरिति स वै मुहूर्तमेवासित्वा ॥२१॥ अथोपपल्यय्य जपति । "अमीमदन्त पितरो यथाभागमावृषायिषते"ति यथाभागमाशिषुरित्येवैतदाह ॥२२॥ अथोदपात्रमादायावनेजयति । असाववनेनिक्ष्वेत्येव यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत् ॥२३॥ अथ नीविमुद्वृह्य नमस्करोति । पितृदेवत्या वै नीविस्तस्मान्नीविमुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञियानेवैनानेतत्करोति षट् कृत्वो नमस्करोति षड्वाऽऋतव ऋतवः पितरस्तस्मात्षट् कृत्वो नमस्करोति "गृहान्नः पितरो दत्ते"ति गृहाणाᳲ ह पितर ईशतऽएषोऽएतस्याशीः कर्मणोऽथावजिघ्रति प्रत्यवध्राय पिण्डान्त्स यजमानभागोऽग्नौ सकृदाच्छिन्नान्यभ्यादधाति पुनरुल्मुकमपिसृजति ॥२४॥ Cf. का. श. १. ३. ३. ( ४. २. ) ॥

इति शुक्लयजुर्वेदीयमाध्यान्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥

## २. ३. ५.

## ( आग्रयणेष्टिः )

तदु होवाच कहोडः कौषीतकिः । अनयोर्वाऽअयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथेममश्नामेति तस्माद्वाऽआग्रयणेष्ट्या यजतऽइति ॥ १ ॥ तदु होवाच याज्ञवल्क्यः । देवाश्च वाऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे ततोऽसुरा उभयीरोषधीर्याश्च मनुष्या

१. मां. सं. २. ३१. २ मां. सं. २. ३२.

उपजीवन्ति याश्च पशवः कृत्ययेव त्वद्विषेणेव त्वत्प्रलिलिपुरुतैवं चिद्देवानभिभवेमेति ततो न मनुष्या आशुर्न पशव आलिलिशिरे ता हेमाः प्रजा अनाशकेन नोत्पराबभूवुः ॥२॥ तद्धै देवाःशुश्रुवुः। अनाशकेन ह वाऽइमाः प्रजाः पराभवन्तीति ते होचुर्हन्तेदमासामपजिघाꣳसामेति केनेति यज्ञेनैवेति यज्ञेन ह स्म वै तद्देवाः कल्पयन्ते यदेषां कल्प्यमासऽर्षयश्च ॥३॥ ते होचुः। कस्य न इदं भविष्यतीति ते मम ममेत्येव न सम्पादयां चक्रुस्ते हासम्पाद्योचुराजिमेवास्मिन्नजामहै स यो न उज्जेष्यति तस्य न इदं भविष्यतीति तथेति तस्मिन्नाजिमाजन्त ॥४॥ ताविन्द्राग्नी ऽउदजयताम्। तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवतीन्द्राग्नी ह्यस्य भागधेयमुदजयतां तौ यत्रेन्द्राग्नीऽउज्जिगीवाꣳसौ तस्थतुस्तद्विश्वे देवा अन्वाजग्मुः ॥ ५ ॥ क्षत्रं वाऽइन्द्राग्नी। विशो विश्वे देवा यत्र वै क्षत्रमुज्जयत्यन्वाभक्ता वै तत्र विट्तद्विश्वान्देवानन्वाभजतां तस्मादेष वैश्वदेवश्चरुर्भवति ॥६॥ तं वै पुराणानां कुर्यादित्याहुः। क्षत्रं वाऽइन्द्राग्नी नेत्क्षत्रमभ्यारोहयाणीति तौ वाऽउभावेव नवानाꣳ स्यातां यद्धि पुरोडाश इतरश्चरुरितरस्तेनैव क्षत्रमनभ्यारूढं तस्मादुभावेव नवानाꣳ स्याताम् ॥७॥ तऽउ ह विश्वे देवा ऊचुः। अनयोर्वाऽअयं द्यावापृथिव्यो रसो हन्तेमेऽअस्मिन्नाभजामेति ताभ्यामेतं भागमकल्पयन्नेतं द्यावापृथिव्यमेककपालं पुरोडाशं तस्माद्द्यावापृथिव्य एककपालः पुरोडाशो भवति तस्येयमेव कपालमेकेव हीयं तस्मादेककपालो भवति ॥८॥ तस्य परिचक्षा। यस्यै वै कस्यै च देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तोऽथैतथ्ꣳसर्वमेव जुहोति न स्विष्टकृतेऽवद्यति सा परिचक्षोतो हुतः पर्यावर्तते ॥९॥ तदाहुः। पर्याभूद्वाऽअयमेककपालो मोहिष्यति राष्ट्रमिति नास्य सा परिचक्षाहवनीयो वाऽआहुतीनां प्रतिष्ठा स यदाहवनीयं प्राप्यापि दशकृत्वः पर्यावर्तेत न तदाद्रियेत यदीत्त्वन्ये वदन्ति कस्तत्सन्धमुपेयात्तस्मादाज्यस्यैव यजेदा-

ज्यꣳ ह वाऽअनयोर्द्यावापृथिव्योः प्रत्यक्षꣳ रसस्तत्प्रत्यक्षमेवैनेऽएतत्स्वेन रसेन मेधेन प्रीणाति तस्मादाज्यस्यैव यजेत् ॥१०॥ एतेन वै देवाः । यज्ञेनेष्ट्वोभयीनामोषधीनां याश्च मनुष्या उपजीवन्ति याश्च पशवः कृत्यामिव त्वद्विषमिव त्वदपजघ्नुस्तत आश्नन्मनुष्या आलिशन्त पशवः ॥११॥ अथ यदेष एतेन यजते । तन्नाह न्वेवैतस्य तथा कश्चन कृत्ययेव त्वद्विषेणेव त्वत्प्रलिम्पतीति देवा अकुर्वन्निति त्वेवैष एतत्करोति यमु चैव देवा भागमकल्पयन्त तमु चैवैभ्य एष एतद्भागं करोतीमा उ चैवैतदुभयीरोषधीर्याश्च मनुष्या उपजीवन्ति याश्च पशवस्ता अनमीवा अकिल्बिषाः कुरुते ता अस्यानमीवा अकिल्बिषा इमाः प्रजा उपजीवन्ति तस्माद्वाऽएष एतेन यजते ॥१२॥ तस्य प्रथमजो गौर्दक्षिणा । अग्र्यमिव हीदꣳ स यदीजानः स्याद्दर्शपूर्णमासाभ्यां वा यजेताथैतेन यजेत यद्युऽअनीजानः स्याच्चातुष्प्राश्यमेवैतमोदनमन्वाहार्यपचने पचेयुस्तं ब्राह्मणा ऽअश्नीयुः ॥१३॥ द्वया वै देवा देवाः । अहैव देवा ऽअथ ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवास्तद्यथा व्वषट्कृतेꣳ हुतमेवमस्यैतद्भवति तत्रो यच्छक्नुयात्तद्द्यान्नादक्षिणꣳ हविः स्यादिति ह्याहुर्नाग्निहोत्रे जुहुयात्समदꣳ ह कुर्याद्यदग्निहोत्रे जुहुयादन्यद्वाऽआग्रयणमन्यदग्निहोत्रं तस्मान्नाग्निहोत्रे जुहुयात् ॥१४॥ Cf. का. श. १. ३. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥

इति तृतीयः प्रपाठकस्समाप्तः ॥

( कण्डिकाः ॥११३॥ )

# अथ द्वितीयकाण्डे चतुर्थः प्रपाठकः ॥

## २. ४. १.

### ( दाक्षायणयज्ञः )

प्रजापतिर्ह वाऽएतेनाग्रे यज्ञेनेजे । प्रजाकामो बहुः प्रजया पशुभिः स्याᳬंश्रियं गच्छेयं यशः स्यामन्नादः स्यामिति ॥१॥ स वै दक्षो नाम । तद्यदेनेन सोऽग्रेऽयजत तस्माद्दाक्षायणयज्ञो नामोतैनमेके व्वसिष्ठयज्ञऽइत्याचक्षतऽएष वै वसिष्ठ ऽएतमेव तदन्वाचक्षते स ऽएतेन यज्ञेनेजे स ऽएतेन यज्ञेनेष्ट्वा येयं प्रजापतेः प्रजातिर्या श्रीरेतद्बभूवैताᳬं ह वै प्रजातिं प्रजायतऽएताᳬंश्रियं गच्छति य एवं व्विद्वानेतेन यज्ञेन यजते तस्माद्वाऽएतेन यजेत ॥ २ ॥ तेनो ह तत ईजे । प्रतीदर्शः श्वैक्नः स ये तं प्रत्यासुस्तेषां व्विवचनमिवास व्विवचनमिव ह वै भवति य ऽएवं व्विद्वानेतेन यज्ञेन यजते तस्माद्वाऽएतेन यजेत ॥३॥ तमाजगाम । सुप्ला सार्ञ्जयो ब्रह्मचर्यं तस्मादेतं च यज्ञमनूचेऽन्यमु च सोऽनूच्य पुनः सृञ्जयान्जगाम ते ह सृञ्जया व्विदां चक्रुर्यज्ञं वै नोऽनूच्यागन्निति ते होचुः सह वै नस्तद्देवैरागन्यो नो यज्ञमनूच्यागन्निति स वै सहदेवः सार्ञ्जयस्तदप्येतन्निवचनमिवास्त्यन्यद्वाऽअरे सुप्ला नाम दध्रऽइति स ऽएतेन यज्ञेनेजे स ऽएतेन यज्ञेनेष्ट्वा येयᳬं सृञ्जयानां प्रजातिर्या श्रीरेतद्बभूवैता ᳬं ह वै प्रजातिं प्रजायतऽएताᳬंश्रियं गच्छति य ऽएवं व्विद्वानेतेन यज्ञेन यजते तस्माद्वाऽएतेन यजेत ॥४॥ तेनो ह तत ईजे । देवभागः श्रौतर्षः स उभयेषां कुरूणां च सृञ्जयानां च पुरोहित ऽआस परमता वै सा यो न्वेवैकस्य राष्ट्रस्य पुरोहितो ऽसत्सा न्वेव परमता किमु यो द्वयोः परमतामिवं ह वै गच्छति य ऽएवं व्विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥५॥ तेनो ह तत ऽईजे। दक्षः पार्व्वतिस्तऽइमेऽप्येतर्हि दाक्षायणा राज्यमिवैव प्राप्ता राज्यमिव ह वै प्राप्नोति य ऽएवं व्विद्वाने-

तेन यज्ञेन यजते तस्माद्वाऽएतेन यजेत स वाऽएकैक एवानूचीनाह्नं पुरो-
डाशो भवत्येतेनो हास्यासपत्नानुपबाधा श्रीर्भवति स वै द्वे पौर्णमा-
स्यौ यजते द्वेऽअमावास्ये द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते
॥६॥ अथ यत्पूर्वेद्युः । अग्नीषोमीयेण यजते पौर्णमास्यां ते द्वे देवते
द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ॥७॥ अथ प्रातः । आग्नेयः
पुरोडाशो भवत्यैन्द्रꣳ सान्नाय्यं ते द्वे देवते द्वे वै मिथुनं मिथुनमे-
वैतत्प्रजननं क्रियते ॥८॥ अथ यत्पूर्वेद्युः । ऐन्द्राग्नेन यजतेऽमावा-
स्यायां ते द्वे देवते द्वे वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ॥९॥
अथ प्रातराग्नेयः पुरोडाशो भवति । मैत्रावरुणी पयस्या नेद्यज्ञा-
दयानीति न्वेवाग्नेयः पुरोडाशोऽथैतावेव मित्रावरुणौ द्वे देवते द्वे
वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियतऽएतदु हास्य तद्रूपं येन बहु-
र्भवति येन प्रजायते ॥१०॥ अथ यत्पूर्वेद्युः । अग्नीषोमीयेण यजते
पौर्णमास्यां यमेवामुमुपवसथेऽग्नीषोमीयं पशुमालभते स एवास्य सः
॥११॥ अथ प्रातः । आग्नेयः पुरोडाशो भवत्यैन्द्रꣳ सान्नाय्यं प्रातः
सवनमेवास्याग्नेयः पुरोडाश आग्नेयꣳ हि प्रातःसवनमथैन्द्रꣳ सान्ना-
य्यं माध्यन्दिनमेवास्य तत्सवनमैन्द्रꣳ हि माध्यन्दिनꣳ सवनम्
॥१२॥ अथ यत्पूर्वेद्युः । ऐन्द्राग्नेन यजतेऽमावास्यायां तृतीयसवन-
मेवास्य तद्वैश्वदेवं वै तृतीयसवनमिन्द्राग्नी वै विश्वे देवाः ॥१३॥
अथ प्रातः । आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञा-
दयानीति न्वेवाग्नेयः पुरोडाशोऽथ यामेवामूं मैत्रावरुणीं वशामनु-
बन्ध्यामालभते सैवास्य मैत्रावरुणी पयस्या स पौर्णमासेन चामावा-
स्येन चेष्ट्वा यावत्सौम्येनाध्वरेणेष्ट्वा जयति तावज्जयति तदु खलु
महायज्ञो भवति ॥१४॥ अथ यत्पूर्वेद्युः । अग्नीषोमीयेण यजते पौर्ण-
मास्यामेतेन वाऽइन्द्रो वृत्रमहन्नेतेनोऽएव व्यजयत यास्येयं विजि-
तिस्तां तथोऽएवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथोऽ-
एव विजयतेऽथ यत्सन्नयत्यामावास्यं वै सान्नाय्यं दूरे तद्यदमावा-

स्येति क्षिप्रऽएवैतद्वृत्रं जघ्नुषे तमेतेन रसेनाप्रीणन्क्षिप्रे ह वै पाप्मानमपहते य एवं विद्वान् पौर्णमास्याᳬं सन्नयत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमास्तमेतत्पूर्वेद्युरभिषुण्वन्ति प्रातर्भक्षयिष्यन्तस्तमेतद्भक्षयन्ति यदपक्षीयते ॥१५॥ अथ यत्पूर्वेद्युः । अग्नीषोमीयेण यजते पौर्णमास्यामभिषुणोत्येवैनमेतत्तस्मिन्नभिषुतऽएतᳬं रसं दधात्येतेन रसेन तीव्रीकरोति स्वदयति ह वै देवेभ्यो हव्यᳬं स्वदते हास्य देवेभ्यो हव्यं य एवं विद्वान् पौर्णमास्याᳬं सन्नयति ॥१६॥ अथ यत्पूर्वेद्युः । ऐन्द्राग्नेन यजतेऽमावास्यायां दर्शपूर्णमासयोर्वै देवते स्त इन्द्राग्नीऽएव तेऽएवैतदञ्जसा प्रत्यक्षं यजत्यञ्जसा ह वाऽअस्य दर्शपूर्णमासाभ्यामिष्टं भवति य ऽएवमेतद्वेद ॥१७॥ अथ प्रातः । आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीति न्वेवाग्नेयः पुरोडाशोऽथैतावेवार्धमासौ मित्रावरुणौ य एवापूर्यते स वरुणो योऽपक्षीयते स मित्रस्तावेताᳬं रात्रिमुभौ समागच्छतस्तदुभावेवैतत्सह सन्तौ प्रीणाति सर्व्वᳬं ह वाऽअस्य प्रीतं भवति सर्व्वमाप्तं य ऽएवमेतद्वेद ॥१८॥ तद्वाऽएताᳬंरात्रिम् । मित्रो वरुणे रेतः सिञ्चति तदेतेन रेतसा प्रजायते यदापूर्यते तद्यदेषात्र मैत्रावरुणी पयस्यावक्लृप्ततमा भवति ॥१९॥ साम्नाय्यभाजना वाऽअमावास्या । तद्दस्तत्पौर्णमास्यां क्रियते स यद्धात्रापि सन्नयेज्जामि कुर्य्यात्समदं कुर्यात्तदेनमद्भ्य ओषधिभ्यः सम्भृत्याहुतिभ्योऽधिजनयति स एष आहुतिभ्यो जातः पश्चाद्ददृशे ॥२०॥ मिथुनाद्विवाऽएनमेतत्प्रजनयति । योषा पयस्या रेतो वाजिनं तद्वाऽअनुष्ठ्या यन्मिथुनाज्जायते तदेनमेतस्मान्मिथुनात्प्रजननात्प्रजनयति तस्मादेषात्र पयस्या भवति ॥२१॥ अथ वाजिभ्यो वाजिनं जुहोति । ऋतवो वै वाजिनो रेतो वाजिनं तद्वनुष्ठ्यैवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्माद्वाजिभ्यो वाजिनं जुहोति ॥२२॥ स वै पश्चादिव यज्ञस्य जुहोति । पश्चाद्वै परीत्य वृषा योषामधि द्रवति तस्याᳬं रेतः सिञ्चति स वै प्रागेवाग्ने जुहोत्य'ग्ने वीहि'त्यनु वषट्करोति

तत्स्विष्टकृद्भाजनꣳ स वै प्रागेव जुहोति ॥२३॥ अथ दिशो व्याघारयति । "दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहे"ति पञ्च दिशः पञ्चर्त्तवस्तदृतुभिरेवैतद्दिशो मिथुनीकरोति ॥ २५॥ तद्वै पञ्चैव भक्षयन्ति । होता चाध्वर्युश्च ब्रह्मा चाग्नीच्च यजमानः पञ्च वाऽऋतवस्तदृतूनामेवैतद्रूपं क्रियते तदृतुष्वेवैतद्रेतः सिक्तं प्रतिष्ठापयति यजमानो भक्षयति प्रथमो रेतः परिगृह्णानीत्यथोऽअप्युत्तमो मय्युत्तमे रेतः प्रतितिष्ठादित्युपहूत उपह्वयस्वेति सोममेवैतत्कुर्वन्ति ॥ २५ ॥

Cf.का. श. १. ३. ४. शां. ब्रा. ४. ४.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ (४. ४.)
द्वितीयकाण्डे चतुर्थोऽध्यायस्समाप्तः ॥

## २. ४. २.

## अथ चातुर्मास्यविधिः ॥

### ( वैश्वदेवपर्व )

प्रजापतिर्ह वाऽइदमग्रऽएक एवास । स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स प्रजा ऽअसृजत ता ऽअस्य प्रजाः सृष्टाः पराबभूवुस्तानीमानि व्वयाꣳसि पुरुषो वै प्रजापतेर्नेदिष्ठं द्विपाद्वा अयं पुरुषस्तस्माद्द्विपादो व्वयाꣳसि ॥१॥ स ऐक्षत प्रजापतिः । यथा न्वेव पुरैकोऽभूवमेवमु न्वेवाप्येतर्ह्येक एवास्मीति स द्वितीयाः ससृजे ता अस्य परैव बभूवुस्तदिदं क्षुद्रꣳ सरीसृपं यदन्यत्सर्पेभ्यस्तृतीयाः ससृजऽइत्याहुस्ताऽअस्य परैव बभूवुस्तऽइमे सर्पा एता ह न्वेव द्वयीर्याज्ञवल्क्य उवाच त्रयीरु तु पुनरृचा ॥२॥ सोऽर्चञ्छ्राम्यन्प्रजापतिरीक्षांचक्रे । कथं नु मे प्रजाः सृष्टाः पराभवन्तीति स हैतदेव ददर्शानशनतया वै मे प्रजाः पराभवन्तीति स ऽआत्मन एवाग्रे स्तनयोः पय ऽआप्याययांचक्रे स प्रजा ऽअसृजत ता अस्य प्रजाः सृष्टा

स्तनावेवाभिपद्य तास्ततः सम्बभूवुस्ता इमा अपराभूताः ॥३॥ तस्मादेतदृषिणाभ्यनूक्तम् । "प्रजा ह तिस्रोऽअत्यायमीयु"रिति तद्याः पराभूतास्ता एवैतदभ्यनूक्तं "न्यन्या अर्कमभितो विविश्र"इत्यग्निर्वाऽअर्कस्तद्या इमाः प्रजा अपराभूतास्ता अग्निमभितो निविष्टास्ता एवैतदभ्यनूक्तम् ॥४॥ "महद्धं तस्थौ भुवनेष्वन्तरि"ति। प्रजापतिमेवैतदभ्यनूक्तं "पवमानो हरित आविवेशे"ति दिशो वै हरितस्ता अयं वायुः पवमान आविष्टस्ता एवैषर्गभ्यनूक्ता ता ऽइमाः प्रजास्तथैव प्रजायन्ते यथैव प्रजापतिः प्रजा असृजतेदꣳ हि यदैव स्त्रियै स्तनावाप्यायेतेऽऊधः पशूनामथैव यज्जायते तज्जायते तास्ततस्तनावेवाभिपद्य सम्भवन्ति ॥५॥ तद्वै पय एवान्नम् । एतद्ध्यग्रे प्रजापतिरन्नमजनयत तद्वाऽअन्नमेव प्रजा अन्नाद्धि सम्भवन्तीदꣳ हि यासां पयो भवति स्तनावेवाभिपद्य तास्ततः सम्भवन्त्यथ यासां पयो न भवति जातमेव ता अप्यादयन्ति तदु ता अन्नादेव सम्भवन्ति तस्माद्वन्नमेव प्रजाः ॥६॥ स यः प्रजाकामः । एतेन हविषा यजतऽआत्मानमेवैतद्यज्ञं विधत्ते प्रजापतिं भूतꣳ[2] ॥७॥ स वाऽआग्नेयो ऽष्टाकपालः पुरोडाशो भवति । अग्निर्वै देवतानां मुखं प्रजनयिता स प्रजापतिस्तस्मादाग्नेयो भवति ॥८॥ अथ सौम्यश्चरुर्भवति । रेतो वै सोमस्तदग्नौ प्रजनयितरि सोमꣳरेतः सिञ्चति तत्पुरस्तान्मिथुनं प्रजननम् ॥९॥ अथ सावित्रः । द्वादशकपालो वाष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता प्रजापतिर्मध्यतः प्रजनयिता तस्मात्सावित्रो भवति ॥१०॥ अथ सारस्वतश्चरुर्भवति । पौष्णश्चरुर्योषा वै सरस्वती वृषा पूषा तत्पुनर्मिथुनं प्रजननमेतस्माद्वाऽउभयतो मिथुनात्प्रजननात्प्रजापतिः प्रजाः ससृजऽइतश्चोर्ध्वा इतश्चावाचीस्तथोऽएवैष एतस्मादुभयत एव मिथुनात्प्रजननात्प्रजाः सृजतऽइतश्चोर्ध्वा इतश्चावाचीस्तस्माद्वाऽएतानि पञ्च हवीꣳषि

१. "बृहद्ध तस्थौ" इति ऋक्संहितापाठः See. ऋ. सं. ६. ७. ८.
२. भूतं इति क.

षि भवन्ति ॥११॥ अथातः पयस्याया एवायतनम् । मारुतस्तु सप्तकपालो विशो वै मरुतो देवविशस्ता हेदमनिषेद्धा इव चेरुस्ताः प्रजापतिं यजमानमुपेत्योचुर्वि वै ते मथिष्यामहऽइमाः प्रजा या एतेन हविषा स्रक्ष्यसऽइति ॥१२॥ स ऐक्षत प्रजापतिः । पुरा मे पूर्वाः प्रजा अभूवन्निमा उ चेदिमे विमथ्नते न ततः किं चन परिशेक्ष्यतऽइति तेभ्य एतं भागमकल्पयदेतं मारुतꣳ सप्तकपालं पुरोडाशꣳ स एष मारुतः सप्तकपालस्तद्यत्सप्तकपालो भवति सप्त–सप्त हि मारुतो गणस्तस्मान्मारुतः सप्तकपालः पुरोडाशो भवति ॥१३॥ तं वै स्वतवोभ्य इति कुर्यात् । स्वयꣳ हि तऽएतं भागमकुर्वतो तो स्वतवोभ्यो याज्यानुवाक्ये न विन्दन्ति स उ खलु मारुत एव स्यात्स वाऽएष प्रजाभ्य एवाहिꣳसायै क्रियते तस्मान्मारुतः ॥१४॥ अथातः पयस्यैव । पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत एव सम्भूता यतः सम्भवन्ति तदेवाभ्य एतत्करोति तद्याः पूर्वैर्हविर्भिः प्रजाः सृजते ता एतस्मात्पयस एतस्यै पयस्यायै सम्भवन्ति ॥१५॥ तस्यां मिथुनमस्ति । योषा पयस्या रेतो वाजिनं तस्मान्मिथुनाद्विश्वमसाम्मितमनु प्राजायत तद्यदेतस्मान्मिथुनाद्विश्वमसम्मितमनु प्राजायत तस्माद्वैश्वदेवी भवति ॥१६॥ अथ द्यावापृथिव्य एककपालः पुरोडाशो भवति । एतैर्वै हविर्भिः प्रजापतिः प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात्ता ऽइमा द्यावापृथिवीभ्यां परिगृहीतास्तथोऽएवैष एतद्या ऽएतैर्हविर्भिः प्रजाः सृजते ता द्यावापृथिवीभ्यां परिगृह्णाति तस्माद् द्यावापृथिव्य एककपालः पुरोडाशो भवति ॥१७॥ अथात आवृदेव । नोपकिरन्त्युत्तरवेदिं विसृष्टमसत्सर्वमसद्वैश्वदेवमसादिति त्रेधा बर्हिः संनद्धं भवति तत्पुनरेकधैतद्धि प्रजननस्य रूपं प्रजननमु हीदं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रेधा सत्पुनरेकधा पुरव उपसंनद्धा भवन्ति तं प्रस्तरं गृह्णाति प्रजननमु हीदं प्रज-

१. ऋगियं माध्यन्दिनसंहितायां नास्ति ।

ननमु हि प्रस्वस्तस्मात्प्रसूः प्रस्तरं गृह्णाति ॥१८॥ आसाद्य हवीꣳ
ष्यग्निं मन्थन्ति । अग्निꣳ ह वै जायमानमनु प्रजापतेः प्रजा जज्ञिरे
तथोऽएवैतस्याग्निमेव जायमानमनु प्रजा जायन्ते तस्मादासाद्य हवीꣳषि
ष्यग्निं मन्थन्ति ॥१९॥ नवप्रयाजं भवति । नवानुयाजं दशाक्षरा वै वि-
राड्थैतामुभयतो न्यूनां विराजं करोति प्रजननायैतस्माद्वाऽउभयतो
न्यूनात् प्रजननात् प्रजापतिः प्रजाः ससृज इतश्चोर्ध्वा इतश्चावाचीस्तथो
एवैष एतस्मादुभयत एव न्यूनात्प्रजननात्प्रजाः सृजतऽइतश्चोर्ध्वा
इतश्चावाचीस्तस्मान्नवप्रयाजं भवति नवानुयाजम् ॥२०॥ त्रीणि स-
मिष्टयजूꣳषि भवन्ति । ज्यायऽइव हीदꣳ हविर्यज्ञाद्यत्र नवप्रयाजं
नवानुयाजमथोऽअप्येकमेव स्याद्धविर्यज्ञो हि तस्य प्रथमजो गौर्द-
क्षिणा ॥२१॥ एतेन वै प्रजापतिः यज्ञेनेष्ट्वा । येयं प्रजापतेः प्रजा-
तिर्या श्रीरेतद्बभूवैताꣳ ह वै प्रजातिं प्रजायतऽएताꣳ श्रियं गच्छति
य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वाऽएतेन यजेत ॥२२॥
Cf. का. श. १. ४. ३. तै. सं. १. ८. २. तै. ब्रा. १. ६. २
मै. सं. १. १०. १. काठ. सं. ९. ४. ३६. १–४. कपि. सं. ८.
७. and शां. ब्रा. ५. १. २.

इति शुक्लयजुर्वेदीयमाध्यन्दिनीयशाखीये शथपथब्राह्मणे
द्वितीयकाण्डे चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ (५. १.)

## २. ४. ३.

## ( वरुणप्रघासपर्व )

वैश्वदेवेन वै प्रजापतिः । प्रजाः ससृजे ता अस्य प्रजाः सृष्टा
वरुणस्य यवान् जक्षुर्वरुण्यो ह वाऽअग्रे यवस्तद्यन्न्वेव वरुणस्य यवा-
न्प्रादंस्तस्माद्वरुणप्रघासा नाम ॥१॥ ता वरुणो जग्राह । ता वरुणगृ-
हीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च प्राणो-

१, २. मन्थति इति. पाठान्तरम् ।

दानौ ह्वैवाभ्यो नापचक्रमतुरथान्याः सर्व्वा[1] देवता ऽअपचक्रमुस्तयोर्ह्वै-
वास्य हेतोः प्रजा न पराबभूवुः ॥२॥ ता ऽएतेन हविषा प्रजापतिर-
भिषज्यत् । तद्याश्चैवास्य प्रजा जाता आसन्याश्चाजातास्ता उभ-
यीर्व्वरुणपाशात्प्रामुञ्चत्ता ऽअस्यानमीवा अकिल्बिषाः प्रजाः प्राजायन्त[2]
॥३॥ अथ यदेष ऽएतैश्चतुर्थे मासि यजते । तन्नाह न्वेवैतस्य तथा
प्रजा व्वरुणो गृह्णातीति देवा ऽअकुर्व्वन्निति न्वेवैष[3] ऽएतत्करोति याश्च
न्वेवास्य[4] प्रजा जाता याश्चाजातास्ता ऽउभयीर्व्वरुणपाशात्प्रमुञ्चति ता
ऽअस्यानमीवा ऽअकिल्बिषाः प्रजाः प्रजायन्ते[5] तस्माद्वा ऽएष एतैश्चतुर्थे
मासि यजते ॥४॥ तद्वै द्वे व्वेदी द्वावग्नी भवतः । तद्यद्द्वे व्वेदी द्वाव-
ग्नी भवतस्तदुभयत ऽएवैतद्वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चा-
वाचीस्तस्माद्द्वे व्वेदी द्वावग्नी भवतः ॥ ५ ॥ स उत्तरस्यामेव व्वेदौ ।
उत्तरवेदिमुपकिरति न दक्षिणस्यां क्षत्रं व्वै व्वरुणो व्विशो मरुतः क्षत्र-
मेवैतद्विश[6] उत्तरं करोति तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा
उपासते तस्मादुत्तरस्यामेव व्वेदाऽउत्तरवेदिमुपकिरति न दक्षिण-
स्याम् ॥६॥ अथैतान्येव पञ्च हवीँषि भवन्ति । एतैर्वै हविर्भिः प्रजा-
पतिः प्रजा ऽअसृजतैतैरुभयतो व्वरुणपाशात्प्रजाः प्रामुञ्चदितश्चोर्ध्वा-
ऽइतश्चावाचस्तिस्माद्वा ऽएतानि पञ्च हवीँषि भवन्ति ॥७॥ अथैन्द्रा-
ग्नो द्वादशकपालः पुरोडाशो भवति । प्राणोदानौ वा ऽइन्द्राग्नी तद्य-
था पुण्यं चक्रुषे पुण्यं कुर्य्यादेवं तत्तयोर्ह्वैवास्य हेतोः प्रजा न परा-
बभूवुस्तत्प्राणोदानाभ्यामेवैतत्प्रजा भिषज्यति प्राणोदानौ प्रजासु द-
धाति तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥८॥ उभयत्र
पयस्ये भवतः । पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत
एव सम्भूता यतः सम्भवन्ति तत एवैतदुभयतो व्वरुणपाशात्प्रजाः
प्रमुञ्चतीतश्चोर्ध्वा ऽइतश्चावाचीस्तस्मादुभयत्र पयस्ये भवतः ॥९॥

---

१. सर्व्वा इति. घ.  २. प्राजायत इति. ग. घ.  ३. त्वेवैष इति. क. घ.
४. त्वेवास्येति. क. घ.  ५. प्रजायत इति. ग. घ.  ६. तद्विश इति. क.

व्वारुण्युत्तरा भवति । व्वरुणो ह वाऽअस्य प्रजा ऽअगृह्णात्तत्प्रत्यक्षं व्वरुणपाशात्प्रजाः प्रमुञ्चति मारुती दक्षिणाजामितायै न्वेव मारुती भवति जामि ह कुर्य्याद्यदुभे व्वारुण्यौ स्यातामतो ह वाऽअस्य दक्षिणतो मरुतः प्रजा ऽअजिघाꣳसंस्तानेतेन भागेनाशमयत्तस्मान्मारुती दक्षिणा ॥१०॥ तयोरुभयोरेव करीराण्यावपति । कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत कम्वेवैष एतत्प्रजाभ्यः कुरुते ॥११॥ तयोरुभयोरेव शमीपलाशान्यावपति । शं वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत शम्वेवैष एतत्प्रजाभ्यः कुरुते ॥१२॥ अथ काय एककपालः पुराडाशो भवति । कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत कम्वेवैषऽ एतत्प्रजाभ्यः कायेनैककपालेन पुरोडाशेन कुरुते तस्मात्काय एककपालः पुरोडाशो भवति ॥१३॥ अथ पूर्वेद्युः । अन्वाहार्यपचनेऽतुषानिव यवान् कृत्वा तानीषद्दिवोपतप्य तेषां करम्भपात्राणि कुर्व्वन्ति यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि ॥१४॥ तत्रापि मेषं च मेषीं च कुर्व्वन्ति । तयोर्मेषे च मेष्यां च यद्यनैडकीरूर्णा व्विन्देत्ताः प्रणिज्य निश्लेषयेद्यद्युऽअनैडकीर्न व्विन्देदुथो ऽअपि कुशोर्णाऽएव स्युः ॥१५॥ तद्यन्मेषश्च मेषी च भवतः । एष वै प्रत्यक्षं व्वरुणस्य पशुर्यन्मेषस्तत्प्रत्यक्षं व्वरुणपाशात्प्रजाः प्रमुञ्चति यवमयौ भवतो यवान्हि जक्षुषीर्व्वरुणो ऽगृह्णान्मिथुनौ भवतो मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति ॥१६॥ सऽउत्तरस्यामेव पयस्यायां मेषीमवदधाति । दक्षिणस्यां मेषमेवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमुपशेते ॥१७॥ स सर्व्वाण्येव हवीꣳष्यध्वर्युः । उत्तरस्यां व्वेदावासादयत्यथैतामेव पयस्यां प्रतिप्रस्थाता दक्षिणस्यां व्वेदावासादयति ॥१८॥ आसाद्य हवीꣳष्यग्निं मन्थति । अग्निं मन्थित्वानुप्रहृत्याभिजुहोत्यथाध्वर्युरेवाहा'ग्नये समिध्यमानायानुब्रूही'ति ताऽउभावेवेध्मावभ्याधत्त उभौ समिधौ परिशिꣳष्टऽउभौ पूर्व्वावाघारावाघारयतोऽथाध्वर्युरे-

१. अध्वर्युरिति घ. २. 'मथित्वा' इति भाष्ये प्रतीकग्रहणम् ।

वाह्याग्निमग्नीत्संमृड्ढी'त्यसंमृष्टमेव भवति सम्प्रेषितम् ॥१९॥ अथ प्रतिप्रस्थाता प्रतिपरैति । स पत्नीमुदानेष्यन् पृच्छति केन चरसीति व्वरुण्यं वाऽएतत्स्त्री करोति यदन्यस्य सत्यन्येन चरत्यथो नेन्मेऽन्तःशल्या जुहवदिति तस्मात्पृच्छति निरुक्तं वाऽएनः कनीयो भवति सत्यᳬहि भवति तस्माद्धेव पृच्छति सा यन्न प्रतिजानीत ज्ञातिभ्यो हास्यै तदहितᳬस्यात् ॥२०॥ तां व्वाचयति । "प्रघासिनो हवामहे मरुतश्च रिशादसः । करम्भेण सजोषस"ऽइति यथा पुरोऽनुवाक्यैवमेषैतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति ॥२१॥ तानि वै प्रतिपुरुषम् । यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या ऽअस्य प्रजा जातास्ता व्वरुणपाशात्प्रमुञ्चत्येकेनातिरिक्तानि भवन्ति तद्या एवास्य प्रजा अजातास्ता व्वरुणपाशात्प्रमुञ्चति तस्मादेकेनातिरिक्तानि भवन्ति ॥२२॥ पात्राणि भवन्ति । पात्रेषु ह्यशनमश्यते यवमयानि भवन्ति यवान्हि जक्षुषीर्व्वरुणोऽगृह्णाच्छूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते पत्नी जुहोति मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति ॥२३॥ पुरा यज्ञात्पुराहुतिभ्यो जुहोति । अहुतादो वै व्विशो व्विशो वै मरुतो यत्र वै प्रजापतेः प्रजा व्वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च तद्धासां मरुतः पाप्मानं व्विमेथिरे तथोऽएवैतस्य प्रजानां मरुतः पाप्मानं व्विमथ्नते तस्मात्पुरा यज्ञात्पुराहुतिभ्यो जुहोति ॥२४॥ स वै दक्षिणेऽग्नौ जुहोति । "यद्ग्रामे यदरण्य"ऽइति ग्रामे वा ह्यरण्ये वैनः क्रियते "यत्सभायां यदिन्द्रिय"ऽइति यत्सभायामिति यन्मानुषऽइति तदाह यदिन्द्रियऽइति यद्देवत्रेति तदाह "यदेनश्चकृमा व्वयमिदं तदवयजामहे स्वाहे"ति यत्किं च व्वयमेनश्चकृमेदं व्वयं तस्मात्सर्व्वस्मात्प्रमुच्यामहऽइत्येवैतदाह ॥२५॥ अथैन्द्रीं मरुत्वतीं जपति । यत्र वै प्रजापतेः

---

१. शल्पा इति. ग. २. मा. सं. ३. ४४. ३. प्रतिपुरुषं इति ग.
४. सा. इति. क. ५. मा. सं. ३. ४५. ६. तदाहेति. क.

प्रजानां मरुतः पाप्मानं विमेथिरे तद्धेक्षांचक्रऽइमे ह मे प्रजा न विमथ्नीरन्निति ॥२६॥ स एतामैन्द्रीं मरुत्वतीमजपत् । क्षत्रं वाऽइन्द्रो विशो मरुतः क्षत्रं वै विशो निषेद्धा निषिद्धा असन्निति तस्मा[1]दैन्द्री ॥२७॥ "मो षूणः[2] । इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मि[3]न्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गी" रिति ॥२८॥ अथैनां वाचयति । "अक्रन् कर्म कर्मकृत" ऽइत्यक्रन्हि कर्म कर्मकृतः "सह वाचा मयोभुवे"ति सह हि वाचाऽक्रन् "देवेभ्यः कर्म कृत्वे"ति देवेभ्यो हि कर्म कृत्वा "स्तं प्रेत सचाभुव" इत्यन्यतो ह्योढया सह भवन्ति तस्मादाह सचाभुव इत्यस्तं प्रेतेति जघनार्धो वाऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रासीषदद्गृहा वाऽअस्तं गृहाः प्रतिष्ठा तद्गृहेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥२९॥ प्रतिपराणीयोद्रैति प्रतिप्रस्थाता । संमृजन्त्यग्निꣳ संमृष्टेऽग्नौ ताऽउभावेवोत्तरावाघारावाघारयतोऽथाध्वर्युरेवाश्राव्य होतारं प्रवृणीते प्रवृतो होतोत्तरस्यै वेदेर्होतृषदनऽउपविशत्युपविश्य प्रसौति ताऽउभावेव प्रसूतौ स्रुच आदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह 'समिधो यजे'ति यज यजेति चतुर्थे चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥३०॥ अथाध्वर्युरेवा 'हाग्नयऽनुब्रूही'ति । आग्नेयमाज्यभागं ता उभावेव चतुराज्यस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाहा'ग्निं यजे'ति ताऽउभावेव वषट्कृते जुहुतः ॥३१॥ अथाध्वर्युरेवाह 'सोमायानुब्रूही'ति । सौम्यमाज्यभागं ताऽउभावेव चतुराज्यस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह 'सोमं यजे'ति ताऽउभावेव वषट्कृते जुहुतः ॥३२॥ तद्यत्कि च वाचा कर्तव्यम् । अध्वर्युरेव तत्करोति न प्रतिप्रस्थाता तद्यदध्वर्युरेवाश्रा-

---

१. तस्मादैन्द्री इति. ग. २. म॰. सं. ३. ४६. ३. शुष्मिन्नवया इति. क.
४. महश्चियस्येति घ. ५. मा. सं. ३. ४७. ६. भवतीति. क.
७. प्रतिप्रस्थाता इति. घ. ८. होतृषदन इति. ग. ९. अध्वर्युरेवेति. घ.

वयतीहैव यत्र व्वषट्क्रियते ॥३३॥ कृतानुकरऽएव प्रतिप्रस्था-
ता । क्षत्रं वै व्वरुणो व्विशो मरुतस्तत्क्षत्रायैवैतद्विशं कृता-
नुकरामनुवर्त्मानं करोति प्रत्युद्यामिनीꣳह क्षत्राय व्विशं कुर्या-
द्यदपि प्रतिप्रस्थाताऽऽश्रावयेत्तस्मान्न प्रतिप्रस्थाताश्रावयति॥३४॥
पाणावेव प्रतिप्रस्थाता[1] । स्रुचौ कृत्वोपास्तेऽथाध्वर्युरेवैतैर्हविर्भिः
प्रचरत्याग्नेयेनाष्टाकपालेन पुरोडाशेन सौम्येन[2] चरुणा सावित्रेण द्वा-
दशकपालेन वाष्टाकपालेन वा पुरोडाशेन सारस्वतेन चरुणा पौष्णे-
न चरुणैन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥३५॥ अथैताभ्यां पय-
स्याभ्यां प्रचरिष्यन्तौ व्विपरिहरतः । स यो मेषो भवति मारुत्यां
तं व्वारुण्यामवदधाति या मेषी भवति व्वारुण्यां तां मारुत्यामवद-
धाति तद्यदेवं व्विपरिहरतः क्षत्रं वै व्वरुणो व्वीर्यं पुमान्वीर्यमेवैत-
त्क्षत्रे धत्तोऽवीर्या वै स्त्री व्विशो मरुतस्तदवीर्यामेवैतद्विशं कुरुत-
स्तस्मादेवं व्विपरिहरतः॥३६॥ अथाध्वर्युरेवाह 'व्वरुणायानुब्रूही'ति ।
स ऽउपस्तृणीतऽआज्यमथास्यै व्वारुण्यै पयस्यायै द्विरवद्यति सोऽ-
न्यतरेणावदानेन सह मेषमवदधात्यथोपरिष्टादाज्यस्याभिघारयति
प्रत्यनक्त्यवदानेऽ अतिक्रामत्यतिक्रम्याश्राव्याह 'व्वरुणं यजे'ति
व्वषट्कृते जुहोति ॥३७॥ सव्ये पाणावध्वर्युः[3] । स्रुचौ कृत्वा
दक्षिणेन प्रतिप्रस्थातुर्[4]व्वंसोऽन्वारभ्याह 'मरुद्भ्योऽनुब्रूही'त्युपस्तृ-
णीतऽआज्यं प्रतिप्रस्थाताथास्यै[5] मारुत्यै पयस्यायै द्विरवद्यति सोऽ-
न्यतरेणावदानेन सह मेषीमवदधात्यथोपरिष्टादाज्यस्याभिघारयति
प्रत्यनक्त्यवदानेऽअतिक्रामत्यथाध्वर्युरेवाश्राव्याह 'मरुतो यजे'ति
व्वषट्कृते जुहोति ॥३८॥ अथाध्वर्युरेव कायेन[6] । एककपालेन
पुरोडाशेन प्रचरति कायेनैककपालेन पुरोडाशेन प्रचर्याध्वर्युरेवाहा
'ग्नये स्विष्टकृतेऽनुब्रूही'ति स सर्वेषामेव हविषामध्वर्युः सकृ-

---

१. प्रस्थाता इति. ग. प्रस्थाता इति घ, २. सौम्येनेति. ग. घ.

३. अध्वर्युरिति ग. अध्वर्युरिति घ, See. तै.सं.६.५-८.२. तस्मात् स्त्रियोनिरिन्द्रियाः

४. प्रस्थातुरिति. ग. घ. ५. अस्यै इति ग. घ. ६. कायेनेति. घ.

त्सकृदवद्यत्यथैतस्या ऽएव पयस्यायै प्रतिप्रस्थाता सकृदवद्य-त्यथोपरिष्टादिद्वराज्यस्याभिघारयतस्ताऽउभावेवातिक्रामतोऽतिक्रम्या-श्राव्याध्वर्युरेवाहा'ग्निᳯस्विष्टकृतं यजे'ति ताऽउभावेव व्वषट्कृते जुहुतः ॥३९॥ अथाध्वर्युरेव प्राशित्रमवद्यति । इडाᳯ सम-वदाय प्रतिप्रस्थात्रेऽतिप्रजिहीते तत्रापि प्रतिप्रस्थाता मारुत्यै पय-स्यायै द्विरभ्यवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयत्युपहूय मार्जयन्ते ॥४०॥ अथाध्वर्युरेवाह 'ब्रह्मन् प्रस्थास्यामि । समिधमाधायाग्निम-ग्नीत्संमृड्ढी'ति स स्रुचोरेवाध्वर्युः पृषदाज्यं व्यानयतेऽथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवति तत्स द्वेधा व्यानयतऽउतो तत्र पृषदाज्यं न भवति स यदेवोपभृत्याज्यं तत्स द्वेधा व्यानयेत ताऽउभावेवाति-क्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह'देवान्यजे'ति यज यजेति चतुर्थे चतुर्थेऽनुयाजे समानयमानौ नवभिरनुयाजैश्चरतस्तद्यन्नवप्रयाजं भव-ति नवानुयाजं तदुभयत एवैतद्वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इत-श्चावाचीस्तस्मान्नवप्रयाजं भवति नवानुयाजम्॥४१॥ताऽउभावेव साद-यित्वा स्रुचो व्यूहतः । स्रुचो व्युह्य परिधीन्त्सम्प्रज्य परिधिमभिपद्या-श्राव्याध्वर्युरेवाहे ''षिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाये''ति सूक्तवाकᳯ होता प्रतिपद्यतेऽथैताऽउभावेव प्रस्त-रौ समुल्लुम्पतऽउभावनुप्रहरत उभौ तृणेऽअपगृह्योपासाते यदा होता सूक्तवाकमाह ॥४२॥ अथाग्नीदाहानुप्रहरेति । ताऽउभावेवा-नुप्रहरतऽउभावात्मानाऽउपस्पृशेते ॥४३॥ अथाह 'संवदस्वे'ति । 'अगानग्नीदगच्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूही'त्यध्वर्युरेवैतदाह ताऽउभावेव परिधीननुप्रहरत उभौ स्रुचः सम्प्रगृह्य संस्फ्ये सादयतः ॥४४॥ अथाध्वर्युरेव प्रतिपरेत्य । पत्नीः संयाजयत्युपास्तऽएव प्रतिप्रस्थाता पत्नीः संयाज्योदैत्यध्वर्युः

१. उपरिष्टादिति. घ. २. स स्रुचोरिति. घ. ३. स्रुचो इति.घ.
४. आश्राव्येति. घ. ५. माह इति ग. माह इति. घ.
६. मानुषेभ्य इति घ. ७. स्फ्ये इति घ. ८. अध्वर्युरिति. घ.

॥४५॥ त्रीणि समिष्टयजूँषि जुहोति । तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति तद्ये व्वैश्वदेवेन यजमानयोर्व्वाससी परिहिते स्यातां तेऽ एवात्रापि स्यातामथास्यै व्वारुण्यै पयस्यायै क्षामकर्षमिश्रमादायाव-भृथं यन्ति व्वरुण्यं वाऽएतन्निर्व्वरुणतायै तत्र न साम गीयते न ह्यत्र साम्ना किं चन क्रियते तूष्णीमेवेत्याभ्यवेत्योपमारयति ॥४६॥ "अव-भृथ निचुम्पुण । निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽया-सिषमव मर्त्यैर्मर्त्यकृतं । पुरुराव्णो देव रिषस्पाही"ति कामँहैते यस्मै कामयेत तस्मै दद्यान्न हि दीक्षितवसने भवतः स यथाहि-स्त्वचो निर्मुच्येतैवँ सर्व्वस्मात्पाप्मनो निर्मुच्यते ॥४७॥ अथ केश-श्मश्रू वपते । समारोह्याग्नीऽउदवसायेव ह्येतेन यजते न हि तदव-कल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजतऽउत्सन्नयज्ञऽइव वाऽएष यच्चातुर्मा-स्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञे-नान्ततः प्रतितिष्ठति तस्मादुदवस्यति ॥४८॥ Cf. का. श. १. ५. १; तै. ब्रा. १. ६. ४, ५; मै. सं. १. ९. १, २; काठ. सं. ९. ४. ३१; ५–७. कपि. सं. ८. ७; शां ब्रा. ५. ३, ४.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥

## २. ४. ४.
## ( साकमेधपर्व )

व्वरुणप्रघासैर्वै प्रजापतिः । प्रजा व्वरुणपाशात्प्रामुञ्चत्ता अस्या-नमीवा अकिल्बिषाः प्रजाः प्राजायन्तथैतैः साकमेधैरेतैर्वै देवा वृत्र-मघ्नन्नेतैर्व्वेव व्यजयन्त येयमेषां व्विजितिस्तां तथोऽएवैष ऽएतैः पा-

१. स्यातामिति. घ.　　२. मा. सं. ३. ४८.
३. निचुम्पुण इति. ग. निचुम्पुण इति घ,　　४. भवत इति.क.
५ स यथाहिः इति. घ.　　६. तस्मादुदवस्यतीति ग. घ.
७. प्राजायन्त इति घ.　　८. व्येवं इति ङ०

प्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथोऽएव व्विजयते तस्माद्वाऽएष एतैश्चतुर्थे मासि यजते स वै व्व्यह्नमनूचीनाह्नं यजते ॥१॥ स पूर्वेद्युः । अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपत्यग्निꣳह वै देवाऽअनीकं कृत्वोपप्रेयुर्वृत्रꣳ हनिष्यन्तः स तेजोऽग्निर्नाव्यथत तथोऽएवैष ऽएतत्पाप्मानं द्विषन्तं भ्रातृव्यꣳ हनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति स तेजोऽग्निर्न व्यथते तस्मादग्नयेऽनीकवते ॥२॥ अथ मरुद्भ्यः सान्तपनेभ्यः । मध्यन्दिने चरुं निर्वपति मरुतो ह वै सान्तपना मध्यन्दिने व्वृत्रꣳ सन्तेपुः स[1] सन्तप्तोऽनन्नेव प्राणन् परिदीर्णः शिश्ये तथोऽएवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्तपनाः सन्तपन्ति तस्मान्मरुद्भ्यः सान्तपनेभ्यः[2] ॥३॥ अथ मरुद्भ्यो गृहमेधिभ्यः । शाखया व्वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुꣳ श्रपयति चरुरु ह्येव स यत्र क्व च तण्डुलानावपन्ति तन्मेधो देवा दधिरे प्रातर्वृत्रꣳ हनिष्यन्तस्तथोऽएवैष ऽएतत्पाप्मानं द्विषन्तं भ्रातृव्यꣳ हनिष्यन्मेधो धत्ते तद्यत्क्षीरौदनो भवति मेधो वै पयो मेधस्तण्डुलास्तमुभयं मेधमात्मन्धत्ते तस्मात्क्षीरौदनो भवति ॥४॥ तस्यावृत्[3] । सैव स्तीर्णा व्वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्यस्तस्यामेव स्तीर्णायां व्वेदौ परिधींश्च शकलांश्चोपनिदधति तथा सन्दोह्य चरुꣳ श्रपयति श्रपयित्वाभिघार्योद्वासयति ॥५॥ अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति । तयोरेनं द्वेधोद्धरन्ति तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति स्रुवं च स्रुचं च संमार्ष्ट्यथैताऽओदनावादायोदैति स्रुवं च स्रुचं चादायोदैति स इमामेव स्तीर्णां व्वेदिमभिमृश्य परिधीन् परिधाय यावतः शकलान् कामयते तावतोऽभ्यादधात्यथैताऽओदनावासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाददान आह ॥६॥ 'अग्नयेऽनुब्रूही'ति । आग्नेयमाज्यभागꣳ स दक्षिण-

---

१. स संतप्तो इति. घ. २. सपन्तानेभ्य इति. ग. ३. तस्यावृत् इति. ग.

स्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहा'ग्निं यजे'ति व्वषट्कृते जुहोति ॥७॥ अथाह 'सोमायानुब्रूही'ति । सौम्यमाज्यभागꣳ स उत्तरस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह 'सोमं यजे'ति व्वषट्कृते जुहोति ॥८॥ अथाह 'मरुद्भ्यो गृहमेधिभ्योऽनुब्रूही'ति । स दक्षिणस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यतिक्रामत्यतिक्रम्याश्राव्याह 'मरुतो गृहमेधिनो यजे'ति व्वषट्कृते जुहोति ॥९॥ अथाहा'ग्नये स्विष्टकृतेऽनुब्रूही'ति । स उत्तरस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यातिक्रामत्यतिक्रम्याश्राव्याहा'ग्निꣳ स्विष्टकृतं यजे'ति व्वषट्कृते जुहोत्यथेडामेवावद्यति न प्राशित्रमुपहूय मार्जयन्तऽएतन्न्वेकमयनम् ॥१०॥ अथेदं द्वितीयꣳ[1] । सैव स्तीर्णा व्वेदिर्भवति या मरुद्भ्यः सांतपनेभ्यस्तस्यामेव स्तीर्णायां व्वेदौ परिधींश्च शकलांश्चोपनिदधाति तथा सन्दोह्य चरुꣳश्रपयति नेदेवं[2] प्रतिवेशमाज्यमधिश्रयति श्रपयित्वाभिघार्योद्वास्यानक्ति स्थाल्यामाज्यमुद्वासयति[3] स्रुवं च स्रुचं च संमार्ष्ट्यथैतꣳ सोषमेवं[4] चरुमादायोदैति स्थाल्यामाज्यमादायोदैति स्रुवं च स्रुचं चादायोदैति स इमामेव स्तीर्णां व्वेदिमभिमृश्य परिधीन् परिधाय यावतः शकलान् कामयते तावतोऽभ्यादधात्यथैतꣳ सोषमेव[5] चरुमासादयति स्थाल्यामाज्यमासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाददान आह ॥११॥ 'अग्नयेऽनुब्रूही'ति । आग्नेयमाज्यभागꣳ स स्थाल्यै चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहा'ग्निं यजे'ति व्वषट्कृते जुहोति॥१२॥ अथाह 'सोमायानुब्रूही'ति । सौम्यमाज्यभागꣳ स स्थाल्याऽएव चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह 'सोमं यजे'ति व्वषट्-

१. द्वितीयꣳइति. ग. २. तदेवेति. क ३. मुद्वासयतीति. घ.
४. सोखमेवेति. ग. घ. ५. अत्रापि 'सोखमेव' इति. ग. घ.

 

कृते जुहोति ॥१३॥ अथाह 'मरुद्भ्यो गृहमेधिभ्योऽनुब्रूही'ति । स ऽउपस्तृणीतऽआज्यमथास्य चरोर्द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदानेऽअतिक्रामत्यतिक्रम्याश्राव्याह 'मरुतो गृहमेधिनो यजे'ति व्वषट्कृते जुहोति ॥१४॥ अथाहाग्नये स्विष्टकृतेऽनुब्रूही'ति । स ऽउपस्तृणीतऽआज्यमथास्य चरोः सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयति न प्रत्यनक्त्यवदानमतिक्रामत्यतिक्रम्याश्राव्याहाग्निᳬ स्विष्टकृतं यजे'ति व्वषट्कृते जुहोति ॥१५॥ अथेडामेवावद्यति न प्राशित्रम् । उपहूय प्राश्नन्ति यावन्तो गृह्या हविरुच्छिष्टाशाः स्युस्तावन्तः प्राश्नीयुरथो ऽअप्यृत्विजः प्राश्नीयुरथो ऽअप्यन्ये ब्राह्मणाः प्राश्नीयुर्यदि बहुरोदनः स्यादथैतामनिरशितां कुम्भीमपिधाय निदधाति पूर्णदर्व्वाय मातृभिर्व्वत्सान्त्समवार्जन्ति तदु पशवो मेधमात्मन्दधते यवाग्वैताᳬ रात्रिमग्निहोत्रं जुहोति[2] निवान्यां प्रातर्दुहन्ति पितृयज्ञाय[3] ॥१६॥ अथ प्रातर्हुते वाहुते वा । यतरथा कामयेत सोऽस्याऽअनिराशितायै कुम्भ्यै दर्व्योपहन्ति "पूर्णा दर्व्वि परापत सुपूर्णा पुनरापत । व्वस्नेव व्विक्रीणावहाऽइषमूर्जᳬ शतक्रत"[4]विति यथा पुरोऽनुवाक्यैवमेषैतयैवैनमेतस्मै भागाय ह्वयति ॥१७॥ अथऽर्षभमाह्वयितवै ब्रूयात् । स यदि रुयात्स व्वषट्कार इत्यु हैकऽआहुस्तास्मिन्वषट्कारे जुहुयादित्यथो ऽइन्द्रमेवैतत्स्वेन रूपेण[5] ह्वयति व्वृत्रस्य व्वधायैतद्वाऽइन्द्रस्य रूपं यदृषभर्स्तत्स्वेनैवैनमेतद्रूपेण[6] ह्वयति व्वृत्रस्य व्वधाय स यदि रुयादागमऽइन्द्रो यज्ञमगन्त्सेन्द्रो मे यज्ञ इति ह व्विद्याद्यद्यु न रुयाद्ब्राह्मण एव दक्षिणत आसीनो ब्रूयाँ[7]ज्जुहुधीति सैवैन्द्री र्वाक्[8] ॥१८॥ स जुहोति । [9]'देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारं च

---

१. प्रत्यनक्तीति. ग. घ. २. See.तै.ब्रा.१.६ ८.४.अभिवान्या ३. यज्ञायेति. घ.
४. मा. सं. ३. ४९. ५. रूपेणेति. क. ६. स्वेनैवैनमिति. घ.
७. ब्रूयादिति. क. ८. वाक् इति. ग. ९. मा. सं. ३. ५०.

ह्रासि मे निह्नारं निह्नराणि ते स्वाहे''ति ॥१९॥ अथ मरुद्भ्यः क्रीडिभ्यः। सप्तकपालं पुरोडाशं निर्व्वपति मरुतो ह वै क्रीडिनो व्वृत्रᳪं हनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्रीडुर्महयन्तस्तथोऽ-एवैतं पाप्मानं द्विषन्तं भ्रातृव्यᳪं हनिष्यन्तमभितः परिक्रीडन्ते मह-यन्तस्तस्मान्मरुद्भ्यः क्रीडिभ्योऽथातो महाहविष एव तद्यथा महा-हविषस्तथो तस्य ॥ २० ॥ Cf का. श. १. ५. २; तै. ब्रा. १. ६. ६, ७; मै. सं. १. १०. १, २; १४–१६; काठ. सं. ९. ५; ३६. ८–१०; शां. ब्रा. ५. ५.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे द्वितीयकाण्डे चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ (५. ३.)

इति द्वितीयकाण्डे चतुर्थः प्रपाठकस्समाप्तः ॥

( कण्डिकाः ॥११५॥ )

२. ५. १.

( महाहविः–साकमेधप्रधानहविः )

महाहविषा ह वै देवा व्वृत्रं जघ्नुः। तेनोऽएव व्यजयन्त येय-मेषां व्विजितिस्तां तथोऽएवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यᳪं हन्ति तथोऽएव व्विजयते तस्माद्वाऽएष एतेन यजते ॥१॥ तस्यावृत्[2]। उप किरन्त्युत्तरवेदिं गृह्णन्ति पृषदाज्यं मन्थन्त्यग्निं नवप्रयाजं भवति नवानुयाजं त्रीणि समिष्टयजूᳪंषि भवन्त्यथैतान्येव पञ्च हवीᳪंषि भवन्ति ॥२॥ स यदाग्नेयोऽष्टाकपालः पुरोडाशो भवति। अग्निना ह वाऽएनं तेजसाघ्नन्त्स तेजोऽग्निर्नाव्यथत तस्मादाग्नेयो भवति[3] ॥३॥ अथ यत्सौम्यश्चरुर्भवति। सोमेन ह वाऽएनᳪं राज्ञाघ्नन्त्सो-मराजान एव तस्मात्सौम्यश्चरुर्भवति ॥४॥ अथ यत्सावित्रः[4]।

---

१. स्वाहेति. ग. स्वाहेति. घ. २. तस्यावृदिति. घ. वृत्. इति. ग.

३. भवतीति. घ. ४. सावित्र इति. घ. सावित्र. ग.

द्वादशकपालो वाष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता सवितृप्रसूता हैवैनमघ्नंस्तस्मात्सावित्रो भवति ॥५॥ अथ यत्सारस्वतश्चरुर्भवति । वाग्वै सरस्वती वागु हैवानुममाद प्रहर जहीति तस्मात्सारस्वतश्चरुर्भवति ॥६॥ अथ यत्पौष्णश्चरुर्भवति । इयं वै पृथिवी पूषेयऽँ हैवैनं वधाय प्रतिप्रददावनया हैवैनं प्रतिप्रत्तं जघ्नुस्तस्मात्पौष्णश्चरुर्भवति ॥७॥ अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । एतेन हैवैनमघ्नंस्तेजो वाऽअग्निरिन्द्रियं वीर्यमिन्द्र एताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नन् ब्रह्म वाऽअग्निः क्षत्रमिन्द्रस्तेऽउभे सऽँरभ्य ब्रह्म च क्षत्रं च सयुजौ कृत्वा ताभ्यामेनमुभाभ्यां वीर्याभ्यामघ्नंस्तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥८॥

अथ माहेन्द्रश्चरुर्भवति । इन्द्रो वाऽएष पुरा वृत्रस्य वधादथ वृत्रऽँ हत्वा यथा महाराजो विजिग्यान एवं महेन्द्रोऽभवत्तस्मान्माहेन्द्रश्चरुर्भवति महान्तमु चैवैनमेतत्खलु करोति वृत्रस्य वधाय तस्माद्वेव माहेन्द्रश्चरुर्भवति ॥९॥ अथ वैश्वकर्मण एककपालः पुरोडाशो भवति । विश्वं वाऽएतत्कर्म कृतथ्ठं सर्वं जितं देवानामासीत्साकमेधैरीजानानां विजिग्यानानां विश्वमेवैतस्यैतत्कर्म कृतथ्ठं सर्वं जितं भवति साकमेधैरीजानस्य विजिग्यानस्य तस्माद्वैश्वकर्मण एककपालः पुरोडाशो भवति ॥१०॥ एतेन वै देवाः । यज्ञेनेष्ट्वा[1] येयं देवानां प्रजातिर्या[2] श्रीरेतद्बभूवुरेताऽँ ह वै प्रजातिं प्रजायतऽएताथ्ठं श्रियं गच्छति य एवं विद्वानेतेन यज्ञेन[3] यजते तस्माद्वाऽएतेन यजेत ॥११॥ Cf. का. श. १. ५. ३; तै. सं. १. ८. ४. २; मै. सं. १. १०. १६; काठ. ३६. ८; शां. ब्रा. ५. ५.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
द्वितीयकाण्डे पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥
इति द्वितीयकाण्डे पञ्चमोऽध्यायस्समाप्तः ॥

---

१. यज्ञेनेष्ट्वेति. घ. २. प्रजातिरिति. ग. घ. ३. यज्ञेनेति. घ.

## २. ५. २.

### ( महापितृयज्ञः साकमेधान्तर्गतः )

महाहविर्षां ह वै देवा वृत्रं जघ्नुः । तेनोऽएव व्यजयन्त येयमेषां विजितिस्तामथ यानेवैषां तस्मिन्त्संग्रामेऽघ्नंस्तान् पितृयज्ञेन समैरयन्त पितरो वै तऽआसंस्तस्मात्पितृयज्ञो नाम ॥१॥ तद्वसन्तो ग्रीष्मो वर्षाः । एते ते ये व्यजयन्त शरद्धेमन्तः शिशिरस्तऽउ ते यान् पुनः समैरयन्त ॥२॥ अथ यदेष एतेन यजेत । तन्नाह न्वेवैतस्य तथा कं चन घ्नन्तीति देवाऽअकुर्व्वन्निति न्वेवैष एतत्करोति यमु चैवैभ्यो देवा भागमकल्पयंस्तमु चैवैभ्य एष एतद्भागं करोति यानु चैव देवाः समैरयन्त तानु चैवैतदवति स्वानु चैवैतत्पितॄंच्छ्रेयाᳫँसं लोकमुपोन्नयति यदु चैवास्यात्रात्मनोऽचरणेन हन्यते वा मीयते वा तदु चैवास्यैतेन पुनराप्यायते तस्माद्वाऽएष एतेन यजते ॥३॥ स पितृभ्यः सोमवद्भ्यः । षट्कपालं पुरोडाशं निर्व्वपति सोमाय वा पितृमते षड्वाऽऋतव ऋतवः पितरस्तस्मात्षट्कपालो भवति ॥४॥ अथ पितृभ्यो बर्हिषद्भ्यः । अन्वाहार्यपचने धानाः कुर्व्वन्ति ततोऽर्धाः पिᳫँषन्त्यर्धा ऽइत्येव धाना अपिष्टा भवन्ति ता धानाः पितृभ्यो बर्हिषद्भ्यः ॥५॥ अथ पितृभ्योऽग्निष्वात्तेभ्यः । निवान्यायै दुग्धे सकृदुपमथित एकशलाकया मन्थो भवति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृदुपमथितो भवत्येतानि हवीᳫँषि भवन्ति ॥६॥ तद्ये सोमेनेजानाः । ते पितरः सोमवन्तोऽथ ये दत्तेन पक्वेन लोकं जयन्ति ते पितरो बर्हिषदोऽथ ये ततो नान्यतरच्चन यानग्निरेव दहन्त्स्वदयति ते पितरोऽग्निष्वात्ता एतऽउ ते ये पितरः ॥७॥ स जघनेन गार्हपत्यम् । प्राचीनावीती भूत्वा दक्षिणासीन

---

१. हविषा इति. ग.　२. पुनः समैरयन्तेति. घ.
३. यमु चैवैभ्य इति. घ. ४. यदु. इति. घ.　५. वा इति. घ.
६. बर्हिषद्भ्य इति क.　७. ईजाना इति. ग. ईजाना इति. घ, ८. भूत्वेति. घ.

एतꣳषट्कपालं पुरोडाशं गृह्णाति स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति सकृत्फलीकरोति सकृदु ह्येव पराञ्चः पितरस्तस्मात्सकृत्फलीकरोति ॥८॥ स दक्षिणैव दृषदुपले ऽउपदधाति। दक्षिणार्धे गार्हपत्यस्य षट्[1] कपालान्युपदधाति तद्यदेतां दक्षिणां दिशꣳ सचन्त ऽएषा हि दिक् पितृणां तस्मादेतां दक्षिणां दिशꣳ सचन्ते ॥९॥ अथ दक्षिणेनान्वाहार्यपचनम् । चतुस्स्रक्तिं व्वेदिं करोत्यवान्तरदिशोऽनुस्रक्तीः करोति चतस्रो वाऽअवान्तरदिशोऽवान्तरदिशो वै पितरस्तस्मादवान्तरदिशोऽनु स्रक्तीः करोति ॥१०॥ तन्मध्येऽग्निꣳसमादधाति । पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानभ्युपावृत्तास्तस्मात्तेभ्यः प्राङ् तिष्ठञ्जुहोति सर्व्वतः पितरोऽवान्तरदिशो वै पितरः सर्व्वत ऽइव हीमा अवान्तरदिशस्तस्मान्मध्येऽग्निꣳ समादधाति॥११॥ स तत एव प्राक् स्तम्बयजुर्हरति । स्तम्बयजुर्हृत्वाथेत्येवाग्रे परिगृह्णात्यथेत्यथेति पूर्वेण[2] परिग्रहेण परिगृह्य[3] लिखति हरति यद्धार्यं भवति स तथैवोत्तरेण परिग्रहेण परिगृह्णात्युत्तरेण परिग्रहेण परिगृह्य प्रतिमृज्याह 'प्रोक्षणीरासादये'त्यासादयन्ति प्रोक्षणीरिध्मं बर्हिरुप[4]सादयन्ति स्रुचः सम्मार्ष्ट्यौज्येनोदैति स यज्ञोपवीती भूत्वाज्यानि गृह्णाति ॥१२॥ तदाहुः । द्विरुपभृति गृह्णीयाद्द्वौ ह्यत्रानुयाजौ भवत इति तद्वष्टावेव कृत्वऽउपभृति गृह्णीयान्नेद्यज्ञस्य व्विधाया[5] अयानीति तस्मादष्टावेव कृत्वऽउपभृति गृह्णीयादाज्यानि गृहीत्वा स पुनः प्राचीनावीती भूत्वा[6] ॥१३॥ प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षत्यथ व्वेदिमथास्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रꣳस्य ग्रन्थिं न प्रस्तरं गृह्णाति सकृदु ह्येव परा-

---

१. षट्कपालान्युपदधातीति. घ.
२. पूर्व्वेणेति. घ.
३. परिगृह्येति. घ.
४. बर्हिरिति. घ
५. व्विधायेति. घ.
६. भूत्वा इति. ग. भूत्वा. इति घ,

ञ्चः पितरस्तस्मान्न प्रस्तरं गृह्णाति ॥१४॥ अथ संनहनमनु विस्र-ꣳस्य । अपसलवि त्रिः परिस्तृणन् पर्येति सोऽपसलवि त्रिः परिस्ती-र्य यावत्प्रस्तरभाजनं तावत्परिशिनष्ट्यथ पुनः प्रसलवि त्रिः पर्येति यत्पुनः प्रसलवि त्रिः पर्येति तद्यानेवामूंस्त्रयान् पितॄनन्ववागात्तेभ्य एवैतत्पुनरपोदेतीमꣳ स्वं लोकमभि तस्मात्पुनः प्रसलवि त्रिः पर्ये-ति ॥१५॥ स दक्षिणैव[1] परिधीन् परिदधाति[2] । दक्षिणा प्रस्तरꣳ-स्तृणाति नान्तर्दधाति विधृती सकृदु ह्येव पराञ्चः पितरस्तस्मान्ना-न्तर्दधाति विधृती[3] ॥१६॥ स तत्र जुहूमासादयति । अथ पूर्वामुप-भृतमथ ध्रुवामथ पुरोडाशमथ धाना अथ मन्थमासाद्य हवीꣳषि संमृशति ॥१७॥ ते सर्व्वेऽएव यज्ञोपवीतिनो भूत्वा[4] । इत्थाद्यजमान-श्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीत्[5] ॥१८॥ तेनोपाꣳशु चर-न्ति । तिर ऽइव वै पितरस्तिरऽइवैतद्यदुपाꣳशु तस्मादुपाꣳशु चरन्ति ॥१९॥ परिवृते चरन्ति । तिरऽइव वै पितरस्तिरऽइवैतद्यत्परिवृतं तस्मात्परिवृते चरन्ति ॥२०॥ अथेध्ममभ्यादधदाह । 'अग्नये समिध्यमा-नायानुब्रूही'ति स एकामेव होता सामिधेनीं त्रिरन्वाह सकृदु ह्येव प-राञ्चः पितरस्तस्मादेकाꣳ होता सामिधेनीं त्रिरन्वाह॥२१॥ सोऽन्वाह । ''उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन्ह-विषेऽअत्तव''[6]ऽइत्यथा'ग्निमावह सोममावह पितॄन्त्सोमवत आवह पितॄन् बर्हिषद आवह पितॄनग्निष्वात्तानावह देवाँ२॥ ऽआज्यपाँ२॥ ऽआवहाग्नि-ꣳहोत्रायावह स्वं महिमानमावहे'त्यावाह्योपविशति॥२२॥अथाश्राव्य न होतारं प्रवृणीते । पितृयज्ञो वाऽअयं नेद्धोतारं पितृषु दधानीति तस्मान्न होतारं प्रवृणीते 'सीद होत'रित्येवाह्योपविशति होता होतृषदनऽ-उपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादाय प्रत्यङ्ङतिक्रामत्यति-

---

१. दक्षिणैवेति. घ.   २. परिदधातीति. घ.   ३. विधृति इति. ग. घ.
४. भूत्वेति. ग. घ.   ५. अग्नीदिति. ग. अग्नीदिति. घ,
६. मा. सं. १९ ७०.  ७. देवाँ ३ऽ आज्यापाँ ३ऽ आवहेति. ग. घ.

क्रस्याश्राव्याह 'समिधो यजे'ति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादपबर्हिषश्चतुरः प्रयाजान्यजत्यथाज्यभागाभ्यां चरन्त्याज्यभागाभ्यां चरित्वा ॥२३॥ ते सर्वऽएव प्राचीनावीतिनो भूत्वा। एतैर्वै हविर्भिः प्रचरिष्यन्त ऽइत्थाद्यजमानश्च ब्रह्मा च पुरस्तात्परीतः पश्चादग्नीत्तदुताश्रावयन्त्यो३ँ स्वधेत्यस्तु स्वधेति प्रत्याश्रावणँस्वधा नम ऽइति व्वषट्कारः ॥२४॥ तदुहोवाचासुरिः । आश्रावयेयुरेव प्रत्याश्रावयेयुर्व्वषट्कुर्युर्नेद्यज्ञस्य व्विधाया अयामेति ॥२५॥ अथाह 'पितृभ्यः सोमवद्भ्योऽनुब्रूही'ति । सोमाय वा पितृमते स द्वे पुरोऽनुवाक्येऽअन्वाहैकया वै देवान् प्रच्यावयन्ति द्वाभ्यां पितॄन्त्सकृदु ह्येव पराञ्चः पितरस्तस्माद्द्वे पुरोऽनुवाक्येऽअन्वाह ॥२६॥ स उपस्तृणीतऽआज्यम् । अथास्य पुरोडाशस्यावद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीतऽएवोपोत्थायाश्राव्याह 'पितॄन्त्सोमवतो यजे'ति व्वषट्कृते जुहोति ॥२७॥ अथाह 'पितृभ्यो बर्हिषद्भ्योऽनुब्रूही'ति । स उपस्तृणीत ऽआज्यमथासां धानानामवद्यति स तेनैव सह मन्थस्य तेन सह पुरोडाशस्य तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीत ऽएवोपोत्थायाश्राव्याह 'पितॄन् बर्हिषदो यजे'ति व्वषट्कृते जुहोति ॥२८॥ अथाह 'पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूही'ति । स उपस्तृणीतऽआज्यमथास्य मन्थस्यावद्यति स तेनैव सह पुरोडाशस्य तेन सह धनानां तत्सकृदवदधात्यथोपरिष्टाद्द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याह 'पितॄनग्निष्वात्तान्यजे'ति व्वषट्कृते जुहोति ॥२९॥ अथाहा'ग्नये कव्यवाहनायानुब्रूही'ति । तत्स्विष्टकृते हव्यवाहनो वै देवानां कव्यवाहनः पितॄणां तस्मादाहा'ग्नये कव्यवाहनायानु-

१. समिध इति. घ. २. अयामेति॰ घ. ३. पुरोडाशस्येति. घ.
४. तेनेति. घ. ५. पितॄनग्निष्वात्तान्यजेति, ६. व्वषट्कृत इति, घ,

ब्रूही'ति ॥३०॥ स ऽउपस्तृणीतऽआज्यम् । अथास्य पुरोडाशस्याव-द्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदुवदधात्यथो-परिष्टाद्द्विराज्यस्याभिघारयति न प्रत्यनक्त्यवदानानि नातिक्राम-तीत एवोपोत्थायाश्राव्याहाग्निं कव्यवाहनं यजे'ति व्वषट्कृते जुहोति ॥३१॥ स यन्नातिक्रामति । इत ऽएवोपोत्थाय जुहोति सकृदु ह्येव पराञ्चः पितरोऽथ यत्सकृत्संकृत्सर्वेषाꣳ हविषाꣳ समवद्यति सकृ-दु ह्येव पराञ्चः पितरोऽथ यद्व्यतिषङ्गमवदानान्यवद्यत्यृतवो वै पितर ऋतूनेवैतद्व्यतिषजत्यृतून्त्संदधाति तस्माद्व्यतिषङ्गमवदानान्यवद्यति ॥३२॥ तद्धैके । एतमेव होत्रे मन्थमादधति तꣳ होतोपहूयावैव जिघ्रति तं ब्रह्मणे प्रयच्छति तं ब्रह्मावैव जिघ्रति तमग्नीधे प्रयच्छति तमग्नीदवैव जिघ्रत्येतन्न्वेवैतत्कुर्वन्ति यथा त्वेवे-तरस्य यज्ञस्येडाप्राशित्रꣳ समवद्यन्त्येवमेवैतस्यापि समवद्ये-युस्तामुपहूयावैव जिघ्रन्ति न प्राश्नन्ति प्राशितव्यं त्वेव व्वयं मन्यामहऽइति ह स्माहासुरिर्यस्य कस्य चाग्नौ जुह्वतीति ॥३३॥

अथ यतरो दास्यन् भवति । यद्यध्वर्युर्वा यजमानो वा स उदपात्र-मादायापसलवि त्रिः परिषिञ्चन् पर्येति स यजमानस्य पितरमवनेजय-त्यसाववनेनिक्ष्वेत्यसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपि-तामहं तद्यथाशिष्यतेऽभिषिञ्चेदेवं तत् ॥३४॥ अथास्य पुरोडाश-स्यावदाय । सव्ये पाणौ कुरुते धानानामवदाय सव्ये पाणौ कुरुते मन्थस्यावदाय सव्ये पाणौ कुरुते ॥३५॥ स येमामवान्तरदिशमनु स्रक्तिः । तस्यां यजमानस्य पित्रे ददात्य'सावेतत्त'ऽईत्यथ येमामवा-न्तरदिशमनु स्रक्तिस्तस्यां यजमानस्य पितामहाय ददात्य'सावेतत्त'-ऽइत्यथ येमामवान्तरदिशमनु स्रक्तिस्तस्यां यजमानस्य प्रपितामहाय ददात्य'सावेतत्त'ऽइत्यथ येमामवान्तरदिशमनु स्रक्तिस्तस्यां निमृष्टेऽ-

---

१. सकृत्सर्वेषामिति. ग. २. आसुरिर्यस्येति. ग.
३. जुह्वतीति. क. घ. ४. तत् इति. क. घ. ५. स्रक्तिरिति. ग.
६. त्यथये. इति. घ.

"त्र पितरो मादयध्वं यथाभागमावृषायध्व"मिति यथाभागमश्नीतेत्येवैतदाह तद्यदेवं पितृभ्यो ददाति तेनो स्वान् पितॄनेतस्माद्यज्ञान्नान्तरेति ॥३६॥ ते सर्वऽएव यज्ञोपवीतिनो भूत्वा[1] । उदञ्च उपनिष्क्रम्याहवनीयमुपतिष्ठन्ते देवान्वाऽएषऽउपावर्त्तते यऽआहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाचारिषुस्तदु देवेभ्यो निह्नवते ॥३७॥ ऐन्द्रीभ्यामाहवनीयमुपतिष्ठन्ते । इन्द्रो ह्याहवनीयोऽ"[2]क्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥" "[3]सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि । प्र नूनं पूर्णबन्धुरः स्तुतो यासि वशां २॥ऽअनु योजा न्विन्द्र ते हरी"ऽ इति ॥३८॥ अथ प्रतिपरेत्य गार्हपत्यमुपतिष्ठन्ते । "[4]मनो न्वाह्वामहे नाराशᳬसेन स्तोमेन । पितॄणां च मन्मभिः ॥ आ[5] न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशे ॥ पुनर्नः[6] पितरो मनो ददातु दैव्यो जनः । जीवं व्रातᳬ सचेमही"ति पितृयज्ञेनेव वाऽएतदचारिषुस्तदु खलु पुनर्जीवाननुपिपद्यन्ते तस्मादाह जीवं व्रातᳬ सचेमहीति ॥३९॥ अथ यतरो ददाति । स पुनः प्राचीनावीती भूत्वाभिप्रपद्य जपत्य "मीमदन्त पितरो यथाभागमावृषायिषते"-तियथाभागमाशिषुरित्येवैतदाह ॥४०॥ अथोदपात्रमादाय । पुनः प्रसलवि त्रिः परिषिञ्चन् पर्येति स यजमानस्य पितरमवनेजयत्य'सावनेनिक्ष्वे'त्यसा'ववनेनिक्ष्वे'ति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथा जक्षुषेऽभिषिञ्चेदेवं तत्तद्यत्पुनः प्रसलवि त्रिः परिषिञ्चन् पर्येति प्रसलवि न इदं कर्मानुसन्तिष्ठाताऽइति तस्मात्पुनः प्रसलवि त्रिः परिषिञ्चन् पर्येति[7] ॥४१॥ अथ नीविमुद्वृह्य नमस्करोति । पितृदेवत्या वै नीविस्तस्मान्नीविमुद्वृह्य नमस्करोति यज्ञो वै नमो यज्ञि-

१. भूत्वेति. क. घ. २. मा. सं. ३. ५१. ३. मा. सं. ३. ५२.
४. मा. सं. ३. ५३. ५. मा. सं. ३. ५४. ६. मा. सं. ३. ५५.
७. परिषिञ्चन् पर्येतीति. क.

यानेवैनानेतत्करोति षट्कृत्वो नमस्करोति षड्वाऽऋतव ऋतवः पितरस्तदृतुष्वेवैतद्यज्ञं प्रतिष्ठापयति तस्मात्षट्कृत्वो नमस्करोति "गृहान्नः पितरो दत्ते"ति गृहाणाᳬं ह पितर ईशतऽएषोऽएतस्याशीः कर्मणः ॥४२॥ ते सर्वऽएव यज्ञोपवीतिनो भूत्वा। अनुयाजाभ्यां प्रचरिष्यन्त इत्थाद्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीदुपविशति होता होतृषदने ॥४३॥ अथाह "ब्रह्मन् प्रस्थास्यामि। सामिधमाधायाग्निमग्नीत्संमृड्ढी"ति स्रुचावादाय प्रत्यङ्ङतिक्रामत्यतिक्रम्याश्राव्याह 'देवान्यजे'ति सोऽपबर्हिषौ द्वावनुयाजौ यजति प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मादपबर्हिषौ द्वावनुयाजौ यजति ॥४४॥ अथ सादयित्वा स्रुचौ व्यूहति। स्रुचौ व्युह्य परिधीन्त्समज्य परिधिमभिपद्याश्राव्याहे "षिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाये"ति सूक्तवाकᳬं होता प्रतिपद्यते नाध्वर्युः प्रस्तरᳬं समुल्लुम्पतीत्येवोपास्ते यदा होता सूक्तवाकमाह ॥४५॥ अथाग्नीदाहानुप्रहरेति। स न किं चनानुप्रहरति तूष्णीमेवात्मानमुपस्पृशति ॥४६॥ अथाह "संवदस्वेति। अगानग्नीदगंच्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूही"त्युपस्पृशत्येव परिधीन्नानुप्रहरत्यथैतद्बर्हिरनुसमस्यति परिधींश्च ॥४७॥ तद्धैके। हविरुच्छिष्टमनुसमस्यन्ति तदु तथा न कुर्याद्धुतोच्छिष्टं वाऽएतन्नेद्धुतोच्छिष्टमग्नौ जुहवामेति तस्मादपो वैवाभ्यवहरेयुः प्राश्नीयुर्वा ॥४८॥

Cf. का. श. १. ६. १; तै. सं. १. ८. ५; तै. ब्रा. १. ६. ८, ९; मै. सं. १.१०.१७.–१९; काठ. सं. ३६.११–१३; शां. ब्रा. ५. ६.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे द्वितीयकाण्डे पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( ६. १. )

---

१. माह इति. क. २. संवदस्वेति. इति. घ.

## २. ५. ३.

### ( त्र्यम्बकहविः—साकमेधशेषः )

महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनोऽएव व्यजयन्त येयमेषां विजितिस्तामथ यानेवैषां तस्मिन्त्संग्रामऽइषव आर्च्छंस्तानेतैरेव शल्पान्निरहरन्त तान् व्यवृहन्त यत्त्र्यम्बकैरयजन्त ॥१॥ अथ यदेष एतैर्यजते । तन्नाह न्वेवैतस्य तथा कं चनेषुरार्च्छतीति देवा अकुर्वन्निति त्वेवैष एतत्करोति याश्च त्वेवास्य प्रजा जाता याश्चाजातास्ता उभयी रुद्रियात्प्रमुञ्चति ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते तस्माद्वाऽएष एतैर्यजते॥२॥ ते वै रौद्रा भवन्ति । रुद्रस्य हीषुस्तस्माद्रौद्रा भवन्त्येककपाला भवन्त्येकदेवत्याऽअसन्निति तस्मादेककपाला भवन्ति ॥३॥ ते वै प्रतिपुरुषम्[2] । यावन्तो गृह्याः स्युस्तावन्त एकेनातिरिक्ता भवन्ति तत्प्रतिपुरुषमेवैतदेकैकेन या अस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चत्येकेनातिरिक्ता भवन्ति तद्या एवास्य प्रजा ऽअजातास्ता रुद्रियात्प्रमुञ्चति तस्मादेकेनातिरिक्ता भवन्ति ॥४॥ स जघनेन गार्हपत्यम् । यज्ञोपवीती भूत्वोदङ्ङासीन एतान् गृह्णाति स तत एवोपोत्थायोदङ्तिष्ठन्नवहन्त्युदीच्यौ दृषदुपलेऽउपदधात्युत्तरार्धे गार्हपत्यस्य कपालान्युपदधाति त[3]द्यदेतामुत्तरां दिशꣳसचन्तऽएषा ह्येतस्य देवस्य दिक्तस्मादेतामुत्तरां दिशꣳ सचन्ते ॥५॥ ते वा अक्ताः स्युः । अक्तꣳ हि हविस्तऽउ वाऽअनक्ता एव स्युरभिमानुको ह रुद्रः पशून्त्स्याद्यदञ्ज्यात्तस्मादनक्ता एव स्युः ॥६॥ तान्त्सार्धं पात्र्याꣳ समुद्वास्य । अन्वाहार्यपचनादुल्मुकमादायोदङ् परेत्य जुहोत्येषा ह्येतस्य देवस्य दिक् पथि जुहोति पथा हि स देवश्चरति चतुष्पथे जुहोत्येतद्ध वाऽअस्य जान्धितं प्रज्ञातमवसानं यच्चतुष्पथं तस्माच्चतुष्पथे जुहोति ॥७॥ पलाशस्य पलाशेन मध्यमेन जुहोति । ब्रह्म वै पलाशस्य पलाशं ब्रह्मणैवैतज्जुहोति स सर्व्वेषामेवावद्यत्येकस्यैव

१. न्वेवैष इति.क. २. पुरुषमिति. क. ३. तद्यदेव तामिति ग.

नावद्यति य एषोऽतिरिक्तो भवति ॥८॥ स जुहोति । "एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहे"त्यम्बिका ह वै नामास्य स्वसा तयास्यैष सह भागस्तद्यदस्यैष स्त्रिया सह भागस्तस्मात्त्र्यम्बका नाम तद्या अस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चति ॥९॥ अथ य एष एकोऽतिरिक्तो भवति । तमाखूत्करऽउपकि"रत्येष ते रुद्र भाग आखुस्ते पशुरि"ति तदस्माऽआखुमेव पशूनामनुदिशति तेनोऽइतरान् पशून्न हिनस्ति तद्यदुपकिरति तिरऽइव वै गर्भास्तिरऽइवैतद्यदुपकीर्णं तस्माद्वाऽउपकिरति तद्या एवास्य प्रजा अजातास्ता रुद्रियात्प्रमुञ्चति ॥१०॥ अथ पुनरेत्य जपन्ति । "अव रुद्रमदीमह्यव देवं त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ "भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजꣳ सुखं मेषाय मेष्या"ऽइत्याशीरेवैषैतस्य कर्मणः ॥११॥ अथापसलवि त्रिः परियन्ति । सव्यानूरूनुपाघ्नाना "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादि"त्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशासते तदु ह्येव शंमिव यो मृत्योर्मुच्याते नामृतात्तस्मादाह मृत्योर्मुक्षीय मामृतादिति ॥१२॥ तदु हापि कुमार्यः परीयुः । भगस्य भजामहाऽइति या ह वै सा रुद्रस्य स्वसाम्बिका नाम सा ह वै भगस्येष्टे तस्मादु हापि कुमार्यः परीयुर्भगस्य भजामहाऽइति ॥१३॥ तासामुतासां मन्त्रोऽस्ति । "त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुत" इति सा यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाह पतयो ह्येव स्त्रियै प्रतिष्ठा तस्मादाह मामुत इति ॥१४॥ अथ पुनः प्रसलवि त्रिः परियन्ति । दक्षिणानूरूनुपाघ्नाना एतेनैव मन्त्रेण तद्यत्पुनः प्रसलवि त्रिः परियन्ति प्रसलवि न इदं कर्मानुसंतिष्ठाताऽइति तस्मा-

---

१, २. मा. सं. ३. ५७.   ३. मा. सं. ३. ५८.   ४. मा. सं. ३. ५९.
५, ६. मा. सं. ३. ६०.   ७. शमीवेति. क.   ८. एतेनैवेति. ग.

त्पुनः प्रसलवि त्रिः परियन्तिं ॥१५॥ अथैतान्यजमानोऽञ्जलौ समो-प्य । ऊर्ध्वानुदस्यति यथा गौर्नोदाश्नुयात्तदातमभ्य एवैतच्छल्पान्निर्मिमते तान्विलिप्सन्त उपस्पृशन्ति भेषजमेवैतत्कुर्व्वते तस्माद्विलिप्सन्त उपस्पृशन्ति ॥१६॥ तान्द्वयोर्मूतकयोरुपनह्य । वेणुयष्टयां वा कुपे वोभयत आबध्योदङ् परेत्य यदि वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा विन्देत्तस्मिन्नासज"त्येतत्ते रुद्रावसं तेन परो मूजवतोऽतीही"त्यवसेन वाऽअध्वानं यन्ति तदेनꣳ सावसमेवान्ववार्जति यत्र यत्रास्य चरणं तदन्वत्र ह वाऽअस्य परो मूजवद्भ्यश्चरणं तस्मादाह तेन परो मूजवतोऽतीहीत्य"वततधन्वा पिनाकावस" इत्य"हिꣳसन्नः शिवोऽतीही"त्येवैतदाह "कृत्तिवासा" इति निष्वापयत्येवैनमेतत्स्वपन्नु हि न कं चन हिनस्ति तस्मादाह कृत्तिवासा इति ॥१७॥ अथ दक्षिणान् बाहूनन्वावर्तन्ते । ते प्रतीक्षं पुनरायन्ति पुनरेत्याप उपस्पृशन्ति रुद्रियेणेव वाऽएतदचारिषुः शान्तिरापस्तदद्भिः शान्त्या शमयन्ते ॥१८॥ अथ केशश्मश्रूप्त्वा । समारोह्याग्नीऽउदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजतऽउत्सन्नयज्ञऽइव वाऽएष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति ॥१९॥ Cf. का. श. १. ६. २; मै. सं. १. १०. २०; काठ. सं. ३६. १४; तै. सं १. ८. ६; तै. ब्रा. १. ६. १०. शां ब्रा. ५. ७.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ ( ६. २ )

---

१. स्थाणुं वेति. ग. घ. २. मा. सं. ३. ६१. ३. तेनेति नास्ति. ग.
४, ५. मा. सं. ३. ६१. ६. शिवोऽतीहीति. ग. घ ७. एतत्स्वपन्निति. ग.
८. इतीति. ग, इति. घ. ९. उदवसायेवेति. घ.

## २. ५. ४.

## ( शुनासीरीयपर्व )

अक्षय्यᳬं ह वै सुकृतं चातुर्मास्ययाजिनो भवति । संव्वत्सरᳬं हि जयति तेनास्याक्षय्यं भवति तं वै त्रेधा व्विभज्य यजति त्रेधा व्विभज्य प्रजयति सर्व्वं वै संव्वत्सरः सर्व्वं वाऽअक्षय्यमेतेनो हास्याक्षय्यᳬं सुकृतं भवत्यृतुरु हैवैतद्भूत्वा देवानप्येत्यक्षय्यमु वै देवानामेतेनो हैवास्याक्षय्यᳬं सुकृतं भवत्येतन्नु तद्यस्माच्चातुर्मास्यैर्यजते ॥१॥ अथ यस्माच्छुनासीर्येण यजेत । या वै देवानाᳬं श्रीरासीत्साकमेधैरीजानानां व्विजिग्यानानां[2] तच्छुनमथ यः संव्वत्सरस्य प्रजितस्य रसᳬ[3] आसीत्तत्सीरᳬं सा या चैव देवानाᳬं श्रीरासीत्साकमेधैरीजानानां व्विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं[4] परिगृह्यात्मन् कुरुते तस्माच्छुनासीर्येण यजते ॥२॥ तस्यावृत्[5] । नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मन्थन्त्यग्निं पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा एकᳬं समिष्टयजुः ॥३॥ अथैतान्येव पञ्च हवीᳬंषि भवन्ति । एतैर्व्वै हविर्भिः प्रजापतिः प्रजा असृजतैतैरुभयतो व्वरुणपाशात्प्रजाः प्रामुञ्चदेतैर्व्वै देवा व्वृत्रमघ्नन्नेतैर्व्वेव व्यजयन्त येयमेषां व्विजितिस्तां तथोऽएवैष एतैर्या चैव देवानाᳬं श्रीरासीत्साकमेधैरीजानानां व्विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं[6] परिगृह्यात्मन् कुरुते तस्माद्वाऽएतानि पञ्च हवीᳬंषि भवन्ति ॥४॥ अथ शुनासीर्यो द्वादशकपालः पुरोडाशो भवति । स बन्धुः शुनासीर्यस्य यं पूर्वमवोचाम[7] ॥५॥ अथ व्वायव्यं पयो भवति । पयो ह वै प्रजा जाता अभिसञ्जानते व्विजिग्यानं मा प्रजाः श्रियै यशसेऽन्नाद्याया-

---

१. See. आप. श्रौ. ८. १. १.　　२. व्विजिग्यानानामिति. ग. घ.

३. रस इति घ.　　४. उभयमिति. घ.

५. वृत् इति. ग. तस्यावृत् इति घ.

६. उभयमिति. घ.　　७. अवोचाम इति ग. घ.

भिसञ्जानान्ताऽइति तस्मात्पयो भवति ॥६॥ तद्यद्वायव्यं भवति। अयं वै व्वायुर्योऽयं पवतऽएष वाऽइदꣳ सर्व्वं प्रत्याययति यदिदं किं च व्वर्षति व्वृष्टादोषधयो जायन्तऽओषधीर्जग्ध्वापः पीत्वा तत एतदद्भ्योऽधि पयः सम्भवत्येष हि वाऽएतज्जनयति तस्माद्वायव्यं भवति ॥७॥ अथ सौर्य एककपालः पुरोडाशो भवति। एष वै सूर्यो य एष तपत्येष वाऽइदꣳ सर्वमभिगोपायति साधुना त्वदसाधुना त्वदेष इदꣳ सर्व्वं व्विदधाति साधौ त्वदसाधौ त्वेदष मा व्विजिग्यानं प्रीतः साधुना त्वदभिगोपायत्साधौ त्वद्विदधदिति तस्मात्सौर्य एककपालः पुरोडाशो भवति ॥८॥ तस्याश्वः श्वेतो दक्षिणा। तदेतस्य रूपं क्रियते य एष तपति यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तदेतस्य रूपं क्रियते य एष तपति ॥९॥ स यत्रैव साकमेधैर्यजते। तच्छुनासीर्येण यजेत यद्वै त्रिः संवत्सरस्य यजते तेनैव संवत्सरमाप्नोति तस्माद्यदैव कदा चैतेन यजेत ॥१०॥ तद्धैके। रात्रीरापिपयिषन्ति स यदि रात्रीरापिपयिषेद्यददः पुरस्तात्फाल्गुन्यै पौर्णमास्याऽउद्दृष्टं तच्छुनासीर्येण यजेत ॥११॥ अथ दीक्षते। तं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्पुनः प्रयोगरूप इव ह स यदेनमनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयात्तस्मादेनं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्येयादिति नूत्सृजमानस्य ॥१२॥ अथ पुनः प्रयुञ्जानस्य। पूर्व्वेद्युः फाल्गुन्यै पौर्णमास्यै शुनासीर्येण यजेताथ प्रातर्व्वैश्वदेवेनाथ पौर्णमासेनैतदु पुनः प्रयुञ्जानस्य ॥१३॥ अथातः परिवर्त्तनस्यैव। सर्व्वतोमुखो वाऽअसावादित्य एष वाऽइदꣳ सर्व्वं निर्द्धयति यदिदं किं च शुष्यति तेनैष सर्व्वतोमुखस्तेनान्नादः ॥१४॥ सर्व्वतोमुखोऽयमग्निः। यतो ह्येव कुतश्चाग्नावभ्यादधति तत एव प्रदहति तेनैष सर्वतोमुखस्तेनान्नादः ॥१५॥

---

१. तत्पुनः प्रयोग इति. घ. २. प्रयुञ्जानस्येति घ, नस्येति ग.
३. असाविति. ग. घ. ४. अग्निरिति. ग. ५. अन्नाद इति. ग. घ.

अथायमन्यतोमुखः पुरुषः । स एतत्सर्व्वतोमुखो भवति यत्परिवर्त्तयते स एवमेवान्नादो भवति यथैतावेतद्य एवं व्विद्वान् परिवर्त्तयते तस्माद्वै परिवर्त्तयेत ॥१६॥ तदु होवाचासुरिः । किन्नु तत्र मुखस्य यदपि सर्व्वाण्येव लोमानि व्वपेत यद्वै त्रिः संवत्सरस्य यजते तेनैव सर्व्वतोमुखस्तेनान्नादस्तस्मान्नाद्रियेत परिवर्तयितुमिति ॥१७॥ Cf. का. श. १. ६. ३ ; तै. सं. १. ८. ७ ; तै. ब्रा. १. ७. १; शां. ब्रा. ५. ८.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे द्वितीयकाण्डे पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( ६. ३. )

२. ५. ५.

तद्यदाहुः । साकमेधैर्व्वै देवा व्वृत्रमघ्नंस्तैर्व्वेव व्यजयन्त येयमेषां व्विजितिस्तामिति सर्व्वैर्ह त्वेव देवाश्चातुर्मास्यैर्वृत्रमघ्नन्त्सर्व्वैर्व्वेव व्यजयन्त येयमेषां व्विजितिस्ताम्[2] ॥१॥ ते होचुः । केन राज्ञा केनानीकेन योत्स्याम इति स हाग्निरुवाच मया राज्ञा मयानीकेनेति तेऽग्निना राज्ञाग्निनानीकेन चतुरो मासः प्राजयंस्तान् ब्रह्मणा च त्रय्या च व्विद्यया पर्यगृह्णन् ॥२॥ ते होचुः । केनैव राज्ञा केनानीकेन योत्स्याम इति स ह व्वरुण उवाच मया राज्ञा मयानीकेनेति[3] ते व्वरुणेनैव राज्ञा व्वरुणेनानीकेनापरांश्चतुरो मासः प्राजयंस्तान् ब्रह्मणा चैव त्रय्या च व्विद्यया पर्यगृह्णन् ॥३॥ ते होचुः । केनैव राज्ञा केनानीकेन योत्स्याम इति स हेन्द्र उवाच मया राज्ञा मयानीकेनेति तऽइन्द्रेणैव राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्राजयंस्तान् ब्रह्मणा चैव त्रय्या च व्विद्यया पर्यगृह्णन् ॥४॥ स यद्वैश्वदेवेन यजते । अग्निनैवतद्राज्ञाग्निनानीकेन चतुरो मासः प्रजयति तत्र्येनी शलली भवति लोहः क्षुरः सा या त्र्येनी शलली सा त्रय्यै व्विद्यायै रूपं

१. मुखस्येति. ग. घ. २. ताम् इति घ. तामिति. क.
३. मयानीकेनेति. घ. ४. अनीकेनेति. घ.

लोहः क्षुरो ब्रह्मणो रूपमग्निर्हि ब्रह्म लोहितऽइव ह्यग्निस्तस्माल्लोहः क्षुरो भवति तेन परिवर्त्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥५॥ अथ यद्वरुणप्रघासैर्यजते । वरुणेनैवैतद्राज्ञा वरुणेनानीकेनापरांश्चतुरो मासः प्रजयति तत्स्येनी शलली भवति लोहः क्षुरस्तेन परिवर्त्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥६॥ अथ यत्साकमेधैर्यजते । इन्द्रेणैवैतद्राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्रजयति तत्स्येनी शलली भवति लोहः क्षुरस्तेन परिवर्त्तयते तद्ब्रह्मणा चैवैनमेतत्त्रय्या च विद्यया परिगृह्णाति ॥७॥ स यद्वैश्वदेवेन यजते । अग्निरेव तर्हि भवत्यग्नेरेव सायुज्यꣳ सलोकतां जयत्यथ यद्वरुणप्रघासैर्यजते वरुण एव तर्हि भवति वरुणस्यैव सायुज्यꣳ सलोकतां जयत्यथ यत्साकमेधैर्यजतऽइन्द्र एव तर्हि भवतीन्द्रस्यैव सायुज्यꣳ सलोकतां जयति ॥८॥ स यस्मिन्हर्त्तावमुं लोकमेति । स एनमृतुः परस्मा ऽऋतवे प्रयच्छति पर उ परस्माऽऋतवे प्रयच्छति स परममेव स्थानं परमां गतिं गच्छति चातुर्मास्ययाजी तदाहुर्न चातुर्मास्ययाजिनमनुविन्दन्ति परमꣳ ह्येव खलु स स्थानं परमां गतिं गच्छतीति ॥९॥ Cf. का. श. १.६.४.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे द्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥

इति द्वितीयकाण्डे पञ्चमः प्रपाठकस्समाप्तः ॥

( षष्ठोऽध्यायश्च समाप्तः )

( कण्डिकासंख्या १०४ )

इति एकपान्नाम द्वितीयं काण्डं समाप्तम् ॥

( द्वितीयकाण्डकण्डिकासंख्या ५४९ )

---

१. क्षुरस्तेनेति. घ.   २. परिगृह्णाति. इति. ग. घ.

अथ माध्यन्दिनीये शतपथब्राह्मणे

# अध्वरं नाम तृतीयं काण्डम् ॥

## अग्निष्टोमः ॥ ( सोमयागः )

## ॥ प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

३. १. १.

( शालानिर्माणादि )

ॐ । देवयजनं जोषयन्ते । स यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन्यदन्यद्भूमेर्नाभिशयीतातो वै देवा दिवमुपोदक्रामन्देवान्वाऽएषऽउपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धान्यद्भूमेरभिशयीतावरतरऽइव हेष्ट्वा स्यात्तस्माद्यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन् ॥१॥ तद्वर्ष्म सत्समꣳ स्यात् । समꣳ सदविभ्रꣳशि स्यादविभ्रꣳशि सत्प्राक्प्रवणꣳ स्यात्प्राची हि देवानां दिगथोऽउदक्प्रवणमुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रितमिव स्यादेषा वै दिक् पितॄणाꣳ स यद्दक्षिणाप्रवणꣳ स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रितमिव स्यात् ॥२॥ न पुरस्ताद्देवयजनमात्रमतिरिच्येत । द्विषन्तꣳ हास्य तद्भ्रातृव्यमभ्यातिरिच्यते कामꣳ ह दक्षिणतः स्यादेवमुत्तरतऽएतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं पश्चात्परिशिष्यते क्षिप्रे हैवैनमुत्तरा देवयज्योपनमतीति नु देवयजनस्य ॥३॥ तदु होवाच याज्ञवल्क्यः । वार्ष्णर्याय देवयजनं जोषयितुमैम तत्सात्ययज्ञोऽब्रवी[1]त्सर्वा वाऽइयं पृथिवी देवी देवयजनं यत्र वाऽअस्यै क्व च यजुषैव परिगृह्य याजये[2]दिति ॥४॥ ऋत्विजो हैव देवयजनम् । ये ब्राह्म-

---

१. अब्रवीदिति. घ.    २. याजयेदिति. ग.

णाः शुश्रुवाꣳसोऽनूचाना व्विद्वाꣳसो याजयन्ति सैवाह्वलैतन्नेदिष्ठ-
[1]तमामिव मन्यामहऽइति ॥५॥ तच्छालां वा व्विमितं वा प्राचीनवꣳशं
मिन्वन्ति । प्राची हि देवानां दिक् पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्या-
नुपावृत्तास्तस्मात्तेभ्यः प्राङ्तिष्ठञ्जुहोति ॥६॥ तस्मादु ह न प्रतीची-
नशिराः शयीत । नेद्देवानभिप्रसार्य शयाऽइति या दक्षिणा दिक् सा
पितॄणां या प्रतीची सा सर्प्पाणां यतो देवाऽउच्चक्रमुः सैषा हीना
योदीची दिक् सा मनुष्याणां तस्मान्मानुषऽउदीचीनवꣳशामेव
शालां वा व्विमितं वा मिन्वन्त्युदीची हि[2] मनुष्याणां दिग्दीक्षितस्यैव
प्राचीनवꣳशा नादीक्षितस्य ॥७॥ तां वाऽएतां परिश्रयन्ति । नेदभि-
वर्षादिति न्वेव व्वर्षा देवान्वाऽएषऽउपावर्त्तते यो दीक्षते स देवता-
नामेको भवति तिरऽइव वै देवा मनुष्येभ्यस्तिरऽइवैतद्यत्परिश्रितं त-
स्मात्परिश्रयन्ति ॥८॥ तन्न सर्वऽइवाभिप्रपद्येत । ब्राह्मणो वैव राजन्यो
वा व्वैश्यो वा ते हि यज्ञियाः ॥९॥ स वै न सर्व्वेणेव संवदेत । देवान्वा
ऽएषऽउपावर्त्तते यो दीक्षते स देवतानामेको भवति न वै देवाः सर्व्वे-
णेव संवदन्ते ब्राह्मणेन वैव राजन्येन[3] वा व्वैश्येन वा ते हि यज्ञियास्त-
स्माद्यद्येनꣳ शूद्रेण संवादो व्विन्देदेतेषामेवैकं ब्रूयादिममिति व्विच-
क्ष्वेममिति व्विचक्ष्वेत्येषऽउ तत्र दीक्षितस्योपचारः[4] ॥१०॥ अथारणी
पाणौ कृत्वा[5] । शालामध्यवस्यति स पूर्व्वार्द्ध्यꣳ स्थूणाराजमभिपद्यै-
तद्यजुराह "[6]इमगन्म देवयजनं पृथिव्या यत्र देवासोऽअजुषन्त व्विश्व"
ऽइति तदस्य व्विश्वैश्च देवैर्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रुवाꣳसो-[7]
ऽनूचाना यद्वास्य तेऽक्षिभ्यामीक्षन्ते ब्राह्मणाः शुश्रुवाꣳसस्तद्वास्य
तैर्जुष्टं भवति ॥११॥ यद्वाह । यत्र देवासोऽअजुषन्त[8] व्विश्वऽइति तद-

---

१. नेदिष्ठतमामिवेति. ग.
२. हि. इति. घ.
३. राजन्येनेति ग.घ.
४. उपचार इति. ग.
५. कृत्वा इति. घ.
६. मां. सं. ४. १.
७. शुश्रुवाꣳस इति घ.
८. देवासो अजुषन्तेति. क. घ.

स्य व्विश्वैर्देवैर्जुष्टं भवत्यृ"क्सामाभ्याᳪं सन्तरन्तो यजुर्भिरि"त्यृक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीत्येवैतदाह "रायस्पोषेण समिषा मदेमे"ति भूमा वै रायस्पोषः श्रीर्वै भूमाशिषमेवैतदाशास्ते समिषा मदेमेतीषं मदतीति वै तमाहुर्यः श्रियमश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति ॥१२॥ Cf. का. श. ४. १. १; तै. सं. ६. १. १; मै. सं. ३. ६. १; काठ. सं २२. १३; कपिष्ठ ३५. ६.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( १. १ )

## ३. १. २.

## ( यजमानदीक्षा )

अपराह्णे दीक्षेत । पुरा केशश्मश्रोर्व्वपनाद्यत्कामयेत तदश्नीयाद्यद्वा सम्पद्येत व्व्रतᳪं ह्येवास्यातोऽशनं भवति यद्यु नाशिशिषेदपि कामं नाश्नीयात् ॥१॥ ( शतम् ॥१४००॥ ) अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधाति तन्नापित उपतिष्ठते तत्केशश्मश्रु च व्वपते नखानि च निकृन्ततेऽस्ति वै पुरुषस्यामेध्यं यत्रास्यापो नोपतिष्ठन्ते केशश्मश्रौ च वाऽअस्य नखेषु चापो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च व्वपते नखानि च निकृन्तते मेध्यो भूत्वा दीक्षाऽइति ॥२॥ तद्धैके । सर्वऽएव व्वपन्ते सर्वऽएव मेध्या भूत्वा दीक्षिष्यामहऽइति तदु तथा न कुर्याद्यद्वै केशश्मश्रु च व्वपते नखानि च निकृन्तते तदेव मेध्यो भवति तस्मादु केशश्मश्रु चैव व्वपते नखानि च निकृन्तेत ॥३॥ स वै नखान्येवाग्रे निकृन्तते । दक्षिणस्यैवाग्रे सव्यस्य वाऽअग्रे मानुषेऽथैवं देवत्राङ्गुष्ठयोरेवाग्रे कनिष्ठिकयोर्वा अग्रे मानुषेऽथैवं देवत्रा ॥४॥ स दक्षिणमेवाग्रे गोदानं वितारयति । सव्यं

---

१. मा. सं ४. १. २. आदितः कण्डिकानां संख्येयम् ।
३. निकृन्तेत इति. ग. ४. देवत्रा इति. ग. ५. व्वितारयतीति. घ.

वाऽअग्रे मानुषेऽथैवं देवत्रा ॥५॥ स दक्षिणमेवाग्रे गोदानमभ्युनत्ति । "इमाऽआपः शमु मे सन्तु देवी"रिति स यदाहेमाऽआपः शमु मे सन्तु देवीरिति वज्रो वाऽआपो वज्रो हि वाऽआपस्तस्माद्येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत्तदेतमेवैतद्वज्रꣳ शमयति तथो हैनमेष वज्रः शान्तो न हिनस्ति तस्मादाहेमाऽआपः शमु मे सन्तु देवीरिति ॥६॥ अथ दर्भतरुणकमन्तर्दधाति । "ओषधे त्रायस्वे"ति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्त्यथ क्षुरेणाभिनिदधाति "स्वधिते मैनꣳहिꣳसीरि"ति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्ति ॥७॥ प्रच्छिद्योदपात्रे प्रास्यति । तूष्णीमेवोत्तरं गोदानमभ्युनत्ति तूष्णीं दर्भतरुणकमन्तर्दधाति तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति ॥८॥ अथ नापिताय क्षुरं प्रयच्छति । स केशश्मश्रु वपति स यदा केशश्मश्रु वपति ॥९॥ अथ स्नाति । अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वाऽआपो मेध्यो भूत्वा दीक्षाऽइति पवित्रं वाऽआपः पवित्रपूतो दीक्षाऽइति तस्माद्वै स्नाति ॥१०॥ स स्नाति । "आपोऽअस्मान्मातरः शुन्धयन्त्वि"त्येतद्धाह शुन्धयन्त्विति "घृतेन नो घृतप्वः पुनन्त्वि"ति तद्वै सुपूतं यं घृतेनापुनंस्तस्मादाह घृतेन नो घृतप्वः पुनन्त्विति "विश्वꣳ हि रिप्रं प्रवहन्ति देवी"रिति यद्वै विश्वꣳसर्वं तद्यदमेध्यं रिप्रं तत्सर्वं ह्यस्मादमेध्यं प्रवहन्ति तस्मादाह विश्वꣳहि रिप्रं प्रवहन्ति देवीरिति ॥११॥ अथ प्राङिवोदङुत्क्रामति । "उदिदाभ्यः शुचिरा पूतऽएमी"त्युद्ध्याभ्यः शुचिः पूतऽएति ॥१२॥ अथ वासः परिधत्ते । सर्वत्वायैव स्वामेवा-

---

१. देवत्रा इति. ग. २. मा.सं. ४. १. ३. एतमेवैतदिति. घ.
४. देवीरीति इति. घ, देवीरिति. ग. ५. ६. मा. सं ४. १.
७. अन्तर्दधातीति. ग. ८. क्षुरेणेति, घ. ९. १०. ग. मा. सं ४ २.
११. तद्वै सुपूतमिति.क. १२. घृतेन पुनंस्तस्मादिति. ग. १३. मा. सं ४. २.
१४. रिप्रमिति क. घ. १५. देवीरिति. ग. देवीरिति. घ. १६. मा. सं. ४. २.

स्मिन्नेतत्त्वचं दधाति या ह वाऽइयं गोस्त्वक्पुरुषे हैषाग्रऽआस ॥१३॥ ते देवाऽअब्रुवन् । गौर्वाऽइदꣳ सर्वं बिभर्ति हन्त येयं पुरुषे त्वग्गव्येतां दधाम तयैषा व्वर्षन्तं तया हिमं तया घृणिं तितिक्षिष्यतऽ इति ॥१४॥ तेऽवच्छाय पुरुषम् । गव्येतां त्वचमदधुस्तयैषा व्वर्षन्तं तया हिमं तया घृणिं तितिक्षते ॥१५॥ अवच्छितो हि वै पुरुषः । तस्मादस्य यत्रैव क्व च कुशो वा यद्वा व्विकृन्तति तत ऽएव लोहितमुत्पतति तस्मिन्नेतां त्वचमदधुर्वास ऽएव तस्मान्नान्यः पुरुषाद्वासो बिभर्त्यैताꣳ ह्यस्मिंस्त्वचमदधुस्तस्मादु सुवासा ऽएव बुभूषेत्स्वया त्वचा समृध्याऽइति तस्मादप्यश्लीलꣳ सुवाससं दिदृक्षन्ते स्वया हि त्वचा समृद्धो भवति ॥१६॥ नो हान्ते गोर्नग्नः स्यात् । व्वेद ह गौरहमस्य त्वचं बिभर्मीति सा बिभ्यती त्रसति त्वचं मऽआदास्यतऽ इति तस्मादु गावः सुवाससमुपैव निश्रयन्ते ॥१७॥ तस्य वाऽएतस्य व्वाससः । अग्नेः पर्यासो भवति व्वायोरनुच्छादो नीविः पितृणाꣳ सर्पाणां प्रघातो व्विश्वेषां देवानां तन्तव ऽआरोका नक्षत्राणामेवꣳ हि वाऽएतत्सर्व्वं देवाऽअन्वायत्तास्तस्माद्दीक्षितवसनं भवति ॥१८॥ तद्वाऽअहतꣳ स्यात् । अयातयामतायै तद्वै निष्पेष्टवै ब्रूयाद्यदेवास्यात्रामेध्या कृणत्ति वा व्वयति वा तदस्य मेध्यमसदिति यद्युऽअहतꣳ स्यादद्भिरभ्युक्षेन्मेध्यमसदित्यथो यदिदꣳ स्नातवस्यं निहितमपल्पूलनकृतं भवति तेनो हापि दीक्षेत ॥१९॥ तत्परिधत्ते । “दीक्षातपसोस्तनूरसी”त्यदीक्षितस्य वाऽअस्यैषाग्रे तनूर्भवत्यथात्र दीक्षातपसोस्तस्मादाह दीक्षातपसोस्तनूरसीति “तां त्वा शिवाꣳ शग्मां परिदध”ऽइति तां त्वा शिवाꣳ साध्वीं परिदधऽइत्येवैतदाह “भद्रं व्वर्णं पुष्य”न्निति पापं वाऽएषोऽग्रे व्वर्णं पुष्यति यममुमदीक्षितोऽथात्र भद्रं तस्मादाह भद्रं वर्णं पुष्यन्निति ॥२०॥ अथैनꣳ

---

१. त्वग्गव्येतामिति. घ.     २. इति ग.     ३. तितिक्षते इति. ग.
४. भवति इति ग. ५. वा इति. ग ६. स्यादिति. घ.
७. निहितमिति. घ.     ८-१०. मां. सं. ४.२.     ११ पुष्यन्नितीति. ग.

शालां प्रपादयति। स धेन्वै[1] चानडुहश्च नाश्नीयाद्धेन्वनडुहौ वाऽइदꣳ सर्व्वं बिभृतस्ते देवाऽअब्रुवन् धेन्वनडुहौ वाऽइदꣳ सर्वं बिभृतो हन्त यदन्येषां व्वयसां व्वीर्यं तद्धेन्वनडुहयोर्दधामेति स यदन्येषां व्वयसां व्वीर्यमासीत्तद्धेन्वनडुहयोरदधुस्तस्माद्धेनुश्चैवानड्वांश्च भूयिष्ठं भुङ्क्तस्तद्धैतत्सर्वाश्यमिव यो धेन्वनडुहयोरश्नीयादन्तगतिरिव तꣳ हाद्भुतमभिजनितोर्जायायै गर्भं[2] निरवधीदिति पापमकदिति पापी कीर्तिस्तस्माद्धेन्वनडुहयोर्[3]नाश्नीयात्तदु होवाच याज्ञवल्क्योऽश्नाम्येवाहमꣳसलं चेद्भवतीति ॥२१॥ Cf. का. श. ४. १. २; तै. सं. ६. १. १; मै. सं. ३. ६. २; काठ. २२. १३ and २३. १. कपिष्ठ. सं. ३५. ७. कौषी. ब्रा. or शां. ब्रा. ७. १.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. १. २. )

## ३. १. ३.

### आग्नावैष्णवे ( दक्षिणीये ) ष्टिः ।

अपः प्रणीय । आग्नावैष्णवमेकादशपकालं पुरोडाशं [4]निर्वपत्यग्निर्वै सर्व्वा देवताऽअग्नौ हि सर्व्वाभ्यो देवताभ्यो जुह्वत्यग्निर्वै यज्ञस्यावरार्ध्यो व्विष्णुः परार्ध्यस्तत्सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षाऽइति तस्मादाग्नावैष्णव ऽएकादशकपालः पुरोडाशो भवति ॥१॥ तद्धैके । आदित्येभ्यश्चरुं निर्वपन्ति तदस्ति पर्युदितमिवा"[5]ष्टौ पुत्रासोऽअदितेर्ये जातास्तन्वस्परि । देवाꣳ॥ऽउप प्रैत्सप्तभिः परा मार्ताण्डमास्यदि"ति ॥२॥ अष्टौ ह वै पुत्रा ऽअदितेः । यांस्त्वेतद्देवा ऽआदित्या इत्याचक्षते सप्त हैव तेऽविकृतꣳ हाष्टमं जनयां चकार मार्ताण्डꣳ सन्देघो हैवास यावानेवोर्ध्वस्तावांस्तिर्यङ् पुरुषसंमित ऽइत्यु है[6]के ऽआहुः ॥३॥ तऽउ हैतऽऊचुः । देवा

१. धेन्वै इति. घ. २. गर्भमिति. ग. ३. अनडुहयोर्नेति. ग. घ. ४. निर्वपर्तीति. घ. ५ ऋ. सं. ८. ३. ७. ६. हैक आहुरिति. क.

आदित्या यदस्मानन्वजनिमा तदमुयेव भूद्धन्तेमं व्विकरवामेति तं व्विचक्रुर्यथायं पुरुषो व्विकृतस्तस्य यानि माꣳसानि संकृत्य संन्यासुस्ततो हस्ती समभवत्तस्मादाहुर्न हस्तिनं प्रतिगृह्णीयात्पुरुषाजानो हि हस्तीति यमु ह तद्विचक्रुः स व्विवस्वानादित्यस्तस्येमाः प्रजाः[1] ॥४॥ स होवाच । राध्नवान्मे स प्रजायां य ऽएतमादित्येभ्यश्चरुं निर्वपादिति राघ्नोति हैव य ऽएतमादित्येभ्यश्चरुं निर्वपत्ययं त्वेवाग्नावैष्णवः प्रज्ञातः ॥५॥ तस्य सप्तदश सामिधेन्यो भवन्ति । उपाꣳशु देवते यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजाः संयाजयन्ति पत्नीः सर्वत्वायैव समिष्टयजुरेव न जुहोति नेदिदं दीक्षितवसनं परिधाय पुरा यज्ञस्य सꣳस्थाया ऽअन्तं गच्छानीत्यन्तो हि यज्ञस्य समिष्टयजुः[2] ॥६॥ अथाग्रेण शालां तिष्ठन्नभ्यङ्क्ते । अरुर्वै पुरुषोऽवच्छितोऽनरुरेवैतद्भवति यदभ्यङ्क्ते[3] गवि वै पुरुषस्य त्वग्गोर्वाऽएतन्नवनीतं भवति स्वयैवैनमेतत्त्वचा समर्धयति तस्माद्वाऽअभ्यङ्क्ते ॥७॥ तद्वै नवनीतं भवति । घृतं वै देवानां फाण्टं मनुष्याणामथैतन्नाहैव घृतं नो फाण्टꣳ स्यादेव घृतꣳ स्यात्फाण्टमयातयामतायै तदेनमयातयाम्नैवायातयामानं करोति ॥८॥ तमभ्यनक्ति । शीर्षतोऽग्रऽआ पादाभ्यामनुलोमं "महीनां पयोऽसी"[4]ति मह्य ऽइति ह वाऽएतासामेकं नाम यद्गवां तासां वाऽएतत्पयो भवति तस्मादाह महीनां पयोऽसीति "व्वर्चोदा असि व्वर्चो मे देही"[5]ति नात्र तिरोहितमिवास्ति ॥९॥ अथाक्ष्यावानक्ति । अरुर्वै पुरुषस्याक्षि प्रशान्ममेति ह स्माह याज्ञवल्क्यो दुरक्षऽइव हास पूयो हैवास्य दूषीका तेऽएवैतदनरुष्करोति यदक्ष्यावानक्ति[6] ॥१०॥ यत्र वै देवाः । असुररक्षसानि जघ्नुस्तच्छुष्णो[7] दानवः प्रत्यङ् पतित्वा मनुष्याणामक्षीणि प्रविवेश सऽएष कनीनकः कुमारकऽइव परिभासते तस्माऽएवैतद्यज्ञमुपप्रयन्त्सर्वतोऽश्मपुरां परि-

---

१. प्रजा इति. क.    २. यजुरिति. क. घ.    ३. यदभ्यङ्क्त इति. ग.
४, ५. मा. सं. ४. ३.    ६. यदक्ष्याविति. ग.    ७. शुष्ण इति. ग.

दधात्यश्मा ह्याञ्जनम् ॥११॥ त्रैककुदं भवति । यत्र वाऽइन्द्रो वृत्र-
महंस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्तद्यत्त्रैककुदं भवति
चक्षुष्येवैतच्चक्षुर्दधाति तस्मात्त्रैककुदं भवति यदि त्रैककुदं न विन्दे-
दप्यत्रैककुदमेव स्यात्समानी ह्येवाञ्जनस्य बन्धुता ॥१२॥ शरेषीक-
यानक्ति । वज्रो वै शरो विरक्षस्तायै सतूला भवत्यमूलं वाऽइद-
मुभयतः परिच्छिन्नꣳ रक्षोऽन्तरिक्षमनुचरति यथायं पुरुषोऽमूल
ऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्यत्सतूला भवति विर-
क्षस्तायै ॥१३॥ स दक्षिणमेवाग्रऽआनक्ति । सव्यं वाऽअग्रे मानुषे-
ऽथैवं देवत्रा[1] ॥१४॥ स ऽआनक्ति । "वृत्रस्यासि[2] कनीनक" ऽइति
वृत्रस्य ह्येष कनीनक"श्चक्षुर्दा[3] ऽअसि चक्षुर्मे देही"ति नात्र तिरो-
हितमिवास्ति ॥१५॥ स दक्षिणꣳ सकृद्यजुषानक्ति । सकृत्तूष्णीम-
थोत्तरꣳ सकृद्यजुषानक्ति द्विस्तूष्णीं तदुत्तरमेवैतदुत्तरावत्करोति
॥१६॥ तद्यत्पञ्चकृत्व ऽआनक्ति । सम्वत्सरसम्मितो वै यज्ञः पञ्च
वाऽऋतवः सम्वत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्चकृत्व ऽआ-
नक्ति ॥१७॥ अथैनं दर्भपवित्रेण पावयति । अमेध्यो वै पुरुषो यद-
नृतं वदति तेन पूतिरन्तरतो मेध्या वै दर्भा मेध्यो भूत्वा दीक्षाऽ-
इति पवित्रं[4] वै दर्भाः पवित्रपूतो दीक्षा इति तस्मादेनं दर्भपवित्रेण
पावयति ॥१८॥ तद्वाऽएकꣳ स्यात् । एको ह्येवायं पवते तदेतस्यैव
रूपेण तस्मादेकꣳ स्यात् ॥१९॥ अथोऽअपि त्रीणि स्युः । एको
ह्येवायं पवते सोऽयं पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः प्राणऽउदानो
व्यानऽइति तदेतस्यैवानु मात्रां तस्मात्त्रीणि स्युः ॥२०॥ अथोऽअपि
सप्त स्युः । सप्त वाऽइमे शीर्षन् प्राणास्तस्मात्सप्त स्युस्त्रिःसप्तान्येव
स्युरेकविꣳशतिरेषैव सम्पत्[5] ॥२१॥ तꣳ सप्तभिः [6]सप्तभिः पावय-
ति । "चित्पतिर्मा[7] पुनात्वि"ति प्रजापतिर्वै चित्पतिः प्रजापतिर्मा

१. देवत्रा इति. क. घ. २, ३. मा. सं. ४. ३. ४. पवित्र इति. ग.
५. सम्पदिति. ग. ६. सप्तभिरिति. घ. ७. मा. सं. ४. ४.

पुनात्वित्येवैतदाह "वाक्पतिर्मा पुना"त्विति प्रजापतिर्वै वाक्पतिः प्रजापतिर्मा पुनात्वित्येवैतदाह "देवो मा सविता पुना"त्विति तद्वै सुपूतं यं देवः सवितापुनात्तस्मादाह देवो मा सविता पुनात्वित्य- "च्छिद्रेण पवित्रेणे"ति यो वाऽअयं पवतऽएषोऽच्छिद्रं पवित्रमेतेनैत-दाह "सूर्यस्य रश्मिभि"रित्येते वै पवितारो यत्सूर्यस्य रश्मयस्तस्मा-दाह सूर्यस्य रश्मिभिरिति ॥२२॥ "तस्य ते पवित्रपत"ऽइति । पवित्रपतिर्हि भवति पवित्रपूतस्येति पवित्रपूतो हि भवति "यत्कामः पुने तच्छकेय"मिति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥२३॥ अथा-शिषामारम्भं वाचयति । "आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवासऽआशिषो यज्ञियासो हवामह"ऽइति तदस्मै स्वाः सतीर्ऋत्विज आशिषऽआशासते ॥२४॥ अथाङ्गुलीर्न्यचति । "स्वा-हा यज्ञं मनस"ऽइति द्वे "स्वाहोरोरन्तरिक्षा"दिति द्वे "स्वाहा द्यावापृथिवीभ्या"मिति द्वे "स्वाहा वातादारभ"ऽइति मुष्टीकरोति न वै यज्ञः प्रत्यक्षमिवारभे यथायं दण्डो वा वासो वा परोक्षं वै देवाः परोक्षं यज्ञः ॥२५॥ स यदाह । स्वाहा यज्ञं मनसऽइति तन्मनसऽआरभते स्वाहोरोरन्तरिक्षादिति तदन्तरिक्षादारभते स्वाहा द्यावापृथिवीभ्यामिति तदाभ्यां द्यावापृथिवीभ्यामारभते ययोरिदꣳ सर्वमधि स्वाहा वातादारभऽइति वातो वै यज्ञस्तद्यज्ञं प्रत्यक्षमा-रभते ॥२६॥ अथ यत्स्वाहा स्वाहेति करोति । यज्ञो वै स्वाहाकारो यज्ञमेवैतदात्मन्धत्तेऽत्रोऽएव वाचं यच्छति वाग्वै यज्ञो यज्ञमेवैत-दात्मन्धत्ते ॥२७॥ अथैनꣳ शालां प्रपादयति । स जघनेनाहवनीय-मेत्यग्रेण गार्हपत्यꣳ सोऽस्य सञ्चरो भवत्या सुत्यायै तद्यदस्यैष सञ्चरो भवत्या सुत्यायाऽअग्निर्वै योनिर्यज्ञस्य गर्भो दीक्षितोऽन्तरेण वै योनिं गर्भः सञ्चरति स यत्स तत्रैजति त्वत्परि त्वंदावर्तते तस्मा-

---

१-५ मा. सं. ४. ४.　　६. मा. सं. ४. ५.　　७. अध्वरे इति ग.

८. मा. सं. ४. ६.　　९. यज्ञ इति. ग.　　१०. त्वदावर्तत इति ग.

दिमे गर्भाऽएजन्ति त्वत्परि त्वदावर्तन्ते तस्मादस्यैष सञ्चरो भवत्या सुत्यायै ॥२८॥ Cf. का. श ४. १. ३; तै. सं. ६. १. १; मै. सं. ३. ६. ३; काठ. सं. २३. १; कपि. सं. ३५. ७.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
तृतीयकाण्डे प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥

३. १. ४.

सर्वाणि ह वै दीक्षाया यजूꣳष्यौद्ग्रभणानि । उद्गृभ्णीते वाऽएषोऽस्माल्लोकाद्देवलोकमभि यो दीक्षतऽएतैरेव तद्यजुर्भिरुद्गृभ्णीते तस्मादाहुः सर्वाणि दीक्षाया यजूꣳष्यौद्ग्रभणानीति ततऽएतान्यवान्तरामाचक्षतऽऔद्ग्रभणानीत्याहुतयो ह्येता आहुतिर्हि यज्ञः परोक्षं वै यजुर्जपत्यथैष प्रत्यक्षं यज्ञो यदाहुतिस्तदेतेन यज्ञेनोद्गृभ्णीतेऽस्माल्लोकाद्देवलोकमभि ॥१॥ ततो यानि त्रीणि स्रुवेण जुहोति । तान्याधीतयजूꣳषीत्याचक्षते सम्पदऽएव कामाय चतुर्थꣳ हूयतेऽथ यत्पञ्चमꣳ स्रुचा जुहोति तदेव प्रत्यक्षमौद्ग्रभणमनुष्टुभा हि तज्जुहोति व्वाग्घ्यनुष्टुप् व्वाग्घि यज्ञः ॥२॥

( अर्द्धप्रपाठकः ६२ )

यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥३॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन् यथायं यज्ञः सम्भृतऽएवं वाऽएष यज्ञꣳ सम्भरति यदेतानि जुहोति ॥४॥ तानि वै पञ्च जुहोति । संवत्सरसंमितो वै यज्ञः पञ्च वाऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति

१. मभि इति. ग. २. यज्ञ. इति ग. ३. यदेनेनेति. घ.
४. यथायमिति. घ. ५. तं इति. ग.

तस्मात्पञ्च जुहोति ॥ ४ ॥ अथातो होमस्यैव । "आकूत्यै प्रयुजेऽग्नये स्वाहे"त्या वाऽअग्रे कुवते यजेयेति तद्यद्देवात्र यज्ञस्य तद्देवैतत्सम्भृत्यात्मन् कुरुते ॥५॥ "मेधायै मनसेऽग्नये स्वाहे"ति । मेधया वै मनसाभिगच्छति यजेयेति तद्यद्देवात्र यज्ञस्य तद्देवैतत्सम्भृत्यात्मन् कुरुते ॥७॥ "दीक्षायै तपसेऽग्नये स्वाहे"ति । अन्वेवैतदुच्यते नेत्तु हूयते ॥८॥ "सरस्वत्यै पूष्णेऽग्नये स्वाहे"ति । व्वाग्वै सरस्वती व्वाग्यज्ञः पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तद्यद्देवात्र यज्ञस्य तद्देवैतत्सम्भृत्यात्मन् कुरुते ॥९॥ तदाहुः । अनद्धेवैताऽआहुतयो हूयन्तेऽप्रतिष्ठिताऽअदेवकास्तत्र नेन्द्रो न सोमो नाग्निरिति ॥१०॥ आकूत्यै प्रयुजेऽग्नये स्वाहेति । नातऽएकं चनाग्निर्वाऽअद्धेवाग्निः प्रतिष्ठितः स यदग्नौ जुहोति तेनैवैता अद्धेव तेन प्रतिष्ठितास्तस्मादु सर्वास्वेवाग्नये स्वाहेति जुहोति ततऽएतान्याधीतयजूꣳषीत्याचक्षते ॥११॥ आकूत्यै प्रयुजेऽग्नये स्वाहेति । आत्मना वाऽअग्रऽआकुवते यजेयेति तमात्मनऽएव प्रयुङ्क्ते यत्तनुते तेऽअस्यैतेऽआत्मन्देवतेऽआधीते भवतऽआकूतिश्च प्रयुक्च ॥१२॥ मेधायै मनसेऽग्नये स्वाहेति । मेधया वै मनसाभिगच्छति यजेयेति तेऽअस्यैतेऽआत्मन्देवतेऽआधीते भवतो मेधा च मनश्च ॥१३॥ सरस्वत्यै पूष्णेऽग्नये स्वाहेति । व्वाग्वै सरस्वती व्वाग्यज्ञः सास्यैषात्मन्देवताधीता भवति व्वाक्पशवो वै पूषा पुष्टिर्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तेऽस्यैतऽआत्मन् पशव आधीता भवन्ति तद्यदस्यैताऽआत्मन्देवता आधीता भवन्ति तस्मादाधीतयजूꣳषि नाम ॥१४॥ अथ चतुर्थीं जुहोति । "आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी

---

१. होमस्यैवेति. ग.  २–४. मा. सं. ४. ७.  ५. स्वाहेति. ग.
६. अन्वेवैतदिति क. घ.  ७. मा. सं. ४. ७.  ८. अनद्धेवेति. घ.
९. नाग्निरिति. क. घ.  १०. नामेति क. ङ.  ११. मा. सं. ४. ७.

ऽउरोऽअन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहे''त्येषा ह नेदीयो यज्ञस्यापार्थꣳ हि कीर्त्तयत्यापो हि यज्ञो द्यावापृथिवीऽउरोऽअन्तरिक्षेति लोकानार्थꣳ हि कीर्त्तयति बृहस्पतये हविषा विधेम स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञऽएतेनो हैषा नेदीयो यज्ञस्य ॥१५॥ अथ यां पञ्चमीꣳ स्रुचा जुहोति । सा हैव प्रत्यक्षं यज्ञोऽनुष्टुभा हि तां जुहोति वाग्घ्यनुष्टुब्वाग्घि यज्ञः ॥१६॥ अथ यद्ध्रुवायामाज्यं परिशिष्टं भवति । तज्जुह्वामानयति त्रिः स्रुवेणाज्यविलापन्याऽअधि जुह्वां गृह्णाति यत्तृतीयं गृह्णाति तत्स्रुवमभिपूरयति ॥१७॥ स जुहोति । ''विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहे''ति ॥१८॥ सैषा देवताभिः पङ्क्तिर्भवति । विश्वो देवस्येति वैश्वदेवं नेतुरिति सावित्रं मर्त्तो वुरीतेति मैत्रं द्युम्नं वृणीतेति बार्हस्पत्यं द्युम्नꣳ हि बृहस्पतिः पुष्यसऽइति पौष्णꣳ ॥१९॥ सैषा देवताभिः पङ्क्तिर्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्यैतमेवैतयाप्नोति यद्देवताभिः पङ्क्तिर्भवति ॥२०॥ तां वाऽअनुष्टुभा जुहोति । वाग्वाऽअनुष्टुब्वाग्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति ॥२१॥ तदाहुः एतामेवैकां जुहुयाद्यस्मै कामायेतरा हूयन्तऽएतयैव तं काममाप्नोतीति तां वै यद्येकां जुहुयात्पूर्णां जुहुयात्सर्वं वै पूर्णꣳ सर्व्वमेवैनयैतदाप्नोत्यथ यत्स्रुवमभिपूरयति स्रुचं तदभिपूरयति तां पूर्णां जुहोत्यन्वेवैतदुच्यते सर्वास्त्वेव हूयन्ते ॥२२॥ तां वाऽअनुष्टुभा जुहोति । सैषानुष्टुप्सत्येकात्रिꣳशदक्षरा भवति दश पाण्या अङ्गुलयो दश पाद्या दश प्राणाऽआत्मै-

---

१. यज्ञस्येति क. घ. २ अनुष्टुभा हि तामिति. घ.
३. यज्ञः इति. क. घ, यज्ञ इति. ग. ४. जुह्वामिति. घ. ५. मा. सं. ४. ८.
६. सख्यमिति. क. घ. ७. इषुध्यतीति. ग. घ. ८. द्युम्नमिति. घ.
९. पौष्णꣳ इति. घ, पौष्णꣳ इति. ग. १०. वाग्यज्ञ इति. घ.
११. यत्स्रुवमिति. घ. १२. जुहोति इति क. ग. १३. प्राणा इति. घ.

कत्रिꣳशो यस्मिन्नेते प्राणाः प्रतिष्ठिताऽएतावान्वै पुरुषः पुरुषो यज्ञः पुरुषसम्मितो यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवै-नयैतदाप्नोति यदनुष्टुभैकत्रिꣳशदक्षरया जुहोति ॥२३॥ Cf. का. श. ४. १. ४; तै. सं. ६. १. २; मै सं. ३. ६. ४, ५; काठ. सं. २३. २. कपि. ३५. ८.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
तृतीयकाण्डे प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥
( तृतीयकाण्डे प्रथमोऽध्यायस्समाप्तः )

३. १. ५.

दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिनेऽउपस्तृणाति। तयो-रेनमधि दीक्षयति यदि द्वे भवतस्तदनयोर्लोकयो रूपं तदेनमनयो-र्लोकयोरधि दीक्षयति ॥१॥ सम्बद्धान्ते भवतः। सम्बद्धान्ताविव हीमौ लोकौ तस्मात्समुते पश्चाद्भवतस्तदिमावेव लोकौ मिथुनीकृत्य तयोरेनमधि दीक्षयति ॥२॥ यद्युऽएकं [1]भवति। तदेषां लोकानाꣳ रूपं तदेनमेषु लोकेष्वधि दीक्षयति यानि शुक्लानि तानि दिवो रूपं यानि कृष्णानि तान्यस्यै यदि वेतरथा यान्येव कृष्णानि तानि दिवो रूपं यानि शुक्लानि तान्यस्यै यान्येव बभ्रूणीव हरीणि ता-न्यन्तरिक्षस्य रूपं तदेनमेषु लोकेष्वधि दीक्षयति ॥३॥ अन्तकमु तर्हि पश्चात्प्रत्यस्येत्। तदिमानेव लोकान्मिथुनीकृत्य तेष्वेनमधि दीक्षयति ॥४॥ अथ जघनेन कृष्णाजिने पश्चात्। प्राङ् जान्वाक्नऽ-उपविशति स यत्र शुक्लानां च कृष्णानां च सन्धिर्भवति तदेवमभि-मृश्य जप[2]"त्यृक्सामयोः शिल्पे स्थ"ऽइति यद्वै प्रतिरूपं तच्छिल्प-मृचां च साम्नां च प्रतिरूपे स्थऽइत्येवैतदाह ॥५॥ "ते [3]वामारभ"-ऽइति। गर्भो वाऽएष भवति यो दीक्षते स छन्दाꣳसि प्रविशति

१. भवतीति. ग.    २, ३. मा. सं. ४. ९.

तस्मान्न्यक्नाङ्गुलिरिव भवति न्यक्नाङ्गुलयऽइव हि गर्भाः ॥६॥ स यदाह । ते वामारभऽइति ते वां प्रविशामीत्येवैतदाह "ते मा पातमास्य यज्ञस्योदृच"ऽइति ते मा गोपायतमास्य यज्ञस्य सꣳस्थाया इत्येवैतदाह ॥७॥ अथ दक्षिणेन जानुनारोहति । "शर्मासि शर्म मे यच्छे"ति चर्म वाऽएतत्कृष्णस्य तदस्य तन्मानुषꣳ शर्म देवत्रा तस्मादाह शर्मासि शर्म मे यच्छेति "नमस्तेऽअस्तु मा मा हिꣳसी"रिति श्रेयाꣳसं वाऽएषऽउपाधिरोहति यो यज्ञं यज्ञो हि कृष्णाजिनं तस्माऽएवैतद्यज्ञाय निह्नुते तथो हैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्तेऽअस्तु मा मा हिꣳसीरिति ॥८॥ स वै जघनार्धऽइवैवाग्रऽआसीत । अथ यदग्रऽएव मध्यऽउपविशेद्यऽएनं तत्रानुव्याहरेद्द्रप्स्यति वा प्र वा पतिष्यतीति तथा हैव स्यात्तस्माज्जघनार्धऽइवैवाग्रऽआसीत ॥९॥ अथ मेखलां परिहरते । अङ्गिरसो ह वै दीक्षितानबल्यमविन्दत्ते नान्यद्व्रतादशनमवाकल्पयस्तंऽएतामूर्जम्पश्यन्त्समाप्तिं तां मध्यतऽआत्मनऽऊर्जमदधत समाप्तिं तया समाप्नुवंस्तथोऽएवैषऽएतां मध्यतऽआत्मनऽऊर्जं धत्ते समाप्तिं तया समाप्नोति ॥१०॥ सा वै शाणी भवति । मृद्व्यसदिति न्वेव शाणी यत्र वै प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञात्तस्य यन्नेदिष्ठमुल्बमासत्ते शणास्तस्मात्ते पूतयो वान्ति यद्वस्य जराय्वासीत्तद्दीक्षितवसनमन्तरं वाऽउल्बं जरायुणो भवति तस्मादेषान्तरा वाससो भवति स यथैवातः प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञादेवमेवैषोतो जायते गर्भो भूत्वैतस्माद्यज्ञात् ॥११॥ सा वै त्रिवृद्भवति । त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृद्भवति ॥१२॥ मुञ्जव-

---

१. ३, ४. मा. सं. ४. ९. २. दक्षिणेनेति. घ.

५. यदग्र इति क. घ. ६. अनुष्ट्या हरेदिति. ग. घ.

७. मेखलामिति. घ. ८. भूत्वैतस्मादिति. घ.

ह्येनान्वस्ता भवति । व्वज्रो वै शरो व्विरक्षस्तायै स्तुकासर्गᳪ सृष्टा भवति सा यत्प्रसलवि सृष्टा स्याद्यथेदमन्या रज्जवो मानुषी स्याद्यद्वपसलवि सृष्टा स्यात्पितृदेवत्या स्यात्तस्मात्स्तुकासर्गᳪ सृष्टा भवति ॥१३॥ तां परिहरते । "ऊ[1]र्गस्याङ्गिरसी"त्यङ्गिरसो ह्येतामूर्जमपश्य"न्नू[2]र्णम्रदाऽऊर्जं मयि धेही"ति नात्र तिरोहितमिवास्ति ॥१४॥ अथ नीविमुद्गूहते । "सो[3]मस्य नीविरसी"त्यदीक्षितस्य वाऽअस्यैषाग्रे नीविर्भवत्यथात्र दीक्षितस्य सोमस्य तस्मादाह सोमस्य नीवि-रसी[4]ति ॥१५॥ अथ प्रोर्णुते । गर्भो वाऽएष भवति यो दीक्षते प्रावृता वै गर्भाऽउल्बेनेव जरायुणेव तस्माद्धै प्रोर्णुते ॥१६॥ स प्रोर्णुते । "व्वि[5]ष्णोः शर्मासि शर्म यजमानस्ये"त्युभयं वाऽएषोऽत्र भवति यो दीक्षते व्विष्णुश्च यजमानश्च यदह दीक्षते तद्विष्णुर्भवति यद्यजते तद्यजमानस्तस्मादाह व्विष्णोः शर्मासि शर्म यजमान[6]स्येति ॥१७॥ अथ कृष्णाविषाणाᳪ सिचि बध्नीते । देवाश्च वाऽअसुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुर्मनऽएव देवा[7]ऽउपायन्वाचमसुरा यज्ञमेव तद्देवाऽउपायन्वाचमसुराऽअमूमेव देवाऽउपायन्निमामसुराः ॥१८॥ ते देवा यज्ञमब्रुवन् । योषा वाऽइयं वागुपमन्त्रयस्व ह्वयिष्यते वै त्वेति स्वयं वा हैवैक्षत योषा वाऽइयं वागुपमन्त्रयै ह्वयिष्यते वै मेति तामुपामन्त्रयत सा हास्माऽआरकादिवैवाग्रऽआसूयत्तस्मादु स्त्री पुᳪसोपमन्त्रितारकादिवैवाग्रेऽसूयति स होवाचारकादिव वै मऽआसूयीदिति ॥१९॥ ते होचुः । उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति तामुपामन्त्रयत सा[8] हास्मै निपलाशमिवोवाद तस्मादु स्त्री पुᳪसोपमन्त्रिता निपलाशमिवैव व्वदति स होवाच निपलाशमिव वै मेऽवादीदिति ॥२०॥ [9]ते होचुः । उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति तामुपामन्त्रयत सा हैनं जुहुवे तस्मादु

---

१-३, ५. मा. सं. ४. १०　४. रसीति. घ.　६. यजमानस्येति, घ.
७. देवा उपायन्निति घ.　८. सा इति घ.　९. ते होचुरिति. ग.

स्त्री पुमाᳬंसᳬं ह्वयत<sup></sup>ऽएवोत्तमᳬं स होवाचाह्वत वै मेति ॥२१॥ ते देवाऽईक्षांचक्रिरे । योषा वाऽइयं वाग्यदेनं न युवितेहैव मा तिष्ठन्तमभ्येहीति ब्रूहि तां तु नऽआगतां प्रतिप्रब्रूतादिति सा हैनं तदेव तिष्ठन्तमभ्येयाय तस्मादु स्त्री पुमाᳬंसᳬं सᳬंस्कृते तिष्ठन्तमभ्यैति ताᳬं हैभ्यऽआगतां प्रति प्रोवाचेयं वाऽआगादिति ॥२२॥ तां देवाः । असुरेभ्योऽन्तरायंस्ताᳬं स्वीकृत्याग्नावेव परिगृह्य सर्वहुतमजुहवुराहुतिर्हि देवानाᳬं स यामेवामूमनुष्टुभा जुहवुस्तदेवैनां तद्देवाः स्व्यकुर्वत तेऽसुराऽआत्तवचसो हेऽलवो हेऽलवऽइति व्वदन्तः पराबभूवुः ॥२३॥ तत्रैतामपि वाचमूदुः । उपजिज्ञास्याᳬं स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्या हैषा व्वागेवमेवैष द्विषताᳬं सपत्नानामादत्ते व्वाचं तेऽस्यात्तवचसः पराभवन्ति यऽएवमेतद्वेद ॥२४॥ सोऽयं यज्ञो व्वाचमभिदध्यौ । मिथुन्येनया स्यामिति ताᳬं सम्बभूव ॥२५॥ इन्द्रो ह वाऽईक्षाञ्चक्रे । महद्वाऽइतोऽभ्वं जनिष्यते यज्ञस्य च मिथुनाद्वाचश्च यन्मा तन्नाभिभवेदिति सऽइन्द्रऽएव गर्भो भूत्वैतन्मिथुनं प्रविवेश ॥२६॥ स ह सम्वत्सरे जायमानऽईक्षांचक्रे । महावीर्या वाऽइयं योनिर्या मामदीधरत यद्वै मेतो महदेवाभ्वं नानुप्रजायेत यन्मा तन्नाभिभवेदिति ॥२७॥ तां प्रतिपरामृश्यावेष्ट्याच्छिनत् । तां यज्ञस्य शीर्षन् प्रत्यदधाद्यज्ञो हि कृष्णः स यः स यज्ञस्तत्कृष्णाजिनं यो सा योनिः सा कृष्णविषाणाथ यदेनामिन्द्रऽआवेष्ट्याच्छिनत्तस्मादावेष्टितेव स यथैवातऽइन्द्रोऽजायत गर्भो भूत्वैतस्मान्मिथुनादेवमेवैषोऽतो जायते गर्भो भूत्वैतस्मान्मिथुनात् ॥२८॥ तां वाऽउत्तानामिव बध्नाति । उत्तानेव वै योनिर्गर्भं बिभर्त्यथ दक्षिणां भ्रुवमुपर्युपरि ललाटमुपस्पृशती"न्द्रस्य योनिरसी"तीन्द्रस्य

१. ह्वयंत इति. ग. २. मेति. इति. ग. ३. देवा इति. ग.
४. आहुतिर्हि इति. घ. ५. तदेवैनामिति घ. ६. स. इति. घ.
७. वेद इति. ग. ८. ईक्षाञ्चक्र इति. घ. ९. इतोऽभ्वं इति घ.
१०. मिथुनादिति. क. घ. ११. उपर्युपरीति. घ. १२. मा. सं. ४. १०

ह्येषा योनिरतो वा ह्येनां प्रविशन् प्रविशत्यतो वा जायमानो जायते तस्मादाहेन्द्रस्य योनिरसीति ॥२९॥ (शतम् १५००) अथोल्लिखति । "सुसस्याः कृषीस्कृधी"ति यज्ञमेवैतज्जनयति यदा वै सुषमं भवत्यथालं यज्ञाय भवति यदो दुःषमं भवति न तर्ह्यात्मने च नालं भवति तद्यज्ञमेवैतज्जनयति ॥३०॥ अथ न दीक्षितः । काष्ठेन वा नखेन वा कण्डूयेत गर्भो वाऽएष भवति यो दीक्षते यो वै गर्भस्य काष्ठेन वा नखेन वा कण्डूयेदपास्यन्म्रियेत्ततो दीक्षितः पामनो भवितोर्दीक्षितं वाऽअनु रेताᳬंसि ततो रेताᳬंसि पामनानि जनितोः स्वा वै योनी रेतो न हिनस्त्येषा वाऽएतस्य स्वा योनिर्भवति यत्कृष्णविषाणा तथो हैनमेषा न हिनस्ति तस्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नान्येन कृष्णविषाणायाः ॥३१॥ अथास्मै दण्डं प्रयच्छति । वज्रो वै दण्डो विरक्षस्तायै ॥३२॥ औदुम्बरो भवति । अन्नं वाऽऊर्गुदुम्बरऽऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरो भवति ॥३३॥ मुखसम्मितो भवति । एतावद्धि वीर्यᳬं स यावदेव वीर्यं तावांस्तद्भवति यन्मुखसम्मितः ॥३४॥ तमुच्छ्रयति । "उच्छ्रयस्व वनस्पतऽऊर्ध्वो मा पाह्यᳬंहस आस्य यज्ञस्योदृच"ऽइत्यूर्ध्वो मा गोपायास्य यज्ञस्य सᳬंस्थायाऽइत्येवैतदाह ॥३५॥ अत्र हैके । अङ्गुलीश्च न्यचन्ति वाचं च यच्छन्त्यतो हि किं च न जपिष्यन् भवतीति वदन्तस्तदु तथा न कुर्याद्यथा पराञ्चं धावन्तमनुलिप्सेत तं नानुलभेतैवᳬं ह स यज्ञं नानुलभते तस्मादमुत्रैवाङ्गुलीर्न्यचेदमुत्र वाचं यच्छेत् ॥३६॥ अथ यद्दीक्षितः । ऋचं वा यजुर्वा साम वाभिव्याहरत्यभिस्थिरमभिस्थि-

१. विशति. इति घ.   २. असीति. ग.   ३. आदितः कण्डिकानां संख्येयम्

४. मा. सं. ४. १०.   ५. रेताᳬंसीति. घ.   ६. रेतो इति. घ.

७. भवति. इति. घ.   ८. मा. सं. ४. १०.

९. तैत्तिरीयशाखायां मैत्रायणीयशाखायां चात्रैव मुष्टीकरणवाङ्नियमने विहिते । See. तै. सं. ६. १. ४. ३. and मै. ३. ४. ६. ८.   १०. दीक्षितः इति. घ.

रमेवैतद्यज्ञमारभते तस्मादमुत्रैवाङ्गुलीर्न्यचेदमुत्र व्वाचं यच्छेत् ॥३७॥ अथ यद्वाचं यच्छति । व्वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्तेऽथ यद्वाचं-यमो व्याहरति तस्मादु हैष व्विसृष्टो यज्ञः पराङावर्तते तत्रो व्वै-ष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै व्विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः ॥३८॥ अथैकऽउद्वदति । दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मणऽइति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदय-त्ययं महावीर्यो यो यज्ञं प्रापदित्ययं युष्माकैकोऽभूत्तं गोपायतेत्येवै-तदाह त्रिष्कृत्वऽआह त्रिवृद्धि यज्ञः ॥३९॥ अथ यद्ब्राह्मणऽइत्याह । अनद्धेव वाऽअस्यातः पुरा जानं भवतीदꣳ ह्याहु रक्षाꣳसि योषि-तमनुसचन्ते तदुत रक्षाꣳस्येव रेतऽआदधतीत्यथात्राद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा व्वैश्यं वा ब्राह्मण ऽइत्येव ब्रूयाद्ब्राह्मणो हि जायते यो यज्ञाज्जायते तस्मादाहुर्न सवन-कृतꣳ हन्यादेनस्वी हैव सवनकृतेति ॥४०॥ Cf. का. श. ४. २. १; तै. सं. ६. १. ३; मै. सं. ३. ६. ६–८; का. सं. २३. २–६; कपि. सं. ३६. १.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. २. १. )

प्रथमप्रपाठकः समाप्तः ॥

कण्डिकासंख्या ॥ १२४ ॥

३. २. १.

व्वाचं यच्छति । स व्वाचंयमऽआस्त आस्तमयात्तद्यद्वाचं य-च्छति ॥१॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते-होचुः कथं न इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं

---

१. आरभत इति. घ. २. व्वाग्वै इति. घ. ३. धत्ते इति. घ.
४. युष्माकैक इति. घ. ५. आह इति. ग. ६. ह्याहुरिति. घ.

धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरो भवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥२॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञँ समभरन्यथायं यज्ञः सम्भृतऽएवं वाऽएष यज्ञँ सम्भरति यो दीक्षते वाग्वै यज्ञः ॥३॥ तामस्तमिते वाचं विसृजते । संवत्सरो वै प्रजापतिः प्रजापतिर्यज्ञोऽहोरात्रे वै संवत्सरऽएते ह्येनं परिप्लवमाने कुरुतः सोऽहन्नदीक्षिष्ट स रात्रिं प्रापत्स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतदाप्त्वा वाचं विसृजते ॥४॥ तद्धैके । नक्षत्रं दृष्ट्वा वाचं विसर्जयन्त्यत्रानुष्ठ्यास्तमितो भवतीति वदन्तस्तदु तथा न कुर्यात्क ते स्युर्यन्मेघः स्यात्तस्माद्यत्रैवानुष्ठ्यास्तमितं मन्येत तदेव वाचं विसर्जयेत् ॥५॥ अनेनो हैके वाचं विसर्जयन्ति । 'भूर्भुवः स्वरि'ति यज्ञमाप्याययामो यज्ञꣳ संदध्मऽइति वदन्तस्तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति न सन्दधाति यऽएतेन वाचं विसर्जयति ॥६॥ अनेनैव वाचं विसर्जयेत् । "व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञिय"ऽइत्येष ह्यस्यात्र यज्ञो भवत्येतद्धविर्यथा पुराग्निहोत्रं तद्यज्ञेनैवैतद्यज्ञँ सम्भृत्य यज्ञे यज्ञं प्रतिष्ठापयति यज्ञेन यज्ञँ सन्तनोति सन्ततँ ह्येवास्यैतद्व्रतं भवत्या सुत्यायै त्रिष्कृत्वऽआह त्रिवृद्धि यज्ञः ॥७॥ अथाग्निमभ्यावृत्य वाचं विसृजते । न ह स यज्ञमाप्याययति न सन्दधाति योऽतोऽन्येन वाचं विसृजते स प्रथमं व्याहरन्त्सत्यं वाचोऽभिव्याहरति ॥८॥ अग्निर्ब्रह्मेति । अग्निर्ह्येव ब्रह्माग्निर्यज्ञऽइत्यग्निर्ह्येव यज्ञो वनस्पतिर्यज्ञियऽइति वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युस्तस्मादाह वनस्पतिर्यज्ञियऽइति ॥९॥ अथास्मै व्रतँ श्रपयन्ति । देवान्वाऽ-

---

१. अयं इति. घ. २. यज्ञः इति. क. घ.

३. अत्र "न पुरा नक्षत्रेभ्यो वाचं विसृजेत्....उदितेषु नक्षत्रेषु व्रतं कृणुतेति वाचं विसृजति" इति तैत्तिरीयसंहितास्थो ( तै. सं. ६. १. ३. ४. ) भागोऽनुसन्धानयोग्यः ।

४. मा. सं. ४. ११.

रमेवैतद्यज्ञमारभते[1] तस्मादमुत्रैवाङ्गुलीर्न्यचेदमुत्र व्वाचं यच्छेत् ॥३७॥ अथ यद्वाचं युच्छति । व्वाग्वै[2] यज्ञो यज्ञमेवैतदात्मन्धत्ते[3]ऽथ यद्वाचंयमो व्याहरति तस्मादु हैष व्विसृष्टो यज्ञः पराङ्गावर्तते तत्रो व्वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै व्विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः ॥३८॥ अथैकऽउद्वदति । दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मणऽइति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदित्ययं युष्माकैको[4]ऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्वऽआह त्रिवृद्धि यज्ञः ॥३९॥ अथ यद्ब्राह्मणऽइत्याह[5] । अनद्धेव वाऽअस्यातः पुरा जानं भवतीदᳪ ह्याह[6] रक्षाᳪसि योषितमनुसचन्ते तदुत रक्षाᳪस्येव रेतऽआदधतीत्यथात्राद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा व्वैश्यं वा ब्राह्मणऽइत्येव ब्रूयाद्ब्राह्मणो हि जायते यो यज्ञाज्जायते तस्मादाहुर्न सवनकृतᳪ हन्यादेनस्वी हैव सवनकृतेति ॥४०॥ Cf. का. श. ४. २. १; तै. सं. ६. १. ३; मै. सं. ३. ६. ६–८; का. सं. २३. २–६; कपि. सं. ३६. १.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ (अ. २. १.)

प्रथमप्रपाठकः समाप्तः ॥

कण्डिकासंख्या ॥ १२४ ॥

## ३. २. १.

व्वाचं यच्छति । स व्वाचंयमऽआस्त आस्तमयात्तद्यद्वाचं युच्छति ॥१॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्तेह्योचुः कथं न इदं मनुष्यैरनभ्यारोह्यᳪ स्यादिति ते यज्ञस्य रसं

---

१. आरभत इति. घ. २. व्वाग्वै इति. घ. ३. धत्ते इति. घ.
४. युष्माकैक इति. घ. ५. आह इति. ग. ६. ह्याहुरिति. घ.

धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरो भवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥२॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथायं यज्ञः सम्भृतऽएवं वाऽएष यज्ञꣳ सम्भरति यो दीक्षते व्वाग्वै यज्ञः ॥३॥ तामस्तमिते व्वाचं व्विसृजते । संवत्सरो वै प्रजापतिः प्रजापतिर्यज्ञोऽहोरात्रे वै संवत्सरऽएते ह्येनं परिप्लवमाने कुरुतः सोऽहन्नदीक्षिष्ट स रात्रिं प्रापत्स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतदाप्त्वा व्वाचं व्विसृजते ॥४॥ तद्धैके । नक्षत्रं दृष्ट्वा व्वाचं व्विसर्जयन्त्युत्रानुष्ठ्यास्तमितो भवतीति व्वदन्तस्तदु तथा न कुर्यात्क ते स्युर्यन्मेघः स्यात्तस्माद्यत्रैवानुष्ठ्यास्तमितं मन्येत तदेव व्वाचं व्विसर्जयेत् ॥५॥ अनेनो हैके व्वाचं व्विसर्जयन्ति । 'भूर्भुवः स्वरि'ति यज्ञमाप्याययामो यज्ञꣳ संदध्मऽइति व्वदन्तस्तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति न सन्दधाति यऽएतेन व्वाचं व्विसर्जयति ॥६॥ अनेनैव व्वाचं व्विसर्जयेत् । "व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो व्वनस्पतिर्यज्ञिय"ऽइत्येष ह्यस्यात्र यज्ञो भवत्येतद्धविर्यथा पुराग्निहोत्रं तद्यज्ञेनैवैतद्यज्ञꣳ सम्भृत्य यज्ञे यज्ञं प्रतिष्ठापयति यज्ञेन यज्ञꣳ सन्तनोति सन्ततꣳ ह्येवास्यैतद्व्रतं भवत्या सुत्यायै त्रिष्कृत्वऽआह त्रिवृद्धि यज्ञः ॥७॥ अथाग्निमभ्यावृत्य व्वाचं व्विसृजते । न ह स यज्ञमाप्याययति न सन्दधाति योऽतोऽन्येन व्वाचं व्विसृजते स प्रथमं व्याहरन्त्सत्यं व्वाचोऽभिव्याहरति ॥८॥ अग्निर्ब्रह्मेति । अग्निर्हीव ब्रह्माग्निर्यज्ञऽइत्यग्निर्ह्येव यज्ञो व्वनस्पतिर्यज्ञियऽइति व्वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युस्तस्मादाह व्वनस्पतिर्यज्ञियऽइति ॥९॥ अथास्मै व्रतꣳ श्रपयन्ति । देवान्वाऽ-

---

१. अयं इति. घ.  २. यज्ञः इति. क. घ.

३. अत्र "न पुरा नक्षत्रेभ्यो वाचं विसृजेत्....उदितेषु नक्षत्रेषु व्रतं कृणुतेति वाचं विसृजति" इति तैत्तिरीयसंहितास्थो ( तै. सं. ६. १. ३. ४. ) भागोऽनुसन्धानयोग्यः ।  ४. मा. सं. ४. ११.

एषऽउपावर्त्तते यो दीक्षते स देवतानामेको भवति शृतं वै देवानाᳬं हविर्नाशृतं तस्माच्छूपयन्ति तदेषऽएव व्रतयति नाग्नौ जुहोति तद्य-देषऽएव व्रतयति नाग्नौ जुहोति ॥१०॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यᳬं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरो भवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥११॥ तद्वा ऽऋषीणामनुश्रुतमास । ते यज्ञᳬं समभरन्यथायं यज्ञः सम्भृतऽएष वाऽअत्र यज्ञो भवति यो दीक्षतऽएष ह्येनं तनुतऽएषऽ-एनं जनयति तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्या-ययति यदेषऽएव व्रतयति नाग्नौ जुहोति न ह्याप्याययेद्यदग्नौ जुहु-याज्जुहुदु हैव मन्येत नाजुहवत् ॥१२॥ इमे वै प्राणाः । मनोजाता मनोयुजो दक्षक्रतवो वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवाऽएतासु हैवास्यैतद्देवतासु हुतं भवति ॥१३॥ तद्धैके । प्रथमे व्रतऽउभौ व्रीहियवावावपन्त्युभाभ्याᳬं रसाभ्यां यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तत्पुनराप्याययामऽइति वदन्तो यद्यु व्रतदुघा न दुहीत यस्यैवातः कामयेत तस्य व्रतं कुर्यादेतदु ह्येवा-स्यैतौऽउभौ व्रीहियवावन्वारब्धौ भवतऽइति तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति न संदधाति यऽ उभौ व्रीहियवावावपति त-स्मादन्यतरमेवावपेद्धविर्वाऽअस्यैताऽउभौ व्रीहियवौ भवतः स यदे-वास्यैतौ हविर्भवतस्तदेवास्यैतावन्वारब्धौ भवतो यद्यु व्रतदुघा न दुहीत यस्यैवातः कामयेत तस्य व्रतं कुर्यात् ॥१४॥ तद्धैके । प्रथमे व्रते सर्वौषधᳬं सर्वसुरभ्यावपन्ति यदि दीक्षितमार्तिर्विन्देद्येनैवातः कामयेत तेन भिषज्येद्यथा व्रतेन भिषज्येदिति तदु तथा न कुर्या-न्मानुषᳬं ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं

---

१. २. नाग्नौ इति. ग. ३. जुहोतीति. घ. ४. प्राणा इति. क. घ.
५. मनोजाता इति ग. ६. एता इति. घ. ७. व्रते इति. घ.

यज्ञे करवाणीति यदि दीक्षितमार्तिर्विन्देद्येनैवातः कामयेत तेन भिषज्येत्समाप्तिर्ह्येव पुण्या[1] ॥१५॥ अथास्मै व्रतं प्रयच्छति । अतिनीय मानुषं कालᳫँ सायंदुग्धमपररात्रे प्रातर्दुग्धमपराह्णे व्याकृत्याऽएव दैवं चैवैतन्मानुषं च व्याकरोति ॥१६॥ अथास्मै व्रतं प्रदास्यन्नपऽ[2]ऽउपस्पर्शयति । "दैवीं[3] धियं मनामहे सुमृडीकामभिष्टये । व्वर्चोधां यज्ञवाहसᳫँ सुतीर्था नोऽअसद्वश"ऽइति मानुषाय वाऽएष पुराशनायावनेनिक्तेऽथात्र दैव्यै धिये तस्मादाह दैवीं धियं मनामहे सुमृडीकामभिष्टये व्वर्चोधां यज्ञवाहसᳫँसुतीर्था नोऽअसद्वशाऽइति स यावत्क्रियच्च व्रतं व्रतयिष्यन्नपऽउपस्पृशेदेतेनैवोपस्पृशेत् ॥१७॥ अथ व्रतं व्रतयति । "ये[4] देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहे"ति तद्यथा व्वषट्कृतᳫँ हुतमे[5]वमस्यैतद्भवति ॥१८॥ अथ व्रतं व्रतयित्वा नाभिमुपस्पृशते । "श्वात्राः[6] पीता भवत यूयमापोऽअस्माकमन्तरुदरे सुशेवाः । ताऽअस्मभ्यमयक्ष्माऽअनमीवाऽअनागसः स्वदन्तु देवीरमृताऽऋतावृध"ऽइति[7] देवान्वाऽएषऽउपावर्तते[8] यो दीक्षते स देवतानामेको भवत्यनुत्सिक्तं वै देवानाᳫँ हविरथैतद्व्रतप्रदो मिथ्या करोति व्रतमुपोत्सिञ्चन्व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे सुशेवाः । ताऽअस्मभ्यमयक्ष्माऽअनमीवाऽअनागसः स्वदन्तु देवीरमृताऽऋतावृधऽइति स यावत्क्रियच्च व्रतं व्रतयित्वा नाभिमुपस्पृशेदेतेनैवोपस्पृशेत्कस्तद्वेद यद्व्रतप्रदो व्रतमुपोत्सिञ्चेत्[9] ॥१९॥ अथ यत्र मेक्ष्यन् भवति । तत्कृष्णविषाणया लोष्टं वा किञ्चिद्वोपहन्ती"यं[10] ते यज्ञिया तनू"रितीयं वै पृथिवी देवी देवयजनी

---

१. पुण्या इति. क. घ. २. प्रदास्यन्निति. घ. ३, ४. मा. सं. ४. ११.
५. हुतमिति. क. ६. मा. सं. ४. १२. ७. इति. ग.
८. देवान्वा इति. ग. ९. सिञ्चेत् इति. क. घ. १०. मा. सं. ४. १३.

सा दीक्षितेन नाभिमिद्धा तस्याऽएतदुद्गृह्यैव यज्ञियां तनूमथायज्ञि-
यꣳ शरीरमभिमेह "[1]त्यपो मुञ्चामि न प्रजा"मित्युभयं वाऽअतऽए-
त्यापश्च रेतश्च सऽएतदपऽएव मुञ्चति न प्रजा "[2]मꣳहोमुचः स्वा-
हाकृता"ऽइत्यꣳहसऽइव ह्येता मुञ्चन्ति यदुदरे गुष्पितं भवति तस्मा-
दाहाꣳहोमुचऽइति "[3]स्वाहाकृताः पृथिवीमाविशते"त्या[4]हुतयो भूत्वा
[5]शान्ताः पृथिवीमाविशतेत्येवैतदाह ॥२०॥ अथ पुनर्लोष्टं न्यस्यति ।
"[6]पृथिव्या सम्भवे"[7]तीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन
नाभिमिद्धा तस्याऽएतदुद्गृह्यैव यज्ञियां तनूमथायज्ञियꣳ शरीरम-
भ्यमिक्षत्तामेवास्यामेतत्पुनर्यज्ञियां तनूं दधाति तस्मादाह पृथिव्या
[8]सम्भवेति ॥२१॥ अथाग्नये परिदाय स्वपिति । देवान्वाऽएषऽउपा-
वर्तते यो दीक्षते स देवतानामेको भवति न वै देवाः स्वपन्त्यनव-
रुद्धो वाऽएतस्यास्वप्नो भवत्य[9]ग्निर्वै देवानां व्रतपतिस्तस्माऽएवैतत्प-
रिदाय स्वपित्य"[10]ग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमही"त्यग्ने
त्वं जागृहि वयꣳ स्वप्स्यामऽइत्येवैतदाह "[11]रक्षाणोऽअप्रयुच्छ"न्निति
गोपाय नोऽप्रमत्तऽइत्येवैतदाह "[12]प्रबुधे नः पुनस्कृधी"ति यथेतः
सुप्त्वा स्वस्ति प्रबुध्यामहाऽएवं नः कुर्वित्येवैतद[13]ाह ॥२२॥ अथ यत्र
सुप्त्वा पुनर्नावद्रास्यन् भवति । तद्वाचयति "[14]पुनर्मनः पुनरायुर्मऽ-
आगन् पुनः प्राणः पुनरात्मा मऽआगन् पुनश्चक्षुः पुनः श्रोत्रं मऽ-
आग"न्निति सर्व्वे ह वाऽएते स्वपतोऽपक्रामन्ति प्राणऽएव न तैरे-
वैतत्सुप्त्वा पुनः सङ्गच्छते तस्मादाह पुनर्मनः पुनरायुर्मऽआगन्
पुनः प्राणः पुनरात्मा मऽआगन् पुनश्चक्षुः पुनः श्रोत्रं मऽआगन् ।
"[15]वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्नः पातु दुरितादवद्यादि"ति तद्य-

---

१–३. मां. सं. ४. १३. ४. आहुतयः इति. घ. ५. शान्ता इति. घ.
६. मा. सं. ४. १३. ७. सम्भवेतीयमिति. घ. ८. सम्भवेति इति. घ.
९. अग्निर्वै इति. घ. १०–१२. मा. सं. ४. १४. १३. आह इति. क. घ.
१४, १५. मां. सं. ४. १५.

देवात्र स्वप्नेन वा येन वा मिथ्याकर्म तस्मान्नः सर्वस्मादग्निर्गोपायत्वित्येवैतदाह तस्मादाह वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्नः पातु दुरितादवद्यादिति ॥२३॥ अथ यद्दीक्षितः । अनृत्यं वा व्याहरति क्रुध्यति वा तन्मिथ्याकरोति व्रतं प्रमीणात्यक्रोधो ह्येव दीक्षितस्याग्निर्वै देवानां व्रतपतिस्तमेवैतदुपधावति "त्वमग्ने व्रतपाऽअसि देवऽआ मर्त्येष्वा । त्वं यज्ञेष्वीड्य"ऽइति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्या कृतं भवति न व्रतं प्रमीणाति तस्मादाह त्वमग्ने व्रतपाऽअसि देवऽआ मर्त्येष्वा त्वं यज्ञेष्वीड्यऽइति॥२४॥ अथ यद्दीक्षितायाभिहरन्ति । तस्मिन्वाचयति "रास्वेयत्सोमा भूयो भरे"ति सोमो ह वाऽअस्माऽएतद्युते यद्दीक्षितायाभिहरन्ति स यदाह रास्वेयत्सोमेति रास्व नऽइयत्सोमेत्येवैतदाहा भूयो भरेत्या नो भूयो हरेत्येवैतदाह "देवो नः सविता वसोर्दाता वस्वदादि"ति तथो हास्माऽएतत्सवितृप्रसूतमेव दानाय भवति ॥२५॥ पुरास्तमयादाह । 'दीक्षित वाचं यच्छे'ति तामस्तमिते वाचं विसृजते पुरोदयादाह दीक्षित वाचं यच्छेति तामुदिते वाचं विसृजते सन्तत्याऽएवाहरेवैतद्रात्र्या सन्तनोत्यह्ना रात्रिम् ॥२६॥ नैनमन्यत्र चरन्तमभ्युस्तमियात् । न स्वपन्तमभ्युदियात्स यदेनमन्यत्र चरन्तमभ्यस्तमियाद्रात्रेरेनं तदन्तरियाद्यत्स्वपन्तमभ्युदियादह्नऽएनं तदन्तरियान्नात्र प्रायश्चित्तिरस्ति प्रतिगुप्यमेवैतस्मात् न पुरावभृथादपोऽभ्यवेयान्नैनमभिवर्षेदनवक्लृप्तं ह तद्यत्पुरावभृथादपोऽभ्यवेयाद्यद्वैनमभिवर्षेदथ परिह्वालं वाचं वदति न मानुषीं प्रसृतां तद्यत्परिह्वालं वाचं वदति न मानुषीं प्रसृताम् ॥२७॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं नऽइदं मनुष्यैरनभ्यारोह्यꣳ स्या-

१. अवद्यादिति. क, अवद्यादिति. घ. २. ७, ८. मा. सं. ४. १६.
३, ५. मर्त्त्येष्वा इति. क. घ. ४. न इति. घ. ६. इति. क, इति. घ.
९. रात्रि इति. क, घ. १०. अभ्युदियादिति. घ. ११. मियमिति. घ.

दिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥२८॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञᳪ समभरन्यथायं यज्ञः सम्भृतऽएवं वाऽएष यज्ञᳪ सम्भरति यो दीक्षते व्वाग्वै यज्ञस्तद्य-देवात्र यज्ञस्य निधीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति यत्परिह्वालं व्वाचं व्वदति न[1] मानुषीं प्रसृतां न ह्याप्याययेद्यत्प्रसृतां मानुषीं व्वा-चं व्वदेत्तस्मात्परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृताᳪ[2] ॥२९॥ स वै धीक्षते । व्वाचं हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि व्वा-ग्धीक्षितो ह वै नामैतद्यद्दीक्षितऽइति ॥३०॥ Cf. का. श. ४. २. २; तै. ६. १. ४; मै. सं. ३. ६. ९; कठ. २३. ६. कपि. ३६. ३.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे
तृतीयकाण्डे द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥

## ३. २. २.

## ( प्रायणीयेष्टिः )

आदित्यं चरुं प्रायणीयं निर्व्वपति । देवा ह वाऽअस्यां यज्ञं तन्वाना ऽइमां यज्ञादन्तरीयुः सा हैषामियं यज्ञं मोहयाञ्चकार कथं नु मयि यज्ञं तन्वाना मां यज्ञादन्तरीयुरिति तᳪ ह यज्ञं न प्रजज्ञुः ॥१॥ ते होचुः । यन्न्वस्यामेव यज्ञमतᳪस्महि कथं नु नोऽमुहत्कथं न प्रजानीमऽइति ॥२॥ ते होचुः । अस्यामेव यज्ञं तन्वानाऽइमां यज्ञादन्तरगाम सा न इयमेव यज्ञममूमुहदिमामेवोपधावामेति ॥३॥ ते होचुः । यन्नु त्वय्येव यज्ञमतᳪस्माह कथं नु नोऽमुहत्कथं न प्रजानीमऽइति ॥४॥ सा होवाच । मय्येव यज्ञं तन्वाना मां यज्ञाद-न्तरगात सा वोऽहमेव यज्ञममूमुहं भागं नु मे कल्पयताथ यज्ञं द्रक्ष्यथाथ प्रज्ञास्यथेति ॥५॥ तथेति देवाऽअब्रुवन् । तवैव प्रायणीयस्तवो-

१. न इति. ग.    २. प्रसृताम् इति. घ.

दयनीयऽइति तस्मादेष आदित्यऽएव प्रायणीयो भवत्यादित्यऽउदयनीय इय७ँ ह्येवादितिस्ततो यज्ञमपश्यंस्तमतन्वत ॥६॥ स यदादित्यं चरुं प्रायणीयं निर्व्वपति । यज्ञस्यैव दृष्ट्यै यज्ञं दृष्ट्वा क्रीणानि तं तनवाऽइति तस्मादादित्यं चरुं प्रायणीयं निर्व्वपति तद्धै निरुप्त७ँ हविरासीदुनिष्टा देवता[1] ॥७॥ अथैभ्यः पथ्या स्वस्तिः प्रारोचत । तामयजन् व्वाग्वै पथ्या स्वस्तिर्व्वाग्यज्ञस्तद्यज्ञमपश्यंस्तमतन्वत ॥८॥ अथैभ्योऽग्निः प्रारोचत[2] । तमयजन्त्स यदाग्नेयं यज्ञस्यासीत्तदपश्यन्यद्धै शुष्कं यज्ञस्य तदाग्नेयं तदपश्यंस्तदतन्वत ॥९॥ अथैभ्यः सोमः प्रारोचत । तमयजन्त्स यत्सौम्यं यज्ञस्यासीत्तदपश्यन्यद्वाऽआर्द्रं[3] यज्ञस्य तत्सौम्यं तदपश्यंस्तदतन्वत ॥१०॥ अथैभ्यः सविता प्रारोचत । तमयजन् पशवो वै सविता पशवो[4] यज्ञस्तद्यज्ञमपश्यंस्तमतन्वताथ यस्यै देवतायै हविर्निरुप्तमासीत्तामयजन् ॥११॥ ता वाऽएताः[5] । पञ्च देवता यजति यो वै स यज्ञो मुग्ध ऽआसीत्पाङ्क्तो वै सऽआसीत्तमेताभिः पञ्चभिर्देवताभिः प्राजानन् ॥ १२ ॥ ऋतवो मुग्धा आसन् पञ्च । तानेताभिरेव पञ्चभिर्देवताभिः प्राजानन् ॥ १३ ॥ दिशो मुग्धाऽआसन् पञ्च । ताऽएताभिरेव पञ्चभिर्देवताभिः प्राजानन् ॥१४॥ उदीचीमेव दिशम् । पथ्यया स्वस्त्या प्राजानंस्तस्मादत्रोत्तरा हि व्वाग्वदति कुरुपञ्चालत्रा[6] व्वाग्घ्येषा निदानेनोदीची७ँ ह्येतया दिशं प्राजानन्नुदीची ह्येतस्यै दिक्[7] ॥१५॥ प्राचीमेव दिशम् । अग्निना प्राजानंस्तस्मादग्निं पश्चात्प्राञ्चमुद्धृत्योपासते प्राची७ँ ह्येतेन दिशं प्राजानन् प्राची ह्येतस्य दिक्[8] ॥१६॥ दक्षिणामेव दिशं । सोमेन प्राजानंस्तस्मात्सोमं क्रीतं दक्षिणा परिवहन्ति तस्मादाहुः[9] पितृदेवत्यः सोमऽइति दक्षिणां७ँ[10] ह्येतेन दिशं प्राजानन्दक्षि-

---

१. देवता इति. घ, देवता इति. ग. ङ.　२. सारोचतेति. ङ.　३. आर्द्रमिति. घ.
४. पशव इति. क.　५. एता इति. ग. ङ.　६. पञ्चालवेति. क. ङ.
७, ८. दिक् इति. ग. ङ.　९. आहुः इति ङ.　१०. दक्षिणा७ँइति. ङ.

णा ह्येतस्य दिक् ॥१७॥ प्रतीचीमेव दिशम् । सवित्रा प्राजानन्नेष वै सविता यऽएष तपति तस्मादेष प्रत्यङ्ङेति प्रतीचीँ ह्येतेन दिशं प्राजानन् प्रतीची ह्येतस्य दिक् ॥१८॥ ऊर्ध्वामेव दिशम् । अदित्या प्राजानन्नियं वाऽअदितिस्तस्मादस्यामूर्ध्वाऽओषधयो जायन्तऽऊर्ध्वा व्वनस्पतय ऊर्ध्वाँ ह्येतया दिशं प्राजानन्नूर्ध्वा ह्येतस्यै दिक् ॥१९॥ शिरो वै यज्ञस्यातिथ्यम् । बाहू प्रायणीयोदयनीयावभितो वै शिरो बाहू भवतस्तस्मादभितऽआतिथ्यमेते हविषी भवतः प्रायणीयश्चोदनीयश्च ॥२०॥ तदाहुः । यदेव प्रायणीये क्रियेत तदुदयनीये क्रियेत यदेव प्रायणीयस्य बर्हिर्भवति तदुदयनीयस्य बर्हिर्भवतीति तदपोद्धृत्य निदधाति ताँ स्थालीँ सक्षामकर्षां प्रमृज्य मेक्षणं निदधाति यऽएव प्रायणीयस्यर्त्विजो भवन्ति तऽउदयनीयस्यर्त्विजो भवन्ति तद्यदेतत्समानं यज्ञे क्रियते तेन बाहू सदृशौ तेन सरूपौ ॥२१॥ तदु तथा न कुर्यात् । काममेवैतद्बर्हिरनुप्रहरेदेवं मेक्षणं निर्णिज्य स्थालीं निदध्याद्यऽएव प्रायणीयस्यर्त्विजो भवन्ति तऽउदयनीयस्यर्त्विजो भवन्ति यद्यु ते व्विप्रेताः स्युरप्यन्यऽएव स्युः स यद्वै समानीर्देवता यजति समानानि हवीँषि भवन्ति तेनैव बाहू सदृशौ तेन सरूपौ ॥२२॥ स वै पञ्च प्रायणीये देवता यजति । पञ्चोदयनीये तस्मात्पञ्चेत्थादङ्गुलयः पञ्चेत्थात्तच्छंय्वन्तं भवति न पत्नीः संयाजयन्ति पूर्वार्धं वाऽअन्वात्मनो बाहू पूर्वार्धमेवैतद्यज्ञस्याभिसंस्करोति तस्माच्छंय्वन्तं भवति न पत्नीः संयाजयन्ति ॥२३॥ Cf. का. श. ४. २. ३; तै. सं. ६. १. ५; मै. सं. ३. ७. १; कठ. २३. ८; कपिष्ठ. ३६. ५. ६; शां. ब्रा. ५, १०; ऐ. ब्रा. १, ५.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. २. ३ )

---

१. दक्षिणा इति. ङ. २. प्राजानन्निति. ङ. ३. दिक् इति- ग. ङ.

३. २. ३.

( सोमेतिहासः )

दिवि वै सोमऽआसीत् । अथेह देवास्ते देवाऽअकामयन्ता नः सोमो गच्छेत्तेनागतेन यजेमहीति तऽएते मायेऽअसृजन्त सुपर्णीं च कद्रूं च तद्धि[1]ष्ण्यानां ब्राह्मणे व्याख्यायते सौपर्णीकाद्रवं यथा तद्वास ॥१॥ तेभ्यो गायत्री सोममच्छापतत् । तस्याऽआहरन्त्यै गन्धर्व्वो व्विश्वावसुः पर्यमुष्णात्ते देवाऽअविदुः प्रच्युतो वै परस्तात्सोमोऽथ नो नागच्छति गन्धर्व्वा वै पर्यमोषिषुरिति ॥२॥ ते होचुः । योषित्कामा वै गन्धर्वा व्वाचमेवैभ्यः प्रहिणवाम सा नः [2]सह सोमेनागमिष्यतीति तेभ्यो व्वाचं प्राहिण्वन्त्सैनान्त्सह [3]सोमेनागच्छत् ॥३॥ ते गन्धर्वा अन्वागत्याब्रुवन् । सोमो युष्माकं व्वागेवास्माकमिति तथेति देवा ऽअब्रुवन्निहो चे[4]दागान्मैनामभीषहेव नैष्ट व्विह्वयामहाऽइति तां व्यह्वयन्त ॥४॥ तस्यै ग[5]न्धर्वाः । व्वेदानेव प्रोचिरऽइति वै व्वयं व्वि[6]द्मेति व्वयं व्वि[6]द्मेति ॥५॥ अथ दे[7]वाः । व्वीणामेव सृ[8]ष्ट्वा व्वादयन्तो निगायन्तो निषेदुरिति वै ते व्वयं गास्याम ऽइति त्वा प्रमोदयिष्यामहऽइति सा देवानुपाववर्त सा वै सा तन्मोघमुपाववर्त या स्तुवद्भ्यः श[ꣳ]सद्भ्यो नृत्तं गीतमुपाववर्त तस्मादप्येतर्हि मोघसꣳहिता एव योषाऽएव[ꣳ] हि व्वागुपावर्तत तामु ह्य[9]न्या अनु योषास्तस्माद्य [10]एवं नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमाऽइव ॥६॥ तद्वा ऽएतदुभयं देवेष्वासीत् । सोमश्च व्वाक्च स यत्सोमं क्रीणात्यागत्याऽएवागतेन यजाऽइत्यनागतेन [11]ह वै स सोमेन यजते योऽक्रीतेन यजते ॥७॥ अथ यद्ध्रुवायामाज्यं परिशिष्टं भवति । तज्जुह्वां [12]चतुष्कृत्वो व्विगृह्णाति बर्हिषा हिरण्यं प्रबध्यावधाय जुहोति

१. तद्धिरण्यानामिति. घ. २. सहेति घ. ३. सोमेन इति. ग.
४. वेदेति. घ. ५. गन्धर्वा इति. ग. ङ. ६. विद्मेति. ग, ङ, विद्मेति. घ.
७. देवा इति. ग, ङ. ८. सृष्ट्वेति घ. ९. ह्यन्या इति. घ.
१०. एव इति. घ, ११. ह इति. घ, १२. चतुष्कृत्व इति. घ,

कृत्स्नेन पयसा जुहवानीति समानजन्म वै पयश्च हिरण्यं चोभयꣳ ह्यग्निरेतसꣳ ॥८॥ स हिरण्यमुवद्धाति । "एषा ते शुक्र तनूरेतद्व- र्च"ऽइति व्वर्चो वाऽएतद्यद्धिरण्यं "तया सम्भव भ्राजं गच्छे"ति स यदाह तया सम्भवेति तया सम्पृच्यस्वेत्येवैतदाह भ्राजं गच्छेति सोमो वै भ्राट् सोमं गच्छेत्येवैतदाह ॥९॥ तां यथैवादो देवाः । प्राहिण्वन्त्सोममच्छैवमेवैनामेष ऽएतत्प्रहिणोति सोममच्छ व्वाग्वै सो- मक्रयणी निदानेन तामेतयाहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति ॥१०॥ स जुहोति । "जूरसी"त्येतद्ध वा ऽअस्या ऽएकं नाम य- ज्जूरसीति "धृता मनसे"ति मनसा वाऽइयं व्वाग्धृता मनो वाऽइदं पुरस्ताद्वाचऽइत्थं व्वद मैतद्वादीरित्यलग्लमिव ह वै व्वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति ॥ ११ ॥

( अर्द्धप्रपाठकः )

"जुष्टा व्विष्णव"ऽइति । जुष्टा सोमायेत्येवैतदाह यमच्छेम ऽइति "तस्यास्ते सत्यसवसः प्रसव"ऽइति सत्यप्रसवा न ऽएधि सोमं नोऽच्छेहीत्येवैतदाह "तन्वो यन्त्रमशीय स्वाहे"ति स ह वै तन्वो यन्त्रमश्नुते यो यज्ञस्योदृचं गच्छति यज्ञस्योदृचं गच्छानीत्ये- वैतदाह ॥१२॥ अथ हिरण्यमपोद्धरति । तन्मनुष्येषु हिरण्यं करोति स यत्सहिरण्यं जुहुयात्परागु हैवैतन्मनुष्येभ्यो हिरण्यं प्रवृञ्ज्यात्तन्न मनुष्येषु हिरण्यमभिगंम्येत ॥१३॥ सोऽपोद्धरति । "शुक्रमसि चन्द्रमस्यमृतमसि व्वैश्वदेवमसी"ति कृत्स्नेन पयसा हुत्वा यदेवै- तत्तदाह शुक्रमसीति शुक्रꣳ ह्येतच्चन्द्रमसीति चन्द्रꣳ ह्येतदमृतमसी- त्यमृतꣳ ह्येतद्वैश्वदेवमसीति वैश्वदेवꣳ ह्येतत्प्रमुच्य तृणं बर्हि- ष्यपिसृजति सूत्रेण हिरण्यं प्रबध्नीते ॥१४॥ अथापरं चतुर्गृहीतमा- ज्यं गृहीत्वा । अन्वारभस्व यजमानेत्याहापोर्णुवन्ति शालायै द्वारे दक्षि-

---

१. रेतसꣳइति. ग. ङ. ७. ३. ६–८ मा. सं. ४. १९. ४. देवा इति. ग. ङ.
५. प्राहिण्वन्निति. घ. ९, १०. १२. मा. सं. ४. १८.
११. गम्येत इति. ग. ङ.

णतः सोमक्रयण्युपातिष्ठते तत्प्रहितामेवैनामेतत्सतीं प्राहैषीद्वाग्वै सोमक्रयणी निदानेन तामेतयाहुत्याप्रैषीत्प्रीतया सोमं क्रीणानीति[1] ॥१५॥ अथोपनिष्क्रम्याभिमन्त्रयते । "चिदसि मनासी"ति[2] चित्तं वाऽइदं मनो व्वागनुवदति "धीरसि दक्षिणे"ति[3] धिया धिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्रकामोद्येनेव गाथाभिरिव तस्मादाह धीरसीति दक्षिणेति दक्षिणा ह्येषा "क्षत्रियासि यज्ञियासी"ति[4] क्षत्रिया ह्येषा यज्ञिया ह्येषा "दितिरस्युभयतः शीर्ष्णी"ति[5] स यदेनया समानꣳ सद्विपर्यासं व्वदति यदपरं तत्पूर्वं करोति[6] यत्पूर्वं तदपरं तेनोभयतःशीर्ष्णी तस्मादाहादितिरस्युभयतःशीर्ष्णीति ॥१६॥ "सा[7] नः सुप्राची सुप्रतीच्येधी"[8]ति । सुप्राची नऽएधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीचीतं[9]ऽएधि सोमेन नः सह पुनरेहीत्येवैतदाह तस्मादाह सा नः सुप्राची सुप्रतीच्येधीति ॥१७॥ "मित्रस्त्वापदि बध्नीतामि"[10]ति । व्वरुण्या वाऽएषा यद्रज्जुः सा यद्रज्ज्वाभिहिता स्याद्वरुण्या स्याद्यदनभिहिता स्यादयतेव स्यादेतद्वाऽअवरुण्यं यन्मैत्रꣳ सा यथा रज्ज्वाभिहिता यतैवमस्यैतद्भवति[11] यदाह मित्रस्त्वा पदि बध्नीतामिति ॥१८॥ "पूषाध्वनस्पात्वि"[12]ति । इयं वै पृथिवी पूषा यस्य वाऽइयमध्वन् गोप्त्री भवति तस्य न काचन ह्वला भवति तस्मादाह पूषाध्वनस्पात्विति[13] ॥१९॥ "इन्द्रायाध्यक्षाये"[14]ति स्वध्यक्षासदित्येवैतदाह यदाहेन्द्रायाध्यक्षाये"त्वं[15]नु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्य"ऽइति सा यत्ते जन्म तेन नोऽनुमता सोममच्छेहीत्येवैतदाह "सा[16] देवि देवमच्छेही"ति देवी ह्येषा देवमच्छेति यद्वाक्सोमं तस्मादाह सा देवि देवमच्छेहीती"न्द्राय[17] सोममि"तीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय सोममिति "रुद्रस्त्वावर्तय[18]"

---

१. क्रीणानीति. ग, ङ. २-५. ४. १९. ६. करोतीति. क.
७. सा इति. ग. ८. मा. सं. ४. १९. ९. चीन इति. क.
१०. सं. ४. १९. ११. तद्भवति यदाहेति. ङ. १२. मा. सं. ४. १९.
१३. पात्वितीति. ग. ङ. १४. मा. सं. ४. १९. १५-१८. मा. सं. ४. २०.

त्वित्यप्रणाशायैतदाह रुद्रꣳ हि नाति पशवः "स्वस्ति सोमसखा पुनरेहीʼʼति स्वस्ति नः सोमेन सह पुनरेहीत्येवैतदाह ॥२०॥ तां यथैवादो देवाः । प्राहिण्वन्त्सोममच्छ सैनान्त्सह सोमेनागच्छदेवमेवैनामेषऽएतत्प्रहिणोति सोममच्छ सैनꣳ सह सोमेनागच्छति ॥२१॥ तां यथैवादो देवाः । व्यह्वयन्त गन्धर्वैः सा देवानुपावर्ततैवमेवैनामेतद्यजमानो विह्वयते सा यजमानमुपावर्तते तामुदीचीमत्याकुर्वन्त्युदीची हि मनुष्याणां दिक्सोऽएव यजमानस्य तस्मादुदीचीमत्याकुर्व्वन्ति ॥२२॥ Cf. का. श. ४. २. ४; तै. सं. ६. १. ६; मै सं. ३. ७. ३; कठ. २३. १०, कपिष्ठ. ३७. १.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ( २, ४ )

( द्वितीयोऽध्यायः समाप्तः ॥ )

३. २. ४.

( पदहोमः )

सप्त पदान्यनुनिक्रामति । वृङ्क्तऽएवैनामेतत्तस्मात्सप्त पदान्यनुनिक्रामति यत्र वै वाचः प्रजातानि छन्दाꣳसि सप्तपदा वै तेषां परार्ध्या शक्वरी तामेवैतत्परस्तादर्वाचीं वृङ्क्ते तस्मात्सप्त पदान्यनुनिक्रामति ॥१॥ स वै वाचऽएव रूपेणानुनिक्रामति "वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासीʼʼति वस्वी ह्येषादितिर्ह्येषादित्या ह्येषा रुद्रा ह्येषा चन्द्रा ह्येषा "बृहस्पतिष्ट्वा सुम्ने रम्णाʼʼत्विति ब्रह्म वै बृहस्पतिर्बृहस्पतिष्ट्वा साधुनावर्तयत्वित्येवैतदाह "रुद्रो वसुभिराचकʼʼऽइत्यप्रणाशायैतदाह रुद्रꣳ हि नाति पशवः ॥२॥ अथ सप्तमं पदं पर्युपविशन्ति । स हिरण्यं पदे निधाय

१. मा.सं. ४. २० २, ३. देवा इति. ग. ङ. ४. वृङ्क्त इति. घ,
५-७. मा. सं. ४. २१. ८. पशव इति. ग. ङ., पशव इति. घ.

जुहोति न वाऽअनग्नावाहुतिर्हूयतेऽग्निरेतसं वै हिरण्यं तथो हास्यैषाग्निमत्येवाहुतिर्हुता भवति वज्रो वाऽआज्यं वज्रेणैवैतदाज्येन स्पृणुते ताᳪं स्पृत्वा स्वीकुरुते ॥३॥ स जुहोति । "अदित्यास्त्वा मूर्धन्नाजिघर्मी"तीयं वै पृथिव्यदितिरस्यै हि मूर्धन् जुहोति "देवयजने पृथिव्या"ऽइति देवयजने हि पृथिव्यै जुहोती"डायाँस्पदमसि घृतवत्स्वाहे"ति गौर्वाऽइडा गोर्हि पदे जुहोति घृतवत्स्वाहेति घृतवद्ध्येतदभिहुतं भवति ॥४॥ अथ स्फ्यमादाय परिलिखति । वज्रो वै स्फ्यो वज्रेणैवैतत्परिलिखति त्रिष्कृत्वः परिलिखति त्रिवृतैवैतद्वज्रेण समन्तं परिगृह्णात्यनतिक्रमाय ॥५॥ स परिलिखति । "अँस्मे रमस्वे"ति यजमाने रमस्वेत्येवैतदाहाथ समुल्लिख्य पदᳪं स्थाल्याᳪं संवपत्य"स्मे ते बन्धु"रिति यजमाने ते बन्धुरित्येवैतदाह॥६॥ अथापऽउपनिनयति । यत्र वाऽअस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति तस्मादपऽउपनिनयति ॥७॥ अथ यजमानाय पदं प्रयच्छति। "त्वे राय"ऽइति पशवो वै रायस्त्वयि पशवऽइत्येवैतदाह तद्यजमानः प्रतिगृह्णाति "मे राय"ऽइति पशवो वै रायो मयि पशवऽइत्येवैतदाह ॥८॥ अथाध्वर्युरात्मानमुपस्पृशति । "मा वयᳪं रायस्पोषेण वियौष्मे"ति तथो हाध्वर्युः पशुभ्यऽआत्मानं नान्तरेति ॥९॥ अथ पत्न्यै [१०]पदं प्रतिपराहरन्ति । गृहा वै पत्न्यै प्रतिष्ठा तद्गृहेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मात्पत्न्यै पदं प्रतिपराहरन्ति ॥१०॥ तां नेष्टा वाचयति । "[११]तोतो राय"ऽइत्यथैनाᳪं सोमक्रयण्या संख्यापयति वृषा वै सोमो योषा पत्न्येष वाऽअत्र सोमो भवति यत्सोमक्रयणी मिथुनमेवैतत्प्रजननं क्रियते तस्मादेनां सोमक्रयण्या संख्यापयति ॥११॥ स संख्यापयति । "[१३]समख्ये देव्या धिया सन्दक्षिण-

१-५. मा. सं. ४. २२. ६. यजमाने इति. ग. ७-९, ११. मा. सं. ४. २२.
१०. पदं इति. घ. १२. संख्यापयतीति. ङ. १३. मा. ४. २३.

योरुचक्षसा । मा मऽआयुः प्रमोषीर्मोऽअहं तव । व्वीरं विविदेय तव देवि संदृशी''त्याशिषमेवैतदाशास्ते पुत्रो वै व्वीरः पुत्रं विविदेय तव संदृशीत्येवैतदाह ॥१२॥ सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी यत्र वाऽइन्द्राविष्णू त्रेधा सहस्रं व्यैरयतां तदेकात्यरिच्यत तां त्रेधा प्राजनयतां तस्माद्योप्येतर्हि त्रेधा सहस्रं व्याकुर्यादेकैवातिरिच्येत ॥१३॥ सा या बभ्रुः पिङ्गाक्षी[2] । सा[3] सोमक्रयण्यथ या रोहिणी सा व्वार्त्रघ्नी यामिदꣳ राजा सङ्ग्रामं जित्वोदाकुरुतेऽथ या रोहिणी श्येताक्षी सा पितृदेवत्या यामिदं पितृभ्यो घ्नन्ति ॥१४॥ ( शतम् १६०० ) सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी स्याद्यदि बभ्रुं पिङ्गाक्षीं न विन्देदरुणा स्याद्यद्यरुणां न विन्देद्रोहिणी व्वार्त्रघ्नी स्याद्रोहिण्यै ह त्वेव श्येताक्ष्याऽआशां नेयात् ॥१५॥ सा स्यादप्रवीता । व्वाग्वाऽएषा निदानेन[5] यत्सोमक्रयण्ययातयाम्नी वाऽइयं व्वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात्सा स्यादवण्डाकूटाकाणाकर्णालक्षितासप्तशफा सा ह्येकरूपैकरूपा हीयं व्वाँक्[6] ॥१६॥

Cf. का. श. ४. ३. १; तै. सं. ६. १. ७, ८; मै. सं. ३. ७. ५, ६; काठ. सं. २४. ३, ४; कपि. ३७. ४, ५.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. ३. १. )

## ३. २. ५.

### ( सोमोन्मानादि )

पदꣳ समुप्य पाणीऽअवनेनिक्ते । तद्यत्पाणीऽअवनेनिक्ते व्वज्रो वाऽआज्यꣳ रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमꣳ हिनसानीति तस्मात्पाणीऽअवनेनिक्ते ॥१॥ अथास्याꣳ हिरण्यं बध्नीते । द्वयं वाऽइदं न तृतीयमस्ति सत्यं चैवानृतं च सत्यमेव

---

१, २, ४. पिङ्गाक्षी इति. ग. ङ.
३. सा इति. ग. ङ.
५. निदानेत इति. ग. ङ.
६. वाक् इति. ग. ङ.

देवाऽअनृतं मनुष्याऽअग्निरेतसं वै हिरण्यꣳ सत्येनाꣳशूनुपस्पृशानि सत्येन सोमं पुराहणानीति तस्माद्वाऽअस्याꣳ हिरण्यं बध्नीते ॥२॥ अथ सम्प्रेष्यति 'सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरे'ति स यदेव शोभनं तत्सोमोपनहनꣳ स्याद्वासो ह्यस्यैतद्भवति शोभनꣳ ह्येतस्य वासः स यो हैनꣳ शोभनेनोपचरति शोभते ह्याथ यऽआह यदेव किं चेति यद्वैव किं च भवति तस्माद्यदेव शोभनं तत्सोमोपनहनꣳ स्याद्यदेव किं च सोमपर्याणहनम् ॥३॥ यद्युष्णीषं विन्देत् । उष्णीषः स्याद्यद्युष्णीषं न विन्देत्सोमपर्याणहनस्यैव द्व्यङ्गुलं वा त्र्यङ्गुलं वावकृन्तेदुष्णीषभाजनमध्वर्युर्वा यजमानो वा सोमोपनहनमादत्ते यऽएव कश्च सोमपर्याणहनम् ॥४॥ अथाग्रेण राजानं विचिन्वन्ति । तदुदकुम्भऽउपनिहितो भवति तद्ब्राह्मणऽउपास्ते तदभ्यायन्ति प्राञ्चः ॥५॥ तदायत्सु वाचयति । "एष ते गायत्रो भागऽइति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भागऽइति मे सोमाय ब्रूतादेष ते जागतो भाग ऽइति मे सोमाय ब्रूताच्छन्दोनामानाꣳसाम्राज्यं गच्छेति मे सोमाय ब्रूता"दित्येकं वाऽएष क्रीयमाणोऽभिक्रीयते छन्दसामेव राज्याय छन्दसाꣳ साम्राज्याय घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्तिं तमेतदाह छन्दसामेव त्वा राज्याय क्रीणामि छन्दसाꣳ साम्राज्याय न बधायेत्यथेत्य प्राङुपविशꣳति ॥६॥ सोऽभिमृशति । "आस्माकोऽसी"ति स्वऽइव ह्यस्यैतद्भवति यदागतस्तस्मादाहास्माकोऽसीति "शुक्रस्ते ग्रह्य"ऽइति शुक्रꣳ ह्यस्माद्ग्रहं ग्रहीष्यन् भवति "विचितस्त्वा विचिन्वन्त्वि"ति सर्वत्वायैतदाह ॥७॥ अत्र हैके । तृणं वा काष्ठं वा विव्त्त्वापास्यन्ति तदु तथा न कुर्यात्क्षत्रं वै सोमो विडन्याऽओषधयोऽन्नं वै क्षत्रियस्य विट्

---

१. शोभनꣳ इति. ग. ङ. २. न इति. ग. ङ. ३. पर्याणहनस्येति. ग.
४. सोमोपनहमिति. ग. ङ. ५. मा. सं. ४. २४. ६. एतदाहेति. ङ.
७. उपविशति इति. ग. ङ. ८, ९, ११. मा. सं. ४. २४. १०. शुक्रꣳ इति. ङ.

स यथा ग्रसितमनुह्वायाच्छिद्य परास्येदेवं तत्तस्माद्भ्येव मृशोद्वि-
चितस्त्वा विचिन्वन्तीति तद्यऽएवास्य विचेतारस्तऽएनं विचि-
न्वन्ति ॥८॥ अथ वासः । द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोपस्तृ-
णाति तद्राजानं मिमीते स यद्राजानं मिमीते तस्मान्मात्रा मनुष्येषु
[1]मात्रो यो चाप्यन्या मात्रा ॥९॥ सावित्र्या मिमीते । सविता वै दे-
वानां प्रसविता तथो हास्माऽएष सवितृप्रसूतऽएव क्रयाय भवति
॥१०॥ अतिच्छन्दसा मिमीते । एषा वै सर्व्वाणि छन्दाᳬंसि यदति-
च्छन्दास्तथो हास्यैष [2]सर्वैरेव छन्दोभिर्मितो भवति तस्मादतिच्छन्दसा
मिमीते ॥११॥ स मिमीते । "[3]अभि त्यं देवᳬं सवितारमोण्योः क-
विक्रतुमर्चामि सत्यसवᳬं रत्नधामभि प्रियं मतिं [4]कविम् । ऊर्ध्वा
यस्यामतिर्भाऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा
स्व"रिति ॥१२॥ एतया सर्व्वाभिः । एतया चतसृभिरेतया तिसृभि-
रेतया [5]द्वाभ्यामेतयैकयैतयैवैकयैतया द्वाभ्यामेतया तिसृभिरेतया चत-
सृभिरेतया सर्व्वाभिः समस्याञ्जलिनाध्यावपति ॥१३॥ स वाऽउदाचं
न्याचं मिमीते । स यदुदाचं न्याचं मिमीतऽइमाऽएवैतदङ्गुलीर्नाना-
जानाः करोति तस्मादिमा नाना जायन्तेऽथ यत्सह सर्व्वाभिर्मिमी-
ते सᳬं श्लिष्टा ऽइव हैवेमा जायेरंस्तस्माद्वाऽउदाचं न्याचं मिमीते
॥१४॥ यद्वेवोदाचं न्याचं मिमीते । इमाऽएवैतन्नानावीर्याः करोति
तस्मादिमा नानावीर्यास्तस्माद्वाऽउदाचं न्याचं मिमीते ॥१५॥ यद्वे-
वोदाचं न्याचं मिमीते । विराजमेवैतदर्व्वाचीं च पराचीं च युनक्ति
पराच्यह देवेभ्यो यज्ञं वहत्यर्व्वाची मनुष्यानवति [6]तस्माद्वाऽउदाचं
न्याचं मिमीते ॥१६॥ अथ यद्दशकृत्वो मिमीते । दशाक्षरा वै वि-
राड्वैराजः सोमस्तस्माद्दशकृत्वो मिमीते ॥१७॥ अथ सोमोपनह-

---

१. पात्रो इति. क.   २. सर्वैरेवेति. घ.   ३. मा. सं. ४. २५.
४. कविमिति. ग. घ. ६.   ५. द्वाभ्यामेतया इति. घ.   ६. तस्माद्वा इति. ग.

नस्य। समुत्पार्यान्तानुष्णीषेण विग्रथ्नाति "प्रजाभ्यस्त्वे"ति प्रजाभ्यो ह्येनं क्रीणाति स यदेवेदꣳ शिरश्चाꣳसौ चान्तरोपेनितमिव तदेवास्यैतत्करोति ॥१८॥ अथ मध्येऽङ्गुल्याकाशं करोति। "प्रजास्त्वानुप्राणन्त्वि"ति तमयतीव वाऽएनमेतत्समायच्छन्नप्राणमिव करोति तस्यैतदतऽएव मध्यतः प्राणमुत्सृजति तं ततः प्राणन्तं प्रजाऽअनुप्राणन्ति तस्मादाह प्रजास्त्वानुप्राणान्त्विति तꣳ सोमविक्रयिणे प्रयच्छत्यथातः पणनस्यैव ॥१९॥ Cf. का. श. ४. ३. २; तै. सं. ६. १. ९; मै. सं. ३. ७. ४; काठ. २४. १, २; कपि. ३७. २, ३.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ (अ. ३. २.)

## ३. २. ६.

## (सोमक्रयः)

स वै राजानं पणते। स यद्राजानं पणते तस्मादिदꣳ सक्रूत्सर्वं पण्यꣳ सऽआह सोमविक्रयिन् क्रय्यस्ते सोमो राजा३ऽइति क्रय्यऽइत्याह सोमविक्रयी तं वै ते क्रीणानीति क्रीणीहीत्याह सोमविक्रयी कलया ते क्रीणानीति भूयो वाऽअतः सोमो राजार्हतीत्याह सोमविक्रयी भूयऽएवातः सोमो राजार्हति महांस्त्वेव गोर्महिमेत्यध्वर्युः ॥१॥ गोर्वै प्रतिधुक्। तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्याऽआतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्याऽआमिक्षा तस्यै वाजिनꣳ ॥२॥ शफेन ते क्रीणानीति। भूयो वाऽअतः सोमो राजार्हतीत्याह सोमविक्रयी भूयऽएवातः सोमो राजार्हति महांस्त्वेव गोर्महिमेत्यध्वर्युरेतान्येव दश वीर्याण्युदाख्यायाह पदा तेऽर्धेन ते गवा ते क्रीणामीति क्रीतः सोमो राजेत्याह सोमविक्रयी वयाꣳसि

---

१, २. मा. सं. ४. २५. ३. पणनस्यैव इति. ग. ४. राजा इति. ग. ५. अध्वर्युरिति. ग. ङ. ६. वाजिनं इति. घ. ७. सोमविक्रयीति घ.

प्रब्रूहीति ॥३॥ सऽआह । चन्द्रं ते व्वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्याऽइति स यदर्वाक्पणन्ते परः सम्पादयन्ति तस्मादिदᳬ सक्तस्सर्व्वं पण्यमर्वाक्पणन्ते परः सम्पादयन्त्यथ यदध्वर्युरेव गोर्व्वीर्याण्युदाचष्टे न सोमस्य सोमविक्रयी महितो वै सोमो देवो हि सोमोऽथैतदध्वर्युर्गां महयति तस्यै पश्यन्वीर्याणि क्रीणादिति तस्मादध्वर्युरेव गोर्व्वीर्याण्युदाचष्टे न सोमस्य सोमविक्रयी[2] ॥ ४ ॥ अथ यत्पञ्चकृत्वः पणन्ते[3] । संवत्सरसम्मितो वै यज्ञः पञ्च वाऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्चकृत्वः पणते[4] ॥५॥ अथ हिरण्ये व्वाचयति । "शुक्रं[5] त्वा शुक्रेण क्रीणामी"-ति शुक्रᳬ ह्येतच्छुक्रेण क्रीणाति यत्सोमᳬ हिरण्येन "चन्द्रं[6] चन्द्रेणे"-ति चन्द्रᳬ ह्येतच्चन्द्रेण क्रीणाति यत्सोमᳬ हिरण्येनाऽऽमृतममृतेनेत्यमृतᳬ ह्येतदमृतेन क्रीणाति यत्सोमᳬ हिरण्येन ॥६॥ अथ सोमविक्रयिणमभिप्रकम्पयति "सग्मे[7] ते गो"रिति यजमाने ते गौरित्येवैतदाह तद्यजमानमभ्याहृत्य न्यस्यत्य"स्मे[8] ते चन्द्राणी"ति सऽआत्मन्येव व्वीर्यं धत्ते शरीरमेव सोमविक्रयी हरते तत्ततः सोमविक्रय्यादत्ते ॥७॥ अथाजायां प्रतीचीनमुख्यां व्वाचयति । "तपसस्तनूरसी"[9]ति तपसो ह वाऽएषा प्रजापतेः सम्भूता यदजा तस्मादाह तपसस्तनूरसीति "प्रजापतेर्व्वर्ण"[10]ऽइति सा यत्त्रिः संवत्सरस्य[12] विजायते तेन[13] प्रजापतेर्व्वर्णः "परमेण[11] पशुना क्रीयस"ऽइति सा यत्त्रिः संवत्सरस्य व्विजायते तेन परमः पशुः "सहस्रपोषं[14,15] पुषेय"मित्याशिषमेवैतदाशास्ते[16] भूमा वै सहस्रं भूमानं गच्छानीत्येवैतदाह ॥८॥ स वाऽअनेनैवाजां प्रयच्छति । अनेन राजानमादत्तऽआजा ह वै नामैषा यदजैतया ह्येनमन्ततऽआजति तामेतत्परोक्षमजेत्याचक्षते ॥९॥ अथ

---

१. तिस्रस्ते इति, ग, घ. २. विक्रयी इति. ग. ङ. ३, ४. पणत इति. ग.
५-११. मा. स. ४. २६. १२. संवत्सरस्येति. घ. १३. तेन इति. ग.
१४, १५ मा. सं. ४. २६. १६. आशास्त इति. घ.

राजानमादत्ते। "मित्रो नऽएहि सुमित्रध"ऽइति शिवो नः शान्तऽएहीत्येवैतदाह तं यजमानस्य दक्षिणऽऊरौ प्रत्युह्य न्यासो निदधाती"न्द्रस्योरुमाविश दक्षिण"मित्येष वाऽअत्रेन्द्रो भवति यद्यजमानस्तस्मादाहेन्द्रस्योरुमाविश दक्षिणमित्यु"शन्नुशन्तमि"ति प्रियः प्रियमित्येवैतदाह "स्योनः स्योन"मिति शिवः शिवमित्येवैतदाह ॥१०॥ अथ सोमक्रयणाननुदिशति। "स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभ"न्निति धिष्ण्यानां वाऽएते भाजनेनैतानि वै धिष्ण्यानां नामानि तान्येवैभ्यऽएतदन्वादिक्षत् ॥११॥ अथात्रापोर्णुते। गर्भो वाऽएष भवति यो दीक्षते प्रावृता वै गर्भाऽउल्बेनेव जरायुणेव तमत्राजीजनत तस्मादपोर्णुतऽएष वाऽअत्र गर्भो भवति तस्मात्परिवृतो भवति परिवृताऽइव हि गर्भाऽउल्बेनेव जरायुणेव ॥१२॥ अथ वाचयति। "परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजे"त्यासीनं वाऽएनमेषऽआगच्छति सऽआगतऽउत्तिष्ठति तन्मिथ्या करोति व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजेति ॥१३॥ अथ राजानमादायोत्तिष्ठति। "उदायुषा स्वायुषोदस्थाममृताँ२॥ऽअन्वि"त्यमृतं वाऽएषोऽनूत्तिष्ठति यः सोमं क्रीतं तस्मादाहोदायुषा स्वायुषोदस्थाममृताँ२॥ऽअन्विति ॥१४॥ अथ राजानमादायारोहणमभिप्रैति। "प्रति पन्थामपद्महि स्वस्ति गामनेहसम्। येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु"इति ॥१५॥ देवा ह वै यज्ञं तन्वानाः। तेऽसुररक्षसेभ्यऽआसङ्गाद्बिभयांचक्रुस्तंऽएतद्यजुः स्वस्त्ययनं ददृशुस्तऽएतेन यजुषा नाष्ट्रा रक्षांᳪस्यपहत्यैतस्य यजुषो-

---

१–५. मा. सं. ४. २७. ६, ७. मा. सं. ४. २८.
८. अन्विति इति. ग, अन्विति इति. घ. ९. मा. सं. ४. २९.
१०. त इति. घ. ११. रक्षाᳪसीति. घ.

भयेऽनाष्ट्रे निवाते स्वस्ति समाश्नुवत तथोऽएवैष एतेन यजुषा नाष्ट्रा रक्षाᳬंस्यपहत्यैतस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समश्नुते तस्मादाह प्रति पन्थामपद्महि स्वस्ति गामनेहसम् । येन[1] व्विश्वाः परि द्विषो व्वृणक्ति व्विन्दते व्वास्वि्वति ॥१६॥ तं वाऽइति हरन्ति । अनसा परिवहन्ति महयन्त्येवैनमेतत्तस्माच्छीर्ष्णा बीजᳬं हरन्त्यनसोदावहन्ति ॥१७॥ अथ यदपामन्ते क्रीणाति । रसो वाऽआपः सरसमेवैतत्क्रीणात्यथ यद्धिरण्यं भवति सशुक्रमेवैतत्क्रीणात्यथ यद्वासो भवति सत्वचसमेवैतत्क्रीणात्यथ यदजा भवति सतपसमेवैतत्क्रीणात्यथ यद्धेनुर्भवति साशिरमेवैतत्क्रीणात्यथ यन्मिथुनौ भवतः समिथुनमेवैतत्क्रीणाति तं वै दशभिरेव क्रीणीयान्नादशभिर्दशाक्षरा वै व्विराड्वैराजः सोमस्तस्माद्दशभिरेव क्रीणीयान्नादशभिः॥१८॥

Cf. का. श. ४. ३. ३, तै. सं. ६. १. १०. मै. सं. ३. ७. ७; काठ. २४. ५,६; कपि. ३७. ५–७.

इति शुक्लयजुर्वेदीयमाध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. ३. ३. )

द्वितीयः प्रपाठकः समाप्तः ॥

( कण्डिकासंख्या ॥१२८॥ )

३. ३. १.

( क्रीतस्य सोमस्य शकटेन शालायामाहरणम् )

नीडे कृष्णाजिनमास्तृणाति । "अदित्यास्त्वगसी"ति[3] सोऽसावेव बन्धुरथैनमासादय"त्यदित्यै सदऽआसीदे"तीयं[4] वै पृथिव्यदितिः प्रतिष्ठा तदस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मादाहादित्यै सद ऽआसीदेति[5] ॥१॥ अथैवमभिपद्य व्वाचयति । "अस्तभ्नाद्द्यां[6] व्वृषभोऽअन्तरिक्ष"मिति देवा ह वै यज्ञं तन्वानास्तेऽसुररक्ष-

१. येन इति. ग. ङ. २. सरसमेव इति. घ. ३, ४. मा. सं. ४. ३०.

५. आसीद इति. ग, ङ., आसीद इत. घ. ६. मा. सं. ४–३०.

सेभ्य आसङ्गाद्बिभयाञ्चक्रुस्तऽएनमेतज्ज्यायाꣳसमेव व्वधाञ्चक्रुर्यद्वा-ह्वास्तभ्नाद्द्यां व्वृषभोऽअन्तरिक्षमिति ॥२॥ "अमिमीत व्वरिमाणं पृथिव्या" ऽइति। तदेनेनेमांल्लोकानास्पृणोति तस्य हि न हन्तास्ति न वधो येनेमे लोका ऽआस्पृतास्तस्मादाहामिमीत व्वरिमाणं पृथिव्या ऽइति ॥३॥ "आसीदद्विश्वा भुवनानि सम्रा"डिति। तदेनेनेदꣳ सर्व्वमास्पृणोति तस्य हि न हन्तास्ति न वधो येनेदꣳ सर्वमास्पृतं तस्मादाहासीदद्विश्वा भुवनानि सम्राडिति ॥४॥ "व्विश्वेत्तानि व्वरुणस्य व्रतानी"ति। तदस्माऽइदꣳ सर्व्वमनुवर्त्म करोति यदिदं किं च न कश्चन प्रत्युद्यामिनं तस्मादाह व्विश्वेत्तानि व्वरुणस्य व्रतानीति ॥५॥ अथ सोमपर्याणहनेन पर्याणह्यति। नेदेनं नाष्ट्रा रक्षाꣳसि प्रमृशानिति गर्भो वा एष भवति तिरऽइव वै गर्भास्तिरऽइवैतद्यत्पर्याणद्धं तिरऽइव वै देवा मनुष्येभ्यस्तिरऽइवैतद्यत्पर्याणद्धं तस्माद्वै पर्याणह्यति ॥६॥ स पर्याणह्यति। "व्वनेषु व्यन्तरिक्षं तताने"ति व्वनेषु हीदमन्तरिक्षं व्वितं व्वृक्षाग्रेषु "व्वार्जमर्वत्सु पयऽउस्रियास्वि"ति व्वीर्यं वै व्वाजाः पुमाꣳसोऽर्व्वन्तः पुꣳस्वेवैतद्वीर्यं दधाति पय ऽउस्रियास्विति पयो हीदमुस्रियासु हितꣳ "हृत्सु क्रतुं व्वरुणो व्विक्ष्वग्नि"मिति हृत्सु ह्ययं क्रतुर्मनोजवः प्रविष्टो व्विक्ष्वग्निमिति व्विक्षु ह्ययं प्रजास्वग्नि"र्दिवि सूर्यमदधात्सोममद्रा"विति दिवि ह्यसौ सूर्यो हितः सोममद्राविति गिरिषु हि सोमस्तस्मादाह दिवि सूर्यमदधात्सोममद्राविति ॥७॥ अथ यदि द्वे कृष्णाजिने भवतः। तयोरन्यतरत्प्रत्यानह्यति प्रतीनाहभाजनं यद्युऽएकं भवति कृष्णाजिनग्रीवाऽएवावकृत्य प्रत्यानह्यति प्रतीनाहभाजनꣳ "सूर्यस्य चक्षुरारोहाग्ने-

---

१, २, ४. मा. सं. ४. ३०. ३. न इति. घ. ५. व्रतानीति ग. ङ.
६. इवैतत्पर्याणद्धमिति. ग ७, ८. मा. सं. ४. ३१. ९. मर्वत्सु इति. घ.
१०. पुꣳस्वेति. घ. ११, १३. मा. सं. ४. ३१. १२. विक्ष्वग्निमिति. ग.
१४. सोममद्रावितीति ग. ङ. १५. प्रतिनाह इति भाष्ये १६. मा. सं. ४. ३२.

रक्षणः कनीनकम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चिते''ति सूर्यमेवैतत्पुरस्तात्करोति सूर्यः पुरस्तान्नाष्ट्रा रक्षाᳬंस्यपघ्नन्नेत्यथा-भयेनानाष्ट्रेण परिवहन्ति ॥८॥ उद्धते प्रऽउग्ये फलके भवतः । तद-न्तरेण तिष्ठन्त्सुब्रह्मण्यः प्राजति श्रेयाँन्वाऽएषोऽभ्यारोहाद्भवति को ह्येतमर्हत्यभ्यारोढुं तस्मादन्तरेण तिष्ठन् प्राजति ॥९॥ पलाशशाखया प्राजति । यत्र वै गायत्री सोममच्छापतत्तदस्याऽआहरन्त्याऽअपाद-स्ताभ्यायत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णोऽभवत्तस्मात्पर्णो नाम तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यस-दिति तस्मात्पलाशशाखया प्राजति ॥१०॥ अथानड्वाहावाजन्ति । तौ यदि कृष्णौ स्यातामन्यतरो वा कृष्णस्तत्र विद्याद्वर्षिष्यत्यैषमः पर्जन्यो वृष्टिमान् भविष्यतीत्येतदु विज्ञानम् ॥११॥ अथ युनक्ति । ''उर्स्रावेतं धूर्षाहा''वित्युस्रौ हि भवतो धूर्षाहाविति धूर्वाहौ हि भवतो ''युज्येथामनश्रू''ऽइति युज्येते ह्यनश्रूऽइत्यनार्ताविति त''द्वँवी-रहणा''वित्यपापकृताविति त''ब्रह्मचोदँनावि''ति ब्रह्मचोदनौ हि भवतः ''स्वस्ति यजमानस्य गृहान् गच्छत''मिति यथैनावन्तरा नाष्ट्रा रक्षाᳬं-सि न हिᳬंस्युरेवमेतदाह ॥१२॥ अथ पश्चात्परिक्रम्य । अपालम्ब-मभिपद्याह 'सोमाय क्रीतायानुब्रूही'ति सोमाय पर्युह्यमाणायेति वातो यतरथा कामयेत ॥१३॥ अथ वाचयति । ''भँद्रो मेऽसि प्रच्यवस्व भुवस्पत''ऽइति भद्रो ह्यस्यैष भवति तस्मान्नान्यमाद्रियतेऽप्यस्य राजानः सभागाऽआगच्छन्ति पूर्वो राज्ञोऽभिवदति भद्रो हि भवति तस्मादाह भद्रो मेऽसीति प्रच्यवस्व भुवस्पतऽइति भुवनानाᳬं ह्येष पति ''र्विश्वान्यँभि धामानी''त्यङ्गानि वै विश्वानि धामान्यङ्गान्येवै-तदभ्याह ''मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका ऽअघायवो विद''न्निति यथैनमन्तरा नाष्ट्रा रक्षाᳬंसि न विन्देयुरेवमेतदाह ॥१४॥ ''श्येनो भूत्वा परापते''ति । वयऽएवैन-

१. पुरस्तादिति. ग. २. सुब्रह्मण्या इति. क. ३. श्रेयान्वा इति. ग.

४-८. मा. सं. ४ ३३. ९-१२. मा. सं. ४. ३४.

मेतद्भूतं प्रपातयति यद्वाऽउग्रं तन्नाष्ट्रा रक्षाᳫंसि नान्वयन्त्येतद्वै व्वयसामोजिष्ठं बलिष्ठं यच्छ्येनस्तमेवैतद्भूतं प्रपातयति यदाह श्येनो भूत्वा परापतेति ॥१५॥ अथ शरीरमेवान्वावहन्ति[1] । "यजमानस्य गृहान् गच्छ तन्नौ सᳫंस्कृत"मिति[2] नात्र तिरोहितमिवास्ति ॥१६॥ अथ सुब्रह्मण्यामाह्वयति । यथा येभ्यः पक्ष्यन्त्स्यात्तान्[3] ब्रूयादित्यहे वः पक्तास्मीत्येवमेवैतद्देवेभ्यो यज्ञं[4] निवेदयति सुब्रह्मण्यो३ᳫं सुब्रह्मण्यो३मिति ब्रह्म हि देवान् प्रच्यावयति त्रिष्कृत्वऽआह त्रिवृद्धि यज्ञः[5] ॥१७॥ "इन्द्रागच्छे"ति[6] । इन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रागच्छेति[7] "हरिवऽआगच्छ मेधातिथेर्मेष व्वृषणश्वस्य मेने । गौरावस्कन्दिन्नहल्यायै जारे"ति तद्यान्येवास्य चरणानि तैरेवैनमेतत्प्रमुमोदयिषति ॥१८॥ "कौशिक ब्राह्मण गौतम ब्रुवाणे"ति[9] । शश्वद्धैतदारुणिर्नाधुनोपज्ञातं[10] यद्गौतम ब्रुवाणेति स यदि कामयेत ब्रूयादेतद्यद्यु कामयेतापि नाद्रियेतेत्यहे[11] सुत्यामिति यावदहे सुत्या भवति ॥१९॥ "देवा ब्रह्माण आगच्छते"ति । तद्देवांश्च ब्राह्मणांश्चाहैतैर्ह्यत्रोभयैरर्थो भवति यद्देवैश्च ब्राह्मणैश्च[12] ॥२०॥ अथ प्रतिप्रस्थाता । अग्रेण शालामग्नीषोमीयेण पशुना प्रत्युपतिष्ठतेऽग्नीषोमौ वाऽएतमन्तर्जम्भऽआदधाते यो दीक्षतऽआग्नावैष्णवᳫं ह्यदो दीक्षणीयᳫं हविर्भवति यो वै व्विष्णुः सोमः स हविर्वाऽएष देवानां[13] भवति यो दीक्षते तदेनमन्तर्जम्भऽआदधाते तत्पशुनात्मानं निष्क्रीणीते ॥२१॥ तद्धैके । आहवनीयादुल्मुकमाहरन्त्ययमग्निरयᳫं सोमस्ताभ्याᳫं सह सङ्गत्यां निष्क्रेष्यामहऽइति व्व-

---

१. अन्वावहन्तीति काण्वीयः पाठः । आनयन्तीति तस्यार्थः । अयमेव पाठः 'क' पुस्तकेऽपि दृश्यते । ग. घ पुस्तकयोस्तु अन्ववहन्तीति पाठो दृश्यते, भाष्ये च ।
२. मा. सं. ४. ३४. ३. तान् इति घ. ४. पक्तास्मि इति. ग.
५. यज्ञ इति. ग. ङ. ६. ८. ९. षड्विं. १. १. २. ७. इन्द्रागच्छेति घ, आगच्छेति. ग.
६-९. तै. आ १. १२. १०. अधुनोप इति. ग. ङ. ११. त्यहे इति. ग, घ, ङ.
१२. ब्राह्मणैरिति घ, ब्राह्मणैरिति. ग. ङ. १३. देवानामिति नाऽस्ति. ग ङ.

दन्तस्तदु तथा न कुर्याद्यत्र वाऽएतौ क्व च तत्सहैव ॥२२॥ स वै द्विरूपो भवति । द्विदेवत्यो हि भवति देवतयोरसमदे कृष्णसारङ्गः स्यादित्याहुरेतद्ध्येनयो रूपतममिवेति यदि कृष्णसारङ्गं न विन्देद्-थोऽअपि लोहितसारङ्गः स्यात् ॥२३॥ तस्मिन्वाचयति । "नमो मित्रस्य व्वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत । दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसते"ति नमऽएवास्माऽएतत्करोति मित्रधेयमेवैनेनैतत्कुरुते ॥२४॥ अथाध्वर्युरारोहणं व्विमुञ्चति । "व्वरुणस्योत्तम्भनमसी"त्युपस्तम्भनेनोपस्तभ्नाति "व्वरुणस्य स्कम्भसर्जनी स्थ"ऽइति शम्येऽउद्वृहति स यदाह व्वरुणस्य स्कम्भसर्जनी स्थऽइति व्वारुण्यो ह्येषऽएतर्हि भवति यत्सोमः क्रीतः ॥२५॥ अथ चत्वारो राजासन्दीमाददते । द्वौ वाऽअस्मै मानुषाय राज्ञऽआददातेऽअथैतां चत्वारो योऽस्य सर्कृत्सर्वस्येष्टे ॥२६॥ औदुम्बरी भवति । अन्नं वाऽऊर्गुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरी भवति ॥२७॥ नाभिदघ्ना भवति । अत्र वाऽअन्नं प्रतितिष्ठत्यन्नꣳ सोमस्तस्मान्नाभिदघ्ना भवत्यत्रोऽएव रेतसऽआशयो रेतः सोमस्तस्मादत्रदघ्ना भवति ॥२८॥ तामभिमृशति । "व्वरुणस्यऽऋतसदन्यसी"त्यथ कृष्णाजिनमास्तृणाति "व्वरुणस्यऽऋतसदनमसी"त्यथैनमासादयति "व्वरुणस्य ऽऋतसदनमासीदे"ति स यदाह व्वरुणस्यऽऋतसदनमासीदेति व्वारुण्यो ह्येषऽएतर्हि भवति ॥२९॥ अथैनꣳ शालां प्रपादयति । स प्रपादयन्वाचयति "या ते धामानि हविषा यजन्ति ता ते व्विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्या"निति गृहा वै दुर्या गृहान्नः शिवः शान्तोऽपापकृत्प्रचरेत्येवैतदाह ॥३०॥ अत्र हैके । उदपात्रमुपनिन-

---

१. सहैव इति. ग. ङ. २. स वै इति. घ. ३. मा. सं. ४. ३५.
४. ५, मा. सं. ४. ३६. ६. व्वरुण्यो इति. घ. ७-९. मा. सं. ४. ३६.
१०. मा. सं. ४. ३७. ११. यजन्तीति. घ. १२. यज्ञमिति. ग, घ, ङ.

यन्ति यथा राज्ञऽआगतायोदकमाहरेदेवमेतदिति व्वदन्तस्तदु तथा न कुर्यान्मानुष ᳪ ह ते यज्ञे कुर्व्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्नोपनिनयेत् ॥ ३१ ॥ Cf. का. श. ४. ३. ४; तै. सं. ६. १. ११.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ३. ४. )

( तृतीयोऽध्यायः समाप्तः )

३. ३. २.

( आतिथ्येष्टिः )

शिरो वै यज्ञस्यातिथ्यं बाहू प्रायणीयोदयनीयौ । अभितो वै शिरो बाहू भवतस्तस्मादभित आतिथ्यमेते[2] हविषी भवतः प्रायणीयश्चोदयनीयश्च ॥१॥ अथ यस्मादातिथ्यं नाम[3] । अतिथिर्व्वाऽएष एतस्यागच्छति यत्सोमः क्रीतस्तस्माऽएतद्यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्तदह मानुषᳪ हविर्देवानामेवमस्माऽएतदातिथ्यं करोति ॥२॥ तदाहुः । पूर्वोऽतीत्य गृह्णीयादिति यत्र वाऽअर्हन्तमागतं नापचायन्ति क्रुध्यति वै स तत्र तथा ह्यापचितो भवति ॥३॥ तद्वाऽअन्यतर ऽएव व्विमुक्तः स्यात् । अन्यतरोऽविमुक्तोऽथ गृह्णीयात्स यदन्यतरो व्विमुक्तस्तेनागतो यद्वन्यतरोऽविमुक्तस्तेनापचितः ॥४॥ तदु तथा न कुर्यात् । व्विमुच्यैव प्रपाद्य गृह्णीयाद्यथा वै देवानां चरणं तद्वाऽअनु मनुष्याणां तस्मान्मानुषे यावन्न व्विमुञ्चते नैवास्मै तावदुदकᳪ हरन्ति नापचितिं कुर्व्वन्त्यनागतो हि स तावद्भवत्यथ यदैव व्विमुञ्चतेऽथास्माऽउदकᳪ हरन्त्यथापचितिं कुर्व्वन्ति तर्हि हि सऽआगतो

---

१. ते इति. घ.  २. आतिथ्यमेने इति. ग. ङ.  ३. नाम इति घ.

४. See तै. सं. ६. २. १. 'विमुक्तोऽन्योनड्वान् भवत्यविमुक्तोऽन्यः ऽथाऽऽतिथ्यं गृह्णाति । मै. सं. ३. ७. ९. युक्तोऽन्योनड्वान् भवति विमुक्तोऽन्यः ।

भुवति तुस्माद्विमुच्यैव् प्रपाद्य गृह्णीयात् ॥५॥ स वै संत्वरमाण-ऽइव गृह्णीयात्। तथा ह्यापाचितो भवति तत्पुत्न्यन्वारभते पर्युह्यमाणं वै यजमानोऽन्वारभतेऽथात्र पुत्न्युभयुतऽएवैतुन्मिथुनेनान्वारभेते यत्र वाऽअर्हन्नागच्छति सर्व्वगृह्याऽइव वै तुत्र चेष्टन्ति तुथा ह्यापचितो भवति ॥६॥ स वाऽअन्येनैव तुतो युजुषा गृह्णीयात्। येनो चान्यानि हवींᳯष्येकं वाऽएष भागं क्रीयमाणोऽभिक्रीयते छुन्दसामेव् राज्याय छुन्दसाᳯ साम्राज्याय तुस्य छुन्दाᳯस्यभितः साचयानि यथा राज्ञो राजानो राजकृतः सूतग्रामुण्य एवुमस्य छुन्दाᳯस्यभितः साचयानि ॥७॥ न वै तदुवकल्पते। यच्छुन्दोभ्यऽइति केवलं गृह्णीयाद्यत्र वाऽअर्हते पुचन्ति तदभितः साचयोऽन्वाभक्ता भवन्त्युराजानो राजकृतः सूतग्रामुण्यस्तुस्माद्यत्रैवैतुंस्यै गृह्णीयात्तदेव छुन्दाᳯस्यन्वाभजेत् ॥८॥ स गृह्णाति। "अग्नेस्तनूरासि विष्णवे त्वे"त्यग्निर्वै गायत्री तद्गायत्रीमन्वाभजति ॥९॥ "सोमस्य तनूरसि विष्णवे त्वे"ति। क्षत्रं वै सोमः क्षत्रं त्रिष्टुप्तत्त्रिष्टुभमन्वाभजति ॥१०॥"अतिथेरातिथ्यमसि विष्णवे त्वे"ति। सोऽस्योद्धारो यथा श्रेष्ठस्योद्धारऽएवमस्यैषऽक्रुते छुन्दोभ्यः ॥११॥ "श्येनाय त्वा सोमभृते विष्णवे त्वे"ति। तद्गायत्रीमन्वाभजति सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः सोमभृत्तेनैवैनामेतद्वीर्येण द्वितीयमन्वाभजति ॥१२॥ "अग्नये त्वा रायस्पोषदे विष्णवे त्वे"ति। पशवो वै रायस्पोषः पशवो जगती तज्जगतीमन्वाभजति ॥१३॥ अथ यत्पञ्चकृत्वो गृह्णाति। संवत्सरसम्मितो वै यज्ञः पञ्च वाऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्चकृत्वो गृह्णात्यथ यद्विष्णवे त्वा विष्णवे त्वेति गृह्णाति विष्णवे हि गृह्णाति यो यज्ञाय गृह्णाति ॥१४॥ नवकपालः पुरोडाशो भवति। शिरो वै यज्ञस्यातिथ्यं नवाक्षरा वै गायत्र्यष्टौ तानि यान्यन्वाह प्रणवो नवमः

---

१. एतस्मै इति. क. २-६. मा. सं. ५. १. ७. रायस्पोषदे इति. घ.

पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्धऽएष यज्ञस्य तस्मान्नवकपालः पुरोडाशो भवति ॥१५॥ कार्ष्मर्यमयाः परिधयः । देवा ह वाऽएतं वनस्पतिषु राक्षोघ्नं ददृशुर्यत्कार्ष्मर्यँ शिरो वै यज्ञस्यातिथ्यं नेच्छिरो यज्ञस्य नाष्ट्रा रक्षाꣳसि हिनसान्निति तस्मात्कार्ष्मर्यमयाः परिधयो भवन्ति ॥१६॥ आश्ववालः प्रस्तरः । यज्ञो ह देवेभ्योऽपचक्राम सोऽश्वो भूत्वा पराङावव र्त्त तस्य देवा ऽअनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य सार्धँ संन्यासुस्ततऽएता ओषधयः समभवन्यदश्ववालाः शिरो वै यज्ञस्यातिथ्यं जघनार्धो वालाऽउभयतऽएवैतद्यज्ञं परिगृह्णाति यदाश्ववालः प्रस्तरो भवति ॥१७॥ ऐक्षव्यौ विधृती । नेद्बर्हिश्च प्रस्तरश्च संलुभ्यात ऽइत्यथोत्पूयाज्यꣳसर्व्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्रानुयाजा भवन्ति ॥१८॥ आसाद्य हवीँष्यग्निं मन्थति । शिरो वै यज्ञस्यातिथ्यं जनयन्ति वाऽएनमेतद्यन्मन्थन्ति शीर्षतो वाऽअग्रे जायमानो जायते शीर्षतऽएवैतदग्रे यज्ञं जनयत्यग्निर्वै सर्वा देवताऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति शिरो वै यज्ञस्यातिथ्यँ शीर्षत ऽएवैतद्यज्ञꣳ सर्वाभिर्देवताभिः समर्धयति तस्मादग्निं मन्थति ॥१९॥ सोऽधिमन्थनꣳ शकलमादत्ते । "अग्नेर्जनित्रमसी"त्यत्र ह्यग्निर्जायते तस्मादाहाग्नेर्जनित्रमसीति ॥२०॥ अथ दर्भतरुणके निदधाति । "वृषणौ स्थ"ऽइति तद्यावेवेमौ स्त्रियै साकंजावेतावेवैतौ ॥२१॥ अथाधरारणिं निदधाति "उर्वश्यसी"त्यथोत्तरारण्याज्यविलापनीमुपस्पृशत्या"युरसी"ति तामभिनिदधाति "पुरूरवा ऽअसी"त्युर्वशी वाऽअप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरेवमेवैष ऽएतस्मान्मिथुनाद्यज्ञं जनयत्यथाहाग्नये मथ्यमानायानुब्रूही'ति ॥२२॥ स मन्थति । "गायत्रेण त्वा छन्दसा मन्थामि । त्रैष्टुभेन त्वा छन्दसा मन्थामि । जागतेन त्वा छन्दसा मन्थामी"ति तं वै छन्दोभिरेव मन्थति छन्दाꣳसि

---

१. मा.सं. ५. २. २. मसीति. ग. ३-५. मा.सं. ५. २.

मथ्यमानायान्वाह छन्दाꣳस्येवैतद्यज्ञमन्वायातयति यथामुमादित्यꣳ रश्मयो जातायानुब्रूहीत्याह यदा जायते प्रह्रियमाणायेत्यनुप्रहरꣳ[1][2] ॥२३॥ सोऽनुप्रहरति । "भवतं नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य न"[3] इति शान्तिमेवाभ्यामेतद्वदति यथा नान्योऽन्यꣳ हिꣳस्याताम् ॥२४॥ अथ स्रुवेणोपहत्याज्यम् । अग्निमभिजुहोत्य"ग्नावग्निश्चरति प्रविष्टऽऋषीणां पुत्रोऽभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहे"त्याहुत्यै[4] वाऽएतमजीजनत तमेतयाहुत्याप्रैषीत्तस्मादेवमभिजुहोति ॥२५॥ तादिडान्तं भवति । नानुयाजान्यजन्ति शिरो वै यज्ञस्यातिथ्यं पूर्वार्धो वै शिरः पूर्वार्धमेवैतद्यज्ञस्याभिसꣳस्करोति[5] स यद्धानुयाजान्यजेद्यथा शीर्षतः पर्याहृत्य[6] पादौ प्रतिदध्यादेवं तत्तस्मादिडान्तं भवति नानुयाजान्यजन्ति ॥२६॥ Cf. का. श. ४. ४. १; तै. सं. ६. २. १; मै. सं. ३. ७. ९; काठ. सं २४. ८; कपि. सं. ३८. १; ऐ. ब्रा. १. १४; शां. ब्रा. ८. १, २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. ४. १. )

## ३. ३. ३.

### ( तानूनप्त्रस्पर्शः )

आतिथ्येन वै देवा ऽइष्ट्वा[7] । तान्त्समदविन्दत्ते चतुर्धा व्यद्रवन्नन्योऽन्यस्य श्रिया ऽआतिष्ठमाना ऽअग्निर्वसुभिः सोमो रुद्रैर्वरुणऽआदित्यैरिन्द्रो मरुद्भिर्बृहस्पतिर्विश्वैर्देवैरित्यु[8] हैकऽआहुरेते ह त्वेव ते विश्वे देवा ये ते चतुर्धा व्यद्रवंस्तान्विद्रुतानसुररक्षसान्य-

१. जाताय इति. घ. ग. २. प्रहरन्. इति. ग. ३. मा. सं. ५. ३.
४. मा. सं. ५. ४. ५. संस्करोतीति. क. ६. पर्याहृत्य इति. घ.
७. इष्ट्वा इति. ग. ङ. ८. See तै. सं. ६. २. २. १ "बृहस्पतिर्विश्वैर्देवैः"

नुव्यवेयुः ॥१॥ तेऽविदुः । पापीयाꣳसो वै भवामोऽसुररक्षसानि वै नोऽनुव्यवागुर्द्विषद्भ्यो वै रध्यामो हन्त संजानामहाऽएकस्य श्रियै तिष्ठामहाऽइति तऽइन्द्रस्य श्रियाऽअतिष्ठन्त तस्मादाहुरिन्द्रः सर्व्वा देवताऽइन्द्रश्रेष्ठा देवाऽइति ॥२॥ तस्मादु ह न स्वाऽअर्त्ती-येरन् । यऽएषां परस्तरामिव भवति स ऽएनाननुव्यैति ते प्रियं द्विषतां कुर्वन्ति द्विषद्भ्यो रध्यन्ति तस्मान्नार्त्तीयेरन्न यो हैवं वि-द्वान्नार्त्तीयतेऽप्रियं द्विषतां करोति न द्विषद्भ्यो रध्यति तस्मान्नार्त्ती-येत ॥३॥ ते होचुः । हन्तेदं तथा करवामहै यथा नऽइदमनविद्रु-मेवाजर्यमसदिति ॥४॥ ( शतम् १७०० ) ते देवाः । जुह्वास्तनूः प्रि-याणि धामानि सार्धꣳ समवददिरे ते होचुरेतेन नः स नानासदेतेन विष्वङ् यो नऽएतदतिक्रामादिति कस्योपद्रष्टुरिति तनूनप्तुरेव शा-क्वरस्येति यो वाऽअयं पवतऽएष तनूनपाच्छाक्वरः सोऽयं प्रजाना-मुपद्रष्टा प्रविष्टस्ताविमौ प्राणोदानौ ॥५॥ तस्मादाहुः । मनो देवा मनुष्यस्याजानन्तीति मनसा संकल्पयाति तत्प्राणमपिपद्यते प्राणो व्वातं व्वातो देवेभ्यऽआचष्टे यथा पुरुषस्य मनः ॥६॥ तस्मादेतदृ-षिणाभ्यनूक्तम् । मनसा संकल्पयाति तद्वातमपिगच्छति व्वातो देवे-भ्यऽआचष्टे यथा पुरुष ते मनऽइति ॥७॥ ते देवाः । जुह्वास्तनूः प्रियाणि धामानि सार्धꣳ समवददिरे ते होचुरेतेन नः स नानासदेतेन व्विष्वङ् यो न ऽएतदतिक्रामादिति तद्देवाऽअप्येतर्हि नातिक्रामन्ति के हि स्युर्यदतिक्रामेयुरनृतꣳ हि व्वदेयुरेकꣳ ह वै देवा व्रतं चर-न्ति सत्यमेव तस्मादेषां जितमनपजय्यं तस्माद्यशऽएवꣳ ह वाऽ-अस्य जितमनपजय्यमेवं यशो भवति यऽएवं विद्वान्त्सत्यं व्वदति तदेतत्तानूनप्त्रं निदानेन ॥८॥ ते देवाः । जुह्वास्तनूः प्रियाणि धामा-

---

१. तेऽविदुरिति. क.     २. तऽइन्द्रस्येति. ग. ङ.     ३. देवा इति. ग. ङ.

४. प्राणोदानौ इति. ग. ङ.     ५. संकल्पयतीति. ग.     ६. आचष्टे इति. घ.

७. विष्वङ्यो इति. घ.     ८. तद्देवा इति. ग.     ९. क्रामन्तीति ..

नि सार्धᳬ समवदद्रिरेऽथैतऽआजान्येव गृह्णाना जुष्टास्तनूः प्रियाणि धामानि सार्धᳬ समवद्यन्ते तस्मादु ह नः सर्वैणेव समभ्यवेयान्नेन्मे जुष्टास्तन्वः प्रियाणि धामानि सार्धᳬ समभ्यवायानिति येनो ह समभ्यवेयान्नास्मै द्रुह्येदिदᳬ ह्याहुर्न सतानूनप्त्रिणे द्रोग्धव्यमिति ॥९॥ अथातो गृह्णात्येव । "आपतये त्वा परिपतये गृह्णामी"ति यो वाऽअयं पवतऽएष आ च पतति परि च पतत्येतस्माऽउ हि गृह्णाति तस्मादाहापतये त्वा परिपतये गृह्णामीति ॥१०॥ "तनूनप्त्रे शाक्वराये"ति । यो वाऽअयं पवतऽएष तनूनप्ता शाक्वरऽएतस्माऽउ हि गृह्णाति तस्मादाह तनूनप्त्रे शाक्वरायेति ॥११॥ "शक्वनऽओजिष्ठाये"ति । एष वै शक्वौजिष्ठ ऽएतस्माऽउ हि गृह्णाति तस्मादाह शक्वनऽओजिष्ठायेति ॥१२॥ अथातः समवमृशन्त्येव । एतद्ध देवा भूयः समामिरऽइत्थं नः सोऽमुथासद्यो नऽएतदतिक्रामादिति तथोऽएवैतऽएतत्सममन्तऽइत्थं नः सोऽमुथासद्यो नऽएतदतिक्रामादिति ॥१३॥ ते समवमृशन्ति । "अनाधृष्टमस्यनाधृष्यं देवानामोजऽ"इत्यनाधृष्टा हि देवाऽआसन्ननाधृष्याः सह सन्तः समानं वदन्तः समानं दधाणा "देवानामोजऽ"इति देवानां वै जुष्टास्तन्वः प्रियाणि धामान्यनभिशस्त्य"भिशस्तिपा ऽअनभिशस्तेन्य"मिति सर्वाᳬ हि देवाऽअभिशस्तिं तीर्णा "अञ्जसा सत्यमुपगेष"मिति सत्यं वदानि मेदमतिक्रमिषमित्येवैतदाह "स्विते मा धा"ऽइति स्विते हि तद्देवाऽआत्मानमदधत यत्सत्यमवदन्यत्सत्यमकुर्वंस्तस्मादाह स्विते मा धाऽइति ॥१४॥ अथ यास्तद्देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्धᳬ समवदद्रिरे तदिन्द्रे संन्यदधतैष वाऽइन्द्रो य एष तपति न ह वाऽएषोऽग्रे तताप यथा हैवेदमन्यत्कृष्णमेवᳬ हैवास तेनैवैतद्वीर्येण तपति तस्माद्यदि बहवो दीक्षेरन् गृहपतयऽएव व्रतमभ्युत्सिच्य प्रयच्छेयुः स हि तेषामिन्द्रभाजनं भवति यद्यु दक्षिणावता दीक्षेत

१. मिति इति. ग. मिति इति. घ. २-१०. मा. सं. ५. ५. ५. ओजिष्ठायेति. ग.

यजमानायैव व्रतमभ्युत्सिच्य प्रयच्छेयुरिदॅं ह्याहुरिन्द्रो यजमान-ऽइति ॥१५॥ अथ यास्तद्देवाः । जुष्टास्तनूः प्रियाणि धामानि सार्धॅं समवदद्रिरे तत्सार्धछं संजज्ञे तत्सामाभवत्तस्मादाहुः सत्यछं साम देवजछं सामेति ॥१६॥ Cf का. श. ४. ४. २.; तै. स. ६. २. २; मै. सं. ३. ७. १०; काठ. सं. २४. ९; कपि. सं. ३८. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ४. २. )

## ३. ३. ४.

## ( अवान्तरदीक्षा )

आतिथ्येन वै देवाऽइष्ट्वा । तान्त्समदविन्दत्ते तानूनप्त्रैः सम-शाम्यंस्तऽएतस्य प्रायश्चित्तिमैच्छन्यदन्योन्यं पापमवदन्नाह पुराव-भृथात्पुनर्दीक्षामवाकल्पयंस्तऽएतामवान्तरां दीक्षामपश्यन् ॥१॥ तेऽ-ग्निनैव त्वचं व्विपल्याङ्ग्यन्त । तपो वाऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपायंस्तद्यदवान्तरां दीक्षामुपायंस्तस्मादवान्तरदीक्षा सन्तराम-ङ्गुलीराञ्चन्त सन्तरां मेखलां पर्यस्तामेवैनामेतत्सतीं पर्यास्यन्त तथो-ऽएवैष एतद्यदतः प्राचीनमव्रत्यं वा करोत्यव्रत्यं वा व्वदति तस्यैवै-तत्प्रायाश्चित्तिं कुरुते ॥२॥ सोऽग्निनैव त्वचं व्विपल्यङ्ग्यते । तपो वाऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षामुपैति संतरामङ्गुलीरचते संत-रां मेखलां पर्यस्तामेवैनामेतत्सतीं पर्यस्यते प्रजामु हैव तद्देवाऽउपा-यन् ॥३॥ तेऽग्निनैव त्वचं व्विपल्याङ्ग्यन्त । अग्निर्वै मिथुनस्य कर्ता प्रजनयिता तत्प्रजामुपायन्त्संतरामङ्गुलीराञ्चन्त संतरां मेखलां तत्प्रजामात्मन्नकुर्वत तथोऽएवैष ऽएतत्प्रजामेवोपैति ॥४॥ सोऽग्नि-नैव त्वचं व्विपल्यङ्ग्यते । अग्निर्व्वै मिथुनस्य कर्ता प्रजनयिता तत्प्र-जामुपैति संतरामङ्गुलीरचते संतरां मेखलां तत्प्रजामात्मन् कुरुते

---

१. इति ग, इति. घ. २. तत्सार्धॅं इति. घ. ३. कुरुते ग. कुरुते घ.

॥५॥ देवानामु ह स्म दीक्षितानाम् । यः समिद्धारो वा स्वाध्यायं वा व्विसृजंते तᳪं ह स्मेतरस्यैवेतरᳪं रूपेणेतरस्येतरमसुररक्षसानि जिघाᳪं सन्ति ते ह पापं व्वदन्तऽउपसमेयुरिति वै मां त्वमचिकीर्षीरिति मा जिघाᳪं सीरित्यग्निर्हैव तथा नान्यमुवादाग्निं तथा नान्यः ॥६॥ ते होचुः । अपीत्थं त्वामग्नेऽवादिषू३रिति नैवाहमन्यं न मामन्यऽइति ॥७॥ तेऽविदुः । अयं वै नो व्विरक्षस्तमोऽस्यैव रूपमसाम तेन रक्षाᳪं स्यति मोक्ष्यामहे तेन स्वर्गं लोकᳪं समश्नुविष्यामह इति तेऽग्नेरेव रूपमभवंस्तेन रक्षाᳪं स्यत्यमुच्यन्त तेन स्वर्गं लोकᳪं समाश्नुवत तथोऽएवैषऽएतदग्नेरेव रूपं भवति तेन रक्षाᳪं स्यतिमुच्यते तेन स्वर्गं लोकᳪं समश्नुते स वै सामिधमेवाभ्यादधदवान्तरदीक्षामुपैति ॥८॥ स समिधमभ्यादधाति । "अग्ने व्रतपास्त्वे व्रतपा"ऽइत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाग्ने व्रतपास्त्वे व्रतपाऽइति "या तव तनूरियᳪं सा मयि यो मम तनूरेषा सा त्वयि । सह नौ व्रतपते व्रतानी"ति तदग्निना त्वचं व्विपल्ययते-ऽ"नु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पति"रिति तदवान्तरां दीक्षामुपैति संतरामङ्गुलीरचते संतरां मेखलां पर्यस्तामेवैतत्सतीं पर्यस्यते ॥९॥ अथैनमतो मदन्तीभिरुपचरन्ति । तपो वाऽअग्निस्तपो मदन्त्यस्तस्मादेनं मदन्तीभिरुपचरन्ति ॥१०॥ अथ मदन्तीभिरुपस्पृश्य । राजानमाप्याययन्ति तद्यन्मदन्तीरुपस्पृश्य राजानमाप्याययन्ति व्वज्रो वाऽआज्यᳪं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमᳪं हिनसामेति तस्मान्मदन्तीरुपस्पृश्य राजानमाप्याययन्ति ॥११॥ तदाहुः । यस्माऽएतदाप्यायनं क्रियतऽआतिथ्यᳪं सोमाय तमेवाग्रऽआप्याययेयुरथावान्तरदीक्षामथ तानूनप्त्राणीति तदु तथा न कुर्याद्यज्ञस्य वाऽएवं कर्मात्र वाऽएनान्त्समदविन्दत्ते सᳪं शममेव पूर्वमुपायन्नथावान्तरदीक्षामथाप्यायनम् ॥१२॥ तद्यदाप्याययन्ति । देवो वै सोमो दिवि हि सोमो वृत्रो वै सोमऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्त-

१. विसृज्यते इति. घ. २—४. मा. सं. ५. ६. ५. कर्मात्र इति. घ.

द्वेषोऽशानानामौषधिर्जायतऽइति ह स्माह श्वेतकेतुरौद्दालकिस्तामेत-
दाहृत्याभिषुण्वन्ति तां दीक्षोपसद्भिस्तानूनप्त्रैराप्यायनेन सोमं कुर्व्व-
न्तीति तथोऽएवैनामेषऽएतद्दीक्षोपसद्भिस्तानूनप्त्रैराप्यायनेन सोमं
करोति ॥१३॥ मधु सारघमिति वाऽआहुः । यज्ञो ह वै मधु सार-
घमथैतऽएव सरघो मधुकृतो यदृत्विजस्तद्यथा मधु मधुकृतऽआप्या-
ययेयुरेवमेवैतद्यज्ञमाप्याययन्ति ॥१४॥ यज्ञेन वै देवाः । इमां जितिं
जिग्युर्यैषामियं जितिस्ते होचुः कथं नऽइदं मनुष्यैरनभ्यारोह्यꣳ
स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य
यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्त[1]स्माद्यूपो नाम
॥१५॥ तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथायं यज्ञस्स-
म्भृत ऽएवं वाऽएष यज्ञꣳ सम्भरति यो दीक्षते वाग्वै यज्ञस्तद्य-
देवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति ॥१६॥ ते
वै [2]षड्भूत्वाप्याययन्ति । षड्वाऽऋतवऽऋतवऽएवैतद्भूत्वाप्याययन्ति
॥१७॥ तऽआप्याययन्ति । "[3]अꣳशुरꣳशुष्टे देव सोमाप्यायता"मिति
तदस्याꣳशुमꣳशुमेवाप्याययन्ती"न्द्रायैकधनविद"ऽइतीन्द्रो वै
यज्ञस्य देवता तस्मादाहेन्द्रायेत्येकधनविदऽइति शतꣳ शतꣳ ह
स्म वाऽएष देवान् प्रत्येकैक ऽएवाꣳशुरेकधनानाप्यायते दश दश
"वा तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वे"तीन्द्रो वै यज्ञस्य
देवता सा यैव यज्ञस्य देवता तामेवैतदा प्याययत्या त्वमिन्द्राय
प्यायस्वेति तदेतस्मिन्नाप्यायनं दधात्या "प्यायꣳयास्मान्त्सखीन्त्स-
न्या मेधये"ति स यत्सनोति तत्तदाह यत्सन्येत्यथ यदनुब्रूते तदु
तदाह यन्मेधयेति "स्वस्ति ते देव सोम सुत्यामशीये" त्येका वाऽ-
एतेषामाशीर्भवत्यृत्विजां च यजमानस्य च यज्ञस्योदृचं गच्छेमेति
यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥१८॥ अथ प्रस्तरे निह्नवते । उत्त-
रतऽउपचारो वै यज्ञोऽथैत[8]द्दक्षिणेनान्वित्याप्याययन्त्यग्निर्वै यज्ञस्त-

१. तस्माद्यूप इति. ग. २. षड्भूत्वेति. घ.

३–७. मा. सं. ५. ७. ८. दक्षिणेवेति. क

यज्ञं पृष्ठतः कुर्व्वन्ति तन्मिथ्याकुर्वन्ति देवेभ्यऽआवृश्च्यन्ते यज्ञो वै प्रस्तरस्तद्यज्ञं पुनरारभन्ते तस्यो हैषा प्रायश्चित्तिस्तथो हैषामेतन्न मिथ्या कृतं भवति न देवेभ्य ऽआवृश्च्यन्ते तस्मात्प्रस्तरे निह्नवते ॥१९॥ तदाहुः । अक्ते निन्ह्नुवीरा३ नुनक्ता३ऽइत्यनक्ते हैव निन्ह्नुवीरन्ननुप्रहरणᳪ ह्येवाक्तस्य ॥२०॥ ते निह्नवते । "एष्टा रायः प्रेषे भगायऽऋतमृतवादिभ्य"ऽइति सत्यᳪ सत्यवादिभ्य ऽइत्येवैतदाह "नमो द्यावापृथिवीभ्या"मिति तदाभ्यां द्यावापृथिवीभ्यां निह्नवते ययोरिदᳪ सर्वमधि ॥२१॥ अथा ह समुल्लुप्य प्रस्तरम् । 'अग्नीन्मदन्त्यापा'३ऽइति मदन्तीत्यग्नीदाह ताभिरेहीत्युपर्यग्निमतिहरति स यन्नानुप्रहरत्येतेन ह्यतऽऊर्ध्वान्यहानि प्रचरिष्यन् भवत्यथ यदुपर्युपर्यग्निमतिहरति तदेवास्यानुप्रहृतभाजनं भवति तमग्नीधे प्रयच्छति तमग्नीन्निदधाति ॥२२॥ Cf. का. श. ४. ४. ३; मै. सं. ३. ७. १०; तै. सं. ६. २. २; काठ. सं. २४. ९; कपि. सं. ३८. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. ४. ३. )

## ३. ३. ५.

## ( उपसदः )

ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्यः । तस्माद्यदि प्रवर्ग्यवान् भवति प्रवर्ग्येण प्रचर्याथोपसद्भिः प्रचरन्ति तद्ग्रीवाः प्रतिदधाति ॥१॥ तद्याः पूर्वाह्णेऽनुवाक्या भवन्ति । ता अपराह्णे याज्या या याज्यास्ता ऽअनुवाक्यास्तद्व्यतिषजति तस्मादिमानि ग्रीवाणां पर्वाणि व्यतिषक्तानीमान्यस्थीनि ॥२॥ देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा ऽएषु लोकेषु पुरश्चक्रिरेऽयस्मयीमेवास्मिंल्लोके रजतामन्तरिक्षे हरिणीं दिवि ॥३॥ तद्वै देवाऽअस्पृण्वत । तऽ

---

१. कुर्वत इति. क. घ. २. तथो इति. घ. ३, ४. मा. सं. ५. ७
५. सर्वमधि इति. ग. ङ. ६. अग्निमतिहरतीति ग. घ. ७. अपराह्णे इति. घ.

एताभिरुपसद्भिरुपासीदंस्तद्यदुपासीदंस्तस्मादुपसदो नाम ते पुरः प्राभिन्दन्निमांल्लोकान् प्राजयंस्तस्मादाहुरुपसदा पुरं जयन्तीति यदुहो-पासते तेनेमां मानुषीं पुरं जयन्ति ॥४॥ एताभिर्वै देवा उपसद्भिः। पुरः प्राभिन्दन्निमांल्लोकान् प्राजयंस्तथो ऽएवैष ऽएतन्नाहैवास्मा ऽअ-स्मिंल्लोके कश्चन पुरः कुरुत ऽइमानेवैतल्लोकान् प्रभिनत्तीमांल्लोकान् प्रजयति तस्मादुपसद्भिर्यजते ॥५॥ ता वा ऽआज्यहविषो भवन्ति । वज्रो वा ऽआज्यमेतेन वै देवा वज्रेणाज्येन पुनः प्राभिन्दन्निमांल्लो-कान् प्राजयंस्तथो ऽएवैष ऽएतेन वज्रेणाज्येनेमांल्लोकान् प्रभिनत्तीमां-ल्लोकान् प्रजयति तस्मादाज्यहविषो भवन्ति ॥६॥ स वा ऽअष्टौ कृत्वो जुह्वां गृह्णाति । चतुरुपभृत्यथो ऽइतरथाहुश्चतुरेव कृत्वो जुह्वां गृह्णी-यादष्टौ कृत्व उपभृतीति ॥७॥ स वा ऽअष्टावेव कृत्वो जुह्वां गृह्णाति । चतुरुपभृति तद्वज्रमभिभारं करोति तेन वज्रेणाभिभारेणेमांल्लोकान् प्रभिनत्तीमांल्लोकान् प्रजयति ॥८॥ अग्नीषोमौ वै देवानाᳪं सयुजौ[1] । ताभ्याᳪं सार्धं गृह्णाति विष्णवं ऽएकाकिनेऽन्यतरमेवाघारमाघार-यति यᳪं स्रुवेण प्रतिक्रामति वा ऽउत्तरमाघारमाघार्याभिजित्या ऽअ-भिजयानीति तस्मादन्यतरमेवाघारमाघारयति यᳪं स्रुवेण ॥९॥ अ-थाश्राव्य न होतारं प्रवृणीते । 'सीद होत'रित्येवाहोपाविशति होता होतृषदन ऽउपाविश्य प्रसौति प्रसूतो ऽध्वर्युः स्रुचावादत्ते ॥१०॥ स ऽ-आहातिक्रामन्न'ग्नये ऽनुब्रूही'ति । आश्राव्याहा'ग्निं यजे'ति वषट्कृते जुहोति॥११॥ अथाह 'सोमायानुब्रूही'ति । आश्राव्याह 'सोमं यजे'ति वषट्कृते जुहोति ॥१२॥ अथ यदुपभृत्याज्यं भवति । तत्समानय-मान ऽआह 'विष्णवे ऽनुब्रूही'त्याश्राव्याह विष्णुं यजे'ति वषट्कृते जुहोति ॥१३॥ स यत्समानत्र तिष्ठन् जुहोति । न यथेदं प्रचरन्त्संच-रत्यभिजित्या अभिजयानीत्यथ यदेता देवता यजति वज्रमेवैतत्सᳪं-स्करोत्य[2]ग्निमनीकᳪं सोमᳪं शल्पं विष्णुं कुल्मलᳪं ॥१४॥ संव-

---

१. सयुजौ इति घ. २. संस्करोतीति. क.

त्सरो हि व्वज्रः। अग्निर्व्वाऽअहः सोमो रात्रिरथ यदन्तरेण तद्वि-ष्णुरेतद्वै परिप्लवमानꣳ संवत्सरं करोति ॥१५॥ संवत्सरो व्वज्रः। एतेन वै देवाः संवत्सरेण व्वज्रेण पुरः प्राभिन्दन्निमाँल्लोकान् प्राज-यंस्तथोऽएवैषऽएतेन संवत्सरेण व्वज्रेणेमाँल्लोकान् प्रभिनत्तीमाँल्लो-कान् प्रजयति तस्मादेता देवता यजति ॥१६॥ स वै तिस्रऽउपस-दऽउपेयात्। त्रयो वाऽऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रि-यते संवत्सरमेवैतत्सꣳस्करोति द्विरेकया प्रचरति द्विरेकया ॥१७॥ ताः षट् सम्पद्यन्ते। षड्वाऽऋतवः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रि-यते संवत्सरमेवैतत्स स्करोति ॥१८॥ यद्यु द्वादशोपसदऽउपेयात्। द्वादश वै मासाः संवत्सरस्य संवत्सरस्यैवैतद्रूपं क्रियते संवत्सरमे-वैतत्सꣳस्करोति द्विरेकया प्रचरति द्विरेकया ॥१९॥ ताश्चतुर्व्विꣳ-शतिः सम्पद्यन्ते। चतुर्व्विꣳशतिर्व्वै संवत्सरस्यार्धमासाः संवत्सर-स्यैवैतद्रूपं क्रियते संवत्सरमेवैतत्सꣳस्करोति ॥२०॥ स यत्साय-म्प्रातः प्रचरति। तथा ह्येव सम्पत्सम्पद्यते स यत्पूर्व्वाह्णे प्रचरति तज्जयत्यथ यदपराह्णे प्रचरति सुजितमसदित्यथ यज्जुहोतीदं वै पुरं युध्यन्ति तां जित्वा स्वाꣳ सतीं प्रपद्यन्ते ॥२१॥ स यत्प्रचरति। तद्युध्यत्यथ यत्संतिष्ठते तज्जयत्यथ यज्जुहोति स्वामेवैतत्सतीं प्रप-द्यते ॥२२॥ स जुहोति। यया द्विरेकस्याह्नः प्रचरिष्यन् भवति "याँ तेऽअग्नेऽयःशया तनूर्व्वर्षिष्ठा गह्वरेष्ठा। उग्रं व्वचोऽअपावधीत्त्वेषं व्वचोऽअपावधीत्स्वाहे"त्येवꣳरूपा हि सासीदयस्मयी हि सासीत् ॥२३॥ अथ जुहोति यया द्विरेकस्याह्नः प्रचरिष्यन् भवति "याँ तेऽग्ने रजःशया तनूर्व्वर्षिष्ठा गह्वरेष्ठा। उग्रं वचोऽअपावधीत्वेषं व्वचोऽअपा-वधीत्स्वाहे"त्येवꣳरूपा हि सासीद्रजता हि सासीत् ॥२४॥ अथ जुहोति यया द्विरेकस्याह्नः प्रचरिष्यन् भवति "याँ तेऽअग्ने हरिशया तनूर्व्व-

१. परिप्लवमानमिति. घ.
२. संवत्सरस्यैतद्रूपं इति. घ.
३-३. संस्करोतीति. क.
७.-९. मा. सं. ५. ८.

र्षिष्ठा गह्वरेष्ठा । उग्रं व्वचो अपावधीत्वेषं व्वचोऽअपावधीत्स्वाहे''-त्येवᳬरूपा हि सासीद्धारिणी हि सासीद्यद्यु द्वादशोपसद ऽउपेयाच्चतुरहमेकया प्रचरेच्चतुरहमेकया ॥२५॥ अथातो व्व्रतोपसदामेव । परऽउर्वीर्व्वाऽअन्याऽउपसदः परोऽह्वीरन्याः स यासामेकं प्रथमाहं दोग्ध्यथ द्वावथ त्रींस्ताः परऽउर्वीरथ यासां त्रीन् प्रथमाहं दोग्ध्यथ द्वावथैकं ता परोह्वीर्या वै परोह्वीस्ताः परऽउर्व्वीर्याः परऽउर्व्वीस्ताः परोऽह्वीः ॥२६॥ तपसा वै लोकं जयन्ति । तदस्यैतत्परः परऽएव व्वरीयस्तपो भवति परः परः श्रेयाᳬसं लोकं जयति व्वसीयानु हैवास्मिंल्लोके भवति यऽएवं व्विद्वान् परोह्वीरुपसदऽउपैति तस्मादु परोह्वीरेवोपसद ऽउपेयाद्यद्यु द्वादशोपसदऽउपेयात्त्रींश्चतुरहं दोहयेद्द्वौ चतुरहमेकं चतुरहम्[1] ॥२७॥ Cf. का. श. ४. ४. ४; तै. सं. ६. २. ३–५; मै. सं. ३. ८. १, २; काठ. सं. २४. १० and २५. १; कपि. सं. ३८. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥

तृतीयः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या १२१ )

( इति चतुर्थोऽध्यायः )

## ३. ४. १.

## ( महावेदिनिर्माणम् )

तद्यऽएष पूर्वार्ध्यो व्वर्षिष्ठः स्थूणाराजो भवति । तस्मात्प्राङ् प्रक्रामति त्रीन्विक्रमांस्तच्छङ्कुं निहन्ति सोऽन्तःपातः ॥१॥ तस्मान्मध्यमाच्छङ्कोः । दक्षिणा पञ्चदश व्विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः ॥२॥ तस्मान्मध्यमाच्छङ्कोः । उदङ् पञ्चदश व्विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः ॥३॥

१. चतुरहमिति. क.

तस्मान्मध्यमाच्छङ्कोः । प्राङ् षट्त्रिꣳशतं व्विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स पूर्वार्धः ॥४॥ तस्मान्मध्यमाच्छङ्कोः। दक्षिणा द्वादश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स दक्षिणोऽꣳसः ॥५॥ तस्मान्मध्यमाच्छङ्कोः । उदङ् द्वादश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति सऽउत्तरोऽꣳस एषा मात्रा व्वेदेः ॥६॥ अथ यत्त्रिꣳशद्विक्रमा पश्चाद्भवति । त्रिꣳशदक्षरा वै व्विराड्विराजा वै देवाऽअस्मिंल्लोके प्रत्यतिष्ठंस्तथोऽएवैष एतद्विराजैवास्मिंल्लोके प्रतितिष्ठति ॥७॥ अथोऽअपि त्रयस्त्रिꣳशत्स्युः । त्रयस्त्रिꣳशदक्षरा वै व्विराड्विराजैवास्मिंल्लोके प्रतितिष्ठति ॥८॥ अथ यत्षट्त्रिꣳशद्विक्रमा प्राची भवति । षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकꣳ समाश्नुवत तथोऽएवैष एतद्बृहत्यैव स्वर्गं लोकꣳ समश्नुते सोऽस्य दिव्याहवनीयो भवति ॥९॥ अथ यच्चतुर्व्विꣳशतिविक्रमा पुरस्ताद्भवति । चतुर्व्विꣳशत्यक्षरा वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्व्वार्धऽएष यज्ञस्य तस्माच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवत्येषा मात्रा व्वेदेः ॥१०॥ अथ यत्पश्चाद्वरीयसी भवति । पश्चाद्वरीयसी[1] पृथुश्रोणिरिति वै योषां प्रशꣳसन्ति[2] यद्वेव पश्चाद्वरीयसी भवति पश्चादेवैतद्वरीयः प्रजननं करोति तस्मात्पश्चाद्वरीयसः प्रजाननादिमाः प्रजाः प्रजायन्ते ॥११॥ नासिका ह वाऽएषा यज्ञस्य यदुत्तरवेदिः । अथ यदेनामुत्तरां व्वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम ॥१२॥ द्वय्यो ह वाऽइदमग्रे प्रजाऽआसुः । आदित्याश्चैवाङ्गिरसश्च ततोऽङ्गिरसः पूर्व्वे यज्ञꣳसमभरंस्ते यज्ञꣳ सम्भृत्योचुरग्निमिमां नः श्वः सुत्यामादित्येभ्यः प्रब्रूह्यनेन नो यज्ञेन याजयतेति ॥१३॥ ते हादित्याऽऊचुः । उपजानीत यथास्मानेवाङ्गिरसो याजयान्न[3] वयमङ्गिरसऽइति ॥१४॥ ते होचुः । न वाऽअन्येन यज्ञादपक्रमणमस्त्यन्तरामेव सुत्यां ध्रियामहाऽइति ते यज्ञꣳ संजहुस्ते यज्ञꣳ सम्भृत्योचुः श्वः सुत्यां वै त्व-

१. पश्चादिति. क. २. प्रशसन्ति. इति क. ग. ३. जयान्न इति ग.

मस्मभ्यमग्ने प्रावोचोऽथ व्वयमद्य सुत्यामेव तुभ्यं प्रब्रूमोऽङ्गिरोभ्यश्च तेषां नस्त्वथ्ठं होतासीति ॥१५॥ तेऽन्यमेव प्रतिप्राजिघ्युः । अङ्गिरसोऽच्छ ते हाप्यङ्गिरसोऽग्नयेऽन्वागत्य चुक्रुधुरिव कथं नु नो दूतश्चरन्न प्रत्याद्वथाऽइति ॥१६॥ स होवाच । अनिन्द्या वै मावृषत सोऽनिन्द्यैर्वृतो नाशकमुपक्रमितुमिति तस्मादु हानिन्द्यस्य व्वृतो नापक्रामेत्तऽएतेन सद्यःक्रियाङ्गिरस ऽआदित्यानयाजयन्त्स सद्यःक्रीः ॥१७॥ तेभ्यो व्वाचं दक्षिणामानयन् । तां न प्रत्यगृह्णन्हास्यामहे यदि प्रतिग्रहीष्याम ऽइति तदु तद्यज्ञस्य कर्म न व्यमुच्यत यद्दाक्षिणमासीत् ॥१८॥ अथैभ्यः सूर्यं दक्षिणामानयन् । तं प्रत्यगृह्णंस्तस्मादु ह स्माहुरङ्गिरसो व्वयं वाऽआर्त्विजीनाः स्मो व्वयं दक्षिणीयाऽअपि वाऽस्माभिरेष प्रतिगृहीतो यऽएष तपतीति तस्मात्सद्यःक्रियोऽश्वः श्वेतो दक्षिणा ॥१९॥ तस्य रुक्मः पुरस्ताद्भवति । तदेतस्य रूपं क्रियते यऽएष तपति यद्यश्वᳬ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तस्य रुक्मः पुरस्ताद्भवति तदेतस्य रूपं क्रियते यऽएष तपति ॥२०॥ तेभ्यो ह व्वाक्चुक्रोध। केन मदेष श्रेयान् बन्धुना३केना३ यदेतं प्रत्यग्रहीष्ट न मामिति सा हैभ्योऽपचक्राम सोभयानन्तरेण देवासुरान्त्संयत्तान्त्सिथ्ठं ही भूत्वाददाना चचार तामुपैव देवाऽअमन्त्रयन्तोपासुराऽअग्निरेव देवानां दूत ऽआस सहरक्षाऽइत्यसुररक्षसमसुराणाᳬ ॥२१॥ सा देवानुपावर्त्स्यन्त्युवाच । यद्वऽउपावर्तेय किं मे ततः स्यादिति पूर्वामेव त्वाग्नेराहुतिः प्राप्स्यसीत्यथ हैषा देवानुवाच यां मया कां चाशिषमाशासिष्यध्वे सा वः सर्व्वा समर्धिष्यतऽइति सैवं देवानुपावव‍र्त ॥२२॥ स यद्धार्यमाणे ऽग्नौ । उत्तरवेदिं व्याघारयति यद्देवैनामदो देवा ऽअब्रुवन् पूर्व्वां त्वाग्नेराहुतिः प्राप्स्यतीति तद्देवैनामेतत्पूर्वामग्नेराहुतिः प्राप्नोति व्वाग्घ्येषा निदानेनाथ यदुत्तरवेदिमुपकिरति यज्ञस्यैव सर्व्वत्वाय व्वाग्घि

---

१. तुभ्यमिति. ग.
२. दक्षिणीया इति ग. घ.
३. यद्यश्वमिति ग.
४. श्वेतः इति. ग. घ.

यज्ञो व्वागु ह्येषा ॥२३॥ तां वै युगशम्येन व्विमिमीते । युगेन यत्र हरन्ति शम्यया यतो हरन्ति युगशम्येन वै योग्यं युञ्जन्ति सा यदेवादः सिᳫंही भूत्वा शान्तेवाचरत्तदेवैनामेतद्यज्ञे युनक्ति ॥२४॥ तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयात् । सिᳫंही हैनं भूत्वा क्षिणोति नो हा मा कुर्व्वीत सिᳫंही हैवैनं भूत्वा क्षिणोति नो हान्यस्मै दद्याद्यज्ञं तदन्यत्रात्मनः कुर्व्वीत तस्माद्यो ऽस्यापि पापऽइव समानबन्धुः स्यात्तस्माऽएनां दद्यात्स यद्ददाति तदेनᳫं सिᳫंही भूत्वा न क्षिणोति यदु समानबन्धवे ददाति तदु नान्यत्रात्मनः[1] कुरुतऽ एषो निवृत्तदक्षिणायै प्रतिष्ठा[2] ॥२५॥ अथ शम्यां च स्फ्यं चादत्ते । तद्यऽएष पूर्वार्ध्यऽउत्तरार्ध्यः शङ्कुर्भवति तस्मात्प्रत्यङ् प्रक्रामति त्रींन्विक्रमांस्तच्चात्वालं[3] परिलिखति सा चात्वालस्य मात्रा नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येताग्रेणोत्करं तच्चात्वालं परिलिखेत् ॥२६॥ स व्वेद्यन्तात् । उदीचीᳫं शम्यां निदधाति स परिलिखति "तप्तायनी मे ऽसी"[4]तीमामेवैतदाहास्याᳫं हि तप्त एति[5] ॥२७॥ अथ पुरस्तात् । उदीचीᳫं शम्यां निदधाति स परिलिखति "व्वित्तायनी मे ऽसी"[6]तीमामेवैतदाहास्याᳫं हि व्विविदान एति[7] ॥२८॥ अथानुवेद्यन्तम् । प्राचीᳫं शम्यां निदधाति स परिलिखत्य"वतान्मा नाथिता"[8]दितीमामेवैतदाह यत्र नाथैतन्मावतादिति ॥२९॥ अथोत्तरतः । प्राचीᳫं शम्यां निदधाति स परिलिखत्य"वतान्मा व्यथिता"[9]दितीमामेवैतदाह यत्र व्यथैतन्मावतादिति ॥३०॥ अथ हरति । यत्र हरति तदग्नीदुपसीदति स वाऽअग्नीनामेव नामानि गृह्णन्हरति यान्वाऽअमून्देवा अग्नेऽग्नीन् होत्राय प्रावृणत ते प्राधन्वंस्तऽइमा एव पृथिवीरुपासर्पन्निमामहैव द्वेऽअस्याः परे तेनैवैतन्निदानेन हरति ॥३१॥ स प्रहरति । "व्विदेदग्निर्नभो[10] नामाग्नेऽअङ्गिर ऽआयुना नाम्नेहीति"[11] स यत्प्राधन्वंस्तदायुर्दधाति तत्समीरयति "योऽस्यां पृथिव्यामसी"ति

१. नान्यत्रेति. ग. २. प्रतिष्ठा इति. घ. ३. चात्वालमिति ग.
४, ६. मा. सं. ५. ९. ५, ७. एति. इति. घ, एति. ग. ८-११. मा. सं. ५. ९.

योऽस्यां पृथिव्यामसीति हृत्वा निदधाति "यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधऽ"इति यत्तेऽनाधृष्टꣳरक्षोभिर्नाम यज्ञियं तेन त्वादधऽइत्येवैतदाह "नु त्वा देववीतय"ऽइति चतुर्थꣳ हरति देवेभ्यस्त्वा जुष्टाꣳहरामीत्येवैतदाह तां वै चतुःस्रक्केश्चात्वालाद्धरति चतस्रो वै दिशः सर्वाभ्य ऽएवैनामेतद्दिग्भ्यो हरति ॥३२॥ अथानुव्यूहति । "सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्वे"ति सा यद्देवादः सिꣳही भूत्वा शान्तेवाचरत्तद्देवैनामेतदाह सिꣳह्यसीति सपत्नसाहीति त्वया व्वयꣳ सपत्नान् पापीयसः क्रियास्मेत्येवैतदाह देवेभ्यः कल्पस्वेति योषा वाऽउत्तरवेदिस्तामेवैतद्देवेभ्यः कल्पयति ॥३३॥ तां वै युगमात्रीं वा सर्वतः करोति । यजमानस्य वा दश दश पदानि दशाक्षरा वै व्विराड्वाग्वै व्विराड्वाग्यज्ञो मध्ये नाभिकामिव करोति समानत्रासीनो व्याघारयाणीति ॥३४॥ तामद्भिरभ्युक्षति । सा यद्देवादः सिꣳही भूत्वा शान्तेवाचरच्छान्तिरापस्तामद्भिः शमयति योषा वाऽउत्तरवेदिस्तामेवैतद्देवेभ्यो ह्निवति तस्मादद्भिरभ्युक्षति ॥३५॥ सोऽभ्युक्षति । "सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्वे"त्यथ सिकताभिरनुविकरत्यलङ्कारो न्वेव सिकता भ्राजन्तऽइव हि सिकता अग्नेर्वाऽएतद्वैश्वानरस्य भस्म यत्सिकताऽअग्निं वाऽअस्यामाधास्यन् भवति तथो हैनामग्निर्न हिनस्ति तस्मात्सिकताभिरनु विकिरति सोऽनुऽविकिरति "सिꣳह्यसि सपत्नसाही देवेभ्य शुम्भस्वे"त्यथैनां छादयति सा छन्नैताꣳरात्रिं व्वसति ॥३६॥ Cf. का. श. ४. ५. १; तै. सं. ६. २. ४-७; मै. सं. ३. ८. ३, ४; कपिष्ठ. सं. ३९. १-५; काठ. सं. २५. ४-६

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ५. १. )

---

१, २. मा. सं. ५. ९.    ३-५. मा. सं. ५. १०.

३. ४. २.

( अग्निप्रणयनादि )

इध्ममभ्यादधाति । उपयमनीरुपकल्पयन्त्याज्यमधिश्रयति स्रुवं च 'स्रुचं च संमाष्टर्यथोत्पूयाज्यं पञ्चगृहीतं गृह्णीते यदा प्रदीप्त इध्मो भवति ॥१॥ अथोद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीरथाहा'ग्नये प्रह्रियमाणायानुब्रूह्येकस्फ्ययानूदेही'त्यनूदैति प्रतिप्रस्थातैकस्फ्ययैतस्मान्मध्यमाच्छङ्कोर्य एष व्वेदेर्जघनार्धे भवति तद्यदेवात्रान्तःपातेन गार्हपत्यस्य व्वेदेर्व्यवच्छिन्नं भवति तदेवैतदनुसन्तनोति ॥२॥ तद्धैके । ओत्तरवेदेरनूदायन्ति तदु तथा न कुर्यादेवैतस्मान्मध्यमाच्छङ्कोरनूदेयात्तऽआयन्त्यागच्छन्त्युत्तरवेदिम् ॥३॥ ( शतम् १८०० ) प्रोक्षणीरध्वर्युरादत्ते । सपुरस्तादेवाग्रे प्रोक्षत्युदङ् तिष्ठन्नि''न्द्रघोषस्त्वा व्वसुभिः पुरस्तात्पात्वि''तीन्द्रघोषस्त्वा व्वसुभिः पुरस्ताद्गोपायत्वित्येवैतदाह ॥४॥ अथ पश्चात्प्रोक्षति । ''प्रचेतास्त्वा रुद्रैः पश्चात्पात्वि''ति प्रचेतास्त्वा रुद्रैः पश्चाद्गोपायत्वित्येवैतदाह ॥५॥ अथ दक्षिणतः प्रोक्षति । ''मनोजवास्त्वा पितृभिर्दक्षिणतः पात्वि''ति मनोजवास्त्वा पितृभिर्दक्षिणतो गोपायत्वित्येवैतदाह ॥६॥ अथोत्तरतः प्रोक्षति । ''व्विश्वकर्मा त्वादित्यैरुत्तरतः पात्वि''ति व्विश्वकर्मा त्वादित्यैरुत्तरतो गोपायत्वित्येवैतदाह ॥७॥ अथ याः प्रोक्षण्यः परिशिष्यन्ते । तद्येऽएते पूर्वे स्रक्ती तयोर्या दक्षिणा तान्यन्तेन वहिर्व्वेदि निनयती''दमहं तप्तं व्वार्बहिर्धा यज्ञान्निःसृजामी''ति सा यदेवादः सिꣳही भूत्वाशान्तेवाचरत्तामेवास्याऽएतच्छुचं बहिर्धा यज्ञान्निःसृजति यदि नाभिचरेद्यद्युऽअभिचरेद्वादिशेदि'दमहं तप्तं व्वारमुमभिनिःसृजामी'ति तमेतया शुचा व्विध्यति स शोचन्नेवामुं लोकमेति ॥८॥ स

१ स्रुचं च संमाष्टर्यथ इति ग. घ.
२. इध्ममति ग. ङ.
३ ब्रूह्येकस्फयया इति. ग.
४. तद्धैके इति. ग.
५. वेदिम् इति ग.
७. आह इति. ग. घ.
८. प्रोक्षति. ग.
६, ९-१२ मा. सं. ५. ११.
१३. यज्ञान्निस्सृजतीति. ग. घ.

यद्धार्यमाणेऽग्नौ । उत्तरवेदिं व्याघारयति यद्वेवैनामदो देवाऽअब्रुवन्
पूर्वा त्वाग्नेराहुतिः प्राप्स्यतीति[1] तद्वेवैनामेतत्पूर्वामग्नेराहुतिः प्रा-
प्नोति यद्वेषा देवानब्रवीद्यां मया कां चाशिषमाशासिष्यध्वे सा वः
सर्वा समर्धिष्यतऽइति तामेनयात्रर्त्विजो यजमानायाशिषमाशासते
सास्मै सर्व्वा समृध्यते ॥९॥ तद्वा ऽएतदेकं कुर्व्वन्द्वयं करोति ।
यदुत्तरवेदिं व्याघारयत्यथ यैषां मध्ये नाभिकेव भवति तस्यै ये पूर्वे
स्रक्ती तयोर्या दक्षिणा ॥१०॥ तस्यामाघारयति । "सिꣳह्यसि[2] स्वाहे"-
त्यथापरयोरुत्तरस्याꣳ "सिꣳह्यस्यादित्यवनिः[3] स्वाहे"त्यथापरयोर्द-
क्षिणस्याꣳ "सिꣳह्यसि ब्रह्मवनिः[4] क्षत्रवनिः स्वाहे[5]"ति वह्वी वै यजुःष्वा
शास्तिद्ब्रह्म च क्षत्रं चाशास्तऽउभे व्वीर्ये ॥११॥ अथ पूर्व्वयोरुत्तर-
स्याꣳ । "सिꣳह्यसि[6] सुप्रजावनी रायस्पोषवनिः स्वाहे"ति तत्प्रजा-
माशास्ते यदाह सुप्रजावनिरिति रायस्पोषवनिरिति भूमा वै राय-
स्पोषस्तद्भूमानमाशास्ते ॥१२॥ अथ मध्यऽआघारयति । "सिꣳ[7]
ह्यस्यावह देवान् यजमानाय स्वाहे"ति तद्देवान्यजमानायावाहयत्यथ
स्रुचमुद्यच्छति[8] "भूतेभ्यस्त्वे[9]"ति प्रजा वै भूतानि प्रजाभ्यस्त्वेत्ये
वैतदाह ॥१३॥ अथ परिधीन् परिदधाति । "ध्रुवोऽसि[10] पृथिवीं दृꣳह
हे"ति मध्यमं "ध्रुवक्षिदस्यन्तरिक्षं[11] दृꣳहे"ति दक्षिणम"च्युतक्षिदसि[12]
दिवं दृꣳहे"त्युत्तर"मग्नेः पुरीषमसी[13]"ति सम्भारानुपनिवपति तद्यत्सं-
भारा भवन्त्यग्नेरेव सर्व्वत्वाय ॥१४॥ शरीरꣳ हैवास्य पीतुदारु
तद्यत्पैतुदारवाः परिधयो भवन्ति शरीरेणैवैनमेतत्समर्धयति कृत्स्नं
करोति ॥१५॥ माꣳ सꣳ हैवास्य गुल्गुलु । तद्यद्गुल्गुलु भवति
माꣳसेनैवैनमेतत्समर्धयति कृत्स्नं करोति ॥१६॥ गन्धो हैवास्य
सुगन्धितेजनम् । तद्यत्सुगन्धितेजनं भवति गन्धेनैवैनमेतत्समर्धयति
कृत्स्नं करोति ॥१७॥ अथ यद्वृष्णेस्तुका भवति । व्वृष्णेर्ह वै[14] व्वि-

---

१. प्राप्स्त्यतीति. ग २-४. मा. स. ५. १२. ५. स्वाहेति ग.
६, ७, ९. मा. सं. ५. १२. ८. स्रुचमिति. ग. ध.
१०-१३. मा. सं. ५. १३. १४. वै. इति. घ.

षाणेऽअन्तरेणाग्निरेकाᳬं रात्रिमुवास तद्यदेवात्राग्नेर्न्यक्तं तदिहाप्यसदिति तस्माद्धृष्णे स्तुका भवति तस्माद्या शीर्ष्णे नेदिष्ठᳬंस्यात्तामाच्छिद्याहरेद्यद्यु तां न विन्देदपि यामेव कां चाहरेत्तद्यत्परिश्रयो भवन्ति गुप्त्या ऽ एवादूरऽइव ह्येनमुत्तरे परिश्रयऽआगच्छन्ति ॥१८॥

Cf. का. श. ४. ५. २; तै. सं. ६. २. ८; मै. सं. ३. ८. ५; काठ. सं. २५. ६; कपि. सं. ३९. ३, ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. ५. २. )

३. ४. ३.

( सदोहविर्धाननिर्माणादि )

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुतऽएष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः ॥१॥ शिरऽएवास्य हविर्धानम् । वैष्णवं देवतयाथ यदस्मिन्त्सोमो भवति हविर्वै देवानाᳬं सोमस्तस्माद्धविर्धानं नाम ॥२॥

( *अर्द्धकाण्डम् ॥४३०॥ )

मुखमेवास्याहवनीयः । स यदाहवनीये जुहोति यथा मुखऽआसिञ्चेदेवं तत् ॥३॥ स्तुप एवास्य यूपः । बाहूऽएवास्याग्नीध्रीयश्च मार्जालीयश्च ॥४॥ उदरमेवास्य सदः । तस्मात्सदासि भक्षयन्ति यद्धीदं किंचाश्नन्त्युदरऽएवेदᳬं सर्व्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवाऽअसीदंस्तस्मात्सदो नाम तऽउऽएवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति ॥५॥ अथ यावेतौ जघनेनाग्नी । पादावेवास्यैतावेष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः ॥६॥ उभयतो द्वारᳬं हविर्धानं भवति । उभयतो द्वारᳬं सदस्तस्मादयं

१. भवति. इति. घ. २. यज्ञ इति. ग. ३. विधीयत इति. घ.

* इयमर्धकाण्डसंख्याऽत्र काण्डे लिखिता । साऽपि क पुस्तक एव ।

४. असीदन इति. ग. ५. यावेतौ इति. ग.

पुरुष आन्तथ्ठं संतृण्णः प्रणिक्ते हविर्धानेऽउपतिष्ठते ॥७॥ ते समवव-र्तयन्ति। दक्षिणेनैव दक्षिणमुत्तरेणोत्तरं यद्वर्षीयस्तद्दक्षिणᳬं स्यात् ॥८॥ तयोः समववृत्तयोः। छदिरधि निदधति यदि छदिर्न विन्देयु-श्छदिःसम्मितां वा भित्तिं प्रत्यानह्यन्ति रराट्यां परिश्रयन्त्युच्छ्रायी-भ्यां छदिः पश्चादधि निदधाति छदिःसम्मितां वा भित्तिम् ॥९॥ अथ पुनः प्रपद्य चतुर्गृहीतमाज्यं गृहीत्वा सावित्रं प्रसवाय जुहोति सविता वै देवानां प्रसविता सवितृप्रसूताय यज्ञं तनवामहाऽइति तस्मात्सावित्रं जुहोति ॥१०॥ स जुहोति। "युञ्जते मनऽउत युञ्जते धिय"ऽइति मनसा च वै व्वाचा च यज्ञं तन्वते स यदाह युञ्जते मनऽइति तन्मनो युनक्त्युत युञ्जते धियऽइति तद्वाचं युनक्ति धियाधिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्रकामोद्येनेव गाथा-भिरिव ताभ्यां युक्ताभ्यां यज्ञं तन्वते ॥११॥ "व्विप्रा व्विप्रस्य बृ-हतो व्विपश्चित"ऽइति। ये वै ब्राह्मणाः शुश्रुवाᳬंसोऽनूचानास्ते व्विप्रास्तानेवैतदभ्याह बृहतो व्विपश्चितऽइति यज्ञो वै बृहन्विपश्चि-द्यज्ञमेवैतदभ्याह "व्वि होत्रा दधे व्वयुनाविदेकऽइदि"ति व्वि हि होत्रा दधते यज्ञं तन्वाना "मही देवस्य सवितुः परिष्टुतिः स्वाहे"ति तत्सावित्रं प्रसवाय जुहोति ॥१२॥

( अर्द्धप्रपाठकः ॥६६॥ )

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा। उपनिष्क्रामति दक्षिण-या द्वारा पत्नीं निष्क्रामयन्ति स दक्षिणस्य हविर्धानस्य दक्षिणायां व्वर्तन्याथ्ठं हिरण्यं निधाय जुहाती"दं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाᳬं सुरे स्वाहे"ति सᳬंस्रवं पत्न्यै पाणावान-यति साक्षस्य सन्तापमुपानक्ति "देवश्रुतौ देवेष्वाघोषत"मिति प्रय-

---

१. उपतिष्ठत इति. ग.  २. वामिति इति. ग, वा इति नाऽस्ति. क.
३, ४, ६. मा. सं. ५. १४.  ५. तदभ्याह इति ग. घ.  ७. इदिति. घ.
८. यज्ञमिति. क.  ९. मा. सं. ५. १४.  १०. निष्क्रमयन्तीति. क.
११. मा. सं. ५. १५.  १२. पदम् इति. ग.  १३. मा. सं. ५. १७.

च्छति प्रतिप्रस्थात्रे स्रुचं चाज्यविलापनीं च पर्य्यणयन्ति पत्नीमुभौ जघनेनाग्नी ॥१३॥ चतुर्गृहीतमाज्यं गृहीत्वा । प्रतिप्रस्थातोत्तरस्य हविर्धानस्य दक्षिणायां वर्तन्याᳪ हिरण्यं निधाय जुहोति "इरावती धेनुमती हि भूतᳬ सूयवसिनी मनवे दशस्या । व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहे"ति सᳬस्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपानक्ति "देवश्रुतौ देवेष्वा घोषत"मिति तद्यदेवं जुहोति ॥ १४ ॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्यऽआसङ्गाद्बिभयांचक्रुः वज्रो वाऽआज्यं तऽएतेन वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षाᳬसि स्यवाघ्नं स्तथैषां नियानं नान्ववायंस्तथोऽएवैष ऽएतेन वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षाᳪस्यवहन्ति तथास्य नियानं नान्ववयन्ति तद्यद्वैष्णवीभ्यामृग्भ्यां जुहोति वैष्णवᳬ हि हविर्धानम् ॥१५॥ अथ यत्पत्न्यक्षस्य संतापमुपानक्ति । प्रजननमेवैतत्क्रियते यदा वै स्त्रियै च पुᳬसश्च सन्तप्यतेऽथ रेतः सिच्यते तत्ततः प्रजायते परागुपानक्ति पराग्घ्येव रेतः सिच्यतेऽथाह हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति ॥१६॥ अथ वाचयति । "प्राची प्रेतमध्वरं कल्पयन्ती"ऽइत्यध्वरो वै यज्ञः प्राची प्रेतं यज्ञं कल्पयन्तीऽइत्येवैतदाहो "र्ध्वं यज्ञं नयतं मा जिह्वरत"मित्यूर्ध्वमिमं यज्ञं देवलोकं नयतमित्येवैतदाह मा जिह्वरतमिति तदेतस्माऽअह्वलामाशास्ते समुद्गृह्येव प्रवर्तयेयुर्यथा नोत्सर्जेतामसुर्या वाऽएषा वाग्याक्षे नेदिह्वासुर्या वाग्वदादिति यद्युत्सर्जेताम् ॥१७॥ एतद्वाचयेत् । "स्वं गोष्ठमावदतं देवी दुर्ये आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्ट"मिति तस्यो हैषा प्रायश्चित्तिः ॥१८॥ तदाहुः । उत्तरवेदेः प्रत्यङ् प्रक्रामेत्त्रीन्विक्रमांस्तद्धविर्धाने स्थापयेत्सा हविर्धानयोर्मात्रेति नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येत नाहैव सत्रात्यन्तिके नोदूरे तत्स्थापयेत् ॥१९॥

---

१. मा. सं. ५. १६ २ दशस्या इति ग. ३. मा. सं, ५. १७.

४. यत्पत्न्यक्षस्येति घ. ५ सिच्यते इति ग. ६-८. मा. सं. ५. १७.

९. देवी दुर्ये इति घ. १०. नाम इति. ग. ङ.

तेऽअभिमन्त्रयते[1] । "अत्र[2] रमेथां वर्ष्मन् पृथिव्या" इति वर्ष्म ह्येतत्पृथिव्यै भवति दिवि ह्यस्याहवनीयो भवति नभ्यस्थे करोति तद्धि क्षेमस्य रूपम्[3] ॥२०॥ अथोत्तरेण पर्येत्याध्वर्युः । दक्षिणꣳ हविर्धानमुपस्तभ्नाति "विष्णोर्नु[4] कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि । योऽअस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वे"ति मेथीमुपनिहन्तीतरतस्ततो यदु च मानुषे ॥२१॥ अथ प्रतिप्रस्थाता[5] । उत्तरꣳ हविर्धानमुपस्तभ्नाति "दिवो[6] वा विष्णऽउत वा पृथिव्या महो वा विष्णऽउरोरन्तरिक्षात् । उभा हि हस्ता वसुना पृणस्वाप्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वे"ति मेथीमुपनिहन्तीतरतस्ततो यदुच मानुषे तद्यद्वैष्णवैर्यजुर्भिरुपचरन्ति वैष्णवꣳ हि हविर्धानम् ॥२२॥ अथ मध्यमं छदिरुपस्पृश्य वाचयति । "प्र[7] तद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः[8] । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वे"तीदꣳ हैवास्यैतच्छीर्षकपालं यदिदमुपरिष्टादधीव ह्येतत्क्षियन्त्यन्यानि शीर्षकपालानि तस्मादाहाधिक्षियन्तीति ॥२३॥ अथ रराट्यामुपस्पृश्य वाचयति । "विष्णो[9] रराटमसी"ति ललाटꣳ हैवास्यैतदथो[10]च्छायाऽउपस्पृश्य वाचयति "विष्णोः[11] श्नप्त्रे स्थ"ऽइति सृक्के हैवास्यैतेऽअथ यदिदं पश्चाच्छदिर्भवतीदꣳ हैवास्यैतच्छीर्षकपालं यदिदं पश्चात्[12] ॥२४॥ अथ स्पूजन्या स्पन्द्यया प्रसीव्यति । "विष्णोः[13] स्यूरसी"त्यथ ग्रन्थिं करोति "विष्णो[14] ध्रुवोऽसी"ति नेद्व्यवपद्याताऽइति तं प्रकृते कर्मन्विष्यति तथोहाध्वर्युं वा यजमानं वा ग्राहो न विन्दति[15] तन्निष्ठितमभिमृशति "वैष्णवमसी"[16]-

---

१. मन्त्रयते इति घ.　　२. मा. सं. ५. १७.　　३. रूपमिति. ग.
४. मा. सं. ५. १८.　　५. प्रतिप्रस्थता इति. ग, प्रतिप्रस्थाता. घ.
६. मा. सं. ५. १९.　　७. मा. सं. ५. २०.　　८. गिरिष्ठा इति ग.
९. मा. सं. ५. २१.　　१०. एतदथो इति घ.　　१२. पश्चात् इति ग.
११, १३, १४, १६. मा. सं. ५. २१.　　१५. विन्दतीति घ.

ति व्वैष्णवꣳ हि हविर्धानम् ॥२५॥ Cf. का. श. ४. ५. ३; तै. सं. ६. २. ९; मै. सं. ३. ८. ७; काठ. सं. २५. ८; कपि.सं.४०.१.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ५. ३. )

३. ४. ४.

( उपरवनिर्माणम् )

द्वयं वाऽअभ्युपरवाः [1]खायन्ते । शिरो वै यज्ञस्य हविर्धानं तद्यऽइमे शीर्षंश्चत्वारः कूपाऽइमावह द्वाविमौ द्वौ [2]तानेवैतत्करोति तस्मादुपरवान् खनति ॥१॥ देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुराऽएषु लोकेषु कृत्यां व्वलगान्निचख्नुरुतैवं चिद्देवानभि भवेमेति ॥२॥ तद्वै देवाऽअस्पृण्वत । तऽएतैः कृत्यां व्वलगानुदखनन्यदा वै कृत्यामुत्खनन्त्यथ सालसामोघा भवति तथोऽएवैषऽएतद्यद्यस्माऽअत्र कश्चिद्द्विषन् भ्रातृव्यः कृत्यां व्वलगान्निखनाति तानेवैतदुत्किरति तस्मादुपरवान् खनति स दक्षिणस्य हविर्धानस्याधोऽधः प्रउगं [3]खनति ॥३॥ सोऽभ्रिमादत्ते । "[4]देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसी"ति समानऽएतस्य यजुषो बन्धुर्योषो वाऽएषा यदभ्रिस्तस्मादाह नार्यसीति ॥४॥ तान् प्रादेशमात्रं विना परिलिखति । "[5]इदमहꣳ रक्षसां ग्रीवाऽअपिकृन्तामी"ति व्वज्रो वाऽअभ्रिर्व्वज्रेणैवैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवाऽअपिकृन्तति ॥५॥ तद्यावेतौ पूर्वौ । तयोर्दक्षिणमेवाग्रे परिलिखेदथापरयोरुत्तरमथापरयोर्दक्षिणमथ पूर्वयोरुत्तरम् ॥६॥ अथोऽइतरथाहुः । अपरयोरेवाग्रऽउत्तरं परिलिखेदथ पूर्वयोर्दक्षिणमथापरयोर्दक्षिणमथ [6]पूर्व्वयोरुत्तरमित्यथोऽअपि समीचऽएव परिलिखेदेतं त्वेवोत्तमं परिलिखेद्यऽएष पूर्वयोरुत्तरो भवति ॥७॥ तां यथा परिलिखितमेव यथापूर्वं खनति । "[7]बृहन्नसि बृहद्रवा"ऽ[8]इत्युपस्तौत्येवैना-

---

१. ख्यायन्त इति. ग.
२. तानेवैतत्करोतीति. घ.
३. खनतीति. घ.
४, ५, ७. मा. सं. ५.२२.
६. पूर्व्वयोरिति घ.
८. इत्यु इति. ग. घ.

नेतन्महयत्येव यदाह बृहन्नसि बृहद्रवाऽइति "बृहतीमिन्द्राय व्वाचं व्वदे"तीन्द्रो वै यज्ञस्य देवता व्वैष्णवꣳ हविर्धानं तत्सेन्द्रं करोति तस्मादाह बृहतीमिन्द्राय व्वाचं व्वदेति ॥८॥ "रक्षोहणं व्वलगहन"मिति । रक्षसाꣳ ह्येते व्वलगानां व्वधाय खायन्ते "व्वैष्णवी"मिति व्वैष्णवी हि हविर्धाने व्वाक् ॥९॥ तान्यथाखातमेवोत्किरति । "इदमहं तं व्वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखाने"ति निष्ट्यो वा वाऽअमात्यो वा कृत्यां व्वलगान्निखनति तानेवैतदुत्किरति ॥१०॥ "इदमहं तं व्वलगमुत्किरामि । यं मे समानो यमसमानो निचखाने"ति समानो वा वाऽअसमानो वा कृत्यां व्वलगान्निखनति तानेवैतदुत्किरति ॥११॥ "इदमहं तं व्वलगमुत्किरामि । यं मे सबन्धुर्यमसबन्धुर्निचखाने"ति सबन्धुर्व्वा वाऽअसबन्धुर्व्वा कृत्यां व्वलगान्निखनति तानेवैतदुत्किरति ॥१२॥ "इदमहं तं व्वलगमुत्किरामि । यं मे सजातो यमसजातो निचखाने"ति सजातो वा वाऽअसजातो वा कृत्यां व्वलगान्निखनति तानेवैतदुत्किरत्यु "त्कृत्यां किरामी"त्यन्तत ऽउद्वपति तत्कृत्यामुत्किरति ॥१३॥ तान् बाहुमात्रान् खनेत् । अन्तो वाऽएषोऽन्तेनैवैतत्कृत्यां मोहयति तानक्षणया सन्तृन्दन्ति यद्यक्षणया न शक्नुयादपि समीचस्तस्मादिमे प्राणाः परः सन्तृण्णाः ॥१४॥ तान्यथा खातमेवावमर्शयति । "स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्व्वराडस्यमित्रहे"त्याशीरेवैषैतस्य कर्मणऽ आशिषमेवैतदाशास्ते ॥१५॥ अथाध्वर्युश्च यजमानश्च सम्मृशेते । पूर्व्वयोर्दक्षिणेऽध्वर्युर्भवत्यपरयोरुत्तरे यजमानः सोऽध्वर्युः पृच्छति 'यजमान किमत्रे'ति 'भद्र' मित्याह 'तन्नौ सहे'त्युपाꣳश्वध्वर्युः ॥१६॥ अथापरयोर्दक्षिणेऽध्वर्युर्भवति । पूर्व्वे-

---

१. मा. सं. ५. २२ २–८, मा. सं. ५. २३. ९. तान् इति. घ.
१०. सन्तृन्दन्तीति. ग. घ. ११. सन्तृण्णा इति. ग.
१२. मा. सं. ५.२४. १३. आशिषमिति. ग. १४. दक्षिणे इति. ग. घ.

योरुत्तरे यजमानः स यजमानः पृच्छ 'त्यध्वर्यो किमत्रे'ति 'भद्र' मित्याह 'तन्म' ऽइति यजमानस्तद्यदेव ँ संमृशेते प्राणानेवैतत्तत्सयुजः कुरुतस्तस्मादिमे प्राणाः परः संविद्रेऽथ यत्पृष्टो भद्रमिति प्रत्याह कल्याणमेवैतन्मानुष्यै व्वाचो व्वदति तस्मात्पृष्टो भद्रमिति प्रत्याहाथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यानेवैतत्करोति ॥१७॥ स प्रोक्षति । "[1]रक्षोहणो वो व्वलगहन" ऽइति रक्षोहणो ह्येते व्वलगहनो ह्येते "प्रोक्षामि [2]व्वैष्णवानि"ति व्वैष्णवा ह्येते ॥१८॥ अथ याः प्रोक्षण्यः [3]परिशिष्यन्ते । ताऽअवटेष्ववनयति तद्या ऽइमाः प्राणेष्वापस्ता ऽएवैतद्दधाति [4]तस्मादेषु प्राणेष्विमा ऽआपः ॥१९॥ सोऽवनयति "[5]रक्षोहणो वो व्वलगहनोऽवनयामि व्वैष्णवा"नित्यथ बर्हीं ँ षि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति तद्यानीमानि प्राणेषु लोमानि तान्येवैतद्दधाति [6]तस्मादेषु प्राणेष्विमानि लोमानि ॥२०॥ सोऽवस्तृणाति । "[7]रक्षोहणो वो व्वलगहनोऽवस्तृणामि व्वैष्णवानि"त्यथ बर्हीं ँ षि तनूनीवोपरिष्टात्प्रच्छादयति केशा हैवास्यैते ॥२१॥ अथाधिषवणे फुलकेऽउपदधाति । "[8]रक्षोहणौ वां व्वलगहनाऽउपदधामि व्वैष्णवी" ऽइति हनू हैवास्यैते ऽअथ पर्यूहति "[9]रक्षोहणौ वां व्वलगहनौ पर्यूहामि व्वैष्णवी" ऽइति दृ ँ हत्येवैनेऽएतदशिथिले करोति ॥२२॥ अथाधिषवणं परिकृत्तं भवति । सर्व्वरोहितं जिह्वा है वास्यैषा तद्यत्सर्व्वरोहितं भवति लोहिनीव हीयं जिह्वा तन्निदधाति "[10][11]व्वैष्णवमसी"ति व्वैष्णव ँ ह्येतत् ॥२३॥ अथ ग्राव्ण ऽउपावहरति । दन्ता हैवास्य ग्रावाणस्तद्यद्ग्रावभिरभिषुण्वन्ति यथा दद्भिः प्सायादेवं तत्तान्निदधाति "[12]व्वैष्णवा स्थे"ति व्वैष्णवा ह्येतऽएतदु यज्ञस्य शिरः [13]सं ँ स्कृतम् ॥२४॥ Cf. का.श. ४. ५. ४;

---

१, २. मा. सं. ५. २५ ३. परिशिष्यन्त इति. ग. ४, ६. तस्मादेषु इति. ग. घ.
५, ७. मा. सं. ५. २५. ८. अस्यैते इति. ग, ते इति. घ.
९-१२. मा. सं. ५. २५. १३. संस्कृतम् इति. क. घ.

तै. सं. ६. २. १०, ११; काठ. सं. २५. ९; कपि. सं. ४०. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीकाण्डे
चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥

( इति पञ्चमोऽध्यायः )

३. ४. ५.

( सदस्यौदुम्बरीनिखननम् )

उदरमेवास्य सदः । तस्मात्सदसि भक्षयन्ति यद्धीदं किं चाश्नन्त्युदरऽएवेदꣳ सर्व्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवा ऽअसीदंस्तस्मात्सदो नाम तऽउऽएवास्मिन्नेते ब्राह्मणा व्विश्वगोत्राः सीदन्त्यैन्द्रं देवतया ॥१॥ तन्मध्यऽऔदुम्बरीं मिनोति । अन्नं वाऽऊर्गुदुम्बर ऽउदरमेवास्य सदस्तन्मध्यतोऽन्नाद्यं दधाति तस्मान्मध्य ऽऔदुम्बरीं मिनोति ॥२॥ अथ य ऽएष मध्यमः शङ्कुर्भवति । व्वेदेर्जघनार्धे तस्मात्प्राङ् प्रक्रामति षड्विक्रमान्दक्षिणा सप्तममपक्रामति सम्पदः कामाय तदवटं परिलिखति ॥३॥ सोऽभ्रिमादत्ते । "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसी"ति समान ऽएतस्य यजुषो बन्धुर्योषो वाऽएषा यदभ्रिस्तस्मादाह नार्यसीति ॥४॥ अथावटं परिलिखति । "इदमहꣳरक्षसां ग्रीवा ऽअपिकृन्तामी"ति व्वज्रो वाऽअभ्रिर्व्वज्रेणैवैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवा ऽअपिकृन्तति ॥५॥ अथ खनति । प्राञ्चमुत्करमुत्किरति यजमानेन सम्मायौदुम्बरीं परिवासयति तामग्रेण प्राचीं निदधात्येतावन्मात्राणि बर्हीꣳषि व्युपरिष्टादधिनिदधाति ॥६॥ अथ यवमत्यः प्रोक्षण्यो भवन्ति । आपो ह वाऽओषधीनाꣳरसस्तस्मादोषधयः केवल्यः खादिता न धिन्वन्त्योषधय ऽउ हापाꣳ रसस्तस्मादापः पीताः केवल्यो न धिन्वन्ति यदैवोभय्यः सꣳसृष्टा भवन्त्यथैव धिन्वन्ति तर्हि हि सरसा भवन्ति सरसाभिः प्रोक्षाणीति ॥७॥ देवाश्च वा

---

१, २. मा. सं. ५. २६.

ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततो देवेभ्यः सर्व्वा ऽएवौषधय ईयुर्यवा हैवैभ्यो नेयुः ॥८॥ तद्धै देवा ऽअस्पृण्वत । तऽएतैः सर्व्वाः सपत्नानामोषधीरयुवत यदयुवत तस्माद्यवा नाम ॥९॥ ते होचुः । हन्त यः सर्वासामोषधीनाᳫँ रसस्तं यवेषु दधामेति स यः सर्व्वासामोषधीनाᳫँ रस ऽआसीत्तं यवेष्वदधुस्तस्माद्यत्रान्या ऽओषधयो म्लायन्ति तदेते मोदमाना वर्धन्तऽएवᳫँ ह्येषु रसमदधुस्तथोऽएवैष ऽएतैः सर्व्वाः सपत्नानामोषधीर्युते तस्माद्यवमत्यः प्रोक्षण्यो भवन्ति ॥१०॥ स यवानावपति । "यवोऽसि यवयास्मद्द्वेषो यवयाराती"रिति नात्र तिरोहितमिवास्त्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यामेवैतत्करोति ॥११॥ स प्रोक्षति । "दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वे" तीमानेवैतल्लोकानूर्जा रसेन भाजयत्येषु लोकेषूर्जᳫँ रसं दधाति ॥१२॥ अथ याः प्रोक्षण्यः परिशिष्यन्ते । ता ऽअवटेऽवनयति "शुन्धन्तां लोकाः पितृषदना" ऽइति पितृदेवत्यो वै कूपः खातस्तमेवैतन्मेध्यं करोति ॥१३॥ अथ बर्हीᳫँषि । प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति "पितृषदनमसी"ति पितृदेवत्यं वाऽअस्याऽएतद्भवति यन्निखातᳫँ सा यथा निखातौषधिषु मिता स्यादेवमेतास्वोषधिषु मिता भवति ॥१४॥ तामुच्छ्रयति । "उद्दिवᳫँ स्तभानान्तरिक्षं पृण दृᳫँहस्व पृथिव्यामि"तीमानेवैतल्लोकानूर्जा रसेन भाजयत्येषु लोकेषूर्जᳫँ रसं दधाति ॥१५॥ अथ मिनोति । "द्युतानस्त्वा मारुतो मिनोत्वि"ति यो वाऽअयं पवतऽएष द्युतानो मारुतस्तदेनामेतेन मिनोति "मित्रावरुणौ ध्रुवेण धर्मणे"ति प्राणोदानौ वै मित्रावरुणौ तदेनां प्राणोदानाभ्यां मिनोति ॥१६॥ अथ पर्य्यूहति । "ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्य्यूहामी"ति बह्वी वै यजुःष्वाशीस्तद्ब्रह्म च क्षत्रं चाशास्तऽउभे व्वीर्ये रायस्पो-

१. सपत्नानिति. ग.
२–५. मा. सं. ५. २६.
६, ८, ९. मा. सं. ५. २७.
७. भाजयत्येषु इति. ग.
१०. दानाभ्यामिति. ग.
११. मा. सं. ५. २७.

षवनीति भूमा वै[1] रायस्पोषस्तद्भूमानमाशास्ते[2] ॥१७॥ अथ पर्य्यृषति । "ब्रह्म[3] दृꣳह क्षत्रं दृꣳहायुर्द्दृꣳह प्रजां दृꣳह" इत्याशीरेवैषैतस्य कर्मण ऽआशिषमेवैतदाशास्ते[4] समम्भूमि[5] पर्य्येषणं करोति गर्तस्य वाऽउपरिभूम्यथैवं देवत्रा तथा ह्यागर्तमिद्भवति ॥१८॥ अथाप ऽउपनिनयति । यत्र वाऽअस्यै खनन्तः क्रूरीकुर्व्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादप ऽउपनिनयति ॥१९॥ अथैवमभिपद्य व्वाचयति । "ध्रुवासि[6] ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयादि"ति "पशुभिरि"ति वैवं यं कामं कामयते सोऽस्मै कामः समृध्यते ॥२०॥ अथ स्रुवेणोपहत्याज्यम् । व्विष्टपमभि जुहोति "घृतेन[7] द्यावापृथिवी पूर्य्येथा"मिति तदिमे द्यावापृथिवीऽऊर्जा रसेन भाजयत्यनयोरूर्जꣳरसं दधाति ते रसवत्याऽउपजीवनीयेऽइमाः प्रजाऽउपजीवन्ति ॥२१॥ अथ छदिरधिनिदधाति । "इन्द्रस्य[8] छदिरसी"त्यैन्द्रꣳ हि सदो "व्विश्वजनस्य[9] छाये"ति व्विश्वगोत्रा ह्यस्मिन् ब्राह्मणाऽआसते तदुभयतश्छदिषीऽउपदधात्युत्तरतस्त्रीणि परस्त्रीणि तानि नव भवन्ति त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नव भवन्ति ॥२२॥ तदुदीचीनवꣳशꣳ सदो भवति । प्राचीनवꣳशꣳ हविर्धानमेतद्वै देवानां निष्केवल्यं यद्धविर्धानं तस्मात्तत्र नाश्नन्ति न भक्षयन्ति निष्केवल्यꣳ ह्येतद्देवानाꣳ स यो ह तत्राश्नीयाद्वा भक्षयेद्वा मूर्धा हास्य व्विपतेद्यथैते मिश्रे यदाग्नीध्रं[10] च सदश्च तस्मात्तयोरश्नन्ति तस्माद्भक्षयन्ति मिश्रे ह्येतेऽउदीची वै मनुष्याणां दिक्तस्मादुदीचीनवꣳशꣳ सदो भवति ॥२३॥ तत्परिश्रयन्ति । "परि[11] त्वा गिर्व्वणो गिरऽइमा भवन्तु विश्वतः । व्वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय"ऽइतीन्द्रो वै गिर्वा[12] व्विशो गिरो व्विशै-

---

१. वै इति. ग.　　२. तद्भूमानमाशास्ते इति. ग. घ.　　३. मा. सं. ५. २७.

४. दाशास्ते इति. ग. घ. ५. सम्भूमि इति. घ.　　६-९. मा. सं. ५. २८.

१०. यदाग्नीध्रमिति. ग.　　११ मा. सं. ५. २९.　　१२. गिर्व्वा. इति. घ.

वैतत्क्षत्रं परिबृᳫंहति तदिदं क्षत्रमुभयतो विशा परिबृढम् ॥२४॥ अथ लस्पूजन्या स्पन्द्यया प्रसीव्यति । "इन्द्रस्य स्यूरसी"त्यथ ग्रन्थिं करोती"न्द्रस्य ध्रुवोऽसी"ति नेद्व्यवपद्याताऽइति तं[3] प्रकृते कर्मन्विष्यति तथो हाध्वर्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृशत्यै"न्द्रमसी"त्यैन्द्रᳫं हि सदः ॥२५॥ अथ हविर्धानयोः । जघनार्द्धᳫं समन्वीक्ष्योत्तरेणाग्नीध्रं मिनोति तस्यार्द्धमन्तर्व्वेदि स्यादर्द्धं बहिर्व्वेद्यथोऽअपि भूयोऽर्द्धादन्तर्वेदि स्यात्कनीयो बहिर्वेद्यथोऽअपि सर्व्वमेवान्तर्वेदि स्यात्तन्निष्ठितमभिमृशति "वैश्वदेवमसी"ति द्वयेनैतद्वैश्वदेवं यदस्मिन् पूर्वेद्युर्विश्वे देवा व्वसतीवरीषूपवसन्ति तेन व्वैश्वदेवम् ॥२६॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्यऽआसङ्गाद्बिभयांचक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेजुस्तान्त्सदसो जिग्युस्तेषामेतान्धिष्ण्यानुद्द्रापयांचक्रुर्यऽएतेऽन्तः सदसᳫं ॥२७॥ सर्व्वे ह स्म वाऽएते पुरा ज्वलन्ति । यथायमाहवनीयो यथा गार्हपत्यो यथाग्नीध्रीयस्तद्यतऽएनानुद्द्रवापयंस्ततऽएवैतन्न ज्वलन्ति तानाग्नीध्रमाभिसᳫंरुरुधुस्तानप्यर्धमाग्नीध्रस्य जिग्युस्ततो विश्वे देवाऽअमृतत्वमपाजयंस्तस्माद्वैश्वदेवम् ॥२८॥ तान्देवाः प्रतिसमैन्धत । यथा प्रत्यवस्येत्तस्मादेनान्त्सवने सवनऽएव प्रतिसमिन्धते तस्माद्यः समृद्धः सऽआग्नीध्रं कुर्याद्यो वै ज्ञातोऽनूचानः स समृद्धस्तस्मादग्नीधे प्रथमाय दक्षिणां नयन्त्यतो हि विश्वे देवाऽअमृतत्वमपाजयंस्तस्माद्यं दीक्षितानामवल्यं विन्देदाग्नीध्रमेनं नयतेति ब्रूयात्तदनार्तं तं नारि-

---

१, २, ४, मा. सं. ५. ३०.

५. मा. सं. ५. ३०.

७. सदसᳫं ग.

९. ज्वलन्तीति. ग.

११. एव इति, ग.

३. तं इति नास्ति. ग. घ.

६. चक्रुर्य इति. ग. घ.

८. पुरा इति. घ.

१०. देवमिति. ,,

ष्यतीति तद्यदतो विश्वेदेवाऽअमृतत्वमपाजयंस्तस्माद्वैश्वदेवम् ॥२९॥

Cf. का. श. ४. ६. १; तै. सं. ६. २. १०; मै. सं. ३. ८. ९.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥( अ. ६. १. )

चतुर्थः प्रपाठकस्समाप्तः ॥
( कण्डिकासंख्या १३२ )

## ३. ५. १.
## ( धिष्ण्योपवापादि )

ॐ विज्ञामानो हैवास्य धिष्ण्याः । इमे समङ्का ये वै समङ्कास्ते विज्ञामान एतऽउ हैवास्यैतऽआत्मनः ॥१॥ दिवि वै सोमऽआसीत् । अथेह देवास्ते देवाऽअकामयन्ता नः सोमो गच्छेत्तेनागतेन यजेमहीति तेऽएते माये असृजन्त सुपर्णीं च कद्रूं च वागेव सुपर्णीयं कद्रूस्ताभ्याꣳसमदं चक्रुः ॥२॥ ते हैऽतीयमानेऽऊचतुः । यतरा नौ दवीयः परापश्यादात्मानं नौ सा जयादिति तथेति सा ह कद्रूरुवाच परेक्षस्वेति ॥३॥ सा ह सुपर्ण्युवाच । अस्य सलिलस्य पारेऽश्वः श्वेतस्थाणौ सेवते तमहं पश्यामीति तमेव त्वं पश्यसीति तꣳहीत्यथ ह कद्रूरुवाच तस्य वालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति ॥४॥ सा यत्सुपर्ण्युवाच । अस्य सलिलस्य पारऽइति वेदिर्वै सलिलं वेदिमेव सा तदुवाचाश्वः श्वेतस्थाणौ सेवतऽइत्यग्निर्वाऽअश्वः श्वेतो यूपस्थाणुरथ यत्कद्रूरुवाच तस्य वालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति रशना हैव सा ॥५॥ साह सुपर्ण्युवाच । एहीदं पताव वेदितुं यतरा नौ जयतीति साह कद्रूरुवाच त्वमेव पत त्वं वै न ऽआख्यास्यसि यतरा नौ जयतीति ॥६॥ सा ह सुपर्णी पपात । तद्ध तथैवास यथा कद्रूरुवाच तामागताम-

१. वैश्वदेवम् इति. ग.	२. सोमो इति. ग. घ.	३. ते ह इति. घ.
४ अस्येति. ग.	५. तस्येति. ग.	६. तममुमिति. ग.

भ्युवाद त्वमजैषी३रहा३मिति त्वमिति होवाचैतद्व्याख्यानꣳ सौपर्णीकाद्रवमिति ॥७॥ ( शतम् ॥१९००॥ ) सा ह कद्रूरुवाच । आत्मानं वै त्वाजैषं दिव्यसौ सोमस्तं देवेभ्य ऽआहर तेन देवेभ्य आत्मानं निष्क्रीणीष्वेति तथेति सा छन्दाꣳसि ससृजे सा गायत्री दिवः सोममाहरत् ॥८॥ हिरण्मय्योर्ह कुश्योरन्तरवाहित ऽआस । ते ह स्म क्षुरपवी निमेषं निमेषमभिसन्धत्तो दीक्षातपसौ हैव ते ऽआसतुस्तमेते गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या इमा[1] होत्राः ॥९॥ तयोरन्यतरां कुशीमाचिच्छेद । तां देवेभ्यः प्रददौ सा दीक्षा तया[2] देवा ऽअदीक्षन्त ॥१०॥ अथ द्वितीयां कुशीमाचिच्छेद । तां देवेभ्यः प्रददौ तत्तपस्तया देवास्तप ऽउपायन्नुपसदस्तपो ह्युपसदः ॥११॥ खदिरेण ह सोममाचखाद । तस्मात् खदिरो यदेनेनाखिदत्तस्मात्खादिरो यूपो भवति खादिरः स्फ्योऽच्छावाकस्य हैनं गोपनायां जहार सोऽच्छावाकोऽहीयत ॥१२॥ तमिन्द्राग्नीऽअनुसमतनुताम् । प्रज्ञानां प्रज्ञात्यै तस्मादैन्द्राग्नोऽच्छावाकः[3] ॥१३॥ तस्माद्दीक्षिता राजानं गोपायन्ति । नेन्नोऽपहरानिति तस्मात्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह ॥१४॥ तस्माद्ब्रह्मचारिण ऽआचार्यं गोपायन्ति । गृहान् पशून्नेन्नोऽपहरानिति तस्मात्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह तेनैतेन सुपर्णी देवेभ्य ऽआत्मानं निरक्रीणीत तस्मादाहुः पुण्यलोक ऽईजान ऽइति ॥१५॥ ऋणꣳ ह वै पुरुषो जायमान ऽएव । मृत्योरात्मना जायते स यद्यजते यथैव तत्सुपर्णी देवेभ्य ऽआत्मानं निरक्रीणीतैवमेवैष ऽएतन्मृत्योरात्मानं निष्क्रीणीते ॥१६॥ तेन देवा ऽअयजन्त । तमेते गन्धर्वाः सोमरक्षा ऽअन्वाजग्मुस्तेऽन्वागत्याब्रुवन्ननु नो यज्ञऽआभजत मा[4] नो यज्ञादन्तर्गातास्त्वेव नोऽपि यज्ञे भाग ऽइति ॥१७॥ ते होचुः । किं नस्ततः स्यादिति यथैवास्यामुत्र गोप्तारोऽभूमैवमेवास्यापीह[5]

१. इमे होत्रका इति क्वचित् पाठः । २. तया इति. घ.
३. अच्छावाकः इति. ग. ४. मा इति. ग. ५. मेवास्यापीह. इति. ग.

गोप्तारो भविष्यामऽइति ॥१८॥ तथेति देवा ऽअब्रुवन् । सोमक्रयणा वऽइति तानेभ्य ऽएतत्सोमक्रयणाननुदिशत्यथैनानब्रुवंस्तृतीयसवने वो घृत्याहुतिः प्राप्स्यति न सौम्यापहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं नार्हथेति सैनानेषा तृतीयसवनऽ एव घृत्याहुतिः प्राप्नोति न सौम्या यच्छालाकैर्धिष्ण्यान्व्याघारयति ॥१९॥ अथ यदग्नौ होष्यन्ति । तद्वोऽविष्यतीति स यदग्नौ जुह्वति तदेनानवत्यथ यद्वः सोमं बिभ्रत ऽउपर्युपरि चरिष्यन्ति तद्वोऽविष्यतीति स यदेनान्त्सोमं बिभ्रत उपर्युपरि चरन्ति तदेनानवति तस्मादध्वर्युः समया धिष्ण्यान्नातीयादध्वर्युर्हि सोमं बिभर्ति तमेते व्यात्तेन प्रत्यासते स ऽएतेषां व्यात्तमापद्येत तमग्निर्वाभिदहेद्यो वा यं देवः पशूनामीष्टे स वा हैनमभिमन्येत तस्माद्यद्यध्वर्योः शालायामर्थः स्यादुत्तरेणैवाग्नीध्रीयꣳ सञ्चरेत् ॥२०॥ ते वाऽएते । सोमस्यैव गुप्त्यै न्युप्यन्तऽआहवनीयः पुरस्तान्मार्जालीयो दक्षिणत ऽआग्नीध्रीय ऽउत्तरतोऽथ ये सदसि ते पश्चात् ॥२१॥ तेषां वाऽअर्धाननुप्रकिरन्ति । अर्धाननु दिशन्त्येतऽउ ह्येवैतद्दध्रिरेऽर्धान्न ऽउपकिरन्त्वर्धाननुदिशन्तु तथा यस्माल्लोकादागताः स्मो दिवस्तथा तं लोकं प्रतिप्रज्ञास्यामस्तथा नु जिह्माऽएष्यामऽइति ॥२२॥ स यानुपकिरन्ति । तेनास्मिंल्लोके प्रत्यक्षं भवन्त्यथ याननुदिशन्ति तेनामुष्मिंल्लोके प्रत्यक्षं भवन्ति ॥२३॥ ते वै द्विनामानो भवन्ति । एतऽउ ह्येवैतद्दध्रिरे न वाऽएभिर्नामभिररात्स्म येषां नः सोममपाहार्षुर्हन्त द्वितीयानि नामानि करवामहैऽइति ते द्वितीयानि नामान्यकुर्वत तैरराध्नुवन्यानपहृतसोमपीथान्त्सतोऽथ यज्ञऽआभजंस्तस्माद्द्विनामानस्तस्माद्ब्राह्मणोऽनृध्यमानो द्वितीयं नाम कुर्व्वीत राध्नोति हैवं यऽएवं विद्वान्द्वितीयं नाम कुरुते ॥२४॥ स यदग्नौ जुहोति । तद्देवेषु जुहोति तस्माद्देवाः सन्त्य-

१. घृत्याहुतिरिति. ग, घ. २. स इति ग. ३. एते इति. ग.
४. पश्चात् इति. ग. ५. न इति. नाऽस्ति. ग. ६. तेनामुष्मिन् इति. घ.
७. महा इति. घ. ८. हैव य इति. ग. ९. कुरुते इति. ग.

थ यत्सदसि भक्षयन्ति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्त्यथ यद्धविर्धानयोर्नाराशᳬसाः सीदन्ति तत्पितृषु जुहोति तस्मात्पितरः सन्ति ॥२५॥ या वै प्रजा यज्ञेऽनन्वाभक्ताः। पराभूता वै ताऽएवमेवैतद्याऽइमाः प्रजाऽअपराभूतास्ता यज्ञऽआभजति मनुष्याननु पशवो देवाननु वयाᳬसि ओषधयो व्वनस्पतयो यदिदं किंचैवमु तत्सर्व्वं यज्ञऽआभक्तं ते ह स्मैतऽउभये देवमनुष्याः पितरः सम्पिबन्ते सैषा सम्पा ते ह स्म दृश्यमाना एव पुरा सम्पिबन्तऽउतैतर्ह्यदृश्यमानाः ॥२६॥ Cf. का. श. ४. ६. २; तै. सं. ६. ३. १.; मै. सं. ३. ८. १०; कठ. सं. २६. १; कपि. सं. ४०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ६. २. )

३. ५. २.

( वैसर्जनहोमः )

सर्व्वं वाऽएषोऽभि दीक्षते। यो दीक्षते यज्ञᳬ ह्यभि दीक्षते यज्ञᳬ ह्येवेदᳬ सर्व्वमनु तं यज्ञᳬ सम्भृत्य यमिममभि दीक्षते सर्व्वमिदं व्विसृजते ॥१॥ यद्वैसर्जिनानि जुहोति। स यदिदᳬ सर्व्वं व्विसृजते तस्माद्वैसर्जिनानि नाम तस्माद्योऽपिव्रतः स्यात्सोऽन्वारभेत यद्युऽअन्यत्र चरेन्नाद्रियेत यद्वै जुहोति तदेवेदᳬ सर्व्वं व्विसृजते ॥२॥ यद्वेव व्वैसर्जिनानि जुहोति। यज्ञो वै व्विष्णुः स देवेभ्यऽइमां व्विक्रान्तिं व्विचक्रमे यैषामियं व्विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैतामेवैषऽएतस्मै व्विष्णुर्यज्ञो व्विक्रान्तिं व्विक्रमते यज्जुहोति तस्माद्वैसर्जिनानि जुहोति ॥३॥ सोऽपराह्णे व्वेदिᳬ स्तीर्त्वा। अधिव्रतं प्रदाय सम्प्रपद्य-

---

१. भक्षयन्तीति. ग २. दीक्षत इति. ग. ३. दीक्षते इति. ग.
४. जुहोति इति. ग, जुहोति इति. घ. ५. अपराह्णे इति. घ.

तऽइध्ममभ्याद्धत्युपयमनीरुपकल्पयन्त्याज्यमधिश्रयति स्रुचः संमार्ष्ट्युपस्थे राजानं यजमानः कुरुतेऽथ सोमक्रयण्यै पदं जघनेन गार्हपत्यं परिकिरति पदा वै प्रतितिष्ठति प्रतिष्ठित्याऽएवं ॥४॥ तद्धैके । चतुर्धा कुर्वन्ति यत्राहवनीयमुद्धरन्ति तासूपयमनीषु चतुर्भागमक्षं चतुर्भागेणोपाञ्जन्त्येतासूपयमनीषु चतुर्भागं जघनेन गार्हपत्यं चतुर्भागं परिकिरति ॥५॥ तदु तथा न कुर्यात् । सार्धमेव परिकिरेज्जघनेन गार्हपत्यमथोत्पूयाज्यं चतुर्गृहीते जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं पृषदाज्यं "ज्योतिरसि विश्वरूपं विश्वेषां देवानाᳪं समिदि"ति वैश्वदेवᳪं हि पृषदाज्यं धारयन्ति स्रुचो यदा प्रदीप्तऽइध्मो भवति ॥६॥ अथ जुहोति "त्वᳪं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यऽउरु यन्तासि वरूथᳪं स्वाहे"ति तदेतेनैवास्यां पृथिव्यां प्रतिष्ठायां प्रतितिष्ठत्येतेनेमं लोकᳪं स्पृणुते ॥७॥ अथाप्तवे द्वितीयामाहुतिं जुहोति । "जुषाणोऽअप्तुराज्यस्य वेतु स्वाहे"त्येषऽउ हैवैतदुवाच रक्षोभ्यो वै बिभेमि यथा मान्तरा नाष्ट्रा रक्षाᳪंसि न हिनसन्नेवं मा कनीयाᳪंसमेव वधात्कृत्वातिनयत स्तोकमेव स्तोको ह्यप्तुरिति तमेतत्कनीयाᳪंसमेव वधात्कृत्वात्यनयन्त्स्तोकमेव स्तोको ह्यप्तू रक्षोभ्यो भीषा तस्मादप्तवे द्वितीयामाहुतिं जुहोति ॥८॥ उद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीरथाहाग्नये प्रह्रियमाणायानुब्रूहि सोमाय प्रणीयमानाये'ति वाग्नये प्रह्रियमाणायानुब्रूहीति त्वेव ब्रूयात् ॥९॥ आददते ग्रावाणः । द्रोणकलशं वायव्यानीध्मं कार्ष्मर्यमयान् परिधीनाश्ववालं प्रस्तरमैक्षव्यौ विधृती तद्बर्हिरुपसन्नद्धं भवति वपाश्रपण्यौ रशनेऽअरणी अधिमन्थनः शकलो वृषणौ तत्समादाय प्राञ्चऽआयन्ति सऽएषऽऊर्ध्वो यज्ञऽएति ॥१०॥ तदायत्सु वाचयति । "अग्ने

---

१. एव इति. ग.  २. जघनेनेति. घ.  ३, ४. मा. सं. ५. ३५.
५. वरूथमिति. घ.  ६. स्पृणुते इति. घ.  ७. मा. सं. ५. ३५.
८. प्रस्तरमैक्षव्यौ इति. ग.  ९. विधृती. इति. ग.  १०. मा. सं. ५. ३६.

नय सुपथा रायेऽअस्मान्विश्वानि देव व्वयुनानि व्विद्वान्[1] । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽउक्तिं व्विधेमे''त्यग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षाᳪंस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण हरन्ति तऽआयन्त्यागच्छन्त्याग्नीध्रं तमाग्नीध्रे निदधाति ॥११॥ स निहिते जुहोति । "अयं[2] नोऽअग्निर्वरिवस्कृणोत्वयं मृधः पुरऽएतु प्रभिन्दन्[3] । अयं व्वाजान् जयतु व्वाजसातावयᳪं शत्रून् जयतु जर्हृषाणः स्वाहे''ति तदेतेनैवैतस्मिन्नन्तरिक्षे प्रतिष्ठायां प्रतितिष्ठत्येतेनैतं लोकᳪं स्पृणुते ॥१२॥ तदेव निदधाति ग्राव्णः । द्रोणकलशं व्वायुव्यान्यथेतरमादायायन्ति तदुत्तरेणाहवनीयमुपसादयन्ति ॥१३॥ प्रोक्षणीरध्वर्युरादत्ते । सऽइध्ममेवाग्रे प्रोक्षत्यथ व्वेदिमथास्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रᳪंस्य ग्रन्थिमाश्ववालः प्रस्तरऽउपसन्नद्धो भवति तं गृह्णाति गृहीत्वा प्रस्तरमेकवृद्बर्हिस्तृणाति स्तीर्त्वा बर्हिः कार्ष्मर्यमयान् परिधीन् परिदधाति परिधाय परिधीन्त्समिधावभ्यादधात्यभ्याधाय समिधौ ॥१४॥ अथ जुहोति । "उरु[4] व्विष्णो व्विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहे''ति तदेतेनैवैतस्यां दिवि प्रतिष्ठायां प्रतितिष्ठत्येतेनैतं लोकᳪं स्पृणुते यदेतया जुहोति ॥१५॥ यद्वेव व्वैष्णव्यर्चा जुहोति । कनीयाᳪंसं वाऽएनमेतद्वधात्कृत्वात्यनैषुस्तोकमेव स्तोको ह्यप्तुस्तमेतदभयं प्राप्य यऽएवैष तं करोति यज्ञमेव यज्ञो हि व्विष्णुस्तस्माद्वैष्णव्यर्चा जुहोति ॥१६॥ अथासाद्य स्रुचः । अपऽउपस्पृश्य राजानं प्रपादयति तं[5]यदासाद्य स्रुचोऽप उपस्पृश्य राजानं प्रपादयति व्वज्रो वाऽआज्यᳪं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमᳪं हिनसानीति तस्मादासाद्य स्रुचोऽपऽउपस्पृश्य राजानं प्रपादयति ॥१७॥ स दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति । तदेनमासादयति "देवं[6] सवितरेष ते सोमस्तᳪं रक्ष-

१. विद्वान् इति. ग. २. मा. सं. ५. ३७. ३. प्रभिन्दन् इति ग.घ.
४. मा सं. ५. ३८. ५. तस्मादासाद्येति ग. ६. मा. सं. ५. ३९.

स्व मा त्वा दभ''न्निति तदेनं देवायैव सवित्रे परिददाति गुप्त्यै ॥१८॥ अथानुसृज्योपतिष्ठते । ''एतत्त्वं देव सोम देवो देवां३ऽ उपागा इदमहं मनुष्यान्त्सह रायस्पोषेणे''त्यग्नीषोमौ वाऽएतमन्तर्जम्भऽआदधाते यो दीक्षतऽआग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्भवति यो वै विष्णुः सोमः स हविर्वाऽएष देवानां भवति यो दीक्षते तदेनमन्तर्जम्भऽआदधाते तत्प्रत्यक्षꣳ सोमान्निर्मुच्यते यदाहैतत्त्वं देव सोम देवो देवां३ ऽ उपागा इदमहं मनुष्यान्त्सह रायस्पोषेणेति भूमा वै रायस्पोषः सह भूम्नेत्येवैतदाह ॥१९॥ अथोपनिष्क्रामति । ''स्वाहा निर्व्वरुणस्य पाशान्मुच्य''ऽइति व्वरुणपाशे वाऽएषोऽन्तर्भवति योऽन्यस्यासंस्तत्प्रत्यक्षं व्वरुणपाशान्निर्मुच्यते यदाह स्वाहा निर्व्वरुणस्य पाशान्मुच्यऽइति ॥२०॥ अथेत्याहवनीये समिधमभ्यादधाति । ''अग्ने व्व्रतपास्त्वे व्व्रतपा''ऽइत्यग्निर्हि देवानां व्व्रतपतिस्तस्मादाहाग्ने व्व्रतपास्त्वे व्व्रतपाऽइति ''या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ सा मयि । यथायथं नौ व्व्रतपते व्व्रतान्यनु मे दीक्षां दीक्षापतिरमꣳस्तानु तपस्तपस्पति''रिति तत्प्रत्यक्षमग्नेर्निर्मुच्यते स स्वेन सतात्मना यजते तस्मादस्यात्राश्नन्ति मानुषो हि भवति तस्मादस्यात्र नाम गृह्णन्ति मानुषो हि भवत्यथ यत्पुरा नाश्नन्ति यथा हविषोऽहुतस्य नाश्नीयादेवं तत्तस्माद्दीक्षितस्य नाश्नीयादथात्राङ्गुलीर्व्विसृजते ॥२१॥ Cf. का. श. ४. ६. ३; तै. सं. ६. ३. २; मै. सं. ३. ९. १; कठ. सं. २६. २; कपि. सं. ४०. ६; ऐ. ब्रा. १. २८; शां. ब्रा. ९. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. ६. ३. )

---

१, मा. सं. ५. ३९.
२, ३. देवां २॥ऽउपागा इति. ग. घ.
४, मा. सं. ५. ३९.
५, मुच्यऽइति इति, ग, मुच्यऽइति इति, घ,
६, अभ्यादधातीति, ग.
७, ८. मा. सं. ५. ४०

नय सुपथा राये॒ऽअस्मान्विश्वानि देव व्वयुनानि विद्वान्[1] । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽउक्तिं विधेमे''त्यग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षाᳬंस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण हरन्ति तऽआयन्त्यागच्छन्त्याग्नीध्रं तमाग्नीध्रे निदधाति ॥११॥ स निहिते जुहोति । ''[2]अयं नोऽअग्निर्वरिवस्कृणोत्वयं मृधः पुरऽएतु प्रभिन्दन्[3] । अयं व्वाजान् जयतु व्वाजसातावयᳬं शत्रून् जयतु जर्हृषाणः स्वाहे''ति तदेतेनैवैतस्मिन्नन्तरिक्षे प्रतिष्ठायां प्रतितिष्ठत्येतेनैतं लोकᳬं स्पृणुते ॥१२॥ तदेव निदधति ग्रावणः । द्रोणकलशं व्वायव्यान्यथेतरमादायायन्ति तदुत्तरेणाहवनीयमुपसादयन्ति ॥१३॥ प्रोक्षणीरध्वर्युरादत्ते । सऽइध्ममेवाग्रे प्रोक्षत्यथ व्वेदिमथास्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रᳬंस्य ग्रन्थिमाश्ववालः प्रस्तरऽउपसन्नद्धो भवति तं गृह्णाति गृहीत्वा प्रस्तरमेकवृद्बर्हिस्तृणाति स्तीर्त्वा बर्हिः कार्ष्मर्यमयान् परिधीन् परिदधाति परिधाय परिधीन्त्समिधावभ्यादधात्यभ्याधाय समिधौ ॥१४॥ अथ जुहोति । ''[4]उरु व्विष्णो व्विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहे''ति तदेतेनैवैतस्यां दिवि प्रतिष्ठायां प्रतितिष्ठत्येतेनैतं लोकᳬं स्पृणुते यदेतया जुहोति ॥१५॥ यद्वेव व्वैष्णव्यर्चा जुहोति । कनीयाᳬंसं वाऽएनमेतद्दधात्कृत्वात्यनैषुस्तोकमेव स्तोको ह्यप्तुस्तमेतदभयं प्राप्य यऽएवैष तं करोति यज्ञमेव यज्ञो हि व्विष्णुस्तस्माद्वैष्णव्यर्चा जुहोति ॥१६॥ अथासाद्य स्रुचः । अपऽउपस्पृश्य राजानं प्रपादयति तद्यदासाद्य स्रुचोऽप उपस्पृश्य राजानं प्रपादयति व्वज्रो वाऽआज्यᳬं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमᳬं हिनसानीति तस्मादासाद्य[5] स्रुचोऽपऽउपस्पृश्य राजानं प्रपादयति ॥१७॥ स दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति । तदेनमासादयति ''[6]देवं सवितरेष ते सोमस्तᳬं रक्ष-

१. विद्वान् इति. ग. २. मा. सं. ५. ३७. ३. प्रभिन्दन् इति ग.घ.
४. मा सं. ५. ३८. ५. तस्मादासाद्येति ग. ६. मा. सं. ५. ३९.

स्व मा त्वा दभ''न्निति तदेनं देवायैव सवित्रे परिददाति गुप्त्यै ॥१८॥ अथानुसृज्योपतिष्ठते। ''एतत्त्वं देव सोम देवो देवां ३ऽ उपागा इदमहं मनुष्यान्त्सह रायस्पोषेणे''त्यग्नीषोमौ वाऽएतमन्तर्जम्भऽआदधाते यो दीक्षतऽआग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्भवति यो वै व्विष्णुः सोमः स हविर्वाऽएष देवानां भवति यो दीक्षते तदेनमन्तर्जम्भऽआदधाते तत्प्रत्यक्षꣳ सोमान्निर्मुच्यते यदाहैतत्त्वं देव सोम देवो देवां ३ ऽ उपागा इदमहं मनुष्यान्त्सह रायस्पोषेणेति भूमा वै रायस्पोषः सह भूम्नेत्येवैतदाह ॥१९॥ अथोपनिष्क्रामति। ''स्वाहा निर्व्वरुणस्य पाशान्मुच्य''ऽइति व्वरुणपाशो वाऽएषोऽन्तर्भवति योऽन्यस्यासंस्तत्प्रत्यक्षं व्वरुणपाशान्निर्मुच्यते यदाह स्वाहा निर्व्वरुणस्य पाशान्मुच्यऽइति ॥२०॥ अथेत्याहवनीये समिधमभ्यादधाति। ''अग्ने व्व्रतपास्त्वे व्व्रतपा''ऽइत्यग्निर्हि देवानां व्व्रतपतिस्तस्मादाहाग्ने व्व्रतपास्त्वे व्व्रतपाऽइति ''या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ सा मयि। यथायथं नौ व्व्रतपते व्व्रतान्यनु मे दीक्षां दीक्षापतिरमꣳस्तानु तपस्तपस्पति''रिति तत्प्रत्यक्षमग्नेर्निर्मुच्यते स स्वेन सतात्मना यजते तस्मादस्यात्राश्नन्ति मानुषो हि भवति तस्मादस्यात्र नाम गृह्णन्ति मानुषो हि भवत्यथ यत्पुरा नाश्नन्ति यथा हविषोऽहुतस्य नाश्नीयादेवं तत्तस्माद्दिक्षीतस्य नाश्नीयादथात्राङ्गुलीर्व्विसृजते ॥२१॥ Cf. का. श. ४. ६. ३; तै. सं. ६. ३. २; मै. सं. ३. ९. १; कठ. सं. २६. २; कपि. सं. ४०. ६; ऐ. ब्रा. १. २८; शां. ब्रा. ९. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. ६. ३. )

---

१. मा. सं. ५. ३९.
२, ३. देवां २॥ऽउपागा इति. ग. घ.
४. मा. सं. ५. ३९.
५. मुच्यऽइति इति. ग. मुच्यऽइति इति. घ.
६. अभ्यादधातीति. ग.
७, ८. मा. सं. ५. ४०

## ३. ५. ३.

### ( अथाऽग्नीषोमीयपशुयागः )

### ( तत्र यूपच्छेदनम् )

यूपं व्रक्ष्यन्वैष्णव्यर्चा जुहोति[1] । वैष्णवो हि यूपस्तस्माद्वैष्णव्यर्चा जुहोति ॥१॥ यद्वेव वैष्णव्या जुहोति । यज्ञो वै विष्णुर्यज्ञेनैवैतद्यूपमच्छैति तस्माद्वैष्णव्यर्चा जुहोति ॥२॥ स यदि स्रुचा जुहोति । चतुर्गृहीतमाज्यं गृहीत्वा जुहोति यद्यु स्रुवेण स्रुवेणैवोपहत्य जुहो"त्युरु विष्णो[2] विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहे"ति ॥३॥ यदाज्यं परिशिष्टं भवति । तदादत्ते यत्तक्षणः शस्त्रं भवति तत्तक्षादत्ते तऽआयन्ति स यं यूपं जोषयन्ते ॥४॥ तमेवमभिमृश्य जपति । पश्चाद्वैव प्राङ् तिष्ठन्नभिमन्त्रयतेऽ"त्यन्याँन्[3] ३ऽअगां नान्यान् ३ऽउपागा"मित्यति ह्यन्यानेति नान्यानुपैति तस्मादाहात्यन्यान्३ ऽअगां नान्यान् ३ऽउपागामिति॥५॥ "अर्व्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्य" ऽइति । अर्व्वाग्घ्येनं परेभ्यो वृश्चति यऽएतस्मात्पराञ्चो भवन्ति परोऽवरेभ्य इति परो ह्येनमवरेभ्यो वृश्चति यऽएतस्मादर्व्वाञ्चो भवन्ति तस्मादाहार्व्वाक्त्वा परेभ्यो ऽविदं परोऽवरेभ्य ऽइति ॥६॥ "तं त्वा[6] जुषामहे देव वनस्पते देवयज्याया"ऽइति । तद्यथा बहूनां मध्यात्साधवे कर्मणे जुषेत स रातमनास्तस्मै कर्मणे स्यादेवमेवैनमेतद्बहूनां मध्यात्साधवे कर्मणे जुषते स रातमना व्रश्चनाय भवति ॥७॥ "देवाँस्त्वा देवयज्यायै जुषन्ता" मिति । तद्वै समृद्धं यं देवाः साधवे कर्मणे जुषान्तै तस्मादाह देवास्त्वा देवयज्यायै जुषन्तामिति ॥८॥ अथ स्रुवेणोपस्पृशति । "विष्णवे त्वे"ति वैष्णवो हि यूपो यज्ञो वै विष्णुर्यज्ञाय ह्येनं वृश्चति

---

१. जुहोति इति. घ. २. मा. सं. ५. ४१. ३. मा. सं. ५. ४२.

३. त्यन्यां २॥ऽअगां इति. ग. घ. ४-८, मा. सं. ५. ४२.

तस्मादाह विष्णवे त्वेति ॥९॥ अथ दर्भतरुणकमन्तर्दधाति । "ओषधे त्रायस्वे"ति वज्रो वै परशुस्तथो हैनमेष वज्रः परशुर्न हिनस्त्यथ परशुना प्रहरति "स्वधिते मैनꣳ हिꣳसी"रिति वज्रो वै परशुस्तथो हैनमेष वज्रः परशुर्न हिनस्ति ॥१०॥ स यं प्रथमꣳ शकलमपच्छिनत्ति । तमादत्ते तं वाऽअनक्षस्तम्भं वृश्चेदुत ह्येनमनसा वहन्ति तथानो न प्रतिबाधते ॥११॥ तं प्राञ्चं पातयेत् । प्राची हि देवानां दिगथोऽउदञ्चमुदीची हि मनुष्याणां दिगथो प्रत्यञ्चं दक्षिणायै त्वेवैनं दिशः परिविबाधिषेतैषा वै दिक् पितॄणां तस्मादेनं दक्षिणायै दिशः परिबिबाधिषेत ॥१२॥ तं प्रच्यवमानमनुमन्त्रयते । "द्यां मा लेखीरन्तरिक्षं मा हिꣳसीः पृथिव्या सम्भवे"ति वज्रो वाऽएष भवति यं यूपाय वृश्चन्ति तस्माद्वज्रात्प्रच्यवमानादिमे लोकाः सꣳरेजन्ते तदेभ्यऽएवैनमेतल्लोकेभ्यः शमयति तथेमांल्लोकाञ्छान्तो न हिनस्ति ॥१३॥ स यदाह । द्यां मा लेखीरिति दिवं मा हिꣳसीरित्येवैतदाहान्तरिक्षं मा हिꣳसीरिति नात्र तिरोहितमिवास्ति पृथिव्या सम्भवेति पृथिव्या सञ्जानीष्वेत्येवैतदाह "यꣳ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाये"त्येषꣳ ह्येनꣳ स्वधितिस्तेजमानः प्रणयति ॥१४॥ अथावृश्चनमभिजुहोति । नेदतो नाष्ट्रा रक्षाꣳस्यनूत्तिष्ठानिति वज्रो वाऽआज्यं तद्वज्रेणैवैतन्नाष्ट्रा रक्षाꣳस्यवबाधते तथातो नाष्ट्रा रक्षाꣳसि नानूत्तिष्ठन्त्यथो रेतो वाऽआज्यं तद्वनस्पतिष्वेवैतद्रेतो दधाति तस्माद्रेतस ऽआवृश्चनाद्वनस्पतयोऽनु प्रजायन्ते ॥१५॥ स जुहोति । "अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेमे"ति नात्र तिरोहितमिवास्ति ॥१६॥ तं परिवासयति । स यावन्तमेवाग्रे परिवासयेत्तावान्स्यात् ॥१७॥

---

१. त्वेति. ग, त्वेति. घ.  २, ३ मा. सं. ५. ४२.  ४ उदञ्चमिति. ग.
५, ६. मा. सं. ५. ४३.  ७. स्येष इति. घ.  ८. वा इति. ग.
९. वनस्पतयो इति. ग.  १०. मा. सं. ५. ४३.

( अर्द्धप्रपाठकः ॥६४॥ )

पञ्चारत्निं[1] परिवासयेत् । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्य तस्मात्पञ्चारत्निं परिवासयेत् ॥१८॥ षडरत्निं परिवासयेत् । षड्वाऽऋतवः संवत्सरस्य संवत्सरो व्वज्रो व्वज्रो यूपस्तस्मात्षडरत्निं परिवासयेत् ॥१९॥ अष्टारत्निं परिवासयेत् । अष्टाक्षरा वै गायत्री पूर्व्वार्धो वै यज्ञस्य गायत्री पूर्वार्धऽएष यज्ञस्य तस्मादष्टारत्निं परिवासयेत् ॥२०॥ नवारत्निं परिवासयेत् । त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नवारत्निं परिवासयेत् ॥२१॥ एकादशारत्निं परिवासयेत् । एकादशाक्षरा वै त्रिष्टुब्वज्रस्त्रिष्टुब्वज्रो यूपस्तस्मादेकादशारत्निं परिवासयेत् ॥२२॥ द्वादशारत्निं परिवासयेत् । द्वादश वै मासाः संवत्सरस्य संवत्सरो व्वज्रो व्वज्रो यूपस्तस्माद्द्वादशारत्निं परिवासयेत् ॥२३॥ त्रयोदशारत्निं परिवासयेत् । त्रयोदश वै मासाः संवत्सरस्य संवत्सरो व्वज्रो व्वज्रो यूपस्तस्मात्त्रयोदशारत्निं परिवासयेत् ॥२४॥ पञ्चदशारत्निं परिवासयेत् । पञ्चदशो[2] वै व्वज्रो व्वज्रो यूपस्तस्मात्पञ्चदशारत्निं परिवासयेत् ॥२५॥ सप्तदशारत्निर्व्वाजपेययूपः । अपरिमितऽएव स्यादपरिमितेन वाऽएतेन व्वज्रेण देवाऽअपरिमितमजयंस्तथोऽएवैषऽएतेन व्वज्रेणापरिमितेनैवापरिमितं जयति तस्मादपरिमितऽएव स्यात् ॥२६॥ स वाऽअष्टाश्रिर्भवति । अष्टाक्षरा वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्धऽएष यज्ञस्य तस्मादष्टाश्रिर्भवति ॥२७॥ Cf. का. श. ४. ६. ४; तै. सं. ६. ३. ३; मै. सं. ३. ९. २; कठ. सं. २६. ३. ४; कपि. सं. ४१. १, २; ऐ. ब्रा. २. १; शां ब्रा. १०. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ६. ४. )

( इति षष्ठोऽध्यायः )

---

१. पञ्चारत्निमिति. ग.   २. पञ्चदश इति. घ.

## ३. ५. ४.

### ( यूपोच्छ्रयणादि )

अभ्रिमादत्ते । "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसी"ति समानऽएतस्य यजुषो बन्धुर्योषो वाऽएषा यदभ्रिस्तस्मादाह नार्यसीति ॥१॥ अथावटं परिलिखति । "इदमहꣳ रक्षसां ग्रीवाऽअपिकृन्तामी"ति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवाऽअपिकृन्तति ॥२॥ अथ खनति । प्राञ्चमुत्करमुत्किरत्युपरेण सम्मायावटं खनति तदग्रेण प्राञ्चं यूपं निदधात्येतावन्मात्राणि बर्हीꣳष्युपरिष्टादधिनिदधाति तदेवोपरिष्टाद्यूपशकलमधिनिदधाति पुरस्तात्पार्श्वतश्चषालमुपनिदधात्यथ यवमत्यः प्रोक्षण्यो भवन्ति सोऽसावेव बन्धुः ॥३॥ स यवानावपति । "यवोऽसि यवयास्मद्द्वेषो यवयारातीरि"ति नात्र तिरोहितमिवास्त्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यमेवैतत्करोति ॥४॥ स प्रोक्षति । "दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वे"ति वज्रो वै यूपऽएषां लोकानामभिगुप्त्याऽएषां त्वा लोकानामभिगुप्त्यै प्रोक्षामीत्येवैतदाह ॥५॥ अथ याः प्रोक्षण्यः परिशिष्यन्ते । ताऽअवटेऽवनयति "शुन्धन्तां लोकाः पितृषदना"ऽइति पितृदेवत्यो वै कूपः खातस्तमेवैतन्मेध्यं करोति ॥६॥ अथ बर्हीꣳषि । प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति "पितृषदनमसी"ति पितृदेवत्यं वाऽअस्यैतद्भवति यन्निखातꣳ स यथानिखातऽओषधिषु मितः स्यादेवमेतास्वोषधिषु मितो भवति ॥७॥ अथ यूपशकलं प्रास्यति । तेजो ह वाऽएतद्वनस्पतीनां यद्बाह्याशकलस्तस्माद्यदा बाह्याशकलमपतक्ष्णुवन्त्यथ शुष्यन्ति तेजो ह्येषामेतत्तद्यद्यूपशकलं प्रास्यति सतेजसं मिनवानीति तद्यदेषऽएव भवति नान्यऽएष हि यजुष्कृतो मेध्यस्तस्माद्यूपशकलं प्रास्यति ॥८॥ स प्रास्यति । "अग्रेणीरसि स्वावेशऽउन्नेतॄणा"मिति पुरस्ताद्वाऽअस्मादे-

---

१. मा. सं. ६. १.　२. नार्यसीति. ग.　३, ५-८. मा. सं. ६. १.
४. यवमत्य इति. घ.　९. मेतास्विति. घ.　१०. मा. सं. ६. २.

षोऽपच्छिद्यते तस्मादाहाग्रेणीरसि स्वावेशऽउन्नेतॄणामित्ये"तस्य वित्तादधि त्वा स्थास्यती"त्यधि ह्येनं तिष्ठति तस्मादाहैतस्य वित्तादधि त्वा स्थास्यतीति ॥९॥ अथ स्रुवेणोपहत्याज्यम् । अवटमभिजुहोति नेदधस्तान्नाष्ट्रा रक्षाᳩं स्युपोत्तिष्ठानिति वज्रो वाऽआज्यं तद्वज्रेणैवैतन्नाष्ट्रा रक्षाᳩंस्यवबाधते तथाधस्तान्नाष्ट्रा रक्षाᳩंसि नोपोत्तिष्ठत्यथ पुरस्तात्परीत्योदङ्ङासीनो यूपमनक्ति सऽआह 'यूपायाज्यमानायानुब्रूही'ति ॥१०॥ सोऽनक्ति । "देवस्त्वा सविता मध्वानक्त्वि"ति सविता वै देवानां प्रसविता यजमानो वाऽएष निदानेन यद्यूपः सर्व्वं वाऽइदं मधु यदिदं किं च तदेनमनेन सर्व्वेण सᳩं स्पर्शयति तदस्मै सविता प्रसविता प्रसौति तस्मादाह देवस्त्वा सविता मध्वानक्त्विति ॥११॥ अथ चषालमुभयतः प्रत्यज्य प्रतिमुञ्चति । "सुपिप्पलाभ्यस्त्वौषधीभ्य"ऽइति पिप्पलᳩं ह्यैवास्यैतद्यन्मध्ये संगृहीतमिव भवति तिर्यग्वाऽइदं वृक्षे पिप्पलमाहतᳩं स यदेवेदᳩं सम्बन्धनं चान्तरोपेनितमिव तदेवैतत्करोति तस्मान्मध्ये संगृहीतमिव भवति ॥१२॥ आन्तमग्निष्ठामनक्ति । यजमानो वाऽअग्निष्ठा रसऽआज्यᳩं रसेनैवैतद्यजमानमनक्ति तस्मादान्तमग्निष्ठामनक्त्यथ परिव्ययणं प्रति समन्तं परिमृशत्यथाहो'च्छ्रीयमाणायानुब्रूही'ति ॥१३॥ सऽउच्छ्रयति । "द्यामग्रेणास्पृक्षऽआन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृᳩंही"ति वज्रो वै यूपऽएषां लोकानामभिजित्यै तेन वज्रेणेमांल्लोकान्स्पृणुतऽएभ्यो लोकेभ्यः सपत्नान्निर्भजति ॥१४॥ अथ मिनोति । "या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा ऽअयासः । अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरी"त्येतया त्रिष्टुभा मिनोति वज्रस्त्रिष्टुब्वज्रो यूपस्तस्मात्त्रिष्टुभा मिनोति ॥१५॥ सम्प्रत्यग्निमग्निष्ठां मिनोति । यज-

---

१. मा. सं ६. २.
२. स्थास्यतीति. ग.
३. स्यपबाधत इति. घ.
४, ६. मा. सं. ६. २.
५. मुभयतः इति. घ.
७. मा. सं. ६. २.
८. एभ्यो इति. घ.
९. निर्भजतीति. घ.
१०. मा. सं. ६. ३.

भानो वाऽअग्निष्ठाग्निरु वै यज्ञः स यदग्नेरग्निष्ठाᳪं ह्वलयेद्ध्वलेद्ध यज्ञाद्यजमानस्तस्मात्सम्प्रत्यग्निमग्निष्ठां मिनोत्यथ पर्यूहत्यथ पर्यूषस्यथाप ऽउपनिनयति ॥१६॥ अथैवमभिपद्य व्वाचयति । "व्विष्णोः कर्माणि पश्यत यतो व्व्रतानि पस्पशे । इन्द्रस्य युज्यः सखे"ति व्वज्रं वाऽएष प्राहार्षीद्यो यूपमुदशिश्रियद्विष्णोर्व्विजितिं पश्यतेत्येवैतदाह यदाह व्विष्णोः कर्माणि पश्यत यतो व्व्रतानि पस्पशे । इन्द्रस्य युज्यः सखेतीन्द्रो वै यज्ञस्य देवता व्वैष्णवो यूपस्त ᳪं सेन्द्रं करोति तस्मादाहेन्द्रस्य युज्यः सखेति ॥१७॥ अथ चषालमुदीक्षते । "तद्विष्णोः परमं पदᳪं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्"मिति व्वज्रं वाऽएष प्राहार्षीद्यो यूपमुदशिश्रियत्तां व्विष्णोर्व्विजितिं पश्यतेत्येवैतदाह यदाह तद्विष्णोः परमं पदᳪंसदा पश्यन्ति सूरयः । दिवीव चक्षुराततमिति ॥१८॥ अथ परिव्ययति । अनग्नतायै न्वेव परिव्ययति तस्मादत्रेव परिव्ययत्यत्रेव हीदं व्वासो भवत्यन्नाद्यमेवास्मिन्नेतद्दधात्यत्रेव हीदमन्नं प्रतितिष्ठति तस्मादत्रेव परिव्ययति ॥१९॥ त्रिवृता परिव्ययति । त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृता परिव्ययति ॥२०॥ स परिव्ययति । "परिवीरसि परित्वा दैवीर्व्विशो व्ययन्तां परीमं यजमानᳪं रायो मनुष्याणा"मिति तद्यजमानायाशिषमाशास्ते यदाह परीमं यजमानᳪं रायो मनुष्याणामिति ॥२१॥ अथ यूपशकलमवगूहति "दिवः सूनुरसी"ति प्रजा हैवास्यैषा तस्माद्यदि यूपैकादशिनी स्यात्स्वᳪं स्वमेवावगूहेदविपर्यासं तस्य हैषा मुग्धानुव्रता प्रजा जायतेऽथ यो विपर्यासमवगूहति न स्वᳪं स्वं तस्य हैषा मुग्धाननुव्रता प्रजा जायते तस्मादु स्वᳪं स्वमेवावगूहेदविपर्यासᳪं ॥२२॥ स्वर्गस्यो

---

१. सम्प्रतीति. घ.　२. मा. सं. ६. ४.　३. युज्य इति. क.
४. सखेतीति, ग, सखेतीति. घ.　५. मा. सं. ६. ५.
६. मितीति. ग, मितीति. घ.　७. अनग्नतायै इति. ग.
८, १०. मा. सं, ६. ६.　९. दैवीर्विशो इति. घ.

हैष लोकस्य समारोहणः क्रियते । यद्यूपशकल ऽइयꣳ रशना रशनायै यूपशकलो यूपशकलाच्चषालं चषालात्स्वर्गं लोकꣳ समश्नुते ॥२३॥ अथ यस्मात्स्वरुर्नाम । एतस्माद्वाऽएषोऽपच्छिद्यते तस्यैतत् स्वमेवारुर्भवति तस्मात्स्वरुर्नाम ॥२४॥ तस्य यन्निखातम् । तेन पितृलोकं जयत्यथ यदूर्ध्वं निखातादा रशनायै तेन मनुष्यलोकं जयत्यथ यदूर्ध्वꣳ रशनायाऽआ चषालात्तेन देवलोकं जयत्यथ यदूर्ध्वं चषालाद्व्यङ्गुलं वा त्र्यङ्गुलं वा साध्याऽइति देवास्तेन तेषां लोकं जयति सलोको ह वै साध्यैर्देवैर्भवति यऽएवमेतद्वेद ॥२५॥ तं वै पूर्वार्धे मिनोति । व्वज्रो वै यूपो व्वज्रो दण्डः पूर्वार्धं वै दण्डस्याभिपद्य प्रहरति पूर्वार्ध ऽएष यज्ञस्य तस्मात्पूर्वार्धे मिनोति॥२६॥ यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम पुरस्ताद्वै प्रज्ञा पुरस्तान्मनोजवस्तस्मात्पूर्वार्धे मिनोति ॥२७॥ स वाऽअष्टाश्रिर्भवति । अष्टाक्षरा वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्ध ऽएष यज्ञस्य तस्मादष्टाश्रिर्भवति ॥२८॥ तꣳ ह स्मैतं देवाऽअनुप्रहरन्ति । यथेदमप्येतर्ह्येकेऽनुप्रहरन्तीति देवाऽअकुर्व्वन्निति ततो रक्षाꣳसि यज्ञमनूदपिबन्त ॥२९॥ ते देवाऽअध्वर्युमब्रुवन् । यूपशकलमेव जुहुधि तदु हैष स्वगाकृतो भविष्यति तथो रक्षाꣳसि यज्ञं नानूत्पास्यन्तेऽयं वै व्वज्रऽउद्यतऽइति ॥३०॥ सोऽध्वर्युः । यूपशकलमेवाजुहोत्तदु हैष स्वगाकृतऽआसीत्तथो रक्षाꣳसि यज्ञं नानूदपिबन्तायं वै व्वज्रऽउद्यतऽइति ॥३१॥ तथोऽएवैष एतत् । यूपशकलमेव जुहोति तदु हैष स्वगाकृतो भवति तथो रक्षाꣳसि यज्ञं नानूत्पिबन्तेऽयं वै व्वज्रऽउद्यतऽइति स जुहोति

१. एष इति. ग. २. गायत्री इति. ग. ३. एतर्ह्येके इति. घ.
४. तदाहैष इति. घ. ५. नानूदपिबन्तेति. घ.

दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहेति ॥३२॥
Cf. का. श. ४. ७. १; तै सं. ६. ३. ४; मै. सं. ३. ९. ३; कपि. सं ४१. ३; काठ. सं. २६. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. ७. १. )

३. ५. ५.

( यूपैकादशिनी )

यावती वै वेदिस्तावती पृथिवी । वज्रा वै यूपास्तदिमामेवै-तत्पृथिवीमेतैर्वज्रैस्स्पृणुतेऽस्यै सपत्नान्निर्भजति तस्माद्यूपैकादशिनी भवति द्वादशऽउपशयो भवति वितष्टस्तं दक्षिणतऽउपनिदधाति तद्यद्द्वादशऽउपशयो भवति ॥१॥ ( शतम् २००० ॥ ) देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्यऽआसङ्गाद्बिभयांचक्रुस्तद्यऽएतऽउ-च्छ्रिता यथेषुरस्ता तया वै स्तृणुते वा न वा स्तृणुते यथा दण्डः प्रहृतस्तेन वै[1] स्तृणुते वा न वा स्तृणुतेऽथ यऽएष द्वादशऽउपशयो भवति यथेषुरायतानस्ता यथोद्यतमप्रहृतमेवमेष वज्रऽउद्यतो दक्षि-णतो नाष्ट्राणाꣳ रक्षसामपहत्यै तस्माद्द्वादशऽउपशयो भवति ॥२॥ तं निदधाति[2] । "एष[3] ते पृथिव्यां लोकऽआरण्यस्ते[4] पशु"रिति पशुश्च वै यूपश्च तदस्माऽआरण्यमेव पशूनामनुदिशति तेनोऽएष पशुमान् भवति तद्द्वयं यूपैकादशिन्यै संमयनमाहुः[5] श्वःसुत्यायै ह न्वेवैके संमिन्वन्ति प्रकुर्वताये[6] चैव श्वःसुत्यायै यूपं मिन्वन्तीत्यु च ॥३॥ तदु तथा न[7] कुर्यात् । अग्निष्टमेवोच्छ्रयेदिदं[8] वै यूपमुच्छ्रित्याध्वर्युरा परिव्ययणान्नान्वर्जत्यपरिवीता वाऽएतऽएताꣳ रात्रिं वसन्ति सा न्वेव परिचक्षा पशवे वै यूपमुच्छ्रयन्ति प्रातर्वै पशूनालभन्ते तस्मादु

१. वै स्तृणुते इति. ग. २. निदधातीति घ ३. मा. सं. ६. ६.
४. आरण्यस्ते इति. ग. घ. ५. संमयनमिति. ग. ६. प्रकुर्वतायै इति.ग.घ.
७. न इति. ग. ८. अग्निष्ठमिति. घ.

प्रातरेवोच्छ्रयेत् ॥४॥ स यऽउत्तरोऽग्निष्ठात्स्यात्[1] । तमेवाग्रऽउच्छ्रयेदथ दक्षिणमथोत्तरं दक्षिणार्ध्यमुत्तमं तथोदीची भवति ॥५॥ अथोऽइतरथाहुः । दक्षिणमेवाग्रेऽग्निष्ठादुच्छ्रयेदथोत्तरमथ दक्षिणमुत्तरार्ध्यमुत्तमं तथो ह्यस्योदगेव[2] कर्मानुसन्तिष्ठतऽइति ॥६॥ स यो व्वर्षिष्ठः स दक्षिणार्ध्यः स्यात् । अथ ह्रसीयानथ ह्रसीयानुत्तरार्ध्यो ह्रसिष्ठस्तथोदीची भवति ॥७॥ अथ पत्नीभ्यः पत्नीयूपमुच्छ्रयन्ति । सर्वत्वाय न्वेव पत्नी यूपऽउच्छ्रीयते तत्त्वाष्ट्रं[3] पशुमालभते त्वष्टा वै सिक्तᳪ रेतो व्विकरोति तदेषऽएवैतत्सिक्तᳪ रेतो व्विकरोति मुष्करो भवत्येष वै प्रजनयिता यन्मुष्करस्तस्मान्मुष्करो भवति तं न सᳪस्थापयेत्पर्यग्निकृतमेवोत्सृजेत्स यत्सᳪस्थापयेत्प्रजायै हान्तमियात्तत्प्रजामुत्सृजति तस्मान्न सᳪस्थापयेत्पर्यग्निकृतमेवोत्सृजेत् ॥८॥

Cf. का. श. ४. ७. २, तै. सं. ६. ६. ४.

इति माध्यान्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ७. २. )

## ३. ५. ६.

## ( पशूपाकरणादि )

पशुश्च वै यूपश्च । न वाऽऋते यूपात्पशुमालभन्ते कदा चन तद्यत्तथा न ह वाऽएतस्माऽ अग्रे पशवश्चक्षमिरे यदन्नमभविष्यन्यथेदमन्नं भूता[4] यथा हैवायं द्विपात्पुरुषऽउच्छ्रितऽएवᳪ हैव द्विपादऽउच्छ्रिताश्चेरुः ॥१॥ ततो देवाऽएतं व्वज्रं ददृशुः[5] । यद्यूपं[6] तमुच्छिश्रियुस्तस्माद्भीषा प्राव्लीयन्त ततश्चतुष्पादाऽअभवंस्ततोऽन्नमभवन्यथेदमन्नं भूताऽएतस्मै हि वाऽएतेऽतिष्ठन्त तस्माद्यूपऽएव पशुमालभन्ते नर्ते यूपात्कदाचन ॥२॥ अथोपाकृत्य पशुम् । अग्निं मथित्वा नियुनक्ति

---

१. स्यात् इति. ग. २. उदगेवेति. ग. ३. त्वाष्ट्रमिति. घ.
४. भूतं इति. ग. ५. ददृशुरिति. घ. ६. यूप इति. घ.

तद्यत्तथा न ह वाऽएतस्माऽअग्रे पशवश्चक्षमिरे यद्धविर्भविष्यन्त्यथैनानिदꣳ हविर्भूतानग्नौ जुह्वति तान्देवा ऽउपनिरुरुधुस्तऽउपनिरुद्धा नोपावेयुः ॥३॥ ते होचुः । न वाऽइमेऽस्य यामं विदुर्यदग्नौ हविर्जुह्वति नैतां प्रतिष्ठामुपरुध्यैव पशूनग्निं मथित्वाग्नावग्निं जुहवाम ते वेदिष्यन्त्येष वै किल हविषो यामऽएषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्युवैष्यन्ति ततो रातमनसऽआलम्भाय भविष्यन्तीति ॥४॥ तऽउपरुध्यैव पशून् । अग्निं मथित्वाग्नावग्निमजुहवुस्तेऽविदुरेष वै किल हविषो यामऽएषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्युवायंस्ततो रातमनसऽआलम्भायाभवन् ॥५॥ तथोऽएवैषऽएतत् । उपरुध्यैव पशुमग्निं मथित्वाग्नावग्निं जुहोति स वेदैष वै किल हविषो यामऽएषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्युवैति ततो रातमनाऽआलम्भाय भवति तस्मादुपाकृत्य पशुमग्निं मथित्वा नियुनक्ति ॥६॥ तदाहुः । नोपाकुर्यान्नाग्निं मन्थेद्रशनामेवादायाञ्जसोपपरेत्याभिधाय नियुञ्ज्यादिति तदु तथा न कुर्याद्यथाधर्म्मं तिरश्चथा चिकीर्षेदेवं तत्तस्मादेतदेवानुपरीयात् ॥७॥ अथ तृणमादायोपाकरोति । द्वितीयवान्निरुणधाऽइति द्वितीयवान्हि व्वीर्यवान् ॥ ॥८॥ स तृणमादत्ते । "उपावीरसी"त्युप हि द्वितीयोऽवति तस्मादाहोपावीरसी"त्युप देवान्दैवीर्व्विशः प्रागु"रिति दैव्यो वाऽएता व्विशो यत्पशवोऽस्थिषत देवेभ्यऽइत्येवैतदाह यदाहोप देवान्दैवीर्व्विशः प्रागुरिति ॥९॥ "उशिजो व्वह्नितमा"निति । व्विद्वाꣳसा हि देवास्तस्मादाहोशिजो व्वह्नितमानिति ॥१०॥ "देव त्वष्टर्व्वसु रमे"ति । त्वष्टा वै पशूनामीष्टे पशवो व्वसु तानेतद्देवाऽअतिष्ठमानांस्त्वष्टारमब्रुवन्नुपनिमदेति यदाह देव त्वष्टर्व्वसु रमेति ॥११॥

---

१. तान् इति. घ.  २. उप इति. घ.  ३. एवैष इति. घ.

४, ५. मा. सं. ६. ७.  ६. देवान्दैवीरिति. घ.  ७, ८. मा. सं. ६. ७.

"ह॒व्या ते स्वदन्ता''मि॒ति । यदा वा॒ऽएत॒ऽएत॒स्माऽअ॒भ्रियन्त यु॒द्ध-वि॒रभविष्यंस्त॒स्मादाह ह॒व्या ते स्वदन्तामि॒ति ॥१२॥ "रे॒वती र॒म-ध्व''मि॒ति । रेव॒न्तो हि॒ पश॒वस्त॒स्मादाह रे॒वती र॒मध्वामि॒ति "बृ॒हस्प-ते धार॒या व्वसू॒नी''ति ब्र॒ह्म वै बृ॒हस्प॒तिः पश॒वो व्वसु॒ ता॒नेत॒द्देवाऽ-अ॒तिष्ठमानान् ब्र॒ह्मणैव॒ पर॒स्तात्प॒र्यदधुस्तन्ना॒त्यायंस्त॒थोऽए॒वैनानेष॒ऽएत-द्ब्र॒ह्मणैव॒ पर॒स्तात्प॒रिदधाति तन्ना॒तियन्ति त॒स्मादाह बृ॒हस्पते धार॒-या व्वसू॒नी॒ति पा॒शं कृत्वा प्र॒तिमुञ्चत्यथा॒तो नि॒योजनस्यैव ॥१३॥

Cf. का. श. ४. ७. ३; तै. सं. ६. ३. ५. ६; मै. सं. ३. ९. ४, ५; कठ. २६. ६; कपि. सं. ४१. ४; ऐ. ब्रा. २. २; शां. ब्रा. १०.२.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीकाण्डे
पञ्चमप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. ७. ३. )

पञ्चमः प्रपाठकस्समाप्तः ॥
( कण्डिकासंख्या १२७ )

३. ६. १.

पा॒शं कृत्वा प्र॒तिमुञ्चति । "ऋ॒त॒स्य त्वा देवहविः पा॒शेन प्र॒तिमुञ्चामी॒''ति व्वरु॒ण्या वा॒ऽएषा यद्र॒ज्जुस्त॒देनमेत॒दृतस्यैव पा॒शेन प्र॒तिमुञ्चति त॒थो हैनमेषा॒ व्वरु॒ण्या र॒ज्जुर्न॒ हिनस्ति ॥१॥ "धर्षा मा॒नुष''ऽइ॒ति । न वा॒ऽएतम॒ग्रे मनु॒ष्योऽ धृष्णोर्त्स यदै॒वर्त्तस्य पा॒शे-नैत॒द्देवहवि॒ः प्रतिमुञ्चत्य॒थैनं मन॒ष्यो धृष्णोति त॒स्मादाह ध॒र्षा मा-नुषऽइ॒ति ॥२॥ अ॒थ नि॒युनक्ति । "दे॒वस्य त्वा सवितु॒ः प्रस॒वेऽश्वि॒-नोर्बा॒हुभ्यां पूष्णो ह॒स्ताभ्यामग्नीषो॒माभ्यां जु॒ष्टं नि॒युन॒ज्मी''ति त-द्य॒थैवादो॒ दैव॒तायै ह॒विर्गृह्णन्नादि॒शत्येव॒मेवैत॒द्देव॒ताभ्यामा॒दिशत्य॒थ प्रो॒क्षत्ये॒को वै प्रो॒क्षणस्य ब॒न्धुर्मे॒ध्यमे॒वैत॒त्करोति ॥३॥ स प्रो॒क्षति ।

---

१ मा. सं. ६. ७. २, ३. मा. सं. ६. ८ ४. एतदिति. ग.
५. नियोजनस्यैव इति. ग. घ. ६, ७. मा. सं. ६. ८. ८. यदेव इति. ग. घ.
९. इति. घ. ग. १०. मा. सं. ६. ९. ११ नियुनज्मीति. घ.

"[1]अद्भ्यस्त्वौषधीभ्य"ऽइति तद्यतऽएव सम्भवति ततऽएवैतन्मेध्यं करोतीदं[2]ꣳहि यदा व्वर्षत्यथौषधयो जायन्तऽओषधीर्जग्ध्वापः पीत्वा ततऽएष रसः सम्भवति रसाद्रेतो रेतसः पशवस्तद्यतऽएव सम्भवति यतश्च जायते ततऽएवैतन्मेध्यं करोति ॥४॥ "[3]अनु त्वा माता मन्यतामनु पिते"ति । स हि मातुश्चाधि पितुश्च जायते तद्यतऽएव जायते ततऽएवैतन्मेध्यं करोत्य"[4]नु भ्राता सगर्भ्यो ऽनुसखा सयूथ्य"ऽइति स यत्ते जन्म तेन त्वानुमतमारभऽइत्येवैतदाहा"[5]ग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामी"ति तद्याभ्यां देवताभ्यामारभते ताभ्यां मेध्यं करोति ॥५॥ अथोपगृह्णाति । "[6]अपां पेरुरसी"ति तदेनमन्तरतो मेध्यं करोत्यथाधस्तादुपोक्षत्या"[7]पो देवीः स्वदन्तु स्वात्तं चित्सद्देवहवि"रिति तदेनꣳसर्व्वतो मेध्यं करोति ॥६॥ अथाहा'ग्नये समिध्यमानायानुब्रूही'ति । स ऽउत्तरमाघारमाघार्यासꣳस्पर्शयन्त्स्रुचौ पर्य्येत्य जुह्वा पशुꣳसमनक्ति शिरो वै यज्ञस्योत्तरऽआघार ऽएष वाऽ अत्र यज्ञो भवति यत्पशुस्तद्यज्ञऽ एवैतच्छिरः प्रतिदधाति तस्माज्जुह्वा पशुꣳसमनक्ति ॥७॥ स ललाटे समनक्ति । "सं ते प्राणो व्वातेन गच्छता"मिति "समङ्गानि यजत्रै"रित्यꣳसयोः "सं यज्ञपतिराशिषे"ति श्रोण्योः स यस्मै कामाय पशुमालभन्ते तत्प्राप्नुहीत्येवैतदाह ॥८॥ इदं [11]वै पशोः संज्ञप्यमानस्य । प्राणो व्वातमपिपद्यते तत्प्राप्नुहि यत्ते प्राणो व्वातमपिपद्याताऽइत्येवैतदाह समङ्गानि यजत्रैरित्यङ्गैर्व्वाऽअस्य यजन्ते तत्प्राप्नुहि यत्तेऽङ्गैर्यजान्ताऽइत्येवैतदाह सं यज्ञपतिराशिषेति यजमानाय वाऽएतेनाशिषमाशासते तत्प्राप्नुहि यत्त्वया यजमानायाशिषमाशासान्ताऽइत्येवैतदाह सादयति स्रुचावथ प्रवरायाश्रावयति सोऽसावेव बन्धुः ॥९॥ अथ द्वितीयमाश्रावयति । द्वौ ह्यत्र होतारौ भवतः स मैत्रावरुणायाहैवा-

---

१, ३–५, मा. सं. ६. ९.    २. इदꣳहि इति. ग. घ.

६–१०. मा. सं. ६. १०.    ११. वै इति. ग.

श्रावयति यजमानं त्वेव प्रवृणीतेऽ'ग्निर्हि दैवीनां विशां पुरऽएते'त्यग्निर्हि देवतानां मुखं तस्मादाहाग्निर्हि दैवीनां विशां पुरऽएतेत्य'यं यजमानो मनुष्याणामि'ति तथ्ठंहि सोऽन्वर्धी भवति यस्मिन्नर्धे यजते तस्मादाहायं यजमानो मनुष्याणामिति तयोरस्थूरि गार्हपत्यं दीदयच्छतथ्ठं हिमा द्वायूऽइति तयोरनार्तानि गार्हपत्यानि शतं ववर्षाणि सन्त्वित्येवैतदाह ॥१०॥ राधाथ्ठंसीत्सम्पृश्चानावसम्पृश्चानौ तन्वऽइति । राधाथ्ठं स्येव सम्पृश्चाथां मापि तनूरित्येवैतदाह तौ ह यत्तनूरपि सम्पृश्चीयातां प्राग्निर्यजमानं दहेत्स यदग्नौ जुहोति तदेषोऽग्नये प्रयच्छत्यथ यामेवात्रर्त्विजो यजमानायाशिषमाशासते तामस्मै सर्व्वामग्निः समर्धयति तद्राधाꣳस्येव सम्पृश्चाते नापि तनूस्तस्मादाह राधाꣳसीत्सम्पृश्चानावसम्पृश्चानौ तन्वऽइति ॥११॥

Cf. का. श. ४. ७. ४; तै. सं. ६. ३. ६, ७., मै सं. ३. ९. ६; कठ. सं. २६. ८; कपि. सं. ४१. ६, ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
षष्ठप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ७. ४. )
( सप्तमोऽध्यायस्समाप्तः ॥ )

## ३. ६. २.

तद्यत्रैतत्प्रवृतो होता होतृषदन ऽउपविशति । तदुपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादत्ते ॥१॥ अथाप्रीभिश्चरन्ति । तद्यदाप्रीभिश्चरन्ति सर्व्वेणेव वाऽएष मनसा सर्व्वेणेवात्मना यज्ञꣳ सम्भरति सं च जिहीर्षति यो दीक्षते तस्य रिरिचानऽइवात्मा भवति तमेताभिराप्रीभिराप्याययन्ति तद्यदाप्याययन्ति तस्मादाप्रियो नाम तस्मादाप्रीभिश्चरन्ति ॥२॥ ते वाऽएतऽएकादश प्रयाजा भवन्ति । दश वाऽइमे पुरुषे प्राणाऽआत्मैकादशो यस्मिन्नेते प्राणाः प्रतिष्ठिता-

१. भवतीति. ग, घ. २. यामेव इति. घ. ३. तामस्यै इति. ग.
४. तस्मादिति. ग. ५. आदत्ते इति. क.

ऽएतावान्वै पुरुषस्तदस्य सर्व्वमात्मानमाप्याययन्ति तस्मादेकादश प्रयाजा भवन्ति ॥३॥ सऽआश्राव्याह । 'समिधः प्रेष्ये'ति प्रेष्य प्रेष्येति चतुर्थे चतुर्थे प्रयाजे समानयमानो दशभिः प्रयाजैश्चरति दश प्रयाजानिष्ट्वाह 'शासमाहरे'त्यसिं वै शासऽइत्याचक्षते ॥४॥ अथ यूपशकलमादत्ते । तावग्रे जुह्वा अक्त्वा पशोर्ल्ललाटमुपस्पृशति "घृतेनाक्तौ पशूंस्त्रायेथा"मिति व्वज्रो वै यूपशकलो व्वज्रः शासो व्वज्रऽआज्यं तमेवैतत्कृत्स्नं व्वज्रꣳ सम्भृत्य तमस्याभिगोप्तारं करोति नेदेनं नाष्ट्रा रक्षाꣳसि हिनसन्निति पुनर्यूपशकलमवगूहत्येषा ते प्रज्ञाताश्रिरस्त्वित्याह शासं प्रयच्छन्त्सादयति स्रुचौ ॥५॥ अथाह 'पर्य्यग्नयेऽनुब्रूहीति । उल्मुकमादायाग्नीत्पर्य्यग्निं करोति तद्यत्पर्य्यग्निं करोत्यच्छिद्रमेवैनमेतदग्निना परिगृह्णाति नेदेनं नाष्ट्रा रक्षाꣳसि प्रमृशानित्याग्निर्हि रक्षसामपहन्ता तस्मात्पर्य्यग्निं करोति तद्यत्रैनꣳ श्रपयन्ति तदभिपरिहरति ॥६॥ तदाहुः । पुनरेतदुल्मुकꣳ हरेदथात्रान्यमेवाग्निं निर्म्मथ्य तस्मिन्नेनꣳ श्रपयेयुराहवनीयो वाऽएष न वाऽएष तस्मै यदस्मिन्नश्रतꣳ श्रपयेयुस्तस्मै वाऽएष यदस्मिञ्छृतं जुहुयुरिति ॥७॥ तदु तथा न कुर्यात् । यथा वै ग्रसितमेवमस्यैतद्भवति यदेनेन पर्य्यग्निं करोति स यथा ग्रसितमनुह्वायाच्छिद्य तदन्यस्मै प्रयच्छेदेवं तत्तस्मादेतस्यैवोल्मुकस्याङ्गारान्निर्मृद्य तस्मिन्नेनं श्रपयेयुः ॥८॥ अथोल्मुकमादायाग्नीत्पुरस्तात्प्रतिपद्यते । अग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षाꣳस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण पशुं नयन्ति तं व्वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमानः ॥९॥ तदाहुः । नैष यजमानेनान्वारभ्यो मृत्यवे ह्येतं नयन्ति तस्मान्नान्वारभेतेति तदन्वेवारभेत न वाऽएतं मृत्यवे नयन्ति यं यज्ञाय नयन्ति

---

१. पुरुषस्तदिति. ग.　　२. प्रेष्येति. ग.　　३. आचक्षते इति. क.
४. मा. सं. ६. ११.　　५. अनुब्रूहीति. ग.　　६. यथाइति. ग.
७. एतत्पुरस्तादिति. घ.　　८. रक्षाꣳसीति. ग.　　९. तदाहुरिति. ग. घ.
१०. नयन्ति इति. ग.　　१०. मृत्यवे इति. ग. घ.

तस्मादन्वेवारभेत यन्नादु हैवात्मानमन्तरियाद्यन्नान्वारभेत तस्मादन्वेवारभेत तत्परोक्षमन्वारब्धं भवति व्वपाश्रपणीभ्यां प्रतिप्रस्थाता प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमानऽएतदु परोक्षमन्वारब्धं भवति ॥ ॥१०॥ अथ स्तीर्णायै व्वेदेः । द्वे तृणेऽअध्वर्युरादत्ते सऽआश्राव्याहो'पप्रेष्य होतर्हव्या देवेभ्य'ऽइत्येतदु व्वैश्वदेवं पशौ ॥११॥ अथ व्वाचयति । "रेवति यजमान"इति व्वाग्वै रेवती सा यद्वाग्बहु व्वदति तेन व्वाग्रेवती "प्रियं धाऽआविशे"त्यनार्तिमाविशेत्येवैतदाहो"रोरन्तरिक्षात्सजूर्देवेन व्वातेने"त्यन्तरिक्षं वाऽअनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथायं पुरुषोऽमूलऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्वातेनैनॐ संव्विदानान्तरिक्षाद्गोपायेत्येवैतदाह यदाहोरोरन्तरिक्षात्सजूर्देवेन व्वातेनेति ॥१२॥ "अस्य हविषस्त्मना यजे"ति । व्वाचमेवैतदाहानार्तस्यास्य हविषऽआत्मना यजेति "सं मस्य तन्वा भवे"ति व्वाचमेवैतदाहानार्तस्यास्य हविषस्तन्वा सम्भवति ॥१३॥ तद्यत्रैनं व्विशासन्ति । तत्पुरस्तात्तृणमुपास्यति "व्वर्षो व्वर्षीयसि यज्ञे यज्ञपतिं धा"ऽइति बर्हिरेवास्मा एतत्स्तृणात्यस्कन्नॐ हविरसदिति तद्यदेवास्यात्र विशास्यमानस्य किञ्चित्स्कन्दति तदेतस्मिन् प्रतितिष्ठति तथा नामुया भवति ॥१४॥ अथ पुनरेत्याहवनीयमभ्यावृत्यासते । नेदस्य संज्ञप्यमानस्याध्यक्षा ऽअसामेति तस्य न कूटेन प्रघ्नन्ति मानुषॐ हि तन्नोऽएव पश्चात्कर्णं पितृदेवत्यॐ हि तदपिगृह्य वैव मुखं तमयन्ति व्वेष्कं वा कुर्व्वन्ति तन्नाह जहि मारयेति मानुषॐ हि तत्संज्ञपयान्वगन्निति तद्धि देवत्रा स यदाहान्वगन्नित्येतर्हि ह्येष देवाननुगच्छति तस्मादाहान्वगन्निति ॥१५॥ तद्यत्रैनं निविध्यन्ति । तत्पुरा संज्ञपनाज्जुहोति "स्वाहा देवेभ्य" इत्यथ यदा प्राह संज्ञप्तः पशुरित्यथ जुहोति "देवेभ्यः स्वाहे"ति पुरस्तात्स्वाहाकृतयो वाऽ-

१. स्तीर्णायै व्वेदेः इति. घ. २. होतर्हव्या इति घ. ३. पशौ इति. ग.
४–९. मा. सं. ६. ११. १०. नामुया इति. घ. ११, १२. मा. सं. ६. ११.

अन्ये देवा ऽउपरिष्टात्स्वाहाकृतयोऽन्ये तानेवैतत्प्रीणाति तऽएनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ते वाऽएते परिपशव्येऽइत्याहुती स यदि कामयेत जुहुयादेते यद्यु कामयेतापि नाद्रियेत ॥१६॥
Cf. का. श. ४. ८. १; तै. सं. ६. ३. ८; मै. सं. ३. ९. ७, ८; काठ. सं. २६. ९; कपि. सं. ४१. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे षष्ठप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. ८. १. )

## ३. ६. ३.

## ( अग्नीषोमीयवपायागः )

यदा प्राह संज्ञप्तः पशुरिति। अथाध्वर्युराह 'नेष्टः पत्नीमुदानये'-त्युदानयति नेष्टा पत्नीं पान्नेजनं बिभ्रतीम् ॥१॥ तां वाचयति। "नमस्तऽआताने"ति यज्ञो वाऽआतानो यज्ञꣳ हि तन्वते तेन यज्ञऽआतानो जघनार्धो वाऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रसादयिष्यन् भवति तस्माऽएवैतद्यज्ञाय निह्नुते तथो हैनामेष यज्ञो न हिनस्ति तस्मादाह नमस्तऽआतानेति ॥२॥ "अनर्वा प्रेही"ति। असपत्नेन प्रेहीत्येवैतदाह "घृतस्य कुल्याऽउपऽऋतस्य पथ्याऽअन्वि"ति साधूपेत्येवैतदाह "देवीरापः शुद्धा वोढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा वयं परिवेष्टारो भूयास्मे"त्यपऽएवैतत्पावयति ॥३॥ अथ पशोः प्राणानद्भिः पत्न्युपस्पृशति। तद्यदद्भिः प्राणानुपस्पृशति जीवं वै देवानाꣳ हविरमृतममृतानामथैतत्पशुं घ्नन्ति यत्संज्ञपयन्ति यद्विशासत्यापो वै प्राणास्तदस्मिन्नेतान् प्राणान्दधाति तथैतज्जीवमेव देवानाꣳ हविर्भवत्यमृतममृतानाम् ॥४॥ अथ यत्पत्न्युपस्पृशति। योषा वै पत्नी योषायै वाऽइमाः प्रजाः प्रजायन्ते तदेनमेतस्यै योषायै प्रजनयति तस्मात्पत्न्युपस्पृशति ॥५॥ सोपस्पृशति। "वाचं ते शु-

१. पशुरितीति. ग. घ.  २, ४, ५. मा. सं. ६. १२.  ३. एवैतदिति. घ.
६. मा. सं. ६. १३.  ७. मा. सं. ६. १४.

न्धामी''ति मुखं ''प्राणं ते शुन्धामी''ति नासिके ''चक्षुस्ते शुन्धामी''त्यक्ष्यौ ''श्रोत्रं ते शुन्धामी''ति कर्णौ ''नाभिं ते शुन्धामी''ति योऽयमनिरुक्तः प्राणो ''मेढ्रं ते शुन्धामी''ति वा ''पायुं ते शुन्धामी''ति योऽयं पश्चात्प्राणस्तत्प्राणान्दधाति तत्समीरयत्यथ सꣳहृत्य पद''श्चरित्रांस्ते शुन्धामी''ति पद्भिर्वै प्रतितिष्ठति प्रतिष्ठित्याऽएव तदेनं प्रतिष्ठापयति ॥६॥ अथ याऽआपः परिशिष्यन्ते। अर्धा वा यावत्यो वा ताभिरेनं यजमानश्च शीर्षतोऽग्रेऽनुषिञ्चतस्तत्प्राणांश्चैवास्मिंस्तत्तौ धत्तस्तच्चैनमतः समीरयतः ॥७॥ तद्यत्क्रूरीकुर्वन्ति। यदास्थापयन्ति शान्तिरापस्तदद्भिः शान्त्या शमयतस्तदद्भिः संधत्तः ॥८॥ तावनुषिञ्चतः। ''मनस्तऽआप्यायतां वाक्तऽआप्यायतां प्राणस्तऽआप्यायतां चक्षुस्तऽआप्यायताꣳ श्रोत्रं तऽआप्यायता''मिति तत्प्राणान्धत्तस्तत्समीरयतो ''यत्ते क्रूरं यदास्थितं तत्तऽआप्यायतां निष्ट्यायता''मिति ॥९॥ तद्यत्क्रूरीकुर्वन्ति। यदास्थापयन्ति शान्तिरापस्तदद्भिः शान्त्या शमयतस्तदद्भिः संधत्त''स्तत्ते शुध्यत्वि''ति तन्मेध्यं कुरुतः ''शमहोभ्य'' ऽइति जघनेन पशुं निनयतः ॥१०॥ तद्यत्क्रूरीकुर्वन्ति। यदास्थापयन्ति नेदेतदन्वशान्तान्यहोरात्राण्यसन्निति तस्माच्छमहोभ्यऽइति जघनेन पशुं निनयतः ॥११॥ अथोत्तानं पशुं पर्यस्यन्ति। स तृणमन्तर्दधात्यो''षधे त्रायस्वे''ति वज्रो वाऽअसिस्तथो हैनमेष वज्रोऽसिर्न हिनस्त्यथासिनाभिनिदधाति ''स्वधिते मैनꣳ हिꣳसी''रिति वज्रो वाऽअसिस्तथो हैनमेष वज्रोऽसिर्न हिनस्ति ॥१२॥ सा या प्रज्ञाताग्रिः। तयाभिनिदधाति सा हि यजुष्कृता मेध्या तद्यदग्रं तृणस्य तत्सव्ये पाणौ कुरुतेऽथ यद्बुध्नं तद्दक्षिणेनादत्ते ॥१३॥ स यत्राच्छ्यति। यत

---

१-७, ९. मा. सं. ६. १४. ८. प्राणस्तदिति. घ.
१०-१३. मा. सं. ६. १५. १४. निनयतः इति.घ.
१५. अथोत्तानं इति. घ. १६, १७. मा. सं. ६. १५. १८. हिनस्तीति. घ.

एतल्लोहितमुत्पुतति तदुभयतोऽनक्ति "रक्षसां भागोऽसी"ति रक्षसाᳪ᳭ ह्येष भागो यदसृक् ॥१४॥ तदुपास्याभितिष्ठति । "इदमहᳪ᳭ रक्षोऽभितिष्ठामीदमहᳪ᳭ रक्षोऽवबाधऽइदमहᳪ᳭ रक्षोऽधमं तमो नयामी"ति तद्यज्ञेनैवैतन्नाष्ट्रा रक्षाᳪ᳭स्यवबाधते तद्यदमूलमुभयतः परिच्छिन्नं भवत्यमूलं वाऽइदमुभयतः परिच्छिन्नᳪ᳭ रक्षोऽन्तरिक्षमनुचरति यथायं पुरुषोऽमूलऽउभयतः परिच्छिन्नोन्तरिक्षमनुचरति तस्मादमूलमुभयतः परिच्छिन्नं भवति ॥१५॥ अथ व्वपामुत्खिदन्ति । तया व्वपाश्रपण्यौ प्रोर्णौति "घृतेन द्यावापृथिवी प्रोर्णुवाथा"मिति तदिमे द्यावापृथिवीऽऊर्जा रसेन भाजयत्यनयोरूर्जᳪ᳭ रसं दधाति ते रसवत्याऽउपजीवनीयेऽइमाः प्रजाऽउपजीवन्ति ॥१६॥ कार्ष्मर्यमय्यौ व्वपाश्रपण्यौ भवतः । यत्र वै देवाऽअग्रे पशुमालेभिरे तदुदीचः कृष्यमाणस्यावाङ्मेधः पपात सऽएष व्वनस्पतिरजायत तद्यत्कृष्यमाणस्यावाङ्पतत्तस्मात्कार्ष्मर्यस्तेनैवैनमेतन्मेधेन समर्धयति कृत्स्नं करोति तस्मात्कार्ष्मर्यमय्यौ व्वपाश्रपण्यौ भवतः ॥१७॥ तां परिवासयति । तां पशुश्रपणे प्रतपति तथो हास्यात्रापि शृता भवति पुनरुल्मुकमग्नीदादत्ते ते जघनेन चात्वालं यन्ति तऽआयन्त्यागच्छन्त्याहवनीयᳪ᳭ सऽएतत्तृणमध्वर्युराहवनीये प्रास्यति "व्वायो व्वेस्तोकाना"मिति स्तोकानाᳪ᳭ ह्येषा सामित् ॥१८॥ अथोत्तरतस्तिष्ठन्वपां प्रतपति । अत्येष्यन्वाऽएषोऽग्निर्भवति दक्षिणतः परीत्य श्रपयिष्यंस्तस्माऽएवैतन्निह्नुते तथो हैनमेषाऽतियन्तमग्निर्न हिनस्ति तस्मादुत्तरतस्तिष्ठन्वपां प्रतपति ॥१९॥ तामन्तरेण यूपं चाग्निं च हरन्ति । तद्यत्समया न हरन्ति येनान्यानि हवीᳪ᳭षि हरन्ति नेदशृतया समया यज्ञं प्रसजामेति यदु बाह्येन न हरन्त्यग्रेण यूपं बहिर्धा ह यज्ञात्कुर्युस्तस्मादन्तरेण यूपं चाग्निं च हरन्ति दक्षिणतः परीत्य प्रतिप्रस्थाता श्रपयति ॥२०॥ अथ स्रुवेणोपहत्याज्यम् ।

१, ३, ४. मा. सं. ६. १६. २. ह्येष इति. घ. ५. आहवनीयᳪ᳭ इति. घ.
६. मा. सं. ६. १६. ७. ह इति नाऽस्ति. ग. ८. प्रस्थाता इति. ग.

अध्वर्युर्व्वपामभिजुहो[1]"त्यग्निराज्यस्य व्वेतु स्वाहे"ति तथो हास्यैते स्तोकाः शृताः स्वाहाकृताऽआहुतयो भूत्वाग्निं प्राप्नुवन्ति ॥२१॥ अथाह 'स्तोकेभ्योऽनुब्रूही'ति । सऽआग्नेयी स्तोकेभ्योऽन्वाह तद्यदाग्नेयी स्तोकेभ्योऽन्वाहेतः प्रदाना वै व्वृष्टिरितो ह्यग्निर्व्वृष्टिं व्वनुते सऽएतैस्स्तोकैरेतान्त्स्तोकान्वनुते तऽएते स्तोका व्वर्षन्ति तस्मादाग्नेयी स्तोकेभ्योऽन्वाह यदा शृता भवति ॥२२॥ अथाह प्रतिप्रस्थाता शृता प्रचरेति । स्रुचावादायाध्वर्युरतिक्रम्याश्राव्याह 'स्वाहाकृतिभ्यः प्रेष्ये'ति व्वषट्कृते जुहोति ॥२३॥ हुत्वा व्वपामेवाग्रेऽभिघारयति । अथ पृषदाज्यं तदु ह [2]चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति प्राणः पृषदाज्यमिति व्वदन्तस्तदु ह याज्ञवल्क्यं चरकाध्वर्युरनुव्याजहारैवं कुर्व्वन्तं प्राणं वाऽअयमन्तरगादध्वर्युः प्राण ऽएनॅं हास्यतीति ॥२४॥ स ह स्म बाहूऽअन्ववेक्ष्याह । इमौ पलितौ बाहू क्व स्विद्ब्राह्मणस्य व्वचो बभूवेति न तदाद्रियेतोत्तमो वा[3]ऽएष प्रयाजो भवतीदं वै हविर्यज्ञ ऽउत्तमे प्रयाजे ध्रुवामेवाग्रेऽभिघारयति तस्यै हि प्रथमावाज्यभागौ होष्यन् भवति व्वपां वाऽअत्र प्रथमाॅं होष्यन् भवति तस्माद्वपामेवाग्रेऽभिघारयेदथ पृषदाज्यमथ यत्पशुं [4]नाभिघारयति नेदशृतमभिघारयाणीत्येतदेवास्य सर्व्वः पशुरभिघारितो भवति यद्वपामभिघारयति तस्माद्वपामेवाग्रेऽभिघारयेदथ पृषदाज्यम् ॥२५॥ अथाज्यमुपस्तृणीते । अथ हिरण्यशकलमवदधात्यथ व्वपामवद्यन्नाहा'ग्नीषोमाभ्यां छागस्य व्वपायै मेदसोऽनुब्रूही'त्यथ हिरण्यशकलमवदधात्यथोपरिष्टाद्धिराज्यस्याभिघारयति ॥२६॥ तद्यद्धिरण्यशकलावभितो [5]भवतः । [6]घ्नन्ति वाऽएतत्पशुं यदग्नौ जुह्वत्य-

१ मा. सं. ६. १६.

२. See तै. सं. ६. ३. ९. ६. प्राणापानौ वा एतत्पशूनां यत्पृषदाज्यं, आत्मा वपा, पृषदाज्यमभिघार्य वपामभिघारयति आत्मन्नेव पशूनां प्राणापानौ दधाति, also मै. सं. ३. १०. १.

३. वा इति. घ.

४. नाभिघारयतीति. ग. ५. भवत इति. घ. ६. घ्नन्ति इति. ग.

मृतमायुर्हिरण्यं तदमृतऽआयुषि प्रतितिष्ठति तथातऽउदेति तथा सञ्जीवति तस्माद्धिरण्यशकलावभितो भवतऽआश्राव्याहा'ग्नीषोमाभ्यां छागस्य व्वपां मेदः प्रेष्ये'ति न प्रस्थितमित्याह प्रसुते प्रस्थितमिति व्वषट्कृते जुहोति ॥२७॥ हुत्वा व्वपाᳬ समीच्यौ । व्वपाश्रपण्यौ कृत्वानुप्रास्यति "स्वाहाकृतेऽऊर्ध्वनभसं मारुतं गच्छत" मिति नेदिमेऽअमुया सतो याभ्यां व्वपामशिश्रपामेति ॥२८॥ तद्यद्वपया चरन्ति । यस्यै वै देवतायै पशुमालभन्ते तामेवैतद्देवतामेतेन मेधेन प्रीणाति सैषा देवतैतेन मेधेन प्रीता शान्तोत्तराणि हवीᳬषि श्रप्यमाणान्युपरमति तस्माद्वपया चरन्ति ॥२९॥

( अर्द्धप्रपाठकः ५६ )

अथ चात्वाले मार्जयन्ते । क्रूरी वाऽएतत्कुर्व्वन्ति यत्संज्ञपयन्ति यद्विशासँति शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः सन्दधते तस्माच्चात्वाले मार्जयन्ते ॥३०॥ Cf. का. श. ४. ८. २; तै. सं. ६. ३. ९; मै. सं. ३. १०. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे षष्ठप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ८. २. )

३. ६. ४.

( पशुपुरोडाशयागः )

यद्देवत्यः पशुर्भवति । तद्देवत्यं पुरोडाशमनुनिर्व्वपति तद्यत्पुरोडाशमनुनिर्व्वपति सर्व्वेषां वाऽएष पशूनां मेधो यद्व्रीहियवौ तेनैवैनमेतन्मेधेन समर्धयति कृत्स्नं करोति तस्मात्पुरोडाशमनुनिर्व्वपति ॥१॥ अथ यद्वपया प्रचर्य । एतेन पुरोडाशेन प्रचरति मध्यतो वाऽइमां व्वपामुत्खिदन्ति मध्यतऽएवैनमेतेन मेधेन समर्द्धयति कृत्स्नं करोति तस्माद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरत्येष न्वेवैतस्य बन्धु-

---

१. मा. सं. ६. १६.　　२. ऊर्ध्वं इति. घ.　　३. वै. इति. घ.
४. विशासति इति. ग.　　५. सर्वेषामिति. घ.　　६. प्रचरति इति. ग.

यत्र क्व चैष पशुं पुरोडाशोऽनुनिरुप्यते[1] ॥२॥ अथ पशुं विशास्ति। त्रिः प्रच्यावयतात् त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुतादिति त्रिवृद्धि यज्ञः[2] ॥३॥ अथ शमितारꣳ सꣳशास्ति। यत्त्वा पृच्छाच्छृतꣳहविः शमिता ३ रिति शृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳहीति ॥४॥ अथ जुह्वा पृषदाज्यस्योपहत्य। अध्वर्युरुपनिष्क्रम्य पृच्छति शृतꣳ हविः शमिता३रिति शृतमित्याह तद्देवानामित्युपाꣳ श्वध्वर्युः[3] ॥५॥ तद्यत्पृच्छति। शृतं वै देवानाꣳ हविर्नाशृतꣳशमिता वै तद्वेद यदि शृतं वा भवत्यशृतं[4] वा ॥६॥ तद्यत्पृच्छति। शृतेन प्रचराणीति तद्यद्यशृतं भवति शृतमेव देवानाꣳ हविर्भवति शृतं यजमानस्या-नेनाऽध्वर्युर्भवति शमितरि तदेनो भवति त्रिष्कृत्वः पृच्छति त्रिवृ-द्धि यज्ञोऽथ यदाह तद्देवानामिति तद्धि देवानां यच्छृतं तस्मादाह तद्देवानामिति ॥७॥ स हृदयमेवाग्रेऽभिघारयति[5]। आत्मा वै मनो हृदयं[6] प्राणः पृषदाज्यमात्मन्येवैतन्मनसि प्राणं दधाति तथैतज्जीवमेव देवानाꣳ हविर्भवत्यमृतममृतानाꣳ[7] ॥८॥ सोऽभिघारयति। "[8]सं ते मनो मनसा सं प्राणः[9] प्राणेन गच्छता"मिति न स्वाहाकरोति न ह्येषाहुतिरुद्वासयन्ति पशुम् ॥९॥ तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति। तद्यत्समया न हरन्ति येनान्यानि हवीꣳषि हर-न्ति शृतꣳ सन्तं नेदङ्गशो विकृत्तेन क्रूरीकृतेन[10] समया यज्ञं प्रसजा-मेति यदु बाह्येन न हरन्त्यग्रेण यूपं बहिर्धा ह यज्ञात्कुर्युस्तस्मादन्त-रेण यूपं चाग्निं च हरन्ति दक्षिणतो निधाय प्रतिप्रस्थातावद्यति प्ल-क्षशाखाऽउत्तरबर्हिर्भवन्ति ताऽअध्यवद्यति तद्यत्प्लक्षशाखा उत्तरब-र्हिर्भवन्ति[11] ॥१०॥ यत्र[12] वै देवा अग्रे पशुमालेभिरे। तं त्वष्टा शीर्षतो ऽग्रेऽभ्युवामोतैवं चिन्नालभेरन्निति त्वष्टुर्हि पशवः स एष शीर्षन्

---

१. निरुप्यते इति. घ.ग. २. यज्ञ इति. ग,घ. ३. अध्वर्युरिति. ग.
४. भवतीति. घ. ५. हृदयमेव इति.ग.घ. ६. हृदयमिति. घ.
७. अमृतानाम् इति. घ. ८. मा. सं. ६. १८. ९. प्राण इति. घ.
१०. क्रूरीकृतेनेति. घ. ११. भवन्ति इति. ग. १२ यत्र इति ग.

मस्तिष्कोऽनूक्यश्च मज्जा तुस्मात्स व्वान्तऽइव त्वष्टा ह्येतमभ्यवमत्तस्मात्तं नाश्नीयात्त्वष्टुर्ह्येतदभिवान्तम् ॥११॥ तस्यावाङ् मेधः पपात । सऽएष व्वनस्पतिरजायत तं देवाः प्रापश्यंस्तस्मात्प्रख्यः प्रख्यो ह वै नामैतद्यत्प्लक्षऽइति तेनैवैनमेतन्मेधेन समर्धयति कृत्स्नं करोति तस्मात्प्लक्षशाखाऽउत्तरबर्हिर्भवन्ति ॥१२॥ अथाज्यमुपस्तृणीते । जुह्वां चोपभृति च व्वसाहोमहवन्याᳪं समवत्तधान्यामथ हिरण्यशकलाववदधाति जुह्वां चोपभृति च ॥१३॥ अथ मनोतायै हविषोऽनुवाचऽआह । तद्यन्मनोतायै हविषोऽनुवाचऽआह सर्व्वा ह वै देवताः पशुमालभ्यमानमुपसङ्गच्छन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति सर्व्वासाᳪं हि देवतानाᳪं हविः पशुस्तासाᳪं सर्व्वासां देवतानां पशौ मनाᳪंस्योतानि भवन्ति तान्येवैतत्प्रीणाति तथो ह्यामोघाय देवतानां मनाᳪंस्युपसङ्गतानि भवन्ति तस्मान्मनोतायै हविषोऽनुवाचऽआह ॥१४॥ स हृदयस्यैवाग्रेऽवद्यति । तद्यन्मध्यतः सतो हृदयस्याग्रेऽवद्यति प्राणो वै हृदयमतो ह्ययमूर्ध्वः प्राणः संचरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत्पशुरथ यदास्मात्प्राणोऽपक्रामति दार्व्वेव तर्हि भूतोऽनर्थ्यः शेते ॥१५॥ हृदयमु वै पशुः । तदस्यात्मनऽएवाग्रेऽवद्यति तस्माद्यदिदं[1] किञ्चिदवदानᳪंहीयेत न तदाद्रियेत सर्वस्य हैवास्य तत्पशोरवत्तं भवति यद्धृदयस्याग्रेऽवद्यति तस्मान्मध्यतः सतो हृदयस्यैवाग्रेऽवद्यत्यथ यथापूर्वम्[2] ॥१६॥ अथ जिह्वायै । साᳪं[3]हीयं पूर्वार्धात्प्रतिष्ठत्यथ व्वक्षसस्[4]तद्धि ततोऽथैकचरस्य दोष्णोऽथ पार्श्वयोरथ तनिम्नोऽथ व्वृक्कयोः ॥१७॥ गुदं त्रेधा करोति । स्थविमोपयड्भ्यो मध्यं जुह्वां द्वेधा कृत्वावद्यत्यणिम त्र्यङ्गेष्वथैकचरा[5]यै श्रोणेरेतावनु जुह्वामवद्यति[6] ॥१८॥ अथोपभृति । त्र्यङ्गस्य[7] दोष्णो गुदं द्वेधा कृत्वावद्यति त्र्यङ्ग्यायै

१. यदि किञ्चिदिति ग. घ. २. पूर्वमिति. ग. ३. सा इति. ग. ४. वक्षस इति. घ.
५. त्र्यङ्गेष्वथेति. घ. ६. अवद्यतीति ग. ७. त्र्यङ्गस्येति. घ

श्रोणेरथ हिरण्यशकलाववदधात्यथोपरिष्टादाज्यस्याभिघारयति ॥१९॥ अथ व्वसाहोमं गृह्णाति । "रेडसी"ति लेलयेव हि यूस्तस्मादाह रेडसीत्य"ग्निष्ट्वा श्रीणा"त्वित्यग्निर्ह्येतच्छ्रपयति तस्मादाहाग्निष्ट्वा श्रीणात्वित्या"पस्त्वा समरिण"न्नित्यापो ह्येतमङ्गेभ्यो रसꣳसम्भरन्ति तस्मादाहापस्त्वा समरिणन्निति ॥२०॥ "व्वातस्य त्वा ध्राज्या"ऽइति । अन्तरिक्षं वाऽअयमनुपवते योऽयं पवतेऽन्तारिक्षाय वै गृह्णाति तस्मादाह व्वातस्य त्वा ध्राज्याऽइति ॥२१॥ "पूष्णो रꣳह्या"ऽइति । एष वै पूष्णो रꣳहिरेतस्माऽउ हि गृह्णाति तस्मादाह पूष्णो रꣳह्याऽइति ॥२२॥ "ऊष्मणो व्यथिष"दिति । एष वाऽऊष्मैतस्माऽउ हि गृह्णाति तस्मादाहोर्ष्मणो व्यथिषदित्यथोपरिष्टाद्द्विराज्यस्याभिघारयति ॥२३॥ (शतम् २१००) अथ पार्श्वेन वासिना वा प्रयौति "प्रयुतं द्वेष"इति तन्नाष्ट्राऽएवैतद्रक्षाꣳस्यतोऽपहन्ति ॥२४॥ अथ यद्यूष्परिशिष्यते । तत्समवत्तधान्यामानयति तद्धृदयं प्रास्यति जिह्वां व्वक्षस्तनिम मतस्ने व्वनिष्ठुमथोपरिष्टाद्द्विराज्यस्याभिघारयति ॥२५॥ तद्यद्धिरण्यशकलावभितो भवतः । घ्नन्ति वाऽएतत्पशुं यदग्नौ जुह्वत्यमृतमायुर्हिरण्यं तदमृतऽआयुषि प्रतितिष्ठति तथातऽउदेति तथा संजीवति तस्माद्धिरण्यशकलावभितो भवतः ॥२६॥ अथ यदक्ष्णयावद्यति । सव्यस्य च दोष्णो दक्षिणायाश्च श्रोणेर्दक्षिणस्य च दोष्णः सव्यायाश्च श्रोणेस्तस्मादयं पशुरक्ष्णया पदो हरत्यथ यत्सम्यगवद्येत्समीचो हैवायं पशुः पदो हरेत्तस्मादक्ष्णयावद्यत्यथ यन्न शीर्ष्णोऽवद्यति नाꣳसयोर्नानूकस्य नापरसक्थ्योः ॥२७॥ असुरा ह वाऽअग्रे पशुमालभिरे । तद्देवा भीषा नोपावेयुस्तान्हेयं पृथिव्युवाच मैतदा दृढ्वमहं वाऽएतस्याध्यक्षा

---

१–३. मा सं. ६. १८.
५–७, ९. मा. ". ६. १८.
१०. व्वक्षस्तनिमेति. घ.
४. समरिणन्नितीति. घ.
८. ऊष्मणो इति. घ.
११ घ्नन्ति इति. घ. १२. भवत इति. क. ग.

भविष्यामि यथा यथैतऽएतेन चरिष्यन्तीति ॥२८॥ सा होवाच। अन्यतरामेवाहुतिमहौषुरन्यतरां पर्यशिषन्निति स यां पर्यशिꣳषं-स्तानीमान्यवदानानि ततो देवाः स्विष्टकृते त्र्यङ्गाण्युपाभजंस्तस्मा-त्त्र्यङ्गाण्यथासुरा ऽअवाचञ्छ्रोणीꣳ सयोरनूकस्यापरसक्थ्योस्त-स्मात्तेषां नावद्येद्यन्न्वेव त्वष्टानूकमभ्यवमत्तस्मादनूकस्य नावद्येद-थाहा'ग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूही'त्याश्राव्याहा'ग्नीषोमा-भ्यां छागस्य हविः प्रेष्ये'ति न प्रस्थितमित्याह प्रसुते प्रस्थितमिति[1] ॥२९॥ अन्तरेणार्धर्चौ याज्यायै वसाहोमं जुहोति। इतो वाऽअय-मूर्ध्वो मेधऽउत्थितो यमस्याऽइमꣳ रसं प्रजाऽउपजीवन्त्यर्वाचीनं दिवो रसो वै वसाहोमो रसो मेधो रसेनैवैतद्रसं तीव्रीकरोति तस्मादयꣳ रसोऽद्यमानो न क्षीयते ॥३०॥ तद्यदन्तरेण। अर्धर्चौ याज्यायै वसाहोमं जुहोतीयं वाऽअर्धर्चोऽसौ द्यौरर्धर्चोऽन्तरा वै द्यावापृथिवी ऽअन्तरिक्षमन्तरिक्षाय वै जुहोति तस्मादन्तरेणार्धर्चौ याज्यायै वसाहोमं जुहोति ॥३१॥ स जुहोति। "घृतं[2] घृतपावानः[3] पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहे'त्ये-तेन वैश्वदेवेन[4] यजुषा जुहोति वैश्वदेवं वा[5]ऽअन्तरिक्षं तद्यदेने-नेमाः प्रजाः प्राणत्यश्चोदनत्यश्[6]चान्तरिक्षमनुचरन्ति तेन वैश्वदेवं वषट्कृते जुहोति यानि जुह्वामवदानानि भवन्ति ॥३२॥ अथ जुह्वा पृषदाज्यस्योपघ्नन्नाह। 'वनस्पतयेऽनुब्रूही'त्याश्राव्याह 'व-नस्पतये प्रेष्ये'ति वषट्कृते जुहोति तद्यद्वनस्पतये जुहोत्येतमेवैतद्व-ज्रं यूपं भागिनं करोति सोमो वै वनस्पतिः पशुमेवैतत्सोमं करोति तद्यदन्तरेणोभेऽआहुती जुहोति तथोभयं व्याप्नोति तस्मादन्तरेणो-भेऽआहुती जुहोति ॥३३॥ अथ यान्युपभृत्यवदानानि भवन्ति। तानि समानयमानऽआहा'ग्नये स्विष्टकृतेऽनुब्रूही'त्याश्राव्याहा'ग्नये स्विष्टकृते प्रेष्ये'ति वषट्कृते जुहोति ॥३४॥ अथ यद्वसाहोमस्य प-

---

१. प्रस्थितमिति. घ. २. मा. सं. ६. १९. ३. घृतं घृत इति. घ.
४. वैश्वदेवेनेति नाऽस्ति. ग. ५. वा इति. घ. ६. उदानन्त्यः इति घ.

रिशिष्यते । तेन दिशो व्याघारयति “दिशः प्रदिशऽआदिशो विदिशऽउद्दिशो दिग्भ्यः स्वाहे”ति रसो वै व्वसाहोमः सर्वास्वेवैतद्दिक्षु रसं दधाति तस्मादयं दिशि दिशि रसोऽभिगम्यते ॥३५॥ अथ पशुंᳫँसंमृशति । एतर्हि संमर्शनस्य कालोऽथ यत्पुरा संमृशति यऽइमऽ उपातिष्ठन्ते ते न्निमथिष्यन्त ऽइति शङ्कमानो यद्यु व्विमाथान्न शङ्केतात्रैव संमृशेत् ॥३६॥ “ऐन्द्रः प्राणः । अङ्गेऽअङ्गे निदीध्यदैन्द्रऽउदानोऽ अङ्गेऽअङ्गे निधीत” ऽइति यदङ्गशो व्विकृत्तो भवति तत्प्राणोदानाभ्याᳫँसन्दधाति “देव त्वष्टर्भूरि ते सᳫँ समेतु सलक्ष्मा यद्विषुरूपं भवाती”ति कृत्स्नवृतमेवैतत्करोति “देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्त्वि”ति यद्यत्रैनमहौषीत्तदेनं कृत्स्नं कृत्वानुसमस्यति सोऽस्य कृत्स्नोऽमुष्मिंल्लोकऽआत्मा भवति ॥३७॥ Cf. का. श. ४. ८. ३. तै. स. ६. ३. १०, ११; मै. सं. ३ १०. २-४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
षष्ठप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. ८. ३. )

### ३. ६. ५.

त्रीणि ह वै पशोरेकादशानि । एकादश प्रयाजा ऽएकादशानुयाजा ऽएकादशोपयजो दश पाण्या ऽअङ्गुलयो दश पाद्या दश प्राणाः प्राण ऽउदानो व्यान ऽइत्येतावान्वै पुरुषो यः परार्ध्यः पशूनां यᳫँ सर्वेऽनु पशवः ॥१॥ तदाहुः । किं तद्यज्ञे क्रियते येन प्राणः सर्वेभ्योऽङ्गेभ्यः शिवऽइति ॥२॥ यदेव गुदं त्रेधा करोति । प्राणो वै गुदः सोऽयं प्राङ्गातातस्तमयं प्राणो ऽनुसंचरति ॥३॥ स यदेव गुदं त्रेधा करोति । तृतीयमुपयड्भ्यस्तृतीयं जुह्वां तृतीयमुपभृति तेन प्राणः

---

१. मा. सं. ६. १९. २, ४, ५. मा. सं. ६. २०. ३. प्राण इति. ग.
६. एकादशानि इति. ग. ७. प्रयाजा इति. घ. ८. उपभृतीति. घ.

सर्व्वेभ्योऽङ्गेभ्यः शिवः ॥४॥ स ह्व त्वेव पशुमालभेत । यऽएनं मेधमुपनयेद्यदि कृशः स्याद्यदुदर्यस्य मेदसः परिशिष्येत तद्गुदे न्यृषेत्प्राणो वै गुदः सोऽयं प्राङ्गाततस्तमयं प्राणोऽनुसंचरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत्पशुरथ यदास्मात्प्राणोऽपक्रामति दार्वेव तर्हिं भूतोऽनर्थ्यः शेते ॥५॥ गुदो वै पशुः । मेदो वै मेधस्तदेनं मेधमुपनयति यद्युऽअꣳसलो भवति स्वयमुपेतऽएव तर्हिं मेधं भवति ॥६॥ अथ पृषदाज्यं गृह्णाति । द्वयं वाऽइदꣳ सर्पिश्चैव दधि च द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते ॥७॥ तेनानुयाजेषु चरति । पशवो वाऽअनुयाजाः पयः पृषदाज्यं तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं प्राणो हि पृषदाज्यमन्नꣳ हि पृषदाज्यमन्नꣳ हि प्राणः[2] ॥८॥ तेन पुरस्तातदनुयाजेषु चरति[3] । स योऽयं पुरस्तात्प्राणस्तमेवैतद्दधाति तेन पश्चादुपयजति स योऽयं पश्चात्प्राणस्तमेवैतद्दधाति ताविमाऽउभयतः प्राणौ[4] हि तौ यश्चायमुपरिष्टाद्यश्चाधस्तात् ॥९॥ तद्वाऽएतदेको द्वाभ्यां व्वषट्करोति । अध्वर्य्वेव च यश्चैषऽउपयजत्यथ यद्यसन्तमुपयजति तस्मादुपयजो नामाथ यदुपयजति[5] प्रैवैतज्जनयति पश्चाद्ध्युपयजति पश्चाद्धि योषायै प्रजाः प्रजायन्ते ॥१०॥ सऽउपयजति । "समुद्रं गच्छ स्वाहे"त्यापो वै समुद्रऽआपो रेतो रेतऽएवैतत्सिञ्चति ॥११॥ "अन्तरिक्षं गच्छ स्वाहे"ति । अन्तरिक्षं वाऽअनुप्रजाः प्रजायन्तेऽन्तरिक्षमेवैतदनु प्रजनयति ॥ ॥१२॥ "देवꣳ सवितारं गच्छ स्वाहे"ति सविता वै देवानां प्रसविता सवितृप्रसूतऽएवैतत्प्रजनयति ॥१३॥ "मित्रावरुणौ गच्छ स्वाहे"ति । प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवैतत्प्रजासु दधाति ॥ ॥१४॥ "अहोरात्रे गच्छ स्वाहे"ति । अहोरात्रे वाऽअनु प्रजाः प्रजायन्तेऽहोरात्रेऽएवैतदनुप्रजनयति ॥१५॥ "छन्दाꣳसि गच्छ स्वाहे"ति । सप्त वै छन्दांसि सप्त ग्राम्याः पशवः सप्तारण्यास्तानेवैतदुभ-

---

१. पशुरिति. ग.   २. प्राणः इति. ग.   ३. चरति इति. घ.
४. प्राणौ इति. घ.   ५. यजति इति. ग. घ   ६–११. मा. सं. ६. २१.

यान् प्रजनयति ॥१६॥ "द्यावापृथिवी गच्छ स्वाहे"ति। प्रजापतिर्वै प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात्ता इमा द्यावापृथिवीभ्यां परिगृहीतास्तथो ऽएवैष ऽएतत्प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां परिगृह्णाति ॥१७॥ अथात्युपयजति। स यन्नात्युपयजेद्यावत्यो हैवाग्रे प्रजाः सृष्टास्तावत्यो हैव स्युर्न प्रजायेरन्नथ यदत्युपयजति प्रैवैतज्जनयति तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते ॥१८॥ Cf. का. श. ४. ८. ४; तै. सं. ६. ४. १; मै. सं. ३. १०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
षष्ठप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ८. ४. )

षष्ठः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ११२ )

३. ७. १.

सोऽत्युपजयति। "यज्ञं गच्छ स्वाहे"त्यापो वै यज्ञऽआपो रेतो रेतऽएवैतत्सिञ्चति ॥१॥ "सोमं गच्छ स्वाहे"ति। रेतो वै सोमो रेतऽएवैतत्सिञ्चति ॥२॥ दिव्यं नभो गच्छ स्वाहेति। आपो वै दिव्यं नभऽआपो रेतो रेतऽएवैतत्सिञ्चति ॥३॥ "अग्निं वैश्वानरं गच्छ स्वाहे"ति। इयं वै पृथिव्यग्निर्वैश्वानरः सेयं प्रतिष्ठेमामेवैतत्प्रतिष्ठामभिप्रजनयति ॥४॥ अथ मुखं विमृष्टे। मनो मे हार्द्दि यच्छेति तथो होपयष्टात्मानं नानुप्रवृणक्ति ॥५॥ अथ जाघन्या पत्नीः संयाजयन्ति। जघनार्धो वै जाघनी जघनार्धाद्धि योषायै प्रजाः प्रजायन्ते तत्प्रैव तज्जनयति यज्जाघन्या पत्नीः संयाजयन्ति ॥६॥ अन्तरतो देवानां पत्नीभ्योऽवद्यति। अन्तरतो वै योषायै प्रजाः प्रजायन्तेऽउपरिष्टादग्नये गृहपतयऽउपरिष्टाद्धि वृषा योषामधिद्रवति ॥७॥ अथ हृदयशूलेना-

---

१. मा. सं. ६ २१. २. अथ इति. ग, घ. ३. प्रजायन्ते इति. ग.
४. स्वाँहेति. घ. ५. वैश्वानरमिति. घ.

वभृथं यन्ति । पशोर्ह वाऽआलभ्यमानस्य हृदयꣳशुक्समभ्यवैति हृदयाद्धृदयशूलमथ यच्छृतस्य परितृन्दन्ति तदलञ्जुषं तस्मादु परितृद्यैव शूलाकुर्यात्तत्त्रिःप्रच्युते पशौ हृदयं प्रवृह्योत्तमं प्रत्यवदधाति ॥८॥ अथ हृदयशूलं प्रयच्छति । तन्न पृथिव्यां परास्येन्नाप्सु स यत्पृथिव्यां परास्येदोषधीश्च वनस्पतींश्चैषा शुक्प्रविशेद्यदप्सु परास्येदपऽएषा शुक्प्रविशेत्तस्मान्न पृथिव्यां नाप्सु ॥९॥ अपऽएवाभ्यवेत्य । यत्र शुष्कस्य चार्द्रस्य च सन्धिः स्यात्तदुपगूहेद्यद्युऽअभ्यवायनाय ग्लायेदग्रेण यूपमुदपात्रं निनीय यत्र शुष्कस्य चार्द्रस्य च सन्धिर्भवति तदुपगूहति "माँपो मौषधीर्हिꣳसी"रिति तथा नापो नौषधीर्हिनस्ति "धाम्नो धाम्नो राजंस्ततो व्वरुण नो मुञ्च । यदाहुरघ्न्याऽइति व्वरुणेति शपामहे ततो व्वँरुण नो मुञ्चे"ति तदेनꣳ सर्व्वस्माद्वरुणपाशात्सर्व्वस्माद्वरुण्यात्प्रमुञ्चति ॥१०॥ अथाभिमन्त्रयते । "सुमित्रिया न ऽआपऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च व्वयं द्विष्म"ऽइति यत्र वाऽएतेन प्रचरन्त्यापश्च ह वाऽअस्मात्तावदोषधयश्चापक्रम्येव तिष्ठन्ति तदु ताभिर्मित्रधेयं कुरुते तथो हैनं ताः पुनः प्रविशन्त्येषो तत्र प्रायश्चित्तिः क्रियते स वै नाग्नीषोमीयस्य पशोः करोति नाग्नेयस्य व्वशायाऽएवानूबन्ध्यायै ताꣳहि सर्व्वोऽनु यज्ञः संतिष्ठतऽएतदु हास्याग्नीषोमीयस्य च पशोराग्नेयस्य च हृदयशूलेन चरितं भवति यद्वशायाश्चरन्ति ॥११॥ Cf. का. श. ४. ८. ४; तै. सं. ६. ४. १; मै. सं. ३. १०. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे
सप्तमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ८. ५. )
( इत्यष्टमोऽध्यायः )

---

१. तदलं जुषं इति. घ.   २. नाप्सु इति. ग.
३. दुपगूहेदिति. घ.   ४-५, ७. सा. सं. ६. २२.   ६. व्वरुण इति. घ.

## ३. ७. २.

### ( पश्वेकादशिनी )

प्रजापतिर्व्वै प्रजाः ससृजानो रिरिचानऽइवामन्यत । तस्मात्पराच्यः प्रजाऽआसुर्नास्य प्रजाः श्रियेऽन्नाद्याय तस्थिरे ॥१॥ सऽऐक्षतारिक्ष्यहम् । यस्माऽउ कामायास्रक्षि न मे स कामः समार्धि पराच्यो मत्प्रजाऽअभूवन्न मे प्रजाः श्रियेऽन्नाद्यायास्थिषतेति ॥२॥ सऽवेक्षत प्रजापतिः । कथं नु पुनरात्मानमाप्याययेयोप मा प्रजाः समावर्तेरंस्तिष्ठेरन्मे प्रजाः श्रियेऽन्नाद्यायेति ॥३॥ सोऽर्च्चञ्छ्राम्यंश्चचार प्रजाकामः । सऽएतामेकादशिनीपमश्यत्सऽएकादशिन्येष्ट्वा प्रजापतिः पुनरात्मानमाप्याययतोपैनं प्रजाः समावर्त्तन्तातिष्ठन्तास्य प्रजाः श्रियेऽन्नाद्याय स व्वसीयानेवेष्ट्वाभवत् ॥४॥ तस्मै कमेकादशिन्या यजेत । एवꣳ हैव प्रजया पशुभिराप्यायतऽउपैनं प्रजाः समावर्तन्ते तिष्ठन्तेऽस्य प्रजाः श्रियेऽन्नाद्याय स व्वसीयानेवेष्ट्वा भवत्येतस्मै कमेकादेशिन्या यजते ॥५॥ सऽआग्नेयं प्रथमं पशुमालभते । अग्निर्व्वै देवतानां मुखं प्रजनयिता स प्रजापतिः सऽउऽएव यजमानस्तस्मादाग्नेयो भवति ॥६॥ अथ सारस्वतम्[2] । व्वाग्वै सरस्वती व्वाचैव तत्प्रजापतिः पुनरात्मानमाप्याययत व्वागेनमुपसमावर्तत व्वाचमनुकामात्मनोऽकुरुत व्वाचोऽएवैषऽएतदाप्यायते व्वागेनमुपसमावर्त्तते व्वाचमनुकामात्मनः कुरुते ॥७॥ अथ सौम्यम्[3] । अन्नं वै सोमोऽन्नेनैव तत्प्रजापतिः पुनरात्मानमाप्याययतान्नमेनमुपसमावर्ततान्नमनुकमात्मनोऽकुरुतान्नेनोऽ एवैष ऽएतदाप्यायतेऽन्नमेनमुपसमावर्त्ततेऽन्नमनुकमात्मनः कुरुते ॥८॥ तद्यत्सारस्वतमनु भवति । व्वाग्वै सरस्वत्यन्नꣳ सोमस्तस्माद्यो व्वाचा प्रसाम्यन्नादो हैव भवति ॥९॥ अथ पौष्णम् । पशवो वै पूषा पशुभिरेव तत्प्रजापतिः पुनरात्मानमाप्याययत पशव ऽएनमुपसमावर्त्तन्त पशूननुका-

१. अस्मा इति. ग, घ. २. सारस्वतमिति. ग. ३. सौम्यमिति. ग.

नात्मनोऽकुरुत पशुभिर्व्वैवैषऽएतदात्यायते पशवऽएनमुपसमावर्त्तन्ते पशूननुकानात्मनः कुरुते ॥१०॥ अथ बार्हस्पत्यम् । ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैतत्प्रजापतिः पुनरात्मानमाप्याययत ब्रह्मैनमुपसमावर्त्तत ब्रह्मानुकमात्मनोऽकुरुत ब्रह्मणोऽएवैषऽएतदाप्यायते ब्रह्मैनमुपसमावर्त्तते ब्रह्मानुकमात्मनः कुरुते ॥११॥ तद्यत्पौष्णमनु भवति । पशवो वै पूषा ब्रह्म बृहस्पतिस्तस्माद्ब्राह्मणः पशूनभिधृष्णुतमः पुरोहिता ह्यस्य भवन्ति मुखऽआहितास्तस्मादुत सर्व्वं दत्त्वाजिनवासी चरति ॥१२॥ अथ व्वैश्वदेवꣳ । सर्व्वं वै व्विश्वे देवाः सर्व्वेणैव तत्प्रजापतिः पुनरात्मानमाप्याययत सर्व्वमेनमुपसमावर्त्तत सर्व्वमनुकमात्मनोऽकुरुत सर्वेणोऽएवैषऽएतदाप्यायते सर्व्वमेनमुपसमावर्त्तते सर्व्वमनुकमात्मनः कुरुते ॥१३॥ तद्यद्बार्हस्पत्यमनुभवति । ब्रह्म वै बृहस्पतिः सर्व्वमिदं व्विश्वे देवाऽअस्यैवैतत्सर्व्वस्य ब्रह्म मुखं करोति तस्मादस्य सर्व्वस्य ब्राह्मणो मुखम् ॥१४॥ अथैन्द्रम् । इन्द्रियं वै व्वीर्यमिन्द्र ऽइन्द्रियेणैव तद्वीर्येण प्रजापतिः पुनरात्मानमाप्ययतेन्द्रियमेनं व्वीर्यमुदसमावर्ततेन्द्रियं व्वीर्यमनुकमात्मनोऽकुरुतेन्द्रियेणोऽएवैषऽएतद्वीर्येणाप्यायतऽइन्द्रियमेनं व्वीर्यमुपसमावर्ततऽइन्द्रियं व्वीर्यमनुकमात्मनः कुरुते ॥१५॥ तद्यद्वैश्वदेवमनुभवति । क्षत्रं वाऽइन्द्रो व्विशो व्विश्वे देवाऽअन्नाद्यमेवास्माऽएतत्पुरस्तात्करोति ॥१६॥ अथ मारुतम् । व्विशो वै मरुतो भूमो वै व्विड्भूम्नैव तत्प्रजापतिः पुनरात्मानमाप्यायत भूमैनमुपसमावर्तत भूमानमनुकमात्मनोऽकुरुत भूम्नोऽएवैष एतदाप्यायते भूमैनमुपसमावर्तते भूमानमनुकमात्मनः कुरुते ॥१७॥ तद्यदैन्द्रमनु भवति । क्षत्रं वाऽइन्द्रो व्विशो व्विश्वे देवा व्विशा वै मरुतो व्विशैवैतत्क्षत्रं परिबृꣳहति तदिदं क्षत्रमुभयतो व्विशा परिबृढम् ॥१८॥ अथैन्द्राग्नम् । तेजो वाऽअग्निरिन्द्रियं व्वीर्यमिन्द्रऽउभाभ्यामेव तद्वीर्याभ्यां प्रजाप-

१. बार्हस्पत्यमिति. ग. घ.
२. वैश्वदेवꣳ इति ग.
३. मारुतमिति. ग.
४. ऐन्द्राग्नं इति. ग.

तिः पुनरात्मानमाप्यायतोभेऽएनं व्वीर्येऽउपसमावर्तेतामुभे व्वीर्येऽअ-नुकेऽआत्मनोऽकुरुतोभाभ्याम्वेवैषऽएतद्वीर्याभ्यामाप्यायतऽउभेऽएनं व्वीर्येऽउपसमावर्तेतेऽउभे व्वीर्येऽअनुकेऽआत्मनः कुरुते ॥१९॥ अथ सावित्रꣳ । सविता वै देवानां प्रसविता तथो हास्माऽएते सवितृ-प्रसूताऽएव सर्व्वे कामाः समृध्यन्ते ॥२०॥ अथ व्वारुणमन्ततऽआ-लभते । तदेनꣳ सर्व्वस्माद्वरुणपाशात्सर्व्वस्माद्वरुण्यात्प्रमुञ्चति ॥२१॥ तस्माद्यदि यूपैकादशिनी स्यात् । आग्नेयमेवाग्निष्ठे नियुञ्ज्यादथेतरां व्युपनयेयुर्यथापूर्व्वम् ॥२२॥ यद्यु पश्वेकादशिनी स्यात् । आग्नेयमेव यूपऽआलभेरन्नथेतरान्यथापूर्व्वम् ॥२३॥ तान्यत्रोदीचो नयन्ति । आग्नेयमेव प्रथमं नयन्त्यथेतरान्यथापूर्वम् ॥२४॥ तान्यत्र निविध्य-न्ति । आग्नेयमेव प्रथमं दक्षिणार्ध्ये निविध्यन्त्यथेतरानुदीचोऽतिनीय यथापूर्वम् ॥२५॥ तेषां यत्र व्वपाभिः प्रचरन्ति । आग्नेयस्यैव प्रथम-स्य व्वपया प्रचरन्त्यथेतरेषां यथापूर्वम् ॥२६॥ तैर्यत्र प्रचरन्ति । आग्नेयेनैव प्रथमेन प्रचरन्त्यथेतरैर्यथापूर्वम् ॥२७॥ Cf. का. श. ४. ९. १; तै. सं. ६. ६. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे सप्तमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. ९. १. )

## ३. ७. ३.

### ( वसतीवरीग्रहणम् )

यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वापः प्रविवेश तेनैवैतद्रसेनापः स्यन्दन्ते तमेवैतद्रसꣳ स्यन्दमानं मन्यन्ते ॥१॥ स यद्वसतीवरीरच्छेति । तमेवैतद्रसमाहृत्य यज्ञे दधाति रसवन्तं यज्ञं करोति तस्माद्वसतीवरीरच्छैति ॥२॥ ता वै सर्व्वेषु सवनेषु व्विभ-[3]जति । सर्व्वेष्वेवैतत्सवनेषु रसं दधाति सर्व्वाणि सवनानि रसवन्ति करोति तस्मात्सर्वेषु सवनेषु व्विभजति ॥३॥ ता वै स्यन्दमानानां

१. आत्मानमिति. घ. २. आत्मन इति. घ. ३. व्विभजति इति. घ.

गृह्णीयात्। पेद्धि स यज्ञस्य रसस्तस्मात्स्यन्दमानानां गृह्णीयात् ॥४॥ गोपीथाय वाऽएता गृह्यन्ते। सर्व्वं वाऽइदमन्यदिलयति यदिदं किं चापि योऽयं पवतेऽथैताऽएव नेलयन्ति तस्मात्स्यन्दमानानां गृह्णीयात् ॥५॥ दिवा गृह्णीयात्। पश्यन्यज्ञस्य रसं गृह्णीनीति तस्माद्दिवा गृह्णीयादेतस्मै वै गृह्णाति यऽएष तपति व्विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य व्विश्वे देवास्तस्माद्दिवा गृह्णीयाद्दिवेव वाऽएष तस्माद्देव दिवा गृह्णीयात् ॥६॥ एतद्ध वै व्विश्वे देवाः। यजमानस्य गृहानागच्छन्ति स यः पुरादित्यस्यास्तमयाद्व्वसतीवरीर्गृह्णाति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्तऽएतद्धविः प्रविशन्ति तऽएतासु व्वसतीवरीषूपवसन्ति स उपवसथः ॥७॥ स यस्यागृहीता अभ्यस्तमियात्। तत्र प्रायश्चित्तिः क्रियते यदि पुरेजानः स्यान्निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति यद्युऽअनीजानः स्याद्यऽएनमीजान उपावसितो वा पर्य्यवसितो वा स्यात्तस्य निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति ॥८॥ यद्युऽएतदुभयं न व्विन्देत्। उल्कुषीमेवादायोपपरेयात्तामुपर्य्युपरि धारयन् गृह्णीयाद्धिरण्यं व्वोपर्य्युपरि धारयन् गृह्णीयात्तदेतस्य रूपं क्रियते यऽएष तपति ॥९॥ अथातो गृह्णात्येव। "हविष्मतीरिमाऽआप"ऽइति यज्ञस्य ह्यासु रसः प्राविशत्तस्मादाह हविष्मतीरिमाऽआपऽइति "हविष्मां२॥ऽआविवासती"ति हविष्मान् ह्येना यजमानऽआविवासति तस्मादाह हविष्मां२॥आविवासतीति ॥१०॥ "हविष्मान्देवोऽअध्वर"ऽइति। अध्वरो वै यज्ञस्तद्यस्मै यज्ञाय गृह्णाति तꣳहविष्मन्तं करोति तस्मादाह हविष्मान्देवोऽअध्वरऽइति ॥११॥ "हविष्मां२॥ऽअस्तु सूर्य"ऽइति। एतस्मै वै

---

१. स्यन्दमानानामिति. घ.  २. व्वसतीवरीष्विति. घ.  ३ यात् इति. ग.
४. व्विन्देत इति. घ.  ५. उल्कुषीमेवेति. घ.  ६. मा. सं. ६. २३.
७ हविष्मतीरिति. ग. घ.  ८. रिसा इति. ग. घ.  ९-११. मा. सं. ६. २३.

गृह्णाति यऽएष तपति "विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्मादाह हविष्मां[1] २॥ ऽअस्तु सूर्यऽइति ॥१२॥ ताऽआहृत्य जघनेन गार्हपत्यꣳ सादयति । "अग्नेर्वोऽपन्नगृहस्य सदसि सादयामी"त्यग्नेर्वोऽनार्तगृहस्य सदसि सादयामीत्येवैतदाहाथ यदाग्नीषोमीयः पशुः सन्तिष्ठतेऽथ परिहरति व्युत्क्रामतेत्याहाग्रेण हविर्धाने यजमानऽआस्ते ता आदत्ते ॥१३॥ स दक्षिणेन निष्क्रामति । ता दक्षिणायाꣳ श्रोणौ सादयती"न्द्राग्न्योर्भागधेयी स्थे"ति विश्वेभ्यो ह्येना देवेभ्यो गृह्णातीन्द्राग्नी हि विश्वे देवास्ताः पुनराहृत्याग्रेण पत्नीꣳ सादयति स जघनेन पत्नीं पर्येत्य ताऽआदत्ते ॥१४॥ सऽउत्तरेण निष्क्रामति । ताऽउत्तरायाꣳ श्रोणौ सादयति "मित्रावरुणयोर्भागधेयी स्थेति नैवꣳ सादयेदतिरिक्तमेतन्नैवꣳ सम्पत्सम्पद्यतऽइन्द्राग्न्योर्भागधेयी स्थेत्येव ब्रूयात्तदेवानतिरिक्तं तथा सम्पत्सम्पद्यते ॥१५॥ गुप्त्यै वाऽएताः परिह्रियन्ते । अग्निः पुरस्तादथैताः समन्तं पल्यङ्ग्यन्ते नाष्ट्रा रक्षाꣳस्यपघ्नत्यस्ताऽआग्नीध्रे सादयति "विश्वेषां देवानां भागधेयी स्थे"ति तदासु विश्वान्देवान्त्संवेशयत्येते वै वसतां वरं तस्माद्वसतीवर्यो नाम वसताꣳ ह वै वरं भवति यऽएवमेतद्वेद ॥१६॥ तानि वाऽएतानि । सप्त यजूꣳषि भवन्ति चतुर्भिर्गृह्णात्येकेन जघनेन गार्हपत्यꣳ सादयत्येकेन परिहरत्येकेनाग्नीध्रे तानि सप्त यत्र वै वाचः प्रजातानि छन्दाꣳसि सप्तपदा वै तेषां परार्ध्या शक्वर्यैतामभिसम्पदं तस्मात्सप्त यजूꣳषि भवन्ति ॥१७॥ Cf. का. श. ४. ९. २; तै. सं. ६. ४. २; मै. सं. ४. ५. १, २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे सप्तमप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ९. २. )

---

१ हविष्माँ ३ ऽइति. घ. एवमेव पूर्वत्राऽपि ।   २-५. मा. सं. ६. २४.

३. ७. ४.

( सोमोपावहरणम् , सवनीयहविर्निर्वापः, प्रचरणीहोमश्च )

तान्त्सम्प्रबोधयन्ति । तेऽपऽउपस्पृश्याग्नीद्ध्रमुपसमायन्ति तऽआज्यानि गृह्णते गृहीत्वाज्यान्यायन्त्यासाद्याज्यानि ॥१॥ अथ राजानमुपावहरति । इयं वै प्रतिष्ठा जनूरासां प्रजानामिमामेवैतत्प्रतिष्ठामभ्युपावहरति तमस्यै तनुते तमस्यै जनयति ॥२॥

( अर्द्धप्रपाठकः )

अन्तरेणेषेऽउपावहरति । यज्ञो वाऽअनस्तन्न्वेव यज्ञान्न बहिर्द्धा करोति ग्रावस्तु सम्मुखेष्वधिनिदधाति क्षत्रं वै सोमो विशो ग्रावाणः क्षत्रमेवैतद्विश्यध्यूहति तद्यत्सम्मुखा भवन्ति विशमेवैतत्सम्मुखां क्षत्रियमभ्यविवादिनीं करोति तस्मात्संमुखा भवन्ति ॥३॥ सऽउपावहरति । "हृदे त्वा मनसे त्वे"ति यजमानस्यैतत्कामायाह हृदयेन हि मनसा यजमानस्तं कामं कामयते यत्काम्या यजते तस्मादाह हृदे त्वा मनसे त्वेति ॥४॥ "दिवे त्वा सूर्याय त्वे"ति । देवलोकाय त्वेत्येवैतदाह यदाह दिवे त्वेति सूर्याय त्वेति देवेभ्यस्त्वेत्येवैतदाहो"र्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छे"त्यध्वरो वै यज्ञऽऊर्ध्वमिमं यज्ञं दिवि देवेषु धेहीत्येवैतदाह ॥५॥ "सोम राजन्विश्वास्त्वं प्रजाऽउपावरोहे"ति । तदेनमासां प्रजानामाधिपत्याय राज्यायोपावहरति ॥६॥ अथानुसृज्योपतिष्ठते । "विश्वास्त्वां प्रजाऽउपावरोह न्त्वि"त्ययथायथमिव वाऽएतत्करोति यदाह विश्वास्त्वं प्रजाऽउपावरोहेति क्षत्रं वै सोमस्तत्पापवस्यसङ्करोति तच्छेदमनु पापवस्यसं क्रियतेऽथात्र यथायथं करोति यथापूर्वं यदाह विश्वास्त्वां प्रजाऽउपावरोहन्त्विति तदेनमाभिः प्रजाभिः प्रत्यवरोहयति तस्मादु क्षत्रियमायन्तमिमाः प्रजा विशः प्रत्यवरोहन्ति तमधस्तादुपासतऽउपसन्नो होता प्रातरनुवाकमनुवक्ष्यन् भवति ॥७॥ अथ स-

१. बोधयन्ति इति ग.　२. स्तन्न्वेवेति. घ.　३-५. मा. सं. ६. २५.
६,७. मा. सं. ६. २६.　८. वक्ष्यन् भवतीति. ग.

मिधमभ्यादधदाह । 'देवेभ्यः प्रातर्यावभ्योऽनुब्रूही'ति छन्दाᳬंसि वै देवाः प्रातर्यावाणश्छन्दाᳬंस्यनुयाजा 'देवेभ्यः प्रेष्य' 'देवान्यजे'ति वाऽअनुयाजैश्चरन्ति ॥८॥ तदु हैकऽआहुः 'देवेभ्योऽनुब्रूही'ति तदु तथा न ब्रूयाच्छन्दाᳬंसि वै देवाः प्रातर्यावाणश्छन्दाᳬंस्यनुयाजा देवेभ्यः प्रेष्य देवान्यजेति वाऽअनुयाजैश्चरन्ति तस्मादु ब्रूयाद्देवेभ्यः प्रातर्यावभ्योऽनुब्रूही[1]त्येव ॥९॥ अथ यत्समिधमभ्यादधाति । छन्दाᳬंस्येवैतत्समिन्द्धेऽथ यद्धोता प्रातरनुवाकमन्वाह छन्दाᳬंस्येवैतत्पुनराप्याययत्ययातयामानि करोति यातयामानि वै देवैश्छन्दाᳬंसि छन्दोभिर्हि देवाः स्वर्गं लोकᳬं समाश्नुवत न वाऽअत्र स्तुवते न शᳬंसन्ति तच्छन्दाᳬंस्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते तस्माद्धोता प्रातरनुवाकमन्वाह ॥१०॥ तदाहुः । कः प्रातरनुवाकस्य प्रतिगरऽइति जाग्रद्धैवाध्वर्युरुपासीत स यन्निमिषति स हैवास्य प्रतिगरस्तदु तथा न कुर्याद्यदि निद्रायादपि कामᳬं स्वप्यात्स यत्र होता प्रातरनुवाकं परिदधाति तत्प्रचरणीति स्रुग्भवति तस्यां चतुर्गृहीतमाज्यं गृहीत्वा जुहोति ॥११॥ यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वापः प्रविवेश तमदः पूर्वेद्युर्वसतीवरीभिराहरत्यथ योऽत्र यज्ञस्य रसः परिशिष्टस्तमेवैतदच्छैति ॥१२॥ यद्वेवैतामाहुतिं जुहोति । एतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्द्धे याभ्यऽउ चैवैतां देवताभ्यऽआहुतिं जुहोति ताऽएवैतत्प्रीणाति ताऽअस्मै तृप्ताः प्रीताऽएतं यज्ञस्य रसᳬं सन्नमन्ति ॥१३॥ ( शतम् २२०० ) स जुहोति । "शृ[2]णोत्वग्निः समिधा हवं म"ऽइति शृणोतु मऽइदमग्निरनु मे जानात्वित्येवैतदाह "[3]शृण्वन्त्वापो धिषणाश्च देवी"रिति शृण्वन्तु मऽइदमापोऽनु मे जानन्त्वित्येवैतदाह "श्रो[4]ता ग्रावाणो ग्विदुषो न यज्ञ"मिति शृण्वन्तु मऽइदं ग्रावाणोऽनु मे जानन्त्वित्येवैतदाह ग्विदु[5]षो न यज्ञमिति ग्विद्वाᳬंसो हि ग्रावाणः "[6]शृणोतु देवः सविता हवं मे स्वाहे"ति

१. त्येव इति. घ. २-४,६. मा.सं. २. ६. ५. विदुषो इति घ.

शृणोतु मऽइदं[1] देवः सवितानु मे जानात्वित्येवैतदाह सविता वै देवानां प्रसविता तत्सवितृप्रसूतऽएवैतद्यज्ञस्य रसमुच्छैति ॥१४॥ अथापरं चतुर्गृहीतमाज्यं गृहीत्वा[2] । उदङ् प्रयन्नाहापऽइष्य होतरित्यपऽइच्छ होतरित्येवैतदाह तद्यदतो होतान्वाहैतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्द्धऽएतानु चैवैतदनुतिष्ठते नेदेनानन्तरा नाष्ट्रा रक्षाꣳसि हिनसन्निति ॥१५॥ अथ सम्प्रेष्यति । 'मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधानिनऽएताग्नीच्चात्वाले व्वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चे'ति सम्प्रैषऽएवैषः ॥ ॥१६॥ तऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रꣳ स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ते वै सह पत्नीभिर्यन्ति तद्यत्सह पत्नीभिर्यन्ति ॥१७॥ यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वापः प्रविवेश तमेते गन्धर्व्वाः सोमरक्षा जुगुपः ॥१८॥ ते ह देवाऽऊचुः । इयमु न्वेवेह नाष्ट्रा यदिमे गन्धर्व्वाः कथं न्विममभयेऽनाष्ट्रे यज्ञस्य रसमाहरेमेति ॥१९॥ ते होचुः । योषित्कामा वै गन्धर्व्वाः सहैव[3] पत्नीभिरयाम ते पत्नीष्वेव गन्धर्व्वा गर्द्धिष्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरिष्यामऽइति ॥२०॥ ते सह पत्नीभिरीयुः । ते पत्नीष्वेव गन्धर्व्वा जगृधुरथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाजह्रुः ॥२१॥ तथोऽएवैषऽएतत् । सहैव पत्नीभिरेति ते पत्नीष्वेव गन्धर्व्वा[4] गृध्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरति[5] ॥२२॥ सोऽपोऽभिजुहोति । एताꣳ ह वाऽआहुतिꣳ हुतामेष यज्ञस्य रस ऽउपसमैति तां प्रत्युत्तिष्ठति तमेवैतदाविष्कृत्य गृह्णाति ॥२३॥ यद्वेवैतामाहुतिं जुहोति । एतमेवैतद्यस्य रसमभिप्रस्तृणीते तमारुन्द्धे तमपो याचति याभ्यऽउ चैवैतां देवताभ्यऽआहुतिं जुहोति ताऽएवैतत्प्रीणाति ताऽअस्मै तृप्ताः प्रीताऽएतं यज्ञस्य रसꣳ सन्नम-

---

१. इदं इति. घ.  २. गृहीत्वा इति घ, गृहीत्वा इति. ग.

३. सह पत्नीभिरिति. ग.  ४. गन्धर्वा इति. ग.  ५. हरति इति. ग.

न्ति ॥२४॥ स जुहोति । "देवीरापोऽअपान्नपा"दिति देव्यो ह्यापस्त-स्मादाह देवीरापोऽअपान्नपादिति "यो वऽऊर्म्मिर्हविष्य"ऽइति यो वऽऊर्मिर्यज्ञिय इत्येवैतदाहे "न्द्रियावान्मदिन्तम"ऽइति व्वीर्यवानित्येवैतदाह यदाहेन्द्रियावानिति मदिन्तम ऽइति स्वादिष्ठऽइत्येवैतदाह "तं देवेभ्यो देवत्रा दत्ते" त्येतदेनाऽअयाचिष्ट यदाह तं देवेभ्यो देवत्रा दत्तेति "शुक्रपेभ्य"ऽइति सत्यं वै शुक्रꣳ सत्यपेभ्यऽइत्येवैतदाह "येषां भागः स्थ स्वाहे"ति तेषामु ह्येष भागः॥२५॥ अथ मैत्रावरुणचमसेनैतामाहुतिमुपप्लावयति । "कार्षिरसी"ति यथा वाऽअङ्गारोऽग्निना प्सातः स्यादेवमेषाहुतिरेतया देवतया प्साता भवति राजानं वाऽएताभिरद्भिरुपस्रक्ष्यन् भवति याऽएता मैत्रावरुणचमसे व्वज्रो वाऽआज्यꣳ रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमꣳ हिनसानीति तस्माद्वाऽअपप्लावयति ॥२६॥ अथ गृह्णाति । "समुद्रस्य त्वाक्षित्याऽउन्नयामी"त्यापो वै समुद्रोऽप्स्वेवैतदक्षितिं दधाति तस्मादाप ऽएतावति भोगे भुज्यमाने न क्षीयन्ते तदन्वेकधनानुन्नयन्ति तदनु पान्नेजनान् ॥२७॥ तद्यन्मैत्रावरुणचमसेन गृह्णाति । यत्र वै देवेभ्यो यज्ञोऽपाक्रामत्तमेतद्देवाः प्रैषैरेव प्रैषमैच्छन् पुरोरुग्भिः प्रारोचयन्निविद्भिर्न्यवेदयंस्तस्मान्मैत्रावरुणचमसेन गृह्णाति ॥२८॥ तऽआयन्ति । प्रत्युपतिष्ठतेऽग्नीच्चात्वाले व्वसतीवरीभिश्च होतृचमसेन च सऽउपर्य्युपरि चात्वालꣳ सꣳस्पर्शयति व्वसतीवरीश्च मैत्रावरुणचमसं च "समापोऽअद्भिरग्मत समोषधीभिरोषधी"रिति यश्चासौ पूर्व्वेद्युराहृतो यज्ञस्य रसो यश्चाद्याहृतस्तमेवैतदुभयꣳ सꣳसृजति ॥२९॥ तद्धैके । ऽएव मैत्रावरुणचमसे व्वसतीवरीर्नयन्त्या मैत्रावरुणचमसाद्वसतीवरीषु यश्चासौ पूर्व्वेद्युराहृतो यज्ञस्य रसो यश्चाद्याहृतस्तमेवैतदुभयꣳ सꣳसृजाम ऽइति व्वदन्तस्तदु तथा न कु-

१-६. मा. सं. ६. २७.    ७. मा. सं. ६. २८.
८ तस्माद्वा इति. घ.    ९.१०. मा. सं. ६.२८.
११. See तै. सं. ६. ४. ३. ४.

यांद्यद्वाऽआधवनीये समवनयति तदेवैष ऽउभयो यज्ञस्य रसः सꣳ सृज्यतेऽथ होतृचमसे व्वसतीवरीर्गृह्णाति निग्राभ्याभ्यस्तद्यदुपर्युपरि चात्वालꣳ सꣳस्पर्शयत्यतो वै देवा दिवमुपोदक्रामंस्तद्यजमानमेवैतत्स्वर्ग्यं पन्थानमनुसंख्यापयति ॥३०॥ तऽआयान्ति । तꣳ होता पृच्छत्यध्वर्यो॑ऽवेरपा३ ऽइत्युविदो ऽपा३ ऽइत्येवैतदाह तं प्रत्याहोतेव नन्नमुरित्यविदमथो मेऽनꣳसतेत्येवैतदाह ॥३१॥ स यद्यग्निष्टोमः स्यात् । यदि प्रचरण्याꣳ सꣳस्रवः परिशिष्टोऽलꣳ होमाय स्यात्तं जुहुयाद्यद्यु नालꣳ होमाय स्यादपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति "यमग्ने[1] पृत्सु मर्त्यमवा व्वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः स्वाहे"त्याग्नेय्या जुहोत्यग्निर्व्वाऽअग्निष्टोमस्तदग्नावग्निष्टोमं प्रतिष्ठापयति मर्त्तवत्या पुरुषसंमितो वाऽअग्निष्टोम ऽएवं जुहुयाद्यद्यग्निष्टोमः स्यात् ॥३२॥ यद्युक्थ्यः स्यात्[2] । मध्यमं परिधिमुपस्पृशेत्त्रयः परिधयस्त्रीण्युक्थान्येतैरु हि तर्हि यज्ञः प्रतितिष्ठति यद्युऽअतिरात्रो वा षोडशी वा स्यान्नैव जुहुयान्न मध्यमं परिधिमुपस्पृशेत्समुद्यैव तूष्णीमेत्य प्रपद्येत तद्यथायथं यज्ञक्रतून्व्यावर्त्तयति ॥ ३३ ॥ अयुज्ञा अयुज्ञाऽएकधना भवन्ति । त्रयो वा पञ्च वा पञ्च वा सप्त वा सप्त वा नव वा नव वैकादश वैकादश वा त्रयोदश वा त्रयोदश[3] वा पञ्चदश वा द्वन्द्वमह मिथुनं प्रजननमथ यऽएष एकोऽतिरिच्यते स यजमानस्य श्रियमभ्यतिरिच्यते स वाऽएषाꣳ सधनं यो यजमानस्य श्रियमभ्यतिरिच्यते तद्यदेषाꣳ सधनं[4] तस्मादेकधना नाम ॥३४॥
Cf. का. श. ४. ९. ३; तै. सं. ६. ४. ३; मै. सं ४. ५. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे सप्तमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. ९. ३. )

---

१. मा. सं. ६. २९.
२. स्यात् इति. घ.
३. त्रयोदश इति नाऽस्ति. ग.
४. सधनं इति. घ.

## ३. ७. ५.

## ( प्रातस्सवनम् , सोमाभिषवः )

अथाधिषवणे पर्युपविशन्ति । अथास्याᳬ हिरण्यं बध्नीते द्वयं वाऽइदं न तृतीयमस्ति सत्यं चैवानृतं च सत्यमेव देवा ऽ अनृतं मनुष्या ऽअग्निरेतसं वै हिरण्यᳬ सत्येनाᳬशूनुपस्पृशानि सत्येन सोमं पुराहणानीति तस्माद्वा ऽअस्याᳬ हिरण्यं बध्नीते[1] ॥१॥ अथ ग्रावाणमादत्ते । ते वाऽएतेऽश्ममया ग्रावाणो भवन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम ऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तच्छरीरेणैवैनमेतत्समर्द्धयति कृत्स्नं[2] करोति तस्मादश्ममया भवन्ति घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथात ऽउदेति तथा संजीवति तस्मादश्ममया ग्रावाणो भवन्ति ॥२॥ तमादत्ते । "देवस्य[3] त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद्दे रावासी"ति सविता वै देवानां प्रसविता तत्सवितृप्रसूतऽएवैनमेतदादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनावध्वर्यू तत्तयोरेव बाहुभ्यामादत्ते[4] न स्वाभ्यां पूष्णो हस्ताभ्यामिति पूषा भागदुघस्तत्तस्यैव हस्ताभ्यामादत्ते[5] न स्वाभ्यां वज्रो वाऽएष तस्य न मनुष्यो भर्ता तमेताभिर्देवताभिरादत्ते ॥३॥ आददे रावासीति । यदा वाऽएनमेतेनाभिषुण्वन्त्यथाहुतिर्भवति यदाहुतिं जुहोत्यथ दक्षिणा ददात्येतद्वयेष द्वयᳬ रासतऽआहुतीश्च दक्षिणाश्च तस्मादाह रावासीति ॥४॥ "गंभीरमिममध्वरं[6] कृधी"ति । अध्वरो वै यज्ञो महान्तमिमं यज्ञं कृधीत्येवैतदाह"न्द्रायँ[7] सुषूतम"मितीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेति सुषूतममिति सुसुततम[8]मित्येवैतदाहो"त्तमेन पविने"[9] त्येष वाऽउत्तमः पविर्यत्सोमस्तस्मादाहोत्तमेन पविने"र्यूर्जस्वन्तं[10][11] मधु-

---

१. बध्नीते इति. घ. २. कृत्स्नमिति. घ. ३. मा.सं. ६. ३०.
४,५. मादत्ते इति.ग,घ. ६, ७. मा. सं. ६. ३०. ८. सुसुतमिति. ग.
९,१०. मा. सं. ६. ३०. ११. स्वन्तं इति. घ.

मन्तं पयस्वन्त''मिति रसवन्तमित्येवैतदाह यदाहोर्जस्वन्तं मधुमन्तं पयस्वन्तमिति ॥५॥ अथ व्वाचं यच्छति देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयांचक्रुस्ते होचुरुपाᳫंशु यजाम व्वाचं यच्छामेति तऽउपाᳫंश्वयजन् वाचमयच्छन् ॥६॥ अथ निग्राभ्या ऽआहरति। तास्वेनं व्वाचयति "निग्राभ्या स्थ देवश्रुतस्तर्प्पयत मा। मनो मे तर्प्पयत व्वाचं मे तर्प्पयत प्राणं मे तर्प्पयत चक्षुर्मे तर्प्पयत श्रोत्रं मे तर्प्पयतात्मानं मे तर्प्पयत प्रजां मे तर्प्पयत पशून् मे तर्प्पयत गणान् मे तर्प्पयत गणा मे मा व्वितृष''न्निति रसो वाऽआपस्तास्वेवैतामाशिषमाशास्ते सर्वं च मऽआत्मानं तर्प्पयत[3] प्रजां मे तर्प्पयत पशून् मे तर्प्पयत गणान् मे तर्प्पयत गणा मे मा व्वितृषन्निति स यऽएष उपाᳫंशु सवन[4]ः स व्विवस्वानादित्यो निदानेन सोऽस्यैष व्यानः[5] ॥७॥ तमभिमिमीते । घ्नन्ति[6] वाऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथातऽउदेति तथा सञ्जीवति यद्वेव मिमीते तस्मान्मात्रा मनुष्येषु मांत्रो[7] यो चाप्यन्या मात्रा ॥८॥ स मिमीते । "इन्द्राय[8] त्वा व्वसुमते रुद्रवत''ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति व्वसुमते रुद्रवतऽइति तदिन्द्रमेवानु वसूंश्च रुद्रांश्चाभजती''न्द्राय[9] त्वादित्यवत''ऽइति तदिन्द्रमेवान्वादित्यानाभजती''न्द्राय[10] त्वाभिमातिघ्न''ऽइति सपत्नो वाऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्येवैतदाह सोस्योद्धारो यथा श्रेष्ठस्योद्धार ऽएवमस्यैषऽऋते देवेभ्यः ॥९॥ "श्येनाय[11] त्वा सोमभृत''ऽइति। तद्गायत्र्यै मिमीतेऽ"ग्नये[12] त्वा रायस्पोषद''ऽइत्य[13]ग्निर्वै गायत्री[14] तद्गायत्र्यै मिमीते स यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः सोमभृत्तेनैवास्या ऽएतद्वीर्येण[15] द्वितीयं मिमीते ॥१०॥ अथ यत्पञ्चकृत्वो मिमीते । संवत्सर[16]संमितो वै यज्ञः पञ्च वाऽऋतवः

१. मा. सं. ६. ३०.　२. मा. सं ६. ३१.　३. तर्पयतेति. घ.
४. सवनः. इति. घ.　५. व्यान इति. ग.　६. घ्नन्तीति. घ.
७. पात्रो इति क.　८.-१२. मा. सं. ६. ३२　१३. इति. घ.
१४. गायत्री इति. घ.　१५. द्वितीयᳫं इति. घ.　१६. संवत्सर इति. घ.

संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वो मिमीते ॥११॥ तमभिमृशति । "यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे । तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोच" इति यत्र वाऽएषोऽग्रे देवानाᳪं हविर्बभूव तद्धेक्षांचक्रे मैव सर्वेणेवात्मना देवानाᳪं हविर्भूवमिति स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त ॥१२॥ तद्वै देवा अस्पृण्वत । तेऽस्यैतेनैवैतास्तनूराप्नुवन्त्सᳪं कृत्स्नऽएव देवानाᳪं हविरभवत्तथोऽएवास्यैष एतेनैवैतास्तनूराप्नोति स कृत्स्नऽएव देवानाᳪं हविर्भवति तस्मादेवमभिमृशति ॥१३॥ अथ निग्राभ्याभिरुपसृजति । आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किं चन प्रतिधारयते ता ह स्वमेव वशं चेरुः कस्मै नु वयं तिष्ठेमहि याभिरस्माभिर्वृत्रो हतऽइति सर्व्वं वाऽइदमिन्द्राय तस्थानमास यदिदं किञ्चापि योऽयं पवते ॥१४॥ स इन्द्रोऽब्रवीत् । सर्व्वं वै मऽइदं तस्थानं यदिदं किं च तिष्ठध्वमेव मऽइति ता होचुः किं नस्ततः स्यादिति प्रथमभक्षऽएव वः सोमस्य राज्ञऽइति तथेति ताऽअस्माऽअतिष्ठन्त तास्तस्थानाऽउरसि न्यगृह्णीत तद्यदेना उरसि न्यगृह्णीत तस्मान्निग्राभ्या नाम तथैवैना एतद्यजमानऽउरसि निगृह्णीते स आसामेष प्रथमभक्षः सोमस्य राज्ञो यन्निग्राभ्याभिरुपसृजति ॥१५॥ सऽउपसृजति । "श्वात्रा स्थ वृत्रतुर" इति शिवा ह्यापस्तस्मादाह श्वात्रा स्थेति वृत्रतुर इति वृत्रᳪं ह्येताऽअघ्नन् "राधो गूर्त्ताऽअमृतस्य पत्नी"रित्यमृता ह्यापस्ता देवीर्देवत्रेमं यज्ञं नयतेति नात्र तिरोहितमिवास्त्यु "पहूताः सोमस्य पिबते"ति तदुपहूताऽएव प्रथमभक्षᳪं सोमस्य राज्ञो भक्षयन्ति ॥१६॥ अथ प्रहरिष्यन् । यं द्विष्यात्तं मनसा ध्यायेदमुष्माऽअहं प्रहरामि न तुभ्यमिति यो न्वेवेमं मानुषं ब्राह्मणᳪं हन्ति तं

---

१. पञ्चभिः इति. ग. २. मा. स. ६. ३३. ३. तद्धेक्षाञ्चक्रे इति. घ.
४. स इति. घ. ५. धारयतीति. ग. ६. चापि. इति. क.
७. किं इति घ. ८. एता इति. ग. ९–११. मा. सं ६.३४

न्वेव परिचक्षतेऽथ किं य एतं देवो हि सोमो घ्नन्ति वाऽएनमेत-द्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथा तऽउदेति तथा सञ्जीवति तथा-नेनस्यं भवति यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेत्तथोऽअनेन-स्यं भवति ॥१७॥ स प्रहरति। "मा भेर्मा संविक्था"ऽइति मा त्वं भैषीर्मा संविक्थाऽअमुष्मा ऽअहं प्रहरामि न तुभ्यमित्येवैतदाहो-"र्जं धत्स्वे"ति रसं धत्स्वेत्येवैतदाह "धिषणे वीड्वी सती वी-डयेथामूर्जं दधाथा"मितीमेऽएवैतत्फलकेऽआहुरित्युं हैकऽआहुः किं नु तत्र योऽप्येते फलके भिन्द्यादिमेह वै द्यावापृथिवीऽएतस्माद्वज्रा-दुद्यतात्सꣳरेजेते तदाभ्यामेवैनमेतद्द्यावापृथिवीभ्याꣳ शमयति तथेमे शान्तो न हिन"स्त्यूर्जं दधाथा"मिति रसं दधाथामित्येवैतदाह "पाप्मा हतो न सोम"ऽइति तदस्य सर्व्वं पाप्मानꣳहन्ति ॥१८॥ स वै त्रिरभिषुणोति। त्रिः सम्भरति चतुर्निग्राभमुपैति तद्दश दशा-क्षरा वै विराड्वैराजः सोमस्तस्माद्दश कृत्वः सम्पादयति ॥१९॥ अथ यन्निग्राभमुपैति। यत्र वाऽएषोऽग्रे देवानाꣳ हविर्बभूव तद्धेमा दिशोऽभिदध्यावाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सꣳस्पृशेयेति त-मेतद्देवा ऽआभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना समस्पर्शयन्यन्निग्राभमु-पायंस्तथोऽएवैनमेष ऽएतदाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सꣳ-स्पर्शयति यन्निग्राभमुपैति ॥२०॥ सऽउपैति। "प्रागपागुदगधराक्स-र्व्वतस्त्वा दिशऽआधावन्त्वि"ति तदेनमाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सꣳस्पर्शयत्य"म्ब निष्पर समरीर्विदा"मिति योषा वाऽअ-म्बा योषा दिशस्तस्मादाहाम्ब निष्परेति समरीर्व्विदामिति प्रजा वा-ऽअरीः सम्प्रजा जानतामित्येवैतदाह तस्माद्याऽअपि विदूरमिव प्र-जा भवन्ति समेव ता जानते तस्मादाह समरीर्व्विदामिति ॥२१॥ अथ यस्मात्सोमो नाम। यत्र वाऽएषोऽग्रे देवानाꣳ हविर्बभूव त-द्धेक्षांचक्रे मैव सर्व्वेणेवात्मना देवानाꣳ हविर्भूवमिति तस्य या जु-

१–३. मा. सं. ६. ३५. ४. रित्यु इति. घ. ५–८. मा. ६. ३६.

घृतमा तनूरास तामपनिदधे तद्वै देवा अस्पृण्वत ते होचुरुपैवैतां प्रवृहस्व सहैव न ऽएतया हविरेधीति तां दूरऽइवोषप्रावृहत स्वा वै मऽएषेति तस्मात्सोमो नाम ॥२२॥ अथ यस्माद्यज्ञो नाम । घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्ति तद्यदेनं तन्वते तदेनं जनयन्ति स तायमानो जायते स यन् जायते[1] तस्माद्यज्ञो ह वै नामैतद्यद्यज्ञऽइति ॥२३॥ तन्नैतामपि वाचमुवाद । "त्वमङ्ग प्रशंसिषो[2] देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच"ऽइति मर्त्यो हैवैतद्भवन्नुवाच त्वमेवेतो जनयितासि[3] नान्यस्त्वदिति ॥२४॥ अथ निग्राभ्याभ्यो ग्रहान्विगृह्णते । आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते स्यन्दमानानां वै वसतीवरीर्गृह्णाति वसतीवरीभ्यो निग्राभ्या निग्राभ्याभ्यो ग्रहान्विगृह्णते तेनैवैतद्वीर्येण ग्रहान्विगृह्णते होतृचमसाद्योषा वाऽऋग्घ्रोता योषायै वाऽइमाः प्रजाः प्रजायन्ते तदेनमेतस्यै योषायाऽऋचो होतुः प्रजनयति तस्माद्धोतृचमसात्[4] ॥२५॥ Cf. का. श. ४. ९. ४. तै. सं. ६. ४. ४., मै. सं. ४. ६. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे तृतीयकाण्डे सप्तमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ९. ४. )

सप्तमः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ११४ )

( इति नवमोऽध्यायः )

इति अध्वरं नाम तृतीयं काण्डं समाप्तम् ॥ ३ ॥

( तृतीयकाण्डकाण्डिकासंख्या ८५९ )

---

१. जायते इति. घ. २. मा. सं. ६. ३७. ३. तासि इति. घ. ४. चमसादिति. क.

॥ श्रीः ॥

# अथ माध्यन्दिनशाखीये शतपथब्राह्मणे

# ग्रहनामकं चतुर्थं काण्डम्* ॥

## अग्निष्टोमः ॥ ( सोमयागः )

### प्रथमप्रपाठके प्रथमं ब्राह्मणम् ।

### ४. १. १.

### ( उपांशुग्रहः, क्षुल्लकाभिषवश्च )

॥ ॐ ॥ प्राणो ह वाऽअस्योपाꣳशुः । व्यानऽउपाꣳशुसवन ऽउदान ऽएवान्तर्यामः[1] ॥१॥ अथ यस्मादुपाꣳशुर्नाम । अꣳशुर्वै नाम ग्रहः स प्रजापतिस्तस्यैष प्राणस्तद्यदस्यैष प्राणस्तस्मादुपाꣳशुर्नाम ॥२॥ तं बहिष्पवित्राद्गृह्णाति । पराञ्चमेवास्मिन्नेतत्प्राणं दधाति सोऽस्यायं पराङेव प्राणो निरर्दति तमꣳशुभिः पावयति पूतोऽसदिति षड्भिः पावयति षड्वाऽऋतवऽऋतुभिरेवैनमेतत्पावयति ॥३॥ तदाहुः । यदꣳशुभिरुपाꣳशुं पुनाति सर्व्वे सोमाः पवित्रपूताऽअथ केनास्याꣳशवः पूता भवन्तीति ॥४॥ तानुपनिवपति । "यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहे"[2]ऽति तदस्य स्वाहाकारेणैवाꣳशवः पूता भवन्ति सर्व्वं वाऽएष ग्रहः सर्व्वेषाꣳ हि सवनानाꣳ रूपम् ॥५॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्यऽआसङ्गाद्बिभयांचक्रुस्ते होचुः सꣳस्थापयाम यज्ञं यदि नोऽसुररक्षसान्यासजेयुः सꣳस्थितऽएव नो यज्ञः स्यादिति ॥६॥ ते प्रातः

---

* काण्वशतपथे पञ्चमतया परिगणितमिदं काण्डम् । १. अन्तर्यामः इति च.

२. मा. सं. ७. २. मन्त्रोऽयं वाजसनेयिसंहितायामत्रैव पठितः तैत्तिरीयसंहितायां तूपानुवाक्यकाण्डे पठितः ( तै. सं. ३. ३. ३. २. )

सवनऽएव । सर्व्वं यज्ञꣳ समस्थापयन्नेतस्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्रऽऋक्तस्तेन सꣳस्थितेनैवातऽऊर्ध्वं यज्ञेनाचरन्त्सऽएषोऽप्येतर्हि तथैव यज्ञः सन्तिष्ठतऽएतस्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्रऽऋक्तस्तेन सꣳस्थितेनैवातऽऊर्ध्वं यज्ञेन चरति ॥७॥ स वाऽअष्टौ कृत्वोऽभिषुणोति । अष्टाक्षरा [1]वै गायत्री गायत्रं प्रातस्सवनं प्रातस्सवनमेवैतत्क्रियते ॥८॥ स गृह्णाति "[2]व्वाचस्पतये पवस्वे"ति प्राणो वै व्वाचस्पतिः प्राणऽएष ग्रहस्तस्मादाह व्वाचस्पतये पवस्वेति "[3]व्वृष्णोऽअꣳशुभ्यां गभस्तिपूत" ऽइति सोमाꣳशुभ्याꣳ ह्येनं पावयति तस्मादाह व्वृष्णोऽअꣳशुभ्यामिति गभस्तिपूतऽइति पाणी वै गभस्ती पाणिभ्याꣳ ह्येनं पावयति ॥९॥ अथैकादशकृत्वोऽभिषुणोति । एकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभं माध्यन्दिनꣳ [4]सवनं माध्यन्दिनमेवैतत्स[5]वनं क्रियते ॥१०॥ स गृह्णाति । "[6]देवो देवेभ्यः पवस्वे"ति देवो ह्येष देवेभ्यः पवते "[7]येषां भागोऽसी"ति तेषामु ह्येष भागः ॥११॥ अथ द्वादश कृत्वोऽभिषुणोति । द्वादशाक्षरा वै जगती जागतं तृतीयसवनं तृतीयसवनमेवैतत्क्रियते ॥१२॥ स गृह्णाति । "[8]मधुमतीर्न्नऽइषस्कृधी"ति रसमेवास्मिन्नेतद्दधाति स्वदयत्येवैनमेतद्देवेभ्यस्तस्मादेष हतो न पूयत्यथ यज्जुहोति सꣳस्थापयत्येवैनमेतत् ॥१३॥ अष्टावष्टौ कृत्वः । ब्रह्मवर्च्चसकामस्याभिषुणुयादित्याहुरष्टाक्षरा वै गायत्री ब्रह्म गायत्री ब्रह्मवर्च्चसी हैव भवति ॥१४॥ तच्चतुर्व्विꣳशतिं कृत्वोऽभिषुतं भवति । चतुर्व्विꣳशतिर्व्वै संवत्सरस्यार्द्धमासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्सꣳस्थापयति ॥१५॥ [9]पञ्च पञ्च कृत्वः । पशुकामस्याभिषुणुयादित्या-

---

१. वै इति. ग. २. मा. सं. ७. १.
३. मा. सं. ७. १. व्वृष्णो इति क, व्वृष्णो इति च. ४. सवममिति. ग. च.
५. सवनं इति ग. च. ६, ७. मा. सं. ७. १. ८. मा. सं. ७. २. ९. पुञ्च इति. ग.

ह्नुः पाङ्क्ताः पशवः पशून्हैवावरुन्द्धे पञ्च वाऽऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्सꣳस्थापयति सोऽएषा मीमाꣳसैवेतरं त्वेव क्रियते ॥१६॥ तं गृहीत्वा परिमार्ष्टि । नेद्व्यवश्च्योतदिति तं न साद-यति प्राणो ह्यस्यैष तस्मादयमसन्नः प्राणः सञ्चरति यदीत्त्वभिचरे-दथैनꣳ सादयेद् "मुष्य त्वा प्राणꣳ सादयामी"ति तथाह तस्मिन्न पुनरस्ति यन्नानुसृजति तेनोऽअध्वर्युश्च यजमानश्च ज्योग्जीवतः ॥१७॥ अथोऽअप्येवैनं दध्यात् । "अमुष्य त्वा प्राणमपिदधामी"ति तथाह तस्मिन्न पुनरस्ति यं नु सादयति तेनो प्राणान्न लोभयति ॥१८॥ स वाऽअन्तरेव सन्त्स्वाहेति करोति । देवा ह वै बिभयां चक्रुर्यद्वै नः पुरैवास्य ग्रहस्य होमादसुररक्षसानीमं ग्रहं न हन्युरि-ति तमन्तरेव सन्तः स्वाहाकारेणाजुहवुस्तꣳ हुतमेव सन्तमग्नाव-जुहवुस्तथोऽएवैनमेषऽएतदन्तरेव सन्त्स्वाहाकारेण जुहोति तꣳ हुतमेव सन्तमग्नौ जुहोति ॥१९॥ अथोपनिष्क्रामति । "उर्व्वन्त-रिक्षमन्वेमी"त्यन्तरिक्षं वाऽअनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथायं पुरुषोऽमूलऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरत्येतद्वै यजु-र्ब्रह्म रक्षोहा सऽएतेन ब्रह्मणान्तरिक्षमभयमनाष्ट्रं कुरुते ॥२०॥ अथ व्वरं वृणीते । बलवद्ध वै देवाऽएतस्य ग्रहस्य होमं प्रेप्सन्ति तेऽ-स्माऽएतं व्वरꣳ समर्द्धयन्ति क्षिप्रे न इमं ग्रहं जुहवदिति तस्मा-द्वरं व्वृणीते ॥२१॥ स जुहोति । "स्वांकृतोऽसी"ति प्राणो वाऽ-अस्यैष ग्रहः स स्वयमेव कृतः स्वयं जातस्तस्मादाह स्वांकृतोऽ-सीति "व्विश्वेभ्यऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य"ऽइति सर्व्वाभ्यो ह्येष प्रजाभ्यः स्वयं जातो "मनस्त्वाष्टु"ति प्रजापतिर्व्वै मनः प्रजा-पतिष्ट्वाश्नुतामित्येवैतदाह "स्वाहा त्वा सुभव सूर्याये"ति तदुवरꣳ

---

१. पशून्हैवावरुन्धे इति. ग.　२. जीवतः इति. च.　३. न इति. ग.
४. मा. सं. ७. २.　५. कुरुते इति. ग.　६-९. मा. सं. ७. ३

स्वाहाकारं करोति परां देवताम् ॥२२॥ अमुष्मिन्वाऽएतमहौषीत् । सऽएष तपति सर्व्वं वाऽएष तदेनꣳ सर्व्वस्यैव परार्द्ध्यं करोत्यथ यदवरां देवतां कुर्यात्परꣳ स्वाहाकारꣳ स्यादु हैवामुष्मादादित्यात्परं तस्मादवरꣳ स्वाहाकारं करोति परां देवताम् ॥२३॥ अथ हुत्वोर्ध्वं ग्रहमुन्मार्ष्टि । पराञ्चमेवास्मिन्नेतत्प्राणं दधात्यथोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि पराञ्चमेवास्मिन्नेतत्प्राणं दधाति "देवेभ्यस्त्वा मरीचिपेभ्य"ऽइति ॥२४॥ अमुष्मिन्वाऽएतं मण्डलेऽहौषीत् । सऽएष तपति तस्य ये रश्मयस्ते देवा मरीचिपास्तानेवैतत्प्रीणाति तऽएनं देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥२५॥ तस्य वाऽएतस्य ग्रहस्य । नानुवाक्यास्ति न याज्या तं मन्त्रेण जुहोत्येतेनो हास्यैषोऽनुवाक्यवान् भवत्येतेन याज्यवानथ यद्यभिचरेद्योस्याꣳशुराश्लिष्टः स्याद्वाह्वोर्व्वौरसि वा व्वाससि वा तं जुहुया"द्देवाꣳशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फडि"ति यथा ह वै हन्यमानानामपधावेदेवमेषोऽभिषूयमाणानाꣳ स्कन्दति तथा ह तस्य नैव धावन्नापधावत्परिशिष्यते यस्माऽएवं करोति तꣳ सादयति "प्राणाय त्वे"ति प्राणो ह्यस्यैषः ॥२६॥ दक्षिणार्द्धे हैके सादयन्ति । एताꣳ ह्येष दिशमनु संचरतीति तदु तथा न कुर्यादुत्तरार्द्धऽएवैनꣳ सादयेन्नो ह्येतस्याऽआहुतेः का चन परास्ति तꣳ सादयति प्राणाय त्वेति प्राणो ह्यस्यैषः ॥२७॥ अथोपाꣳशुसवनमादत्ते । तं न दशाभिर्न पवित्रेणोपस्पृशति यथा ह्यद्भिः प्रणिक्तमेवं तद्यद्यꣳशुराश्लिष्टः स्यात्पाणिनैव प्रध्वꣳस्योदञ्चमुपनिपादयेद्"व्यानाय त्वे"ति व्यानो ह्यस्यैषः ॥२८॥ Cf. का. श. ५. १. १; तै. सं. ६. ४. ५; मै. सं. ४. ५. ५; काठ. सं. २६. १०. कपि. सं. ४१. ९; and ४२. १, २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे ग्रहाख्ये चतुर्थकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ.१.१)

१. कारꣳकरोति इति. ग. २. मा. सं ७. ३. ३. भवति इति. ग.
४, ५. मा. सं. ७. ३. ६. एषः इति क. ७. मा. सं. ७. ३.

## ४. १. २.

### ( अन्तर्यामग्रहः )

प्राणो ह वाऽअस्योपाᳪंशुः। व्यान ऽउपाᳪंशुसवन ऽउदान ऽएवान्तर्यामः ॥१॥ अथ यस्मादन्तर्यामो नाम। यो वै प्राणः स ऽउदानः स व्यानस्तमेवास्मिन्नेतत्पराञ्चं प्राणं दधाति यदुपाᳪंशुं गृह्णाति तमेवास्मिन्नेतत्प्रत्यञ्चमुदानं दधाति यदन्तर्यामं गृह्णाति सोऽस्यायमुदानोऽन्तरात्मन्यतस्तद्यदस्यैषोऽन्तरात्मन्यतो यद्वेनेनेमाः प्रजायतास्तस्मादन्तर्यामो नाम ॥२॥ तमन्तः पवित्राद्गृह्णाति। प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति सोऽस्यायमुदानोऽन्तरात्मन् हि तऽएतेनो हास्याप्युपाᳪंशुरन्तः पवित्राद्गृहीतो भवति समानᳪं ह्येतद्यदुपाᳪंश्वन्तर्यामौ प्राणोदानौ ह्येतेनो हैवास्यैषोऽपीतरेषु ग्रहेष्वनाक्षिद्भवति ॥३॥ अथ यस्मात्सोमं पवित्रेण पावयति। यत्र वै सोमः स्वं पुरोहितं बृहस्पतिं जिज्यौ तस्मै पुनर्ददौ तेन सᳪंशशाम तस्मिन् पुनर्ददुष्यासैवातिशिष्टमेनो यदीन्नूनं ब्रह्मज्यानायाभिदध्यौ ॥४॥ तं देवाः पवित्रेणापावयन्। स मेध्यः पूतो देवानाᳪं हविरभवत्तथोऽएवैनमेषऽएतत्पवित्रेण पावयति स मेध्यः पूतो देवानाᳪं हविर्भवति ॥५॥ तद्यदुपयामेन ग्रहा गृह्यन्ते। इयं वाऽअदितिस्तस्याऽअदः प्रायणीयᳪं हविरसावादत्यश्चरुस्तद्धैतत्पुरेव सुत्यायै सा हेयं देवेषु सुत्यायामपि त्वमीषेऽस्त्वेव मेऽपि प्रसुते भागऽइति ॥६॥ ते ह देवाऽऊचुः। व्यादिष्टोऽयं देवताभ्यो यज्ञस्त्वयैव ग्रहा गृह्यन्तां देवताभ्यो हूयन्तामिति तथेति सोऽस्याऽएष प्रसुते भागः ॥७॥ तद्यदुपयामेन ग्रहा गृह्यन्ते। इयं वाऽउपयामऽइयं वाऽइदमन्नाद्यमुपयच्छति पशुभ्यो मनुष्येभ्यो वनस्पतिभ्यऽइतो वाऽऊर्ध्वा देवा दिवि हि देवाः ॥८॥ तद्यदुपयामेन ग्रहा गृह्यन्ते। अनयैव तद्गृह्यन्तेऽथ यद्योनौ सादयतीयं वाऽअस्य सर्व्वस्य योनिरस्यै वाऽइमाः प्रजाः

---

१. अन्तर्यामः इति. च. २. गृह्णाति इति. ग. १. पशुभ्यो इति. ग.

प्रजाताः ॥९॥ तं वाऽएतꣳ रेतो भूतꣳ सोममृत्विजो बिभ्रति यद्वाऽअयोनौ रेतः सिच्यते प्र वै तन्मीयतेऽथ यद्योनौ सादयत्य- स्यामेव तत्सादयति ॥१०॥ प्राणोदानौ ह वाऽअस्यैतौ ग्रहौ। तयो- रुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरं प्राणोदानयोर्व्याकृत्यै प्राणोदाना- वेवैतद्व्याकरोति तस्मादेतौ समानावेव सन्तौ नानेवाचक्षते प्राण- ऽइति चोदानऽइति च ॥११॥ अहोरात्रे ह वाऽअस्यैतौ ग्रहौ। तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरमहोरात्रयोर्व्याकृत्याऽअहोरा- त्रऽएवैतद्व्याकरोति ॥१२॥ अहः सन्तमुपाꣳशुम्। तꣳरात्रौ जुहो- त्यहरेवैतद्रात्रौ दधाति तस्मादपि सुतमिश्रायामुपैव किञ्चित्ख्यायते ॥१३॥ रात्रिꣳ सन्तमन्तर्यामम्। तमुदिते जुहोति रात्रिमेवैतदहं दधाति तेनो हासावादित्यऽउद्यन्नेवेमाः[1] प्रजा न प्रदहति[2] तेनेमाः प्रजास्त्राताः[3] ॥१४॥ अथातो गृह्णात्येव। "उपयामगृहीतोऽसी"त्यु- क्तऽउपयामस्य बन्धुर"न्तर्यच्छ मघवन् पाहि सोम"मितीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्निति पाहि सोममिति गोपाय सोममित्येवैतदाहो "रुष्यं रायऽएषो यजस्वे"ति पशवो वै रायो गोपाय पशूनित्येवैतदाहेषो यजस्वेति प्रजा वाऽइषस्ताऽएवैत- द्यायजूकाः करोति ताऽइमाः प्रजा यजमानाऽअर्चन्त्यः श्राम्यन्त्यश्च- रन्ति ॥१५॥ "अन्तस्ते द्यावापृथिवी दधामि। अन्तर्दधाम्युर्वन्त- रिक्षं सजूर्देवेभिरवरैः परैश्चे"ति तदेनं वैश्वदेवं करोति तद्यदनेने- माः प्रजाः प्राणत्यश्चोदनत्यश्चान्तरिक्षमनुचरन्ति तेन वैश्वदेवोऽ- ऽ"न्तर्यामे मघवन्मादयस्वे"तीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्नित्यथ यदन्तरिति गृह्णात्यन्तस्त्वात्मन्दधऽइत्येवैत- दाह ॥१६॥ तं गृहीत्वा परिमार्ष्टि। नेद्व्यवश्चोतदिति तं न सादय- त्युदानो ह्यस्यैष तस्मादयमसन्न उदानः सञ्चरति यदीत्वभिचरेद-

---

१. उद्यन्नेव इति ग. २. प्रदहति इति ग. ३. प्रजाः इति. ग.
४. ५, ६. मा. सं. ७. ४, ७. पाहि इति. च. ८, ९. मा. सं. ७.५.

थैनꣳ सादयेदमुख्य त्वोदानꣳ सादयामीति ॥१७॥ स यद्युपाꣳशुꣳ सादयेत् । अथैनꣳ सादयेद्यद्युपाꣳशुं न सादयेन्नैनꣳ सादयेद्यद्युपाꣳशुमपिदध्यादप्येनं दध्याद्यद्युपाꣳशुं नापिदध्यान्नैनमपिदध्याद्यथोपाꣳशोः कर्म तथैतस्य समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ प्राणोदानौ हि ॥१८॥ ताऽउ ह चरकाः । नानैव मन्त्राभ्यां जुह्वति प्राणोदानौ वाऽअस्यैतौ नानावीर्यौ प्राणोदानौ कुर्मऽइति वदन्तस्तदु तथा न कुर्यान्मोहयन्ति ह ते यजमानस्य प्राणोदानावपीद्वाऽएनं तूष्णीं जुहुयात् ॥१९॥ स यद्वाऽउपाꣳशुं मन्त्रेण जुहोति । तदेवास्यैषोऽपि मन्त्रेण हुतो भवति किमु तत्तूष्णीं जुहुयात्समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ प्राणोदानौ हि ॥२०॥ स येनैवोपाꣳशुं मन्त्रेण जुहोति । तेनैवैतं मन्त्रेण जुहोति "स्वाङ्कृतोऽसि विश्वेभ्यऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याये"-त्युक्तो यजुषो बन्धुः ॥२१॥ अथ हुत्वावाञ्चं ग्रहमवमार्ष्टि । इदं वाऽउपाꣳशुꣳ हुत्वोर्ध्वमुन्मार्ष्ट्यथात्रावाञ्चमवमार्ष्टि प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति ॥२२॥ अथ नीचा पाणिना । मध्यमे परिधौ प्रत्यगुपमार्ष्टीदं वाऽउपाꣳशुꣳ हुत्वोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्ट्यथात्र नीचा पाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति "देवेभ्यस्त्वा मरीचिपेभ्य"ऽइति सोऽसावेव बन्धुः ॥२३॥ तं प्रत्याक्रम्य सादयति । "उदानाय त्वे"त्युदानो ह्यस्यैष तानि वै सꣳस्पृष्टानि सादयति प्राणोदानानेवैतत्सꣳस्पर्शयति प्राणोदानान्त्सन्दधाति ॥२४॥ तानि वाऽअनिङ्ग्यमानानि शेरे । आ तृतीयसवनात्तस्मादिमे मनुष्याः स्वपन्ति तानि पुनस्तृतीयसवने

---

१. तैत्तिरीयसंहितायां मैत्रायणीयकाठकसंहितयोश्चाऽनयोः पृथगेव होममन्त्रावुक्तौ See तै. सं. १. ४. २. ३, मै. सं. १. ३. ४, and काठ. सं. ४. १.

२. वा इति. च.  ३. मा. सं. ७. ६.

४. दधाति इति. च.  ५, ६. मा. सं. ७. ६.  ७. प्राणोदानावेवेति. ग.

प्रयुज्यन्ते तस्मादिमे मनुष्याः सुप्त्वा प्रबुध्यन्ते तेऽनिशिताश्चराचरा यज्ञस्यैवैतद्विधामनु वयऽइव ह वै यज्ञो विधीयते तस्योपांशुसव-न्तर्यामावेव पक्षावात्मोपांशुसवनः ॥२५॥ तानि वाऽअनिङ्ग्यमा-नानि शेरे । आ तृतीयसवनात्तायते यज्ञऽएति वै तद्युत्तायते तस्मा-दिमानि वयांसि विगृह्य पक्षावनायुवानानि पतन्ति तानि पुन-स्तृतीयसवने प्रयुज्यन्ते तस्मादिमानि वयांसि समासं पक्षावा-युवानानि पतन्ति यज्ञस्यैवैतद्विधामनु ॥२६॥ ( शतम् २३०० ॥ ) इयं ह वाऽउपांशुः । प्राणो ह्युपांशुरिमां ह्येव प्राणन्नभिप्रा-णित्यसावेवान्तर्यामऽउदानो ह्यन्तर्यामोऽमुं ह्येव लोकमुदनन्नभ्युद-नित्यन्तरिक्षमेवोपांशुसवनो व्यानो ह्युपांशुसवनोऽन्तरिक्षं ह्येव व्यनन्नभिव्यनिति ॥२७॥ Cf. का. श. ५. १. २; तै. सं. ६. ४.६; मै. सं. ४.५.६; काठ. सं. २७. १, २. कपि. ४१.९. and ४२.२;

इति माध्यन्दिनशाखीये शतपथब्राह्मणे ग्रहाख्ये चतुर्थकाण्डे प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. १. २. )

## ४. १. ३.

## ( ऐन्द्रवायवग्रहः )

वाग्घ वाऽअस्यैन्द्रवायवः । एतन्न्वध्यात्ममिन्द्रो ह यत्र वृ-त्राय वज्रं प्रजहार सोऽबलीयान्मन्यमानो नास्तृषीतीव बिभ्यन्नि-लयांचक्रे तदेवापि देवाऽअपन्यलयन्त ॥१॥ ते ह देवाऽऊचुः । न वै हतं वृत्रं विद्म न जीवं हन्त नऽएको वेत्तु यदि हतो वा वृत्रो जीवति वेति ॥२॥ ते वायुमब्रुवन् । अयं वै वायुर्योऽयं पवते वायो त्वमिदं विद्धि यदि हतो वा वृत्रो जीवति वा त्वं वै नऽआशिष्ठो-ऽसि यदि जीविष्यति त्वमेव क्षिप्रं पुनरागमिष्यसीति ॥३॥ स होवाच । किं मे ततः स्यादिति प्रथमवषट्कारऽएव ते सोमस्य राज्ञऽ-इति तथेत्येयाय वायुरेद्धतं वृत्रं स होवाच हतो वृत्रो यद्धते कुर्यात तत्कुरुतेति ॥४॥ ते देवाऽअभ्यसृज्यन्त । यथा वित्तिं वे-

त्स्यमानाऽएवᳬ स यमेकोऽलभत सऽएकदेवत्योऽभवद्यं द्वौ स द्विदेवत्यो यं बहवः स बहुदेवत्यस्तद्यदेनं पात्रैर्व्यगृह्णत तस्माद्ग्रहा नाम ॥५॥ सऽएषामापूयत् । सऽएनान्क्रुक्तः पूतिरभिववौ स नालमाहुत्याऽआस नालं भक्षाय ॥६॥ ते देवा व्वायुमब्रुवन् । व्वायविमं नो विवाहीमं नः स्वदयेति स होवाच किं मे ततः स्यादिति त्वय्यैवैतानि पात्राण्याचक्षीरन्निति तथेति होवाच यूयं तु मे सच्युपवातेति ॥७॥ तस्य देवाः । यावन्मात्रमिव गन्धस्यापजघ्नुस्तं पशुष्वदधुः स ऽएष पशुषु कुणपगन्धस्तस्मात्कुणपगन्धान्नापिगृह्णीत सोमस्य हैष राज्ञो गन्धः ॥८॥ नोऽएव निष्ठीवेत्[1] । तस्माद्यद्यप्यासक्त ऽइव मन्येताभिवातं परीयाच्छ्रीर्व्वै सोमः पाप्मा यक्ष्मः स यथा श्रेयस्यायति पापीयान् प्रत्यवरोहेदेवᳬ हास्माद्यक्ष्मः प्रत्यवरोहति ॥९॥ अथेतरं व्वायुर्व्यवात् । तदस्वदयत्ततोऽलमाहुत्याऽआसालं भक्षाय[2] तस्मादेतानि नानादेवत्यानि सन्ति[3] व्वायव्यानित्याचक्षते सोऽस्यैष प्रथमवषट्कारश्च सोमस्य राज्ञ ऽएतान्युऽएनेन पात्राण्याचक्षते ॥१०॥ इन्द्रो ह वाऽईक्षाञ्चक्रे । व्वायुर्व्वै नोऽस्य यज्ञस्य भूयिष्ठभाग्यस्य प्रथमवषट्कारश्च सोमस्य राज्ञऽएतान्युऽएनेन पात्राण्याचक्षते हन्तास्मिन्नपित्वमिच्छाऽइति ॥११॥ स होवाच । व्वायवा मास्मिन् ग्रहे भजेति किं ततः स्यादिति निरुक्तमेव व्वाग्वदेदिति निरुक्तं चेद्वाग्वदेदा त्वा भजामीति तत ऽएष ऐन्द्रवायवो ग्रहोऽभवद्वायव्यो हैव ततः पुरा ॥१२॥ स ऽइन्द्रोऽब्रवीत् । अर्द्धं मेऽस्य ग्रहस्येति तुरीयमेव तऽइति व्वायुरर्द्धमेव मऽइतीन्द्रस्तुरीयमेव तऽइति व्वायुः ॥१३॥

( अर्द्धप्रपाठकः ६८ )

तौ प्रजापतिं प्रतिप्रश्नमेयतुः । स प्रजापतिर्ग्रहं द्वेधा चकार स होवाचेदं व्वायोरित्यथ पुनरर्द्धं द्वेधा चकार स होवाचेदं व्वायोरितीदं तवेतीन्द्रं तुरीयमेव भाजयाञ्चकार यद्वै चतुर्थं तत्तुरीयं

---

१. निष्ठीवेदिति. च. २. भक्षाय इति. च. ३. सन्ति इति. ग.

तत ऽएषऽऐन्द्रतुरीयो ग्रहोऽभवत् ॥१४॥ तस्य वाऽएतस्य ग्रहस्य । द्वे पुरोरुचौ व्वायव्यैव पूर्व्वैन्द्रवायव्युत्तरा द्वेऽअनुवाक्ये व्वायव्यैव पूर्व्वैन्द्रवायव्युत्तरा द्वौ प्रैषौ व्वायव्यऽएव पूर्व्वऽऐन्द्रवायवऽउत्तरो द्वे याज्ये व्वायव्यैव पूर्व्वैन्द्रवायव्युत्तरैवमेनं तुरीयं तुरीयमेव भाजयाञ्चकार ॥१५॥ स होवाच । तुरीयं तुरीयं चेन्मामबीभजुस्तुरीयमेव तर्हि व्वाङ्निरुक्तं व्वदिष्यतीति तदेतत्तुरीयं व्वाचो निरुक्तं यन्मनुष्या व्वदन्त्यथैतत्तुरीयं व्वाचोऽनिरुक्तं यत्पशवो व्वदन्त्यथैतत्तुरीयं व्वाचोऽनिरुक्तं यद्वयाꣳसि व्वदन्त्यथैतत्तुरीयं व्वाचोऽनिरुक्तं यदिदं क्षुद्रꣳसरीसृपं व्वदति ॥ १६ ॥ तस्मादेतदृषिणाभ्यनूक्तम् । "[1]चत्वारि व्वाक्परिमिता पदानि तानि व्विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं व्वाचो मनुष्या व्वदन्ती"ति ॥१७॥ अथातो गृह्णात्येव[2] । "[3]आ वायो भूष शुचिपाऽउप नः सहस्रं ते नियुतो व्विश्ववार । उपो तेऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्व्वपेयं व्वायवे त्वे[4]"ति ॥१८॥ अथापगृह्य पुनरानयति । "[5]इन्द्र वायू ऽइमे सुताऽउप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि उपयामगृहीतोऽसि व्वायवऽइन्द्रवायुभ्यां त्वैष ते योनिः सजोषोभ्यां त्वे"ति सादयति स यदाह सजोषोभ्यां त्वेति यो वै व्वायुः सऽइन्द्रो य ऽइन्द्रः स व्वायुस्तस्मादाहैष ते योनिः सजोषोभ्यां त्वेति ॥१९॥ Cf. का. श. ५. १. ३; तै. सं. ६. ४. ७; मै. सं. ४. ५. ८; काठ. सं. २७.३., कपि ४२. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे ग्रहाख्ये चतुर्थकाण्डे प्रथमप्रपाठके तृतीयं ब्राह्मणम्॥ ( अ. १. ३. )

---

१. ऋ. सं. २. ३. २१. and तै. आ. १०. १२. २. २. गृह्णात्येव इति. ग.
३. मा. सं. ७. ७. ४. त्वेति इति. च. ५. मा. सं. ७. ८.

## ४. १. ४.

### ( मैत्रावरुणग्रहः )

क्रतूदक्षौ ह वाऽअस्य मित्रावरुणौ । एतन्न्वध्यात्मꣳ स यदेव मनसा कामयतऽइदं मे स्यादिदं कुर्वीयेति सऽएव क्रतुरथ यदस्मै तत्समृध्यते स दक्षो मित्रऽएव क्रतुर्व्वरुणो दक्षो ब्रह्मैव मित्रः क्षत्रं व्वरुणोऽभिगन्तैव ब्रह्म कर्त्ता क्षत्रियः ॥१॥ ते हैतेऽअग्रे नानेवासतुः । ब्रह्म च क्षत्रं च ततः शशाकैव ब्रह्म मित्रऽऋते क्षत्राद्वरुणात्स्थातुम् ॥२॥ नक्षत्रं व्वरुणः । ऋते ब्रह्मणो मित्राद्यद्ध किं च व्वरुणः कर्म चक्रेऽप्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत्समानृधे ॥३॥ स क्षत्रं व्वरुणः । ब्रह्म मित्रमुपमन्त्रयांचक्रऽउपमावर्त्तस्व सꣳ सृजावहै पुरस्त्वा करवै त्वत्प्रसूतः कर्म करवाऽइति तथेति तौ समसृजेतां ततऽएष मैत्रावरुणो ग्रहोऽभवत् ॥४॥ सोऽएव पुरोधा । तस्मान्न ब्राह्मणः सर्व्वस्येव क्षत्रियस्य पुरोधां कामयेत सꣳ ह्येतौ सृजेते सुकृतं च दुष्कृतं च नोऽएव क्षत्रियः सर्व्वमिव ब्राह्मणं पुरोदधीत सꣳ ह्येवैतौ सृजेते सुकृतं च दुष्कृतं[1] च स[2] यत्ततो व्वरुणः कर्म चक्रे प्रसूतं ब्रह्मणा मित्रेण सꣳहैवास्मै तदानृधे ॥५॥ तत्तदवक्लृप्तमेव । यद्ब्राह्मणोराजन्यः स्याद्यद्यु राजानं लभेत समृद्धं तदेतद्ध त्वेवानवक्लृप्तं यत्क्षत्रियोब्राह्मणो भवति यद्ध किं च कर्म्म कुरुतेऽप्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत्समृध्यते तस्मादु क्षत्रियेण कर्म करिष्यमाणेनोपसर्त्तव्य ऽएव ब्राह्मणः सꣳ हैवास्मै तद्ब्रह्मप्रसूतं कर्म्मर्ध्यते ॥६॥ अथातो गृह्णात्येव । "अयं[3] वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳहवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वे"ति ॥७॥ तं पयसा श्रीणाति । तद्यत्पयसा श्रीणाति व्वृत्रो वै सोम ऽआसीत्तं यत्र देवाऽअघ्नंस्तं मित्रमब्रुवंस्त्वमपि हꣳसीति स न चकमे सर्व्वस्य वाऽअहं मित्रमस्मि न मित्रꣳ सन्नमित्रो भविष्यामीति तं वै त्वा

---

१. दुष्कृतं इति. क.　　२. स इति. ग.　　३. मा. सं. ७. ९.

यज्ञादन्तरेष्यामऽइत्यहमपि हन्मीति होवाच तस्मात्पशवोऽपाक्रामन्मि-त्रᳫँ सन्नमित्रोऽभूदिति स पशुभिर्व्यार्ध्यत तमेतद्देवाः पशुभिः समा-र्द्धयन्यत्पयसा श्रीणंस्तथोऽएवैनमेषऽएतत्पशुभिः समर्द्धयति यत्पयसा श्रीणाति ॥८॥ तदाहुः । शश्वद्ध नैव चकमे हन्तुमिति तद्यदेवात्र प-यस्तन्मित्रस्य सोमऽएव व्वरुणस्य तस्मात्पयसा श्रीणाति ॥९॥ स श्रीणाति । "राया व्वयᳫँ ससवाᳫँसो मदेम हव्येन देवा यवसेन गावः । तां धेनुं मित्रावरुणा युवं नो व्विश्वाहा धत्तमनपस्फुरन्ती-मेष ते योनिर्ऋतायुभ्यां त्वे"ति सादयति स यदाहर्तायुभ्यां त्वेति ब्रह्म वाऽऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं व्वरुणऽएवायुः संवत्सरो हि व्वरुणः संवत्सरऽआयुस्तस्मादाहैष ते योनिर्ऋतायुभ्यां त्वेति ॥१०॥ Cf. का. श. ५. १. ४; तै. सं. ६. ४. ८; मै. सं. ४. ५. ८; काठ. सं २७. ४; कपि. ४२. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे ग्रहाख्ये चतुर्थकाण्डे प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. १. ४. )

## ४. १. ५.
## ( आश्विनग्रहः )

श्रोत्रᳫँह वाऽअस्याश्विनः । तस्मात्सर्व्वतः परिहारं भक्षयति सर्व्वतो ह्यनेन श्रोत्रेण शृणोति यत्र वै भृगवो वाङ्गिरसो वा स्वर्ग लोकᳫँ समाश्नुवत तच्च्यवनो वा भार्गवश्च्यवनो वाङ्गिरसस्त-देव जीर्ण्णिः कृत्यारूपो जहे ॥१॥ शर्यातो ह वाऽइदं मानवो ग्रामेण चचार । स तदेव प्रतिवेशो निविविशे तस्य कुमाराः क्रीडन्तऽइमं जीर्ण्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्व्विपिपिषुः ॥२॥ स शर्याते-भ्यश्चुक्रोध । तेभ्योऽसंज्ञां चकार पितैव पुत्रेण युयुधे भ्राता भ्रात्रा ॥३॥ शर्यातो ह वाऽईक्षांचक्रे । यत्किमकरं तस्मादिदमापदीति स

१. मित्रᳫँइति. ग. २. पयासा इति. ग. ३. मा. सं. ७. १०
४. उपाख्यानमिदं महाभारते वनपर्वणि १२२–१२५. द्रष्टव्यम् । See तां. ब्रा. also. १४. ६. १०. पृ. १११. चौखम्बा संस्करणे

गोपालांश्चाविपालांश्च सꣳ ह्वयितवाऽउवाच ॥४॥ स होवाच । को वोऽद्येह किंचिदद्राक्षीदिति ते होचुः पुरुषऽएवायं जीर्णिः कृत्यारूपः शेते तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति स विदाञ्चकार स वै च्यवनऽइति ॥५॥ स रथं य्युक्त्वा । सुकन्याꣳशार्यातीमुपाधाय प्रसिष्यन्द सऽआजगाम यत्रर्षिरास तत् ॥६॥ स होवाच । ऋषे नमस्ते यन्नावेदिषं तेनाहिꣳसिषमियꣳसुकन्या तया तेऽपह्नुवे सञ्जानीतां मे ग्रामऽइति तस्य ह ततऽएव ग्रामः सञ्जज्ञे स ह ततऽएव शार्यातो मानवऽउद्युयुजे नेदपरꣳ हिनसानीति॥७॥ अश्विनौ ह वाऽइदं भिषज्यन्तौ चेरतुः । तौ सुकन्यामुपेयतुस्तस्यां मिथुनमीषाते तन्न जज्ञौ ॥८॥ तौ होचतुः । सुकन्ये कमिमं जीर्णिं कृत्यारूपमुपशेषऽ आवामनुप्रेहीति सा होवाच य्यस्मै मां पितादान्नैवाहं तं जीवन्तꣳ हास्यामीति तद्धायमृषिराजज्ञौ ॥९॥ स होवाच । सुकन्ये किं त्वैतदवोचतामिति तस्माऽएतद्व्याचचक्षे स ह व्याख्यात ऽउवाच य्यदि तत्पुनर्ब्रुवतः सा त्वं ब्रूतान्न वै सुसर्व्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथऽइति तौ य्यदि त्वाऽब्रवतः केनावमसर्व्वौ स्वः केनासमृद्धाविति सा त्वं ब्रूतात्पतिं नु मे पुनर्य्युवाणं कुरुतमथ वां व्वक्ष्यामीति तां पुनरुपेयतुस्ताꣳ हैतदेवोचतुः ॥१०॥ सा होवाच । न वै सुसर्व्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथऽइति तौ होचतुः केनावमसर्व्वौ स्वः केनासमृद्धाविति सा होवाच पतिं नु मे पुनर्युवाणं कुरुतमथ वां व्वक्ष्यामीति ॥११॥ तौ होचतुः । एतꣳ ह्रदमभ्यवहर स य्येन व्वयसा कमिष्यते तेनोदैष्यतीति तꣳह्रदमभ्यवजहार स य्येन व्वयसा चकमे तेनोदेयाय[1] ॥१२॥ तौ होचतुः । सुकन्ये केनावमसर्व्वौ स्वः केनासमृद्धाविति तौ हर्षिरेव प्रत्युवाच कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते[2] ते वां यज्ञादन्तर्यन्ति तेनासर्व्वौ स्थस्तेनासमृद्धाविति तौ ह ततऽएवाश्विनौ प्रेयतुस्तावा-

१. उदेयातेय इति. ग.　　२. तन्वते इति. ग.

जग्मतुर्द्देवान्यज्ञं तन्वानान्त्स्तुते बहिष्पवमाने ॥१३॥ तौ होचतुः । उप नौ ह्वयध्वमिति ते ह देवाऽऊचुर्न्न वामुपह्वयिष्यामहे बहु मनुष्येषु स᳸सृष्टमचारिष्टं भिषज्यन्ताविति ॥१४॥ तौ होचतुः । विशीर्ष्णा वै यज्ञेन यजध्वऽइति कथं विशीर्ष्णेत्युप नु नौ ह्वयध्वमथ वो व्वक्ष्यावऽइति तथेति ताऽउपाह्वयन्त ताभ्यामेतमाश्विनं ग्रहमगृह्णंस्तावध्वर्य्यू यज्ञस्याभवतां तावेतद्यज्ञस्य शिरः प्रत्यधत्तां तददस्तद्दिवाकीर्त्यानां ब्राह्मणे व्याख्यायते यथा तद्यज्ञस्य शिरः प्रतिदधतुस्तस्मादेष स्तुते बहिष्पवमाने ग्रहो गृह्यते स्तुते हि बहिष्पवमानऽआगच्छताम् ॥१५॥ तौ होचतुः । मुख्यौ वाऽआवां यज्ञस्य स्वो यावध्वर्य्यूऽइह नाविमं पुरस्ताद्ग्रहं पर्य्याहरताभिद्विदेवत्यानिति ताभ्यामेतं पुरस्ताद्ग्रहं पर्य्याजह्रुरभिद्विदेवत्यांस्तस्मादेष दशमो ग्रहो गृह्यते तृतीयऽएव व्वषट्क्रियतेऽथ यदश्विनाविती मे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे हीद᳸ सर्व्वमाश्नुवातां पुष्करस्रजावित्यग्निरेवास्यै पुष्करमादित्योऽमुष्यै ॥१६॥ अथातो गृह्णात्येव । "या वां कशा मधुमत्यश्विना[2] सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्म्माध्वीभ्यां त्वे"ति[1] सादयति तं वै मधुमत्यर्च्चा गृह्णाति माध्वीभ्यां त्वेति सादयति तद्यन्मधुमत्यर्च्चा गृह्णाति माध्वीभ्यां त्वेति सादयति ॥१७॥ दध्यङ् ह वाऽआभ्यामाथर्व्वणः[3] । मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति[4] तस्मान्मधुमत्यर्च्चा गृह्णाति माध्वीभ्यां त्वेति सादयति ॥१८॥ तानि वाऽएतानि । श्लक्ष्णानि पात्राणि भवन्ति रास्नावमैन्द्रवायवपात्रं[5] तत्तस्य द्वितीय᳸ रूपं तेन तद्विदेवत्यमजकावं[6] मैत्रावरुणपात्रं तत्तस्य द्वितीय᳸ रूपं तेन तद्द्विदेवत्यमौष्ट्रमाश्विनपात्रं तत्तस्य द्वितीय᳸ रूपं तेन तद्द्विदेवत्यमथ[7] यदश्विनाविति मुख्यौ

१. मा. सं. ७. ११. २. अश्विना इति. ग. ३. माथर्वण इति. ग.
४. एतेनोप इति. ग. ५. See. आप. श्रौ. १२. १. ११. ६, ७. देवत्यमिति. ग.

वाऽअश्विनावौष्ठमिव वाऽइदं मुखं तस्मादौष्ठमाश्विनपात्रं भवति ॥१९॥ Cf. का. श. ५. १. ५; तै. सं. ६. ४. ९; मै. सं. ४. ६. १; काठ. सं. २७. ५; कपि. सं. ४२. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥

( प्रथमोऽध्यायस्समाप्तः )

४. १. ६.

( शुक्रामन्थिग्रहौ )

चक्षुषी ह वाऽअस्य शुक्रामन्थिनौ । तद्वाऽएषऽएव शुक्रो य्यऽएष तपति तद्यदेषऽएतत्तपति[1] तेनैष शुक्रश्चन्द्रमाऽएव मन्थी ॥१॥ तᳬं सक्तुभिः श्रीणाति । तदेनं मन्थं करोति तेनोऽएष मन्थ्येतौ ह वाऽआसां प्रजानां चक्षुषी स य्यद्धैतौ नोदियातां न हैवेह स्वौ च न पाणी निर्ज्जानीयुः ॥२॥ तयोरत्त्वैवान्यतरः । आद्योऽन्यतरोऽत्त्वैव शुक्रऽआद्यो मन्थी ॥३॥ तयोरत्त्वैवान्यतरमनु । आद्योऽन्यतरमन्वत्त्वैव शुक्रमन्वाद्यो मन्थिनमनु तौ वाऽअन्यस्मै गृह्येतेऽअन्यस्मै हूयेते शण्डामर्क्कावित्यसुररक्षसे ताभ्यां गृह्येते देवताभ्यो हूयेते तद्यत्तथा ॥४॥ यत्र वै देवाः । असुररक्षसान्यपजघ्निरे तदेतावेव न शेकुरपहन्तुं यद्ध स्म देवाः किं च कर्म कुर्व्वते तद्ध स्म मोहयित्वा क्षिप्रऽएव पुनरपद्रवतः ॥५॥ ते ह देवाऽऊचुः[2] । उपजानीत य्यथेमावपहनामहा ऽइति ते होचुर्ग्रहावेवाभ्यां गृह्णाम तावभ्यवैष्यतस्तौ स्वीकृत्यापहनिष्यामहऽइति ताभ्यां ग्रहौ जगृहुस्तावभ्यवैतां तौ स्वीकृत्यापाघ्नत तस्माच्छण्डामर्क्काभ्यामिति गृह्येते देवताभ्यो हूयेते ॥६॥ अपि होवाच याज्ञवल्क्यः[3] । नो स्विद्देवताभ्य एव गृह्णीयामा३ विजितरूपमिव हीदमिति तद्वै स तन्मीमाᳬंसामेव चक्रे नेत्तु चकार ॥७॥ इ-

---

१. एतत्तपतीति. च.   २ ऊचुः इति. च.   ३. याज्ञवल्क्य इति ग.

मामु हैके शुक्रस्य पुरोरुचं कुर्व्वन्ति । "अयं व्वेनश्चोदयत्पृश्निगर्भा ज्योतिर्ज्जरायू रजसो व्विमान"ऽइति तदेतस्य रूपं कुर्म्मो य्यऽएष तपतीति यदाह ज्योतिर्ज्जरायुरिति ॥८॥ इमां त्वेव शुक्रस्य पुरोरुचं कुर्य्यात् । "तं प्रत्नथा पूर्व्वथा व्विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ स्वर्व्विदमि"त्यत्ता ह्येतमन्वत्ता हि ज्येष्ठस्तस्मादाह ज्येष्ठतातिं बर्हिषदꣳस्वर्व्विदं "प्रतीचीनं व्वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु व्वर्द्धसे । उपयामगृहीतोऽसि शण्डाय त्वैष ते य्योनिर्व्वीरतां पाही"ति सादयत्यत्ता ह्येतमन्वत्ता हि व्वीरस्तस्मादाहैष ते य्योनिर्व्वीरतां पाहीति दाक्षिणार्द्धे सादयत्येताꣳ ह्येष दिशमनु संचरति ॥९॥ अथ मन्थिनं गृह्णाति । "अयं व्वेनश्चोदयत्पृश्निगर्भा ज्योतिर्ज्जरायू रजसो व्विमाने । इममपाꣳ सङ्गमे सूर्यस्य शिशुं न व्विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि मर्क्काय त्वे"ति ॥१०॥ तꣳ सक्तुभिः श्रीणाति । तद्यत्सक्तुभिः श्रीणाति व्वरुणो ह वै सोमस्य राज्ञोऽभीवाक्षि प्रतिपिपेष तदश्वयत्ततोऽश्वः समभवत्तद्यच्छ्वयथात्समभवत्तस्मादश्वो नाम तस्याश्रु प्रास्कन्दत्ततो यवः समभवत्तस्मादाहुर्व्वरुण्यो य्यवऽइति तद्यदेवास्यात्र चक्षुषोऽमीयत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मात्सक्तुभिः श्रीणाति ॥११॥ स श्रीणाति । "मनो न येषु हवनेषु तिग्मं व्विपः शच्या व्वनुथो द्रवन्ता । आ यः शर्य्याभिस्तुविनृम्णोऽअस्या श्रीणीता दिशं गभस्तावेष ते य्योनिः प्रजाः पाही"ति सादयत्याद्यो ह्येतमन्वाद्या हीमाः प्रजा व्विशस्तस्मादाहैष ते य्योनिः

---

१. See आप. श्रौ. सू. १२. १४. १३, १५. 'अयं वेनश्चोदयदि'ति शुक्रं गृहीत्वा 'तं प्रत्नथे'ति मन्थिनं गृहीत्वा इति । तैत्तिरीयमैत्रायणीयकठशाखासु प्रथमतः 'अयं वेनः' अनन्तरं 'तं प्रत्नथा' इत्येव क्रम आहृतः । See तै. सं. १. ४. ८, ९., मै. सं. १. ३. १०, ११; कठ. सं. ४. ३. काण्वमाध्यन्दिन 'हितयोस्तु तद्वैपरीत्येन पाठः See. का. सं. १. ७. ७.

२, ४. मा. सं. ७. १२.

३. मन्वत्ता इति च. ५. संचरति इति च. ६. मा. सं, ७. १६.

७. श्रीणाति. इति. च. ८. मा. सं. ७. १७. ९. द्रवन्ता इति. च.

प्रजाः पाहीति ॥१२॥ द्वौ प्रोक्षितौ यूपशकलौ भवतः। द्वावप्रोक्षितौ प्रोक्षितं चैवाध्वर्युरादत्तेऽप्रोक्षितं चैवमेव प्रतिप्रस्थाता प्रोक्षितं चैवादत्तेऽप्रोक्षितं च शुक्रमेवाध्वर्युरादत्ते मन्थिनं प्रतिप्रस्थाता ॥१३॥ सोऽध्वर्युः। अप्रोक्षितेन यूपशकलेनापमार्ष्ट्यं[1]"पमृष्टः शण्ड"ऽइत्येवमेव प्रतिप्रस्थाता[2]"पमृष्टो मर्क्क"ऽइति तदादुदानावेवासुररक्षसेऽअपहतो "देवा[3]स्त्वा शुक्रपाः प्रणयन्त्वि"त्येवाध्वर्युर्निष्क्रामति "देवा[4]स्त्वा मन्थिपाः प्रणयन्त्वि"ति प्रतिप्रस्थाता तदेनौ देवताभ्यऽएष प्रणयतः ॥१४॥ तौ जघनेनाहवनीयमरत्नी संधत्तः। ता उत्तरवेदौ सादयतो दक्षिणायामेव श्रोणावध्वर्युः सादयत्युत्तरायां प्रतिप्रस्थातानुसृजन्तावेवा"नाधृ[5]ष्टासी"ति तद्र[6]क्षोभिरेवैतदुत्तरवेदिमनाधृष्यां कुरुतो विपर्येष्यन्तौ वाऽएतावग्निं भवतोऽत्येष्यन्तौ तस्माऽएवैतन्निह्नुवाते तथो हैनौ विपरियन्तावग्निर्न हिनस्ति ॥१५॥ सोऽध्वर्युः पर्येति। "सु[7]वीरो वीरान् प्रजनयन् परीही"त्यत्ता ह्येतमन्वत्ता हि वीरस्तस्मादाह सुवीरो वीरान् प्रजनयन् परीही"त्यभि रायस्पोषेण यजमानमि"ति तद्यजमानायाशिषमाशास्ते यदाहाभि रायस्पोषेण यजमानमिति ॥१६॥ अथ प्रतिप्रस्थाता पर्य्येति। "सु[8]प्रजाः प्रजाः प्रजनयन् प[9]रीही"त्याद्यो ह्येतमन्वाद्या हीमाः प्रजा विशस्तस्मादाह सुप्रजाः प्रजाः प्रजनयन् परीहीत्य"भि[10] रा[11]यस्पोषेण यजमान"मिति तद्यजमानायाशिषमाशास्ते यदाहाभिरायस्पोषेण यजमानमिति ॥१७॥ तावपिधाय निष्क्रामतः। तिर ऽएवैनावेतत्कुरुतस्तस्मादिमौ सूर्य्याचन्द्रमसौ प्राञ्चौ यन्तौ न क[12]श्चन पश्यति तौ पुरस्तात्परीत्यापोर्णुतः पुरस्तात्तिष्ठन्तौ जुहुत ऽआविरेवैनावेतत्कुरुतस्तस्मादिमौ सूर्य्याचन्द्रमसौ प्रत्यञ्चौ यन्तौ सर्व्वऽएव पश्यति तु-

---

१,३. मा. सं. ७. १२.　२,४. मा. सं. ७. १७.　५. मा. सं. ७. १२, १७.
६. तद्रक्षोभिरिति. ग. च. ७,८. मा. सं. ७. १३.　९. मा. सं. ७. १८.
१०. परीहो इति. ग. च. ११. मा. सं. ७. १८.　१२. कश्चन इति च.

स्मात्पुराग्रेतः सिच्यमानं न कश्चन पश्यति तदु पश्चात्प्रजायमानꣳ सर्व्वं ऽएव पश्यति ॥१८॥ तौ जघनेन य्यूपमरत्नी संधत्तः । य्यद्यग्निर्नोद्बाधेत य्यद्यु ऽअग्निरुद्बाधेताप्यग्रेणैव य्यूपमरत्नी संदध्याताꣳ "सञ्जग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषे"त्येवाध्वर्य्युः "सञ्जग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषे"ति प्रतिप्रस्थाता चक्षुषोरेवैते ऽआरमणे कुरुतश्चक्षुषी ऽएवैतत्संधत्तस्तस्मादिमे ऽअभितोऽस्थिनी चक्षुषी सꣳहिते ॥१९॥ सोऽध्वर्य्युः । अप्रोक्षितं य्यूपशकलं निरस्यति "निरस्तः शण्ड" ऽइत्येवमेव प्रतिप्रस्थाता "निरस्तो मर्क" ऽइति तत्पुराहुतिभ्योऽसुररक्षसे ऽअपहतः ॥२०॥ अथाध्वर्युः । प्रोक्षितं य्यूपशकलमाहवनीये प्रास्यति "शुक्रस्याधिष्ठानमसी"त्येवमेव प्रतिप्रस्थाता "मन्थिनोऽधिष्ठानमसी"ति चक्षुषोरेवैते समिधौ चक्षुषाऽएवैतत्समिन्द्धे तस्मादिमे समिद्धे चक्षुषी ॥२१॥ तत्र जपति । "अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्यामे"त्याशीरेवैषैतस्य कर्मणऽआशिषमेवैतदाशास्ते ॥२२॥ अथाश्राव्याह । "प्रातः प्रातः सवस्य शुक्रवतो मधुश्चुत ऽइन्द्राय सोमान् प्रस्थितान् प्रेष्ये"ति व्वषट्कृते ऽध्वर्य्युर्जुहोति तदनु प्रतिप्रस्थाता तदनु चमसाध्वर्यवः ॥२३॥ तौ वै पुरस्तात्तिष्ठन्तौ जुहुतः । चक्षुषी वाऽएतौ तत्पुरस्तादेवैतच्चक्षुषी धत्तस्तस्मादिमे पुरस्ताच्चक्षुषी ॥२४॥ अभितो य्यूपं तिष्ठन्तौ जुहुतः । य्यथा वै नासिकैवं य्यूपस्तस्मादिमेऽअभितो नासिकां चक्षुषी ॥२५॥ तौ वै व्वषट्कृतौ सन्तौ मन्त्रेण हूयेते । एतेनो हैतौ तदुदश्नुवाते य्यदेनौ सर्व्वꣳ सवनमनुहूयते य्यद्धेवैतौ सर्व्वꣳ सवनमनुहूयतऽएतौ वै प्रजापतेः प्रत्यक्षतमां चक्षुषी ह्येतौ सत्यं वै चक्षुः सत्यꣳ हि प्रजापतिस्तस्मादे-

---

१. मा. सं. ७. १३. २. मा. सं. ७. १८. ३. मा. सं. ७. १३.
४. मा. सं. ७. १८. ५. अपहतः इति. ग. ६. मा. सं. ७. १३.
७. मा. सं. ७. १८. ८. जपति इति. च. ९. मा. सं. ७. १४.

नौ सर्व्वंᳪ सवनमनुहूयते ॥२६॥ स जुहोति । "सा प्रथमा संस्कृतिर्व्विश्ववारा स प्रथमो व्वरुणो मित्रोऽअग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्माऽइन्द्राय सुतमाजुहोत स्वाहे"ति ॥२७॥ स व्युज्जुहोति सा प्रथमा स प्रथम ऽइति शश्वद्ध वै रेतः सिक्तस्य चक्षुषीऽएव प्रथमे सम्भवतस्तस्माज्जुहोति सा प्रथमा स प्रथमऽइति ॥२८॥ अथ सम्प्रेष्यति । *"प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्रयन्तु सदस्यानाᳪ होत्राणां ऽचमसाध्वर्यव उपावर्तध्वᳪ शुक्रस्याभ्युन्नयध्वमि"ति सम्प्रैषऽएवैष पर्य्येत्य प्रतिप्रस्थाताध्वर्योः पात्रे सᳫस्रवमवनयत्यत्रऽएवैतदाद्यं बलिᳫ हारयति तमध्वर्य्युर्होतृचमसेऽवनयति भक्षाय व्वषट्कर्तुर्हि भक्षः प्राणो वै व्वषट्कारः सोऽस्मादेतद्वषट्कुर्व्वतः पराङिवाभूत्प्राणो वै भक्षस्तत्प्राणं पुनरात्मन्धत्ते ॥२९॥ अथ यदेते प्रतीची पात्रे न हरन्ति । हरन्त्यन्यान् ग्रहांश्चक्षुषी ह्येते सᳫस्रवमेव होतृचमसेऽवनयति ॥३०॥ अथ होत्राणां चमसानभ्युन्नयन्ति । हुतोच्छिष्टा वाऽएते सᳪस्रवा भवन्ति नालमाहुत्यै तानेवैतत्पुनराप्याययन्ति तथालमाहुत्यै भवन्ति तस्माद्धोत्राणां चमसानभ्युन्नयन्ति ॥३१॥ अथ होत्राः संयाजयन्ति । होत्रा ह वै युक्ता देवेभ्यो यज्ञं व्वहन्ति ताऽएवैतत्संतर्पयान्ति तृप्ताः प्रीता देवेभ्यो यज्ञं व्वहानिति तस्माद्धोत्राः संयाजयन्ति ॥३२॥ स प्रथमायां वा होत्रायाम् । इष्टायामुत्तमायां वानुमन्त्रयते "तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहे"ति होत्राणामेवैषा तृप्तिरथेत्य प्रत्यङ्ङुपविश"त्य याडग्नीदि"त्यग्नीद्ध यत्र यजतामुत्तमः संयजति तस्मादाहायाडग्नीदिति ॥३३॥ Cf. का.

---

१. मा. सं. ७. १४, १५.

* मन्त्रोऽयं न मन्त्रकाण्डे पठितः अतो—वेदान्तरीयः प्रतिभाति ।

२. इति. ग, इति. क. ३. धत्ते इति च. ४. ग्रहान् इति. ग.

५. अवनयति इति. च. ६. न यन्ति इति. च. ७. प्रीता इति. ग.

८, ९. मा, सं. ७ १५.

श. ५. २. १; तै. सं. ६. ४. १०. मै. सं. ४. ६. ३., काठ २७. ७. ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. २. १. )

प्रथमः प्रपाठकस्समाप्तः ॥

( काण्डिकासंख्या १३६ )

४. २. १.

( आग्रयणग्रहः )

आत्मा ह वाऽअस्याग्रयणः । सा ऽस्यैष सर्व्वमेव सर्व्वँ ह्ययमात्मा तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णाति सर्व्वं वाऽइयँ सर्व्वमेष ग्रहस्तस्मादनया गृह्णाति ॥१॥ पूर्ण्णं गृह्णाति । सर्व्वं वै पूर्ण्णँ सर्व्वमेष ग्रहस्तस्मात्पूर्ण्णं गृह्णाति ॥२॥ विश्वेभ्यो देवेभ्यो गृह्णाति । सर्व्वे वै विश्वे देवाः सर्व्वमेष ग्रहस्तस्माद्विश्वेभ्यो देवेभ्यो गृह्णाति ॥३॥ सर्व्वेषु सवनेषु गृह्णाति । सर्व्वं वै सवनानि सर्व्वमेष ग्रहस्तस्मात्सर्व्वेषु सवनेषु गृह्णाति ॥४॥ स यदि राजोपदस्येत् । तमत ऽएव तन्वीरन्नतः प्रभावयेयुरात्मा वा ऽआग्रयणऽआत्मनो वाऽइमानि सर्व्वाण्यङ्गानि प्रभवन्त्येतस्मादन्ततो हारियोजनं ग्रहं गृह्णाति तदात्मन्येवास्यां प्रतिष्ठायामन्ततो यज्ञः प्रतितिष्ठति[1] ॥५॥ अथ यदस्मादाग्रयणो नाम । यां वाऽअमूं ग्रावाणमाददानो वाचं व्यच्छत्यत्र वै साग्रेऽवदत्तद्यत्सात्राग्रेऽवदत्तस्मादाग्रयणो नाम ॥६॥ रक्षोभ्यो वै तां भीषा वाचमयच्छन् । षड्वाऽअतः प्राचो ग्रहान् गृह्णात्यथैष सप्तमः षड्वाऽऋतवः संवत्सरस्य सर्व्वं वै संवत्सरः ॥७॥ तां देवाः । सर्व्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्राग्रे वाचमवदंस्तथोऽएवैष ऽएतँ सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्राग्रे वाचं वदति ॥८॥ अथातो गृह्णात्येव । "ये देवासो[3] दिव्येकादश स्थ पृथि-

1. तिष्ठति इति. च. 2. मा. सं. ७. १९, २०. 3. देवास इति. ग.

ष्याम॒ध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो य॒-ज्ञमिमं जुषध्वम् । उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयण'' ऽइति व्वाचमेवैतदयातयाम्नीं करोति तस्मादनया समानᳩ सद्विपर्य्यासं व्व-दत्यजामितायै जामि ह कुर्य्याद्यदाग्रयणोऽस्याग्रयणोऽसीति गृह्णीया-यात्तस्मादाहाग्रयणोऽसि स्वाग्रयण ऽइति ॥९॥ "पाहि[1] यज्ञं पाहि यज्ञपति''मिति । व्वाचमेवैतदुत्सृष्टामाह गोपाय यज्ञमिति पाहि यज्ञ पतिमिति व्वाचमेवैतदुत्सृष्टामाह गोपाय यजमानमिति य्यजमानो हि यज्ञपति "व्विष्णुस्त्वामिन्द्रियेण पातु व्विष्णुं त्वं पाही''ति व्वाचमे-वैतदुत्सृष्टामाह यज्ञो वै व्विष्णुर्यज्ञस्त्वां व्वीर्य्येण गोपायात्विति व्विष्णु त्वं पाहीति व्वाचमेवैतदुत्सृष्टामाह यज्ञं त्वं गोपाये"[3]त्यभि सवनानि पाही''ति तदेतं ग्रहमाह सर्व्वाणि ह्येष सवनानि प्र[4]ति ॥१०॥ अथ दशापवित्रमुपगृह्य हिङ्करोति । सा हैषा व्वागनुद्यमाना तताम तस्यां देवा व्वाचि तान्तायाᳪहिङ्कारेणैव प्राणमदधुः प्राणो वै हिङ्कारः प्रा[5]णो हि वै हिङ्कारस्तस्मादपिगृह्य नासिके न हिङ्कर्तुᳪ शक्नोति सैतेन प्राणेन समजिहीत य्यदा वै तान्तः प्राणं लभतेऽथ स संजि-हीते तथोऽएवैषऽएतद्वाचि तान्तायाᳪ हिङ्कारेणैव प्राणं दधाति सै-तेन प्राणेन सञ्जिहीते त्रिष्कृत्वो हिङ्करोति त्रिवृद्धि य्यज्ञः ॥११॥ अ-थाह "सोम[6]ः पवत''ऽइति । स यामेवामू भीषासुररक्षसेभ्यो न नि-रब्रुवंस्तामेवैतत्सर्व्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्र निराह तामाविष्करोति तस्मादाह सोमः पवतऽ इति ॥१२॥ "अस्मै[7] ब्रह्मणेऽस्मै क्षत्राये''ति। तद्ब्रह्मणे च क्षत्राय चाहा"स्मै सुन्वते य्यजमानाय पवत''ऽइति त-द्यजमानायाह॥१३॥तदाहुः । एतावदेवोक्त्वा सादयेदेतावद्वा ऽइदᳩ सर्व्वं य्यावद्ब्रह्म क्षत्रं व्विडिन्द्राग्नी वाऽइदᳩ सर्व्वं तस्मादेतावदे-वोक्त्वा सादयेदिति ॥१४॥ तदु ब्रूयादेव भूयः । "इषे[9]ऽऊर्ज्जे पवत''

---

१-३. मा. सं. ७. २०. ४. प्रति इति. क, प्रति इति. च. ५. प्राणो इति. ग.
६-९. मा. सं. ७. २१.

ऽइति व्वृष्ट्यै तदाह यदाहेषऽइत्यूर्ज्जऽइति य्यो व्वृष्टादूर्ग्रसो जायते तस्मै तदाह "ऊर्ज्जऽओषधीभ्यः पवत"ऽइति तदद्भ्यश्चौषधिभ्यश्चाह "द्यावापृथिवीभ्यां पवत"ऽइति तदाभ्यां द्यावापृथिवीभ्यामाह य्ययो-रिदꣳ सर्व्वमधि "सुभूताय पवत"ऽइति साधवे पवतेऽइत्येवैतदाह ॥१५॥ तदु हैकऽआहुः । * ब्रह्मवर्च्चसाय पवतऽइति तदु तथा न ब्रूयाद्यद्वाऽआहास्मै ब्रह्मणऽइति तदेव ब्रह्मवर्च्चसायाह "व्विश्वेभ्यस्त्वा देवेभ्यऽएष ते य्योनिर्व्विश्वेभ्यस्त्वा देवेभ्य"ऽइति सादयति व्विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति तं वै मध्ये सादयत्यात्मा ह्यस्यैष मध्यऽइव ह्यय-मात्मा दक्षिणोक्थ्यस्थाली भवत्युत्तरादित्यस्थाली ॥१६॥ Cf. का. श. ५. २. २; तै. सं. ६. ४. ११; मै. सं. ४. ६. ४; कठ. २७. ९.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. २. २. )

## ४. २. २.

## ( उक्थ्यग्रहः )

अयꣳ ह वाऽअस्यैषोऽनिरुक्तऽआत्मा यदुक्थ्यः । सोऽस्यैषऽ-आत्मैवात्मा ह्ययमनिरुक्तः प्राणः सोऽस्यैषऽआयुरेव तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताज-रꣳ ह्यमृतमायुस्तस्मादनया गृह्णाति ॥१॥ तं वै पूर्ण्णं गृह्णाति । सर्व्वं वै तद्यत्पूर्ण्णꣳ सर्व्वं तद्यदायुस्तस्मात्पूर्ण्णं गृह्णाति ॥२॥ ( शतम् २४०० ) तस्यासावेव ध्रुवऽआयुः । आत्मैवास्यैतेन सꣳहितः पर्वाणि सन्ततानि तद्वाऽअगृहीतऽएवैतस्मादच्छावाकायोत्तमो ग्रहो भवति ॥३॥ अथ राजानमुपावहरति । तृतीयं व्वसतीवरीणामवन-

१–४. मा. सं. ७. २१.

* See. आप. श्रौ. १२. १५. ८. "सोमः पवते सोमः पवते सोमः पवते सुभूताय पवते ब्रह्मवर्चसाय पवतेऽस्मै ब्रह्मणे पवते" इत्यादि ।

५. स्थाली इति. ग. ६. यदुक्थ्य इति. ग. ७. भवति इति. च.

यति तत्पूर्व्वं समैति प्रथममह्नोत्तरस्य सवनस्य करोत्युत्तमं पूर्व्वस्य स यदुत्तरस्य सवनस्य तत्पूर्व्वं करोति यत्पूर्व्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पर्व्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थम् ॥४॥ एवमेव माध्यन्दिने सवने[1]। अगृहीत[2]ऽएवैतस्मादच्छावाका[3]योत्तमो ग्रहो भवत्यथ तृतीयं व्वसतीवरीणामवनयाति तत्पूर्व्वं समैति प्रथममह्नोत्तरस्य सवनस्य करोत्युत्तमं पूर्व्वस्य स यदुत्तरस्य सवनस्य तत्पूर्व्वं करोति यत्पूर्व्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पर्व्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थं तद्यदस्यैतेनात्मा सꣳहितस्तेनास्यैषऽआयुः ॥५॥ सैषा कामदुघैवेन्द्रस्योद्धारः । त्रिभ्यऽएवैनं प्रातःसवनऽउक्थेभ्यो व्विगृह्णाति त्रिभ्यो माध्यन्दिने सवने तत्षट्कृत्वः षड्वाऽऋतवऽऋतवो वाऽइमान्त्सर्व्वान् कामान् पचन्त्येतेनो हैषा कामदुघैवेन्द्रस्योद्धारः ॥६॥ तं व्वाऽअपुरोरुक्कं गृह्णाति । उक्थꣳ हि पुरोरुगृग्घि पुरोरुगृग्घ्युक्थꣳ साम ग्रहोऽथ य्यदन्यज्जपति तद्यजुस्ता हैताऽअभ्यर्द्धऽएवाग्रऽऋग्भ्यऽआसुरभ्यर्द्धो य्यजुर्भ्योऽभ्यर्द्धः सामभ्यः ॥७॥ ते देवाऽअब्रुवन् । हन्तेमा य्यजुष्षु दधाम तथेयं बहुलतरेव व्विद्या भविष्यतीति ता यजुष्वदधुस्ततऽएषा बहुलतरेव व्विद्याभवत् ॥८॥ तं य्यदपुरोरुक्कं गृह्णाति । उक्थꣳ हि पुरोरुगृग्घि पुरोरुगृग्घ्युक्थꣳ स यदेवैनमुक्थेभ्यो व्विगृह्णाति तेनो हास्यैष पुरोरुङ्मान् भवति तस्मादपुरोरुक्कं गृह्णाति ॥९॥ अथातो गृह्णात्येव । "उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते व्वयस्वत"ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति बृहद्वते व्वयस्वतऽइति व्वीर्यवतऽइत्येवैतदाह यदाह बृहद्वते व्वयस्वतऽइत्यु"क्थाव्यं गृह्णामी"त्युक्थेभ्यो ह्येनं गृह्णाति "यत्तऽइन्द्र बृहद्वय"ऽइति यत्तऽइन्द्र व्वीर्यमित्येवैतदाह "तस्मै त्वा व्विष्णवे त्वे"ति

---

१. सवने इति. ग.　　२. अगृहीत इति. क.

३. अच्छावाक इति. ग.　　४-६. मा. सं. ७. २२.

यज्ञस्य ह्येनमायुषे गृह्णाति तस्मादाह तस्मै त्वा विष्णवे त्वे"त्येष ते योनिरुक्थेभ्यस्त्वे"ति सादयत्युक्थेभ्यो ह्येनं गृह्णाति ॥१०॥ तं विगृह्णाति । "देवेभ्यस्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामी"ति प्रशासनꣳ स कुर्याद्य ऽएवं कुर्याद्यथादेवतं त्वेव विगृह्णीयात् ॥११॥ "मित्रावरुणाभ्यां त्वा । देवाव्यं यज्ञस्यायुषे गृह्णामी"त्येव मैत्रावरुणाय मैत्रावरुणीषु हि तस्मै स्तुवते मैत्रावरुणीरनुशꣳसति मैत्रावरुण्या यजति ॥१२॥ "इन्द्राय त्वा । देवाव्यं यज्ञस्यायुषे गृह्णामी"त्येव ब्राह्मणाच्छꣳसिन ऽऐन्द्रीषु हि तस्मै स्तुवत ऽऐन्द्रीरनुशꣳसत्यैन्द्र्या यजति ॥१३॥ "इन्द्राग्निभ्यां त्वा । देवाव्यं यज्ञस्यायुषे गृह्णामी"त्येवाच्छावाकायैन्द्राग्नीषु हि तस्मै स्तुवत ऽऐन्द्राग्नीरनुशꣳसत्यैन्द्राग्न्या यजतीन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवन ऽऐन्द्रꣳ हि माध्यन्दिनꣳ सवनम् ॥१४॥ तदु ह चरकाध्वर्यवो विगृह्णन्ति । "उपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य ऽउक्थाव्यं मित्रावरुणाभ्यां जुष्टं गृह्णाम्येष ते योनिर्मित्रावरुणाभ्यां त्वे"ति सादयति पुनर्हविरसीति स्थालीमभिमृशति ॥१५॥ "उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्य ऽउक्थाव्यमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वे"ति सादयति पुनर्हविरसीति स्थालीमभिमृशति ॥१६॥ "उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्य ऽउक्थाव्यमिन्द्राग्निभ्यां जुष्टं गृह्णाम्येष ते योनिरिन्द्राग्निभ्यां त्वे"ति सादयति नात्र पुनर्हविरसीति स्थालीमभिमृशतीन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवन ऽऐन्द्रꣳ हि माध्यन्दिनꣳ सवनं द्विर्हि पुनर्हविरसीति स्थालीमभिमृशति तूष्णीं तृतीयं निदधाति ॥१७॥ तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेदग्रे ह्येवैष ऽउपयामेन गृहीतो भवत्यग्रे

१, २ मा. सं. ७. २२. "देवेभ्यस्त्वा देवाव्यं गृह्णामि यज्ञस्यायुषे गृह्णामि"ति मुद्रितसंहितापाठः ३,५,७. मा. सं. ७. २३. ४. यजतीति. क.
६. ब्राह्मणा इति. क. ८. See. आप. श्रौ. १२. २८. ११-२९. ८.
९. त्वेन्द्रायेति नाऽस्ति. ग.

य्योनौ सन्नोऽजामितायै जामि ह कुर्याद्यदेनमत्राप्युपयामेन गृह्णीयाद्यद्योनौ सादयेदथ य्यत्पुनर्हविरसीति स्थालीमभिमृशति पुनर्ह्यस्यै ग्रहं ग्रहीष्यन् भवति न तदाद्रियेत तूष्णीमेव निदध्यात् ॥१८॥

Cf. का. श. ५. २. ३; तै. सं. ६. ५. १; मै. सं. ३. ६. ५; कठ२७. १०.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. २. ३. )

४. २. ३.

( ध्रुवग्रहः )

अयं[1] ह वाऽअस्यैष प्राणः । योऽयं पुरस्तात्स वै व्वैश्वानरऽएवाथ योऽयं पश्चात्स ध्रुवस्तौ ह स्मैतौ द्वावेवाग्रे ग्रहौ गृह्णन्ति ध्रुववैश्वानराविति तयोरयमप्येतर्ह्यन्यतरऽएव गृह्यते ध्रुव ऽएव स य्यदि तं चरकेभ्यो वा य्यतो वानुब्रुवीत य्यजमानस्य तं चमसेऽवनयेदथैतमेव होतृचमसे ॥१॥ य्यद्वाऽअस्यावाचीनं नाभेः । तदस्यैषऽआत्मनः[2] सोऽस्यैषऽआयुरेव तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताजरᳬ ह्यमृतमायुस्तस्मादनया गृह्णाति ॥२॥ तं वै पूर्ण्णं गृह्णाति । सर्व्वं वै तद्यत्पूर्ण्णᳬ सर्व्वं तद्यदायुस्तस्मात्पूर्ण्णं गृह्णाति ॥३॥ व्वैश्वानराय गृह्णाति । संवत्सरो वै व्वैश्वानरः संवत्सरऽआयुस्तस्माद्वैश्वानराय गृह्णाति ॥४॥ स प्रातःसवने गृहीतः । ऐतस्मात्कालादुपशेते तदेनᳬ सर्व्वाणि सवनान्यतिनयाति ॥ ॥५॥ तं न स्तूयमानेऽवनयेत् । न ह संवत्सरं य्यजमानोऽतिजीवेद्यत्स्तूयमानेऽवनयेत् ॥६॥ तᳬ शस्यमानेऽवनयति । तदेनं द्वादशᳬ स्तोत्रमतिनयाति तथा परम्परमायुः समश्नुते तथो ह यजमानो ज्योग्जीवति तस्माद्ब्राह्मणोऽग्निष्टोमसत्स्यादैतस्य होमान्न सर्प्पैन्न प्रस्रावयेत तथा सर्व्वमायुः समश्नुतऽआयुर्व्वाऽअस्यैष तथा सर्व्वमायुरेति ॥७॥ यद्वाऽअस्यावाचीनं नाभेः । तदस्यैष-

१. अयᳬइति. च.      २. आत्मनः इति. ङ.

ऽआत्मनः स यत्पुरैतस्य[1] होमात्सर्प्पेद्वा प्र वा स्रावयेत ध्रुवᳬ ह्यव- मेहेन्नेद्ध्रुवमवमेहानीति तस्माद्वाऽअग्निष्टोमसद्भवति तद्वै तद्यजमान- ऽएव यजमानस्य ह्येष तदात्मनः ॥८॥ स वाऽअग्निष्टोमसद्भवति । यशो वै सोमस्तस्माद्यश्च सोमे लभते यश्च नोभावेवागच्छतो यश- ऽएवैतद्द्रष्टुमागच्छन्ति तद्वाऽएतद्यशो ब्राह्मणाः सम्प्रसृप्यात्मन्दधते यद्भक्षयन्ति स ह यशऽएव भवति यऽएवं विद्वान् भक्षयति॥९॥ ते वाऽएते । सर्प्पन्तऽएवाग्निष्टोमसद्येतद्यशः संनिधाय सर्प्पन्ति ते पराञ्चो यशसो भवन्ति तदेष परिगृह्येव पुनरात्मन्यशो धत्ते तेषा- ᳬ ह्येषऽएव यशस्वितमो भूत्वा प्रैति यऽएवं विद्वानग्निष्टोमसद्भव- ति ॥१०॥ देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरऽएत- स्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति ॥११॥ ततो देवाः । अर्चन्तः श्राम्यन्तश्चेरुस्तऽ एत- दग्निष्टोमसद्यं[2] ददृशुस्तेऽ एतेनाग्निष्टोमसद्येन सर्व्वं यज्ञᳬ समवृञ्ज- तान्तरायन्नसुरान् यज्ञात्तथोऽएवैषऽएतेनाग्निष्टोमसद्येन सर्व्वं यज्ञᳬ संवृङ्क्तेऽन्तरेति सपत्नान्यज्ञात्तस्माद्वाऽअग्निष्टोमसद्भवति ॥१२॥ तं गृहीत्वोत्तरे हविर्द्धाने सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहया- नीत्युपकीर्ण्णे वाऽइतरान् ग्रहान्त्सादयत्यथैतं व्युह्य न तृणं चनान्त- र्द्धाय ॥१३॥ यद्वाऽअस्योर्द्ध्वं नाभेः । तदस्यैतऽआत्मनऽउपरीव वै तद्यदूर्ध्वं नाभेरुपरीवैतद्यदुपकीर्ण्णं तस्मादुपकीर्ण्णे सादयत्यथैतं व्यु- ह्य न तृणं चनान्तर्द्धाय ॥१४॥ यद्वाऽअस्यावाचीनं नाभेः । तदस्यैष ऽआत्मनोऽधऽइव वैतद्यदवाचीनं नाभेरधऽइवैतद्यद्व्युह्य न तृणं च नान्तर्द्धाय तस्मादेतं व्युह्य न तृणं चनान्तर्द्धाय सादयति ॥१५॥ एष वै प्रजापतिः। यऽएष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतस्वेवाप्ये- तर्ह्यनु प्रजायन्ते स यानुपकीर्ण्णे सादयति तस्माद्यास्तानुनु प्रजाः प्रजा- यन्ते ताऽअन्येनात्मनोऽस्यां प्रतितिष्ठन्ति याँ[3] वै शफैः प्रतितिष्ठन्ति ताऽ-

१. पुरैतस्य इति. ङ. २. त इति. ग. ३. या इति. ग.

अन्येनात्मनोऽस्यां प्रतितिष्ठन्त्यथ यदेतं व्युह्य न तृणं चनान्तर्द्धाय सादयति तस्माद्याऽएतमनु प्रजाः प्रजायन्ते ताऽआत्मनैवास्यां प्रतितिष्ठन्ति मनुष्याश्च श्वापदाश्च॥१६॥तद्वाऽएतत् । अस्याऽएवान्यदुत्तरं करोति यदुपकिरति स यानुपकीर्णे सादयति तस्माद्यास्तानन्तु प्रजाः प्रजायन्ते ताऽअन्येनैवात्मनोऽस्यां प्रतितिष्ठन्ति शफैः ॥१७॥ तद्वाऽएतत् । आहवनीये जुह्वति पुरोडाशं धानाः करम्भं दध्यामिक्षामिति तद्यथामुखऽआसिञ्चेदेवं तदथैषऽएकरूपऽउपशेतऽआपऽइवैव तस्माद्यदनेन मुखेन नानारूपमशनमश्नात्यथैतेन प्राणेनैकरूपमेव प्रस्नावयतेऽपऽइवैवाथ यस्माद्ध्रुवो नाम॥१८॥ देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्यऽआसङ्गाद्बिभयांचक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेजुस्तेषामेतान्दक्षिणान् ग्रहानुज्जघ्नुरप्येतद्दक्षिणꣳ हविर्द्धानमुज्जघ्नुरथैतमेव न शेकुरुद्धन्तुं तदुत्तरमेव हविर्द्धानं दक्षिणꣳहविर्द्धानमदꣳहत्तद्यदेतं न शेकुरुद्धन्तुं तस्माद्ध्रुवो नाम ॥१९॥ तं वै गोपायन्ति । शिरो वाऽएषऽएतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विꣳशतिश्चतुर्विꣳशत्यक्षरा वै गायत्री तस्याऽएष शिरः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिरऽइत्याहुः श्रेष्ठो ह व्यथेत यदेषꣳ व्यथेत यजमानो वै श्रेष्ठो नेद्यजमानो व्यथाताऽइति तस्माद्वै गोपायन्ति ॥२०॥ वत्सो वाऽएषः । एतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विꣳशतिश्चतुर्विꣳशत्यक्षरा वै गायत्री तस्याऽएष वत्सस्तं यद्गोपायन्ति गोपायन्ति वाऽइमान्वत्सान्दोहाय यदिदं पयो दुहूऽएवमियं गायत्री यजमानाय सर्व्वान् कामान्दोहाताऽइति तस्माद्वै गोपायन्ति ॥२१॥ अथ यदध्वर्युश्च प्रतिप्रस्थाता च । निश्च क्रामतः प्र च पद्येते

---

१. तृणं इति. ग.  २. प्रतितिष्ठन्तीति. ग.
३. देवाः इति. ग.  ४. हविर्धानमिति. ग.  ५. इत्याहुः इति ङ.
६. व्यथेत इति. ग.  ७. व्यथाता इति. ग.  ८. गोपायन्ति इति. च.

त्यथा बद्धवत्सोपाचरेदेवमेतं ग्रहमुपाचरतस्तमवनयति गायत्रीमेवैतत्प्रस्नावयति प्रत्तेयं गायत्री यजमानाय सर्व्वान् कामान्दोहाताऽइति तस्माद्वाऽअवनयति ॥२२॥ सोऽवनयति । "ध्रुवं[1] ध्रुवेण मनसा व्वाचा सोममवनयामीति गृह्णामी"ति वा "था[2] नऽइन्द्र ऽइद्विशोऽसपत्नाः समनसस्करदिति यथा न ऽइन्द्र इमाः प्रजा व्विशः श्रियै यशसेऽन्नाद्यायासपत्नाः संमनसः करवदित्येवैतदाह ॥ २३ ॥ अथातो गह्णात्येव । "मूर्द्धानं[3] दिवोऽअरतिं पृथिव्या व्वैश्वानरमृतऽआ जातमग्निम्[4] । कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः[5] । उपयामगृहीतोऽसि[6] ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमऽएष ते योनिर्व्वैश्वानराय त्वे"ति सादयति व्युह्य न तृणं चनान्तर्द्धाय व्वैश्वानराय ह्येनं गृह्णाति ॥२४॥ Cf. का. श. ५. २. ४; तै. सं. ६. ५. २; मै. सं. ४. ६. ६; कठ. २८. १. कपि. ४४. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. २. ४. )

४. २. ४.

( विप्रुषां होमः )

ग्रहान् गृहीत्वा । उपनिष्क्रम्य व्विप्रुषाꣳ[7] होमं जुहोति तद्यद्विप्रुषाꣳ होमं जुहोति या ऽएवास्यात्र व्विप्रुषः स्कन्दन्ति ताऽएवैतदाहवनीये स्वगाकरोत्याहवनीयो ह्याहुतीनां प्रतिष्ठा तस्माद्विप्रुषाꣳ होमं जुहोति ॥१॥ स जुहोति । "यस्ते[8] द्रप्सः स्कन्दति यस्तेऽअꣳशु"रिति यो वै स्तोकः स्कन्दति स द्रप्सस्तत्तमाह यस्तेऽअꣳशुरिति तदꣳशुमाह "ग्रावच्युतो[9] धिषणयोरुपस्थादि"ति ग्राव्णा हि च्युतोऽधिषवणाभ्याꣳस्कन्दत्य"ध्वर्य्योर्व्वा परि वा यः पवित्रादि"त्यध्व-

१, २. मा. सं. ७. २५. ३. मा. सं. ७. २४. ४. मग्निं इति. ग.
५. देवाः इति. ग. ६. मा. सं. ७. २५. ७. विप्रुषाꣳ इति. ग.
८-१०. मा. सं. ७. २६. ९ बाहुच्युत इति तैत्तिरीयपाठः ।

योँर्व्वां हि पाणिभ्याᳪंस्कन्दति पवित्राद्वा "तं ते जुहोमि मनसा व्वषट्कृतᳪंस्वाहे"ति तद्यथा व्वषट्कृतᳪंहुतमेवमस्यैतद्भवति ॥२॥ अथ स्तीर्णायै व्वेदेः । द्वे तृणेऽअध्वर्य्युरादत्ते तावध्वर्यू प्रथमौ प्रतिपद्येते प्राणोदानौ य्यज्ञस्याथ प्रस्तोता व्वागेव यज्ञस्याथोद्गातात्मैव प्रजापतिर्यज्ञस्याथ प्रतिहर्त्ता भिषग्वा व्यानो वा ॥३॥ तान्वाऽएतान् । पञ्चर्त्विजो य्यजमानोऽन्वारभतऽएतावान्वै सर्वो य्यज्ञो य्यावन्त ऽएते पञ्चर्त्विजो भवन्ति पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतद्यजमानोऽन्वारभते ॥४॥ अथान्यतरत्तृणम् । चात्वालमभिप्रास्यति "देवानामुत्क्रमणमसी"ति यत्र वै देवा य्यज्ञेन स्वर्गं लोकᳪं समाश्नुवत तऽएतस्माच्चात्वालादूर्ध्वाः स्वर्गं लोकमुपोदक्रामंस्तद्यजमानमेवैतत्स्वर्ग्यं पन्थानमनुसंख्यापयति ॥५॥ अथान्यतरत्तृणम् । पुरस्तादुद्गातृणामुपास्यति तूष्णीमेव स्तोमो वाऽएष प्रजापतिर्य्यदुद्गातारः सऽइदᳪं सर्व्वं य्युतऽइदᳪं सर्व्वᳪं सम्भवति तस्माऽएवैतत्तृणमपिदधाति तथो ह्यध्वर्य्यु न युते नैनᳪं सम्भवत्यथ य्यदा जपन्ति जपन्ति ह्यत्रोद्गातारः ॥६॥ अथ स्तोत्रमुपाकरोति । सोमः पवतऽइति स वै परागेव स्तोत्रमुपाकरोति पराञ्चः स्तुवते देवान्वाऽएतानि स्तोत्राण्यभ्युपावृत्तानि य्यत्पवमानाः पराञ्चो ह्येतैर्देवाः स्वर्गं लोकᳪंसमाश्नुवत तस्मात्परागेव स्तोत्रमुपाकरोति पराञ्चः स्तुवते ॥७॥ उपावर्त्तध्वमिति वाऽअन्यानि स्तोत्राणि । अभ्यावर्त्तं धुर्य्यैं स्तुवतऽइमा वै प्रजा ऽएतानि स्तोत्राण्यभ्युपावृत्तास्तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥८॥ अथ यदत्र बहिष्पवमानेन स्तुवते । अत्र ह वाऽअसावग्रऽआदित्य ऽआस तमृतवः परिगृह्यैवातऽऊर्ध्वाः स्वर्गं लोकमुपोदक्रामन्त्स एष ऽऋतुषु प्रतिष्ठितस्तपति तथोऽएवैतदृत्विजो य्यजमानं परिगृह्यैवात ऽऊर्ध्वाः स्वर्गं लोकमुपोत्क्रामन्ति तस्मादत्र बहिष्पवमानेन स्तुवते ॥९॥ नौर्ह वाऽ-

---

१. मा. सं. ७. २६.	२. भवति इति. च.	३. एतान् इति. ग.
४. अन्वारभते इति. ग. ५. मा. सं. ७. २६.
६. पयति इति. च.	७. प्रजायन्ते इति. ग.	८. स्तुवते इति. ग.

एषा स्वर्ग्या। यद्बहिष्पवमानं तस्याऽऋत्विजऽएव स्फ्याश्चारित्राश्च स्वर्गस्य लोकस्य सम्पारणास्तस्याऽएकऽएव मज्जयिता यऽएव निन्द्यः स यथा पूर्णामभ्यारुह्य मज्जयेदेवꣳ हैनाꣳस मज्जयति तद्वै सर्व्वऽएव यज्ञो नौः स्वर्ग्या तस्मादु सर्व्वस्मादेव यज्ञान्निन्द्यं परिबिबाधिषेत ॥१०॥ अथ स्तुतऽएतां व्वाचं व्वदति[1]। "अग्नीदग्नीन्विहर बर्हिः स्तृणीहि पुरोडाशाँ[2]॥ऽअलङ्कुरु पशुनेही"ति विहरत्यग्नीदग्नीन्त्समिन्द्धऽएवैनानेतत्स्तृणाति बर्हिस्तीर्ण्णे बर्हिषि समिद्धे देवेभ्यो जुहवानीति पुरोडाशाँ[3]॥ऽअलंकुर्व्विति पुरोडाशैर्हि प्रचारिष्यन् भवति पशुनेहीति पशुꣳ ह्युपाकरिष्यन् भवति ॥११॥ अथ पुनः प्रपद्य। आश्विनं[4] ग्रहं गृह्णात्याश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति परिवीय यूपं पशुमुपाकरोति रसमेवास्मिन्नेतद्दधाति ॥१२॥

( अर्धप्रपाठकः ७० )

स प्रातःसवनऽआलब्धः। आ तृतीयसवनाच्छ्रप्यमाण ऽउपशेते सर्व्वस्मिन्नेवैतद्यज्ञे रसं दधाति सर्व्वं यज्ञꣳरसेन प्रसजति ॥१३॥ तस्मादाग्नेयमग्निष्टोमऽआलभेत। तद्धि सलोम यदाग्नेयमग्निष्टोमऽआलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्राग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत[5] व्वाग्वै सरस्वती योषा वै व्वाग्योषा रात्रिस्तद्यथायथं यज्ञक्रतून् व्यावर्त्तयति[6] ॥१४॥ अथ सवनीयैः पुरोडाशैः प्रचरति। देवो वै सोमो दिवि हि सोमो व्वृत्रो वै सोमऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषोशानानामौषधिर्ज्जायतऽइति ह स्माह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभिषुण्वन्तीति ॥१५॥ स यत्पशुमालभते। रसमेवास्मिन्नेतद्दधात्यथ यत्सवनीयैः पुरोडाशैः प्रचरति मेधमेवास्मिन्नेतद्दधाति तथो हास्यैष

---

१ व्वदति इति. च. २, ३. पुरोडाशाँ इति. च. नाऽयं प्रैषस्संहितागतः। ४. आश्विनं. इति. च, ५. आलभेत इति. ग. ६. व्यावर्तयति इति. ग.

सोमऽएव भवति॥१६॥सर्व्वेऽऐन्द्रा भवन्ति। इन्द्रो वै यज्ञस्य देवता तस्मात्सर्व्वेऽऐन्द्रा भवन्ति ॥१७॥ अथ यत्पुरोडाशः। धानाः करम्भो दध्यामिक्षेति भवति या यज्ञस्य देवतास्ताः सुप्रीता असन्निति ॥१८॥ इदं वाऽअपूपमशित्वा कामयते। धानाः खादेयं करम्भमश्नीयां दध्यश्नीयामामिक्षामश्नीयामिति ते सर्व्वे कामा या यज्ञस्य देवतास्ताः सुप्रीताऽअसन्नित्यथ यदेषा प्रातःसवनऽएव मैत्रावरुणी पयस्यावक्लृप्ता भवति नेतरयोः सवनयोः ॥१९॥ गायत्री वै प्रातःसवनं व्वहति। त्रिष्टुम्माध्यन्दिनꣳसवनं जगती तृतीयसवनं तद्वाऽअनेकाकिन्येव त्रिष्टुम्माध्यन्दिनꣳ सवनं व्वहति गायत्र्या च बृहत्या चानेकाकिनी जगती तृतीयसवनं गायत्र्योष्णिहककुब्भ्यामनुष्टुभा ॥२०॥ गायत्र्येवैकाकिनी प्रातःसवनं व्वहति। सैताभ्यां पङ्क्तिभ्याꣳ स्तोत्रपङ्क्त्या च हविष्पङ्क्त्या च चत्वार्य्याज्यानि बहिष्पवमानं पञ्चमं पञ्चपदा[1] पङ्क्तिः सैतया स्तोत्रपङ्क्त्यानेकाकिनी गायत्री प्रातःसवनं व्वहति[2] ॥२१॥ इन्द्रस्य पुरोडाशः। हर्य्योर्द्धानाः पूष्णः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या पञ्चपदा पङ्क्तिः सैतया हविष्पङ्क्त्यानेकाकिनी गायत्री प्रातःसवनं व्वहत्येतस्याऽएव पङ्क्तेः सम्पदः कामाय प्रातःसवनऽएवैषा मैत्रावरुणी पयस्यावक्लृप्ता भवति नेतरयोः सवनयोः ॥२२॥ Cf. का. श. ५. ३. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. २. ५. )
( द्वितीयोऽध्यायस्समाप्तः )

४. २. ५.

( ऋतुग्रहैन्द्राग्नवैश्वदेवग्रहाः )

भक्षयित्वा समुपहूताः स्मऽइत्युक्त्वोत्तिष्ठति। पुरोडाशबृगल

---

१. पञ्चपरा इति. च. २. वहति. इति. ग.

मादाय तद्यत्रैतदुपसन्नोऽच्छावाकोऽन्वाह तदस्मै पुरोडाशवृगलं पाणावादधदाह्वा 'च्छावाक व्वदस्व यत्ते व्वाद्य'मित्यहयित वाऽअच्छावाकः ॥१॥ तमिन्द्राग्नीऽअनुसमतनुताम् । प्रजानां प्रजात्यै तस्मादैन्द्राग्नोऽच्छावाकः स ऽएतेन च हविषा यदस्माऽएतत्पुरोडाशवृगलं पाणावादधात्येतेन चार्षेयेण यदेतदन्वाह तेनानुसमश्नुते ॥२॥ स वै सन्नेऽच्छावाके । ऋतुग्रहैश्चरति तद्यत्सन्नेऽच्छावाकऽऋतुग्रहैश्चरति मिथुनं वा अच्छावाकऽऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्वꣳ हि मिथुनं प्रजननꣳ सऽएतस्मान्मिथुनात्प्रजननादृतून्त्संवत्सरं प्रजनयति ॥३॥ यद्वेव सन्नेऽच्छावाके । ऋतुग्रहैश्चरति सर्व्वं वाऽऋतवः संवत्सरः सर्वमेवैतत्प्रजनयाति तस्मात्सन्नेऽच्छावाकऽऋतुग्रहैश्चरति ॥४॥ तान्वै द्वादश गृह्णीयात् । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश गृह्णीयादथोऽअपि त्रयोदश गृह्णीयादस्ति त्रयोदशो मासऽइति द्वादश त्वेव गृह्णीयादेषैव सम्पत् ॥५॥ द्रोणकलशाद्गृह्णाति । प्रजापतिर्व्वै द्रोणकलशः सऽएतस्मात्प्रजापतेर्ऋतून्त्संवत्सरं प्रजनयति ॥६॥ उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति । कुतस्तयोरन्तो येऽउभयतोमुखे तस्मादयमनन्तः संवत्सरः[२] परिप्लवते तं गृहीत्वा न सादयति तस्मादयमसन्नः संवत्सरः ॥७॥ नानुवाक्यामन्वाह । ह्वयति वाऽ[३]अनुवाक्यया गतो ह्येवायमृतुर्यदि दिवा यदि नक्तं नानुवषट्करोति नेदृतूनपवृणजाऽइति सहैव प्रथमौ ग्रहौ गृह्णीतः सहोत्तमाविदमेवैतत्सर्व्वꣳ संवत्सरेण परिगृहीतस्तदिदꣳ सर्व्वं संवत्सरेण परिगृहीतम् ॥८॥ निरेवान्यतरः क्रामति । प्रान्यतरः पद्यते तस्मादिमेऽन्वञ्चो मासा यन्त्यथ यदुभौ वा सह निष्क्रामेतामुभौ वा सह प्रपद्येयातां पृथगुहैवेमे मासाऽईयुस्तस्मान्निरेवान्यतरः क्रामति प्रान्यतरः पद्यते ॥९॥ तौ वाऽऋतुनेति षट्प्रचरतः[४]।

---

१. चरति. इति ग. २. संवत्सर इति. ग. ३. वा इति. ग.
४. प्रचरतः इति. च.

तद्देवाऽअहरसृजन्तर्तुभिरिति चतुस्तद्रात्रिमसृजन्त स व्युद्धैतावदेवाभविष्यद्रात्रिहैवाभविष्यन्न व्यवस्यत् ॥१०॥ तौ वाऽऋतुनेत्युपरिष्टाद्द्विश्चरतः । तद्देवाः परस्तादहरदधुस्तस्मादिदमद्याहरथ रात्रिरथ श्वोऽहर्भविता ॥११॥ ऋतुनेति वै देवाः । मनुष्यानसृजन्तर्तुभिरिति पशूंल्स व्यत्तन्मध्ये व्येन पशूनसृजन्त तस्मादिमे पशवऽउभयतः परिगृहीता वशमुपेता मनुष्याणाम् ॥१२॥ तौ वाऽऋतुनेति षट्प्रचर्य । इतरथा पात्रे विपर्यस्येतेऽऋतुभिरिति चतुश्चरित्वेतरथा पात्रे विपर्यस्येतेऽअन्यतरतऽएव तद्देवाऽअहरसृजन्तान्यतरतो रात्रिमन्यतरतऽएव तद्देवा मनुष्यानसृजन्तान्यतरतः पशून् ॥१३॥ अथातो गृह्णात्येव । "उपयामगृहीतोऽसि मधवे त्वे"त्येवाध्वर्युर्गृह्णा"त्युपयामगृहीतोऽसि माधवाय त्वे"ति प्रतिप्रस्थातैतावेव वासन्तिकौ स यद्वसन्तऽओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च ॥१४॥ "उपयामगृहीतोऽसि । शुक्राय त्वे"त्येवाध्वर्युर्गृह्णा"त्युपयामगृहीतोऽसि शुचये त्वे"ति प्रतिप्रस्थातैतावेव ग्रैष्मौ स यदेतयोर्बलिष्ठं तपति तेनो हैतौ शुक्रश्च शुचिश्च ॥१५॥ "उपयामगृहीतोऽसि । नभसे त्वे"त्येवाध्वर्युर्गृह्णा"त्युपयामगृहीतोऽसि नभस्याय त्वे"ति प्रतिप्रस्थातैतावेव वार्षिकावमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च ॥१६॥ "उपयामगृहीतोऽसि । इषे त्वे"त्येवाध्वर्युर्गृह्णात्यु"पयामगृहीतोऽस्यूर्जे त्वे"ति प्रतिप्रस्थातैतावेव शारदौ स यच्छरद्यूर्ग्रसऽओषधयः पच्यन्ते तेनो हैताविषश्चोर्ज्जश्च ॥१७॥ "उपयामगृहीतोऽसि । सहसे त्वे"त्येवाध्वर्युर्गृह्णा"त्युपयामगृहीतोऽसि सहस्याय त्वे"ति प्रतिप्रस्थातैतावेव हैमन्तिकौ स यद्धेमन्तऽइमाः प्रजाः सहसेव स्वं वश-

१. व्यवस्यत् इति. च.  २. तौ वा इति. ग.  ३. अदधुरिति. ग.
४–९. मा. सं. ७. ३०.  १०. नभस्यायेति. ग. क.  ११, १२. मा. सं. ७. ३०
१३. हैताविषश्चेति ग. . १४, १५. मा. सं. ७. ३०

मुपनयते तेनो हैतौ सहश्च सहस्यश्च ॥१८॥ "उपयामगृहीतोऽसि । तपसे त्वे"त्येवाध्वर्युर्गृह्णात्यु"पयामगृहीतोऽसि तपस्याय त्वे"ति प्रतिप्रस्थातैतावेव शैशिरौ स यदेतयोर्बलिष्ठꣳ ह्यायति तेनो हैतौ तपश्च तपस्यश्च ॥१९॥ "उपयामगृहीतोऽसि । अꣳहसस्पतये त्वे"-ति त्रयोदशं ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयादथ प्रतिप्रस्थाता-ध्वर्य्योः पात्रे सꣳस्रवमवनयत्यध्वर्युर्व्वा प्रतिप्रस्थातुः पात्रे सꣳस्र-वमवनयत्याहरति भक्षम्॥२०॥ अथ प्रतिप्रस्थाता भाक्षितेन पात्रेण । ऐन्द्राग्नं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रेणैन्द्राग्नं ग्रहं गृह्णाति । न वा-ऽऋतुग्रहाणामनुवषट्कुर्वन्त्येतेभ्यो वाऽऐन्द्राग्नं ग्रहं ग्रहीष्यन् भवति तदस्यैन्द्राग्नेनैवानुवषट्कृता भवन्ति॥२१॥ यद्वेवैन्द्राग्नं ग्रहं गृह्णाति । सर्व्वं वाऽइदं प्राजीजनद्यऽऋतुग्रहानग्रहीत्सऽइदꣳ सर्व्वं प्रजनय्येदमे-वैतत्सर्वं प्राणोदानयोः प्रतिष्ठापयति तदिदꣳ सर्वं प्राणोदानयोः प्रतिष्ठितमिन्द्राग्नी हि प्राणोदानाविमे हि द्यावापृथिवी प्राणोदानावन-योर्हीदꣳसर्व्वं प्रतिष्ठितम्॥२२॥यद्वेवैन्द्राग्नं ग्रहं गृह्णाति । सर्व्वं वा-ऽइदं प्राजीजनद्यऽऋतुग्रहानग्रहीत्सऽइदꣳ सर्व्वं प्रजनय्यास्मिन्नेवै-तत्सर्व्वस्मिन् प्राणोदानौ दधाति ताविमावस्मिन्त्सर्वस्मिन् प्राणोदानौ हि तौ ॥२३॥ अथातो गृह्णात्येव । "इन्द्राग्नीऽआगतꣳसुतं गीर्भिर्न्न-भो वरेण्यम् । अस्य पातं धियेषिता । उपयामगृहीतोसीन्द्राग्नि-भ्यां-त्वैष ते योनिरिन्द्राग्निभ्यां त्वे"ति सादयतीन्द्राग्निभ्याꣳ ह्येनं गृह्णाति ॥२४॥ अथ वैश्वदेवं ग्रहं गृह्णाति । सर्व्वं वाऽइदं प्राजीज-नद्य ऽऋतुग्रहानग्रहीत्स यद्धैतावदेवाभविष्यद्यावत्यो हैवाग्रे प्रजाः सृष्टास्तावत्यो हैवाभाविष्यन्न प्राजनिष्यन्त ॥२५॥ अथ यद्वैश्वदेवं ग्रहं गृह्णाति । इदमेवैतत्सर्व्वमिमाः प्रजा यथायथं व्यवसृजति तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते शुक्रपात्रेण गृह्णात्येष वै शुक्रो यऽएष

१–३. मा. सं. ७. ३०. ४. तौ इति. च. ५. मा. सं. ७. ३१
६. नभः इति. च. ७. प्राजनिष्यन्त इति ग. ८. प्रजा इति. ग.

तपति तस्य ये रश्मयस्ते विश्वेदेवास्तस्माच्छुक्रपात्रेण गृह्णाति॥२६॥ अथातो गृह्णात्येव । "ओमासश्चर्षणीधृतो विश्वे देवासऽआगत । दाश्वाꣳसो दाशुषः सुतम् । उपयामगृहीतोसि विश्वेभ्यस्त्वा देवेभ्य ऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य"ऽइति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति ॥२७॥ Cf. का. श. ५. ३. २; तै. ६. ५. ४; मै. सं. ४. ६. ७, ८; कठ. २८. २; कपि. ४४. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ३. १. )

( शस्त्रप्रतिगरः )

४. २. ६.

गृणाति ह वाऽएतद्धोता यच्छꣳसति । तस्माऽएतद्गृणते प्रत्येवाध्वर्युराग‍ृणाति तस्मात्प्रतिगरो नाम ॥१॥ तं वै प्राञ्चमासीनमाह्वयते । सर्व्वे वाऽअन्यऽउद्गातुः प्राञ्च ऽआर्त्विज्यं कुर्व्वन्ति तथो हास्यैतत्प्रागेवार्त्विज्यं कृतं भवति॥२॥ प्रजापतिर्व्वाऽउद्गाता । योषर्ग्घोता सऽएतत्प्रजापतिरुद्गाता योषायामृचि होतरि रेतः सिञ्चति यत्स्तुते तद्धोता शस्त्रेण प्रजनयति तच्छ्यति यथायं पुरुषः शितस्तद्यदेनच्छ्यति तस्माच्छस्त्रं नाम ॥३॥ तदुपपल्ययय प्रतिगृणाति । इदमेवैतद्रेतः सिक्तमुपनिमदत्यथ यत्पराङ् तिष्ठन् प्रतिगृणीयात्पराग्घैवैतद्रेतः सिक्तं प्रणश्येत्तन्न प्रजायेत सम्यञ्चा ऽउचैवैतद्भूत्वैतद्रेतः सिक्तं प्रजनयतः ॥४॥ यातयामानि वै देवैश्छन्दाꣳसि । छन्दोभिर्हि देवाः स्वर्गं लोकꣳसमाश्नुवत मदो वै प्रतिगरो यो वाऽऋचि मदो यः सामन्सो वै स तच्छन्दः स्वेवैतद्रसं दधात्ययातयामानि करोति तैरयातयामैर्य्यज्ञं तन्वते ॥५॥ तस्माद्यद्यर्द्धर्च्चशः शꣳसेत् । अर्द्धर्च्चेऽर्द्धर्च्चे प्रतिगृणीयाद्यदि पच्छःशꣳसेत्पदे पदे प्रतिगृणीया-

---

१. मा. सं. ७. ३३.    २. दाशुष इति. ग.    ३. मासीनमिति. ग.
४. योषग्घोता इति. क.    ५. तन्न इति. च.    ६. समाश्नुवत इति. ग.

यत्र वै शꣳसन्नवानिति तदसुररक्षसानि व्यज्ञमन्ववचरन्ति तत्प्रतिगरेण संदधाति नाष्ट्राणाꣳरक्षसामनन्ववचाराय यजमानस्यौचैवैतद्भ्रातृव्यलोकं छिनत्ति ॥६॥ चतुरक्षराणि ह वाऽअग्रे छन्दाꣳस्यासुः। ततो जगती सोममच्छापतत्सा त्रीण्यक्षराणि हित्वाजगाम ततास्त्रिष्टुप्सोममच्छापतत्सैकमक्षरꣳहित्वाजगाम ततो गायत्री सोममच्छापतत्सैतानि चाक्षराणि हरन्त्यागछत्सोमं च ततोऽष्टाक्षरा गायत्र्यभवत्तस्मादाहुरष्टाक्षरा गायत्रीति ॥७॥ तया प्रातःसवनमतन्वत। तस्माद्गायत्रं प्रातःसवनं तयैव माध्यन्दिनꣳसवनमतन्वत ताꣳह त्रिष्टुबुवाचोप त्वाहमायानि त्रिभिरक्षरैरुप मा ह्वयस्व मा मा यज्ञादन्तर्गा ऽइति तथेति तामुपाह्वयत ततऽएकादशाक्षरा त्रिष्टुबभवत्तस्मादाहुस्त्रैष्टुभं माध्यन्दिनꣳसवनमिति ॥८॥ तयैव तृतीयसवनमतन्वत। ताꣳ ह जगत्युवाचोप त्वाहमायान्येकेनाक्षरेणोप मा ह्वयस्व मा मा यज्ञादन्तर्गाऽइति तथेति तामुपाह्वयत ततो द्वादशाक्षरा जगत्यभवत्तस्मादाहुर्ज्जागतं तृतीयसवनमिति ॥९॥ तदाहुः। गायत्राणि वै सर्व्वाणि सवनानि गायत्री ह्येवैतदुपसृजमानैदिति[1] तस्मात्सꣳ सिद्धं प्रातःसवनं प्रतिगृणीयात्सꣳ सिद्धा हि गायत्र्यागच्छत्सकुम्मद्वन्माध्यन्दिने सवनऽएकꣳ हि साक्षरꣳ हित्वागच्छत्तेनैवैनामेतत्समर्द्धयति कृत्स्नां करोति ॥ १०॥ यत्र त्रिष्टुभः शस्यन्ते। त्रिमद्वत्तृतीयसवने[2] त्रीणि हि साक्षराणि हित्वागच्छत्तैरेवैनामेतत्समर्द्धयति कृत्स्नां करोति ॥११॥ (शतम् २५००) यत्र द्यावापृथिव्यꣳ शस्यते। इमे ह वै द्यावापृथिवीऽइमाः प्रजाऽउपजीवन्ति तदनयोरेवैतद्द्यावापृथिव्यो रसं दधाति ते रसवत्याऽउपजीवनीयेऽइमाः प्रजाऽउपजीवन्ति स वाऽओ३मित्येव प्रतिगृणीयात्तद्धि सत्यं तद्देवा विदुः ॥१२॥ तद्धैके। ओथामो दैव वागिति प्रतिगृणन्ति वाक्प्रतिगरऽएतद्वाचमुपाप्नुमऽइति वदन्तस्तदु तथा न

१. मानैदिति. च. २. सवने इति. ग, तृतीयसवने इति. च.

कुर्य्याद्यथा वै कथा च प्रतिगृणात्युपात्तैवास्य व्वाग्भवति व्वाचा हि प्रतिगृणाति तस्मादो ३मित्येव प्रतिगृणीयात्तद्धि सत्यं तद्देवा व्विदुः ॥१३॥ Cf. का. श. ५. ३. ३; तै. सं. ३. २ ९;

इति माध्यन्दिनीये शतपथब्राह्मणे चतुर्थकाण्डे
द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. ३. २. )

४. २. ७.

( माध्यन्दिनसवम् , मरुत्वतीयमाहेन्द्रग्रहाः )

इहा ३ ऽ इहा ३ ऽ इत्यभिषुणोति[1] । इन्द्रमेवैतदाच्यावयति बृहद्बृहदितीन्द्रमेवैतदाच्यावयति ॥१॥ स शुक्रामन्थिनौ प्रथमौ गृह्णाति । शुक्रवद्ध्येतत्सवनमथाग्रयणꣳ सर्व्वेषु ह्येष सवनेषु गृह्यतेऽथ मरुत्वतीयमथोक्थ्यमुक्थानि ह्यत्रापि भवन्ति ॥२॥ तद्धैके । उक्थ्यं गृहीत्वाथ मरुत्वतीयं गृह्णन्ति[2] तदु तथा न कुर्यान्मरुत्वतीयमेव गृहीत्वाथोक्थ्यं गृह्णीयात् ॥३॥ तान्वाऽएतान् । पञ्च ग्रहान् गृह्णात्येष वै व्वज्रो यन्माध्यन्दिनः पवमानस्तस्मात्पञ्चदशः पञ्चसामा भवति पञ्चदशो हि व्वज्रः स ऽएतैः पञ्चभिर्ग्रहैः पञ्च वाऽइमाऽअङ्गुलयोऽङ्गुलिभिर्व्वै प्रहरति ॥४॥ इन्द्रो व्वृत्राय व्वज्रं प्रजहार[3] । स व्वृत्रं पाप्मानꣳ हत्वा व्विजितेऽभयेऽनाष्ट्रे दाक्षिणां[4] निनाय तस्मादप्येतर्हि यदेवैतेन माध्यन्दिनेन पवमानेन स्तुवतेऽथ व्विजितेऽभयेऽनाष्ट्रे दक्षिणा नीयन्ते तथोऽएवैष ऽएतैः पञ्चभिर्ग्रहैः पाप्मने द्विषते भ्रातृव्याय व्वज्रं प्रहरति स व्वृत्रं पाप्मानꣳ हत्वा व्विजितेऽभयेऽनाष्ट्रे दक्षिणा नयति तस्माद्वाऽएतान् पञ्च ग्रहान् गृह्णाति ॥५॥ तद्यन्मरुत्वतीयान् गृह्णाति । एतद्वाऽइन्द्रस्य निष्केवल्यꣳसवनं यन्माध्यन्दिनꣳसवनं तेन व्वृत्रमजिघाꣳ

१. अभिषुणोति इति. च.
२ 'उक्थं गृहीत्वा मरुत्वतीयौ' इत्यापस्तम्बः ( आ. प. श्रौ. १३. २. ३. )
३. प्रजहार इति. ग.    ४. दक्षिणा इति ग.    ५. एतद्वा इति. ग.

सत्त्वेन व्यजिगीषत मरुतो वाऽइत्यश्वत्थेऽपक्रम्य तस्थुः क्षत्रं वाऽइन्द्रो व्विशो मरुतो व्विशा वै क्षत्रियो बलवान् भवति तस्मादाश्वत्थेऽऋतुपात्रे स्यातां कार्ष्मर्यमये त्वेव भवतः ॥६॥ तानिन्द्रऽउपमन्त्रयांचक्रे । उप मा वर्त्तध्वं युष्माभिर्बलेन व्वृत्र[1]ꣳ हनानीति ते होचुः किं नस्ततः स्यादिति तेभ्यऽएतौ मरुत्वतीयौ ग्रहावगृह्णात् ॥७॥ ते होचुः । अपनिधायैनमोजऽउपावर्त्तामहाऽइति तऽएनमपनिधायैवौजऽउपाववृतुस्तद्वाऽइन्द्रोऽस्पृणुतापनिधाय वै मौजऽउपावृतन्निति ॥८॥ स होवाच । सहैव मौजसोपावर्त्तध्वमिति तेभ्यो वै नस्तृतीयं ग्रहं गृहाणेति तेभ्यऽएतं तृतीयं ग्रहमगृह्णादु"पयामगृहीतोऽसि मरुतां त्वौजस"ऽइति तऽएनꣳ सहैवौजसोपावर्त्तन्त तैर्व्यजयत तैर्व्वृत्रमहन्क्षत्रं वाऽइन्द्रो व्विशो मरुतो व्विशा वै क्षत्रियो बलवान् भवति तत्क्षत्रऽएवैतद्बलं दधाति तस्मान्मरुत्वतीयान् गृह्णाति ॥९॥ स वाऽइन्द्रायैव मरुत्वते गृह्णीयात् । नापि मरुद्भ्यः स यद्धापि मरुद्भ्यो गृह्णीयात्प्रत्युद्यामिनीꣳ ह क्षत्राय व्विशं कुर्यादथैतदिन्द्रमेवानु मरुतऽआभजति तत्क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति तस्मादिन्द्रायैव मरुत्वते गृह्णीयान्नापि मरुद्भ्यः ॥१०॥ अपक्रमाद्ध हैवैषामेतद्बिभयांचकार । यदिमे मन्नापक्रामेयुर्यन्नान्युद्भ्रियेरन्निति तानेवैतदनपक्रमिणोऽकुरुत तस्मादिन्द्रायैव मरुत्वते गृह्णीयान्नापि मरुद्भ्यः ॥११॥ ऋतुपात्राभ्यां गृह्णाति । ऋतवो वै संवत्सरो यद्वस्तेऽदः प्रातःसवने प्रत्यक्षमवकल्प्यन्ते यदृतुग्रहान् गृह्णात्यथैतत्परोक्षं माध्यन्दिने सवनेऽवकल्प्यन्ते यदृतुपात्राभ्यां मरुत्वतीयान् गृह्णाति व्विशो वै मरुतोऽन्नं वै व्विशऽऋतवो वाऽइदꣳसर्व्वमन्नाद्यं पचन्ति तस्मादृतुपात्राभ्यां मरुत्वतीयान् गृह्णाति ॥१२॥ अथातो गृह्णात्येव । "[2]इन्द्र मरुत्वऽइह पाहि सोमं यथा शार्याते्ऽअपिबः सुतस्य । तव प्रणीती तव

---

१. वृत्रꣳ इति, च.  २. मा. सं. ७. ३५, ३६.

शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वतऽएष ते य्योनिरिन्द्राय त्वा मरुत्वते ॥१३॥ मरुत्वन्तं व्वृषभम् । व्वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम् । व्विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत ऽएष ते य्योनिरिन्द्राय त्वा मरुत्वते । उमयामगृहीतोऽसि मरुतां त्वौजस''ऽइति तृतीयं ग्रहं गृह्णाति ॥१४॥ अथ माहेन्द्रं ग्रहं गृह्णाति । पाप्मना वाऽएतादिन्द्रः सꣳसृष्टोऽभूद्यद्विशा मरुद्भिः स य्यथा व्विजयस्य कामाय व्विशा समाने पात्रेऽश्नीयादेवं तद्यदस्माऽएतं मरुद्भिः समानं ग्रहमगृह्णन् ॥१५॥ तं देवाः । सर्वस्मिन्विजितेऽभयेऽनाष्ट्रे यथेषीकां मुञ्जाद्विवृहेदेवꣳसर्वस्मात्पाप्मनो व्यवृहन्यन्माहेन्द्रं ग्रहमगृह्णंस्तथोऽएवैषऽएतद्यथेषीका व्विमुञ्जा स्यादेवꣳसर्व्वस्मात्पाप्मनो निर्मुच्यते यन्माहेन्द्रं ग्रहं गृह्णाति ॥१६॥ यद्वेव माहेन्द्रं ग्रहं गृह्णाति । इन्द्रो वाऽएष पुरा व्वृत्रस्य व्वधादथ व्वृत्रꣳ हत्वा य्यथा महाराजो व्विजिग्यान् ऽएवं महेन्द्रोऽभवत्तस्मान्माहेन्द्रं ग्रहं गृह्णाति महान्तमु चैवैनमेतत्खलु करोति व्वृत्रस्य व्वधाय तस्माद्वेव माहेन्द्रं ग्रहं गृह्णाति शुक्रपात्रेण गृह्णात्येष वै शुक्रो यऽएष तपत्येषऽउऽएव महांस्तस्माच्छुक्रपात्रेण गृह्णाति ॥१७॥ अथातो गृह्णात्येव । "महां २॥ ऽइन्द्रो नृवद्रा चर्षणिप्राऽउत द्विबर्हाऽअमिनः सहोभिः । अस्मद्र्यग्वावृधे व्वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते य्योनिर्महेन्द्राय त्वे''ति सादयति महेन्द्राय ह्येनं गृह्णाति ॥१८॥ अथोपाकृत्यैतां व्वाचं व्वदति । "अभिषोतारोऽभिषुणुतौलूखलानुद्वादयताग्नीदाशिरं व्विनय सौम्यस्य व्वित्ता''दिति ते वै तृतीयसवनायैवाभिषोतारोऽभिषुण्वन्ति तृतीयसवनायौलूखलानुद्वादयन्ति तृतीयसवनायाग्नीदाशिरं व्विनयति तृतीयसवनाय सौम्यं

---

१. गृह्णाति इति. ग. २. मा. सं. ७. ३९. ३. गृह्णाति इति. क.

चरुं॑ अपयत्येते वै शुक्रवती रसवती सवने यत्प्रातःसवनं च माध्यन्दिनं च सवनमथैतन्निर्धीतशुक्रं यत्तृतीयसवनं तदेवैतस्मान्माध्यन्दिनात्सवनान्निर्मिमीते तथो ह्यस्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मादेतामत्र व्राचं वदति ॥१९॥ Cf. का. श. ५. ३. ४; तै. सं. ६.५.५; मै. सं. ४.६.८; कठ. २८. २,३; कपि.४४.२,३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ ( अ. ३. ३. )

द्वितीयः प्रपाठकस्समाप्तः ॥

( काण्डिकासंख्या १३९ )

## ४. ३. १.

### ( दाक्षिणहोमो दक्षिणादानं च )

घ्नन्ति वाऽएतद्यज्ञम् । यदेनं तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुं॑ संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्याᳬ हविर्यज्ञं घ्नन्ति ॥ १ ॥ सऽएष यज्ञो हतो न ददक्षे । तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्धऽएव यज्ञो भवति तस्माद्दक्षिणा ददा[1]ति ॥ २ ॥ तद्वै षड्द्वादशेत्येव हविर्यज्ञे ददति । न ह्व त्वेवाशतदक्षिणः सौम्योऽध्वरः स्यादेष वै प्रत्यक्षं यज्ञो यत्प्रजापतिः पुरुषो वै प्रजापतेर्नेदिष्ठं॑सोऽयं॑ शतायुः शततेजाः शतवीर्यस्तं॑शतेनैव दक्षयति नाशतेन तस्मान्नाशतदक्षिणः सौम्योऽध्वरः स्यान्नो हैवाशतदक्षिणेन यजमानस्यार्त्विक्स्यान्नेदस्याक्षिभूरसानि यामिमे हनिष्यन्त्येव न दक्षयिष्यन्तीति ॥३॥ द्वया[2] वै देवाः । अहैव देवाऽअथ ये ब्राह्मणाः शुश्रुवां॑सोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा[3]

१. ददाति. इति. ग. २. द्वया वै देवा देवाः इति. च. ३. द्वेधा इति. क.

विभक्तऽएव यज्ञ ऽआहुतयऽएव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाᳬं शुश्रुवुषामनूचानानामाहुतिभिरेव देवान् प्रीणाति दक्षिणाभिर्मनुष्यदेवान् ब्राह्मणाञ्छुश्रुवुषोऽनूचानांस्तऽएनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥४॥ ता वाऽएताः। ऋत्विजामेव दक्षिणा ऽअन्यं वाऽएतऽएतस्यात्मानᳬं संस्कुर्वन्त्येतं यज्ञमृङ्मयं यजुर्मयᳬं साममयमाहुतिमयᳬं सोऽस्यामुष्मिंल्लोकऽआत्मा भवति तद्ये माजीजनन्तेति तस्मादृत्विग्भ्यऽएव दक्षिणा दद्यान्नानृत्विग्भ्यः ॥५॥ अथ प्रतिपरेत्य गार्हपत्यम्। दाक्षिणानि जुहोति स दशाहोमीये वासासि हिरण्यं प्रबध्यावधाय जुहोति देवलोके मे ऽप्यसदिति वै यजते यो यजते सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति तदनूची दक्षिणा यां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥६॥ चतस्रो वै दक्षिणाः। हिरण्यं गौर्वासोऽश्वो न वै तदवकल्पते यदश्वस्य पादमवदध्याद्यद्वा गोः पादमवदध्यात्तस्माद्दशाहोमीये वासासि हिरण्यं प्रबध्यावधाय जुहोति ॥७॥ सौरीभ्यामृग्भ्यां जुहोति। तमसा वाऽअसौ लोकोऽन्तर्हितः सऽएतेन ज्योतिषा तमोऽपहत्य स्वर्गं लोकमुपसंक्रामति तस्मात्सौरीभ्यामृग्भ्यां जुहोति ॥८॥ स जुहोति। "उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यᳬं स्वाहे"त्येतया गायत्र्या गायत्री वाऽइयं पृथिवी सेयं प्रतिष्ठा तदस्यामेवैतत्प्रतिष्ठायां प्रति तिष्ठति ॥९॥ अथ द्वितीयां जुहोति। "चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवीऽअन्तरिक्षᳬं सूर्यऽआत्मा जगतस्तस्थुषश्च स्वाहे"त्येतया त्रिष्टुभा लोकमेवैतयोपप्रैति ॥१०॥ अथाग्नीध्रे। [10]द्वे वैकां वा जुहोति तद्यदग्नावाग्नीध्रे द्वे वैकां

---

१. ब्राह्मणानामिति. ग. २. एतस्य इति. ग. ३. ऋत्विग्भ्य इति. च.
४. जुहोति इति. ग. ५. जुहोति इति. च. ६. मा. सं. ७. ४१.
७. प्रतितिष्ठति इति. च. ८. मा. सं. ७, ४२. ९. उपप्रैति इति.ग, च.
१०. द्वे इति. ग.

वा जुहोत्यग्निर्व्वै पशूनामीष्टे तऽएनमभितः परिणिविशन्ते तमेत-
याहुत्या प्रीणाति सोऽस्मै प्रीतोऽनुमन्यते तेनानुमतां ददाति ॥११॥
स जुहोति[1] । "अग्ने[2] नय सुपथा रायेऽअस्मान्विश्वानि देव व्वयुनानि
व्विद्वान्[3] । य्युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽउक्तिं व्विधेम-
स्वाहे"त्यथ य्यद्यश्वं य्युक्तं वायुक्तं वा दास्यन्त्स्यादथ द्वितीयां जुहु-
याद्यद्यु न नाद्रियेत ॥१२॥ स जुहोति "अयं[4] नोऽअग्निर्व्वरिवस्कृ-
णोत्वयं मृधः पुरऽएतु प्रभिन्दन्[5] । अयं व्वाजान् जयतु[6] व्वाजसाता-
वयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहे"ति व्वाजसा ह्यश्वः[7] ॥१३॥ अथ
हिरण्यमादाय शालामभ्यैति । दक्षिणेन व्वेदिं दक्षिणा ऽउपतिष्ठन्ते
सोऽग्रेण शालां तिष्ठन्नभिमन्त्रयते "रूपेण[8] वो रूपमभ्यागा"मिति न
ह वाऽअग्रे पशवो दानाय चक्षमिरे तेऽपनिधाय स्वानि रूपाणि
शरीरैः प्रत्युपातिष्ठन्त तानेतद्देवाः स्वैरेव रूपैर्यज्ञस्यार्द्धादुपायंस्ते
स्वानि रूपाणि जानाना[9] अभ्यवायंस्ते रातमनसोऽलं दानायाभवंस्त-
थोऽएवैनानेष एतत्स्वैरेव रूपैर्यज्ञस्यार्द्धादुपैति ते स्वानि रूपाणि जा-
नानाऽअभ्यवयन्ति ते रातमनसोऽलं दानाय भवन्ति ॥१४॥ "तुथो[10]
वो व्विश्ववेदा व्विभजत्वि"ति । ब्रह्म वै तुथस्तदेना ब्रह्मणा व्विभजाति
ब्रह्म वै दक्षिणीयं चादक्षिणीयं च व्वेद तथो हास्यैता दक्षिणीयायैव
दत्ता[11] भवन्ति नादक्षिणीयाय ॥१५॥ "ऋतस्य[12] पथा प्रेते"ति । य्यो
वै देवानां पथैति स ऽऋतस्य पथैति "चन्द्रदक्षिणा[13]"ऽइति तदेतेन
ज्योतिषा यन्ति ॥१६॥ अथ सदोऽभ्यैति "व्वि स्वः[14] पश्य व्व्यन्त-
रिक्ष"मिति व्वि त्वया दक्षिणया लोकं ख्येषमित्येवैतदाह ॥१७॥ अथ
सदः प्रेक्षते । "य्यतस्व[15] सदस्यै[16]"रिति मा त्वा सदस्याऽअतिरिक्षतेत्येवै-

---

१. जुहोति इति च  २. मा. सं. ७. ४३  ३. विद्वान् इति. ग.
४. मा. सं. ७. ४४.  ५. प्रभिन्दन् इति ग.  ६. जयतु इति. च.
७. ह्यश्व इति. च.  ८,१०. मा. सं. ७. ४५.  ९. जानाना इति. च.
११. दत्ता भवन्ति इति. ग.  १२-१५. मा. सं. ७. ४५.  १६. सदस्यैरिति. च.

तदाह ॥१८॥ अथ हिरण्यमादायाग्नीध्रमभ्यैति । "ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्य"मिति यो वै ज्ञातो ज्ञातकुलीनः स पितृमान् पैतृमत्यो या वै ज्ञातायापि कतिपयीर्दक्षिणा ददाति ताभिर्म्महज्जय"त्यृषिमार्षेय"मिति यो वै ज्ञातोऽनूचानः सऽऋषिरार्षेयः "सुधातुदक्षिणमि"ति स हि सुधातुर्दक्षिणः ॥१९॥ अथैवमुपसद्य । अग्नीधे हिरण्यं ददात्य "स्मद्राता देवत्रा गच्छते"ति यां वै रातमनाऽअविचिकित्सन्दक्षिणां ददाति तया महज्जयति देवत्रा गच्छतेति देवलोके मेऽप्यसदिति वै यजते यो यजते तद्देवलोकऽएवैनमेतदपित्विनं करोति "प्रदातारमाविशते"ति मामाविशतेत्येवैतदाह तथो हास्मादेताः पराच्यो न प्रणश्यन्ति तद्यदग्नीधे प्रथमाय दक्षिणां ददात्यतो हि विश्वे देवाऽअमृतत्वमपाजयंस्तस्मादग्नीधे प्रथमाय दक्षिणां ददाति ॥२०॥ अथैवमेवोपसद्य । आत्रेयाय हिरण्यं ददाति यत्र वाऽअदः प्रातरनुवाकमन्वाहुस्तद्ध स्मैतत्पुरा शꣳसन्त्यत्रिर्वाऽऋषीणाꣳ होतासाथैतत्सदोऽसुरतमसमभिपुप्रुवेतऽऋषयोऽत्रिमब्रुवन्नेहि प्रत्यङ्ङिदं तमोऽपजहीति स ऽएतत्तमोऽपाहन्नयं वै ज्योतिर्यऽइदं तमोऽपावधीदिति तस्माऽएतज्ज्योतिर्हिरण्यं दक्षिणामनयञ्ज्योतिर्हि हिरण्यं तद्वै स तत्तेजसा वीर्येणर्षिस्तमोऽपजघानाथैषऽएतेनैवैतज्ज्योतिषा तमोऽपहन्ति तस्मादात्रेयाय हिरण्यं ददाति ॥२१॥ अथ ब्रह्मणे । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायत्यथोद्गात्रेऽथ होत्रेऽथाध्वर्युभ्याꣳ हविर्द्धानऽआसीनाभ्यामथ पुनरेत्य प्रस्तोत्रेऽथ मैत्रावरुणायाथ ब्राह्मणाच्छꣳसिनेऽथ पोत्रेऽथ नेष्ट्रेऽथाच्छावाकायाथोन्नेत्रेऽथ ग्रावस्तुतेऽथ सुब्रह्मण्यायै प्रतिहर्त्रेऽउत्तमाय ददाति प्रतिहर्त्ता वाऽएष सोऽस्माऽएतदन्ततः प्रतिहरति तथो हास्मादेताः पराच्यो न प्रणश्यन्ति ॥२२॥ अथाहे"न्द्राय मरुत्वते-

१-३ मा. सं. ७. ४६. ४. दक्षिणः इति. च. ५,६. मा.सं.७.४६
७. प्रणश्यन्ति इति. च.

नुब्रूही''ति । य्यत्र वै प्रजापतिरग्ग्रे ददौ तद्धेन्द्रऽईक्षांचक्रे सर्व्वं वाऽअयमिदं दास्यति नास्मभ्यं किं चन परिशेक्ष्यतीति सऽएतं व्वज्रमुदयच्छदिन्द्राय मरुत्वते ऽनुब्रूहीत्यदानाय ततो नाददात्सऽएषोऽप्येतर्हि तथैव व्वज्रऽउद्यम्यत 'इन्द्राय मरुत्वतेऽनुब्रूही'त्यदानाय ततो न ददाति ॥ २३ ॥ चतस्रो वै दक्षिणाः । हिरण्यमायुरेवैतेनात्मनस्त्रायतऽआयुर्हि हिरण्यं तदग्नयऽआग्नीध्रं कुर्वतेऽददात्तस्मादप्येतर्ह्याग्नीधे हिरण्यं दीयते ॥२४॥ अथ गौः । प्राणमेवैतयात्मनस्त्रायते प्राणो हि गौरन्नꣳ हि गौरन्नꣳ हि प्राणस्ताꣳ रुद्राय होत्रेऽददात् ॥२५॥ अथ व्वासः त्वचमेवैतेनात्मनस्त्रायते त्वग्घि व्वासस्तद्बृहस्पतयऽउद्गायतेऽददात् ॥२६॥ अथाश्वः । व्वज्रो वाऽअश्वो व्वज्रमेवैतत्पुरोगां कुरुते य्यमलोके मेऽप्यसदिति वै य्यजते य्यो य्यजते तद्यमलोकऽएवैनमेतदपित्विनं करोति तं यमाय ब्रह्मणेऽददात् ॥२७॥ स हिरण्यं प्रत्येति । "अग्नये त्वा मह्यं व्वरुणो ददा''त्वित्यग्नये ह्येतद्वरुणोऽददा"त्सोऽमृतत्वमशीयायुर्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्र''ऽइति ॥२८॥ अथ गां प्रत्येति । "रुद्राय त्वा मह्यं व्वरुणो ददा''त्विति रुद्राय ह्येतां व्वरुणोऽददा"त्सोऽमृतत्वमशीय प्राणो दात्रऽएधि व्वयो मह्यं प्रतिग्रहीत्र''इति ॥२९॥ अथ व्वासः प्रत्येति । "बृहस्पतये त्वा मह्यं व्वरुणो ददात्वि''ति बृहस्पतये ह्येतद्वरुणोऽददा"त्सोऽमृतत्वमशीय त्वग्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्र''ऽइति॥ ३०॥ अथाश्वं प्रत्येति । "य्यमायँ त्वा मह्यं व्वरुणो ददा''त्विति य्यमाय ह्येतं व्वरुणोऽददा"त्सोऽमृतत्वमशीय हयो दात्रऽएधि व्वयो मह्यं प्रतिग्रहीत्र''ऽइति ॥३१॥ अथ यदन्यद्ददाति । कामेनैव तद्ददातीदं मेऽप्यमुत्रासदिति तत्प्रत्येति "कोऽदात्कस्माऽअदात्कामोऽत्कामायादात्। कामो दाता कामः प्रतिग्रहीता कामैतत्त''इति तद्देवतायाऽअतिदिशति ॥३२॥ तदाहुः । न देवतायाऽअतिदिशेदिदं वै य्यां देवताꣳस-

१-८. मा. सं. ४. ४७. ९. मा. सं. ४. ४८.

मिन्द्धे सा दीप्यमाना श्वः श्वः श्रेयसी भवतीदं वै यस्मिन्नग्ना-
वभ्याद्धति स दीप्यमानऽएव श्वः-श्वः श्रेयान् भवति श्वः श्वो
ह वै श्रेयान् भवति य ऽएवं विद्वान् प्रतिगृह्णाति तद्यथा समिद्धे
जुहुयादेवमेतां जुहोति यामधीयते ददाति तस्मादधीयन्नातिदिशेत्
॥३३॥ Cf. का. श. ५. ४. १; तै. सं. ६. ६. १; मै. सं. ४. ८.
२, ३; कठ. २८. ४, ५. कपि ४४. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ३. ४. )

४. ३. २.

( तृतीयसवनम् आदित्यग्रहः )

त्रया वै देवाः। वसवो रुद्राऽआदित्यास्तेषां विभक्तानि सवनानि
वसूनामेव प्रातः सवनँ रुद्राणां माध्यन्दिनँ सवनमादित्यानां
तृतीयसवनं तद्वाऽअमिश्रमेव वसूनां प्रातः सवनममिश्रँ रुद्राणां
माध्यान्दिनँ सवनं मिश्रमादित्यानां तृतीयसवनम् ॥१॥ ते हादि-
त्याऽऊचुः। यथेदममिश्रं वसूनां प्रातःसवनममिश्रँ रुद्राणां
माध्यन्दिनँ सवनमेवं नऽइमं पुरा मिश्राद्ग्रहं जुहुथेति तथेति
देवा ऽअब्रुवंस्ते सँस्थितऽएव माध्यन्दिने सवने पुरा तृतीयसव-
नादेतमजुहवुः स ऽएषोऽप्येतर्हि तथैव ग्रहो हूयते सँस्थितऽएव
माध्यन्दिने सवने पुरा तृतीयसवनात्[1] ॥२॥ ते हादित्याऽऊचुः। नेव
वाऽइतरस्मिन्त्सवने स्मो नेवेतरस्मिन्यद्वै नो रक्षाँसि न हिँ-
स्युरिति ॥३॥ ते ह द्विदेवत्यानूचुः। रक्षोभ्यो वै बिभीमो हन्त यु-
ष्मान् प्रविशामेति ॥४॥ ते ह द्विदेवत्याऽऊचुः। किमस्माकं ततः
स्यादित्यस्माभिरनुवषट्कृता भविष्यथेत्यु हादित्या ऽऊचुस्तथेति ते
द्विदेवत्यान् प्राविशन् ॥५॥ स यत्र प्रातः सवने। द्विदेवत्यैः प्रच-
रति तत्प्रतिप्रस्थातादित्यपात्रेण द्रोणकलशात्प्रति निगृह्णीत[2]ऽउप-

---

१. तृतीयसवनात्. इति च. २. मा. सं. ८. १.

याम गृहीतोसी''त्येतावताध्वर्युरेवाश्रावयत्यध्वर्यौरनुहोमं जुहोति प्रतिप्रस्थाता''दित्येभ्यस्त्वे''ति सᳬस्रवमवनयत्येतावतैवमेव सर्व्वेषु ॥६॥ तद्यत्प्रतिप्रस्थाता प्रतिनिगृह्णीते । द्विदेवत्यान्वै प्राविशन्नस्माभिरनुवषट्कृता भविष्यथेत्युदादित्याऽऊचुर्यां वाऽअमू द्वितीयामाहुतिं जुहोति स्विष्टकृते वै तां जुहोति स्विष्टकृतो वाऽएतेऽनुवषट्क्रियन्ते तथोहास्यैतेऽनुवषट्कृताऽइष्टस्विष्टकृतो भवन्त्युत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्द्धे जुहोति ॥७॥ यद्वेव प्रतिप्रस्थाता प्रतिनिगृह्णीते । द्विदेवत्यान्वै प्राविशन्त यानेव प्राविशंस्तेभ्य ऽएवैतन्निर्मिमीतेऽथापिदधाति रक्षोभ्यो ह्यबिभयु''र्व्विष्णऽउरुगायैष ते सोमस्तᳬ रक्षस्व मा त्वा दभन्नि''ति यज्ञो वै व्विष्णुस्तद्यज्ञायैवैतत्परि ददाति गुप्त्याऽअथाह सᳬ स्थितऽएव माध्यन्दिने सवने पुरा तृतीयसवनादेहि यजमानेति ॥८॥ ते सम्प्रपद्यन्ते । अध्वर्युश्च यजमानश्चाग्नीध्रश्च प्रतिप्रस्थाता चोन्नेताथ योऽन्यः परिचरो भवत्युभे द्वारेऽअपिदधाति रक्षोभ्यो ह्यबिभयुरथाध्वर्युरादित्यस्थालीं चादित्यपात्रं चादत्ते स ऽउपर्युपरि पूतभृतं व्विगृह्णाति नेद्व्यवश्चोतदिति ॥९॥ अथ गृह्णाति । ''कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूयऽइन्नु ते दानं देवस्य पृच्यतऽआदित्येभ्यस्त्वे''ति ॥१०॥ तं वै नोपयामेन गृह्णीयात् । अग्रे ह्येवैषऽउपयामेन गृहीतो भवत्यजामितायै जामि ह कुर्याद्यदेनमत्राप्युपयामेन गृह्णीयात् ॥११॥ अथापगृह्य पुनरानयति । ''कदा चन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्य सवनं तऽइन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वे''ति ॥१२॥ अथ दधि गृह्णाति । आदित्यानां वै तृतीयसवनमादित्यान्वाऽअनु पशवस्तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं मध्यतऽइव गृह्णीयादित्याहुर्मध्यतऽइव हीदं पशूनां पयऽइति पश्चादिव त्वेव गृह्णीयात्पश्चादिव हीदं

१,३. मा. सं. ८. १.
२. निगृह्णीते इति. ग.
४. मा. सं. ८. २.
५. मा सं. ८. ३.

पशूनां पयः ॥१३॥ यद्देव दधि गृह्णाति । हुतोच्छिष्टा वाऽएते सꣳस्रवा भवन्ति नालमाहुत्यै तानेवैत्पुनराप्याययति तथालमाहुत्यै भवन्ति तस्माद्दधि गृह्णाति ॥१४॥ स गृह्णाति । "यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वे"ति ॥१५॥ तमुपाꣳशुसवनेन मेक्षयति । विवस्वान्वाऽएष आदित्यो निदानेन यदुपाꣳशुसवन आदित्यग्रहो वाऽएष भवति तदेनꣳस्वऽएव भागे प्रीणाति ॥१६॥

( काण्डस्याऽर्द्धम् ३१४ )

तं न दशाभिर्न पवित्रेणोपस्पृशति । एते वै शुक्रवती रसवती सवने यत्प्रातःसवनं च माध्यन्दिनं च सवनमथैतान्निर्द्धीतशुक्रं यत्तृतीयसवनꣳ स यन्न दशाभिर्न पवित्रेणोपस्पृशति तेनो हास्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मान्न दशाभिर्न पवित्रेणोपस्पृशति ॥१७॥ स मेक्षयति । "विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्वे"त्यथोन्नेत्रऽउपाꣳशुसवनं प्रयच्छत्यथाहोन्नेतारमासृज ग्राव्ण ऽइति तानाधवनीये वा सृजति चमसे वा ॥१८॥ राजानमुन्नीय । आदित्यानां वै तृतीयसवनमादित्यान्वाऽअनु ग्रावाणस्तदेनान्त्स्वेऽएव भागे प्रीणात्यपोर्णुवन्ति द्वारे ॥१९॥ अथापिधायोपनिष्क्रामति । रक्षोभ्यो ह्यबिभयुरथाहा'दित्येभ्योऽनुब्रूही'त्यत्र सम्पश्येद्यदि कामयेताश्राव्य त्वेव सम्पश्येदादित्येभ्यः प्रेष्य "प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य"ऽइति वषट्कृते जुहोति नानुवषट्करोति नेत्पशूनग्नौ प्रवृणजानीति प्रयच्छति प्रतिप्रस्थात्रे सꣳस्रवौ ॥२०॥ अथ पुनः प्रपद्य । आग्रयणमादत्तऽउदीचीनदशं पवित्रं वितन्वन्ति प्रस्कन्दयत्यध्वर्युराग्रयणस्य सम्प्रगृह्णाति प्रतिप्रस्थाता सꣳस्रवावानयत्युन्नेता चम-

---

१. मा. सं. ८. ४. २. मा. सं. ८. ५. ३. संस्रवौ इति. च.

सेन वोदश्चनेन वा ॥२१॥ तं चतसृणां धाराणामाग्रयणं गृह्णाति । आदित्यानां वै तृतीयसवनमादित्यान्वाऽअनु गावस्तस्मादिदं गवां चतुर्द्धा विहितं पयस्तस्माच्चतसृणां धाराणामाग्रयणं गृह्णाति ॥२२॥ तद्यत्प्रतिप्रस्थाता सꣳस्रवौ सम्प्रगृह्णाति । आदित्यग्रहो वाऽएष भवति न वाऽआदित्यग्रहस्यानुवषट्करोत्येतस्माद्वै सावित्रं ग्रहं ग्रहीष्यन् भवति तदस्य सावित्रेणैवानुवषट्कृतो भवति ॥२३॥ यद्वेव प्रतिप्रस्थाता सꣳस्रवौ सम्प्रगृह्णाति । पुरा वाऽएभ्यऽएतन्मिश्राद्-ग्रहमहौषुः पुरा तृतीयसवनात्तृतीयसवनाय वाऽएष ग्रहो गृह्यते तदादित्यास्तृतीयसवनमपियन्ति तथा न बहिर्द्धा यज्ञाद्भवन्ति तस्मात्प्रतिप्रस्थाता सꣳस्रवौ सम्प्रगृह्णाति ॥२४॥ Cf. का. श. ५. ४. २; तै. सं. ६. ५. ६; मै. सं. ४. ६. ९; कठ. २८. ६; कपि. ४४. ६.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. ३. ५. )

( तृतीयोऽध्यायस्समाप्तः )

४. ३. ३.
( सावित्रग्रहः )

मनोऽह वाऽअस्य सविता । तस्मात्सावित्रं गृह्णाति प्राणो ह वाऽअस्य सविता तमेवास्मिन्नेतत्पुरस्तात्प्राणं दधाति यदुपाꣳशुं गृह्णाति तमेवास्मिन्नेतत्पश्चात्प्राणं दधाति यत्सावित्रं गृह्णाति ताविमाऽउभयतः प्राणौ हितौ यश्चायमुपरिष्टाद्यश्चाधस्तात् ॥१॥ ऋतवो वै संवत्सरो यज्ञः । तेऽदः प्रातःसवने प्रत्यक्षमवकल्पयन्ते यदृतुग्रहान् गृह्णात्यथैतत्परोक्षं माध्यन्दिने सवनेऽवकल्पयन्ते यदृतुपात्राभ्यां मरुत्वतीयान् गृह्णाति न वाऽअत्रर्त्तुभ्यऽइति कं चन ग्रहं गृह्णन्ति नर्तुपात्राभ्यां कश्चन ग्रहो गृह्यते ॥२॥ एष वै सविता य एष तपति । एष उऽएव सर्वऽऋतवस्तदृतवः संवत्सरस्तृतीयसवने प्रत्य-

क्षमुवकल्प्यन्ते तुस्मात्सावित्रं गृह्णाति ॥३॥ तं वाऽउपाᳩंशुपात्रेण गृह्णाति । मुनो ह वाऽअस्य सविता प्राणऽउपाᳩंशुस्तस्मादुपाᳩंशुपात्रेण गृह्णात्यन्तर्यामपात्रेण वा समानᳩं ह्येतद्यदुपाᳩंश्वन्तर्यामौ प्राणोदानौ हि ॥४॥

( अर्द्धप्रपाठकः ६१ )

आग्रयणाद्गृह्णाति । मुनो ह वाऽअस्य सविताऽऽत्माग्रयणऽआत्मन्न्येवैतन्मनो दधाति प्राणो ह वाऽअस्य सवितात्माऽऽग्रयणऽआत्मन्न्येवैतत्प्राणं दधाति ॥५॥ अथातो गृह्णात्येव । "[1]वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यᳩं सावीः । वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम । उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा ऽअसि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाये"ति ॥६॥ तं गृहीत्वा न सादयति । मुनो ह वाऽअस्य सविता तुस्मादिदमसन्नं मुनः प्राणो ह वाऽअस्य सविता तुस्मादयमसन्नः प्राणः सञ्चरत्यथाह "देवाय सवित्रेनुब्रूही"त्याश्राव्याह देवाय सवित्रे प्रेष्येति वषट्कृते जुहोति नानुवषट्करोति मुनो ह वाऽअस्य सविता नेन्मुनोऽग्नौ प्रवृणजानीति प्राणो ह वाऽअस्य सविता नेत्प्राणमग्नौ प्रवृणजानीति ॥७॥ अथाभक्षितेन पात्रेण । [2]वैश्वदेवं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रेण वैश्वदेवं ग्रहं गृह्णाति न वै सावित्रस्यानुवषट्करोत्येतस्माद्वै वैश्वदेवं ग्रहं ग्रहीष्यन् भवति तदस्य वैश्वदेवेनैवानुवषट्कृतो भवति ॥८॥ यद्वेव वैश्वदेवं ग्रहं गृह्णाति । मुनो ह वाऽअस्य सविता सर्वमिदं विश्वे देवा ऽइदमेवैतत्सर्वं मनसः कृतानुकरमनुवर्त्म करोति तदिदᳩं सर्वं मनसः कृतानुकरमनुवर्त्म ॥९॥ यद्वेव वैश्वदेवं ग्रहं गृह्णाति । प्राणो ह वाऽअस्य सविता सर्वमिदं विश्वेदेवा अस्मिन्नेवैतत्सर्वस्मिन् प्राणोदानौ दधाति ताविमावस्मिन्त्सर्वस्मिन् प्राणोदानौ[3] हि

---

१. मा. सं. ८. ६.　　२. मा. सं. ८. ७.　　३. प्राणोदानौ इति. ग.

तौ ॥१०॥ य्यद्धेव व्वैश्वदेवं ग्रहं गृह्णाति । व्वैश्वदेवं वै तृतीयसवनं तदुच्यतऽएव सामतो य्यस्माद्वैश्वदेवं तृतीयसवनमुच्यतऽऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो य्यदेतं महावैश्वदेवं ग्रहं गृह्णाति ॥११॥ तं वै पूतभृतो गृह्णाति। व्वैश्वदेवो वै पूतभृदतो हि देवेभ्य ऽउन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यस्तस्माद्वैश्वदेवः पूतभृत् ॥१२॥ तं वाऽअपुरोरुक्कं गृह्णाति । व्विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति सर्वं वै व्विश्वे देवा यदृचो यद्यजूꣳषि यत्सामानि स य्यदेवैनं व्विश्वेभ्यो देवेभ्यो गृह्णाति तेनो ह्यस्यैष पुरोरुक्मान् भवति तस्मादपुरोरुक्कं गृह्णाति ॥१३॥ अथातो गृह्णात्येव । "उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठान"ऽइति प्राणो वै सुशर्मा सुप्रतिष्ठानो "बृहदुक्षाय नम"ऽइति प्रजापतिर्व्वै बृहदुक्षः प्रजापतये नम ऽइत्येवैतदाह "व्विश्वेभ्यस्त्वा देवेभ्य ऽएष ते य्योनिर्व्विश्वेभ्यस्त्वा देवेभ्य"ऽइति सादयति व्विश्वेभ्यो ह्येनं देवेभ्यो गृह्णात्यथेत्य प्राङुपविशति ॥१४॥ स य्यत्रैताꣳ होता शꣳसति । "एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये व्विꣳशती च । तिसृभिश्च व्वहसे त्रिꣳशता च नियुद्भिर्व्वायविह ता व्विमुञ्चे"ति तदेतस्यां व्वायव्यायामृचि पात्राणि व्विमुच्यन्ते व्वायुप्रणेत्रा वै पशवः प्राणो वै व्वायुः प्राणेन हि पशवश्चरन्ति ॥१५॥ स ह देवेभ्यः पशुभिरपचक्राम । तं देवाः प्रातःसवनेऽन्वमन्त्रयन्त स नोपाववर्त्त तं माध्यन्दिने सवनेऽन्वमन्त्रयन्त स ह नैवोपाववर्त्त तं तृतीयसवनेऽन्वमन्त्रयन्त ॥१६॥ स होपावर्त्स्यन्नुवाच । य्यद्धऽउपावर्त्तेय किं मे ततः स्यादिति त्वय्यैवैतानि पात्राणि य्युज्येरंस्त्वया व्विमुच्येरन्निति तदेनेनैतत्पात्राणि य्युज्यन्ते य्यदैन्द्रवायवाग्रान् प्रातःसवने गृह्णात्यथैनेनैतत्पात्राणि व्विमुच्यन्ते यदाह नियुद्भिर्व्वायविह ता व्विमुञ्चेति पशवो वै नियुतस्तत्पशुभिरेवैतत्पात्राणि व्विमुच्यन्ते

१. सामनो इति. च. २—४. मा. सं. ८. ८. ५ मा. सं. २७. ३३.
६. पात्राणि इति. ग. ७. विमुच्यत इति ग.

॥१७॥ स यत्प्रातः सवनऽउपावर्त्स्यत् । गायत्रं वै प्रातः सवनं ब्रह्म गायत्री ब्राह्मणेषु ह पशवोऽभविष्यन्नथ यन्माध्यंदिने सवनऽउपावर्त्स्यदैन्द्रं वै माध्यन्दिनꣳ सवनं क्षत्रमिन्द्रः क्षत्रियेषु ह पशवोऽभविष्यन्नथ यत्तृतीयसवनऽउपावर्त्तत वैश्वदेवं वै तृतीयसवनꣳ सर्वमिदं विश्वेदेवास्तस्मादिमे सर्वत्रैव पशवः ॥१८॥ Cf. का. श. ५. ४. ३; तै. सं. ६. ५. ७; मै. सं. ४. ७. १; कठ. सं. २८. ७; कपि. ४४. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ४. १. )

## ४. ३. ४.

### ( सौम्यश्चरुः, पात्नीवतग्रहश्च )

सौम्येन चरुणा प्रचरति । सोमो वै देवाना ꣳ हविरथैतत्सोमायैव हविष्क्रियते तथातः सोमोऽनन्तर्हितो भवति चरुर्भवति चरुर्वै देवानामन्नमोदनो हि चरुरोदनो हि प्रत्यक्षमन्नं तस्माच्चरुर्भवति ॥१॥ तेन न प्रातःसवने प्रचरति । न माध्यन्दिने सवनऽएते वै देवानां निष्केवल्ये सवने यत्प्रातःसवनं च माध्यन्दिनं च सवनं पितृदेवत्यो वै सोमः ॥२॥ स यत्प्रातः सवने वा प्रचरेत् । माध्यन्दिने वा सवने समदꣳ ह कुर्याद्देवेभ्यश्च पितृभ्यश्च तेन तृतीयसवने प्रचरति वैश्वदेवं वै तृतीयसवनं तथा हासमदं करोति नानुवाक्यामन्वाह सकृदुह्येव पराञ्चः पितरस्तस्मान्नानुवाक्यामन्वाह ॥३॥ अथ चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याह "घृतस्य यजे"ति वषट्कृते जुहोति तद्या ऽअतः प्राच्य ऽआहुतयो हुता भवन्ति ताभ्य ऽएवैतदन्तर्दधाति तथा हासमदं करोति ॥४॥ ( शतम् २६०० ) स ऽआज्यस्योपस्तीर्य । द्विश्चरोरवद्यत्यथोपरिष्टादाज्य-

१. उप त्स्यंदिति च.    २. प्रचरति इति ग.    ३ वैश्वदेवमिति. ग.

स्याभिघारयत्याश्राव्याह "सौम्यस्य यजे"ति वषट्कृते जुहोति ॥५॥ अथापरं चतुर्गृहीतमाज्यं गृहीत्वा। आश्राव्याह "घृतस्य यजे"ति वषट्कृते जुहोति तद्या ऽअत ऽऊर्ध्वा ऽआहुतीर्होष्यन् भवति ताभ्य ऽएवैतदन्तर्दधाति तथा ह्यासमदं करोति स यदि कामयेतोभयतः परियजेद्यद्यु कामयेतान्यतरतः परियजेत् ॥६॥ अथ प्रचरणीति स्रुग्भवति। तस्यां चतुर्गृहीतमाज्यं गृहीत्वाध्वर्युः शालाकैर्धिष्ण्याऽव्याघारयति तद्यच्छालाकैर्धिष्ण्यान्व्याघारयति यद्वैवैनानदो देवा ऽअब्रुवस्तृतीयसवने वो घृत्याहुतिः प्राप्स्यति न सौम्यापहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं नार्हथेति सैनानेषा तृतीयसवन ऽएव घृत्याहुतिः प्राप्नोति न सौम्या यच्छालाकैर्धिष्ण्यान्व्याघारयति तानेतैरेव यजुर्भिर्यथोपकीर्णं यथापूर्वं व्याघारयति मार्जालीय ऽएवोत्तमम् ॥७॥ तद्धैके। आग्नीध्रीये पुनराघारयन्त्युदञ्च ऽइदं कर्मानुसन्तिष्ठाता ऽइति तदु तथा न कुर्यान्मार्जालीय ऽएवोत्तमꣳ ॥८॥ स यत्राध्वर्युः। शालाकैर्धिष्ण्यान्व्याघारयति तत्प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति यज्ञाद्धै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना ऽअन्ततो यज्ञस्य प्रजायन्ते तदेना ऽएतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पात्नीवतं गृह्णाति ॥९॥ तं वा ऽउपाꣳशुपात्रेण गृह्णाति। यदि सावित्रमुपाꣳशुपात्रेण गृह्णीयादन्तर्यामपात्रेणैतं यदि सावित्रमन्तर्यामपात्रेण गृह्णीयादुपाꣳशुपात्रेणैतꣳ समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ प्राणो हि यो वै प्राणः स ऽउदानो वृषा वै प्राणो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥१०॥ तं वा ऽअपुरोरुक्कं गृह्णाति। वीर्यं वै पुरोरुङ्नेत्स्त्रीषु वीर्यं दधानीति तस्मादपुरोरुक्कं गृह्णाति ॥११॥ अथातो गृह्णात्येव

१. सौम्यस्येति. च. २. सवने इति. ग. ३. यजुर्भिरिति. ग.
४. पात्नीवतमिति. ग ५. गृह्णाति इति. ग.

"उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम त"ऽइति ब्रह्म वै बृहस्पतिर्ब्रह्मप्रसूतस्य देव सोम तऽइत्येवैतदाहे"न्दोरिन्द्रियावत"ऽइति व्वीर्यवत ऽइत्येवैतदाह यदाहेन्दोरिन्द्रियावत ऽइति "पत्नीवतो ग्रहाँ२॥ऽऋध्यास"मिति न सम्प्रति पत्नीभ्यो गृह्णाति नेत्स्त्रीषु व्वीर्यं दधानीति तस्मान्न सम्प्रति पत्नीभ्यो गृह्णाति ॥१२॥ अथ य्यः प्रचरण्याँ सᳪस्रवः परिशिष्टो भवति । तेनैनᳪश्रीणाति समर्द्धयति वाऽअन्यान् ग्रहाञ्छ्रीणन्नथैतं व्यर्द्धयति व्वज्रो वाऽआज्यमेतेन वै देवा व्वज्रेणाज्येनाघ्नन्नेव पत्नीर्निराक्ष्णुवंस्ता हता निरष्टा नात्मनश्च नैशत न दायस्य च नैशत तथोऽएवैषऽएतेन व्वज्रेणाज्येन हन्त्येव पत्नीर्निरक्ष्णोति ता हता निरष्टा नात्मनश्च नेशते न दायस्य च नेशते ॥१३॥ स श्रीणाति । "अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताभूत् । अहᳪसूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यदि"ति स यदहमहमिति श्रीणाति पुᳪस्वेवैतद्वीर्यं दधाति ॥१४॥ अथाहाग्नीत्पात्नीवतस्य यजेति । व्वृषा वाऽग्नीद्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते स जुहोत्य"ग्नाँ३ऽइ पत्नीवन्नि"ति व्वृषा वाऽअग्निर्य्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥१५॥ "सजूर्देवेन त्वष्ट्रे"ति । त्वष्टा वै सिक्तᳪरेतो व्विकरोति तदेष ऽएवैतत्सिक्तᳪरेतो व्विकरोति "सोमं पिब स्वाहे"त्युत्तरार्द्धे जुहोति याऽइतराऽआहुतयस्ते देवाऽअथैताः पत्न्यऽएवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाᳪसमुपशेतऽआहरत्यध्वर्युरग्नीधे भक्षᳪस ऽआहा"ध्वर्यऽउप मा ह्वयस्वे"ति तं न प्रत्युपह्वयेत को हि हतस्य निरष्टस्य प्रत्युपह्वयस्तं वै प्रत्येवोपह्वयेत जुह्वत्यस्याग्नौ व्वषट्कुर्वन्ति तस्मात्प्रत्येवोपह्वयेत ॥१६॥ अथ सम्प्रेष्यति । "अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय

---

१-३. मा. सं. ८. ९.    ४. गृह्णाति इति. च.    ५. प्रचरण्यामिति. ग.
६. म. सं. ८. ९.    ७-९. मा. सं. ८. १०.    १०. उपह्वयेत इति. च.
११. सम्प्रेष्यति इति. ग, सम्प्रेष्यति इति. च.

सोमं मातिरीरिच"ऽइति यद्यग्निष्टोमः स्यात् ॥१७॥ यद्युक्थ्यः स्यात्¹। सोमं प्रभावयेति ब्रूयात्स बिभ्रदेवैतत्पात्रमग्नीन्नेष्टुरुपस्थमासीदित्यग्निर्वाऽएष निदानेन यदाग्नीध्रो योषा नेष्टा वृषा वाऽअग्नीद्योषा नेष्टा मिथुनमेवैतत्प्रजननं क्रियतऽउदानयति नेष्टा पत्नीं तामुद्गात्रा संख्यापयति "प्रजापतिर्वृषासि रेतोधा रेतो मयि धेही"ति प्रजापतिर्वाऽउद्गाता योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥१८॥

Cf. का. श. ५. ४. ४; तै. सं. ६. ५. ८; मै. सं. ४. ७. ४; कठ. २८. ८; कपि. ४४. ८

इति माध्यन्दिनीये शतपथब्राह्मणे चतुर्थकाण्डे तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. ४. २. )

## ४. ३. ५.

## ( हारियोजनग्रहः )

पशवो वै देवानां छन्दाᳬसि। तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दाᳬसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र छन्दाᳬसि देवान्त्समतर्पयन्नथ छन्दाᳬसि देवाः समतर्पयंस्तदुतस्तत्प्रागभूद्यच्छन्दाᳬसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समतीतृपन् ॥१॥ अथ हारियोजनं गृह्णाति। छन्दाᳬसि वै हारियोजनश्छन्दाᳬस्येवैतत्सन्तर्पयति तस्माद्धारियोजनं गृह्णाति ॥२॥ तं वाऽअतिरिक्तं गृह्णाति। यदा हि शम्योराहाथैनं गृह्णातीदं वै देवाऽअथ छन्दाᳬस्यतिरिक्तान्यथ मनुष्याऽअथ पशवोऽतिरिक्तास्तस्मादतिरिक्तं गृह्णाति ॥३॥ द्रोणकलशे गृह्णाति। वृत्रो वै सोमऽआसीत्तं यत्र देवाऽअघ्नंस्तस्य मूर्द्धोद्ववर्त्त स द्रोणकलशोऽभवत्तस्मिन्यावान्वा यावान्वा रसः समस्रवदतिरिक्तो वै सऽआसीदतिरिक्तऽएष ग्रहस्तदतिरिक्तऽएवैतदतिरिक्तं दधाति तस्माद्द्रोणकलशे गृह्णाति ॥४॥ तं वाऽअपुरोरुक्कं गृह्णाति। छन्दोभ्यो ह्येनं

---

१. स्यात् इति. ग.

२. मा. सं. ८. १०.

गृह्णाति स यद्देवैनं छन्दोभ्यो गृह्णाति तेनो ह्यस्यैष पुरोरुग्वान् भवति तस्मादपुरोरुक्कं गृह्णाति ॥५॥ अथातो गृह्णात्येव । "उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वे"त्यृक्सामे वै हरी ऽऋक्सामाभ्याᳫं ह्येनं गृह्णाति ॥६॥ अथ धाना ऽआवपति । "हर्योर्धानास्थ सह सोमा ऽइन्द्राये"ति तद्यदेवात्र मितं च छन्दोऽमितं च तदेवैतत्सर्वं भक्षयति ॥७॥ तस्योन्नेताश्रावयति । अतिरिक्तो वाऽउन्नेता न ह्येषोऽन्यस्याश्रावयत्यतिरिक्त ऽएष ग्रहस्तदतिरिक्तऽएवैतदतिरिक्तं दधाति तस्मादुन्नेताश्रावयति ॥८॥ मूर्द्धन्नधिनिधायाश्रावयति । मूर्द्धा ह्यस्यैषोऽथाह "धाना सोमेभ्योऽनुब्रूही"त्याश्राव्याह "धाना सोमान् प्रस्थितान् प्रेष्ये"ति वषट्कृते जुहोत्यनुवषट्कृतेऽथ धाना विलिप्सन्ते भक्षाय ॥९॥ तद्धैके । होत्रे द्रोणकलशं प्रतिपराहरन्ति वषट्कर्त्तुर्भक्ष ऽइति वदन्तस्तदु तथा न कुर्याद्यथाचमसं वाऽअन्ये भक्षाऽअथैषोऽतिरिक्तस्तस्मादेतस्मिन्त्सर्वेषामेव भक्षस्तस्माद्धाना विलिप्सन्ते भक्षाय ॥१०॥ ता न दद्भिः खादेयुः । पशवो वाऽएते नेत्पशून् प्रमृदे करवामहाऽइति प्राणैरेव भक्षयन्ति "यस्तेऽअश्वसनिर्भक्षो यो गोसनि"रिति पशवो ह्येते तस्मादाह यस्तेऽअश्वसनिर्भक्षो यो गोसनिरिति "तस्य तऽइष्टयजुषस्तुतस्तोमस्ये"तीष्टानि हि यजूᳫंषि भवन्ति स्तुता स्तोमाः "शस्तोक्थस्ये"ति शस्तानि ह्युक्थानि भवन्त्यु"पहूतस्योपहूतो भक्षयामी"त्युपहूतस्य ह्येतदुपहूतो भक्षयति ॥११॥ ता नाग्नौ प्रकिरेयुः । नेदुच्छिष्टमग्नौ जुहवामेत्युत्तरवेदावेव निवपन्ति तथा न बहिर्द्धा यज्ञाद्भवन्ति ॥१२॥ अथ पूर्णपात्रान्त्समवमृशन्ति । सोमेकेऽप्सुषोमाऽइत्याचक्षते यथा वै युक्तो वहेदेवमेते यऽआर्त्विज्यं कुर्वन्त्युत वै युक्तः क्षणुते वा वि वा लिशन्ते शान्तिरापो भेषजं तद्यदेवेति क्षणवते वा

---

१. यदेवैनमिति. ग.   २. मा. सं. ८. ११.   ३. गृह्णाति इति. क, ग.
४. मा. सं. ८. ११.   ५. आश्रावयति इति च.   ६-९. मा. सं. ८.१२.
१०. प्रकिरेयुरिति. ग.   ११. भवन्ति इति. ग.

व्वि वा लिशन्ते शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः संदधते तस्मात्पूर्णपात्रान्त्समवमृशन्ति ॥१३॥ ते समवमृशन्ति "सं व्वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳशिवेन । त्वष्टा सुदत्रो व्विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्ट"मिति यद्विवृढं तत्संदधते ॥१४॥ अथ मुखान्युपस्पृशन्ते । द्वयं तद्यस्मान्मुखान्युपस्पृशन्तेऽमृतं वाऽआपोऽमृतेनैवैतत्सꣳ स्पृशन्तऽएतदु चैवैतत्कर्मात्मन् कुर्वते तस्मान्मुखान्युपस्पृशन्ते ॥१५॥ Cf. का. श. ५. ५. १; तै. सं. ६. ५. ९; मै. सं. ४. ७. ४; कठ. सं. २८. ९; कपि. ४४. ९.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ४. ३. )

## ४. ३. ६.

## ( समिष्टयजुर्होमः )

तानि वाऽएतानि । नव समिष्टहजूꣳषि जुहोति तद्यन्नव समिष्टयजूꣳषि जुहोति नव वाऽअमूर्बहिष्पवमाने स्तोत्रिया भवन्ति सैषोभयतो न्यूना व्विराट् प्रजननायैतस्माद्वाऽउभयतो न्यूनात्प्रजननात्प्रजापतिः प्रजाः ससृजऽइतश्चोर्ध्वा ऽइतश्चावाचीस्तथोऽएवैष ऽएतस्मादुभयत ऽएव न्यूनात्प्रजननात्प्रजाः सृजतऽइतश्चोर्ध्वाऽइतश्चावाचीः ॥१॥ हिङ्कारस्तोत्रियाणां दशमः । स्वाहाकारऽएतेषां तथो हास्यैषा न्यूना व्विराड्दशं दशिनी भवति ॥२॥ अथ यस्मात्समिष्टयजूꣳषि नाम । या वाऽएतेन यज्ञेन देवता ह्वयति याभ्य ऽएष यज्ञस्तायते सर्व्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्व्वासु समिष्टास्वथैतानि जुहोति तस्मात्समिष्टयजूꣳषि नाम ॥३॥ अथ यस्मात्समिष्टयजूꣳषि जुहोति । रिरिचानऽइव वाऽएतदीजानस्यात्मा भवति यद्ध्यस्य भवति तस्य हि ददाति तमेवातास्त्रिभिः पुनराप्याययति ॥४॥ अथ यान्युत्तराणि त्रीणि जुहोति । या वाऽएतेन

१. मा. सं. ८. १४.
२. एतानि. इति. ग.

यज्ञेन देवता ह्वयति य्याभ्यऽएष यज्ञस्तायतऽउप ह वै ताऽआसते य्यावन्न समिष्टयजूꣳषि जुह्वतीमानि नु नो जुह्वत्विति ताऽएवैतद्यथा-यथं व्यवसृजति य्यत्र यत्रासां चरणं, तदनु ॥५॥ अथ यान्युत्तमानि त्रीणि जुहोति। यज्ञं वाऽएतदजीजनत य्यदेनमतत तं जनयित्वा य्यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात्समिष्टयजूꣳषि जुहोति ॥६॥ स जुहोति। "सँमिन्द्र णो मनसा नेषि गोभि"रिति मनसेति तन्मनसा रिरिचानमाप्याययति गोभिरिति तद्गोभी रिरिचानमाप्या-ययति "सꣳसूरिभिर्मघवन्त्सꣳ स्वस्त्या। सं ब्रह्मणा देवकृतं यद-स्ती"ति ब्रह्मणेति तद्ब्रह्मणा रिरिचानमाप्याययति "सं देवा-नाꣳ सुमतौ यज्ञियानाꣳ स्वाहा ॥७॥ सं वर्च्चसा। पयसा सं तनूभि"रिति वर्च्चसेति तद्वर्च्चसा रिरिचानमाप्याययति पयसेति रसो वै पयस्तत्पयसा रिरिचानमाप्याययत्य"गन्महि मनसा सꣳ शिवेन। त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्ट"मिति यद्विवृढं तत्सन्दधाति ॥८॥ "धाता रातिः। सवितेदं जुषन्तां प्रजापतिर्निधिपा देवोऽअग्निः। त्वष्टा विष्णुः प्रजया सꣳरराणो य्यजमानाय द्रविणं दधात स्वाहे"ति तद्देव रिरिचानं पुनराप्या-ययति यदाह य्यजमानाय द्रविणं दधात स्वाहेति ॥९॥ "सुगा वो देवाः। सदनाऽअकर्म यऽआजग्मेदꣳ सवनं जुषाणा"ऽइति सुगा-नि वो देवाः सदनान्यकर्म यऽआगन्तेदꣳ सवनं जुषाणाऽइत्येवैत-दाह "भरमाणा वहमाना हवीꣳषी"ति तद्देवता व्यवसृजति भर-माणाऽअहते य्यन्तु ये वाहना वहमानाऽउ ते यन्तु ये वाहन-वन्तऽइत्येवैतदाह तस्मादाह भरमाणा वहमाना हवीꣳष्य"स्मे धत्त वसवो वसूनि स्वाहा" ॥१०॥ "यां२॥ऽआवह। उशतो देव देवांस्तान् प्रेरय स्वेऽअग्ने सधस्थ"ऽइत्यग्निं वाऽआहामून्देवानावहा-

१. आसते इति च. २. तदनु इति. क. ३. यज्ञमिति ग.
४–६. मा. सं. ८. १५. १६. ७, ८. मा. सं. ८. १६. ९. मनसा इति च.
१०. मा. सं. ८. १६. ११–१३. मा. सं. ८. १८. १४. मा. सं. ८. १९.

मुन्देवानावहेति तमेवैतदाह य्यान्देवानावाक्षीस्तान् गमय य्यत्र यत्रै-षां चरणं तदन्विति "जक्षिवाᳬसः पपिवाᳬसश्च व्विश्व"ऽइति जक्षिवाᳬसो हि पशुं पुरोडाशं भवन्ति पपिवाᳬसऽइति पपिवाᳬसो हि सोमᳫं राजानं भवन्ति तस्मादाह जक्षिवाᳬसः पपिवाᳬसश्च व्विश्वेऽ"सुं धर्मᳬस्वरातिष्ठतानु स्वाहे"ति तद्वेव देवता व्यवसृजति ॥११॥ "व्वयᳫंहि त्वा । प्रयति यज्ञेऽअस्मिन्नग्ने होतारमवृणीमहीह । ऋधगयाऽऋधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि व्विद्वान्त्स्वाहे"त्याग्निमेवैतया व्विमुञ्चत्यग्निं व्यवसृजति ॥१२॥ "देवा गातुविद"ऽइति । गातुविदो हि देवा "गातुं व्वित्त्वे"ति यज्ञं व्वित्त्वेत्येवैतदाह "गातुमिते"ति तदेतेन यथायथं व्यवसृजति "मनसस्पतऽइमं देव यज्ञᳫं स्वाहा व्वाते धा"ऽइत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञᳬ सम्भृत्यैतस्मिन्यज्ञं प्रतिष्ठापयति यज्ञेन यज्ञᳫं सन्दधाति तस्मादाह स्वाहा व्वाते धाऽइति ॥१३॥ "य्यज्ञ यज्ञं गच्छ । यज्ञपतिं गच्छ स्वां य्योनिं गच्छ स्वाहे"ति तत्प्रतिष्ठितमेवैतद्यज्ञᳫं सन्तᳬ स्वायां य्योनौ प्रतिष्ठापयत्ये"षते यज्ञो यज्ञपते सह सूक्तवाकः सर्व्ववीरस्तं जुषस्व स्वाहे"ति तत्प्रतिष्ठितमेवैतद्यज्ञᳬ सन्तᳫं सह सूक्तवाकᳬ सर्व्ववीरं यजमानेऽन्ततः प्रतिष्ठापयति ॥१४॥ Cf. ५. ५. २; तै. सं. ६. ६. २; मै. सं. ४. ८. ४; कठ. सं. २९. ३; कपि. ४५. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ (अ.४.४.)

तृतीयः प्रपाठकस्समाप्तः ॥

( काण्डिकासंख्या १२२ )

---

१, २. मा. सं ८. १९.
३. मा. सं. ८. २०.
४-७. मा. सं. ८. २१
८, ९. मा. सं. ८. २२.

४. ४. १.

( अवभृथः )

स वाऽअवभृथमभ्यवैति । तद्यदवभृथमभ्यवैति यो वाऽअस्य रसोऽभूदाहुतिभ्यो वाऽस्य तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति तन्न परास्यं तदपोऽभ्यवहरन्ति रसो वाऽआपस्तदस्मिन्नेतꣳ रसं दधाति तदेनमेतेन रसेन सङ्गमयति तदेनमतो जनयति सऽएनं जातऽएव सन् जनयति तद्यदपोऽभ्यवहरन्ति तस्मादवभृथः ॥१॥ अथ समिष्टयजूꣳषि जुहोति। समिष्टयजूꣳषि ह्येवान्तो यज्ञस्य स हुत्वैव समिष्टयजꣳषि यदेतमभितो भवति तेन चात्वालमुपसमायन्ति स कृष्णविषाणाञ्च मेखलां च चात्वाले प्रास्यति ॥२॥ "माहिर्भूर्मा पृदाकु"रिति । असौ वाऽऋजीषस्य स्वगाकारो यदेनदपोऽभ्यवहरन्त्यथैषऽएवैतस्य स्वगाकारो रज्जुरिव हि सर्पाः कूपाऽइव हि सर्पाणामायतनान्यस्ति वै मनुष्याणां च सर्पाणां च विभ्रातृव्यमिव नेत्तदतः सम्भवदिति तस्मादाह माहिर्भूर्मा पृदाकुरिति ॥३॥ अथ वाचयति । "उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवाऽउऽ"इति यथायमुरुरभयोऽनाष्ट्रः सूर्याय पन्थाऽएवं मेऽयमुरुरभयोऽनाष्ट्रः पन्थाऽअस्त्वित्येवैतदाह ॥४॥ "अपदे पादा प्रतिधातवेऽक"रिति । यदिह वाऽअप्यपाद्भवत्यलमेव प्रतिक्रमणाय भवत्यु"तापवक्ता हृदया विधश्चिदि"ति तदेनꣳ सर्वस्माद्धृद्यादेनसः पाप्मनः प्रमुञ्चति ॥५॥ अथाह साम गायेति । साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिदं बहिर्द्धा यज्ञाच्छरीरं नाष्ट्रा रक्षाꣳसि हिनसन्निति साम हि नाष्ट्राणाꣳ रक्षसामपहन्ता ॥६॥ आग्नेय्यां गायति । अग्निर्हि रक्षसामपहन्तातिच्छन्दसि गायत्येषा वै सर्व्वाणि छन्दाꣳसि यदतिच्छन्दास्तस्मादतिच्छन्दसि गायति ॥७॥ स गायति । "अग्निष्टपति प्रतिदहत्यहावोऽहाव"ऽइति तन्नाष्ट्राऽएवैतद्र-

१-४. मा. ं. ८. २३.          ५. नाष्ट्रा इति. च.

क्षाꣳस्यतोऽपहन्ति ॥८॥ तऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रꣳ स य्यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ॥९॥ स यः स्यन्दमानानाꣳ स्थावरो ह्रदः स्यात् । तमपोऽभ्यवेयादेता वाऽअपां व्वरुणगृहीता याः स्यन्दमानानां न स्यन्दन्ते व्वरुण्यो वाऽअवभृथो निर्व्वरुणतायै य्यद्यु ता न व्विन्देदपि य्याऽएव काश्चापोऽभ्यवेयात् ॥१०॥ तमपोऽवक्रमयन्वाचयति । "नमो व्वरुणायाभिष्ठितो व्वरुणस्य पाश"ऽइति तदेनꣳ सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥११॥ अथ चतुर्गृहीतमाज्यं गृहीत्वा । समिधं प्रास्याभिजुहोत्य"ग्नेरनीकमपऽआविवेशापान्नपात्प्रतिरक्षन्न सुर्यम् । दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्येत्स्वाहे"ति ॥१२॥ अग्नेर्ह वै देवाः । य्यावद्वा यावद्वाप्सु प्रवेशयां चक्रुर्नेदतोऽनाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानित्यग्निर्हि रक्षसामपहन्ता तमेतया च समिधैतया चाहुत्या समिन्द्धे समिद्धे देवेभ्यो जुहवानीति ॥१३॥ अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । आश्राव्याह "समिधो यजे"ति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्व्वरुण्यो वाऽअवभृथो नेत्प्रजा व्वरुणो गृह्णादिति तस्मादपबर्हिषश्चतुरः प्रयाजान्यजति ॥१४॥ अथ व्वारुणऽएककपालः पुरोडाशो भवति । यो वाऽअस्य रसोऽभूदाहुतिभ्यो वाऽअस्य तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति रसो वै पुरोडाशस्तदस्मिन्नेतꣳ रसं दधाति तदेनमेतेन रसेन सङ्गमयति तदेनमतो जनयति सऽएनं जातऽएव सञ्जनयति तस्माद्वारुणऽएककपालः पुरोडाशो भवति ॥१५॥ सऽआज्यस्योपस्तीर्य । पुरोडाशस्यावद्यन्नाह "व्वरुणायानुब्रूही"त्यत्र हैकऽऋजीषस्य द्विरवद्यन्ति तदु तथा न कुर्याच्छरीरं वाऽएतद्भवति नालमाहुत्यै द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदानेऽआश्राव्याह व्वरुणं यजेति व्वषट्कृते जुहोति ॥१६॥ अथाज्यस्योपस्तीर्य । पुरोडाशमवदधदा-

१. निष्क्रामति. इति. ग. २. स्यात् इति. ग. ३. मा. सं. ८. २३.
४. मा, सं. ८. २४. ५. नाष्ट्रा इति. ग. ६. गृहीत्वा इति. ग.

ह्वा "ग्नीवरुणाभ्यामनुब्रूही" ति तत्स्विष्टकृते स य्यन्नाग्नेयऽइत्याह नेदग्निं व्वरुणो गृह्णादिति स य्यद्यमुत्रर्जीषस्य द्विरवद्येदथात्र सकृद्यद्यु न नाद्रियेताथोपरिष्टाद्द्विराज्यस्याभिघारयत्याश्राव्याहा 'ग्नीवरुणौ यजे' ति व्वषट्कृते जुहोति ॥१७॥ ता वाऽएताः । षडाहुतयो भवन्ति षड्वाऽऋतवः संवत्सरस्य संवत्सरो व्वरुणस्तस्मात्षडाहुतयो भवन्ति ॥१८॥ एतदादित्यानामयनम् । आदित्यानीमानि य्यजूᳬंषीति वाऽआहुः स य्यावदस्य व्वशः स्यादेवमेव चिकीर्षेद्यद्युऽएनमितरथा य्यजमानः कुर्त्त्वै ब्रूयादितरथो तर्हि कुर्यादेतानेव चतुरः प्रयाजानपबर्हिषो यजेद्वावाज्यभागौ व्वरुणमग्नीवरुणौ द्वावनुयाजावुपबर्हिषौ तद्दश दशाक्षरा वै व्विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयति ॥१९॥ एतदङ्गिरसामयनम् । अतोऽन्यतरत्कृत्वा य्यस्मिन् कुम्भऽऋजीषं भवति तं प्रप्लावयति "समुद्रे ते हृदयमप्स्वन्त" रित्यापो वै समुद्रो रसो वाऽआपस्तस्मिन्नेतᳬं रसं दधाति तदेनमेतेन रसेन सङ्गमयति तदेनमतो जनयति सऽएनं जातऽएव सञ्जनयति "सं त्वा व्विशन्त्वोषधीरुताप" ऽइति तदस्मिन्नुभयᳪं रसं दधाति यश्चौषधिषु य्यश्चाप्सु "यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके व्विधेम यत्स्वाहे" ति तद्यदेव यज्ञस्य साधु तदेवास्मिन्नेतद्दधाति ॥२०॥ अथानुसृज्योपतिष्ठते । "देवीरापऽएष वो गर्भऽ" इत्यपाᳬं ह्येष गर्भ- "स्तᳬं सुप्रीतᳬं सुभृतं बिभ्रते" ति तदेनमद्भ्यः परिददाति गुप्त्यै "देव सोमैष ते लोक" ऽइत्यापो ह्येतस्य लोक "स्तस्मिञ्छं च व्वक्ष्व परि च व्वक्ष्वे" ति तस्मिन्नः शं चैधि सर्व्वाभ्यश्च नऽआर्त्तिभ्यो गोपायेत्येवैतदाह ॥२१॥ अथोपमारयति । "अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोयासिषमव मर्त्यैर्मर्त्यकृतमि" त्यव ह्येतद्देवैर्देवकृतमेनो ऽयासीत्सोमेन राज्ञाऽवमर्त्यैर्मर्त्यकृतमित्यव ह्येतन्मर्त्यैर्मर्त्यकृतमेनोऽयासीत्पशुना पुरोडाशेन "पुरुराव्णो देव रि-

---

१. यजूᳬंषीत्याहुरिति. ग.    २–४ मा. सं. ८. २५.    ५. यज्ञपते इति. ग
६–९. मा. सं. ८. २६.    १०, ११. मा. सं. ८. २७.

षस्पाहि''ति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह ॥२२॥ अथाभ्य-वेत्य स्नातः । अन्योन्यस्य पृष्ठे प्रधावतस्तावन्ये व्वाससी परिधायो-देतः स यथाहिस्त्वचो निर्मुच्येतैवᳬ सर्वस्मात्पाप्मनो निर्मुच्यते तस्मिन्न तावच्च नैनो भवति य्यावत्कुमारेऽदति स य्येनैव निष्क्रा-मन्ति तेन पुनरायन्ति पुनरेत्याहवनीये समिधमभ्यादधाति ''देवा-नाᳬ समिदसी''ति य्यजमानमेवैतया समिन्द्धे देवानाᳬ हि समि-द्धिमनु य्यजमानः समिध्यते ॥२३॥ cf. का. श. ५. ५. ३; तै. सं. ६. ६. ३; मै. सं. ४. ८. ५; कठ. २९, ३; कपि ४५. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. ४. ५.)

(चतुर्थोऽध्यायस्समाप्तः)

## ४. ४. २.

### (उदयनीयेष्टिः, आनुबन्ध्ययागश्च)

आदित्येन[2] चरुणोदयनीयेन प्रचरति । तद्यदादित्यश्चरुर्भवति य्यदेवैनामदो देवाऽअब्रुवंस्तवैव प्रायणीयस्तवोदनीय ऽइति तमेवा-स्याऽएतदुभयत्र भागं करोति ॥१॥ स य्यदमुत्र राजानं क्रेष्यन्नुप-प्रैष्यन्यजते । तस्मात्तत्प्रायणीयं नामाथ यदत्रावभृथादुदेत्य य्यजते तस्मादेतदुदयनीयं नाम तद्वाऽएतत्समानमेव हविरदित्या ऽएव प्रा-यणीयमदित्याऽउदयनीयमियᳬ ह्येवादितिः ॥२॥ स वै पथ्यामेवाग्रे स्वस्ति यजति । तद्देवा ऽअप्रज्ञायमाने व्वाचैव प्रत्यपद्यन्त व्वाचा[3] हि मुग्धं प्रज्ञायतेऽथात्र प्रज्ञाते य्यथापूर्वं करोति ॥३॥ सोऽग्निमेव प्रथ-मं[4] यजेति । अथ सोममथ सवितारमथ पथ्याᳬ स्वस्तिमथादितिं व्वाग्वै पथ्या स्वस्तिरियमदितिरस्यामेव तद्देवा व्वाचं प्रत्यष्ठापय-

---

१. मा. सं. ८. २७.
२. आदित्येन इति. ग.
३. वाचा इति. ग.
४. प्रथमं इति. ग.

न्त्सेयं व्वागस्यां प्रति[illegible] व्वदंति ॥४॥ अथ मैत्रावरुणीं व्वशामनूबन्ध्यामालभते । [illegible]ऽन्यऽएव यज्ञस्तायते पशुबन्धऽएव समिष्टयजूꣳषि ह्येवान्तो यज्ञस्य ॥५॥ तद्यन्मैत्रावरुणी व्वशा भवति । य्यद्वाऽईजानस्य स्विष्टं भवति मित्रोऽस्य तद्गृह्णाति य्यद्वस्य दुरिष्टं भवति व्वरुणोऽस्य तद्गृह्णाति ॥६॥ तदाहुः । केजानोऽभूदिति तद्यदेवास्यात्र मित्रः स्विष्टं गृह्णाति तदेवास्माऽएतया प्रीतः प्रत्यवसृजति य्यदु चास्य व्वरुणो दुरिष्टं गृह्णाति तच्चैवास्माऽएतया प्रीतः स्विष्टं करोति तदु चास्मै प्रत्यवसृजति सोऽस्यैष स्वऽएव यज्ञो भवति स्वꣳ सुकृतम् ॥७॥ तद्यन्मैत्रावरुणी व्वशा भवति । य्यत्र वै देवा रेतः सिक्तं प्राजनयंस्तदाग्निमारुतमित्युक्थं तस्मिंस्तद्व्याख्यायते य्यथा तद्देवा रेतः प्राजनयंस्ततोऽङ्गाराः समभवन्नङ्गारेभ्योऽङ्गिरसस्तदन्वन्ये पशवः ॥८॥ अथ यद्भासाः पाꣳसवः पर्य्यशिष्यन्त । ततो गर्द्दभः समभवत्तस्माद्यत्र पाꣳसुलं भवति गर्द्दभस्थानमिव बतेत्याहुरथ यदा न कश्चन रसः पर्य्यशिष्यत तत ऽएषा मैत्रावरुणी व्वशा समभवत्तस्मादेषा न प्रजायते रसाद्धि रेतः सम्भवति रेतसः पशवस्तद्यदन्ततः समभवत्तस्मादन्तं यज्ञस्यानुवर्त्तते तस्माद्वाऽएषात्र मैत्रावरुणी व्वशावक्लृप्ततमा भवति य्यदि व्वशां न विन्देदप्युक्षवशऽएव स्यात् ॥९॥ अथैतरं व्विश्वे देवाऽअमरीमृत्स्यन्त । ततो व्वैश्वदेवी समभवदथ बार्हस्पत्या सोऽन्तोऽन्तो हि बृहस्पतिः ॥१०॥ स यः सहस्रं वा भूयो वा दद्यात् । स एनाः सर्वाऽआलभेत सर्व्वं वै तस्याप्तं भवति सर्व्वं जितं यः सहस्रं वा भूयो वा ददाति सर्व्वमेता ऽएवमेव यथापूर्वं मैत्रावरुणीमेवाग्रेऽथ व्वैश्वदेवीमथ बार्हस्पत्याम् ॥११॥ अथो य्ये दीर्घसत्रमासीरन् । संवत्सरं वा भूयो वा तऽएनाः सर्वा ऽआलभेरन्त्सर्वं वै तेषामाप्तं भवति सर्व्वं जितं य्ये दीर्घसत्रमासते संवत्सरं वा भूयो वा सर्व्वमेता ऽएवमेव यथापूर्वम् ॥१२॥ अथोदवसानीय-

---

१. वदंति. इति. ग.　　२. तदाहुरिति. ग.
३. सुकृतं इति. च.　　४. बार्हस्पत्यां इति. च.

षस्पाही''ति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह ॥२२॥ अथाभ्यवेत्य स्नातः । अन्योन्यस्य पृष्ठे प्रधावतस्तावन्ये वाससी परिधायोदेतः स यथाहिस्त्वचो निर्मुच्येतैवᳫं सर्वस्मात्पाप्मनो निर्मुच्यते तस्मिन्न तावच्च नैनो भवति यावत्कुमारेऽदति स येनैव निष्क्रामन्ति तेन पुनरायन्ति पुनरेत्याहवनीये समिधमभ्यादधाति ''देवानाᳫं समिदसी''ति यजमानमेवैतया समिन्द्धे देवानाᳫं हि समिद्धिमनु यजमानः समिध्यते ॥ २३ ॥ cf. का. श. ५. ५. ३; तै. सं. ६. ६. ३; मै. सं. ४. ८. ५; कठ. २९, ३; कपि ४५. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ४. ५. )

( चतुर्थोऽध्यायस्समाप्तः )

४. ४. २.

( उदयनीयेष्टिः, आनुबन्ध्ययागश्च )

आदित्येन[2] चरुणोदयनीयेन प्रचरति । तद्यदादित्यश्चरुर्भवति यदेवैनामदो देवाऽअब्रुवंस्तवैव प्रायणीयस्तवोदनीय ऽइति तमेवास्याऽएतदुभयत्र भागं करोति ॥१॥ स यदमुत्र राजानं क्रेष्यन्नुपप्रैष्यन्यजते । तस्मात्तत्प्रायणीयं नामाथ यदत्रावभृथादुदेत्य यजते तस्मादेतदुदयनीयं नाम तद्वाऽएतत्समानमेव हविरदित्या ऽएव प्रायणीयमदित्याऽउदयनीयमियᳫं ह्येवादितिः ॥२॥ स वै पथ्यामेवाग्रे स्वस्तिं यजति । तद्देवा ऽअप्रज्ञायमाने वाचैव प्रत्यपद्यन्त वाचा[3] हि मुग्धं प्रज्ञायतेऽथात्र प्रज्ञाते यथापूर्वं करोति ॥३॥ सोऽग्निमेव प्रथमं[4] यजेति । अथ सोममथ सवितारमथ पथ्याᳫं स्वस्तिमथादितिं वाग्वै पथ्या स्वस्तिरियमदितिरस्यामेव तद्देवा वाचं प्रत्यष्ठापय-

---

१. मा. सं. ८. २७.
२. आदित्येन इति. ग.
३. वाचा इति. ग.
४. प्रथमं इति. ग.

न्त्सेयं व्वागस्यां प्रतिष्ठिता व्वदंति[1] ॥४॥ अथ मैत्रावरुणीं व्वशामनूबन्ध्यामालभते । सऽएषोऽन्यऽएव यज्ञस्तायते पशुबन्धऽएव समिष्टयजूᳪंषि ह्येवान्तो यज्ञस्य ॥५॥ तद्यन्मैत्रावरुणी व्वशा भवति । य्यद्वाऽईजानस्य स्विष्टं भवति मित्रोऽस्य तद्गृह्णाति य्यद्धस्य दुरिष्टं भवति व्वरुणोऽस्य तद्गृह्णाति ॥६॥ तदाहुः[2] । केज्ञानोऽभूदिति तद्यदेवास्यात्र मित्रः स्विष्टं गृह्णाति तदेवास्माऽएतया प्रीतः प्रत्यवसृजति य्यदु चास्य व्वरुणो दुरिष्टं गृह्णाति तच्चैवास्माऽएतया प्रीतः स्विष्टं करोति तदु चास्मै प्रत्यवसृजति सोऽस्यैष स्वऽएव यज्ञो भवति स्वᳪं सुकृतम्[3] ॥७॥ तद्यन्मैत्रावरुणी व्वशा भवति । य्यत्र वै देवा रेतः सिक्तं प्राजनयंस्तदाग्निमारुतमित्युक्थं तस्मिंस्तद्व्याख्यायते य्यथा तद्देवा रेतः प्राजनयंस्ततोऽङ्गाराः समभवन्नङ्गारेभ्योऽङ्गिरसस्तदन्वन्ये पशवः ॥८॥ अथ यद्भासाः पांशुंसवः पर्यशिष्यन्त । ततो गर्द्दभः समभवत्तस्माद्यत्र पांशुलं भवति गर्द्दभस्थानमिव बतेत्याहुरथ यदा न कश्चन रसः पर्यशिष्यत तत ऽएषा मैत्रावरुणी व्वशा समभवत्तस्मादेषा न प्रजायते रसाद्धि रेतः सम्भवति रेतसः पशवस्तद्यदन्ततः समभवत्तस्मादन्तं यज्ञस्यानुवर्त्तते तस्माद्वाऽएषात्र मैत्रावरुणी व्वशावक्लृप्ततमा भवति य्यदि व्वशां न विन्देदप्युक्षवशाऽएव स्यात् ॥९॥ अथेतरं व्विश्वे देवाऽअमरीमृत्स्यन्त । ततो व्वैश्वदेवी समभवदथ बार्हस्पत्या सोऽन्तोऽन्तो हि बृहस्पतिः ॥१०॥ स यः सहस्रं वा भूयो वा दद्यात् । स एनाः सर्वाऽआलभेत सर्व्वं वै तस्याप्तं भवति सर्व्वं जितं यः सहस्रं वा भूयो वा ददाति सर्व्वमेताऽएवमेव यथापूर्वं मैत्रावरुणीमेवाग्रेऽथ व्वैश्वदेवीमथ बार्हस्पत्याम्[4] ॥११॥ अथो य्ये दीर्घसत्रमासीरन् । संवत्सरं वा भूयो वा तऽएनाः सर्वाऽआलभेरन्त्सर्वं वै तेषामाप्तं भवति सर्व्वं जितं य्ये दीर्घसत्त्रमासते संवत्सरं वा भूयो वा सर्व्वमेताऽएवमेव यथापूर्वम् ॥१२॥ अथोदवसानीय-

---

१. वदति. इति. ग.　　२. तदाहुरिति. ग.

३. सुकृतं इति. च.　　४. बार्हस्पत्यां इति. च.

येष्ट्या यजते । सऽआग्नेयं पञ्चकपालं पुरोडाशं निर्व्वपति तस्य पञ्चपदाः पंक्तयो[1] याज्यानुवाक्या भवन्ति यातयामेव वाऽएतदीजानस्य यज्ञो भवति सो ऽस्मात्पराङिव भवत्यग्निर्व्वै सर्व्वे यज्ञाऽअग्नौ हि सर्व्वान्यज्ञांस्तन्वते ये च पाकयज्ञा ये चेतरे तद्यज्ञमेवैतत्पुनरारभते तथास्यायातयामा यज्ञो भवति तथोऽअस्मान्न पराङ् भवति ॥१३॥ तद्यत्पञ्चकपालः पुरोडाशो भवति । पञ्चपदाः[2] पङ्क्तयो याज्यानुवाक्याः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतत्पुनरारभते तथास्यायातयामा यज्ञो भवति तथोऽअस्मान्न पराङ् भवति ॥१४॥ तस्य हिरण्यं दक्षिणा । आग्नेयो वाऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणाऽनड्वान्वा स हि व्वहेनाग्नेयोऽग्निदग्धमिव ह्यस्य व्वहं भवति[3] ॥१५॥ अथो चतुर्गृहीतमेवाज्यं गृहीत्वा । व्वैष्णव्यर्चा जुहोत्युरु[4] व्विष्णो व्विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहे"ति यज्ञो वै व्विष्णुस्तद्यज्ञमेवैतत्पुनरारभते तथास्यायातयामा यज्ञो भवति तथोऽअस्मान्न पराङ् भवति तन्नो व्युच्छक्नुयात्तद्द्यान्नादक्षिणᳪ हविः स्यादिति ह्याहुरथ यदेवैषोदवसानीयेष्टिः संतिष्ठतेऽथ सायमाहुतिं जुहोति कालऽएव प्रातराहुतिम् ॥१६॥ Cf का. श. ५. ५. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ. ५. १.)

४. ४. ३.

( आनुबन्ध्यः )

व्वशामालभन्ते । तामालभ्य संज्ञपयन्ति संज्ञप्याह व्वपामुत्खिदेत्युत्खिद्य व्वपामनुमर्शं गर्भमेष्टवै ब्रूयात्स यदि न विन्दन्ति किमाद्रियेरन्यद्यु व्विन्दन्ति तत्र प्रायश्चित्तिः क्रियते ॥१॥ न वै तदवकल्पते । यदेकां मन्यमाना ऽएकयेवैतया चरेयुर्यद्वे मन्यमाना द्वाभ्यामिव चरे-

१. पंक्तय इति. ग. २. पञ्चपदा इति. च. ३. भवति. इति. ग. ४. मा. सं. ५.३८.

युः स्थालीं चैवोष्णीषं चोपकल्पयितवै ब्रूयात् ॥२॥ अथ व्वपया चरन्ति । य्यथैव तस्यै चरणं व्वपया चरित्वाऽध्वर्युश्च य्यजमानश्च पुनरेतः सऽआहाध्वर्युर्न्निरूहैतं गर्भमिति तᳬ हुतोदरतो निरूहेदार्त्ताया वै मृतायाऽउदरतो निरूहन्ति यदा वै गर्भः समृद्धो भवति प्रजननेन वै स तर्हिं प्रत्यङ्ङेति तमपि व्विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् ॥३॥ तं निरुह्यमाणमभिमन्त्रयते । "एजतु दशमास्यो गर्भो जरायुणा सहे"ति स यदाहैजत्विति प्राणमेवास्मिन्नेतद्दधाति दशमास्यऽइति यदा वै गर्भः समृद्धो भवत्यथ दशमास्यस्तमेतदप्यदशमास्यᳬ सन्तं ब्रह्मणैव य्यजुषा दशमास्यं करोति ॥४॥ जरायुणा सहेति । तद्यथा दशमास्यो जरायुणा सहेयादेवमेतदाह "य्यथायं व्वायुरेजति य्यथा समुद्रऽएजती"ति प्राणमेवास्मिन्नेतद्दधात्ये"वायं दशमास्योऽअस्रज्जरायुणा सहे"ति तद्यथा दशमास्यो जरायुणा सहस्रᳬ सेतैवमेतदाह ॥५॥ तदाहुः । कथमेतं गर्भं कुर्यादित्यङ्गादङ्गाद्धैवास्यावद्येयुर्यथैवेतरेषामवदानानामवदानं तदु तथा न कुर्यादुत ह्येषोऽविकृताङ्गो भवत्यधस्तादेव ग्रीवाऽअपिकृत्यैतस्याᳬस्थाल्यामेतं मेधᳬ श्चोतयेयुः सर्व्वेभ्यो वाऽअस्यैषोऽङ्गेभ्यो मेधश्चोतति तदस्य सर्व्वेषामेवाङ्गानामवत्तं भवत्यवद्यन्ति व्वशायाऽअवदानानि य्यथैव तेषामवदानम् ॥६॥ तानि पशुश्रपणे श्रपयन्ति । तदेवैतं मेधᳬ श्रपयन्त्युष्णीषेणावेष्ट्य गर्भं पार्श्वतः पशुश्रपणस्योपनिदधाति यदा श्रतो भवत्यथ समुद्यावदानान्येवाभिजुहोति नैतं मेधमुद्वासयन्ति पशुं तदेवैतं मेधमुद्वासयन्ति ॥७॥ तं जघनेन चात्वालमन्तरेण य्यूपं चाग्निं च हरन्ति । दक्षिणतो निधाय प्रतिप्रस्थातावद्यत्यथ स्रुचोरुपस्तृणीतेऽथ मनोतायै हविषोऽनुवाचऽआहावद्यन्ति व्वशायाऽअवदानानां य्यथैव तेषामवदानम् ॥८॥ अथ प्रचरणीति स्रुग्भवति । तस्यां प्रतिप्रस्थाता मेधायोपस्तृणीते द्विरवद्यति सकृदभिघारयति

---

१-३. मा. सं. ८. २८.     ४. पार्श्वत इति. ग.     ५. हरन्ति. इति. ग.

प्रत्यनक्त्यवदानेऽअथानुवाच ऽआहाश्राव्याह प्रेष्येति व्वषट्कृतेऽध्वर्युर्ज्जुहोत्यध्वर्य्योरनुहोमं जुहोति प्रतिप्रस्थाता ॥९॥ "यस्यै ते यज्ञियो गर्भ" ऽइति । अयज्ञिया वै गर्भास्तमेतद्ब्रह्मणैव य्यजुषा यज्ञियं करोति "य्यस्यै य्योनिर्हिरण्ययी"त्यदो वाऽएतस्यै य्योनिं व्विच्छिन्दन्ति य्यददो निष्कर्षन्त्यमृतमायुर्हिरण्यं तामेवास्याऽएतदमृतां य्योनिं करो"त्यङ्गान्यह्रुता य्यस्य तं मात्रा समजीगमछं स्वाहे"ति य्यदि पुमान्त्स्याद्यद्यु स्त्री स्यादङ्गान्यह्रुता य्यस्यै तां मात्रा समजीगमॅं स्वाहेति य्यद्युऽअविज्ञातो गर्भो भवति पुंॅस्कृत्यैव जुहुयात्पुमाॅं सो हि गर्भोऽअङ्गान्यह्रुता य्यस्य तं मात्रा समजीगमछं स्वाहेत्यदो वाऽएतं मात्रा व्विष्वञ्चं कुर्व्वन्ति यददो निष्कर्षन्ति तमेतद्ब्रह्मणैव य्यजुषा समर्ध्य मध्यतो यज्ञस्य पुनर्मात्रा सङ्गमयति ॥१०॥ अथाध्वर्युर्व्वनस्पतिना चरति। व्वनस्पतिनाध्वर्युश्चरित्वा य्यान्युपभृत्यवदानानि भवन्ति तानि समानयमानऽआहाग्नये स्विष्टकृतेऽनुब्रूहीत्यत्याक्रमति प्रतिप्रस्थाता सऽएतछं सर्व्वमेव मेधं गृह्णीतेऽथोपरिष्टाद्द्विराज्यस्याभिघारयत्याश्राव्याह प्रेष्येति व्वषट्कृतेऽध्वर्युर्ज्जुहोत्यध्वर्य्योरनुहोमं जुहोति प्रतिप्रस्थाता ॥११॥ "पुरुदस्मो व्विषुरूपऽइन्दु"रिति बहुदानऽइति हैतद्यदाह पुरुदस्म ऽइति व्विषुरूप ऽइति व्विषुरूपा ऽइव हि गर्भा "ऽइन्दुरन्तर्महिमानमानञ्ज धीर"इत्यन्तर्ह्येष मातर्यक्तो भवत्ये"कपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानुप्रथन्ताछं स्वाहे"ति प्रथयत्येवैनामेतत्सुभूयो ह जयत्यष्टापद्येष्ट्वा य्यदु चानष्टापद्या ॥१२॥ तदाहुः । क्वैतं गर्भं कुर्यादिति व्वृक्षऽएवैनमुद्दध्युरन्तरिक्षायतना वै गर्भा ऽअन्तरिक्षमिवैतद्यद्वृक्षस्तदेनॅं स्वऽएवायतने प्रतिष्ठापयति तदु वा ऽआहुर्य्य ऽएनं तत्रानुव्याहरेद्वृक्ष ऽएनं मृतमुद्धास्यन्तीति तथा हैव स्यात् ॥१३॥ अप ऽएवैनमभ्यवहरेयुः ।

१. प्रतिप्रस्थाता. इति. ग. २-४. मा. सं. ८. २९. ५. पुंस्कृत्यैव इति. च.
६. जुहोति इति. ग. ७-९. मा. सं. ८. ३०.

आपो वाऽ अस्य सर्व्वस्य प्रतिष्ठा तदेनमप्स्वेव प्रतिष्ठापयति तदु-वा ऽआहुर्यऽएनं तत्रानुव्याहरेदप्स्वेव मरिष्यतीति तथा हैव स्यात् ॥१४॥ आखूत्करऽएवैनमुपकिरेयुः । इयं वा ऽअस्य सर्व्वस्य प्रतिष्ठा तदेनमस्यामेव प्रतिष्ठापयति तदु वा ऽआहुर्य ऽएनं तत्रानु-व्याहरेत्क्षिप्रे ऽस्मै मृताय श्मशानं करिष्यन्तीति तथा हैव स्यात् ॥१५॥ पशुश्रपणऽएवैनं मरुद्भ्यो जुहुयात् । अहुतादो वै देवानां मरुतो व्विडहुतमिवैतद्यदश्रृतो गर्भ ऽआहवनीयाद्वा ऽएष ऽआहृतो-भवति पशुश्रपणस्तथाह न बहिर्द्धा यज्ञाद्भवति न प्रत्यक्षमिवाहव-नीये देवानां वै मरुतस्तदेनं मरुत्स्वेव प्रतिष्ठापयति ॥१६॥ स हुत्वैव समिष्टयजूँषि । प्रथमावशान्तेष्वङ्गारेष्वेतꣳसोष्णीषं गर्भमादत्ते तं प्राङ् तिष्ठञ्जुहोति मारुत्यर्चा "मरुतो यस्य हि क्षये पाथा दिवो व्विमहसः । स सुगोपातमो जन" ऽइति न स्वाहाकरोत्यहुता-दो वै देवानां मरुतो व्विडहुतमिवैतद्यदस्वाहाकृतं देवानां वै मरुत-स्तदेनं मरुत्स्वेव प्रतिष्ठापयति ॥१७॥ अथाङ्गारैरभिसमूहति । "मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरी-माभि"रिति ॥१८॥ ( शतम् २७०० ) Cf. का. श. ५. ६. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ.५.२.)

## ४. ४. ४.

### ( षोडशिग्रहः )

इन्द्रो ह वै षोडशी । तं नु सकृदिन्द्रं भूतान्यत्यरिच्यन्त प्रजा वै भूतानि ता हैनेन सदृग्भवमिवासुः ॥१॥ इन्द्रो ह वाऽईक्षांचक्रे । कथं न्वहमिदꣳ सर्व्वमतितिष्ठेयमर्व्वागेव मदिदꣳ सर्व्वꣳ स्यादिति सऽएतं ग्रहमपश्यत्तमगृह्णीत सऽइदꣳ सर्वमेवात्यतिष्ठदर्वागेवास्मादिदꣳ सर्व्वमभवत्सर्व्वꣳ ह वाऽइदमतितिष्ठत्यर्व्वागेवा-

१. मा. सं. ८. ३१.  २. मा. सं. ८. ३२.  ३. षोडशी इति च.

स्मादिदꣳसर्व्वं भवति य्यस्यैवं व्विदुष एतं ग्रहं गृह्णन्ति ॥२॥ तस्मा-देतदृषिणाभ्यनूक्तम् । "न ते महित्वमनुभूदध द्यौर्यदन्यया स्फिग्या क्षामवस्था"ऽइति न ह वाऽअस्यासौ द्यौरन्यतरां चन स्फिगीम-नुबभूव तथेदꣳसर्व्वमेवात्यतिष्ठदर्व्वागेवास्मादिदꣳ सर्वमभवत्सर्व्वꣳ ह वाऽइदमतितिष्ठत्यर्व्वागेवास्मादिदꣳ सर्व्वं भवति य्यस्यैवं व्विदुष ऽएतं ग्रहं गृह्णन्ति ॥३॥ तं वै हरिवत्यर्च्चा गृह्णाति । हरिवतीषु स्तुवते हरिवतीरनुशꣳसति व्वीर्यं वै हरऽइन्द्रोऽसुराणाꣳ सप-त्नानाꣳ समवृङ्क्त तथोऽएवैषऽएतद्वीर्यꣳ हरः सपत्नानाꣳ संवृङ्क्ते तस्माद्धरिवत्यर्च्चा गृह्णाति हरिवतीषु स्तुवते हरिवतीरनुशꣳसति ॥४॥ तं वाऽअनुष्टुभा गृह्णाति । गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्य-न्दिनꣳ सवनं जागतं तृतीयसवनमथातिरिक्तानुष्टुबत्येवैनमेतद्रे-चयति तस्मादनुष्टुभा गृह्णाति ॥५॥ तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वाऽइमे लोकास्तदिमानेव लोकांस्तिसृभिः स्रक्तिभि-राप्नोत्यत्येवैनं चतुर्थ्या स्रक्त्या रेचयति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥ ६ ॥

( अर्द्धप्रपाठकः ६३ )

तं वै प्रातःसवने गृह्णीयात् । आग्रयणं गृहीत्वा स प्रातः सवने गृहीतऽएतस्मात्कालादुपशेते तदेनꣳ सर्व्वाणि सवना-न्यतिरेचयति ॥७॥ माध्यन्दिने वैनꣳ सवने गृह्णीयात् । आग्र-यणं गृहीत्वा सोऽएषा मीमाꣳसैव प्रातःसवनऽएवैनं गृह्णीयादा-ग्रयणं गृहीत्वा स प्रातःसवने ग्रहीतऽएतस्मात्कालादुपशेते ॥८॥ अथातो गृह्णात्येव । "आतिष्ठ व्वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्व्वाचीनꣳसु ते मनो ग्रावा कृणोतु व्वग्नुना । उपयामगृहीतोऽ-ऽसीन्द्राय त्वा षोडशिनऽएष ते य्योनिरिन्द्राय त्वा षोडशिन"ऽ

१. एतं इति. ग २. गृह्णाति. इति. ग ३. गृह्णाति इति. ग.
४. गृहीत्वा इति. च. ५. मा. सं. ८. ३३.

इति ॥९॥ अनया वा। "युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा। अथा नऽइन्द्र सोमपा गिरामुपश्रुतिं चर। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा षोडशिन"ऽइति ॥१०॥ अथेत्य स्तोत्रमुपाकरोति। 'सोमोऽत्यरेत्युपावर्त्तध्व'मित्यत्येवैनमेतद्रेचयति तं वै पुरास्तमयादुपाकरोत्यस्तमितेऽनुशंसति तदेनेनाहोरात्रे सन्दधाति तस्मात्पुरास्तमयादुपाकरोत्यस्तमितेऽनुशंसति ॥११॥ Cf. का. श. ५.६.१; तं.सं.६.६.११; मै.सं. ४.७.६.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. ५. ३. )

## ४. ४. ५.

## ( अतिग्राह्याः ग्रहाः )

सर्वे ह वै देवाः। अग्रे सदृशाऽआसुः सर्व्वे पुण्यास्तेषाᳬं सर्व्वेषाᳬं सदृशानाᳬं सर्व्वेषां पुण्यानां त्रयोऽकामयन्तातिष्ठावानः स्यामेत्यग्निरिन्द्रः सूर्यः ॥१॥ तेऽर्च्चन्तः श्राम्यन्तश्चेरुः। तऽएतानतिग्राह्यान्ददृशुस्तानत्यगृह्णत तद्यदेनानत्यगृह्णत तस्मादतिग्राह्या नाम तेऽतिष्ठावानोऽभवन्यथैतऽएतदतिष्ठेवातिष्ठेव ह वै भवति यस्यैवं विदुषऽएतान् ग्रहान् गृह्णन्ति ॥२॥ नो ह वाऽइदमग्रेऽग्नौ वर्च्चऽआस। यदिदमस्मिन्वर्च्चः सोऽकामयतेदं मयि वर्च्चः स्यादिति सऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतद्वर्च्चऽआस ॥३॥ नो ह वाऽइदमग्रऽइन्द्रऽओजऽआस। यदिदमस्मिन्नोजः सोऽकामयतेदं मय्योजः स्यादिति सऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतदोजऽआस ॥४॥ नो ह वाऽइदमग्रे सूर्ये भ्राजऽआस। यदिदमस्मिन् भ्राजः सोऽकामयतेदं मयि भ्राजः स्यादिति सऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतद्भ्राजऽआसैतानि ह वै तेजाᳬंस्येता-

१. मा. सं. ८. ३४.
२. कक्ष्यप्रा इति ग.
३. देवा इति. च.
४. चेरुः इति. ग.

नि व्वीर्याण्यात्मन् धत्ते य्यस्यैवं व्विदुषऽएतान् ग्रहान् गृह्णन्ति ॥५॥ तान्वै प्रातःसवने गृह्णीयात्। आग्रयणं गृहीत्वाऽऽत्मा वाऽआग्रयणो बहु वाऽइदमात्मनऽएकैकमतिरिक्तं क्लोमहृदयं त्वद्यत्त्वत् ॥६॥ माध्यन्दिने वैनान्त्सवने गृह्णीयात्। उक्थ्यं गृहीत्वोपाकारिष्यन्वा पूतभृतोऽयᳪं ह वाऽअस्यैषोऽनिरुक्तऽआत्मा य्यदुक्थ्यः सोऽएषा मीमाᳪं सैव प्रातः सवनऽएवैनान् गृह्णीयादाग्रयणं गृहीत्वा[1] ॥७॥ ते माहेन्द्रस्यैवानु होमᳪं हूयन्ते[2]। एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो य्यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यᳪं शस्त्रमिन्द्रो वै य्यजमानो य्यजमानस्य वाऽएते कामाय गृह्यन्ते तस्मान्माहेन्द्रस्यैवानु होमᳪंहूयन्ते ॥८॥ अथातो गृह्णात्येव। "[3]अग्ने पवस्व स्वपा ऽअस्मे व्वर्च्चः सुवीर्य्यम्। दधद्रयिं मयि पोषम्। उपयामगृहीतोऽस्यग्नये त्वा व्वर्च्चसऽएष ते योनिरग्नये त्वा व्वर्च्चसे" ॥९॥ "[4]उत्तिष्ठन्नोजसा। सह पीत्वा शिप्रेऽअवेपयः। सोममिन्द्रं चमू सुतम्। उपयामगृहीतोऽसीन्द्राय त्वौजसऽएष ते य्योनिरिन्द्राय त्वौजसे" ॥१०॥ "[5]अदृश्रमस्य केतवः। व्विरश्मयो जनां २॥ऽअनु। भ्राजन्तो ऽअग्नयो यथाऽउपयामगृहीतोसि सूर्य्याय त्वा भ्राजायैष ते य्योनिः सूर्य्याय त्वा भ्राजाये"ति ॥११॥ तेषां भक्षः। "[6]अग्ने व्वर्च्चस्विन्वर्च्चस्वांस्त्वं देवेष्वसि व्वर्च्चस्वानहं मनुष्येषु भूयासमिन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठोऽहं मनुष्येषु भूयासᳪंसूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वासि भ्राजिष्ठो ऽहं मनुष्येषु भूयास"मित्येतानि ह वै भ्राजाᳪंस्येतानि व्वीर्याण्यात्मन्धत्ते य्यस्यैवं व्विदुष ऽएतान् ग्रहान् गृह्णन्ति ॥१२॥ तान्वै पृष्ठ्ये षडहे गृह्णीयात्। पूर्वे त्र्यहे ऽआग्नेयमेव प्रथमेऽहन्नैन्द्रं द्वितीये सौर्यं तृतीय ऽएवमेवान्वहम्[7] ॥१३॥ तानु हैकऽउत्तरे त्र्यहे गृह्णन्ति। तदु तथा न कुर्यात्पूर्वे

१. गृहीत्वा इति. ग.
२. हूयन्ते इति. ग.
३. मा. सं. ८. ३८.
४. मा. सं. ८. ३९.
५. मा. सं. ८. ४०.
६. मा. सं. ८. ३८—४०.
७. अन्वहं इति. ग.

ऽएवैनांस्त्र्यहे गृह्णीयाद्यद्युत्तरे त्र्यहे ग्रहीष्यन्त्स्यात्पूर्वे ऽएवैनांस्त्र्यहे गृहीत्वाथोत्तरे त्र्यहे गृह्णीयादेवमेव यथापूर्वं विश्वजिति सर्वपृष्ठ ऽएकाह[1]ऽएव गृह्यन्ते ॥१४॥ Cf का. श.५. ६. २; तै. सं. ६. ८; मै. सं. ४. ७. ३; कपिष्ठ. ४६. २, ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ५. ४. )

## ४. ४. ६.

एष वै प्रजापतिः । यऽएष यज्ञस्तायते यस्मादिमाः प्रजाः[2] प्रजाताऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते ॥१॥ उपांशुपात्रमेवान्वजाः प्रजायन्ते । तद्धैतत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते[3] ॥२॥ अन्तर्यामपात्रमेवान्ववयः प्रजायन्ते[4] । तद्धै तत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते॥३॥ अथ यदेतयोरुभयोः । सह सतोरुपांशुं पूर्वं जुहोति तस्मादु सह सतो ऽजाविकस्योभयस्यैवाजाः पूर्वा यन्त्यनूच्यो ऽवयः ॥४॥ अथ यदुपांशुं हुत्वा । ऊर्ध्वमुन्मार्ष्टि तस्मादिमा ऽअजा ऽअराडीतरा ऽआक्रममाणाऽइव यन्ति ॥५॥ अथ यदन्तर्यामं हुत्वा । अवाञ्चमवमार्ष्टि तस्मादिमा ऽअवयो ऽवाचीनशीर्ष्ण्यः खनन्त्यऽइव यन्त्येता वै प्रजापतेः प्रत्यक्षतमां यदजावयस्तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति ॥६॥ शुक्रपात्रमेवानु मनुष्याः प्रजायन्ते । तद्धै तत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ऽएष वै शुक्रो य एष तपत्येष ऽउ ऽएवेन्द्रः पुरुषो वै पशूनामैन्द्रस्तस्मात्पशूनामीष्टे ॥७॥ ऋतुपात्रमेवान्वेकशफं प्रजायते ।

---

१. एकाह इति. ग.  
२. प्रजा इति. च.  
३. प्रजायन्ते इति. च.  
४. प्रजायन्ते इति. च.

तद्वै तत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्त ऽइतीव वाऽऋतुपात्रमितीवैकशफस्य शिर ऽआग्रयणपात्रमुक्थ्यपात्रमादित्यपात्रमेतान्येवानु गावः प्रजायन्ते तानि वै तानि पुनर्यज्ञे प्रयुज्यन्ते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥८॥ अथ व्युदजाः । कनिष्ठानि पात्राण्यनु प्रजायन्ते तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्त्यः कनिष्ठाः कनिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥९॥ अथ यद्गावः । भूयिष्ठानि पात्राण्यनु प्रजायन्ते तस्मादेताः सकृत्संवत्सरस्य विजायमाना ऽएकैकं जनयन्त्यो भूयिष्ठा भूयिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥१०॥ अथ द्रोणकलशे । अन्ततो हारियोजनं ग्रहं गृह्णाति प्रजापतिर्वै द्रोणकलशः स ऽइमाः प्रजा ऽउपावर्त्तते ता ऽअवति ता ऽअभिजिघ्रत्येतद्वा ऽएना अवति व्यदेनाः प्रजनयति ॥११॥ पञ्च ह त्वेव तानि पात्राणि । यानीमाः प्रजा ऽअनु प्रजायन्ते समानमुपाꣳश्वन्तर्यामयोः शुक्रपात्रमृतुपात्रमाग्रयणपात्रमुक्थ्यपात्रं पञ्च वा ऽऋतवः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञो व्यद्यु षडेवर्त्तवः संवत्सरस्येत्यादित्यपात्रमेवैतेषाꣳ षष्ठम् ॥१२॥ एकꣳह त्वेव तत्पात्रम् । यदिमाः प्रजा ऽअनु प्रजायन्तऽउपाꣳशुपात्रमेव प्राणो ह्युपाꣳशुः प्राणो हि प्रजापतिः प्रजापतिꣳ ह्येवेदꣳ सर्वमनु ॥१३॥ Cf. का. श. ५. ६. ६; तै. सं. ६.५.११.

इति माध्यन्दिनीये शतपथब्राह्मणे चतुर्थकाण्डे चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. ५. ५. )

४. ४. ७.

( ग्रहावेक्षणम् )

एष वै प्रजापतिः । यऽएष यज्ञस्तायते व्यस्मादिमाः प्रजाः प्रजाता ऽएतस्वेवाप्येतर्ह्यनु प्रजायन्ते स ऽआश्विनं ग्रहं गृहीत्वावकाशा-

१–३. प्रजायन्ते इति च.

नवकाशयति ॥१॥ स ऽउपाꣳशुमेव प्रथममवकाशयाति । "प्राणाय मे व्वर्चोदा व्वर्चसे पवस्वे"त्यथोपाꣳशुसवनं "व्यानाय मे व्वर्चोदा व्वर्चसे पवस्वे"त्यथान्तर्याम"मुदानाय मे व्वर्चोदा व्वर्चसे पवस्वे"त्यथैन्द्रवायवं "व्वाचे मे व्वर्चोदा व्वर्चसे पवस्वे"त्यथ मैत्रावरुणं "क्रतूदक्षाभ्यां मे व्वर्चोदा व्वर्चसे पवस्वे"त्यथाश्विनꣳ"श्रोत्राय मे व्वर्चोदा व्वर्चसे पवस्वे"त्यथ शुक्रामन्थिनौ "चक्षुर्भ्यां मे व्वर्चोदसौ व्वर्चसे पवेथा"मिति ॥२॥ अथाग्रयणम् । "आत्मने मे व्वर्चोदा व्वर्चसे पवस्वे"त्यथोक्थ्य"मोजसे मे व्वर्चोदा व्वर्चसे पवस्वे"त्यथ ध्रुवमा"युषे मे व्वर्चोदा व्वर्चसे पवस्वे"त्यथाम्भृणौ "व्विश्वाभ्यो मे प्रजाभ्यो व्वर्चोदसौ व्वर्चसे पवेथा"मिति व्वैश्वदेवौ वाऽअम्भृणावतो हि देवेभ्य ऽउन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यस्तस्माद्वैश्वदेवावम्भृणौ ॥३॥ अथ द्रोणकलशम् । "कोऽसि कतमोऽसी"ति प्रजापतिर्वै कः "कस्यासि को नामासी"ति प्रजापतिर्वै को नाम "यस्य ते नामामन्महो"ति मनुते ह्यस्य नाम "यं त्वा सोमेनातीतृपामे"ति तर्पयति ह्येनꣳसोमेन स ऽआश्विनं ग्रहं गृहीत्वान्वङ्गमाशिषमाशास्ते "सुप्रजाः प्रजाभिः स्या"मिति तत्प्रजामाशास्ते "सुवीरो व्वीरै"रिति तद्वीरानाशास्ते "सुपोषः पोषै"रिति तत्पुष्टिमाशास्ते ॥४॥ तान्वै न सर्वमिवावकाशयेत् । यो न्वेव ज्ञातस्तमवकाशयेद्यो वास्य प्रियः स्याद्यो वानूचानोऽनूक्तेनैनान् प्राप्नुयात्स ऽआश्विनं ग्रहं गृहीत्वा कृत्स्नं यज्ञं जनयति तं कृत्स्नं यज्ञं जनयित्वा तमात्मन्धत्ते तमात्मन् कुरुते ॥५॥ Cf. का. श. ५. ६. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ ( अ. ५. ६. )

---

१. "प्राणाय म" इत्यारभ्य "सुपोषः पोषैः" इत्यन्ता ग्रहावेक्षणमन्त्राः मा. संहितायां ( २७–२९. ) कण्डिकास्वाम्नाताः । तत्र द्रष्टव्याः । तैत्तिरीयसंहितायामिमे मन्त्रा एतेषां विधयश्च तृतीयकाण्डे द्वितीयप्रपाठके तृतीयेऽनुवाके आम्नाताः ।

४. ४. ८.

( सोमप्रायश्चित्तानि )

ता वाऽएताः। चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्रायश्चित्तयो नामैष वै प्रजापतिर्यऽएष यज्ञस्तायते य्यस्मादिमाः प्रजाः प्रजाताऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते ॥१॥ अष्टौ व्वसवः। एकादश रुद्रा द्वादशादित्या इमेऽएव द्यावापृथिवी त्रयस्त्रिꣳश्यौ त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशस्तदेनं प्रजापतिं करोत्येतद्वा ऽअस्त्येतद्ध्यमृतं यद्ध्यमृतं तद्ध्यस्त्येतदु तद्यन्मर्त्यꣳ स एष प्रजापतिः सर्वं वै प्रजापतिस्तदेनं प्रजापतिं करोति तस्मादेताश्चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्रायश्चित्तयो नाम ॥२॥ ता हैके। यज्ञं तन्वऽइत्याचक्षते यज्ञस्य ह्येवैतानि सर्वाणि सऽएष यज्ञस्तायमानऽएताऽएव देवता भवन्नेति ॥३॥ सा य्यदि घर्मदुघा ह्वलेत्। अन्यामुपसंक्रामेयुः स य्यस्यामेवैनां व्वेलायां पुरा पिन्वयन्ति तद्धैवैनामुदीचीꣳ स्थापयेदग्रेण वा शालां प्राचीम् ॥४॥ तद्येऽएते ऽअभितः। पुच्छकाण्डꣳशिखण्डास्थेऽउच्छ्रयाते तयोर्यद्दक्षिणं तस्मिन्नेताश्चतुस्त्रिꣳशतमाज्याहुतीर्ज्जुहोत्येतावान्वै सर्व्वो यज्ञो य्यावत्यऽएताश्चतुस्त्रिꣳशद्व्याहृतयो भवन्ति तदस्यां कृत्स्नमेव सर्वं यज्ञं दधात्येषा ह्यतो घर्मं पिन्वतऽएषो तत्र प्रायश्चित्तिः क्रियते ॥५॥ अथ य्यद्यज्ञस्य ह्वलेत्। तत्समन्वीक्ष्य जुहुयाद्दीक्षोपसत्स्वाहवनीये प्रसुतऽआग्नीध्रे व्विवाऽएतद्यज्ञस्य पर्व स्रꣳसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्भिषज्यति तया संदधाति ॥६॥ अथ यदि स्कन्देत्। तदद्भिरुपनिनयेदद्भिर्वाऽइदꣳसर्वमाप्तꣳ सर्वस्यैवाप्त्यै व्वैष्णव व्वारुण्यर्चा यद्वाऽइदं किं चार्च्छति व्वरुणऽएवेदꣳ सर्वमार्पयति य्ययोरोजसा स्कभिता रजाꣳसि व्वीर्येभिर्वीरतमा शविष्ठा। या पत्येतेऽअप्रतीता सहोभिर्विष्णूऽअगन्वरुणा पूर्वहूताविति यज्ञो वै व्विष्णुस्तस्यैतदार्च्छे-

ति व्वरुणो वाऽआर्पयिता तद्यस्याश्चैवैतद्देवतायाऽआवृश्चति यो च देवतापूर्यति ताभ्यामेवैतदुभाभ्यां भिषज्यत्युभाभ्याᳫं सन्दधाति ॥७॥ अथोऽअभ्येव मृशेत् । "देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु पितॄन् पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्टु यं कुं च लोकमगन्यज्ञस्ततो मे भद्रमभूदि"त्येवैतदाह ॥८॥ तद्धस्मै तदारुणिराह । किᳫं स यजेत यो यज्ञस्य व्यृद्धया पापीयान्मन्येत यज्ञस्य वाऽअहं व्यृद्ध्या श्रेयान् भवामीत्येतद्ध स्म स तदभ्याह यदेताऽआशिषऽउपगच्छति ॥९॥ Cf. का. श. ५. ७. ४

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे

चतुर्थप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ( अ. ५. ७. )

## ४. ४. ९.

## ( सहस्रदक्षिणा )

तद्यत्रैतत्त्रिरात्रे सहस्रं ददाति । तदेषा साहस्रीक्रियते स प्रथमेऽहंस्त्रीणि च शतानि नयति त्रयस्त्रिᳫंशतं चैवमेव द्वितीयेऽहंस्त्रीणि चैव शतानि नयति त्रयस्त्रिᳫंशतं चैवमेव[2] तृतीयेऽहंस्त्रीणि चैव शतानि नयति त्रयस्त्रिᳫंशतं चाथैषा साहस्र्यतिरिच्यते ॥१॥ सा वै त्रिरूपा स्यादित्याहुः एतद्ध्यस्यै रूपतममिवेति रोहिणी ह त्वेवोपध्वस्ता स्यादेतद्धैवास्यै रूपतममिव ॥२॥ सा स्यादप्रवीता । व्वाग्वाऽएषा निदानेन यत्साहस्र्ययातयाम्नी व्वाऽइयं व्वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात् ॥३॥ तां प्रथमेऽहन्नयेत् । व्वाग्वाऽएषा निदानेन यत्साहस्री तस्याऽएतत्सहस्रं व्वाचः प्रजातं पूर्वा हैषेति पश्चादेनां प्रजातमन्वेत्युत्तमेवैनामहन्नयेत्पूर्वमहास्यै प्रजातमेति पश्चादेषान्वेति सोऽएषा मीमाᳫंसैवोत्तमऽएवैनामहन्नयेत्पूर्वमहास्यै प्रजातमेति पश्चादेषान्वेति ॥४॥ तामुत्तरेण हविर्द्धाने ।

---

१. मा. सं. ८. ६०.　　२. चैवमेव. इति. ग.

दक्षिणेनाग्नीध्रं द्रोणकलशमवघ्रापयति यज्ञो वै द्रोणकलशो यज्ञमेवै-नामेतद्दर्शयति ॥५॥ "आजिघ्रकलशम् । मह्या त्वा विशन्त्विन्दव" ऽइति रिरिचानऽ इव वाऽएष भवति यः सहस्रं ददाति तमेवैतद्रि-रिचानं पुनराप्यायति यदाहाजिघ्रकलशं मह्या त्वा विशन्त्विन्दव ऽइति ॥६॥ "पुनरूर्जा निवर्त्तस्वे"ति । तद्वेव रिरिचानं पुनराप्याय-यति यदाह पुनरूर्ज्जा निवर्त्तस्वेति ॥७॥ "सा नः सहस्रं धुक्ष्वे"ति तत्सहस्रेण रिरिचानं पुनराप्याययति यदाह सा नः सहस्रं धुक्ष्वेति ॥८॥ "उरुधारा पयस्वती पुनर्माविशताद्रयि"रिति । तद्वेव रिरिचानं पुनराप्ययति यदाह पुनर्माविशताद्रयिरिति ॥९॥ अथ दक्षिणे कर्ण्णऽआजपति । "इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिति सरस्व-ति महि विश्रुति । एता तेऽअघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूता" दिति व्वोचेरिति वैतानि हवाऽअस्यै देवत्रा नामानि सा यानि ते देवत्रा नामानि तैर्मा देवेभ्यः सुकृतं ब्रूतादित्येवैतदाह ॥१०॥ तामु-वार्ज्जन्ति । सा यद्यपुरुषाभिवीता प्राचीयात्तत्र विद्यादुरात्सीदयं य्यजमानः कल्याणं लोकमजैषीदिति यद्युदीचीयाच्छ्रेयानस्मिंल्लोके य्यजमानो भविष्यतीति विद्याद्यदि प्रतीचीयाद्धिस्यतिल्विलऽइव धान्यतिल्विलो भविष्यतीति विद्याद्यदि दक्षिणेयात्क्षिप्रेऽस्माल्लोका-द्यजमानः प्रैष्यतीति विद्यादेतानि विज्ञानानि ॥११॥ तद्वा ऽएता-स्तिस्रस्तिस्रस्त्रिंशत्यधि भवन्ति । तास्वेतामुपसमाकुर्वन्ति वि वाऽएतां विराजं व्वृहन्ति यां व्याकुर्वन्ति विच्छिन्नोऽएषा विराड्या विवृढा दशाक्षरा वै विराट्तत्कृत्स्नां विराजं सन्दधाति तां होत्रे दद्याद्धोता हि साहस्रस्तस्मात्तां होत्रे दद्यात् ॥१२॥ द्वौ वोन्नेतारौ कुर्वीत । तयोर्यतरो नाश्रावयेत्तस्माऽएनां दद्याद्व्यृद्धो वाऽएष ऽउन्नेता य ऽऋत्विक्सन्नाश्रावयति व्यृद्धोऽएषा विराड्या विवृढो तद्व्यृद्ध ऽएवैतद्व्यृद्धं दधाति ॥१३॥ तदाहुः । न सहस्रेऽ-

१. दर्शयति इति. ग.
२–५. मा. सं. ८. ४२.
६. मा. सं. ८. ४३.
७. तदाहुरिति. च.

धि किंचन दद्यात्सहस्रेण ह्येव सर्वान् कामानाप्नोतीति तदु होवाचासुरिः काममेव दद्यात्सहस्रेणाह सर्वान् कामानाप्नोति कामेनोऽस्येतद्दत्तं भवतीति ॥१४॥ अथ यदि रथं वा युक्तं दास्यन्त्स्यात्। यद्वा वशायै वा वपायाᳬं हुतायां दद्यादुदवसानीयायां वेष्टौ ॥१५॥ स वै दक्षिणा नयन्। अन्यूना दशतो नयेद्यस्माऽएकां दास्यन्त्स्याद्दशभ्यस्तेभ्यो दशतमुपावर्त्तयेद्यस्मै द्वे दास्यन्त्स्यात्पञ्चभ्यस्तेभ्यो दशतमुपावर्त्तयेद्यस्मै तिस्रो दास्यन्त्स्यात्तिसृभ्यस्तेभ्यो दशतमुपावर्त्तयेद्यस्मै पञ्च दास्यन्त्स्याद्द्वाभ्यां ताभ्यां दशतमुपावर्त्तयेदेवमा शतात्तथो हास्यैषा यूना विराडमुष्मिंल्लोके कामदुघा भवति ॥१६॥ Cf. का. श. ५. ६. ५; तै. सं. ७. १. ५–७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
चतुर्थप्रपाठके नवमं ब्राह्मणम् ॥ (अ. ५. ८.)

चतुर्थः प्रपाठकस्समाप्तः ॥

(कण्डिकासंख्या १२५ ॥)

## ४. ५. १.

## ( व्यूढद्वादशाहधर्माः )

तद्यत्रैतद्द्वादशाहेन व्यूढच्छन्दसा यजते। तद्ग्रहान्व्यूहति व्यूहतऽउद्गाता च होता च छन्दाᳬंसि सऽएष प्रज्ञातऽएव पूर्वस्त्र्यहो भवति समूढच्छन्दास्तदैन्द्रवायवाग्रान् गृह्णाति ॥१॥ अथ चतुर्थेऽहन् व्यूहति। ग्रहान्व्यूहन्ति छन्दाᳬंसि तदाग्रयणाग्रान् गृह्णाति प्राजापत्यं वाऽएतच्चतुर्थमहर्भवत्यात्मा वाऽआग्रयणऽआत्मा वै प्रजापतिस्तस्मादाग्रयणाग्रान् गृह्णाति ॥२॥ तं गृहीत्वा न सादयति। प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्तऽएवोपासते-

---

१. भवतीति इति. च.
२. गृह्णाति. इति. ग.
३. आग्रयाण इति. ग.
४. गृह्णाति. इति. ग.

ऽथ ग्रहान् गृह्णात्यथ यदा ग्रहान् गृह्णात्यथ यत्रैवैतस्य कालस्तदेनꣳ हिंकृत्य सादयत्यथैतत्प्रज्ञातमेव पञ्चममहर्भवति तदैन्द्रवायवाग्रान् गृह्णाति ॥३॥ अथ षष्ठेऽहन्व्यूहति । ग्रहान्व्यूहन्ति छन्दाꣳसि तच्छुक्राग्रान् गृह्णात्यैन्द्रं वाऽएतत्षष्ठमहर्भवत्येष वै शुक्रो य्य ऽएष तपत्येष ऽउऽएवैन्द्रस्तस्माच्छुक्राग्रान् गृह्णाति ॥४॥ तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान् मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान् गृह्णात्यथ यदा ग्रहान् गृह्णात्यथ यत्रैवैतस्य कालस्तदेनꣳ सादयति ॥५॥ अथ सप्तमेऽहन्व्यूहति । ग्रहान्व्यूहन्ति छन्दाꣳसि तच्छुक्राग्रान् गृह्णाति बार्हतं वाऽएतत्सप्तममहर्भवत्येष वै शुक्रो य्यऽएष तपत्येष ऽउऽएव बृहंस्तस्माच्छुक्राग्रान् गृह्णाति॥६॥ तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान् गृह्णात्यथ यदा ग्रहान् गृह्णात्यथ यत्रैवैतस्य कालस्तदेनꣳ सादयत्यथैतत्प्रज्ञातमेवाष्टममहर्भवति तदैन्द्रवायवाग्रान् गृह्णाति॥७॥ अथ नवमेऽहन्व्यूहति । ग्रहान्व्यूहन्ति छन्दाꣳसि तदाग्रयणाग्रान् गृह्णाति जागतं वाऽएतन्नवममहर्भवत्यात्मा वाऽआग्रयणः सर्वं वाऽइदमात्मा जगत्तस्मादाग्रयणाग्रान् गृह्णाति ॥८॥ तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान् गृह्णात्यथ यदा ग्रहान् गृह्णात्यथ यत्रैवैतस्य कालस्तदेनꣳ हिंकृत्य सादयति ॥९॥ तदाहुः । न व्यूहेद्ग्रहान् प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यद्व्यूहेत्तस्मान्न व्यूहेत् ॥१०॥ तदु व्यूहेदेव अङ्गानि वै ग्रहाः कामं वाऽइमान्यङ्गानि व्यत्यासꣳ शेते तस्मादु व्यूहेदेव ॥११॥ तदु नैव व्यूहेत् । प्राणा वै ग्रहा नेत्प्राणान् मोहयानीति मोहयेद्ध प्राणान्यद्व्यूहेत्तस्मान्न व्यूहेत् ॥१२॥ किं नु तत्राध्वर्योः । य्यदुद्गाता च होता च छन्दाꣳसि व्यूहत ऽएतद्वाऽअध्वर्युर्व्यूहति ग्रहा-

---

१. सादयति इति. ग.

न्यदैन्द्रवायवाग्रान् प्रातःसवने गृह्णाति शुक्राग्रान्माध्यन्दिने सवनऽआग्रयणाग्रांस्तृतीयसवने ॥१३॥ Cf. का. श. ५. ६. ६.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
पञ्चमप्रपाठके प्रथमं ब्राह्मणम् । (अ. ५. ९.)

४. ५. २.

( सोमापहरणादौ विधिः )

यदि सोममपहरेयुः । विधावतेच्छतेति ब्रूयात्स यदि विन्दन्ति किमाद्रियेरन्यद्यु न विन्दति तत्र प्रायश्चित्तिः क्रियते[1] ॥१॥ द्वयानि वै फाल्गुनानि । लोहितपुष्पाणि चारुणपुष्पाणि च स यान्यरुणपुष्पाणि फाल्गुनानि तान्यभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि तस्मादरुणपुष्पाण्यभिषुणुयात् ॥२॥ यद्यरुणपुष्पाणि न विन्देयुः । श्येनहृतमभिषुणुयाद्यत्र वै गायत्री सोममच्छापतत्तस्याऽआहरन्त्यै सोमस्यांशुरपतत्तच्छ्येनहृतमभवत्तस्माच्छ्येनहृतमभिषुणुयात् ॥३॥ यदि श्येनहृतं न विन्देयुः । आदारानभिषुणयाद्यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य यो रसो व्यप्रुष्यत्ततऽआदाराः समभवंस्तस्मादादारानभिषुणुयात् ॥४॥ यद्यादारान्न विन्देयुः । अरुणदूर्वाऽअभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणदूर्वास्तस्मादरुणदूर्वा ऽअभिषुणुयात् ॥५॥ यद्यरुणदूर्वा न विन्देयुः । अपि यानेव कांश्च हरितान् कुशानभिषुणुयात्तत्राप्येकामेव गां दद्याद्थावभृथादेवोदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति नु सोमापहृतानाम् ॥६॥ अथ कलशदिराम् । यदि कलशो दीर्येतानुलिप्सध्वमिति ब्रूयात्स यद्यनुलभेरन् प्रस्तुतमात्रं वाञ्जलिमात्रं वा तदन्यैरेकधनैरभ्युन्नीय यथाप्रभावं प्रचरेयुर्यद्यु नानु-

१. गृह्णाति इति. ग. २. सवने इति. ग. ३. विन्दति इति. ग.
४. फाल्गुनानि इति. ग. ५. वै इति. ग. ६,७. अभिषुणुयादिति. च.
८. दद्यादथ इति. ग.

लभेरन्नाग्रयणस्यैव प्रस्कन्द्यान्यैरेकधनैरेभ्युन्नीय यथाप्रभावं प्रचरेयुः स यद्युन्नीतासु दक्षिणासु कलशो दीर्येत तत्राप्येकामेव गां दद्याद्यथावभृथोदेवोदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति नु कलशदिराम् ॥७॥ अथ सोमातिरिक्तानाम् । यद्यग्निष्टोममतिरिच्येत पूतभृतऽएवोक्थ्यं गृह्णीयाद्यद्युक्थ्यमतिरिच्येत षोडशिनमुपेयुर्यदि षोडशिनमतिरिच्येत रात्रिमुपेयुर्यदि रात्रिमतिरिच्येताहरुपेयुर्नेत्त्वेवातीरेकोऽस्ति ॥८॥

• इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ.५.१०.)

( पञ्चमोऽध्यायस्समाप्तः )

४. ५. ३.

( अंशुग्रहः )

प्रजापतिर्व्वाऽएष यदंꣳशुः सोऽस्यैषऽआत्मैवात्मा ह्ययं प्रजापतिस्तदस्यैतमात्मानं कुर्वन्ति यत्रैतं गृह्णन्ति तस्मिन्नेतान् प्राणान्दधाति यथा सथैते प्राणा ग्रहा व्याख्यायन्ते स ह सर्वतनूरेव यजमानोऽमुष्मिंल्लोके सम्भवति ॥१॥ तदारम्भणवत् । यत्रैतं गृह्णन्त्यथैतदनारम्भणमिव यत्रैतं न गृह्णन्ति तस्माद्वाऽअꣳशुं गृह्णाति ॥२॥ तं वाऽऔदुम्बरेण पात्रेण गृह्णाति । प्रजापतिर्व्वाऽएष प्राजापत्यऽउदुम्बरस्तस्मादौदुम्बरेण पात्रेण गृह्णाति ॥३॥ तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयोऽवाऽइमे लोकास्तदिमानेव लोकांस्तिसृभिराप्नोति प्रजापतिर्व्वाऽअतीमांल्लोकांश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याप्नोति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥४॥ स वै तूष्णीमेव ग्रावाणमादत्ते । तूष्णीमꣳशून्निवपति तूष्णीमपऽउपसृजति तूष्णीमुद्यत्य सकृदभिषुणोति तूष्णीमेनमनवानञ्जुहोति तदेनं प्रजा-

१. अभ्युन्नीय इति. च. २. गृह्णन्ति. इति. ग. ३. चतुर्थ्या. इति. च.

पतिं करोति ॥५॥ अथास्याᳬहिरण्यं बद्धं भवति। तदुपजिघ्रति स य्यदेवात्र क्षणुते वा व्वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥६॥ तदु होवाच रामऽऔपतस्विनिः। काममेव प्राण्यात्काममुदन्याद्यद्धै तूष्णीं जुहोति तदेवैनं प्रजापतिं करोतीति ॥७॥ अथास्याँ हिरण्यं बद्धं भवति। तदुपजिघ्रति स य्यदेवात्र क्षणुते वा व्वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥८॥ तदु होवाच बुडिलऽआश्वतराश्विः। उद्यत्यैव गृह्णीयान्नाभिषुणुयादभिषुण्वन्ति वाऽअन्याभ्यो देवताभ्यस्तदन्यथा ततः करोति यथो चान्याभ्यो देवताभ्योऽथ य्यदुद्यच्छति तदेवास्याभिषुतं भवतीति ॥९॥ तदु होवाच य्याज्ञवल्क्यः। अभ्येव षुणुयान्न ऽसोम ऽइन्द्रमसुतो ममाद नाब्रह्माणो मघवानँ सुतास ऽइत्यृषिणाभ्यनूक्तं न वाऽअन्यस्यै कस्यै चन देवतायै सकृदभिषुणोति तदन्यथा ततः करोति य्यथो चान्याभ्यो देवताभ्यस्तस्मादभ्येव षुणुयादिति ॥१०॥ तस्य द्वादश प्रथमगर्भाः। पष्ठौह्यो दक्षिणा द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिरᳬशुस्तदेनं प्रजापतिं करोति ॥११॥ ( शतम् २८०० ) तासां द्वादश गर्भाः। ताश्चतुर्व्विँशतिश्चतुर्व्विँशतिर्व्वै संवत्सरस्यार्द्धमासाः संवत्सरः प्रजापतिरᳬशुस्तदेनं प्रजापतिं करोति ॥१२॥ तदु ह कौकूस्तः। चतुर्व्विᳬशतिमेवैताः प्रथमगर्भाः पष्ठौहीर्द्दक्षिणा ददावृषभं पञ्चविँशᳬ हिरण्यमेतदु ह स ददौ ॥१३॥ स वाऽएष न सर्व्वस्येव ग्रहीतव्यः[1]। आत्मा ह्यस्यैष य्यो न्वेव ज्ञातस्तस्य ग्रहीतव्यो य्यो वास्य प्रियः स्याद्यो वानूचानोऽनूक्तेनैनं प्राप्नुयात् ॥१४॥ सहस्रे ग्रहीतव्यः। सर्व्वं वै सहस्रँ सर्व्वमेष सर्व्ववेदसे ग्रहीतव्यः सर्वं वै सर्व्ववेदसँ सर्व्वमेष व्विश्वजिति सर्वपृष्ठे ग्रहीतव्यः[2] सर्वं वै व्विश्वजित्सर्वपृष्ठः सर्व्वमेष व्वाजपेये राजसूये ग्रहीतव्यः सर्वᳬहि तत्सत्रे ग्रही-

---

१. याज्ञवल्क्य इति. ग.　　२. ग्रहीतव्य इति. ग.

तव्यः सर्व्वं वै सत्रꣳ सर्वमेष ऽएतानि ग्रहणानि ॥१५॥ Cf. का. श. ५. ८. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ६. १. )

४. ५. ४.

एतं वाऽएते गच्छन्ति । षड्भिर्मासैर्य्यऽएष तपति य्ये संवत्सरमासते तदुच्यतऽएव सामतो य्यथैतस्य रूपं क्रियतऽउच्यतऽऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो य्यदेतं गृह्णन्त्येतेनोऽएवैनं गच्छन्ति ॥१॥ अथातो गृह्णात्येव[1] । "उदु त्यं[2] जातवेदसं देवं व्वहन्ति केतवः । दृशे व्विश्वाय सूर्यम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते य्योनिः सूर्याय त्वा भ्राजाये"ति ॥२॥ Cf. का. श. ५. ७. ३.

इति माध्यन्दिनशाखीये शतदथब्राह्मणे चतुर्थकाण्डे
पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ६. २.)

४. ५. ५.
( पश्वयनस्तोमायने )

अथातः पश्वयनस्यैव । पश्वेकादशिन्यैवेयात्सऽआग्नेयं प्रथमं पशुमालभतेऽथ व्वारुणमथ पुनराग्नेयमेवमेवैतया पश्वेकादशिन्येयात् ॥१॥ अथोऽअप्यैन्द्राग्नमेवाहरहः पशुमालभेत । अग्निर्व्वै सर्व्वा देवताऽअग्नौ हि सर्व्वाभ्यो देवताभ्यो जुह्वती[3]न्द्रो वै यज्ञस्य देवता तत्सर्वाश्चैवैतद्देवता नापराध्नोति यो च यज्ञस्य देवता तां नापराध्नोति ॥२॥ अथातस्स्तोमायनस्यैव । आग्नेयमग्निष्टोमऽआलभेत तद्धि सलोम य्यदाग्नेयमग्निष्टोमऽआलभेत य्यद्युक्थ्यः स्यादैन्द्रा-

१. गृह्णात्येव इति. ग.   २. मा. सं. ८. ४१.   ३ जुह्वति इति. ग.

ग्नं द्वितीयमालभेतैन्द्राग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषा रात्रिस्तद्यथायथं यज्ञक्रतून्व्यावर्त्तयत्येतानि त्रीण्ययनानि तेषां यतमत्कामयेत तेनेयाद्द्वाऽउपालम्भ्यौ पशू सौर्य्यं द्वितीयं पशुमालभते वैषुवतेऽहन् प्राजापत्यं महाव्रते ॥३॥ Cf. का. श. ५. ७. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ६. ३. )

४. ५. ६.

( महाव्रतीयः )

अथो महाव्रतीयस्यैव । प्रजापतेर्ह वै प्रजाः ससृजानस्य पर्वाणि विसस्रꣳसुः स विस्रस्तैः पर्वभिर्न शशाक सꣳहातुं ततो देवाऽअर्च्चन्तः श्राम्यन्तश्चेरुस्तऽएतं महाव्रतीयं ददृशुस्तमस्माऽअगृह्णंस्तेनास्य पर्वाणि समदधुः ॥१॥ स सꣳहितैः पर्वभिः । इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यं यद्वै मनुष्याणामशनं तद्देवानां व्रतं महद्वाऽइदं व्रतमभूद्येनायꣳसमहास्तेति तस्मान्महाव्रतीयो नाम ॥२॥ एवं वाऽएते भवन्ति । ये संवत्सरमासते यथैव तत्प्रजापतिः प्रजाः ससृजान ऽआसीत्स यथैव तत्प्रजापतिः संवत्सरेऽन्नाद्यमभ्युदतिष्ठदेवमेवैतऽएतत्संवत्सरेऽन्नाद्यमभ्युत्तिष्ठन्ति येषामेवं विदुषामेतं ग्रहं गृह्णन्ति ॥३॥ तं वाऽइन्द्रायैव विमृधे गृह्णीयात् । सर्वा वै तेषां मृधो हता भवन्ति सर्वं जितं ये संवत्सरमासते तस्माद्विमृधे "वि[1] न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः[2] । योऽअस्माँ २॥ऽअभिदासत्यधरं गमया तमः । उपयामगृहीतोऽसीन्द्राय त्वा विमृधऽएष ते योनि-

१. मा. सं. ८. ४४.
२. पृतन्यतः इति. ग.

रिन्द्राय त्वा विमृध''ऽइति ॥४॥ अथो विश्वकर्म्मणे । विश्वं वै तेषां कर्म्म कृतꣳसर्व्वं जितं भवति ये संवत्सरमासते तस्माद्विश्वकर्म्मणे "वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजेऽअद्या हुवेम। स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्म्मा । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्म्मणऽएष ते योनिरिन्द्राय त्वा विश्वकर्मण''ऽइति ॥५॥ यद्युऽऐन्द्रीं वैश्वकर्मणीं विद्यात् । तयैव गृह्णीया"द्विश्वकर्मन् हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मणऽएष ते योनिरिन्द्राय त्वा विश्वकर्मण ऽइति ॥६॥ Cf. का. श. ५. ७. ४.

इति माध्यन्दिनीये शतपथब्राह्मणे चतुर्थकाण्डे पञ्चप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. ६. ४. )

४. ५. ७.

एष वै ग्रहः । यऽएष तपति येनेमाः सर्व्वाः प्रजा गृहीतास्तस्मादाहुर्ग्रहान्गृह्णीम ऽइति चरन्ति ग्रहगृहीताः सन्तऽइति ॥१॥ वागेव ग्रहः । वाचा हीदꣳ सर्व्वं गृहीतं किमु तद्यद्वाग्ग्रहः ॥२॥ नामैव ग्रहः। नाम्ना हीदꣳसर्व्वं गृहीतं किमु तद्यन्नाम ग्रहो बहूनां वै नामानि विद्माथ नस्तेन ते न गृहीता भवन्ति ॥३॥ अन्नमेव ग्रहः[3] । अन्नेन[4] हीदꣳसर्वं गृहीतं तस्माद्यावन्तो नोऽशनमश्नन्ति ते नः सर्वे गृहीता भवन्त्येषैव स्थितिः ॥४॥ स यऽएष सोमग्रहः । अन्नं वाऽएष स यस्यै देवतायाऽएतं ग्रहं गृह्णाति सास्मै देवतैतेन ग्रहेण गृहीता तं कामꣳ समर्द्धयति यत्काम्या गृह्णाति सऽउद्यन्तं वादित्यमुपतिष्ठतेऽस्तं यन्तं वा ग्रहोऽस्यमुमनयार्त्या गृहाणासावदोमा

१. मा. सं. ८. ४५.
२. मा. सं. ८. ४. ६.
३. ग्रहः इति. ग.
४. अन्नेन इति. च.

श्रीः

# निवेदनम्

अथेदानीं माध्यन्दिनशाखीयशतपथब्राह्मणस्य द्वितीयो भागः पञ्चमादिसप्तमकाण्डान्तः काण्डत्रयात्मकः सम्पाद्योपस्थाप्यते। १९९९ तमे वैक्रमेऽब्दे पण्डितप्रवरैरस्मदाचार्यचरणैः महामहोपाध्याय-शास्त्ररत्नाकर-पं. अ० चिन्नस्वामिशास्त्रिमहाभागैः तदन्तेवासिभिः मीमांसान्यायकेसरीत्यादिनैकविधोपाधिमाबिभ्रद्भिः पं. पट्टाभिरामशास्त्रिमहोदयैश्च पाठान्तरादिभिः सम्परिष्कृत्य भागेऽस्मिन् सप्तमकाण्डस्य कियन्तोऽप्यध्यायाःसम्पादिताः। परं तदानींतनेनातर्कितोपनतेन महता विश्वयुद्धेन तत्काण्डं समाप्तिं नेयाय। तदनु च वेदवेद्यस्य श्रीमदन्नपूर्णाजानेः कृपयाऽधीतिनां दिष्टेन च कथमपि लब्धसाधनश्चौखम्बामुद्रणालयाध्यक्षो भागमिमं पाठकमहोदयानां पुरस्तात्समुपस्थापयितुकामस्तानेव पण्डितमूर्धन्यानभ्यर्थयामासाग्रेऽपि संशोधनकर्मणि। ते हि बहुकार्यव्याकुला मां न्ययूयुजन्नस्मिन्संशोधनकर्मणि। आज्ञा गुरूणामविलङ्घनीयेति मन्यमानोऽहं तैस्सादरं निर्दिष्टया दिशा यथामति समशोधयम्॥

( अत्र प्रतिपाद्या विषयाः तेषां प्रथमभागेन सम्बन्धश्च )

प्रथमभागो हि दर्शपूर्णमासाग्न्याधेयाग्निहोत्रचातुर्मास्याग्निष्टोमाख्यैर्विषयैरलङ्कृतः। वाजपेयराजसूयाभ्यां चयनस्य च कैश्चन विषयैरलङ्कृतोऽयं द्वितीयो भागः। तृतीयचतुर्थकाण्डप्रतिपादितस्य सोमयागस्य विकृतिभूताविमौ वाजपेयराजसूयौ। तथा हि-सर्वेषां सोमयागानां प्रकृतिरग्निष्टोमः। अयमेव सोमयाग इति अग्निष्टोमयाग इति ज्योतिष्टोमयाग इति च समाख्यायते। अस्मिन् यागे ग्रहचमसेषु गृहीतोन्नीतेन सोमरसेन यागा निष्पाद्यन्त इति सोमयागत्वमस्य क्रतोः। येन च साम्ना यः क्रतुस्संस्थाप्यते तत्साम्नो नामधेयमेव तत्क्रतोः। प्रकृतिभूते च सोमयागे तृतीयसवने यज्ञायज्ञीयमग्निष्टोमसंज्ञकमन्त्यं साम। ततश्चाग्निष्टोमत्वम्। ज्योतिष्टोमत्वं चेत्थं भगवती श्रुतिर्निराह—"तदाहुः। कतमानि वाव तानि ज्योती ᳪ षि। य एतस्य स्तोमाः। त्रिवृत्पञ्चदशः सप्तदश एकविंशः। एतानि वाव तानि ज्योती ᳪ षि य एतस्य स्तोमाः" इति। यस्मिन् क्रतावेते चत्वारः स्तोमा विद्यन्ते, स ज्योतिष्टोमसंज्ञां लभते। स्तोमो नाम स्तुतिगता संख्या। सोमयागे च क्रमेणेमे स्तोमा भवन्ति। श्रुतिरप्याह—"त्रिवृद्बहिष्पवमानम्। पञ्चदशान्याज्यानि। सप्तदशानि पृष्ठानि। एकविंशमग्निष्टोमसाम" इति। अग्निष्टोमोक्थ्यषोडश्य-

तिरात्राणां ज्योतिष्टोमत्वे समानेऽपि अग्निष्टोमत्वादिना मिथो भिद्यन्ते ते क्रतवः। तस्य चैवंविधस्य विकृती इमौ वाजपेयराजसूयौ। "वाजपेयेन स्वाराज्यकामो यजेत" "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यत्र श्रूयमाणा हि भावना साध्यसाधनेतिकर्तव्यतारूपमंशत्रयमपेक्षते। समानपदोपात्तोऽपि यागस्साध्यत्वेनान्वयं न लभते। तस्यापुरुषार्थत्वात्। परं स्वाराज्यं तत्त्वेनान्वेति। साधनत्वेन च धात्वर्थो यागः। ततश्च यागेन स्वाराज्यं भावयेदिति बोधे जाते कथमिति तृतीयाकांक्षायां सन्निधिपठितानामप्यपूर्वाङ्गानामद्यावधि कुत्राप्युपकाराक्लृप्तेः तान्युपेक्ष्य विकृतिभावना प्राकृतान्यङ्गानि गृह्णाति। तानि च शमयन्त्याकांक्षां ताम्। ततश्च "अव्यक्तासु तु सोमस्ये" ति न्यायेन सोमयागस्य प्रकृतित्वात्तदीयैरङ्गैर्निराकांक्षता भवति। तानि च प्रकृतौ क्लृप्तोपकाराणीति अवगतम्। ततश्च वाजपेयादियागेन स्वाराज्यं भावयेत्प्रकृतिवदुपकृत्येति बोधः। तत्र च वाजपेयराजसूयपदे कर्मनामधेये। वाजपेयेत्यस्य कर्मनामधेयता विस्तरतोऽस्मद्गुरुचरणैः तन्त्रसिद्धान्तरत्नावल्यां प्रकटीकृता। सा च तत एवाधिगन्तव्या। राजसूयपदं चाख्यातपरतन्त्रं सदिष्टिपशुसोमयागान् ब्रवीति। विशेषेण चायं विषयोऽस्मदाचार्यपादैः सारविवेचिन्यां न्यायप्रकाशव्याख्यायां प्रपञ्चितः। ततश्चानयोर्यागयोर्विकृतित्वात् प्रकृतिनिरूपणानन्तरं निरूपणमुचितमेव। तत्रापि ब्राह्मणक्षत्रियाभ्यामनुष्ठेयं वाजपेयं प्रथमं निरूप्य क्षत्रियमात्राधिकारिको राजसूयो न्यरूपि। तदनु च पञ्चसु काण्डेषु चयनम्।

यद्यपि मम मुद्रणाधिकृतस्य च चयनान्तो भागः प्रकाशनीय इति मनीषाऽऽसीत्तथापि ग्राहकास्त्वरन्त इति सप्तमकाण्डान्त एवेदानीं प्रकाश्यते। प्रकाशयिष्यते चाचिरेणैव कालेनावशिष्टं समग्रं ब्राह्मणम्। सावधानं संशोधनकार्ये निर्वर्तितेऽपि मत्प्रमादाद्यन्त्रालयप्रमादाच्च सञ्जातास्त्रुटीर्विस्मरन्तो विबुधा मामनुगृह्णीयुरिति तान् सप्रश्रयमभ्यर्थये। शोधनादिकार्येषु महदुपकृतवते गुरुचरणानां सुपुत्राय मदन्तेवासिने बि. ए. इत्युपाधिभाजे वेदशास्त्रिणे श्रीमते कृष्णमूर्तिनाम्ने स्वाशिषः प्रयुञ्जानो मदीयं कार्यमिदं विश्वेश्वरस्य चरणकमलयोस्समर्पयन् विरमामि ॥

इति

महाशिवरात्रिः
काशी, २००६

विद्वज्जनवशंवदः
अ. मु. रामनाथ दीक्षितः

॥ श्रीः ॥

## अथ माध्यन्दिनीये शतपथब्राह्मणे

# सवनामकं पञ्चमं काण्डम् ॥

### ( वाजपेयराजसूयावत्र प्रतिपाद्येते )

### प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

५. १. १.

( वाजपेयः )

हरिः ॐ३ । देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुराऽअतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः ॥१॥ अथ देवाः । अन्योन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानं प्रददौ यज्ञो हैषामास यज्ञो हि देवानामन्नम् ॥२॥ ते होचुः । कस्य नऽइदं भविष्यतीति ते मम ममेत्येव न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुराजिमेवास्मिन्नजामहै स यो नऽउज्जेष्यति तस्य नऽइदं भविष्यतीति तथेति तस्मिन्नाजिमाजन्त॥३॥ स बृहस्पतिः । सवितारमेव प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूतऽइदमुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत्सवितृप्रसूतऽउदजयत्सऽइदꣳ सर्वमभवत्सऽइदꣳ सर्वमुदजयत्प्रजापतिꣳ ह्युदजयत्सर्वमु ह्येवेदं प्रजापतिस्तेनेष्ट्वैतामेवोर्ध्वां दिशमुदक्रामत्तस्माद्यश्च वेद यश्च नैषोर्ध्वा बृहस्पतेर्दिगित्येवाहुः ॥४॥ तद्वै ह स्म पुरा वाजपेयेन यजन्ते । एताꣳ ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति ततऽऔपाविनैव जानश्रुतेयेन प्रत्यवरूढं ततोऽर्वाचीनं प्रत्यवरोहन्ति ॥५॥ तेनेन्द्रोऽयजत । सऽइदꣳ सर्वमभवत्

१ जुह्वत इति. क. २ मुदजयदिति. ग. ३ मुदक्रामदिति. ग.

सऽइदꣳसर्वमुदजयत्प्रजापतिꣳ ह्युदजयत्सर्वमु ह्येवेदं प्रजापतिस्तेनेष्ट्वे-तामेवोर्ध्वां दिशमुदक्रामत् ॥६॥ तद्धे ह स्म पुरा व्वाजपेयेन य्यज-न्ते । एताꣳ ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति ततऽऔपाविनैव जानश्रु-तेयेन प्रत्यवरूढं ततोऽर्वाचीनं प्रत्यवरोहन्ति ॥७॥ (शतम् २९००॥) स य्यो व्वाजपेयेन य्यजते। स इदꣳसर्वं भवति स इदꣳसर्वमुज्ज-यति प्रजापतिꣳह्युज्जयति सर्वमु ह्येवेदं प्रजापतिः ॥८॥ तदाहुः । न व्वाजपेयेन य्यजेत सर्वं वाऽएषऽइदमुज्जयति य्यो व्वाजपेयेन य्यजते प्रजापतिꣳह्युज्जयति सर्वमु ह्येवेदं प्रजापतिः सऽइह न किं चन परिशिनष्टि तस्येश्वरः प्रजा पापीयसी भवितोरिति ॥९॥ तदु वै य्यजेतैव । य्य ऽएवमेतं यज्ञं क्लृप्तं विद्युर्ऋक्तो यजुष्टः सामतो य्ये प्रजज्ञयंस्तऽएनं याजयेयुरेषा ह त्वेवैतस्य यज्ञस्य समृद्धिर्यदेनं व्विद्वाꣳसो याजयन्ति तस्मादु य्यजेतैव ॥१०॥ स वाऽएष ब्राह्मणस्यैव यज्ञः । य्यदेनेन बृहस्पतिरयजत ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणो-ऽथो राजन्यस्य य्यदेनेनेन्द्रोऽयजत क्षत्रꣳह्यिन्द्रः क्षत्रꣳराजन्यः ॥११॥ राज्ञऽएव राजसूयꣳ । राजा वै राजसूयेनेष्ट्वा भवति न वै ब्राह्मणो राज्यायालमवरं वै राजसूयं परं वाजपेयꣳ ॥१२॥ राजा वै राज-सूयेनेष्ट्वा भवति । सम्राड्वाजपेयेनावरꣳहि राज्यं परꣳ साम्रा-ज्यं कामयेत वै राजा सम्राड्भवितुमवरꣳहि राज्यं परꣳ साम्राज्यं न सम्राट् कामयेत राजा भवितुमवरꣳ हि राज्यं परꣳसाम्राज्यꣳ ॥१३॥ स य्यो व्वाजपेयेनेष्ट्वा सम्राड्भवति । सऽइदꣳ सर्वꣳ संवृङ्क्ते स कर्मणः कर्मणः पुरस्तादेताꣳ सावित्रीमाहुतिं जुहोति "देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाये"ति ॥१४॥ तद्यथैवादो बृह-स्पतिः । सवितारं प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूतऽइदमुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत्स-वितृप्रसूतऽउदजयदेवमेवैषऽएतत्सवितारमेव प्रसवायोपधावति सवि-ता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूतऽइदमुज्जयानीति तदस्मै सविता प्रसविता प्रसौति तत्सवितृप्रसूतऽउज्जयति ॥१५॥ तस्मा-

दाह । "देवं सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजं नः स्वदतु स्वाहे"ति प्रजापतिर्वै वाचस्पतिरन्नं वाजः प्रजापतिर्नऽइदमद्यान्नꣳ स्वदत्वित्येवैतदाह सऽएतामेवाहुतिं जुहोत्या श्वः सुत्यायाऽएतद्धस्यैतत्कर्मारब्धं भवति प्रसन्नऽएतं यज्ञं भवति॥१६॥Cf. का.श. ५.१.१. तै. ब्रा. १. ३.१

इति माध्यंदिनशाखीये शतपथब्राह्मणे सवाख्ये पञ्चमकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. १. १. )

## ५. १. २.

## ( अंश्वादयो ग्रहाः )

अꣳशुं गृह्णाति । सर्वत्वायैव तस्माद्वाऽअꣳशुं गृह्णात्यथैतान् प्रज्ञातानेवाग्निष्टौमिकान् ग्रहान् गृह्णात्याग्रयणात् ॥१॥ अथ पृष्ठ्यान् गृह्णाति । तद्यदेवैतैर्देवाऽउदजयंस्तदेवैषऽएतैरुज्जयति ॥२॥ अथ षोडशिनं गृह्णाति । तद्यदेवैतेनेन्द्रऽउदजयत्तदेवैषऽएतेनोज्जयति ॥३॥ अथैतान् पञ्च वाजपेयग्रहान् गृह्णाति । "ध्रुवसदं त्वा नृषदं मनःसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम"मिति सादयत्येषां वै लोकानामयमेव ध्रुवऽइयं पृथिवी ममेवैतेन लोकमुज्जयति ॥४॥ "अप्सुषदं त्वा । घृतसदं व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते व्योनिरिन्द्राय त्वा जुष्टतम"मिति सादयत्येषां वै लोकानामयमेव व्योमेदमन्तरिक्षलोकमेवैतेनोज्जयति ॥५॥ "पृथिविसदं त्वा । अन्तरिक्षसदं दिविसदं देवसदं नाकसदमुपयामगृहीतोऽसीन्द्राय त्वा । जुष्टं गृह्णाम्येष ते व्योनिरिन्द्राय त्वा जुष्टतममि"ति सादयत्येष वै देवसन्नाकसदेषऽएव देवलोको देवलोकमेवैतेनोज्जयति ॥६॥ "अपा ꣳ रस-

---

१ मा. सं. ९. १. २ अꣳशुं इति. ग. ३. आग्रयणात् इति. क.
४ वैष इति. क. ङ. ५–७ मा. सं. ९. २. ८ त्वाऽन्तरिक्षसदं इति क. च
९ मा. सं. ९. ३. १०. मन्त्रा इमे तै. संहितायां प्रथमसप्तमे आम्नाताः ।

मुद्वयसꣳ सूर्ये सन्तꣳ समाहितम्। अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम''मिति सादयत्येष वाऽअपाꣳ रसो योऽयं पवते सऽएष सूर्ये समाहितः सूर्यात्पवतऽएतमेवैतेन रसमुज्जयति ॥७॥ "ग्रहा ऊर्ज्जाहुतयः। व्यन्तो विप्राय मतिं तेषां विशिप्रियाणां वोऽहमिषमूर्जꣳ समग्रभमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममि''ति सादयत्यूर्ग्वै रसो रसमेवैतेनोज्जयति ॥८॥ तान्वाऽएतान्। पञ्च वाजपेयग्रहान् गृह्णाति प्रजापतिं वाऽएषऽउज्जयति यो वाजपेयेन यजते संवत्सरो वै प्रजापतिः पञ्च वाऽऋतवः संवत्सरस्य तत्प्रजापतिमुज्जयति तस्मात्पञ्च वाजपेयग्रहान् गृह्णाति ॥९॥ अथ सप्तदश सोमग्रहान् गृह्णाति। सप्तदश सुराग्रहान् प्रजापतेर्वाऽएतेऽअन्धसी यत्सोमश्च सुरा च ततः सत्यꣳश्रीर्ज्योतिः सोमोऽनृतं पाप्मा तमः सुरैतेऽएवैतदुभेऽअन्धसीऽउज्जयति सर्वं वाऽएष ऽइदमुज्जयति यो वाजपेयेन यजते प्रजापतिꣳ ह्युज्जयति सर्वमु ह्येवेदं प्रजापतिः ॥१०॥ स यत्सप्तदश। सोमग्रहान् गृह्णाति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावतैवास्यैतत्सत्यꣳ श्रियं ज्योतिरुज्जयति ॥११॥ अथ यत्सप्तदश। सुराग्रहान् गृह्णाति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावतैवास्यैतदनृतं पाप्मानं तमऽउज्जयति ॥१२॥ तऽउभये चतुस्त्रिꣳशद्ग्रहाः सम्पद्यन्ते। त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशस्तत्प्रजापतिमुज्जयति ॥१३॥ अथ यत्र राजानं क्रीणाति। तद्दक्षिणतः प्रतिवेशतः केशवात्पुरुषात्सीसेन परिस्रुतं क्रीणाति न वाऽएष स्त्री न पुमान् यत्केशवः पुरुषो यदह पुमांस्तेन न स्त्री यदु केशवस्तेन न पुमान्नैतदयो न हिरण्यं यत्सीसं नैष सोमो न सुरा यत्परिस्रुत्तस्मात्केशवात् पुरुषात्सीसेन परि-

१ मा. सं. ९. ४. २ जुष्टमेष ते इति. ग. ३ गृह्णाति इति. ग.

स्रुतं क्रीणाति ॥१४॥ अथ पूर्वेद्युः । द्वौ खरौ कुर्वन्ति पुरोऽक्षमेवान्यं पश्चादक्षमन्यं नेत्सोमग्रहांश्च सुराग्रहांश्च सह सादयामेति तस्मात्पूर्वेद्युर्द्वौ खरौ कुर्वन्ति पुरोऽक्षमेवान्यं पश्चादक्षमन्यम् ॥१५॥ अथ यत्र पूर्वया द्वारा । वसतीवरीः प्रपादयन्ति तदपरया द्वारा नेष्टा परिस्रुतं प्रपादयति दक्षिणतः पात्राण्यभ्यवहरन्ति पुरोऽक्षमेव प्रत्यङ्ङासीनोऽध्वर्युः सोमग्रहान् गृह्णाति पश्चादक्षं प्राङासीनो नेष्टा सुराग्रहान्त्सोमग्रहमेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टा सोमग्रहमेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टैवमेवैनाव्यत्यासं गृह्णीतः ॥१६॥ न प्रत्यञ्चमक्षमध्वर्युः । सोमग्रहमतिहरति न प्राञ्चमक्षं नेष्टा सुराग्रहं नेज्ज्योतिश्च तमश्च सꣳसृजावेति ॥१७॥ उपर्युपर्येवाक्षमध्वर्युः । सोमग्रहं धारयत्यधोऽधोक्षं नेष्टा सुराग्रहꣳ "सम्पृचौ[2] स्थः सं मा भद्रेण पृङ्क्त"मिति नेत्पापमिति ब्रवावेति तौ पुनर्विहरतो "विपृचौ[3] स्थो वि मा पाप्मना पृङ्क्त"मिति तद्यथेषीकां मुञ्जाद्विवृहेदेवमेनꣳ सर्वस्मात्पाप्मनो विवृहतस्तस्मिन्न तावच्चनैनो भवति यावत्तृणस्याग्रं तौ सादयतः ॥१८॥ अथाध्वर्युः । हिरण्यपात्रेण मधुग्रहं गृह्णाति तं मध्ये सोमग्रहाणाꣳ सादयत्यथोक्थ्यं गृह्णात्यथ ध्रुवमथैतान्त्सोमग्रहानुत्तमे स्तोत्रऽऋत्विजां चमसेषु व्यवनीय जुह्वति तान् भक्षयन्त्यथ माध्यन्दिने सवने मधुग्रहस्य च सुराग्रहाणां चोद्यते तस्यातः ॥१९॥ Cf. का. श. ६. १. २; तै. ब्रा. १. ३. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. १. २. )

## ५. १. ३.

### ( आग्नेयादयः प्राजापत्याश्च पशवः )

आग्नेयमग्निष्टोमऽआलभते । अग्निर्वाऽअग्निष्टोमोऽग्निष्टोममेवैतेनोज्जयत्यैन्द्राग्नमुक्थेभ्य[4] ऽआलभतऽऐन्द्राग्नानि वाऽउक्थान्युक्थान्ये-

---

१ मन्यमिति. ग.   २,३ मा. सं. ९. ४.   ४ उक्थ्येभ्य इति ङ.

वैतेनोज्जयत्यैन्द्रꣳ षोडशिनऽआलभतऽइन्द्रो वै षोडशी षोडशिनमेवैतेनोज्जयति ॥१॥ सारस्वतꣳ सप्तदशाय स्तोत्रायालभते । तदेतदनतिरात्रे सति रात्रे रूपं क्रियते प्रजापतिं वाऽएष ऽउज्जयति यो वाजपेयेन यजते संवत्सरो वै प्रजापतिस्तदेतेन सारस्वतेन रात्रिमुज्जयति तस्मादेतदनतिरात्रे सति रात्रे रूपं क्रियते ॥ २ ॥ अथ मरुद्भ्यऽउज्जेषेभ्यः । वशां पृश्निमालभेत ऽइयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निरन्नं वाऽएषऽउज्जयति यो वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं विशो वै मरुतोऽन्नं वै विशऽउज्जेषेभ्यऽइत्युज्जित्याऽएव दुर्वेदोऽउज्जेषवत्यौ याज्यानुवाक्ये यद्युज्जेषवत्यौ न विन्देदपि येऽएव के च मारुत्यौ स्यातां दुर्वेदोऽएव वशा पृश्निर्यदि वशां पृश्निं न विन्देदपि यैव का च वशा स्यात् ॥३॥ तस्याऽआवृत् । यत्र होता माहेन्द्रं ग्रहमनुशꣳसति तदस्यै वपया प्रचरेयुरेष वाऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यꣳ शस्त्रमिन्द्रो वै यजमानस्तन्मध्यतऽएवैतद्यजमाने वीर्यं दधाति तस्मादस्याऽअत्र वपया प्रचरेयुः ॥४॥ द्वेधावदानानि श्रपयन्ति । ततोऽर्द्धानां जुह्वामुपस्तीर्य द्विर्द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदानान्यथोपभृति सकृत्सकृदवद्यति द्विरभिघारयति न प्रत्यनक्त्यवदानानि तद्यदर्द्धानां द्विर्द्विरवद्यति तथैषा कृत्स्ना भवत्यथ यदेतैः प्रचरति तेन दैवीं विशमुज्जयत्यथार्द्धानि मानुष्यै विशऽउपहरति तेनो मानुषीं विशमुज्जयति ॥५॥ तदु तथा न कुर्यात् । ह्वलति वाऽएष यो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्यऽएवं करोति तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरन्ति तदेवैतस्य वपया प्रचरेयुरेकधावदानानि श्रपयन्ति न मानुष्यै विशऽउपहरन्ति ॥६॥ अथ सप्तदश प्राजापत्यान् पशूनालभते । ते वै सर्वे

१ रूपं इति. ग. २. क्रियते इति. ग. ३. विन्देदपि. इति. ग.
४. See. तै. ब्रा. १.४.४.मारुत्या प्रचर्य, एतान् संज्ञपयेत् ५ उपस्तीर्य इति ग.

तूपरा भवन्ति सर्वे श्यामाः सर्वे मुष्कराः प्रजापतिं वाऽएष ऽउज्जयति यो वाजपेयेन यजतेऽन्नं वै प्रजापतिः पशुर्वाऽअन्नं तत्प्रजापतिमुज्जयति सोमो वै प्रजापतिः पशुर्वै प्रत्यक्षᳪं सोमस्तत्प्रत्यक्षं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥७॥ ते वै सर्वे तूपरा भवन्ति । पुरुषो वै प्रजापतेर्नेदिष्ठᳪं सोऽयं तूपरोऽविषाणस्तूपरो वाऽअविषाणः प्रजापतिः प्राजापत्या ऽएते तस्मात्सर्वे तूपरा भवन्ति ॥८॥ सर्वे श्यामाः । द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं प्रजापतिः प्राजापत्याऽएते तस्मात्सर्वे श्यामा भवन्ति ॥९॥ सर्वे मुष्कराः । प्रजननं वै मुष्करः प्रजननं प्रजापतिः प्राजापत्याऽएते तस्मात्सर्वे मुष्करा भवन्ति दुर्वेदा ऽएवᳪं समृद्धाः पशवो यद्येवᳪं समृद्धान्न विन्देदपि कतिपया ऽएवैवᳪं समृद्धाः स्युः सर्वमु ह्येवेदं प्रजापतिः ॥१०॥ तद्धैके । वाचऽउत्तममालभन्ते यदि वै प्रजापतेः परमस्ति वागेव तदेतद्वाचमुज्जयाम ऽइति वदन्तस्तदु तथा न कुर्यात्सर्वं वाऽइदं प्रजापतिर्यदिमे लोका यदिदं किं च सा यदेवैषु लोकेषु वाग्वदति तद्वाचमुज्जयति तस्मादु तन्नाद्रियेत ॥११॥ तेषामावृत् । यत्र मैत्रावरुणो वामदेव्यमनुशᳪंसति तदेषां वपाभिः प्रचरेयुः प्रजननं वै वामदेव्यं प्रजननं प्रजापतिः प्राजापत्या ऽएते तस्मादेषामत्र वपाभिः प्रचरेयुः॥१२॥ अथेष्टाऽअनुयाजा भवन्ति । अव्यूढे स्रुचावथैषाᳪं हविर्भिः प्रचरन्ति सोऽन्तोऽन्तो वै प्रजापतिस्तदन्तत ऽएवैतत्प्रजापतिमुज्जयत्यथ यत्पुरा प्रचरेद्यथा यमध्वानमेष्यन्त्स्यात्तं गत्वा स क्व ततः स्यादेवं तत्तस्मादेषामत्र हविर्भिः प्रचरन्ति ॥१३॥ तदु तथा न कुर्यात् । ह्वलति वाऽएष यो यज्ञपथादेत्येति वाऽएष

---

१–५. तूपरा इति क. ६. See. तै. ब्रा. १.३.५. सारस्वत्योत्तमया प्रचरति वाग्वै सरस्वती । ७. लोकेषु इति. ग. ३०. ८. तेषामिति. ग. ९. तदेषां इति. ग. १०. तस्मादेषां वपाभिरत्रेति.ग. ११. अथेष्टाः इति.ग. १२. प्रचरन्ति इति.ग.

यज्ञपथाद्य ऽएवं करोति तस्माद्यत्रैवेतरेषां पशूनां व्वपाभिः प्रचरन्ति तदेवैतेषां व्वपाभिः प्रचरेयुर्यत्रैवेतरेषां पशूनाᳬ हविर्भिः प्रचरन्ति तदेवैतेषाᳬ हविषा प्रचरेयुरेकानुवाक्या भवत्येका याज्यैकदेवत्या हि प्रजापतय ऽइत्युपाᳬ शूक्त्वा छागानाᳬहविषोऽनुब्रूहीति प्रजापतय ऽइत्येवोपाᳬ शूक्त्वा छागानाᳬ हविः प्रस्थितं प्रेष्येति व्वषट्कृते जुहोति ॥१४॥ Cf. का. श. ६. १. ३; तै. ब्रा. १. ३. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. १. ३. )

## ५. १. ४.

### ( यजमानाभिषेकः, आजिधावनं च )

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । माध्यन्दिने सवनऽआजिं धावन्त्येष वै प्रजापतिर्य ऽएष यज्ञस्तायते य्यस्मादिमाः प्रजाः प्रजाता एतस्वेवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत ऽएवैतत्प्रजापतिमुज्जयति ॥१॥ अगृहीते माहेन्द्रे । एष वाऽइन्द्रस्य निष्केवल्यो ग्रहो य्यन्माहेन्द्रो-प्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यᳬ शस्त्रमिन्द्रो वै य्यजमान-स्तदेनᳬस्वऽएवायतनेऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे ॥२॥ अथ रथमुपावहरति । "इन्द्रस्य व्वज्रोऽसी"ति व्वज्रो वै रथऽइन्द्रो वै यजमानस्तस्मादाहेन्द्रस्य व्वज्रोऽसीति "व्वाजसा" ऽइति व्वाजसा हि रथ "स्त्वयायं वाजᳬ सेदि"त्यन्नं वै व्वाजस्त्वयायमन्नमुज्जयत्वि-त्येवं तदाह ॥३॥ तं धूर्गृहीतमन्तर्वेद्यभ्यववर्त्तयति। "वाजस्य नु प्रसवे मातरं मही"मित्यन्नं वै व्वाजोऽन्नस्य नु प्रसवे मातरं महीमित्येवै-तदाहा"दितिं नाम व्वचसा करामह"ऽइतीयं वै पृथिव्यदितिस्तस्मा-दाहादितिं नाम व्वचसा करामहऽइति "यस्यामिदं व्विश्वं भुवनमा-

---

१. भवतीति नाऽस्ति. ग.
२. इत्युपाᳬशूक्त्वेति. ग.
३. निष्केवल्याभिती. ग.
४–९ मा. सं. ९. ५.

ग्रापदिति य्यं द्विष्यादसावस्मै कामो मा समर्द्धीति वा न हैवास्मै स कामः समृध्यते य्यस्माऽएवमुपातिष्ठते ॥५॥ Cf. का. श. ५. ७. १.

इति माध्यदिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे पञ्चमप्रपाठके सप्तमं ब्राह्मणम् ॥ ( अ.६.५. )

४. ५. ८.

देवाः ह वै यज्ञं तन्वानाः[1]। तेऽसुररक्षसेभ्य ऽआसङ्गाद्विभयांचक्रुस्ते होचुः को नो दक्षिणत ऽआसिष्यतेऽथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥१॥ ते होचुः। य ऽएव नो व्वीर्यवत्तमः स दक्षिणत ऽआस्तामथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम ऽइति॥२॥ ते होचुः। इन्द्रो वै नो व्वीर्यवत्तम ऽइन्द्रो दक्षिणत ऽआस्तामथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥३॥ ते हेन्द्रमूचुः। त्वं वै नो व्वीर्यवत्तमोऽसि त्वं दक्षिणत ऽआस्वाथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम ऽइति ॥४॥ स होवाच। किं मे ततः स्यादिति ब्राह्मणाच्छꣳस्याते ब्रह्मसाम तऽइति तस्माद्ब्राह्मणाच्छꣳसिनं प्रवृणीत ऽइन्द्रो ब्रह्मा ब्राह्मणादितीन्द्रस्य ह्येषा स ऽइन्द्रो दक्षिणत ऽआस्ताथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपाचरंस्तस्माद्य ऽएव व्वीर्यवत्तमः स्यात्स दाक्षिणत ऽआसीताथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरेयुर्यो वै ब्राह्मणानामनूचानतमः सऽएषां व्वीर्यवत्तमोऽथ यदिदं य्य एव कश्च ब्रह्मा भवति कुवित्तूष्णीमास्तऽइति तस्माद्यऽएव व्वीर्यवत्तमः स्यात्स दक्षिणत ऽआसीताथाभयेऽनाष्ट्रऽउत्तरतो यज्ञपमुचरेयुस्तस्माद्ब्राह्मणा दक्षिणत ऽआसतेऽथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरन्ति ॥५॥ स यत्राह। ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा जप“त्येतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे। तेन यज्ञमेव तेन यज्ञपतिं तेन मामव। स्तुत सवितुः प्रसव”ऽइति सोऽसावेव बन्धुरेतेन न्वे-

---

1. तन्वानाः इति. ग.

व भूयिष्ठाऽइवोपचरन्ति ॥६॥ अनेन त्वेवोपचरेत् । "देव सवितरेतद्-बृहस्पते प्रे"ति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता बृहस्पते प्रेति बृहस्पतिर्वै देवानां ब्रह्मा तद्य ऽएव देवानां ब्रह्मा तस्माऽएवैतत्प्राह तस्मादाह बृहस्पते प्रेति ॥७॥ अथ मैत्रावरुणो जपति "प्रसूतं देवेन सवित्रा जुष्टं मित्रावरुणाभ्यामि"ति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता "जुष्टं मित्रावरुणाभ्यामि"ति मित्रावरुणौ वै मैत्रावरुणस्य[1] देवते तद्येऽएव मैत्रावरुणस्य देवते ताभ्यामेवैतत्प्राह तस्मादाह जुष्टं मित्रावरुणाभ्यामिति ॥८॥ Cf. का. श. ५. ७. ६.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे पञ्चमप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ( अ. ६. ६. )

४. ५. ९.

त्रयी वै विद्या । ऋचो यजूꣳषि सामानीयमेवर्चोऽस्याꣳ ह्यर्चति योऽर्चति स वागेवर्चो वाचा ह्यर्चति योऽर्चति सोऽन्तरिक्षमेव यजूꣳषि द्यौः सामानि सैषा त्रयी विद्या सौम्येऽध्वरे प्रयुज्यते ॥१॥ इममेव[2] लोकमृचा जयति । अन्तरिक्षं यजुषा दिवमेव साम्ना तस्माद्यस्यैका विद्यानूक्ता स्यादन्वेवापीतरयोर्निर्मितं विवक्षेतेममेव लोकमृचा जयत्यन्तरिक्षं यजुषा दिवमेव साम्ना ॥२॥ तद्वा ऽएतत् । सहस्रं वाचः प्रजातं द्वेऽइन्द्रस्तृतीये तृतीयं विष्णुर्ऋचश्च सामानि चेन्द्रो यजूꣳषि विष्णुस्तस्मात्सदस्यृक्सामाभ्यां कुर्वन्त्यैन्द्रꣳ हि सदः[3] ॥ ३ ॥

( अर्द्धप्रपाठकः ६३ )

अथैतं विष्णुं यज्ञम् । एतैर्यजुर्भिः पुर ऽइवैव बिभ्रति

१. मैत्रावरुणस्य इति. ग.
२. इयमेव इति. ग.
३. सदः इति. क, संदः इति. ग.

तस्मात्पुरश्चरणं नाम ॥ ४ ॥ व्वागेवर्चश्च सामानि च । मनऽएव य्यजूᳬषि सा य्यत्रेयं व्वागासीत्सर्वमेव तत्राक्रियत सर्वं प्राज्ञायताथ य्यत्र मन ऽआसीन्नैव तत्र किंचनाक्रियत न प्राज्ञायत नो हि मनसा ध्यायतः कश्चनाजानाति ॥५॥ ते देवा व्वाचमब्रुवन् । "प्राची प्रेहीदं प्रज्ञपये"ति सा होवाच किं मे ततः स्यादिति यत्किंचावषट्कृतᳬ स्वाहाकारेण यज्ञे हूयते तत्तऽइति तस्माद्यत्किंचावषट्कृतᳬस्वाहाकारेण यज्ञे हूयते तद्वाचः सा प्राची प्रैत्सैतत्प्राज्ञपयदितीदं कुरुतेतीदं कुरुतेति ॥६॥ तस्मादु कुर्वन्त्येवर्चा हविर्द्धाने । प्रातरनुवाकमन्वाह सामिधेनीरन्वाह ग्राव्णोऽभिष्टौत्येवᳬ हि सयुजावभवताम् ॥७॥ तस्मादु कुर्वन्त्येव सदसि । य्यजुषौदुम्बरीमुच्छ्रयन्ति सदः सम्मिन्वन्ति धिष्ण्यानुपकिरन्त्येवᳬ हि सयुजावभवताम् ॥८॥ तद्वाऽएतत्सदः परिश्रयन्ति । एतस्मै मिथुनाय तिर ऽइवेदं मिथुनं चर्यातऽइति व्यृद्धं वाऽएतन्मिथुनं य्यदन्यः पश्यति तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येव द्रवत ऽआग ऽएव कुर्वाते तस्माद्द्वारेण सदः प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा ऽइति य्यथा ह मिथुनं चर्यमाणं पश्येदेवं तत्कामं द्वारेण देवकृतᳬहि द्वारम् ॥९॥ एवमेवैतद्धविर्द्धानं परिश्रयन्ति । एतस्मै मिथुनाय तिरऽइवेदं मिथुनं चर्यातऽइति व्यृद्धं वाऽएतन्मिथुनं य्यदन्यः पश्यति तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येव द्रवत ऽआग एव कुर्वाते तस्माद्द्वारेण हविर्द्धानं प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा ऽइति य्यथा ह मिथुनं चर्यमाणं पश्येदेवं तत्कामं द्वारेण देवकृतᳬहि द्वारम् ॥१०॥ तद्वाऽएतद्वृषा साम । य्योषामृचᳬ सदस्यध्येति तस्मान्मिथुनादिन्द्रो जातस्तेजसो वै तत्तेजो जातं य्यदृचश्च साम्नश्चेन्द्र ऽइन्द्र ऽइति ह्येतमाचक्षते य ऽएष तपति॥११॥अथैतद्वृ-

---

१ तद्वा इति. ग.    २. तत्काम इति. ग.

३. देवकृतᳬइति. ग.    ४. द्वारम् इति. ग.

षा सोमः। य्योषा ऽअपो हविर्द्धाने ऽध्येति तस्मान्मिथुनाच्चन्द्रमा जातोऽन्नाद्वै तदन्नं जातं य्यदृग्भ्यश्च सोमाच्च चन्द्रमाश्चन्द्रमा ह्येतस्यान्नं य्य ऽएष तपति तद्यजमानं चैवैतज्जनयत्यन्नाद्यं चास्मै जनयत्यृचश्च साम्नश्च य्यजमानं जनयत्यृग्भ्यश्च सोमाच्चास्मा ऽअन्नाद्यम्॥ ॥१२॥ य्यजुषा ह वै देवाः। अग्रे यज्ञं तेनिरेऽथर्चाथ साम्ना तदिदमप्येतर्हि य्यजुषैवाग्रे यज्ञं तन्वतेऽथर्चाथ साम्ना य्यजो ह वै नामैतद्यद्यजुरिति ॥१३॥ य्यत्र वै देवाः। इमा व्विद्याः कामान्दुदुहे तद्ध यजुर्व्विद्यैव भूयिष्ठान् कामान्दुदुहे सा निर्द्धीततमेवास सा नेतरे व्विद्ये प्रत्यास नान्तरिक्षलोक ऽइतरौ लोकौ प्रत्यास ॥१४॥ ते देवा ऽअकामयन्त। कथं न्वियं व्विद्येतरे व्विद्ये प्रतिस्यात्कथमन्तरिक्षलोकऽइतरौ लोकौ प्रतिस्यादिति ॥१५॥ ते होचुः। उपाꣳश्वेव य्यजुर्भिश्चराम तत ऽएषा व्विद्येतरे व्विद्ये प्रतिभविष्यति ततोऽन्तरिक्षलोका ऽइतरौ लोकौ प्रतिभविष्यतीति ॥१६॥ तैरुपाꣳश्वचरन्। आप्याययन्नेवैनानि तत्तत ऽएषा व्विद्येतरे व्विद्ये प्रत्यासीत्ततोऽन्तरिक्षलोक ऽइतरौ लोकौ प्रत्यासीत्तस्माद्यजूꣳषि निरुक्तानि सन्त्यनिरुक्तानि तस्मादयमन्तरिक्षलोको निरुक्तः सन्ननिरुक्तः ॥१७॥ स य्य ऽउपाꣳशु य्यजुर्भिश्चरति। आप्याययत्येवैनानि स तान्येनमापीनान्याप्याययन्त्यथ य्य ऽउच्चैश्चरति रूक्षयत्येवैनानि स तान्येनꣳरूक्षाणि रूक्षयन्ति ॥१८॥ व्वागेवर्चश्च सामानि च। मन ऽएव य्यजूꣳषि स य्य ऽऋचा च साम्ना च चरन्ति व्वाक्ते भवन्त्यथ ये य्यजुषा चरन्ति मनस्ते भवन्ति तस्मान्नानभिप्रेषितमध्वर्युणा किञ्चन क्रियते य्यद्देवाध्वर्युराहानुब्रूहि यजेत्यथैव ते कुर्व्वन्ति य्य ऽऋचा कुर्वन्ति य्यद्देवाध्वर्युराह "सोमः पवत ऽउपावर्त्तध्व"मित्यथैव ते कुर्व्वन्ति ये साम्ना कुर्वन्ति नो ह्यनभिगतं मनसा व्वाग्वदति ॥१९॥ तद्वा ऽएतन्मनोऽध्व-

१. चन्द्रमाश्चन्द्र इति. ग. २. देवाः इति. ग. ३. यजुरिति इति. च.
४. चरति इति. च. ५. रूक्षयन्ति इति. ग. ६. कुर्वन्ति इति. क.

र्युः । पुरऽइवैव चरति तस्मात्पुरश्चरणं नाम पुरऽइव ह वै श्रिया यशसा भवति य ऽएवमेतद्वेद ॥२०॥ तद्वाऽएतदेव पुरश्चरणम् । यऽ एष तपति सऽएतस्यैवावृता चेरद्ग्रहं गृहीत्वैतस्यैवावृतमन्वावर्त्तेत प्रतिगीर्यैतस्यैवावृतमान्वावर्त्तेत ग्रहछंहुत्वैतस्यैवावृतमन्वावर्त्तेत सहैष भर्त्ता स यो हैवं विद्वानेतस्यावृता शक्नोति चरितुछं शक्नोति हैव भार्य्याम्भर्तुम् ।२१॥ Cf. का. श. ५. ८. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
पञ्चमप्रपाठके नवमं ब्राह्मणम् ॥ ( अ. ६. ७. )

४. ५. १०

( सत्रायणम् )

या वै दीक्षा सा निषत् । तत्सत्रं तस्मादेनानासतऽइत्याहुरथ यत्ततो यज्ञं तन्वते तद्यन्ति तन्नयति यो नेता भवति स तस्मादेनान्यन्तीत्याहुः ॥१॥ या ह दीक्षा सा निषत् । तत्सत्रं तदयनं तत्सत्रायणमथ यत्ततो यज्ञस्योदृचं गत्वोत्तिष्ठन्ति तदुत्थानं तस्मादेनानुदस्थुरित्याहुरिति नु पुरस्ताद्वदनम्¹ ॥२॥ अथ दीक्षिष्यमाणाः समवस्यन्ति । ते यद्याग्निं² चेष्यमाणा भवन्त्यरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्तऽएतेन प्राजापत्येन पशुना ॥३॥ तस्य³ शिरो निदधति । तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥४॥ अथ यदहरेषां दीक्षा समैति । अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्रथमो मन्थते मध्यं प्रति शालाया अथेतरेषामर्द्धा दक्षिणत ऽउपविशन्त्यर्द्धाऽउत्तरतो मथित्वोपसमाधायैकैकमेवोल्मुकमादायोपसमायन्ति गृहपतेर्गार्हपत्यं गृहपतेरेव गार्हपत्यादुद्धृत्याहवनीयं दीक्षन्ते तेषाछं समान ऽआहवनीयो भवति नाना गार्हपत्या

१. वदनम् इति. ग. २. यद्यज्ञमिति. क. १६. तस्येति. ग.

दीक्षोपसत्सु ॥५॥ अथ यद्यदहरेषां क्रयो भवति । तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य ऽउपवसथे धिष्ण्यान्वैसर्जिनानां काले प्राच्यः पत्न्य ऽउपसमायन्ति प्रजहत्येतानपरानग्नीन्हुत ऽएव व्वैसर्जिने ॥६॥ राजानं प्रणयति । उद्यत ऽएवैष ऽआग्नीध्रीयोऽग्निर्भवत्यथैत ऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं व्विपरायन्ति तैरेव तेषामुल्मुकैः प्रघ्नन्तीति ह स्माह य्याज्ञवल्क्यो ये तथा कुर्वन्तीत्येतन्न्वेकमयनम् ॥७॥ अथेदं द्वितीयम् । अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति य्यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं य्यजन्त ऽएतेन प्राजापत्येन पशुना ॥८॥ तस्य शिरो निदधति । तेषां य्यदि तदहर्दीक्षा न समैत्यरणिष्वेवाग्नीन्त्समारोह्य यथायथं व्विपरेत्य जुह्वति ॥९॥ अथ यदहरेषां दीक्षा समैति । अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति य्यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्रथमो मन्थतेऽथेतरे पर्युपविश्य मन्थन्ते तं जातं जातमेवानुप्रहरन्ति गृहपतेर्गार्हपत्ये गृहपतेरेव गार्हपत्यादुद्धृत्याहवनीयं दीक्षन्ते तेषाᳬ समानऽआहवनीयो भवति समानो गार्हपत्यो दीक्षोपसत्सु ॥१०॥ अथ यदहरेषां क्रयो भवति । तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य ऽउपवसथे धिष्ण्यान्वैसर्जिनानां काले प्राच्यः पत्न्य ऽउपसमायन्ति प्रजहत्येतमपरमग्निᳬ हुतऽएव व्वैसर्जिने ॥११॥ राजानं प्रणयति । उद्यत ऽएवैष ऽआग्नीध्रीयोऽग्निर्भवत्यथैत ऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं व्विपरायन्ति समदमु हैव ते कुर्वन्ति समद्धैनान्विन्दत्यर्त्तुका ह भवन्त्यपि ह तमर्द्धᳬ समर्द्धिं नदति य्यस्मिन्नर्द्धे य्यजन्ते ये तथा कुर्वन्त्येतद्द्वितीयमयनम् ॥१२॥ अथेदं तृतीयम् । गृहपतेरेवारण्योः संवदन्ते य्य ऽइतोऽग्निर्जनिष्यते स नः सह य्यदनेन यज्ञेन जेष्यामोऽनेन पशुबन्धेन तन्नः सह सह नः साधु-

१. उपवसथे इति ग. २. वैसर्जने इति. ग. ३-७. प्रणयति इति. च.
४. जुह्वति इति. क. ५. उपसत्सु इति. क. ६. वैसर्जिने इति. ग.

कृत्या य्यऽएव पापं करवत्तस्यैव तदित्येवमुक्त्वा गृहपतिरेव प्रथमः समारोहयतेऽथेतरेभ्यः समारोहयति स्वयं वैव समारोहयन्ते तऽआयन्ति य्यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं य्यजन्तऽएतेन प्राजापत्येन पशुना ॥१३॥ तस्य शिरो[1] निदधति । तेषां य्यदि तदहर्दीक्षा न समैत्यरणिष्वेवाग्नीन्त्समारोह्य यथायथं व्विपरेत्य जुह्वति[2] ॥१४॥ अथ यदहरेषां दीक्षा समैति । गृहपतेरेवारण्योः संवदन्ते य्यऽइतोऽग्निर्जनिष्यते स नः सह य्यदनेन यज्ञेन जेष्यामोऽनेन सत्रेण तन्नः सह सह नः साधुकृत्या य्यऽएव पापं करवत्तस्यैव तदित्येवमुक्त्वा गृहपतिरेव प्रथमः समारोहयतेऽथेतरेभ्यः समारोहयति स्वयं वैव समारोहयन्ते तऽआयन्ति य्यत्र दीक्षिष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं दीक्षन्ते तेषाꣳसमानऽआहवनीयो भवति समानो गार्हपत्यो दीक्षोपसत्सु ॥१५॥ अथ यदहरेषां क्रयो भवति । तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्यऽउपवसथे धिष्ण्यान्वैसर्जिनानां काले प्राच्यः पत्न्यऽउपसमायन्ति प्रजहत्येतमपरमग्निꣳ हुतऽएव व्वैसर्जिने ॥१६॥ राजानं प्रणयति[3] । उद्यतऽएवैष[4]ऽआग्नीध्रीयोऽग्निर्भवत्यथैतऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं व्विपरायन्ति तत्तत्कृतं नाकृतं यन्नानाधिष्ण्या भवन्ति व्वरीयानाकाशोऽसत्परिचरणायेत्यथ यन्नानापुरोडाशा भूयो हविरुच्छिष्टमसत्समाप्त्याऽइति ॥१७॥ अथ य्येन सत्रेण देवाः । क्षिप्रऽएव पाप्मानमपाघ्नतेमां जितिमजयन्यैषामियं जितिस्तदुतऽउद्यतऽएकगृहपतिका वै देवाऽएकपुरोडाशाऽएकधिष्ण्याः क्षिप्रऽएव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त तथोऽएवैतऽएकगृहपतिकाऽएकपुरोडाशा एकधिष्ण्याः क्षिप्रऽएव पाप्मानमपघ्नते क्षिप्रे प्रजायन्ते[5] ॥१८॥ अथादः पूर्वस्मिन्नुदीचीनवꣳशा शाला भवति ।

---

१. शिरो निदधति इति. च. २. जुह्वति इति.क. ३. प्रणयति. इति. च.
४. उद्यत इति ग. ५. प्रजायन्ते इति. च.

तन्मानुषꣳ समानऽआहवनीयो भवति नाना गार्हपत्यास्तद्विक्रुष्टं गृहपतेरेव गार्हपत्ये जाघन्या पत्नीः संयाजयन्त्याज्येनेतरे प्रतियजन्तऽआसते तद्विक्रुष्टम् ॥१९॥ अथात्र प्राचीनवꣳशा शाला भवति । तद्देवत्रा समानऽआहवनीयो भवति समानो गार्हपत्यः समानऽआग्नीध्रीयस्तदेतत्सत्रꣳ समृद्धं यथैकाहः समृद्धऽएवं तस्य न ह्वलास्ति तस्यैषैव समान्याव्वृद्यदन्यद्धिष्ण्येभ्यः ॥२०॥

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे
पञ्चमप्रपाठके दशमं ब्राह्मणम् ॥ ( अ. ६. ८. )

### ४. ५. ११.
### ( सत्रधर्माः )

देवा ह वै सत्रमासत । श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेभ्य ऽएतदन्नाद्यमभिजितमपाचिक्रमिषत्पशवो वाऽअन्नं पशवो हैवैभ्यस्तदपाचिक्रमिषन्यद्वै न ऽइमे श्रान्ता न हिꣳस्युः कथमिव स्विन्नः स्नक्ष्यन्तऽइति ॥१॥ तऽएते गार्हपत्ये द्वेऽआहुतीऽअजुहवुः । गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तदेनान् गृहेष्वेव न्ययच्छंस्तथैभ्य ऽएतदन्नाद्यमभिजितं नापाक्रामत् ॥२॥ तथोऽएवेमे सत्रमासते । ये सत्रमासते श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेभ्य ऽएतदन्नाद्यमभिजितमपचिक्रमिषति पशवो वाऽअन्नं पशवो हैवैभ्यस्तदपचिक्रमिषन्ति यद्वै नऽइमे श्रान्ता न हिꣳस्युः कथमिव स्विन्नः स्नक्ष्यन्तऽइति ॥३॥ तऽएते गार्हपत्ये द्वेऽआहुती जुह्वति । गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तदेनान् गृहेष्वेव नियच्छन्ति तथैभ्य ऽएतदन्नाद्यमभिजितं नापक्रामति ॥४॥ तथोऽएवैतस्मात् । एतदन्नाद्यमुपाहृतमपचिक्रमिषति यद्वै मायं न हिꣳस्यात्कथमिव स्विन्मा स्नक्ष्यतऽइति ॥५॥ तस्य परस्तादेवाग्रेऽल्पश इव प्राश्नाति । तदेनदुपनिमदति तद्धेदं[1] न वै तथा भूयथा मꣳसि न वै मा हिꣳसी-

1. तद्वेद इति. ग.

दिति तदेनमुपावश्रयते स ह प्रिय ऽएवान्नस्यान्नादो भवति य्य ऽएवं व्विद्वानेतस्य व्रतꣳ शक्नोति चरितुम् ॥६॥ तद्वा ऽएतत् । दशमे-हन्त्सत्रोत्थानं क्रियते तेषामेकैक ऽएव व्वाचंयम ऽआस्ते व्वाचमा-प्याययंस्तयापीनयायातयाम्न्योत्तरमहस्तन्वतेऽथेतरे व्विसृज्यन्ते स-मिद्धारा वा स्वाध्यायं वा तत्राप्यश्नन्ति[1] ॥७॥ तेऽपराह्णऽउपसमेत्य । अपऽउपस्पृश्य पत्नीशालꣳ सम्प्रपद्यन्ते तेषु समन्वारब्धेष्वेतेऽआ-हुती जुहोती"ह[2] रन्तिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहे"ति पशूनेवैतदाह पशूनेवैतदात्मन्नियꣳच्छन्ते[3] ॥८॥ अथ द्वितीयां जुहोति[4] । "उपसृजन्[5] धरुणं मात्र"ऽइत्यग्निमेवैतत्पृथिव्याऽउपसृजन्नाह "धरुणो[6] मातरं धयन्नि"त्यग्निमेवैतत्पृथिवीं धयन्तमाह "रायँस्पोषमस्मासु दी-धरत्स्वाहे"ति पशवो वै रायस्पोषः पशूनेवैतदात्मन्नियच्छन्ते ॥९॥ ते प्राञ्च ऽउपनिष्क्रामन्ति । ते पश्चात्प्राञ्चो हविर्द्धाने सम्प्रपद्यन्ते पुरस्ताद्वै प्रत्यञ्चस्तꣳस्यमानाऽ अथैवꣳसत्रोत्थाने ॥१०॥ तऽउत्त-रस्य हविर्द्धानस्य । जघन्यायां कूबर्याꣳ सामाभिगास्यन्ति "सत्रस्य-ऽऋद्धि"रिति राद्धिमेवैतदभ्युत्तिष्ठन्त्युत्तरवेदेर्वोत्तरायाꣳश्रोणावितरं तु कृततरम् ॥११॥ यदुत्तरस्य हविर्द्धानस्य । जघन्यायां कूबर्याम-"गन्म[7] ज्योतिरमृता अभूमे"ति ज्योतिर्वा ऽएते भवन्त्यमृता भवन्ति य्ये सत्रमासते "दिवं पृथिव्या[8] ऽअध्यारुहामे"ति दिवं वा ऽएते पृथिव्या ऽअध्यारोहन्ति य्ये सत्रमासतेऽ"विदाम[11] देवानि"ति व्विन्दन्ति हि देवा"न्त्स्वर्ज्योति[12]"रिति त्रिर्निधनमुपावयन्ति स्वर्ह्येते ज्योतिर्ह्येते भव-न्ति तद्यदेवैतस्य साम्नो रूपं तदेवैते भवन्ति य्ये सत्रमासते ॥१२॥ ते दक्षिणस्य हविर्द्धानस्य । अधोधोक्षꣳसर्पन्ति स यथाहिस्त्वचो निर्मुच्येतैवꣳ सर्वस्मात्पाप्मनो निर्मुच्यन्तेऽतिच्छन्दसा सर्पन्त्येषा-व्वै सर्वाणि छन्दाꣳसि यदतिच्छन्दास्तथैनान् पाप्मा नान्वत्येति त-

---

१. अश्नन्ति इति. ग. २. मा. सं. ८. ५१. ३. नियच्छन्ते इति. च.
४. जुहोति इति. च. ५-७. मा. सं. ८. ५१. ८-१२. मा. सं. ८. ५२.

५२ मा० शु० ब्रा०

स्मादतिछन्दसा सर्पन्ति ॥१३॥ ते सर्पन्ति । "[1]युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं तमिद्धतं वज्रेण तं तमिद्धतम् । दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत् । अस्माकॐ शत्रून् परि शूर विश्वतो दर्मा दर्षीष्ट विश्वत"ऽइति ॥१४॥ ते प्राञ्चऽउपनिष्क्रामन्ति । ते पुरस्तात्प्रत्यञ्चः सदः सम्प्रपद्यन्ते पश्चाद्वै प्राञ्चस्तॐस्यमाना ऽअथै वॐ सत्रोत्थाने ॥१५॥ ते यथाधिष्ण्यमेवोपाविशन्ति । देवेभ्यो ह वै वाचो रसोऽभिजितोऽपचिक्रमिषां चकार स ऽइमामेव पराङ्-त्यसिसृप्सदियं वै वाकस्याऽएष रसो यदोषधयो यद्वनस्पतयस्त-मेतेन साम्नाऽऽप्नुवन्त्स ऽएनानाप्तोऽभ्यावर्त्तत तस्मादस्यामूर्ध्वा ऽओ-षधयो जायन्तऽऊर्ध्वा वनस्पतयस्तथोऽएवैतेभ्य ऽएतद्वाचो रसोऽ-भिजितोऽपचिक्रमिषति स ऽइमामेव पराङतिसिसृप्सतीयं वै वाक्-स्याऽएष रसो यदोषधयो यद्वनस्पतयस्तमेतेन साम्नाऽऽप्नुवन्ति स ऽएनानाप्तोऽभ्यावर्त्तते तस्मादस्यामूर्ध्वाऽओषधयो जायन्त ऽऊर्ध्वा वनस्पतयः ॥१६॥ सर्पराज्ञ्या ऽऋक्षु स्तुवते । इयं वै पृथिवी सर्प-राज्ञी तदनयैवेतत्सर्वमाप्नुवन्ति स्वयम्प्रस्तुतमनुपगीतं यथा नान्य ऽउपश्रृणुयादति ह रेचयेद्यदन्यः प्रस्तुयादतिरेचयेद्यदन्य ऽउपगाये-दति रेचयेद्यदन्यऽउपश्रृणुयात्तस्मात्स्वयम्प्रस्तुतमनुपगीतम् ॥१७॥ च-तुर्होतॄन् होता व्याचष्टे। एतदेवैतत्स्तुतमनुशॐसति यदि होता न वि-द्याद्गृहपतिर्व्याचक्षीत होतुस्त्वेव व्याख्यानम् ॥१८॥ अथाध्वर्योः प्रति-गरः।'अरात्सुरिमे यजमाना भद्रमेभ्यो यजमानेभ्योऽभू'दिति कल्या-णमेवैतन्मानुष्यै वाचो वदति ॥१९॥ अथ वाकोवाक्ये ब्रह्मोद्यं वद-न्ति । सर्व्वं वै तेषामाप्तं भवति सर्वं जितं ये सत्रमासतेऽचारिषु-र्यजुर्भिस्तत्तान्यापंस्तदवारुत्सताशॐसिषुर्ऋग्भिस्तत्ता आपंस्तदवारु-त्सतास्तोषत सामाभिस्तान्यापंस्तत्तदवारुत्सताथैषामेतदेवानाप्तमनवरु-द्धं भवति यद्वाको वाक्यं ब्राह्मणं तदेवैतेनाप्नुवन्ति तदवरुन्धते ॥२०॥ औदुम्बरीमुपसॐसृप्य वाचं यच्छन्ति । विदुहन्ति वाऽएते यज्ञं निर्धयन्ति ये वाचा यज्ञं तन्वते वाग्घि यज्ञस्तामेषां पुरैकैक ऽएव

१. मा. सं. ८. ५३.

व्वाचंयमऽआस्ते व्वाचमाप्यायँस्तयापीनयायातयाम्न्योत्तरमहस्तन्वतेऽथात्र सर्वैव व्वागाप्ता भवत्यपवृक्ता ताᳫँसर्वऽएव व्वाचंयमा व्वाचमाप्याययन्ति तयापीनयायातयाम्न्यातिरात्रं तन्वते ॥२१॥ औदुम्बरीमन्वारभ्यासते । अन्नं वाऽऊर्गुदुम्बर ऊर्जैवैतद्वाचमाप्याययन्ति ॥२२॥ तेऽस्तमिते प्राञ्चऽउपनिष्क्रामन्ति । ते जघनेनाहवनीयमासतेऽग्रेण हविर्द्धाने तान्वाचंयमानेव व्वाचंयमः प्रतिप्रस्थाता व्वसतीवरीभिरभिपरिहरति ते य्यत्कामा ऽआसीरंस्तेन व्वाचं व्विसृजेरन् कामैर्हं स्म वै पुरर्षयः सत्त्रमासते ऽसौ नः कामः स नः समृध्यतामिति य्यद्युऽअनेककामाः स्युर्लोककामा वा प्रजाकामा वा पशुकामा वा ॥२३॥ अनेनैव व्वाचं व्विसृजेरन् । "भूर्भुवः स्वरि"ति तत्सत्येनैवैतद्वाचᳫँसमर्द्धयन्ति तया समृद्धयाशिष ऽआशासते "सुप्रजाः प्रजाभिः स्यामे"ति तत्प्रजामाशासते "सुवीरा व्वीरै"रिति तद्वीरानाशासते "सुपोषाः पोषै"रिति तत्पुष्टिमाशासते ॥ २४ ॥ अथ गृहपतिः सुब्रह्मण्यामाह्वयति । य्यं वा गृहपतिर्ब्रूयात्पृथगु हैवैके सुब्रह्मण्यामाह्वयन्ति गृहपतिस्त्वेव सुब्रह्मण्यामाह्वयेद्यं वा गृहपतिर्ब्रूयात्तस्मिन्त्समुपहवमिष्ट्वा समिधोऽभ्यादधति ॥२५॥ Cf का. श. ५. ८. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे पञ्चमप्रपाठके एकादशं ब्राह्मणम् ॥ ( अ. ६. ९. )

पञ्चमः प्रपाठकस्समाप्तः ॥

कण्डिकासंख्या १२६

( इति षष्ठोऽध्यायः )

इति ग्रहाख्यं चतुर्थं काण्डं समाप्तम् ॥ ४ ॥

( अस्मिन् काण्डे कण्डिकासंख्या ६४८ )

---

१–४. मा. सं. ८. ५३.

विवेशे''त्यस्याꣳ ह्यीदꣳसर्व्वं भुवनमाविष्टं "तस्यां नो देवः सविता धर्मं साविष''दिति तस्यां नो देवः सविता य्यजमानꣳ सुवतामित्येवैतदाह ॥४॥ अथाश्वानद्भिरभ्युक्षति । स्नपनायाभ्यवनीयमानान्त्स्नपितान्वोदानीतानद्भ्यो ह वाऽअग्रेऽश्वः सम्बभूव सोऽद्भ्यः सम्भवन्नसर्व्वः समभवदसर्व्वो हि वै समभवत्तस्मान्न सर्व्वैः पद्भिः प्रतितिष्ठत्येकैकमेव पादमुदच्य तिष्ठति तद्यदेवास्यात्राप्स्वहीयत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादश्वानद्भिरभ्युक्षति स्नपनायाभ्यवनीयमानान्त्स्नपितान्वोदानीतान् ॥५॥ सोऽभ्युक्षति । "अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत व्वाजिन'' ऽइत्यनेनापि "देवीरापो य्यो व ऊर्म्मिः प्रतूर्त्तिः ककुन्मान्वाजसास्तेनायं व्वाजꣳ से'' दित्यन्नं वै व्वाजस्तेनायमन्नमुज्जयत्वित्येवैतदाह ॥६॥ अथ रथं युनक्ति । स दक्षिणायुग्यमेवाग्रे य्युनक्ति सव्यायुग्यं वाऽअग्रे मानुषेऽथैवं देवत्रा ॥७॥ स य्युनक्ति । "व्वातो वा मनो वे''ति न वै व्वातात्किं चनाशीयोऽस्ति न मनसः किं चनाशीयोऽस्ति तस्मादाह व्वातो वा मनो वेति "गन्धर्व्वाः सप्तविꣳशतिस्तेऽअग्रेऽश्वमयुञ्ज''न्निति गन्धर्वा ह वाऽअग्रेऽश्वं य्युयुजुस्तद्येऽग्रेऽश्वमयुञ्जंस्ते त्वा य्युञ्जन्त्वित्येवैतदाह "तेऽअस्मिन् जवमादधु''रिति तद्येऽस्मिञ्जवमादधुस्ते त्वयि जवमादधत्वित्येवैतदाह ॥८॥ अथ सव्यायुग्यं य्युनक्ति । "व्वातरꣳहा भव व्वाजिन्युज्यमान''ऽइति व्वातजवो भव व्वाजिन्युज्यमान ऽइत्येवैतदाहे"न्द्रस्येव दक्षिणः श्रियैधी''ति य्यथेन्द्रस्य दक्षिणः श्रियैवं य्यजमानस्य श्रियैधीत्येवैतदाह "य्युञ्जन्तु त्वा मरुतो विश्ववेदस'' ऽइति य्युञ्जन्तु त्वा देवा ऽइत्येवैतदाहा"ते त्वष्टा पत्सु जवं दधा''त्विति नात्र तिरोहितमिवास्त्यथ दक्षिणाप्रष्टिं य्युनक्ति सव्याप्रष्टिं वाऽअग्रे मानुषेऽथैवं देवत्रा ॥९॥ स य्युनक्ति ।

---

१. मा. सं. ९. ५.　　२, ३. मा. सं. ९. ६.
४–६ मा. सं. ९. ७.　　७–१०, मा. सं. ९. ८.

"जवो य्यस्ते व्वाजिन्निहितो गुहा य्यः श्येने परीत्तोऽअचरच्च व्वात"ऽइति जवो य्यस्ते व्वाजिन्नप्यन्यत्रापनिहितस्तेन न ऽइमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह "तेन नो व्वाजिन् बलवान् बलेन व्वाजजिच्च भव समने च पारयिष्णु"रित्यन्नं वै व्वाजोऽन्नजिच्च ऽएध्यस्मिंश्च नो यज्ञे देवसमनऽइमं य्यज्ञं प्रजापतिमुज्जयेत्येवैतदाह ॥१०॥

( अर्द्धप्रपाठकः ५९ )

ते वाऽएतऽएव त्रयो य्युक्ता भवन्ति । त्रिवृद्धि देवानां तद्धि देवत्राधिप्रष्टियुग ऽएव चतुर्थोऽन्वेति मानुषो हि स तं य्यत्र दास्यन् भवति तच्चतुर्थमुपयुज्य ददाति तस्मादपीतरस्मिन्यज्ञऽएतऽएव त्रयो युक्ता भवन्ति त्रिवृद्धि देवानां तद्धि देवत्राधिप्रष्टियुग ऽएव चतुर्थोऽन्वेति मानुषो हि स तं य्यत्र दास्यन् भवति तच्चतुर्थमुपयुज्य ददाति ॥११॥ अथ वार्हस्पत्यं चरुं नैवारꣳ सप्तदशशरावं निर्वपति । अन्नं वाऽएष ऽउज्जयति यो व्वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तदेवास्माऽएतत्करोति ॥१२॥ अथ य्यद्वार्हस्पत्यो भवति । बृहस्पतिर्ह्येतमग्रऽउदजयत्तस्माद्वार्हस्पत्यो भवति ॥१३॥ अथ य्यन्नैवारो भवति । ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति सप्तदशशरावो भवति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥१४॥ तमश्वानवघ्रापयति । "व्वाजिन"ऽइति व्वाजिनो ह्यश्वास्तस्मादाह व्वाजिन ऽइति "व्वाजजित"ऽइत्यन्नं वै व्वाजोऽन्नजित ऽइत्येवैतदाह "व्वाजꣳ सरिष्यन्त"ऽइत्याजिꣳ हि सरिष्यन्तो भवन्ति "बृहस्पतेर्भागमवजिघ्रते"ति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भागमवजिघ्रतेति तद्यदश्वानवघ्रापयतीममुज्जयानीति तस्मा-

१, २. मा. सं. ९. ९.
३. भवति इति. क.
४. अवघ्रावयतीति क. ह.
५-८ मा. सं. ९. ९.

द्वाऽअश्वानवघ्रापयति ॥१५॥ Cf. का. श. ६. २. १; तै. ब्रा. १. ३. ५. ६; मै. सं. १. ११. ७; का. सं. १४. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. १.४.)

## ५. १. ५.

## ( दुन्दुभ्याहननादिकम् )

तद्यदाजिं धावन्ति । इममेवैतेन लोकमुज्जयत्यथ यद्ब्रह्मा रथचक्रे साम गायति नाभिदघ्नऽउद्धितेऽन्तरिक्षलोकमेवैतेनोज्जयत्यथ यद्यूपꣳ रोहति देवलोकमेवैतेनोज्जयति तस्माद्वाऽएतत्त्रयं क्रियते ॥१॥ स ब्रह्मा रथचक्रमधिरोहति । नाभिदघ्नऽउद्धितं "देवस्याहꣳ सवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकꣳरुहेय"मिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः ॥२॥ अथ यदि राजन्यो यजते । "देवस्याहꣳ सवितुः सवे सत्यसवस ऽइन्द्रस्योत्तमं नाकꣳ रुहेयमि"ति क्षत्रꣳहीन्द्रः क्षत्रꣳ राजन्यः ॥३॥ त्रिः सामाभिगायति । त्रिरभिगीयावरोहति "देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकमरुह"मिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः ॥४॥ अथ यदि राजन्यो यजते । "देवस्याहꣳसवितुः सवे सत्यप्रसवसऽइन्द्रस्योत्तमं नाकमरुहमि"ति क्षत्रꣳहीन्द्रः क्षत्रꣳराजन्यः ॥५॥ अथ सप्तदश दुन्दुभीननुवेद्यन्तꣳसंमिन्वन्ति । प्रतीच ऽआग्नीध्रात्प्रजापतिं वाऽएष ऽउज्जयति यो वाजपेयेन यजते वाग्वै प्रजापतिरेषा वै परमा वाग्या सप्तदशानां दुन्दुभीनां परमामेवैतद्वाचं परमं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥६॥ अथैतेषां दुन्दुभीनाम् । एकं यजुषा हन्ति तत्सर्व्वे यजुषा हता भवन्ति ॥७॥

१. नाभिदघ्न इति. क. २. लोकमेवेति. ङ. ३. क्रियत इति. ङ. ४–६, ८. मा. सं. ९. १०. ७. ब्राह्मण इति. ङ. ब्राह्मणः इति. ख.

स ऽआहन्ति । "बृहस्पते व्वाजं जय बृहस्पतये व्वाचं व्वदत बृहस्पतिं व्वाजं जापयते"ति य्यदि ब्राह्मणो य्यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः ॥८॥ अथ य्यदि राजन्यो य्यजते । "इन्द्र व्वाजं जयेन्द्राय व्वाचं वदतेन्द्रं वाजं जापयते"ति क्षत्रꣳ ह्यिन्द्रः क्षत्रꣳ राजन्यः ॥९॥ अथैतेष्वाजिसृत्सु रथेषु । पुनरासृजतेष्वेतेषां दुन्दुभीनामेकं यजुषोपावहराति तत्सर्वं य्यजुषोपावहृता भवन्ति ॥१०॥ स ऽउपावहरति । "एषा वः सा सत्या संव्वागभूद्यया बृहस्पतिं व्वाजमजीजपताजीजपत बृहस्पतिं व्वाजं व्वनस्पतयो व्विमुच्यध्वमि"ति य्यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः ॥११॥ अथ यदि राजन्यो य्यजते । "एषा वः सा सत्या संवागभूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं व्वाजं व्वनस्पतयो व्विमुच्यध्व"मिति क्षत्रꣳ ह्यिन्द्रः क्षत्रꣳ राजन्यः ॥१२॥ अथ व्वेद्यन्तात् । राजन्य ऽउदङ् सप्तदश प्रव्याधान् प्रविध्यति यावान्वाऽएकः प्रव्याधस्तावांस्तिर्यङ् प्रजापतिरथ य्यावत्सप्तदश प्रव्याधास्तावानन्वङ् प्रजापतिः ॥१३॥ तद्यद्राजन्यः प्रविध्यति । एष वै प्रजापतेः प्रत्यक्षतमां यद्राजन्यस्तस्मादेकः सन् बहूनामीष्टे य्यद्वेव चतुरक्षरः प्रजापतिश्चतुरक्षरो राजन्यस्तस्माद्राजन्यः प्रविध्यति सप्तदश प्रव्याधान् प्रविध्यति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥१४॥ अथ यं य्यजुषा युनक्ति । तं य्यजमान ऽआतिष्ठति "देवस्याहꣳ सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो व्वाजं जेष"मिति ॥१५॥ तद्यथैवादो बृहस्पतिः । सवितारं प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत ऽइदमुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत्सवितृप्रसूत ऽउदजयदेवमेवैष ऽएतत्सवितारमेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत ऽइदमुज्जया-

---

१, ३. मा सं ९. ११. २. ब्राह्मण इति. ग. ४. उपावहरतीति घ.
५, ७. मा. ९. १२. ६. ब्राह्मणः इति ख. ८. मा. सं. ९. १३.

नीति तदस्मै सविता प्रसविता प्रसौति तत्सावितृप्रसूत ऽउज्जयति ॥१६॥ अथ यय्ध्वर्योः। अन्तेवासी वा ब्रह्मचारी[1] वैतद्यजुरधीयात्सोऽन्वास्थाय वाचयति "वाजिन"[2] ऽइति वाजिनो ह्यश्वस्तस्मादाह वाजिन ऽइति "वाजंजित"[3] ऽइत्यन्नं वै वाजोऽन्नजित ऽइत्येवैतदाहा "ध्वनः[4] स्कभ्नुवन्त" ऽइत्यध्वनो हि स्कभ्नुवन्तो धावन्ति "योजना[5] मिमाना" ऽइति योजनशो हि मिमानाऽअध्वानं धावन्ति "काष्ठां[6] गच्छते"ति यथैनानन्तराऽनाष्ट्रा रक्षाᳫंसि न हिᳫंस्युरेवमेतदाह धवन्त्याजिमाघ्नन्ति दुन्दुभीनभिसाम गायति ॥१७॥ अथैताभ्यां जगतीभ्याम् । जुहोति वानु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान ऽएव बन्धुः ॥१८॥ स जुहोति। "एष[7] स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो ऽअपिकक्ष ऽआसनि । क्रतुं दधिक्राऽअनु सᳫंसनिष्यदत्पथामङ्काᳫंस्यन्वापनीफणत्स्वाहा ॥ १९ ॥ "उत[8] स्म । अस्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्द्धिनः । श्येनस्येव ध्रजतोऽ अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहे"ति॥२०॥ अथोत्तरेण त्रिंचेन । जुहोति वानु वा मन्त्रयते द्वयं तद्यस्माज्जुहोति वाऽनु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान ऽएव बन्धुरेतानेवैतदश्वान्धावत ऽउपवाजयत्येतेषु वीर्यं दधाति तिस्रो वाऽ इमाः पृथिव्य ऽइयमहैका द्वे ऽअस्याः परेता ऽएवैतदुज्जयति ॥२१॥ सोऽनुमन्त्रयते । "शं[9] नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः[10] । जम्भयन्तोऽहिं वृकᳫं रक्षाᳫंसि सनेम्यस्मद्युयवन्नमीवाः" ॥२२॥ "ते[11] नो ऽअर्वन्तः । हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनोमितद्रवः । सहस्रसा मेधसाता सनिष्यवो महो ये धनᳫं समिथेषु जभ्रिरे ॥२३॥ "वाजे[12] वाजेऽवत । वाजिनो नो धनेषु विप्राऽअमृता ऽऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथि-

---

१. ब्रह्मचारी इति. क.    २–६. मा. सं ९. १३.    ७. मा. सं. ९. १४.
८. मा. स. ९. १५.    ९. मा. सं. ९. १६.    १०. स्वर्काः इति. घ.
११. मा. सं. ९. १७.    १२. मा. सं. ९. १८.

भिर्द्देवयानै''रिति ॥२४॥ अथ बार्हस्पत्येन चरुणा प्रत्युपतिष्ठते । तमुपस्पृशत्यन्नं वाऽ एष ऽउज्जयति यो वाजपेयेन यजते ऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्वा सꣳस्पृशते तदात्मन् कुरुते ॥२५॥ स उपस्पृशति । ''आ मा वाजस्य प्रसवो जगम्या''दित्यन्नं वै वाज ऽआ मान्नस्य प्रसवो जगम्यादित्येवैतदाह''मे द्यावापृथिवी विश्वरूपे''ऽइति द्यावापृथिवी हि प्रजापति''रा मा गन्तां पितरा मातरा चे''ति मातेव च हि पितेव च प्रजापति''रा मा सोमो ऽअमृतत्वेन गम्यादि''ति सोमो हि प्रजापतिः ॥२६॥ तमश्वानवघ्रापयति । ''वाजिन'' ऽइति वाजिनो ह्यश्वास्तस्मादाह वाजिन ऽइति ''वाजजित'' इत्यन्नं वै वाजोऽन्नजित ऽइत्येवैतदाह ''वाजꣳ ससृवाꣳꣳस'' ऽइति सरिष्यन्त ऽइति वाऽअग्रऽआह सरिष्यन्त ऽइव हि तर्हि भवन्त्यथात्र ससृवाꣳꣳस ऽइति ससृवाꣳꣳसऽइव ह्यत्र भवन्ति तस्मादाह ससृवाꣳꣳस ऽइति ''बृहस्पतेर्भागमवजिघ्रते''ति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भागमवजिघ्रतेति ''निमृजाना'' ऽइति तद्यजमाने वीर्यं दधाति तद्यदश्वानवघ्रापयतीममुज्जयानीति वाऽअग्रेऽवघ्रापयत्यथात्रेममुदजैषमिति तस्माद्वाऽअश्वानवघ्रापयति ॥२७॥ अथैतेषामाजिसृताꣳ रथानाम् । एकस्मिन्वैश्यो वा राजन्यो वोपास्थितो भवति स वेदेरुत्तरायाꣳ श्रोणाऽउपविशत्यथाध्वर्युश्च यजमानश्च पूर्वया द्वारा मधुग्रहमादाय निष्क्रामतस्तं वैश्यस्य वा राजन्यस्य वा पाणावाधत्तोऽथ नेष्टा परया द्वारा सुराग्रहानादाय निष्क्रामति स जघनेन शालां पर्येत्यैकं वैश्यस्य वा राजन्यस्य वा पाणावादधदाहानेन तऽइमं निष्क्रीणामीति सत्यं वै श्रीर्ज्योतिः सोमोऽनृतं पाप्मा तमः सुरा सत्यमेवैतच्छ्रियं ज्योतिर्यजमाने दधात्यनृतेन पाप्मना तमसा वैश्यं विध्यति तैः स यं भोगं कामयते तं कुरुतेऽथैतꣳ सहिरण्यपात्रमेव मधुग्रहं

१-९. मा. सं. ९. १९.  १०. आजिश्रिताꣳ इति. क. च.

ब्रह्मणे ददाति तं ब्रह्मणे ददमृतमायुरात्मन्धत्तेऽमृतꣳ ह्यायुर्हिरण्यं तेन स स्वं भोगं कामयते तं कुरुते ॥२८॥ Cf. का. श. ६. २. १; तै. ब्रा. १. ३. ५; मै. सं. १. ११. ७; कठ. सं. १४. ७, ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. १. ५. )

( प्रथमोऽध्यायः समाप्तः )

५. १. ६.
( यूपारोहणम् )

अथ स्रुवं चाज्यविलापनीं चादाय । आहवनीयमभ्यैति स एता द्वादशाप्तीर्जुहोति वा व्वाचयति वा य्यदि जुहोति यदि व्वाचयति समानऽ एव बन्धुः ॥१॥ स जुहोति । "आपये स्वाहा स्वापये स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा व्वसवे स्वाहाऽहर्पतये स्वाहाऽह्ने मुग्धाय स्वाहा मुग्धाय व्वैनꣳशिनाय स्वाहा व्विनꣳशिनऽआन्त्यायनाय स्वाहाऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाऽधिपतये स्वाहे"त्येता द्वादशाप्तीर्जुहोति द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यैवास्याप्तिर्या सम्पत्तामेवैतदुज्जयति तामात्मन् कुरुते ॥२॥ अथ षट् क्लृप्तीः । जुहोति वा व्वाचयति वा यदि जुहोति यदि व्वाचयति समान ऽएव बन्धुः ॥३॥ स व्वाचयति । "आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतामि"त्येताः षट् क्लृप्तीर्वाचयति षड्वाऽऋतवस्संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यैवास्य क्लृप्तिर्या सम्पत्तामेवैतदुज्जयति तामात्मन् कुरुते ॥४॥ अष्टाश्रिर्यूपो भवति । अष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दो देवलोकमेवैतेनोज्जयति सप्तदशभिर्वासोभिर्यूपो व्वेष्टितो वा व्विग्रथितो वा भवति सप्तदशो वै प्रजापति-

१. मा. सं. ९. २०.   २. आत्मन् इति. ग.   ३. मा. सं. ९. २१

तत्प्रजापतिमुज्जयति ॥५॥ गौधूमं चषालं भवति । पुरुषो वै प्रजापतेर्नेदिष्ठꣳ सोऽयमत्वगेते वै पुरुषस्यौषधीनां नेदिष्ठतमां यद्गोधूमास्तेषां न त्वगस्ति मनुष्यलोकमेवैतेनोज्जयति ॥६॥ गर्तन्वान्यूपोऽतीक्ष्णाग्रो भवति । पितृदेवत्यो वै गर्त्तः पितृलोकमेवैतेनोज्जयति सप्तदशारत्निर्भवति सप्तदशो वै प्रजापतिस्तद्प्रजापतिमुज्जयति ॥७॥ अथ नेष्टा पत्नीमुदानेष्यन् । कौशं वासः परिधापयति कौशं वा चण्डातकमन्तरं दीक्षितवसनाज्जघनार्द्धो वाऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रसादयिष्यन् भवत्यस्ति वै पत्न्या ऽअमेध्यं यदवाचीनं नाभेर्मेध्या वै दर्भास्तद्यदेवास्या अमेध्यं तदेवास्या ऽएतद्दर्भैर्मेध्यं कृत्वाथैनां प्राचीं यज्ञं प्रसादयति तस्मान्नेष्टा पत्नीमुदानेष्यन् कौशं वासः परिधापयति कौशं वा चण्डातकमन्तरं दीक्षितवसनात् ॥८॥ अथ निश्रयणीं निश्रयति । स दक्षिणत उदङ् रोहेदुत्तरतो वा दाक्षिणा दक्षिणतस्त्वेवोदङ् रोहेत्तथा ह्युदग्भवति ॥९॥ स रोक्ष्यन् जायामामन्त्रयते । "जायऽएहि स्वो रोहावे"ति रोहावेत्याह जाया तद्यज्जायामामन्त्रयतेऽर्द्धो ह वाऽएष ऽआत्मनो यज्जाया तस्माद्याव ज्जायां न विन्दते नैव तावत्प्रजायतेऽसर्वो हि तावद्भवत्यथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि हि सर्व्वो भवति सर्व्व ऽएतां गतिं गच्छानीति तस्माज्जायामामन्त्रयते ॥१०॥ स रोहति । "प्रजापतेः प्रजाऽ अभूमे"ति प्रजापतेर्ह्येष प्रजा भवति यो वाजपेयेन यजते ॥११॥ अथ गोधूमानुपस्पृशति । "स्वर्देवा ऽअगन्मे"ति स्वर्ह्येष गच्छति यो वाजपेयेन यजते ॥१२॥ तद्यद्गोधूमानुपस्पृशति । अन्नं वै गोधूमा अन्नं वाऽएष ऽउज्जयति यो वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्वा सꣳस्पृशते तदात्मन् कुरुते तस्माद्गोधूमानुपस्पृशति ॥१३॥ अथ शीर्ष्णो यूपमत्युज्जिहीते । "अमृता ऽअभूमे"ति देवलोकमेवैतेनोज्जयति॥१४॥

१-३. मा. सं. ९. २१.

अथ दिशोऽनुवीक्षमाणो[1] जपति । "अस्मे वोऽअस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मे व्वर्चाᳬसि सन्तु व" ऽइति सर्व्वं वाऽएष ऽइदमुज्जयति यो व्वाजपेयेन यजते प्रजापतिᳬ ह्युज्जयति सर्व्वमु ह्येवेदं प्रजापतिः सोऽस्य सर्व्वस्य यश ऽइन्द्रियं व्वीर्यᳬ संवृज्य तदात्मन्धत्ते[3] तदात्मन् कुरुते तस्माद्दिशोऽनुवीक्षमाणो[4] जपति[5] ॥१५॥ (शतम् ३०००) अथैनमूषपुटैरनूदस्यन्ति । पशवो वाऽऊषा ऽअन्नं वै पशवो ऽन्नं वा ऽएष ऽउज्जयति यो व्वाजपेयेन यजतेऽन्नपेयᳬ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गातिं गत्वा सᳬस्पृशते तदात्मन् कुरुते तस्मादेनमूषपुटैरनूदस्यन्ति[6] ॥१६॥ आश्वत्थेषु पलाशेषूपनद्धा भवन्ति । स यदेवादोऽश्वत्थे तिष्ठत ऽइन्द्रो मरुत ऽउपामन्त्रयत तस्मादाश्वत्थेषु पलाशेषूपनद्धा भवन्ति व्विशोऽनूदस्यन्ति व्विशो वै मरुतोऽन्नं[7] वै[8] व्विशास्तस्माद्विशोऽनूदस्यन्ति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति[9] ॥१७॥ अथेमामुपावेक्षमाणो जपति[10] । "नमो[11] मात्रे पृथिव्यै नमो मात्रे पृथिव्या" ऽइति बृहस्पतेर्ह वाऽअभिषिषिचानात्पृथिवी बिभयांचकार महद्वाऽअयमभूद्योऽभ्यषेचि यद्वै मायं नावदृणीयादिति बृहस्पतिर्ह पृथिव्यै बिभयांचकार यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रᳬ हिनस्ति न पुत्रो मातरम् ॥१८॥ बृहस्पतिसवो वाऽएष यद्वाजपेयम् । पृथिव्यु हैतस्माद्बिभेति महद्वाऽअयमभूद्योऽभ्यषेचि यद्वै मायं नावदृणीयादित्येष ऽउ हास्यै बिभेति यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रᳬ हिनस्ति

---

१, ४. अनुवीक्ष्यमाण इति. ग. २. मा. सं. ९. २२.　३. धत्ते इति. ग.

५. जपति. इति. ग.　६. अनूदस्यति इति. च.

७. मरुतोऽअन्नमिति ५.　८. वै इति नाऽस्ति. ग. घ.

९. मुज्जयति इति. ख, घ, च. १०. भवति इति. च. ११. मा. सं. ९. २२.

न पुत्रो मातरम् ॥१९॥ अथ हिरण्यमभ्यवरोहति । अमृतमायुर्हिर-ण्यं तदमृतऽआयुषि प्रतितिष्ठति[1] ॥२०॥ अथाजर्षभस्याजिनमुपस्तृ-णाति । तदुपरिष्टाद्रुक्मं निदधाति तमभ्यवरोहतीमां वैव ॥२१॥ अथा-स्माऽआसन्दीमाहरन्ति उपरिसद्यं[2] वाऽएष जयति यो जयत्यन्तरिक्ष-सद्यं तदेनमुपर्यासीनमधस्तादिमाः प्रजा ऽउपासते तस्मादस्माऽआ-सन्दीमाहरन्ति[3] ॥२२॥ औदुम्बरी भवति[4] । अन्नं वाऽऊर्गुदुम्बरऽऊर्ज्जो-ऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरी भवति तामग्रेण हविर्द्धाने जघने-नाहवनीयं निदधाति[5] ॥२३॥ अथाजर्षभस्याजिनमास्तृणाति । प्रजा-पतिर्वाऽएष यदजर्षभ ऽएता वै प्रजापतेः[6] प्रत्यक्षतमां यदजास्तस्मा-देतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति तत्प्रजा-पतिमेवैतत्करोति तस्मादजर्षभस्याजिनमास्तृणाति । ॥२४॥ स ऽआ-स्तृणाति । "इयं ते राड्[7]"इति राज्यमेवास्मिन्नेतद्दधात्यथैनमासा-दयति "यन्तासि यमन" ऽइति यन्तारमेवैनमेतद्यमनमासां प्रजानां करोति "ध्रुवोऽसि धरुण" ऽइति ध्रुवमेवैनमेतद्धरुणमस्मिँल्लोके क-रोति "कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वे"[10]ति साधवे त्वेत्ये-वैतदाह ॥२५॥ Cf. का. श. ६. २. २; तै. ब्रा. १. ३. ६; मै. सं. १. ११. ८; कठ. सं. १४. ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
पथमप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. २. १. )

प्रथमः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ११७ )

---

१. तिष्ठति इति ग. घ, च. तिष्ठति इति ख.

२. सद्यं इति. ग.

३. माहरन्ति इति. च.

४. भवति इति. ख, ग.

५. निदधाति इति. ग.

६. प्रजापतिरिति. ख, च.

७–१०. मा सं. ९. २२.

## ५. २. १.

### ( नैवारचरुः )

बार्हस्पत्येन चरुणा प्रचरति । तस्यानिष्ट ऽएव स्विष्टकृद्भवत्यथास्मा ऽअन्नꣳ सम्भरत्यन्नं वा[१] ऽएष ऽउज्जयति यो व्वाजपेयेन य्यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तदेवास्मा ऽएतत्सम्भरति[२] ॥१॥ औदुम्बरे पात्रे । अन्नं वा ऽऊर्गुदुम्बर ऽऊर्ज्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरे पात्रे सोऽप ऽएव प्रथमाः सम्भरत्यथ पयोऽथ य्यथोपस्मारम्[३]न्नानि ॥२॥ तद्धैके[४] । सप्तदशान्नानि सम्भरन्ति सप्तदशः प्रजापतिरिति[५] व्वदन्तस्तदु[६] तथा न कुर्यात्प्रजापतेर्न्वेव सर्व्वमन्नमनवरुद्धं क ऽउ तस्मै मनुष्यो यः सर्व्वमन्नमवरुन्धीत[७] तस्मादु सर्व्वमेवान्नं य्यथोपस्मारꣳ सम्भरन्नैकमन्नं न सम्भरेत् ॥३॥ स यन्न सम्भरति । तस्योद्ब्रुवीत तस्य नाश्नीयाद्यावज्जीवं तथा नान्तमेति तथा ज्योग्जीवति स ऽएतस्य सर्व्वस्यान्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं व्वाजप्रसवीयानि जुहोति तद्याभ्य ऽएवैतद्देवताभ्यो जुहोति ता ऽअस्मै प्रसुवन्ति ताभिः प्रसूत ऽउज्जयति तस्माद्वाजप्रसवीयानि जुहोति ॥४॥ स जुहोति । "व्वाजस्येमं[८] प्रसवः सुषुवेऽग्रे सोमꣳ राजानमोषधीष्वप्सु । ता ऽअस्मभ्यं मधुमतीर्भवन्तु व्वयꣳ राष्ट्रे जागृयाम पुरोहिताः स्वाहा" ॥५॥ "व्वाजस्येमाम्[९] । प्रसवः शिश्रिये दिवमिमा च व्विश्वा भुवनानि सम्राट्[१०] । अदित्सन्तं दापयति प्रजानन्त्स नो रयिꣳ सर्व्ववीरं नियच्छतु स्वाहा" ॥६॥ "व्वाजस्य[११] नु । प्रसव ऽआबभूवेमा च व्विश्वा भुवनानि सर्वतः । सनेमि राजा

---

१. वा इति ग, घ. २. संभरति इति. च. ३. यथोपस्मारमिति. ग.
४. तद्धैक इति. घ. ५. प्रजापतिरिति. ग, घ. ६. तदु. इति. घ.
७. अवरुन्धति इति घ, च. ८. मा. सं. ९. २३. ९. मा. सं. ९. २४.
१०. सम्राट् इति च. ११. मा. सं. ९. २५. See. तै. सं. १. ७. १०. १.

पॅरियाति व्विद्वान् प्रजां पुष्टिं व्वर्द्धयमानोऽअस्मे स्वाहा" ॥७॥ "सोमॅ राजानम् । अवसेऽग्निमन्वारभामहे । आदित्यान्विष्णुॅ सूर्य्यं ब्रह्माणं च बृहस्पतिॅ स्वाहा" ॥८॥ "अर्य्यमणं बृहस्पतिम् । इन्द्रं दानाय चोदय । व्वाचं व्विष्णुॅ सरस्वतीॅ सवितारं च व्वाजिनॅ स्वाहा"॥९॥ "अग्नेऽअच्छा । व्वदेह नः प्रति नः सुमना भव । प्र नो य्यच्छ सहस्रजित्वॅ हि धनदा ऽअसि स्वाहा"॥१०॥"प्र नः । य्यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः। प्र व्वाग्देवी ददातु नः स्वाहे"ति ॥११॥ अथैनं परिशिष्टेनाभिषिञ्चति । अन्नाद्येनैवेनमेतदभिषिञ्चत्यन्नाद्यमेवास्मिन्नेतद्दधाति तस्मादेनं परिशिष्टेनाभिषिञ्चति ॥१२॥ सोऽभिषिञ्चति । "देवॅस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या"मिति देवहस्तैरेवैनमेतदभिषिञ्चति "सरस्वत्यै व्वाचो य्यन्तुर्यन्त्रिये दधामी"ति व्वाग्वै सरस्वती तदेनं व्वाच ऽएव य्यन्तुर्यन्त्रिये दधाति ॥१३॥ तदु हैकऽआहुः। व्विश्वेषां त्वा देवानां य्यन्तुर्यन्त्रिये दधामीति सर्वं वै व्विश्वे देवास्तदेनॅ सर्वस्यैव य्यन्तुर्यन्त्रिये दधाति तदु तथा न ब्रूयात्सरस्वत्यै त्वा व्वाचो य्यन्तुर्यन्त्रिये दधामीत्येव ब्रूयाद्वाग्वै सरस्वती तदेनं व्वाच ऽएव यन्तुर्यन्त्रिये दधाति "बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसा"विति नाम गृह्णाति तद्बृहस्पतेरेवैनमेतत्सायुज्यॅ सलोकतां गमयति ॥१४॥ अथाह । सम्राडयमसौ सम्राडयमसाविति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयेत्ययं महावीर्यो य्योऽभ्यषेचीत्ययं य्युष्माकैकोऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्व ऽआह त्रिवृद्धि य्यज्ञः ॥१५॥ अथोज्जितीः । जुहोति वा व्वाचयति वा य्यदि जुहोति य्यदि व्वाचयति समान ऽएव बन्धुः ॥१६॥ स व्वाचयति । "अग्निरेकाक्षरेण प्राणमुदजयत्त-

---

१ परियाति. इति ग. २-५. मा. सं. ९. २६-२९. ६. स्वाहेति. च. ७-९. मा.सं. ९. ३० १०. यज्ञ इति घ, यज्ञ इति च. ११ मा. स. ९. ३१-३४. See मै. सं. १.११.१०. and काठ. सं. १४.४.

मुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्तदशᳬ स्तोममुदजयत्तमुज्जेष"मिति तद्यदेवैताभिरेता देवता ऽउदजयंस्तदेवैष ऽएताभिरुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥१७॥ अथाहा"ग्नये स्विष्टकृतेऽनुब्रूही"ति । तद्यदन्तरेणाहुतीऽएतत्कर्म क्रियतऽएष वै प्रजापतिर्य्य ऽएष यज्ञस्तायते य्यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत[2] ऽएवैतत्प्रजापतिमुज्जयति तस्मादन्तरेणाहुतीऽएतत्कर्म क्रियत[3]ऽआश्राव्याहाग्निᳬ स्विष्टकृतं य्यजेति व्वषट्कृते जुहोति ॥१८॥ अथेडामादधाति । उपहूतायामिडायामप ऽउपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तᳬ स्तोत्राय प्रमीवति स ऽउपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥१९॥ तद्धैके । एतत्कृत्वाथैतत्कुर्वन्ति तदु तथा न कुर्यादात्मा वै स्तोत्रं प्रजा शस्त्रमेतस्माद्ध स य्यजमानं प्रणाशयति स जिह्म ऽएति स ह्वलति तस्मादेतदेव कृत्वाथैतत्कुर्यात् ॥२०॥ अथेडामादधाति । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तᳬ स्तोत्राय प्रमीवति स ऽउपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य॥२१॥ Cf.का.श. ६. २, ३; तै. ब्रा. १. ३. ८; मै. सं. १. ११. ८-१०; काठ. सं. १४. ७, ९.

इति माध्यदिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. २. २. )

## ५. २. २.

### ( राजसूयः, अनुमत्यादीष्टयः )

पूर्णाहुतिं जुहोति । सर्व्वं वै पूर्णᳬ सर्व्वं परिगृह्य सूयाऽइति

---

१. मुज्जयति इति. च.   २. मध्यतः इति. ग.   ३. क्रियत इति. च.

तस्यां व्वरं ददाति सर्व्वं वै व्वरः सर्व्वं परिगृह्य सूयाऽइति स यदि कामयेत जुहुयादेतां यद्यु कामयेतापि नाद्रियेत[1] ॥१॥ अथ श्वो[2] भूते । अनुमत्यै हविरष्टाकपालं पुरोडाशं निर्व्वपति स ये जघनेन शम्यां पिष्यमाणानामवशीयन्ते पिष्टानि वा तण्डुला[3] वा तान्त्सुवे सार्द्धᳬ संवपत्यन्वाहार्यपचनादुल्मुकमाददते तेन दक्षिणा यन्ति स यत्र स्वकृतं व्वेरिणं व्विन्दति श्वभ्रप्रदरं वा ॥२॥ तदग्निᳬ समाधाय जुहोति । "एषं[4] ते निर्ऋते भागस्तं जुषस्व स्वाहे"तीयं वै निर्ऋतिः सा यं पाप्मना गृह्णाति तं निर्ऋत्या गृह्णाति तद्यदेवास्या ऽअत्र नैर्ऋतᳬरूपं तदेवैतच्छमयति तथो हैनᳬ सूयमानं निर्ऋतिर्न्न गृह्णात्यथ यत्स्वकृते व्वेरिणे जुहोति श्वभ्रप्रदरे वैतदु ह्यस्यै निर्ऋतिगृहीतम् ॥३॥ अथाप्रतीक्षं पुनरायन्ति । अथानुमत्याऽअष्टाकपालेन पुरोडाशेन प्रचरतीयं वा ऽअनुमतिः स यस्तत्कर्म शक्नोति कर्तुं यच्चिकीर्षतीयᳬ हास्मै तदनु मन्यते तदिमामेवैतत्प्रीणात्यनयानुमत्यानुमतः सूयाऽइति[5] ॥४॥ अथ यदष्टाकपालो भवति । अष्टाक्षरा वै गायत्री गायत्री वाऽइयं पृथिव्यथ यत्समानस्य हविष ऽउभयत्र जुहोत्येषा ह्येवैतदुभयं तस्य व्वासो दक्षिणा यद्वै सवासा ऽअरण्यं नोदाशᳬसते निधाय वै तद्वासोऽतिमुच्यते तथो हैनᳬ सूयमान[6]मासङ्गो न व्विंन्दति[7] ॥५॥ अथ श्वो भूते । आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्व्वपति तेन यथेष्ट्यैवं यजते तद्यदेवादः प्रज्ञातमा[8]ग्नावैष्णवं दीक्षिणीयᳬ हविस्तदेवैतदग्निर्वै सर्व्वा देवता ऽअग्नौ हि सर्व्वाभ्यो देवताभ्यो जुह्वत्यग्निर्व्वै यज्ञस्यावरार्ध्यो व्विष्णुः परार्ध्यस्तत्सर्व्वाश्चैवैतद्देवताः परिगृह्य सर्व्वं च यज्ञं परिगृह्य सूयाऽइति तस्मादाग्नावैष्णव ऽएकादशकपालः पुरोडाशो भवति तस्य हिरण्यं दक्षिणा-

---

१. नाद्रियेत इति. च  २. श्वो भूते इति. ख, ग घ.  ३. तण्डुलानि इति. च.
४. मा. सं. ९. ३५.  ५. इति इति ख, च  ६. सूयमान इति. ख. ग. घ.
७. विन्दति इति. च.  ८. प्रजातमिति. ग, घ.  ९. See. ऐ. ब्रा. १. १. १

ग्नेयो वाऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं यो वै विष्णुः स यज्ञोऽ-
ग्निरु वै यज्ञ ऽएव तदु तदाग्नेयमेव तस्माद्धिरण्यं दक्षिणा ॥६॥ अथ
श्वो भूते । अग्नीषोमीयमेकादशकपालं पुरोडाशं निर्व्वपति तेन यथे-
ष्ट्यैवं यजतऽएतेन वाऽइन्द्रो व्वृत्रमहन्नेतेनोऽएव व्यजयत यास्येयं
व्विजितिस्तां तथोऽएवैष ऽएतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति
तथोऽएव व्विजयते व्विजितेऽभयेऽनाष्ट्रे सूयाऽइति तस्मादग्नीषोमीय
ऽएकादशकपालः पुरोडाशो भवति तस्योत्सृष्टो गौर्द्दक्षिणोत्सर्जं वाऽ-
अमुं चन्द्रमसं घ्नन्ति पौर्णमासेनाह घ्नन्त्यामावास्येनोत्सृजन्ति त-
स्मादुत्सृष्टो गौर्द्दक्षिणा ॥७॥ अथ श्वो भूते । ऐन्द्राग्नं द्वादशकपालं
पुरोडाशं निर्व्वपति तेन यथेष्ट्यैवं यजते यत्र वाऽइन्द्रो व्वृत्रमहंस्त-
दस्य भीतस्येन्द्रियं व्वीर्यमपचक्राम स ऽएतेन हविषेन्द्रियं व्वीर्यं पुन-
रात्मन्नधत्त तथोऽएवैष ऽएतेन हविषेन्द्रियं व्वीर्यमात्मन्धत्ते तेजो वा-
ऽअग्निरिन्द्रियं व्वीर्यमिन्द्र ऽउभे व्वीर्ये परिगृह्य सूयाऽइति तस्मादैन्द्राग्नो
द्वादशकपालः पुरोडाशो भवति तस्यर्षभोऽनड्वान्दक्षिणा स हि
व्वहेनाग्नेय ऽआण्डाभ्यामैन्द्रस्तस्मादृषभोऽनड्वान्दक्षिणा ॥८॥ अथा-
ग्रयणेष्ट्या यजते । सर्वान्वाऽएष यज्ञक्रतूनवरुन्धे सर्वा ऽइष्टीरपि द-
र्विहोमान्यो राजसूयेन यजते देवसृष्टो वाऽएषेष्टिर्यदाग्रयणेष्टिरनया
मेऽपीष्टमसदनयापि सूयाऽइति तस्मादाग्रयणेष्ट्या यजतऽओषधीर्व्वा-
ऽएष सूयमानोऽभिसूयते तदोषधीरेवैतदनमीवा ऽअकिल्बिषाः कुरुते-
ऽनमीवा ऽअकिल्बिषा ऽओषधीरभि सूयाऽइति तस्य गौर्द्दक्षिणा ॥९॥
अथ चातुर्मास्यैर्यजते । सर्व्वान्वाऽएष यज्ञक्रतूनवरुन्द्धे सर्व्वाऽइष्टीरपि
दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वाऽएष यज्ञक्रतुर्यच्चातुर्मा-
स्यान्येभिर्मेऽपीष्टमसदेभिरपि सूयाऽइति तस्माच्चातर्मास्यैर्यजते ॥१०॥

---

१. दक्षिणा इति च.  २. तेन इति घ.  ३. एतेनो इति. ग.
४. घ्नन्तीति. ग.  ५–७. दक्षिणा इति. च  ८. यजते इति. ङ.

Cf. का. श. ७. १. १; तै. सं. १. ८. १; तै. ब्रा. १. ६. १; मै. सं. २. ६. १; कठ. सं. १५. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ. २. ३.)

## ५. २. ३.

## ( चातुर्मास्यानि )

वैश्वदेवेन यजते । वैश्वदेवेन वै प्रजापतिर्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूयाऽइति तथोऽएवैषऽएतद्वैश्वदेवेनैव भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूयाऽइति ॥१॥ अथ वरुणप्रघासैर्यजते । वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात्प्रामुञ्चत्ताऽअस्यानमीवाऽअकिल्बिषाः प्रजाः प्राजायन्तानमीवा ऽअकिल्बिषाः प्रजाऽअभिसूयाऽइति तथोऽएवैषऽएतद्वरुणप्रघासैरेव प्रजा वरुणपाशात्प्रमुञ्चति ताऽअस्यानमीवाऽअकिल्बिषाः प्रजाः प्रजायन्तेऽनमीवाऽअकिल्बिषाः प्रजाऽअभि सूयाऽइति ॥२॥ अथ साकमेधैर्यजते । साकमेधैर्वै देवा वृत्रमघ्नंस्तैर्वैव व्यजयन्त येयमेषां विजितिस्तां तथोऽएवैषऽएतैः पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथोऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूयाऽइति ॥३॥ अथ शुनासीर्य्येण यजते । उभौ रसौ परिगृह्य सूयाऽइत्यथ पञ्चवातीयꣳ स पञ्चधाहवनीयं व्युह्य स्रुवेणोपघातं जुहोति ॥४॥ स पूर्वार्ध्ये जुहोति । "अग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यःस्वाहे"त्यथ दक्षिणार्ध्ये जुहोति "यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहे"त्यथ पश्चार्ध्ये जुहोति "विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहे"त्यथोत्तरार्ध्ये जुहोति "मित्रावरुणनेत्रे-

---

१. इति ख, च  २. अनमीवा इति. ग.  ३. प्रजा इति. ग.
४, ५. इति इति. च.  ६. इत्यथेति. ग, घ.  ७–१०. मा. सं. ९. ३५.

भ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य ऽउत्तरासद्भ्यः स्वाहे''त्यथ मध्ये जुहोति ''सोमनेत्रेभ्यो देवेभ्यऽउपरिसद्भ्यो दुवस्वद्भ्यः स्वाहे''ति ॥५॥ अथ सार्द्धंᳲ समुह्य जुहोति । ''ये देवा ऽअग्निनेत्राः पुरः सदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा ये देवा मित्रावरुण नेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्रा ऽउपरिसदो दुवस्वन्तस्तेभ्यः स्वाहे''ति तद्यदेवं जुहोति ॥६॥ यत्र वै देवाः । साकमेधैर्व्यजयन्त येयमेषां विजितिस्तां तद्वोचुरुत्पिबन्ते वाऽइमानि दिक्षु नाष्ट्रा रक्षांᳲसि हन्तैभ्यो वज्रं प्रहरामेति वज्रो वा ऽआज्यं तऽएतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षांᳲस्यवाघ्नंस्ते व्यजयन्त येयमेषां विजितिस्तां तथोऽएवैषऽएतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षांᳲस्यवहन्ति तथोऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूयाऽइति ॥७॥ अथ यदेताऽअपराः पञ्चाहुतीर्जुहोति । क्षण्वन्ति वाऽएतदग्नेर्विवृहन्ति यत्पञ्चधाहवनीयं व्यूहन्ति तदेवास्यैतेन सन्दधाति तस्मादेताऽअपराः पञ्चाहुतीर्जुहोति ॥८॥ तस्य प्रष्टिवाहनोऽश्वरथो दक्षिणा । त्रयोऽश्वा द्वौ सव्यष्टृसारथी ते पञ्च प्राणा यो वै प्राणः स वातस्तद्यदेतस्य कर्मणऽएषा दक्षिणा तस्मात्पञ्चवातीयं नाम ॥९॥ स हैतेनापि भिषज्येत् । अयं वै प्राणो योऽयं पवते यो वै प्राणः सऽआयुः सोऽयमेकऽइवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा विहितो दश वाऽएताऽआहुतीर्जुहोति तदस्मिन्दश प्राणान् कृत्स्नमेव सर्वमायुर्दधाति स यदिहापि गतासुरिव भवत्याहैवैनेन हरति ॥१०॥ अथेन्द्रतुरीयम् । आग्नेयोऽष्टाकपालः पुरोडाशो भवति वारुणो यवमयश्चरू रौद्रो गावेधुकश्चरुरनडुह्यै वहलायाऽऐन्द्रं

---

१. मा. सं. ९. ३५.　　२. स्वाहेति इति. ग, घ.　　३. मा. सं. ९. ३६.
४. सदस्तेभ्य इति. ग.　　५. तद्यदेवमिति. ग.　　६. प्रहरामेति इति ग.
७. पवते इति. ग.　　८. हरति. इति. च　　९. चरुः इति ग, घ.

दधि तेनेन्द्रतुरीयेण यजतऽइन्द्राग्नी ऽउ हैवैतत्समूदातेऽउत्पिबन्ते वाऽइमानि दिक्षु नाष्ट्रा रक्षाꣳसि हन्तैभ्यो वज्रं प्रहरावेति ॥११॥ स हाग्निरुवाच । त्रयो मम भागाः सन्त्वेकस्तवेति तथेति तावेतेन हविषा दिक्षु नाष्ट्रा रक्षाꣳस्यवाहतां तौ व्यजयेतां यैनयोरियं विजितिस्तां तथोऽएवैषऽएतेन हविषा दिक्षु नाष्ट्रा रक्षाꣳस्यवहन्ति तथोऽएव विजयते विजितेऽभये नाष्ट्रे सूया ऽ इति ॥१२॥ स यऽएष ऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति[2] । सोऽग्नेरेको भागोऽथ यद्वारुणो यवमयश्चरुर्भवति यो वै वरुणः[3] सोऽग्निः सोऽग्नेर्द्वितीयो भागोऽथ यद्रौद्रो गावेधुकश्चरुर्भवति यो वै रुद्रः सोऽग्निः सोऽग्नेस्तृतीयो भागोऽथ यद्गावेधुको भवति वास्तव्यो वाऽएष देवो वास्तव्या गवेधुकास्तस्माद्गावेधुको भवत्यथ यदनडुह्यै वहलायाऽऐन्द्रं दधि भवति सऽइन्द्रस्य चतुर्थो भागो यद्वै चतुर्थं तत्तुरीयं तस्मादिन्द्रतुरीयं नाम तस्यैषैवानडुही[5] वहला दक्षिणा सा हि वहेनाग्नेय्यग्निदग्धमिव ह्यस्यै वहं भवत्यथ यत्स्त्री सती वहत्यधर्मेण तदस्यै वारुणꣳ रूपमथ यद्गौस्तेन रौद्र्यथ यदस्याऽ[6]ऐन्द्रं दधि तेनैन्द्र्येषा हि वाऽएतत्सर्वं व्यश्नुते तस्मादेषैवानडुही वहला दक्षिणा[7] ॥१३॥ अथापामार्गहोमं जुहोति । अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षाꣳस्यपामृजत[8] ते व्यजयन्त यैयमेषां विजितिस्तां तथोऽएवैषऽएतदपामार्गैरेव दिक्षु नाष्ट्रा रक्षाꣳस्यपमृष्टे तथोऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूयाऽइति ॥१४॥ स पलाशे[9] वा स्रुवे वैकङ्कते वा । अपामार्गतण्डुलानादत्तेऽन्वाहार्यपचनादुल्मुकमाददते तेन प्राञ्चो वोदञ्चो वा यन्ति तदग्निꣳसमाधाय जुहोति ॥१५॥ सऽउल्मुकं[10]माद्त्ते । "[11]अग्ने सहस्व

---

१. स्यवाहतां. इति ग.
२. भवति इति. ग.
३. वरुण इति. ग.
४. सोऽग्नेरिति. ग.
५. तस्यैषैवेति. ग.
६. यदस्या इति.ग.
७. दक्षिणा इति. च.
८. स्यपामृजत इति. ग
९. पलाशे इति. च.
१०. मादत्ते. इति. ग.
११. मा. सं. ९. ३७.

पृतना''ऽइति य्युधो वै पृतना य्युधः सहस्वेत्येवैतदाहा''भिमातीरपास्ये''ति सपत्नो वाऽअभिमातिः सपत्नमपजहीत्येवैतदाह ''दुष्टरस्तरन्नराती''रिति दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिस्तरन्नरातीरिति सर्वॐ ह्येष पाप्मानं तरति तस्मादाह तरन्नरातीरिति ''व्वर्चोधा यज्ञवाहसी''ति साधु य्यजमाने दधदित्येवैतदाह ॥१६॥ तदग्निॐ समाधाय जुहोति । ''देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपाॐशोर्वीर्येण जुहोमी''ति यज्ञमुखं वाऽउपाॐशुर्यज्ञमुखेनैवैतन्नाष्ट्रा रक्षाॐसि हन्ति ''हतॐ रक्षः स्वाहे''ति तन्नाष्ट्रा रक्षाॐसि हन्ति ॥१७॥ स य्यदि पालाशः स्रुवो भवति । ब्रह्म वै पलाशो ब्रह्मणैवैतन्नाष्ट्रा रक्षाॐसि हन्ति यद्यु व्वैकङ्कतो व्वज्रो वै व्विकङ्कतो व्वज्रेणैवैतन्नाष्ट्रा रक्षाॐसि हन्ति ''रक्षसां त्वा व्वधाये''ति तन्नाष्ट्रा रक्षाॐसि हन्ति ॥१८॥ स य्यदि प्राङ्क्त्वा जुहोति । प्राञ्चॐ स्रुवमस्यति यद्युदङ्ङ्क्त्वा जुहोत्युदञ्चॐ स्रुवमस्य ''त्त्वं वधिष्म रक्ष'' ऽइति तन्नाष्ट्रा रक्षाॐसि हन्ति ॥१९॥ अथाप्रतीक्षं पुनरायन्ति । स हैतेनापि प्रतिसरं कुर्वीत स यस्यां ततो दिशि भवति तत्प्रतीत्य जुहोति प्रतीचीनफलो वा ऽअपामार्गः स य्यो हास्मै तत्र किञ्चित्करोति तमेव तत्प्रत्यग्धूर्वति तस्य नामादिशे ''दुवर्धिष्मामुमसौ हत''ऽइति तन्नाष्ट्रा रक्षाॐसि हन्ति ॥२०॥ Cf. का. श. ७. १. २; तै. सं. १. ८. ७; तै. ब्रा. १. ७. १; मै. सं. २. ६. ३; कठ. सं. १५. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. २. ४. )

---

१-३. मा. सं. ९. ३७.    ४-८. मां. सं. ९. ३८.

## ५. २. ४.

### ( त्रिषंयुक्तहविरादिकम् )

आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्व्वपति । ऐन्द्रावैष्णवं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन त्रिषंयुक्तेन यजते पुरुषानेतद्देवा ऽउपायंस्तथो ऽएवैष ऽएतत्पुरुषानेवोपैति ॥१॥

( अर्द्धप्रपाठकः ५२ )

स यदाग्नावैष्णवः[1] । एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता वैष्णवाः पुरुषास्तदस्मा ऽअग्निर्द्दाता पुरुषान्ददाति ॥२॥ अथ यदैन्द्रावैष्णवः । चरुर्भवतीन्द्रो वै यजमानो वैष्णवाः पुरुषास्तदस्मा ऽअग्निर्द्दाता पुरुषान्ददाति तैरेवैतत्सꣳस्पृशते तानात्मन् कुरुते[3] ॥३॥ अथ यद्वैष्णवः । त्रिकपालो वा पुरोडाशो भवति चरुर्व्वा यानेवास्मा ऽअग्निर्द्दाता पुरुषान्ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति यद्वै पुरुषवान् कर्म चिकीर्षति शक्नोति वै तत्कर्तुं तत्पुरुषानेवैतदुपैति पुरुषवान्त्सूया ऽइति तस्य वामनो गौर्द्दक्षिणा स हि वैष्णवो यद्वामनः ॥४॥ अथापरेण त्रिषंयुक्तेन यजते । स ऽआग्नापौष्णमेकादशकपालं पुरोडाशं निर्व्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं तेन त्रिषंयुक्तेन यजते पशूनेव तद्देवा ऽउपायंस्तथो ऽएवैष ऽएतत्पशूनेवोपैति[5] ॥५॥ स यदाग्नापौष्णः । एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता पौष्णाः पशवस्तदस्मा ऽअग्निरेव दाता पशून्ददाति[6] ॥६॥ अथ यदैन्द्रापौष्णः[7] । चरुर्भवतीन्द्रो वै यजमानः पौष्णाः पशवः स यानेवास्मा ऽअग्निर्द्दाता पशून्ददाति तैरेवैतत्सꣳस्पृशते तानात्मन् कुरुते[8] ॥७॥ अथ यत्पौष्णः । चरुर्भवति यानेवास्मा ऽअग्निर्द्दाता पशून्ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति

---

१. वैष्णवः इति. च
२. पुरुषाः स यानेवास्मा ऽअग्निरिति. क
३. कुरुते इति. च.
४. स यानेवेति. च.
५. वोपैति इति च
६. ददाति. इति. च.
७. ऐन्द्रापौष्णः इति. ङ.
८. कुरुते इति च.

यद्धै पशुमान् कर्म चिकीर्षति शक्नोति वै तत्कर्तुं तत्पशूनेवैतदुपैति पशुमान्त्सूया ऽइति तस्य श्यामो गौर्द्दक्षिणा स हि पौष्णो य्यच्छ्यामो द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं वै पूषा पशवो हि पूषा पशवो हि प्रजननं मिथुनमेवैतत्प्रजननं क्रियते तस्माच्छ्यामो गौर्द्दक्षिणा ॥८॥ अथापरेण त्रिषंयुक्तेन यजते । सो ऽग्नीषोमीयमेकादशकपालं पुरोडाशं निर्व्वपत्यैन्द्रासौम्यं चरुंँ सौम्यं चरुं तेन त्रिषंयुक्तेन यजते व्वर्च्च ऽएव तद्देवा ऽउपायंस्तथो ऽएवैष ऽएतद्वर्च्च ऽएवोपैति ॥९॥ स य्यदग्नीषोमीयः । एकादशकपालः पुरोडाशो भवत्यग्निर्व्वै दाता व्वर्च्चः सोमस्तदस्मा ऽअग्निरेव दाता व्वर्च्चो ददाति[1] ॥१०॥ अथ य्यदैन्द्रासौम्यः । चरुर्भवतीन्द्रो वै य्यजमानो व्वर्च्चः सोमः स य्यदेवास्मा ऽअग्निर्दाता व्वर्च्चो ददाति तेनैवैतत्संँस्पृशते तदात्मन् कुरुते[2] ॥११॥ अथ य्यत्सौम्यः । चरुर्भवति य्यदेवास्मा ऽअग्निर्द्दाता व्वर्च्चो ददाति तस्मिन्नेवैतदन्ततः प्रतितिष्ठति यद्धै व्वर्च्चस्वी कर्म चिकीर्षति शक्नोति वै तत्कर्तुं तद्वर्च्च ऽएवैतदुपैति व्वर्च्चस्वी सूया ऽइति नो ह्यवर्च्चसो व्याप्त्या चनार्थोऽस्ति तस्य बभ्रुर्गौर्द्दक्षिणा स हि सौम्यो य्यद्बभ्रुः[3] ॥१२॥ अथ श्वो भूते । व्वैश्वानरं द्वादशकपालं पुरोडाशं निर्व्वपति व्वारुणं यवमयं चरुं ताभ्यामनूचीनाहं व्वेष्टिभ्यां य्यजते समानबर्हिर्भ्यां वा ॥१३॥ स य्यद्वैश्वानरो भवति । सम्वत्सरो वै व्वैश्वानरः सम्वत्सरः प्रजापतिः प्रजापतिरेव तद्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूया ऽइति तथो ऽएवैष ऽएतद्भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूया ऽइति[4] ॥१४॥ अथ य्यद्द्वादशकपालो[5] भवति । द्वादश वै मासाः सम्वत्सरस्य सम्वत्सरो व्वैश्वानरस्तस्माद्द्वादशकपालो भवति[6] ॥१५॥ अथ य्यद्वारुणो यवमयश्चरुर्भ-

१. दद्याति इति. च.  २. कुरुते इति च.  ३. यद्बभ्रुः इति. च.
४. इति इति. च  ५. द्वादश इति. ग, घ.  ६. भवति इति. च.

वति । तत्सर्व्वस्मादेवैतद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रजाः प्रमुञ्चति ता ऽअस्यानमीवा ऽअकिल्बिषाः प्रजाः प्रजायन्तेऽनमीवा ऽअकिल्बिषाः प्रजा ऽअभि सूया ऽइति ॥१६॥ ऋषभो व्वैश्वानरस्य दक्षिणा । सम्वत्सरो वै व्वैश्वानरः सम्वत्सरः प्रजापतिर्ऋषभो वै पशूनां प्रजापतिस्तस्मादृषभो व्वैश्वानरस्य दक्षिणा कृष्णं व्वासो व्वारुणस्य तद्धि व्वारुणं य्यत्कृष्णं य्यदि कृष्णं न व्विन्देदपि य्यदेव किं च व्वासः स्याद्ग्रन्थिभिर्हि व्वासो व्वारुणं व्वरुण्यो हि ग्रन्थिः ॥१७॥

Cf. का. श ७. १. ३; तै. सं. १. ८. ८; तै. ब्रा. १. ७. २; मै. सं. २. ६. २–४; कठ. सं. १५. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. २. ५. )

( द्वितीयोऽध्यायस्समाप्तः )

५. २. ५.

( रत्निनां हवींषि )

अरण्योरग्नी समारोह्य । सेनान्यो गृहान् परेत्याग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्व्वपत्यग्निर्व्वै देवतानामनीकꣳ सेनाया वै सेनानीरनीकं तस्मादग्नयेऽनीकवत ऽएतद्वा ऽअस्यैकꣳरत्नं य्यत्सेनानीस्तस्मा ऽएवैतेन सूयते तꣳस्वमनपक्रमिणं कुरुते तस्य हिरण्यं दक्षिणाग्नेयो वा ऽएष य्यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा ॥१॥ अथ श्वो भूते । पुरोहितस्य गृहान् परेत्य बार्हस्पत्यं चरुं निर्व्वपति बृहस्पतिर्व्वै देवानां पुरोहितऽएष वा ऽएतस्य पुरोहितो भवति तस्माद्बार्हस्पत्यो भवत्येतद्वा ऽअस्यैकꣳ रत्नं य्यत्पुरोहितस्तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य

१ सर्वस्मादेवेति ग.
२. ग्रन्थिः इति. ग, घ.
३, ४. दक्षिणा इति. च.
५. स्वमनप इति. ग, घ.

शितिपृष्ठो गौर्द्दक्षिणैषा वाऽऊर्ध्वा बृहस्पतेर्द्दिक्तदेषऽउपरिष्टादर्य्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्य[1]स्य द[2]क्षिणा ॥२॥ अथ श्वो भूते[3] । सूयमानस्य गृहऽऐन्द्रमेकादशकपालं पुरोडाशं निर्व्वपति क्षत्रं वाऽइन्द्रः क्षत्रꣳ सूयमानस्तस्मादैन्द्रो भवति तस्यर्षभो दक्षिणा स ह्यैन्द्रो यदृषभः ॥३॥ अथ श्वो भूते । महिष्यै गृहान् प[4]रेत्या ऽऽदित्यं चरुं निर्व्वपतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वाऽएतस्य पत्नी भवति तस्मादादित्यो भवत्येतद्वाऽअस्यैकꣳ रत्नं यन्महिषी तस्याऽएवैतेन सूयते ताꣳ स्वामनपक्रामिणीं कुरुते तस्यै धेनुर्द्दक्षिणा धेनुरिव वाऽइयं मनुष्येभ्यः सर्व्वान् कामान्दुहे माता धेनुर्मातेव वाऽइयं मनुष्यान् बिभर्त्ति तस्माद्धेनुर्द्दक्षि[5]णा ॥४॥ अथ श्वो भूते । सूतस्य गृहान् परेत्य वारुणं यवमयं चरुं निर्व्वपति सवो वै सूतः सवो वै देवानां वरुणस्तस्माद्वारुणो भवत्येतद्वाऽअस्यैकꣳ रत्नं यत्सूतस्तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रामिणं कुरुते तस्याश्वो दक्षिणा स हि वारुणो य[6]दश्वः ॥५॥ अथ श्वो भूते । ग्रामण्यो गृहान् परेत्य मारुतꣳ सप्तकपालं पुरोडाशं निर्व्वपति विशो वै मरुतो वैश्यो वै ग्रामणीस्तस्मान्मारुतो भवत्येतद्वाऽअस्यैकꣳ रत्नं यद्ग्रामणीस्तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रामिणं कुरुते तस्य पृषन् गौर्द्दक्षिणा भूमा वाऽएतद्रूपाणां यत्पृषतो गोर्व्विशो वै मरुतो भूमो वै विट्तस्मात्पृषन् गौर्द्दक्षि[7]णा ॥६॥ अथ श्वो भूते । क्षत्तुर्गृहान् परेत्य सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्व्वपति सविता वै देवानां प्रसविता प्रसविता वै क्षत्ता तस्मात्सावित्रो भवत्येतद्वाऽअस्यैकꣳ रत्नं यत्क्षत्ता तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रामिणं कुरुते तस्य श्येतोऽनड्वान्दक्षिणैष वै सविता यऽएष तपत्येति वाऽएष ऽएत्यनड्वान् युक्तस्तद्यच्छ्ये-

---

१. बार्हस्पत्यस्येति. ग,घ.    २. दक्षिणा इति. च.    ३. भूते इति. घ, च.
४. परेत्यऽआदित्यमिति. ग,घ.    ५,७. दक्षिणा इति. च.    ६. यदश्व. इति च

तो भवति श्येत ऽइव ह्येष ऽउद्यंश्चास्तं च यन् भवति तस्माछ्र्ये-तोऽनड्वान्दक्षिणा ॥७॥ अथ श्वो भूते । संग्रहीतुर्गृहान् परेत्याश्विनं द्विकपालं पुरोडाशं निर्व्वपति सयोनी वाऽअश्विनौ सयोनी सव्य-ष्टृसारथी समानᳪंहि रथमधितिष्ठतस्तस्मादाश्विनो भवत्येतद्वाऽअ-स्यैकᳪंरत्नं य्यत्संग्रहीता तस्माऽएवैतेन सूयते तᳪंस्वमनपक्रमिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ हि सयोनी य्यद्यमौ य्यदि यमौ न विन्देदप्यनूचीनगर्भावेव गावौ दक्षिणा स्यातां ताऽउ ह्यपि समानयोनी ॥८॥ अथ श्वो भूते । भागदुघस्य गृहान् परेत्य पौष्णं चरुं निर्व्वपति पूषा वै देवानां भागदुघ ऽएष वाऽएतस्य भागदुघो भवति तस्मात्पौष्णो भवत्येतद्वाऽअस्यैकᳪं रत्नं य्यद्भागदुघस्तस्माऽ-एवैतेन सूयते तᳪं स्वमनपक्रमिणं कुरुते तस्य श्यामो गौर्दक्षिणा तस्यासावेव बन्धुर्योऽसौ त्रिषंयुक्तेषु ॥९॥ अथ श्वो भूते । अक्षावा-पस्य च गृहेभ्यो गोविकर्तस्य च गवेधुकाः सम्भृत्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्व्वपति ते वाऽएते द्वे सती रत्नेऽएकं करोति सम्पदः कामाय तद्यदेतेन य्यजते यां वाऽइमाᳪं सभायां घ्नन्ति रुद्रो हैतामभिमन्यतेऽग्निर्व्वै रुद्रोऽधिदेवनं वाऽअग्निस्तस्यै-तेऽङ्गारा य्यदक्षास्तमेवैतेन प्रीणाति तस्य ह वाऽएषानुमता गृहेषु हन्यते य्यो वा राजसूयेन य्यजते य्यो वैतदेवं व्वेदैतद्वाऽअस्यैकᳪं रत्नं य्यदक्षावापश्च गोविकर्तश्च ताभ्यामेवैतेन सूयते तौ स्वावनप-क्रमिणौ कुरुते तस्य द्विरूपो गौर्दक्षिणा शितिबाहुर्वा शितिवालो वासिर्नखरो व्वालदाम्नाक्षावपनं प्रबद्धमेतदु हि तयोर्भवति ॥१०॥ अथ श्वो भूते । पालागलस्य गृहान् परेत्य चतुर्गृहीतमाज्यं गृही-त्वाध्वनऽआज्यं जुहोति "जुषाणोऽध्वाज्यस्य व्वेतु स्वाहे"ति प्रहे-

१. ह्येष इति. ग,घ. २. दक्षिणा इति. च. ३. सङ्गृहीतुरिति. ग,घ.
४. त्रिषंयुक्तेषु. इति. च. ५. अङ्गारा इति. ग,घ. ६. भवति इति. च.

यो वै पालागलोऽध्वानं वै प्रहितऽएति तस्मादध्वनऽआज्यं जुहोत्येतद्धाऽअस्यैकᳶ रत्नं यत्पालागलस्तस्माऽएवैतेन सूयते तᳶ स्वमनपक्रमिणं कुरुते तस्य दक्षिणाऽत्युक्षणवेष्टितं धनुश्चर्ममया बाणवन्तो लोहितऽउष्णीषऽएतदु हि तस्य भवति ॥११॥ तानि वा ऽएतानि । एकादश रत्नानि सम्पादयत्येकादशाक्षरा वै त्रिष्टुप् वीर्यं त्रिष्टुब्वीर्यमेवैतद्रत्नान्यभिसम्पादयति तद्यद्रत्निनाᳶ हविर्भिर्यजतऽएतेषां वै राजा भवति तेभ्य ऽएवैतेन सूयते तान्त्स्वाननपक्रमिणः कुरुते ॥१२॥ अथ श्वो भूते । परिवृत्त्यै गृहान् परेत्य नैर्ऋतं चरुं निर्वपति या वाऽअपुत्रा पत्नी सा परिवृत्ती स कृष्णानां व्रीहीणां नखैर्निर्भिद्य तण्डुलान्नैर्ऋतं चरुᳶ श्रपयति स जुहोत्ये"ष ते निर्ऋते भागस्तं जुषस्व स्वाहे"ति या वाऽअपुत्रा पत्नी सा निर्ऋतिगृहीता तद्यदेवास्याऽअत्र नैर्ऋतᳶ रूपं तदेवैतच्छमयति तथो हैनᳶसूयमानं निर्ऋतिर्न गृह्णाति तस्य दक्षिणा कृष्णा गौः परिमूर्णी पर्यारिणी सा ह्यपि निर्ऋतिगृहीता तामाह "मा मेऽद्येशायां वात्सी"दिति तत्पाप्मानमपादत्ते ॥१३॥ Cf. का. श. ७. १. ४. तै. सं. १. ८. ९; तै. ब्रा. १. ७. ३; मै. सं. २. ६. ५; कठ. सं. १५. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ (अ. ३. १.)

## ५. २. ६.

## ( सोमारौद्रादिचरुद्वयम् )

उपरिष्टाद्रत्नानाᳶ सौमारौद्रेण यजते । स श्वेतायै श्वेतवत्सायै पयसि श्रृतो भवति तद्यदुपरिष्टाद्रत्नानाᳶ सौमारौद्रेण यजते ॥१॥ स्वर्भानुर्ह वाऽआसुरः । सूर्यं तमसा विव्याध स तमसा विद्धो न व्यरोचत तस्य सोमारुद्रावेवैतत्तमोऽपाहताᳶ सऽएषोऽ-

१. तस्मा इति. ग, घ.   २. एतानि इति. ग, घ.   ३. कुरुते इति. ख, च.
४. मा. सं. ९. ३५.   ५. यजते इति च.   ६. आसुरः इति. ख.

पहतपाप्मा तपति तथोऽएवैषऽएतत्तमः प्रविशत्येतं वाव तमः प्रविशति यद्यज्ञियान् यज्ञेन प्रसजत्ययज्ञियान्वाऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत्तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मैव दीक्षते तद्यच्छ्वेतायै श्वेतवत्सायै पयसि शृतो भवति कृष्णं वै तमस्तत्तमोऽपहन्ति तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥२॥ स हैतेनापि यजेत । योऽलं यशसे सन्न यशो भवति यो वाऽअनूचानः सोऽलं यशसे सन्न यशो भवति यो न यशो भवति स तमसा वै स तत्प्रावृतो भवति तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ॥३॥ अथ मैत्राबार्हस्पत्यं चरुं निर्व्वपति । ह्वलति वाऽएष यो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्यदयज्ञियान्यज्ञेन प्रसजत्ययज्ञियान्वाऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वन्मित्राबृहस्पती वै यज्ञपथो ब्रह्म हि मित्रो ब्रह्म हि यज्ञो ब्रह्म हि बृहस्पतिर्ब्रह्म हि यज्ञस्तत्पुनर्यज्ञपथमपिपद्यते सोऽपिपद्यैव यज्ञपथं दीक्षते तस्मान्मैत्राबार्हस्पत्यं चरुं निर्व्वपति ॥४॥ तस्यावृत् । या स्वयम्प्रशीर्णाश्वत्थी शाखा प्राची वोदीची वा भवति तस्यै मैत्रं पात्रं करोति वरुण्या वाऽएषा या परशुवृक्णाथैषा मैत्री या स्वयम्प्रशीर्णा तस्मात्स्वयम्प्रशीर्णायै शाखायै मैत्रं पात्रं करोति ॥५॥ अथातच्य दधि । विनाटऽआसिच्य रथं युक्त्वाबध्य देदीयितवाऽआह तद्यत्स्वयमुदितं नवनीतं तदाज्यं भवति वरुण्यं वाऽएतद्यन्मथितमथैतन्मैत्रं यत्स्वयमुदितं तस्मात्स्वयमुदितमाज्यं भवति ॥६॥ द्वेधा तण्डुलान् कुर्वन्ति । स येऽणीयांसः परिभिन्नास्ते बार्हस्पत्या ऽअथ ये स्थवीयाःसोऽपरिभिन्नास्ते मैत्रा न वै मित्रः कश्चन हिनस्ति न मित्रं कश्चन हिनस्ति नैनं कुशो न कण्टको विभिनत्ति नास्य व्रणश्च नास्ति सर्व्वस्य ह्येव मित्रो मित्रम् ॥७॥

---

१. भवति इति. च. २. तस्यावृत् इति. घ. ३. करोति. इति. च.
४. भवति इति. ख. ५. बार्हस्पत्या इति. ग. ६. मित्रं इति. च.

अथ बार्हस्पत्यं चरुमधिश्रयति । तं मैत्रेण पात्रेणापिदधाति तदाज्यमानयति तत्तण्डुलानावपति स ऽएषऽऊष्मणैव श्रप्यते व्वरुण्यो वाऽएष य्योऽग्निना श्रृतोऽथैष मैत्रो य्यऽऊष्मणा श्रृतस्तस्मादूष्मणा श्रृतो भवति तयोरुभयोरवद्यन्नाह मित्राबृहस्पतिभ्यामनुब्रूहीत्याश्राव्याह मित्राबृहस्पती य्यजेति व्वषट्कृते जुहोति ॥८॥ Cf. का. श. ७. २. २., तै. सं. १. ८. ९; तै. ब्रा. १. ७. ३; मै सं. २. ६. ६; काठ. सं. १५. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ. ३. २. )

## ५. २. ७.

## ( देवस्वांहवींषि )

स वै दीक्षते । सऽउपवसथेऽग्नीषोमीयं पशुमालभते तस्य व्वपया प्रचर्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्व्वपति तदनु देवस्वाꣳ हवीꣳषि निरुप्यन्ते ॥१॥ (शतं ३१००) सवित्रे सत्यप्रसवाय । द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्व्वपति प्लाशुकानां व्व्रीहीणाꣳ सविता वै देवानां प्रसविता सवितृप्रसूतः सूयाऽइत्यथ य्यत्प्लाशुकानां व्रीहीणां क्षिप्रे मा प्रसुवानिति[1] ॥२॥ अथाग्नये गृहपतये । अष्टाकपालं पुरोडाशं निर्व्वपत्याशूनाꣳ श्रीर्व्वै गार्हपतं य्यावतो य्यावतऽईष्टे तदेनमग्निरेव गृहपतिर्गार्हपतमभि परिणयत्यथ य्यदाशूनां क्षिप्रे मा परिणयानिति[2] ॥३॥ अथ सोमाय व्वनस्पतये । श्यामाकं चरुं निर्व्वपति तदेनꣳ सोमऽएव व्वनस्पतिरोषधिभ्यः सुवत्यथ य्यच्छ्यामाको भवत्येते वै सोमस्यौषधीनां प्रत्यक्षतमां य्यच्छ्यामाकास्तस्माच्छ्यामाको भवति[3] ॥४॥ अथ बृहस्पतये व्वाचे । नैवारं चरुं निर्व्वपति तदेनं बृहस्पतिरेव व्वाचे सुवत्यथ य्यन्नैवारो भवति ब्रह्म वै बृह-

---

१. प्रसुवानिति इति च. २. परिणयानिति ख. परिणयानिति इति. च

३. भवति. इति च. एवमेवोत्तरत्राऽपि कण्डिकान्तस्थितभवतौ द्रष्टव्यम् ।

स्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति ॥५॥ अथेन्द्राय ज्येष्ठाय । हायनानां चरुं निर्व्वपति तदेनमिन्द्रऽएव ज्येष्ठो ज्यैष्ठ्यमभि परिणयत्यथ यद्धायनानां भवत्यतिष्ठा वाऽएताऽ-ओषधयो यद्धायनाऽअतिष्ठो वाऽइन्द्रस्तस्माद्धायनानां भवति ॥६॥ अथ रुद्राय पशुपतये । रौद्रं गावेधुकं चरुं निर्व्वपति तदेनᳫं रुद्रऽएव पशुपतिः पशुभ्यः सुवत्यथ यद्गावेधुको भवति व्वास्तव्यो वाऽएष देवो व्वास्तव्या गवेधुकास्तस्माद्गावेधुको भवति ॥७॥ अथ मित्राय सत्याय । नाम्बानां चरुं निर्व्वपति तदेनं मित्रऽएव सत्यो ब्रह्मणे सुवत्यथ यन्नाम्बानां भवति व्वरुण्या वाऽएताऽओषधयो याः कृष्टे जायन्तेऽथैते मैत्रा यन्नाम्बास्तस्मान्नाम्बानां भवति ॥८॥ अथ व्वरुणाय धर्मपतये । व्वारुणं यवमयं चरुं निर्व्वपति तदेनं व्वरुणऽएव धर्मपतिर्द्धर्मस्य पतिं करोति परमता वै सा यो धर्मस्य पतिरसद्यो हि परमतां गच्छति तᳫं हि धर्मऽउपयन्ति तस्माद्वरुणाय धर्मपतये ॥९॥ अथाग्नीषोमीयेन पुरोडाशेन प्रचरति । तस्यानिष्टऽएव स्विष्टकृद्भवत्यथैतैर्हविर्भिः प्रचरति यदेतैर्हविर्भिः प्रचरति[3] ॥१०॥ अथैनं दक्षिणे बाहावभिपद्य जपति। "सविता[4] त्वा सवानाᳫं सुवतामग्निर्गृहपतीनाᳫं सोमो व्वनस्पतीनाम् । बृहस्पतिर्व्वाचऽइन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्मपतीनाम् ॥११॥ "इमं[5] देवाः । असपत्नᳫं सुवध्व" मितीमं देवाऽअभ्रातृव्यᳫं सुवध्वमित्येवैतदाह "महते क्षत्राय महते ज्यैष्ठ्याये"ति नात्र तिरोहितमिवास्ति "महते जानराज्याये"ति महते[8] जनानाᳫं राज्यायेत्येवैतदाहे"न्द्रस्येन्द्रियाये"ति व्वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेती "अमुमुष्य[10] पुत्रममुष्यै पुत्र"मिति तद्यदेवास्य जन्म ततऽए-

१. देवो इति.ख. २. गवेधुका इति.ग. ३. प्रचर.ति. इति ख,च. प्रचरति इति घ.
४. मा. सं. ९ ३९. ५-९. मा सं.९.४०. ८. जानानाᳫं इति.च.

१०. "अमुष्य" इत्येव मुद्रितपुस्तकेषूपलभ्यते । परन्तु 'अमुष्य' इति संहिताभाष्याद्दतः पाठः, च पुस्तकपाठोऽपि ।

वैतदाह "स्यै विश" इति यस्यै विशो राजा भवत्ये "षं वो-ऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजे"ति तदस्माऽइदꣳ सर्व-माद्यं करोति ब्राह्मणमेवापोद्धरति तस्माद्ब्राह्मणोऽनाद्यः सोमराजा हि भवति ॥१२॥ एता ह वै देवताः सवस्येशते । तस्माद्देवस्वो नाम तदेनमेता ऽएव देवताः सुवते ताभिः सूतः श्वः सूयते ॥१३॥ ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै वीर्य्यं वीर्यवत्यः सुवान्ताऽइति तस्माद्द्विनाम्न्यो भवन्ति ॥१४॥ अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाहुतीऽएतत्कर्म क्रियतऽएष वै प्रजापतिर्यऽएष यज्ञस्ता-यते यस्मादिमाः प्रजाः प्रजाताऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यतऽएवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्तरेणाहुती ऽएतत्कर्म क्रियतऽआश्राव्याहाग्नये स्विष्टकृते प्रेष्येति वषट्कृते जुहोति ॥१५॥ ॥ Cf का. श. ७. २. ३; तै. सं. १. ८. १०; तै. ब्रा. १. ७. ४; मै. सं. २. ६. ६; काठ. सं. १५. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे

द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ ( अ. ३. ३. )

द्वितीयः प्रपाठकस्समाप्तः ॥

( कण्डिका संख्या १०४ ॥ )

---

१, २. मा. सं. ९. ४०.    ३. 'देवा' इत्येव त्रिष्वपि मुद्रितपुस्तकेषु पाठः ।
४. तस्मादिति. ग.    ५. भवन्ति इति च.    ६. क्रियत इति. च.

## अथ तृतीयः प्रपाठकः ॥

### ५. ३. १.

### ( अभिषेकार्थानामपां सम्भरणम् )

ॐ स वाऽअपः सम्भरति । तद्यदपः सम्भरति वीर्यं वाऽआपो वीर्यमेवैतद्रसमपाᳬं सम्भरति ॥१॥ औदुम्बरे पात्रे । अन्नं वा ऽऊर्गुदुम्बरऽऊर्जो ऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरे पात्रे ॥२॥ स सारस्वतीरेव प्रथमा गृह्णाति । "अपो देवा मधुमतीरगृभ्णन्"नित्यपो देवा रसवतीरगृह्णन्नित्येवैतदा "हूर्जस्वती राजस्वश्चितानाः"ऽइति रसवतीरित्येवैतदाह यदाहोर्जस्वतीरिति राजस्वश्चितानाः ऽइति याः प्रज्ञाता राजस्वऽइत्येवैतदाह "याभिर्मित्रावरुणावभ्यषिञ्चन्"नित्येताभिर्हि मित्रावरुणावभ्यषिञ्चन् "याभिरिन्द्रमनयन्नत्यराती"रित्येताभिर्हीन्द्रं नाष्ट्रा रक्षाᳬंस्यत्यनयंस्ताभिरभिषिञ्चति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चत्येता वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥३॥ अथाध्वर्युः । चतुर्गृहीतमाज्यं गृहीत्वापोऽभ्यवैति तद्याऽऊर्मी व्युर्द्दतः पशौ वा पुरुषे वाभ्यवेते तौ गृह्णाति ॥४॥ स यः प्राङुदर्दति । तं गृह्णाति "वृष्णऽऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्णऽऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देही"ति ॥५॥ अथ यः प्रत्यङुदर्दति । तं गृह्णाति "वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देही"ति ताभिरभिषिञ्चति वीर्यं वाऽएतदपामुदर्दति पशौ वा पुरुषे वाभ्यवेते वीर्येणैवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥६॥ अथ स्यन्दमाना

---

१. सम्भरति इति च. एवमेवाऽग्रेऽपि । २. पात्रे इति ग. घ, पात्रे इति. च.
३–६. मा. सं. १०. १. ७. मा. सं. १०. २. ८. देहीति इति च.
९. गृह्णाति इति. च. १०. मा. सं. १०. २.

गृह्णाति । "अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहार्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति व्वीर्येण वाऽएताः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किंञ्चन प्रतिधारयते व्वीर्येणैवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥७॥ अथ याः स्यन्दमानानां प्रतीपथं स्यन्दन्ते । ता गृह्णात्यो "जस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति व्वीर्येण वाऽएताः स्यन्दमानानां प्रतीपँ स्यन्दन्ते व्वीर्येणैवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति॥८॥ अथापयतीर्गृह्णाति । "आपः परिवाहिणी स्थ राष्ट्रदा ( राष्ट्रं मे दत्त स्वाहा यः परिवाहिणी स्थ राष्ट्रदा ) राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चत्येतस्यै वाऽएषापच्छिद्यैव पुनर्भवत्यपि ह वा ऽअस्यान्यराष्ट्रीयो राष्ट्रे भवत्यप्यन्यराष्ट्रीयमवहरते तथास्मिन् भूमानं दधाति भूम्नैवैनमेतदभिषिञ्चत्येता वा ऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥९॥ अथ नदीपतिं गृह्णाति । "अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देही"ति ताभिरभिषिञ्चत्यपां वाऽएष पतिर्यन्नदीपतिर्व्विशामेवैनमेतत्पतिं करोत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥१०॥ अथ निवेष्यं गृह्णाति । "अपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देही"ति ताभिरभिषिञ्चति गर्भं वाऽएतदापऽउपनिवेष्टन्ते व्विशामेवैनमेतद्गर्भं करोत्येता वा ऽ एकाऽआपस्ताऽएवैतत्सम्भरति ॥११॥ अथ याः स्यन्दमानानाँ स्थावरो ह्रदो भवति । प्रत्यातपे ता गृह्णाति "सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिर-

---

१, २. मा. सं. १०.३.　३. प्रतीपँग, घ.　४. मा. सं. १०. ३.
() एतच्चिह्नाङ्कितो भागः घ च पुस्तकयोर्नाऽस्ति ।　५. राष्ट्रदा इति ग.
६, ८. मा. सं. १०. ३.　७. देहीति. ग.　९. मा. सं. १०. ४.
१०. ताभिरिति घ.

भिषिञ्चति व्वर्च्चसैवैनमेतदभिषिञ्चति सूर्य्यत्वचसमेवैनमेतत्करोति व्वरुण्या वा ऽएता ऽआपो भवन्ति य्याः स्यन्दमानानां न स्यन्दन्ते व्वरुणसवो वा ऽएष य्यद्राजसूयं तस्मादेताभिरभिषिञ्चत्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥१२॥ अथ य्या ऽआतपति व्वर्षन्ति । ता गृह्णाति "सूर्य्यवर्च्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्य्यवर्च्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति व्वर्च्चसैवैनमेतदभिषिञ्चति सूर्य्यवर्च्चसमेवैनमेतत्करोति मेध्या वा-एता ऽआपो[3] भवन्ति य्याऽआतपति व्वर्षन्त्यप्राप्ता ह्रीमां[4] भवन्त्यथैनां[5] गृह्णाति मेध्यमेवैनमेतत्करोत्येतां[6] वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥१३॥ अथ व्वैशन्तीर्गृह्णाति । "मान्दा[7] स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति व्विशमेवास्माऽएतत्स्थावरामनपक्रमिणीं करोत्येता वाऽएका-ऽआपस्ताऽएवैतत्सम्भरति ॥१४॥ अथ कूप्या गृह्णाति । "व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति तद्याऽइमां 'परेणापस्ता ऽएवैतत्सम्भरत्यपामु चैव सर्व्वत्वाय तस्मादेताभिरभिषिञ्चत्येता वा ऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥१५॥

( काण्डस्यार्द्धम् २३६ )

अथ प्रुष्वा गृह्णाति । "व्वाशा[8] स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते[10]"ति ताभिरभिषिञ्चत्यन्नाद्येनैवैन-[11]मेतदभिषिञ्चत्यन्नाद्यमेवास्मिन्नेतद्दधातीदं वाऽअसावादित्य ऽउद्यन्नेव य्यथायमग्निर्निर्दहेदेवमोषधीरन्नाद्यं निर्दहति तदेताऽआपोऽभ्यवयत्यः शमयन्ति न ह वाऽइहान्नाद्यं परिशिष्येत[12] य्यदेताऽआपो नाभ्यवेयु-

---

१. मेतदिति ग, घ. २. मा. सं. १०. ४.
३. भवन्ति इति. ख. ४. ह्रीमा इति ङ, च. ५ अथैना इति ख, ग, घ.
६. करोत्येवा एका इति. ख. ७–९ मा.सं.१०.४. १०. दत्तेति ग.
११. त्यन्नाद्येनेति. ग. १२ परिशिष्यते इति मुद्रितपुस्तकेषु पाठः ।

रन्नाद्येनैवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ता ऽएवैतत्सम्भरति ॥१६॥ अथ मधु गृह्णाति । "[1]शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चत्यपां[2] चैवैनमेतदोषधीनां च रसेनाभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति[3] ॥१७॥ अथ गोर्विजायमानायाऽउल्या गृह्णाति । "शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वा ऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥१८॥ अथ पयो गृह्णाति । "[4]जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्संभरति॥१९॥अथ घृतं गृह्णाति।"विश्वभृतस्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृतस्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"ति ताभिरभिषिञ्चति पशूनामेवैनमेतद्रसेनाभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥२०॥ अथ मरीचीः । अञ्जलिना सङ्गृह्यापिसृजत्या-"पः स्वराजस्थ राष्ट्रदा राष्ट्रममुष्मै दत्ते"त्येता वाऽआपः स्वराजो यन्मरीचयस्ता यत्स्यन्दन्त ऽइवान्योन्यस्याऽएवैतच्छ्रियाऽअतिष्ठमानाऽउत्तराधरा ऽइव भवन्त्यो यन्ति स्वाराज्यमेवास्मिन्नेतद्दधात्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥२१॥ ता वाऽएताः । सप्तदशापः सम्भरति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तस्मात्सप्तदशापः सम्भरति ॥२२॥ षोडश ताऽआपो याऽअभिजुहोति । षोडशाहुतीर्जुहोति ता द्वात्रिंशद्द्वयीषु न जुहोति सारस्वतीषु च मरीचिषु च ताश्चतुस्त्रिंशत्त्रयस्त्रिंशद्वै देवाः प्रजापतिश्चतुस्त्रिंशस्तदेनं प्रजापतिं करोति[8] ॥२३॥ अथ यद्धुत्वा हुत्वा गृह्णाति । वज्रो वा ऽआज्यं वज्रेणैवैतदाज्येन स्पृत्वा स्पृत्वा स्वीकृत्य गृह्णाति[9] ॥२४॥

---

१. मा सं. १०. ४. २. त्यपां इति ग. ३. सम्भरति इति ङ,च. एवमग्रेऽपि. ४–७. मा. सं. १० ४. ८. करोति. इति. च. ९. गृह्णाति. इति. च.

अथ य्यत्सारस्वतीषु न जुहोति । व्वाग्वै सरस्वती व्वज्रऽआज्यं नेद्वज्रेणाज्येन व्वाचᳬहिनसानीति तस्मात्सारस्वतीषु न जुहोति[1] ॥२५॥ अथ यन्मरीचिषु न जुहोति । नेदनद्धेवैतामाहुतिं जुहवानीति तस्मान्मरीचिषु न जुहोति ॥२६॥ ताः सार्द्धमौदुम्बरे पात्रे समवनयति । "मधुमतीर्मधुमतीभिः पृच्यन्तामि[2]"ति रसवती[3] रसवतीभिः पृच्यन्तामित्येवैतदाह "महि क्षेत्रं क्षत्रियाय व्वन्वाना[4]"ऽइति तत्परोक्षं क्षत्रं य्यजमानायाशिषमाशास्ते यदाह महि क्षत्रं क्षत्रियाय व्वन्वानाऽइति ॥२७॥ ताऽअग्रेण मैत्रावरुणस्य धिष्ण्यᳬ सादयति[5]। "अनाधृष्टाः[6] सीदत सहौजस"ऽइत्यनाधृष्टाः सीदत रक्षोभिरित्येवैतदाह सहौजसऽइति सवीर्याऽइत्येवैतदाह "महि[7] क्षत्रं क्षत्रियाय दधती"रिति तत्प्रत्यक्षं क्षत्रं य्यजमानायाशिषमाशास्ते यदाह महि क्षत्रं क्षत्रियाय दधतीरिति ॥२८॥ Cf का. श. ७. २. २; मै. सं. २. ६. ७, ८; तै. सं. १. ८. ११; काठ. १५. ६.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. ३. ४.)

५. ३. २.

(यजमानाभिषेकः)

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । एष वै प्रजापतिर्य्यऽएष यज्ञस्तायते[8] य्यस्मादिमाः प्रजाः प्रजाताऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यतऽएवैतस्य प्रजापतेर्द्दधाति मध्यतः सुवति[9] ॥१॥ अगृहीते माहेन्द्रे । एष वाऽइन्द्रस्य निष्केवल्यो ग्रहो य्यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यᳬशस्त्रमिन्द्रो वै य्यजमानस्तदेनᳬ

---

१. जुहोतिं इति ख, जुहोति इति. च. २, ४. मा. सं. १०. ४.
३. रसवत्य इति. ख. ५, सादयति इति. ख. ६, ७. मा. सं १०. ४.
८. तायते इति. घ. ९. सुवति इति. च.

स्व ऽएवायतनेऽभिषिञ्चति तस्माद्गृहीते माहेन्द्रे ॥२॥ अग्रेण मैत्रावरुणस्य धिष्ण्यᳫं । शार्दूलचर्मोपस्तृणाति "सोमस्य त्विषिरसी"ति यत्र वै सोमऽइन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति "तवेव मे त्विषिर्भूयादि"ति शार्दूलत्विषिमेवास्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति ॥३॥ अथ पार्थानि जुहोति । पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे सोऽकामयत सर्व्वमन्नाद्यमवरुन्धीयेति तस्माऽएतान्यजुहवुः सऽइदᳫं सर्व्वमन्नाद्यमवरुरुधेऽपि ह स्मास्माऽआरण्यान् पशूनभि ह्वयन्त्यसावेहि राजा त्वा पक्ष्यतऽइति तथेदᳫं सर्व्वमन्नाद्यमवरुरुधे सर्व्वᳫं ह वाऽअन्नाद्यमवरुन्द्धे यस्यैवं विदुषऽएतानि हूयन्ते ॥४॥ तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति ॥५॥ षट् पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात्तदेनं मध्यतऽएवैतस्य प्रजापतेर्दधाति मध्यतः सुवति ॥६॥ स यानि पुरस्तादभिषेकस्य जुहोति । बृहस्पतिस्तेषामुत्तमो भवत्यथ यान्युपरिष्टादभिषेकस्य जुहोतीन्द्रस्तेषां प्रथमो भवति ब्रह्म वै बृहस्पतिरिन्द्रियं वीर्य्यमिन्द्रऽएताभ्यामेवैनमेतद्वीर्य्याभ्यामुभयतः परिबृᳫंहति ॥७॥ स जुहोति । यानि पुरस्तादभिषेकस्य जुहोत्य- "ग्नये स्वाहे"ति तेजो वाऽअग्निस्तेजसैवैनमेतदभिषिञ्चति "सोमाय स्वाहे"ति क्षत्रं वै सोमः क्षत्रेणैवैनमेतदभिषिञ्चति "सवित्रे स्वाहे"ति सविता वै देवानां प्रसविता सवितृप्रसूतऽएवैनमेतदभिषिञ्चति "सरस्वत्यै स्वाहे"ति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चति "पूष्णे स्वाहे"ति पशवो वै पूषा पशुभिरेवैनमेतदभिषिञ्चति "बृहस्पतये

---

१. माहेन्द्रे इति ख, ग.　२, ३. मा. सं. १०. ५.
४. मेवास्मिन्निति. ग.　५. दिति इति. च.　६. पृथुर्ह वै इति. च.
७. अभिषिषिचे इति ख, अभिषिषिञ्चे इति. ग, ङ.　८. जुहोति. इति. ग.
९, १०. मा. स. १०. ५.　११. क्षत्रेणेति. ग, घ.　१२–१५. मा. सं. १०. ५

स्वाहे''ति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनमेतदभिषिञ्चत्येतानि पुरस्तादभिषेकस्य जुहोति तान्येतान्यग्निनामानीत्याचक्षते ॥८॥ अथ जुहोति । य्यान्युपरिष्टादभिषेकस्य जुहोती''न्द्राय स्वाहे''ति व्वीर्यं वाऽइन्द्रो व्वीर्येणैवैनमेतदभिषिञ्चति ''घोषाय स्वाहे''ति व्वीर्यं वै घोषो व्वीर्येणैवैनमेतदभिषिञ्चति ''श्लोकाय स्वाहे''ति व्वीर्यं वै श्लोको व्वीर्येणैवैनमेतदभिषिञ्च''त्यꣳशाय स्वाहे''ति व्वीर्यं वाऽअꣳशो व्वीर्येणैवैनमेतदभिषिञ्चति ''भगाय स्वाहे''ति व्वीर्यं वै भगो व्वीर्येणैवैनमेतदभिषिञ्चत्य''र्यम्णे स्वाहे''ति तदेनमस्य सर्व्वस्यार्यमणं करोत्येतान्युपरिष्टादभिषेकस्य जुहोति तान्येतान्यादित्यनामानीत्याचक्षते ॥९॥ अग्रेण मैत्रावरुणस्य धिष्ण्यम् । अभिषेचनीयानि पात्राणि भवन्ति य्यत्रैताऽआपोऽभिषेचनीया भवन्ति ॥१०॥ पालाशं भवति । तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैनमेतदभिषिञ्चति ॥ ॥११॥ औदुम्बरं भवति । तेन स्वोऽभिषिञ्चत्यन्नं वाऽऊर्गुदुम्बरऽऊर्ग्वै स्वं य्यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति तेनोर्क्स्वं तस्मादौदुम्बरेण स्वोऽभिषिञ्चति ॥१२॥ नैयग्रोधपादं भवति । तेन मित्र्यो राजन्योऽभिषिञ्चति पद्भिर्व्वै न्यग्रोधः प्रतिष्ठितो मित्रेण वै राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मित्र्यो राजन्योऽभिषिञ्चति ॥१३॥ आश्वत्थं भवति । तेन व्वैश्योऽभिषिञ्चति स य्यदेवादोऽश्वत्थे तिष्ठतऽइन्द्रो मरुतऽउपामन्त्रयत तस्मादाश्वत्थेन व्वैश्योऽभिषिञ्चत्येतान्यभिषेचनीयानि पात्राणि भवन्ति ॥१४॥ अथ पवित्रे करोति । ''पवित्रे स्थो व्वैष्णव्यावि''ति सोऽसावेव बन्धुस्तयोर्हिरण्यं प्रवयति ताभ्यामेताऽअभिषेचनीयाऽअपऽउत्पुनाति तद्यद्धिरण्यं प्रव-

---

१. ब्रह्मणा इति. घ. २. आचक्षते इति. च. ३–८. मा.सं. १०.५.
९. जुहोति इति. च. १०. आचक्षते इति. च. ११. ब्रह्मणा इति. ग.
१२. अभिषिञ्चति इति. ग, षिञ्चति इति. च. १३. त्यन्नं वा इति. च.
१४. अभिषिञ्चति इति. ग. १५. भवन्ति इति. च. १६. मा. सं. १०. ६.

यत्यमृतमायुर्हिरण्यं तदा स्वमृतमायुर्द्दधाति तस्माद्धिरण्यं प्रवयति ॥१५॥ सऽउत्पुनाति । "सवितुर्व्वः प्रसवऽउत्पुनाम्य्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभि"रिति सोऽसावेव बन्धुर"निभृष्टमसि व्वाचो बन्धुस्तपोजाऽ"इत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानिभृष्टमसीति व्वाचो बन्धुरिति य्यावद्धै प्राणेष्वापो भवन्ति तावद्वाचा व्वदति तस्मादाह व्वाचो बन्धुरिति ॥१६॥ तपोजाऽइति । अग्नेर्व्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरग्नेर्व्वाऽएता जायन्ते तस्मादाह तपोजाऽइति ॥१७॥ "सोमस्य दात्रमसी"ति । य्यदा वाऽएनमेताभिरभिषुण्वन्त्यथाहुतिर्भवति तस्मादाह सोमस्य दात्रमसीति "स्वाहा राजस्व"ऽइति तदेनाः स्वाहाकारेणैवोत्पुनाति ॥१८॥ ताँऽएतेषु पात्रेषु व्यानयति । "सधमादो द्युम्निनीराप ऽएता"ऽइत्यनतिमानिन्य ऽइत्येवैतदाह यदाह सधमादऽइति द्युम्निनीरापऽएताऽइति व्वीर्यवत्यऽइत्येवैतदाहा"नाधृष्टाऽअपस्यो व्वसाना"ऽइत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानाधृष्टाऽअपस्यो व्वसानाऽइति "पस्त्यासु चक्रे व्वरुणः सधस्थमि"ति व्विशो वै पस्त्या व्विक्षु चक्रे व्वरुणः प्रतिष्ठामित्येवैतदाहा"पाᳫँ शिशुर्मातृतमास्वन्त"रित्यपां वाऽएष शिशुर्भवति य्यो राजसूयेन य्यजते तस्मादाहापाᳫँ शिशुर्मातृतमास्वन्तरिति ॥१९॥ अथैनं व्वासाᳫँसि परिधापयति । तत्तार्प्यमिति व्वासो भवति तस्मिन्त्सर्व्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति "क्षत्रस्योल्बमसी"ति तद्यदेव क्षत्रस्योल्बं ततऽएवैनमेतज्जनयति ॥२०॥ अथैनं पाण्ड्वं परिधापयति । "क्षत्रस्य जरायुवसी"ति तद्यदेव क्षत्रस्य जरायु ततऽएवैनमेतज्जनयति ॥ २१ ॥

---

१. मा सं. ०. ६.  २. म्यच्छिद्रेणेति. ग.  ३,४ मा. सं. १०. ६.
५. अभिषुण्वन्तीति. ग, घ.  ६. मा. सं. १०. ६.  ७. ताऽएतेष्विति. घ.
८-१०. मा सं. १०. ७  ११. विक्षु. इति. ग.  १२. मा. सं. १०. ७.
१३. रिति. इति. ख, रिति इति ग.  १४,१६ मा. सं. १० ८.
१५. जनयति इति. च.एवमग्रेऽपि.

अथाधीवासं प्रति मुञ्चति । "क्षत्रस्य योनिरसी"ति तद्यैव क्षत्रस्य योनिस्तस्याऽएवैनमेतज्जनयति ॥ २२ ॥ अथोष्णीषꣳसꣳहृत्य । पुरस्तादवगूहति । "क्षत्रस्य नाभिरसी"ति तद्यैव क्षत्रस्य नाभिस्तामेवास्मिन्नेतद्दधाति ॥२३॥ तद्धैके । समन्तं परिवेष्टयन्ति नाभिर्वाऽअस्यैषा समन्तं वाऽइयं नाभिः पर्येतीति व्वदन्तस्तदु तथा न कुर्यात्पुरस्तादेवावगूहेत्पुरस्ताद्धीयं नाभिस्तद्य-देनं व्वासाꣳसि परिधापयति जनयत्येवैनमेतज्जातमभिषिञ्चानीति तस्मादेनं व्वासाꣳसि परिधापयति ॥२४॥ तद्धैके । निदधत्येतानि व्वासाꣳस्यथैनं पुनर्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्या-दङ्गानि वाऽअस्य जनूर्व्वासाꣳस्यङ्गैर्हैनꣳ सजन्वा तन्वा व्यर्द्धयन्ति व्वरुण्यं दीक्षितवसनꣳ सऽएतेषामेवैकं व्वाससां परिदधीत तदेन-मङ्गैर्जन्वा तन्वा समर्द्धयति व्वरुण्यं दीक्षितवसनं तदेनं व्वरुण्याद्दी-क्षितवसनात्प्रमुञ्चति ॥२५॥ स यत्रावभृथमभ्यवैति । तदेतदभ्यव-हरन्ति तत्सलोम क्रियते सऽएतेषामेवैकं व्वाससां परिधायोदैति तानि व्वशायै वा व्वपायाꣳहुतायां दद्यादुदवसानीयायां व्वेष्टौ ॥२६॥ अथ धनुरधितनोति । "इन्द्रस्य व्वार्त्रघ्नमसी"ति व्वार्त्रघ्नं वै धनुरिन्द्रो वै यजमानो द्वयेन वाऽएषऽइन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य व्वार्त्रघ्नमसीति ॥२७॥ अथ बाहू व्विमार्ष्टि । "मित्रस्यासि व्वरुणस्यासी"ति बाह्वोर्व्वै धनुर्बा-हुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रस्यासि व्वरुणस्यासीति तदस्मै प्रयच्छति "त्वयायं व्वृत्रं व्वधेदि"ति त्वयायं द्विषन्तं भ्रातृव्यं व्वधेदित्येवैतदाह ॥२८॥ अथास्मै तिस्रऽइषूः प्रयच्छति । स यया प्रथमया समर्पणेन पराभिनत्ति सैका सेयं पृथिवी सैषा दवा नामाथ

---

१, २ मा. सं. १०. ८. ३. तद्यैव इति. च, घ. ४. मा. सं. १०. ८.
५. मसीति इति. च. ६, ७. मा. सं. १०. ८. ८. त्वयायं इति. ग, घ.
९. तदाह इति ख, च. १०. अथास्मै इति. ख. ११. प्रयच्छति इति. च.
१२. परान्भिनत्ति इति. च १३. पृथिवी इति. ख.

यया विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया तदिदमन्तरिक्षं सैषा रुजा नामाथ ययापैव राध्नोति सा तृतीया सासौ द्यौः सैषा क्षुमा नामैता हि वै तिस्र इषवस्तस्मादस्मै तिस्र इषूः प्रयच्छति ॥२९॥ ताः प्रयच्छति। "पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पाते"ति तदस्मै सर्व्वा एव दिशोऽशरव्याः करोति तद्यदस्मै धनुः प्रयच्छति वीर्यं वा एतद्राजन्यस्य यद्धनुर्वीर्यवन्तमभिषिञ्चानीति तस्माद्वा अस्मा आयुधं प्रयच्छति ॥३०॥ अथैनमाविदो वाचयति। "आविर्मर्या" इत्यनिरुक्तं प्रजापतिर्वा अनिरुक्तस्तदेनं प्रजापतय आवेदयति सोऽस्मै सवमनुमन्यते तेनानुमतः सूयते ॥३१॥ "आवित्तोऽअग्निर्गृहपतिरि"ति। ब्रह्म वा अग्निस्तदेनं ब्रह्मण आवेदयति तदस्मै सवमनुमन्यते तेनानुमतः सूयते ॥३२॥

(अर्द्धप्रपाठकः ६०)

"आविर्त्त इन्द्रो वृद्धश्रवा" इति। क्षत्रं वा इन्द्रस्तदेनं क्षत्रायावेदयति तदस्मै सवमनुमन्यते तेनानुमतः सूयते ॥३३॥ "आवित्तौ मित्रावरुणौ धृतव्रतावि"ति। प्राणोदानौ वै मित्रावरुणौ तदेनं प्राणोदानाभ्यामावेदयति तावस्मै सवमनुमन्येते ताभ्यामनुमतः सूयते ॥३४॥ "आवित्तः पूषा विश्ववेदा" इति। पशवो वै पूषा तदेनं पशुभ्य आवेदयति तेऽस्मै सवमनुमन्यन्ते तैरनुमतः सूयते ॥३५॥ "आवित्ते द्यावापृथिवी विश्वशम्भुवावि"ति। तदेनमाभ्यां द्यावापृथिवीभ्यामावेदयति तेऽअस्मै सवमनुमन्यते ताभ्यामनुमतः सूयते ॥ ॥३६॥ "आवित्तादिति रुरुशर्मे"ति। इयं वै पृथिव्यदितिस्तदेनमस्यै

---

१. मा. सं. १०. ८. १. पातेति. ग. ३. प्रयच्छति इति. ख,च.
४. अथ इति. ख. ५, ६. मा.सं. १०.९. ७. तदस्मै इति ग.
८. मा. सं. १०. ९. आवित्तोऽइन्द्र इति ग, घ ९. इति इति. ग.
१०-१३. मा.सं. १०.९. १४. रुरु इति. ग, घ.

पृथिव्याऽआवेदयति सास्मै सवमनुमन्यते तयानुमतः सूयते तद्याभ्य-ऽएवैनमेतद्देवताभ्यऽआवेदयति ताऽअस्मै सवमनुमन्यन्ते ताभिरनु-मतः सूयते ॥३७॥ Cf. का. श. ७. २. ४; मै. सं. २. ६. ९; तै. सं. १. ८. १२; काठ. १५. ७.

इति माध्यदिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ. ३. ५.)

( इति तृतीयोऽध्यायः )

५. ३. ३.

( यजमानाभिषेकधर्माः )

केशवस्य पुरुषस्य। लोहायसमास्यऽआविध्य"[1]त्यवेष्टा दन्दशूका"ऽइति सर्व्वान्वाऽएष मृन्यूनतिमुच्यते सर्व्वान्वधान्यो राजसूयेन य्यजते तस्य जरैव मृत्युर्भवति तद्यो मृत्युर्य्यो व्वधस्तमेवैतदतिनयति य्यद्दन्दशूकान् ॥१॥ अथ य्यत्केशवस्य पुरुषस्य। न वाऽएष स्त्री न पुमान्यत्केशवः पुरुषो यदह पुमांस्तेन न स्त्री य्यदु केशवस्तेनो न पुमान्नैतदयो न हिरण्यं य्यल्लोहायसं नैते क्रिमयो नाक्रिमयो य्यद्दन्दशूका ऽअथ य्यल्लोहायसं भवति लोहिताऽइव हि दन्दशूकास्तस्मात्केशवस्य पुरुषस्य ॥२॥ अथैनं दिशः समारोहयति। "प्राचीमारोह गायत्री त्वावतु रथन्तरꣳसाम त्रिवृत्स्तोमो व्वसन्तऽऋतुर्ब्रह्म द्रविणम्" ॥३॥ "दक्षिणामारोह। त्रिष्टुप्त्वावतु बृहत्साम पञ्चदश स्तोमो ग्रीष्मऽऋतुः क्षत्रं द्रविणम्" ॥४॥ "प्रतीचीमारोह। जगती त्वावतु व्वैरूपꣳ साम सप्तदश स्तोमो व्वर्षाऽऋतुर्व्विड् द्रविणम्" ॥५॥ "उदीचीमारोह। अनुष्टुप्त्वावतु व्वैराजꣳ

---

१. मा. सं. १०. १० २. सर्वानिति . ग. ३. स्तमेवेति ग.
४. हिरण्यं इति. च. ५. पुरुषस्य इति. ख,च. ६. मा. सं. १०. १०
७. मा. सं. १०, ११. ८. मा. सं. १०, १२. ९. मा. सं. १०,१३.

सामैकविंशस्तोमः शरदृतुः फलं द्रविणम्'' ॥६॥ "ऊर्ध्वामारोह । पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिंशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणमि''ति ॥७॥ तद्यदेनं दिशः समारोहयति । ऋतूनामेवैतद्रूपमृतूनेवैनमेतत्संवत्सरं समारोहयति स ऋतून्त्संवत्सरं समारुह्य सर्व्वमेवेदमुपर्युपरि भवत्यर्वागेवास्मादिदं सर्व्वं भवति ॥८॥ शार्दूलचर्म्मणो जघनार्द्धे । सीसं निहितं भवति तत्पदा प्रत्यस्यति "प्रत्यस्तं नमुचेः शिर''ऽइति नमुचिर्ह वै नामासुरऽआस तमिन्द्रो निविव्याध तस्य पदा शिरोऽभितष्ठौ स यदभिष्ठितऽउदबाधत सऽउच्छ्वङ्कस्तस्य पदा शिरः प्रचिच्छेद ततो रक्षः समभवत्तद्ध स्मैनमनुभाषते क्व गमिष्यसि क्व मे मोक्ष्यसऽइति ॥९॥ तत्सीसेनापजघान । तस्मात्सीसं मृदु मृतजवं हि सर्व्वेण हि वीर्येणापजघान तस्माद्धिरण्यरूपं सन्न कियच्च नार्हति मृतजवं हि सर्व्वेण हि वीर्येणापजघान तद्वै स तन्नाष्ट्रा रक्षांस्यपजघान तथोऽएवैषऽएतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति ॥१०॥ अथैनं शार्दूलचर्म्मा रोहयति । "सोमस्य त्विषिरसी''ति यत्र वै सोमऽइन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति "तवेव मे त्विषिर्भूयादि''ति शार्दूलत्विषिमेवास्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति ॥११॥ अथ रुक्ममधस्तादुपास्यति । "मृत्योः पाही''त्यमृतमायुर्हिरण्यं तदमृतऽआयुषि प्रतितिष्ठति ॥१२॥ अथ रुक्मः शतवितृण्णो वा भवति । नववितृण्णो वा स यदि शतवितृण्णः शतायुर्वाऽअयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे

---

१. मा. सं. १०. १४　　२. मेवैनमेतद्रूपमृतूनेवैतदिति. ग, घ.

३. भवत्यर्वागैवेति घ, च.　　४. दिदंसर्वमिति ग.　　५. मा. सं. १०. १४.

६. उक्षवङ्क इति च.　　७. अपहन्ति इति. च.　　८, ९. मा. सं. १०. १५.

१०. दिति इति ग, दिति इति. च. ११. मा. सं. १०. १५. १२. तिष्ठति इति. च.

पुरुषे प्राणास्तस्मान्नववितृण्णः ॥१३॥ तमुपरिष्टाच्छीर्ष्णो निदधा-ति । "ओजोऽसि सहोऽस्यमृतमसी"त्यमृतमायुर्हिरण्यं तदस्मिन्न-मृतमायुर्दधाति तद्यद्रुक्मा उभयतो भवतोऽमृतमायुर्हिरण्यं तद-मृतेनैवैनमेतदायुषोभयतः परिबृꣳहति तस्माद्रुक्मा उभयतो भवतः ॥१४॥ अथ बाहू उद्गृह्णाति । "हिरण्यरूपा उषसो वि-रोक उभाविन्द्रा उदिथः सूर्यश्च । आरोहतं वरुण मित्र गर्त्तं ततश्चक्षाथामदितिं दितिं चे"ति बाहू वै मित्रावरुणौ पुरुषो गर्त्त-स्तस्मादाहारोहतं वरुण मित्र गर्त्तमिति ततश्चक्षाथामदितिं दितिं चेति ततः पश्यतꣳ स्वं चारणं चेत्येवैतदाह ॥१५॥ नैतेनोद्गृह्णी-यात् । "मित्रोऽसि वरुणोऽसी"त्येवोद्गृह्णीयाद्बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मान्मित्रोऽसि वरुणोऽसीत्येवोद्-गृह्णीयात् ॥१६॥ तद्यदेनमूर्ध्वबाहुमभिषिञ्चति । वीर्यं वा एतद्रा-जन्यस्य यद्बाहू वीर्यं वा एतदपाꣳ रसः सम्भृतो भवति येनैनमे-तदभिषिञ्चति नेन्म इदं वीर्यं वीर्यमपाꣳ रसः सम्भृतो बाहू विलनादिति तस्मादेनमूर्ध्वबाहुमभिषिञ्चति ॥१७॥ Cf. का. श. ७. ३. १; मै. सं. २. ६. १०; तै. सं. १. ८. १३; काठ. १५. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. ४. १.)

## ५. ३. ४.

### ( अभिषेकः )

तं वै प्राञ्चं तिष्ठन्तमभिषिञ्चति । पुरस्ताद्ब्राह्मणोऽभिषिञ्चत्य-ध्वर्युर्वा यो वास्य पुरोहितो भवति पश्चादितरे ॥१॥ "सोमस्य त्वा

१. निदधाति इति. ख. २. मा. सं. १०. १५. ३. भवतः इति ग.
४, ६. मा. सं. १०. १६. ५. उभाविन्द्रोऽउदिथ इति ग, घ.
७. वरुणौ इति ख, ग, घ. ८. अभिषिञ्चति इति ग. ९. मा. सं. १०. १७.

द्युम्नेनाभिषिञ्चामी"ति । व्वीर्य्येणैतदाहा"ग्नेर्भ्राजसे"ति व्वीर्येणैवैतदाह "सूर्यस्य व्वर्चसे"ति व्वीर्येणैवैतदाहे "न्द्रस्येन्द्रियेणे"ति व्वीर्येणैवैतदाह "क्षत्राणां क्षत्रपतिरेध्धी"ति राज्ञामधिराजऽएधीत्येवैतदाहा"ति दिद्यून् पाही"तीषवो वै दिद्यव ऽइषुवधमेवैनमेतदतिनयति तस्मादाहाति दिद्यून् पाहीति ॥२॥ "इमं देवाः । असपत्नꣳ सुवध्वमि"तीमं देवाऽआभ्रातृव्यꣳ सुवध्वमित्येवैतदाह "महते क्षत्राय महते ज्यैष्ठ्यायेति नात्र तिरोहितमिवास्ति "महते जानराज्याये"ति महते जनानाꣳराज्यायेत्येवैतदाहे"न्द्रस्येन्द्रियाये"ति व्वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेती "ममुष्य पुत्रममुष्यै पुत्रमि"ति तद्यदेवास्य जन्म ततऽएवैतदाहा"स्यै व्विश"ऽइति यस्यै व्विशो राजा भवत्ये"ष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजे"ति तदस्माऽइदꣳ सर्व्वमाद्यं करोति ब्राह्मणमेवापोद्धरति तस्माद्ब्राह्मणोऽनाद्यः सोमराजा हि भवति ॥३॥ अथैतमभिषेकम् । कृष्णविषाणयानुविमृष्टे व्वीर्यं वाऽएतदपाꣳ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चतीदं मे व्वीर्यꣳ सर्व्वमात्मानमुपस्पृशादिति तस्माद्वाऽअनुविमृष्टे ॥४॥ सोऽनुविमृष्टे । "प्र पर्व्वतस्य व्वृषभस्य पृष्ठादि"ति यथायं पर्व्वतोऽतिष्ठावा यथर्षभः पशूनतिष्ठावेवं वाऽएषऽइदꣳ सर्व्वमतितिष्ठत्यर्व्वागेवास्मादिदꣳ सर्व्वं भवति यो राजसूयेन यजते तस्मादाह प्र पर्व्वतस्य व्वृषभस्य पृष्ठा"न्नावश्चरन्ति स्वसिचऽइयानाः । ताऽआववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनु रीयमाणा"ऽइति ॥५॥ अथैनमन्तरेव शार्दूलचर्मणि व्विष्णुक्रमान् क्रमयति । "व्विष्णोर्व्विक्रमणमसि व्विष्णोर्व्विक्रान्तमसि व्विष्णोः क्रान्तमसी"तीमे वै लोका व्विष्णोर्व्विक्रमणं व्विष्णोर्व्विक्रान्तं व्विष्णोः क्रान्तं तदिमानेव

---

१–५. मा. सं. १०. १७. ६. इषुवधमिति. च. ७–१३. मा. सं. १०. १८.
१४. भवति इति. च. १५; १६. मा. सं. १०. १९ १७. इयानाः इति. च.
१८. इति इति. ग, इति. च. १९. मा सं. १०. १९.

लोकान्त्समारुह्य सर्व्वमेवेदमुपर्युपरि भवत्यर्व्वागेवास्मादिदꣳ सर्व्वं भवति ॥६॥ अथ ब्राह्मणस्य पात्रे । सꣳस्रवान्त्समवनयति तद्ब्राह्मणꣳ राजानमनु व्यशः करोति तस्माद्ब्राह्मणो राजानमनु व्यशः ॥ ७ ॥ तद्योऽस्य पुत्रः प्रियतमो भवति । तस्माऽएतत्पात्रं प्रयच्छतीदं मेऽयं व्वीर्यं पुत्रोऽनुसन्तनवदिति[1] ॥८॥ अथ प्रतिपरेत्य गार्हपत्यमन्वारब्धे जुहोति । "प्रजापते[2] न त्वदेतान्यन्यो व्विश्वा रूपाणि परि ता बभूव । व्यत्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्य पिते"ति तद्यः पुत्रस्तं पितरं करोति व्यः पिता तं पुत्रं तदेनयोर्व्वीर्यं व्यतिषजत्य"सावस्य[3] पिते"ति तद्यः पिता तं पितरं करोति व्यः पुत्रस्तं पुत्रं तदेनयोर्व्वीर्यं व्यतिषज्य[4] पुनरेव व्यथायथं करोति "व्वयꣳ[5] स्याम पतयो रयीणाꣳ स्वाहे"त्याशीरेवैषैतस्य कर्मण ऽआशिषमेवैतदाशास्ते[6] ॥९॥ अथ व्यऽएष सꣳस्रवोऽतिरिक्तो भवति । तमाग्नीध्रीये जुहोत्यतिरिक्तो वाऽएष सꣳस्रवो भवत्यतिरिक्त ऽआग्नीध्रीयो गार्हपत्ये हवीꣳषि श्रपयन्त्याहवनीये जुह्वत्यथैषोऽतिरिक्तस्तदतिरिक्तऽएवैतदतिरिक्तं दधात्युत्तरार्द्धे जुहोत्येषा[7] ह्येतस्य देवस्य दिक्तस्मादुत्तरार्द्धे जुहोति स जुहोति "रुद्र[8] व्यत्ते क्रिवि परं नाम तस्मिन् हुतमस्यमेष्टमसि स्वाहे"ति ॥१०॥ Cf का. श. ७. ३. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ४. २. )

---

१ दिति इति. ग, दिति इति.च. २, ३. मा. सं. १०. २०.
४. व्यतिषज्येति. ग व्यतिसज्येति. घ. ५. मा. सं. १०. २०.
६. दाशास्ते इति. ग. ७. जुहोत्येष इति ग, घ.
८. मा. सं. १०. २०.

## ५. ३. ५.

### ( रथोपावहरणादि )

तद्योऽस्य स्वो भवति । तस्य शतं वा परःशता वा गाऽउत्तरेणाहवनीयᳫ्ँ संस्थापयति तद्यदेवं करोति ॥१॥ वरुणाद्ध वाऽअभिषिषिचानात् । इन्द्रियं वीर्यमपचक्राम शश्वद्यऽएषोऽपाᳫ्ँ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति सोऽस्येन्द्रियं वीर्यं निर्जघान तत्पशुष्वन्ववविन्दत्तस्मात्पशवो यशो यदेष्वन्ववविन्दत्तत्पशुष्वनुविद्येन्द्रियं वीर्यं पुनरात्मन्नधत्त तथोऽएवैषऽएतन्नाहैवास्मान्निन्द्रियं वीर्यमपक्रामति वरुणसवो वाऽएष यद्राजसूयमिति वरुणोऽकरोदिति त्वेवैषऽएतत्करोति ॥२॥ अथ रथमुपावहरति । यद्वै राजन्यात्पराग्भवति रथेन वै तदनुयुङ्क्ते तस्माद्रथमुपावहरति ॥३॥ सऽउपावहरति । "इन्द्रस्य वज्रोऽसी"ति वज्रो वै रथऽइन्द्रो वै यजमानो द्वयेन वाऽएषऽइन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वज्रोऽसीति ॥४॥ तमन्तर्वेद्यभ्यववर्त्य युनक्ति । "मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मी"ति बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रावरुणयोस्त्वाँ प्रशास्त्रोः प्रशिषा युनज्मीति ॥५॥ तं चतुर्युजं युनक्ति । स जघनेन सदोऽग्रेण शालां येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन चात्वालमग्रेणाग्नीध्रमुद्यच्छति ॥६॥ तमातिष्ठति । "अव्यथायै त्वा स्वधायै त्वे"त्यनार्त्यै त्वेत्येवैतदाह यदाहाव्यथायै त्वेति स्वधायै त्वेति रसाय त्वेत्येवैतदाहा"रिष्टोऽर्जुन" इत्यर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम द्वयेन वाऽएषऽइन्द्रो भवति यच्च क्ष-

---

१. आहवनीयᳫ्ँ संस्थापयतीति. ग, घ.　२. भवति इति घ, च.
३. करोति इति. च.　४, ५. मा. सं. १०. २१.　६, ८. युनज्मीति. ख, च.
७. स्त्वा इति. ग, घ.　९. मग्रेणेति ग, घ.　१०. तमातिष्ठति इति. च.
११, १२. मा. सं. १०. २१.

त्रियो य्यद्दु च य्यजमानस्तस्मादाहारिष्टोऽअर्जुनऽ[1]इति ॥७॥ अथ दक्षिणायुग्यमुपार्षति । "[2]मरुतां प्रसवेन जये"ति व्विशो वै मरुतो व्विशा वै तत्क्षत्रियो जयति यज्जिगीषति तस्मादाह मरुतां प्रसवेन [3]जयेति ॥८॥ अथ मध्ये गवामुद्यच्छति । "[4]आपाम मनसे"ति मनसा वाऽइदᳬ सर्व्वमाप्तं तन्मनसैवैतत्सर्व्वमाप्नोति तस्मादाहापाम [5]मनसेति ॥९॥ अथ धनुरार्त्न्या गामुपस्पृशति । "[6]समिन्द्रियेणे"तीन्द्रियं वै व्वीर्यं गावऽइन्द्रियमेवैतद्वीर्यमात्मन् धत्तेऽथाह जिनामीमाः कुर्व्वऽइमाऽ[7]इति ॥१०॥ तद्यत्स्वस्य गोषूद्यच्छति । यद्वै पुरुषात्पराग्भवति य्यशो वा किञ्चिद्वा स्वᳬ[8]हैवास्य तत्प्रतमामिवाभ्यपक्रामति तत्स्वादेवैतदिन्द्रियं व्वीर्यं पुनरात्मन्धत्ते त[9]स्मात्स्वस्य गोषूद्यच्छति ॥११॥ तस्मै तावन्मात्रीर्व्वा भूयसीर्व्वा प्रतिददाति । न वाऽएष क्रूरकर्मणे भवति यद्यजमानः क्रूरमिव वाऽएतत्करोति यदाह जिनामीमाः कुर्व्वऽइमाऽइति तथो हास्यैतदक्रूरं कृतं भवति तस्मात्तावन्मात्रीर्व्वा [10]भूयसीर्वा प्रतिद[11]दाति ॥१२॥ अथ दक्षिणानायच्छति । सोऽग्रेण य्यूपं दक्षिणेन व्वेदिं य्येनैव दक्षिणा य्यन्ति तेन प्रतिपद्यते तं जघनेन सदोऽग्रेण शालामुद्यच्छति ॥१३॥ "[12]मा तऽइन्द्र ते व्वयं तुराषाट् । अयुक्तासोऽअब्रह्मता व्विदसाम तिष्ठा रथमधि य्यं व्वज्रहस्ता रश्मीन्देव यमसे स्वश्वानि"त्युद्यच्छत्येवैतयाभीशवो वै रश्मयस्त[13]स्मादाहारश्मीन्देव यमसे स्वश्वानित्यथ रथविमोचनीयानि जुहोति प्रीतो रथो व्विमुच्याताऽइति तस्माद्रथविमोचनीयानि

---

१. इति इति. ख, इति च. २, ४. मा सं. १०. २१. ३. जयेति इति ख, च.
५. मनसेति इति ग, मनसेति इति. च. ६. मा. सं. १०. २१
७. इति इति च. ८. हैवास्य इति. ग, घ. ९. तस्मादिति. ग.
१०. भूयसीरिति ग, घ. ११. ददाति इति च.
१२. मा. सं. १०. २२; "मा न इन्द्र" इति 'गघ' पुस्तकयोः पाठः ।
१३. स्तस्मादिति. ग.

जुहोति ॥१४॥ स जुहोति । "अग्नये गृहपतये स्वाहे"ति स यदेवाग्नेयꣳ रथस्य तदेवैतेन प्रीणाति वृहा वाऽआग्नेया रथस्य वृहानेवैतेन प्रीणाति श्रीर्वै गार्हपतं यावतो यावतऽईष्टे तच्छ्रियमेवास्यैतद्गार्हपतꣳ राज्यमभि विमुच्यते ॥१५॥ "सोमाय वनस्पतये स्वाहे"ति । द्वयानि वै वानस्पत्यानि चक्राणि रथ्यानि चानसानि च तेभ्यो न्वेवैतदुभयेभ्योऽरिष्टिं कुरुते सोमो वै वनस्पतिः स यदेव वानस्पत्यꣳ रथस्य तदेवैतेन प्रीणाति दारूणि वै वानस्पत्यानि रथस्य दारूण्येवैतेन प्रीणाति क्षत्रं वै सोमः क्षत्रमेवास्यै तद्राज्यमभि विमुच्यते ॥१६॥ "मरुतामोजसे स्वाहे"ति । स यदेव मारुतꣳ रथस्य तदेवैतेन प्रीणाति चत्वारोऽश्वा रथः पञ्चमो द्वौ सव्यष्टृसारथी ते सप्त सप्त सप्त वै मारुतो गणः सर्वमेवैतेन रथं प्रीणाति विशो वै मरुतो विशमेवास्यैतद्राज्यमभिविमुच्यते ॥१७॥ "इन्द्रस्येन्द्रियाय स्वाहे"ति । स यदेवैन्द्रꣳ रथस्य तदेवैतेन प्रीणाति सव्यष्ठा वाऽऐन्द्रो रथस्य सव्यष्ठारमेवैतेन प्रीणातीन्द्रियं वै वीर्यमिन्द्रऽइन्द्रियमेवास्यैतद्वीर्यꣳ राज्यमभि विमुच्यते ॥१८॥ अथ वाराह्याऽउपानहाऽउपमुञ्चते । अग्नौ ह वै देवा घृतकुम्भं प्रवेशयां चक्रुस्ततो वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूतस्तस्माद्वराहे गावः सञ्जानते स्वमेवैतद्रसमभिसञ्जानते तत्पशूनामेवैतद्रसे प्रतितिष्ठति तस्माद्वाराह्याऽउपानहाऽउपमुञ्चते ॥१९॥ अथेमां प्रत्यवेक्षमाणो जपति । "पृथिवि मातर्मा मा हिꣳसीर्मोऽअहं त्वामि"ति वरुणाद्ध वाऽअभिषिषिचानात्पृथिवी बिभयाञ्चकार महद्वाऽअयमभूद्योऽभ्यषेचि यद्वै मायं नावदृणीयादिति वरुण ऽउ ह

---

१. मा. सं. १० २३.   २. वहा इति. ग.   ३. यावत इति. ग, घ.
४. तच्छ्रियमिति. ग.   ५. विमुच्यते इति ग. एवमग्रेऽपि
६–८. मा. सं. १०.२३.   ९. उपमुच्यते इति. घ.
१०. उपमुञ्चते. इति.ख,ग.   ११. मा. सं. १०. २३.

पृथिव्यै बिभयाञ्चकार य्यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥२०॥ व्वरुणसवो वाऽएष य्यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति महद्वाऽअयमभूद्योऽभ्यषेचि य्यद्वै मायं नावदृणीयादित्येषऽउ ह्यस्यै बिभेति य्यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरं तस्मादेवं जपति ॥२१॥ सोऽवतिष्ठति । "[1]हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता व्वेदिषदतिथिर्दुरोणसत्[2] । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऽऋतजा ऽअद्रिजा[3] ऽऋतं बृहदि"त्येतामतिच्छन्दसं जपन्नेषा वै सर्व्वाणि छन्दाꣳसि य्यदतिच्छन्दास्तथैनं पाप्मा नान्ववतिष्ठति ॥२२॥ तं न सङ्ग्रहीतान्ववतिष्ठेत् । नेत्तं लोकमन्ववतिष्ठाद्यꣳ सुषुवाणोऽन्ववास्थादिति तꣳसरथमेव रथवाहण[4]ऽ आदधाति ततोऽवाङुपप्रवते तथा तं लोकं नान्ववतिष्ठति य्यꣳ सुषुवाणोऽन्ववास्थात् ॥२३॥ उत्तरेणाहवनीयं पूर्व्वाग्निरुद्वृतो भवति । स रथवाहणस्य[5] दक्षिणमन्वनुष्यन्दꣳ[6] शतमानौ प्रवृत्तावाबध्नाति[7] ॥२४॥ औदुम्बरीꣳ शाखामुपगूहति । तयोरन्यतरमुपस्पृशती"[8]यदस्यायुरस्यायुर्मयि धेहि य्युङ्ङसि[9] व्वर्चो मयि धेही"ति तदायुर्व्वर्च्चऽआत्मन् धत्ते ॥२५॥ अथौदुम्बरीꣳशाखामुपस्पृशति । "[10]ऊर्गस्यूर्जं मयि धेही"ति तदूर्जमात्मन् धत्ते तस्यैतस्य कर्मणऽएतावेव शतमानौ प्रवृत्तौ दक्षिणा तौ ब्रह्मणे ददाति ब्रह्मा हि य्यज्ञं[11] दक्षिणतोऽभिगोपायति तस्मात्तौ ब्रह्मणे ददाति[12] ॥२६॥ अग्रेण मैत्रावरुणस्य धिष्ण्यम् । मैत्रावरुणी पयस्या निहिता भवति तामस्य बाहूऽअभ्युपावहरती "[13]इन्द्रस्य वां

---

१. मा. सं. १०. २४. २. सत् इति. ग, घ. ३. अद्रिजा इति. ग.
४,५. रथवाहन इति ग, घ. ६. ष्यन्दꣳ इति. ग, घ.
७. वावध्नाति इति. ख, वावध्नाति इति. ग, वावध्नाति इति च.
८, १०. मा.सं. १०.२५. ९. युङ्ङसि इति. ग, घ. ११. यज्ञं इति. ग.
१२. ददाति इति. च. १३. मा. सं. १०. २५.

द्वीर्य्यङ्कृतो बाहूऽअभ्युपावहरामी''ति पशूनां वाऽएष रसो यत्पयस्या तत्पशूनामेवास्यैतद्रसं बाहूऽअभ्युपावहरति तद्यन्मैत्रावरुणी भवति मित्रावरुणाऽउ हि बाहू तस्मान्मैत्रावरुणी भवति ॥२७॥
Cf. ७. ३. ३ ; मै. सं. २. ६. ११ ; तै. सं. १. ८. १५ ; कठ. १५. ७, ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ४. ३. )

तृतीयः प्रपाठकस्समाप्तः ॥
( कण्डिकासंख्या ११९ )

## अथ चतुर्थः प्रपाठकः

### ५. ४. १.

### ( पयस्यायाः प्रचारः )

मैत्रावरुण्या पयस्यया प्रचरति । तस्याऽअनिष्ट ऽएव स्विष्टकृद्भवत्यथास्माऽआसन्दीमाहरन्त्युपरिसद्यं वाऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेनमुपर्यासीनमधस्तादिमाः प्रजाऽउपासते तस्मादस्माऽआसन्दीमाहरन्ति सैषा खादिरी व्वितृण्णा भवति येयं व्वर्ध्रव्यूता भरतानाम् ॥१॥ तामग्रेण । मैत्रावरुणस्य धिष्ण्यं निदधाति "स्योनासि सुषदासी''ति शिवामेवैतच्छग्मां करोति ॥२॥ अथाधीवासमास्तृणाति । "क्षत्रस्य योनिरसी''ति तद्यैव क्षत्रस्य योनिस्तामेवैतत्करोति ॥३॥ अथैनमासादयति । "स्योनामासीद सुषदामासीदे''ति शिवाᳬं शग्मामासीदेत्येवैतदाह "क्षत्रस्य योनिमासीदे''ति तद्यैव क्षत्रस्य योनिस्तस्या-

---

१. वरुणी इति. ग; २. भवति इति. च. ३. वर्ध्रव्युता इति. क,ग.
४, ६. मा. सं.१०.२६ ५, ७. करोति इति.च. ८,९. मा.सं. १०. २६.

मेवैनमेतद्दधाति ॥४॥ अथान्तराᳫँसेऽभिमृश्य जपति । "निषसाद धृतव्रत"ऽइति धृतव्रतो वै राजा न वाऽएष सर्व्वस्माऽइव व्वदनाय न सर्वस्माऽइव कर्मणे य्यदेव साधु व्वदेद्यत्साधु कुर्यात्तस्मै वाऽएष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ तस्मादाह निषसाद धृतव्रतऽइति "व्वरुणः पस्त्यास्वे"ति व्विशो वै पस्त्या व्विक्ष्वेत्येवैतदाह "साम्राज्याय सुक्रतुरि"ति राज्यायेत्येवैतदाह य्यदाह साम्राज्याय सुक्रतुरिति ॥५॥ अथास्मै पञ्चाक्षान् पाणावावपति । "अभिर्भूरस्येतास्ते पञ्च दिशः कल्पन्तामि"त्येष वाऽअयानभिभूर्यत्कलिरेष हि सर्व्वानयानभिभवति तस्मादाहाभिभूरसीत्येतास्ते पञ्च दिशः कल्पन्तामिति पञ्च वै दिशस्तदस्मै सर्व्वाऽएव दिशः कल्पयति ॥६॥ अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति । तं दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति तस्माद्राजा दण्ड्यो य्यदेनं दण्डवधमतिनयन्ति ॥७॥ अथ व्वरं व्वृणीते । य्यᳫँ ह वै कं च सुषुवाणो व्वरं व्वृणीते सोऽस्मै सर्व्वः समृध्यते तस्माद्वरं व्वृणीते ॥८॥ स ब्रह्मन्नित्येव प्रथममामन्त्रयते । "ब्रह्म" प्रथममभिव्याहराणि ब्रह्मप्रसूतां व्वाचं व्वदानीति तस्माद्ब्रह्मन्नित्येव प्रथममामन्त्रयते "त्वं ब्रह्मासी"तीतरः प्रत्याह "सवितासि सत्यप्रसव"ऽइति व्वीर्यमेवास्मिन्नेतद्दधाति सवितारमेव सत्यप्रसवं करोति ॥९॥ ब्रह्मन्नित्येव द्वितीयमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याह "व्वरुणोऽसि सत्यौजा"ऽइति व्वीर्यमेवास्मिन्नेतद्दधाति व्वरुणमेव सत्यौजसं करोति ॥१०॥ ब्रह्मन्नित्येव

---

१. दधाति इति. च. २-४ मा. सं. १०. २७.
५. सुक्रतुर्रिति इति. ग, सुक्रतुरिति इति च. ६. पञ्चाक्षानिति. ग.
७. मा. सं. १०. २८. ८. भूरस्येता इति. क, ग. ९. कल्पयति इति. क, च.
१०. पृष्ठत इति. ग. ११. नयन्ति इति. च. १२. मा. सं. १०. २८.
१३. ब्रह्मप्रसूतामिति. ग. १४, १५. मा. सं. १०. २८. १६. सवितारमिति. ग.
१७. मा. सं. १०. २८.

तृतीयमामन्त्रयते। त्वं ब्रह्मासीतीतरः प्रत्याहे "न्द्रोऽसि व्विशौजा"-ऽइति व्वीर्यमेवास्मिन्नेतद्धातीन्द्रमेव व्विशौजसं करोति ॥११॥ ब्रह्मन्नित्येव चतुर्थमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याह "रुद्रोऽसि सुशेव"ऽइति तद्वीर्याण्येवास्मिन्नेतत्पूर्व्वाणि दधात्यथैनमेतच्छमयत्येव तस्मादेष सर्व्वस्येशानो मृडयति यदेनꣳ शमयति ॥१२॥ ब्रह्मन्नित्येव पञ्चममामन्त्रयते । त्वं ब्रह्मासीतीतरो निरुक्तं प्रत्याह परिमितं वै निरुक्तं तत्परिमितमेवास्मिन्नेतत्पूर्वं व्वीर्यं दधात्यथात्रानिरुक्तं प्रत्याहापरिमितं वाऽअनिरुक्तं तदपरिमितमेवास्मिन्नेतत्सर्वं व्वीर्यं दधाति तस्मादत्रानिरुक्तं प्रत्याह[३] ॥१३॥ अथ सुमङ्गलनामानꣳ ह्वयति । "बहुकार श्रेयस्कर भूयस्करे"ति यऽएवं नामा भवति कल्याणमेवैतन्मानुष्यै व्वाचो व्वदति[५] ॥१४॥ अथास्मै ब्राह्मणः स्फ्यं प्रयच्छति । अध्वर्युर्व्वा यो वास्य पुरोहितो भवती[६]"न्द्रस्य व्वज्रोऽसि तेन मे रध्ये"ति व्वज्रो वै स्फ्यः सऽएतेन व्वज्रेण ब्राह्मणो राजानमात्मनोऽबलीयाꣳसं कुरुते यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवति तदमित्रेभ्य ऽएवैनमेतद्बलीयाꣳसं करोति ॥१५॥ तꣳ[८] राजा राजभ्रात्रे प्रयच्छति[९] । इन्द्रस्य व्वज्रोऽसि तेन मे रध्येति तेनं[१०] राजा राजभ्रातरमात्मनोऽबलीयाꣳसं कुरुते ॥१६॥ तꣳ राजभ्राता सूताय वा स्थपतये वा प्रयच्छति । इन्द्रस्य व्वज्रोऽसि तेन मे रध्येति तेन राजभ्राता सूतं वा स्थपतिं वात्मनोऽबलीयाꣳसं कुरुते ॥१७॥ तꣳ सूतो वा स्थपतिर्व्वा ग्रामण्ये प्रयच्छति । इन्द्रस्य व्वज्रोऽसि तेन मे रध्येति तेन सूतो वा[११] स्थपतिर्व्वा ग्रामण्यमात्मनोऽबलीयाꣳसं कुरुते ॥१८॥ तं ग्रामणीः सजाताय प्रयच्छति । इन्द्रस्य व्वज्रोऽसि तेन मे रध्येति तेन ग्रामणीः सजातमात्मनोऽबलीयाꣳसं कुरुते तद्यदेवꣳ सम्प्रयच्छन्ते नेत्पापवस्यसमसद्यथापूर्व्व-

---

१, २, ४. मा. सं. १०. २८. ३. प्रत्याह इति. च ५. वदति इति च.
६. भवति, इति. ग, घ. ७. मा. सं. १०. २८. ८. तꣳइति. ग.
९. प्रयच्छिति इति. ग. १०. तेन इति. क, ग, घ. ११. वा इति. ग, घ

मसदिति तस्मादेवꣳ सम्प्रयच्छन्ते ॥१९॥ अथ सजातश्च प्रतिप्रस्थाता च । एतेन स्फ्येन पूर्वाग्नौ शुक्रस्य पुरोरुचाधिदेवनं कुरुतोऽत्ता वै शुक्रोऽत्तारमेवैतत्कुरुतः ॥२०॥ अथ मान्थिनः पुरोरुचा विमितं विमिनुतः । आद्यो वै मन्थी तदत्तारमेवैतत्कृत्वाथास्माऽएतदाद्यं जनयतस्तस्मान्मान्थिनः पुरोरुचा विमितं विमिनुतः ॥२१॥ अथाध्वर्युः । चतुर्गृहीतमाज्यं गृहीत्वाधिदेवने हिरण्यं निधाय जुहोत्य- "ग्निः पृथुर्द्धर्मणस्पतिर्जुषाणोऽअग्निः पृथुर्द्धर्मणस्पतिराज्यस्य वेतु स्वाहे"ति ॥२२॥ अथाक्षान्निवपति । "स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वꣳ सजातानां मध्यमेष्ठ्याये"त्येष वाऽअग्निः पृथुर्यदधिदेवनं तस्यैतेऽङ्गारा यदक्षास्तमेवैतेन प्रीणाति तस्य ह वाऽएषानुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतेष्वक्षेष्वाह गां दीव्यध्वमिति पूर्वाग्निवाहौ दाक्षिणा ॥२३॥ अथाहा'ग्नये स्विष्टकृतेऽनुब्रूही'ति । तद्यदन्तरेणाहुतीऽएतत्कर्म क्रियतऽएष वै प्रजापतिर्यऽएष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाताऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यतऽएवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्तरेणाहुतीऽएतत्कर्म क्रियतऽआश्राव्याहा'ग्निꣳ स्विष्टकृतं यजे' ति वषट्कृते जुहोति ॥२४॥ अथेडामादधाति । उपहूतायामिडायामप ऽउपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तꣳ स्तोत्राय प्रमीवति सऽउपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥२५॥ Cf. का. श. ७. ३. ४ ; मै. सं. २. ६. १२ ; तै. सं. १. ८. १६ ; काठ. १५. ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. ४. ४.)

---

१. संप्रयच्छन्ति इति च, सम्प्रयच्छन्ते इति.क. २. कुरुतः इति. ग.
३. बिमिनुत इति ग, विमिनुत इति.च. ४. अथाध्वर्युः इति. ग.
५. मा. सं. १०. २९. ६. स्वाहेति. ग, स्वाहेति. क,च. ७. मा. सं. १०. २९.
८. दक्षिणा इति. ग. ९. प्रजा इति. क. १०. मादधाति इति. च

५. ४. २.

( संसृपांहवींषि, दशपेयश्च )

व्वरुणाद्ध वाऽअभिषिषिचानाद्भर्गोऽपचक्राम । व्वीर्यं वै भर्गऽएष व्विष्णुर्यज्ञः सोऽस्मादपचक्राम शश्वद्धऽएषोऽपाछ्ं रसः सम्भृतो भवति[1] य्येनैनमेतदाभिषिञ्चति सोऽस्य भर्गं निर्ज्जघान ॥१॥ तमेताभिर्देवताभिरनुसमसर्पत् । सवित्रा प्रसवित्रा सरस्वत्या व्वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा व्वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा व्विष्णुनैव दशम्या देवतयान्वविन्दत् ॥२॥ तद्यदेनमेताभिर्देवताभिरनुसमसर्पत् । तस्मात्सꣳसृपो नामाथ य्यद्दशमेऽहन् प्रसुतो भवति तस्माद्दशपेयोऽथो य्यद्दश दशैकैकं चमसमनुप्रसृप्ता भवन्ति तस्माद्वेव दशपेयः ॥३॥ तदाहुः । दश पितामहान्त्सोमपान्त्संख्याय प्रसर्पेत्तथो हास्य सोमपीथमश्नुते दशपेयो हीति तद्वै ज्या द्वौ त्रीनित्येव[2] पितामहान्त्सोमपान्विन्दन्ति तस्मादेताऽएव देवताः संख्याय प्रसर्पेत् ॥४॥ एताभिर्वै देवताभिर्वरुणऽएतस्य[3] सोमपीथमाश्नुत । तथोऽएवैषऽएताभिरेव देवताभिरेतस्य सोमपीथमश्नुते तस्मादेताऽएव देवताः संख्याय प्रसर्पेदथ य्यदेवैषोदवसानीयेष्टिः सन्तिष्ठतऽएतस्याभिषेचनीयस्य[4] ॥५॥ अथैतानि हवीꣳषि निर्व्वपति । सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशꣳ सविता वै देवानां प्रसविता सवितृप्रसूतऽएव तद्वरुणोऽनुसमसर्प्पत्तथोऽएवैषऽएतत्सवितृप्रसूतऽएवानु सꣳसर्पति तत्रैकं पुण्डरीकं प्रयच्छति[5] ॥६॥ अथ सारस्वतं चरुं निर्व्वपति । व्वाग्वै सरस्वती व्वाचैव तद्वरुणोऽनुसमसर्प्पत्तथोऽएवैषऽएतद्वाचैवानुसꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥७॥ अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्व्वपति । त्वष्टा वै रूपाणामीष्टे त्वष्ट्रैव तद्रूपैर्व्वरुणो

---

१. भवति इति. ग, घ. २. त्रीनित्येव पितामहान् इति. ग. ३. एतस्येति. ग.
४. नीयस्य इति. क, च. ५. प्रयच्छति इति. च. एवमेवाऽग्रेऽपि ।

ऽनुसमसर्प्पत्तथोऽएवैषऽएतत्त्वष्ट्रैव रूपैरनुसꣳसर्प्पति तत्रैकं पुण्ड-
रीकं प्रयच्छति ॥८॥ अथ पौष्णं चरुं निर्व्वपति । पशवो वै पूषा
पशुभिरेव तद्वरुणोऽनुसमसर्प्पत्तथोऽएवैषऽएतत्पशुभिरेवानुसꣳस-
र्प्पति तत्रैकं पुण्डरीकं प्रयच्छति[1] ॥९॥ अथैन्द्रमेकादशकपालं पुरो-
डाशं निर्व्वपति । इन्द्रियं वै व्वीर्यमिन्द्र ऽइन्द्रियेणैव तद्वीर्येण व्व-
रुणोऽनुसमसर्प्पत्तथो ऽएवैषऽएतदिन्द्रियेणैव व्वीर्येणानुसꣳसर्प्पति
तत्रैकं पुण्डरीकं प्रयच्छति ॥१०॥ अथ बार्हस्पत्यं चरुं निर्व्वपति ।
ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तद्वरुणोऽनुसमसर्प्पत्तथोऽएवैष[2] ऽएतद्ब्रह्म-
णैवानुसꣳसर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥११॥ अथ व्वारुणं
य्यवमयं चरुं निर्व्वपति । स य्येनैवौजसेमाः प्रजाः व्वरुणो ऽगृह्णा-
त्तेनैव तदोजसा व्वरुणोऽनुसमसर्प्पत्तेनो ऽएवैष[3]ऽएतदोजसानुसꣳ
सर्प्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥१२॥ उपसदो दशम्यो देवताः ।
तत्र पञ्च पुण्डरीकाण्युपप्रयच्छति तां द्वादश पुण्डरीकाꣳ स्रजं प्रति-
मुञ्चते सा दीक्षा तया दीक्षया दीक्षते[4] ॥१३॥ अथ य्यद्द्वादश भ-
वन्ति । द्वादश वै मासाः संवत्सरस्य सर्व्वं वै संवत्सरः सर्व्वेणैवै-
नमेतद्दीक्षयति य्यानि पुण्डरीकाणि तानि दिवो रूपं तानि नक्षत्रा-
णाꣳ रूपं य्ये व्वधकास्तेऽन्तरिक्षस्य रूपं य्यानि बिसानि तान्यस्यै
तदेनमेषु लोकेष्वधि दीक्षयति[5] ॥१४॥ अथ राजानं क्रीत्वा । द्वेधो-
पनह्य परिवहन्ति ततोऽर्द्धमासन्द्यामासाद्य प्रचरत्यथ य्यऽएषोऽर्द्धो-
ब्रह्मणो गृहे निहितो भवति तमासन्द्यामासाद्यातिथ्येन प्रचरति य्य-
दातिथ्येन [6]प्रचरत्यथोपसद्भिः प्रचरति य्यदोपसद्भिः प्रचरंति[7] ॥१५॥
अथैतानि हवीꣳषि निर्व्वपति । आग्नेयमष्टाकपालं पुरोडाशꣳ सौम्यं
चरुं व्वैष्णवं त्रिकपालं वा पुरोडाशं[8] चरुं वा तेन य्यथेष्ट्यैवं य्यज-

---

१. प्रयच्छति इति. क. २. एवैष इति.ग. ३. एवैष तदोजसा इति. ग, घ.
४. दीक्षते इति. ग. ५. दीक्षयति. इति. क, च.
६. प्रचरत्यथोपसद्भिः प्रचरति यदोपसद्भिः प्रचरति इति. ग.
७. प्रचरति, प्रचरति इति. च. ८. पुरोडाशं चरुं इति. ग, घ.

ते ॥१६॥ तदु तथा न[1] कुर्यात्। ह्वलति वाऽएष य्यो य्यज्ञपथादेत्येति वा ऽएष य्यज्ञपथाद्य ऽउपसत्पथादेति तस्मादुपसत्पथादेव नेयात् ॥१७॥ स[2] य्यदग्निं य्यजति। अग्निनैवैतत्तेजसानुसꣳ सर्पत्यथ य्यत्सोमं य्यजति सोमेनैवैतद्ब्राह्मणानुसꣳसर्पत्यथ य्यद्विष्णुं य्यजति य्यज्ञो वै व्विष्णुस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते[3] ॥१८॥ सऽएष सप्तदशोऽग्निष्टोमो भवति । सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते ॥१९॥ तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा । द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं[4] प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते ॥२०॥ तासां द्वादश गर्भाः । ताश्चतुर्व्विꣳशतिश्चतुर्व्विꣳशतिर्व्वै[5] संवत्सरस्यार्द्धमासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते ॥२१॥ ता ब्रह्मणे ददाति ब्रह्मा हि य्यज्ञं दक्षिणतोऽभिगोपायति तस्मात्ता ब्रह्मणे ददाति हिरण्मयीꣳस्रजमुद्गात्रे रुक्मꣳ[6] होत्रे हिरण्मयौ प्राकाशावध्वर्युभ्यामश्वं प्रस्तोत्रे[7] व्वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने व्वाससी नेष्टापोतृभ्यामन्यतरतो युक्तं यवाचितमच्छावाकाय गामग्नीधे ॥२२॥ ता वाऽएताः[8] । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वात्मन् कुरुते ॥२३॥ Cf. का. श. ७. ४. १ ; तै. सं. १. ८. १८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. ४. ५. )

( इति चतुर्थोऽध्यायः )

---

१. न कुर्यात् ह्वलति वा इति. ग, घ.   २. स इति. ग, घ.
३ कुरुते इति घ.   ४. प्रजापतिरिति. घ.   ५. श्चतुर्विꣳशतिरिति ग, घ.
६. रुक्मꣳइति. ग, घ.   ७. प्रस्तोत्रे इति. ग.   ७. एताः इति. ग.

## ५. ४. ३.

### ( पञ्चबिलसंज्ञकश्चरुः )

आग्नेयोऽष्टाकपालःपुरोडाशो भवति । तं पूर्वार्द्धऽआसादयत्यैन्द्रऽएकादशकपालः पुरोडाशो भवति सौम्यो वा चरुस्तं दक्षिणार्द्धऽआसादयति वैश्वदेवश्चरुर्भवति तं पश्चार्द्धऽआसादयति मैत्रावरुणी पयस्या भवति तामुत्तरार्द्धऽआसादयति बार्हस्पत्यश्चरुर्भवति[1] तं मध्यऽआसादयत्येष चरुः पञ्चबिलस्तद्यत्पञ्च हवीᳬंषि भवन्ति तेषां पञ्च बिलानि तस्माच्चरुः पञ्चबिलो नाम ॥१॥ तद्यदेतेन राजसूययाजी यजते यद्[2]देवैनं दिशः समारोहयति यदृतून् यस्तोमान्यच्छन्दाᳬंसि तस्मादेवैनमेतेन निष्क्रीणाति स यद्धैतेन राजसूययाजी न यजेतोद्वा ह माद्येत्प्र वा पतेत्तस्माद्वाऽएतेन राजसूययाजी यजते ॥२॥ स यदाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति । यदेवैनं प्राचीं दिशᳬं समारोहयति यदृतून्यत्स्तोमान्यच्छन्दाᳬंसि तस्मादेवैनमेतेन निष्क्रीणाति सᳬंस्रवं बार्हस्पत्ये चरावुवनयति[3] ॥३॥ अथ यदैन्द्रेणैकादशकपालेन पुरोडाशेन प्रचरति । सौम्येन वा चरुणा यदेवैनं दक्षिणां दिशᳬंसमारोहयति यदृतून्यत्स्तोमान्यच्छन्दाᳬंसि तस्मादेवैनमेतेन निष्क्रीणाति सᳬंस्रवं बार्हस्पत्ये चरावुवनयति ॥४॥ अथ यद्वैश्वदेवेन चरुणा प्रचरति[4] । यदेवनं प्रतीचीं दिशᳬंसमारोहयति यदृतून्यत्स्तोमान्यच्छन्दाᳬंसि तस्मादेवैनमेतेन निष्क्रीणाति सᳬंस्रवं बार्हस्पत्ये चरावुवनयति ॥५॥ अथ यन्मैत्रावरुण्या पयस्यया प्रचरति । यदेवैनमुदीचीं दिशᳬं समारोहयति यदृतून्यत्स्तोमान्यच्छन्दाᳬंसि[5] तस्मादेवैनमेतेन निष्क्रीणाति सᳬंस्रवं बार्हस्पत्ये चरावुवनयति तद्यत्सᳬंस्रवान् बार्हस्पत्ये चरावुवनयति सर्व्वत ऽएवास्मिन्नेतदन्नाद्यं दधाति तस्मादु दिशो दिशऽएव राज्ञे-

---

१. चरुरिति. घ. २. यदेवैनमिति. ग, घ. ३. ववनयति इति. च. एवमेवाग्रेऽपि
४. प्रचरति इति. ग, घ. ५. रतोमानिति. ग.

ऽन्नाद्यमभिह्रियते॥६॥ अथ य्यद्बार्हस्पत्येन चरुणा प्रचरति । य्यदेवैनमूर्ध्वां दिशꣳ समारोहयति य्यदृतून् यत्स्तोमान्यच्छन्दाꣳसि तस्मादेवैनमेतेन निष्क्रीणाति ॥७॥ स य्यऽएषऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति । तस्य हिरण्यं दक्षिणाग्नेयो वाऽएष य्यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा तदग्नीधे ददात्यग्निर्व्वाऽएष निदानेन यदाग्नीध्रस्तस्मात्तदग्नीधे ददाति ॥८॥ अथ य्यऽएषऽऐन्द्र ऽएकादशकपालः पुरोडाशो भवति । तस्यर्षभो दक्षिणा स ह्यैन्द्रो य्यदृषभो य्यद्यु सौम्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्यो य्यद्बभ्रुस्तं ब्रह्मणे ददाति ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्मात्तं ब्रह्मणे ददाति ॥९॥ अथ य्यऽएष व्वैश्वदेवश्चरुर्भवति । तस्य पृषन् गौर्दक्षिणा भूमा वाऽएतद्रूपाणां यत्पृषतो गोर्व्विशो वै व्विश्वे देवा भूमा वै व्विट् तस्मात्पृषन् गौर्दक्षिणा तꣳ होत्रे ददाति होता हि भूमा तस्मात्तꣳ होत्रे ददाति ॥१०॥ अथ यैषा मैत्रावरुणी पयस्या भवति । तस्यै व्वशा दक्षिणा सा हि मैत्रावरुणी य्यद्वशा य्यदि व्वशां न विन्देदपि य्यैव का चाप्रवीता स्यात्सर्व्वा ह्येवं व्वशाप्रवीता तामध्वर्युभ्यां ददाति प्राणोदानौ वाऽअध्वर्यू प्राणोदानौ मित्रावरुणौ तस्मात्तामध्वर्युभ्यां ददाति ॥११॥ अथ य्यऽएष बार्हस्पत्यश्चरुर्भवति । तस्य शितिपृष्ठो गौर्दक्षिणैषा वाऽऊर्ध्वा बृहस्पतेर्दिक्तदेषऽउपरिष्टादर्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा तं ब्रह्मणे ददाति बृहस्पतिर्व्वै देवानां ब्रह्मैष वाऽएतस्य ब्रह्मा भवति तस्मात्तं ब्रह्मणे ददाति स हैतेनापि विष्ठाब्राज्यन्नाद्यकामो यजेत तदस्मिन्त्सर्व्वतोऽन्नाद्यं दधाति स ह्यन्नादऽएव

---

१. ह्रियते इति. क, च.  २. यदाग्नीध्र इति. ग.  ३. ददाति इति. च. एवमग्रेऽपि
४. हैन्द्र इति. ग, घ.  ५. तस्य इति. ग.  ६. भूमो वै इति. क.
७. ह्येव इति. ग, घ.  ८. तस्य इति. ग.  ९. तदेष इति. ग.
१०. बृहस्पतिर्वै देवानां इति. ग, घ.  ११. न्नाद्यकाम इति. ग, घ.
१२. न्नाद्यं इति. ग, घ.  १३. ददाति. इति. च.

भवति ॥१२॥ Cf. का. श. ७. ४. २ ; मै. सं. २. ६. १३ ; तै. सं. १. ८. १९ ; काठ. १५. ८.

इति माध्यदिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ५. १. )

## ५. ४. ४.

## ( प्रयुजांहवींषि )

स वै प्रयुजाᳪं हविर्भिर्यजते । तद्यत्प्रयुजाᳪं हविर्भिर्य्यजत ऽऋतून्वाऽएतत्सुषुवाणो य्युङ्क्ते तऽएनमृतवो य्युक्ता व्वहन्त्यृतून्वा प्रयुक्ताननुचरति तस्मात्प्रयुजाᳪं हविर्भिर्यजते ॥१॥ तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति मासि मासि यजेतेत्याहुः को व्वेद मनुष्यस्य तस्मान्न मासि मासि यजेत शम्यापराव्याधे शम्यापराव्याधऽएव षड्भिर्यजते प्राङ् यानथ पुनरावृत्तः शम्यापराव्याधे शम्यापराव्याधऽएव षड्भिर्यजते ॥२॥ तदु तथा न कुर्यात् । षडेवैतानि पूर्व्वाणि हवीᳪंषि निर्व्वपति समानबर्हीᳪंषि तासां देवतानाᳪं रूपं य्यथा शिशिरे य्युक्त्वा प्राञ्चऽआप्रावृषं यायुस्तत्षडृतून्युङ्क्ते तऽएनᳪं षडृतवो य्युक्ताः प्राञ्चऽआप्रावृषं व्वहन्ति [१]षड्वर्तून् प्रयुक्तानाप्रावृषमनुचरति पूर्व्वाग्निवाहौ द्वौ दक्षिणा ॥३॥ षडेवोत्तराणि हवीᳪंषि निर्व्वपति । स[३]मानबर्हीᳪंषि तासां देवतानाᳪं रूपं य्यथा पुनरावर्तैरन्वार्षिकमभि तत्षडृतून्युङ्क्ते तऽएनᳪं षडृतवो य्युक्ता व्वार्षिकमभिवहन्ति षड्वर्तून् प्रयुक्तान्वार्षिकमनुचरति पूर्व्वाग्निवाहौ द्वौ दक्षिणा तद्यत्पूर्व्वाग्निवाहौ दक्षिणर्तून्वा ऽएतत्सुषुवाणो य्युङ्क्ते व्वहन्ति वाऽअनड्वाहस्तस्मात्पूर्व्वाग्निवाहौ दक्षिणा ॥४॥ तद्ध स्मैतत्पुरा कुरुपञ्चालाऽआहुः । ऋतवो

१. तद्यदिति. क. २. षड्वर्तूनिति क. ३. नबर्हींषि इति. ग, घ.

वाऽअस्मान्युक्ता व्वहन्त्यृतुन्वा प्रयुक्ताननुचराम ऽइति व्यदेषाᳬ राजानो राजसूययाजिन ऽआसुस्तद्ध स्म तदभ्याहुः ॥५॥ आग्नेयोऽ-ष्टाकपालः पुरोडाशो भवति । सौम्यश्चरुः सावित्रो द्वादश[1]कपालो वाष्टाकपालो वा पुरोडाशो बार्हस्पत्यश्चरुस्त्वाष्ट्रो दशकपालः पुरोडा-शो व्वैश्वानरो द्वादशकपालऽएतानि षट् पूर्व्वाणि हवीᳬषि भ[2]वन्ति ॥६॥

( अर्द्धप्रपाठकः ६६, शतं ३३०० )

षडेवोत्तरे चरवः । सारस्वतश्चरुः पौष्णश्चरुर्मैत्रश्चरुः क्षैत्रप-त्यश्चरुर्व्वारुणश्चरुरादित्यश्चरुरेत ऽउ षडुत्तरे चर[3]वः ॥७॥ अथ श्ये-नीं व्विचित्रगर्भामदित्याऽआलभते । तस्याऽएषैवावृद्यदष्टापद्यै व्व-शायाऽइयं वाऽअदितिरस्या ऽएवैनमेतद्गर्[4]भं करोति तस्या ऽएता-दृश्येव श्येनी व्विचित्रगर्भा दक्षिणा[5] ॥८॥ अथ पृषतीं व्विचित्रगर्भां मरुद्भ्यऽआलभते । तस्याऽएषैवावृद्विशो वै मरुतो व्विशामेवैनमे-तद्गर्भं करोति तस्याऽएतादृश्येव पृषती व्विचित्रगर्भा दक्षिणा ॥९॥ एतौ पशुबन्धौ । त[6]देतावेव सन्तावन्यथेवालभन्ते यामदित्याऽआल-भन्त ऽआदित्येभ्यस्तामालभन्ते सर्व्वं वा ऽआदित्याः सर्वस्यैवैनमे-तद्गर्भं करोति य्यां मरुद्भ्यऽआलभन्ते व्विश्वेभ्यस्तां देवेभ्यऽआल-भन्ते सर्व्वं वै व्विश्वे देवाः सर्व्वस्यैवैनमेतद्गर्भं करोति ॥१०॥ Cf. का. श. ७. ४. ३; मै. सं. २. ६. १३; तै. सं. १. ८. १९.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ. ५. २. )

५. ४. ५.

( केशवपनीयः )

अभिषेचनीयेनेष्ट्वा[7] । केशान्न व्वपते तद्यत्केशान्न व्वपते व्वीर्य्यं

---

१. द्वादश इति. घ.   २. भवन्ति इति. ग, घ.   ३. चरव इति. क, घ.
४. गर्भमिति. ग.   ५. दक्षिणा इति. क, ग.   ६. तदेताविति. ग.
७. नेष्ट्वा इति. ग, घ.

वाऽएतदपाᳬ रसः सम्भृतो भवति य्येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमान् प्राप्नोति स य्यत्केशान् व्वपेतैताᳬ श्रियं जिह्मां व्विनाशयेद्व्युदुह्यात्तस्मात्केशान्न व्वपते ॥१॥ संवत्सरं न व्वपते । संवत्सरसम्मिता वै व्व्रतचर्या तस्मात्संवत्सरं न व्वपते सऽएष व्व्रतविसर्जनीयोपयोगो नाम स्तोमो भवति केशवपनीयः ॥२॥ तस्यैकविᳬशं प्रातः सवनᳬ । सप्तदशं माध्यन्दिनᳬ सवनं पञ्चदशं तृतीयसवनᳬ सहोक्थैः सह षोडशिना सह रात्र्या ॥३॥ त्रिवृद्राथन्तरः सन्धिर्भवति । एषऽएवैकविᳬशो[1] य्यऽएष तपति सऽएतस्मादेकविᳬशादप[2] युङ्क्ते स सप्तदशमभिप्रत्यवैति सप्तदशात्पञ्चदशं पञ्चदशादस्यामेव त्रिवृति प्रतिष्ठायां प्रतितिष्ठति ॥४॥ तस्य रथन्तरं पृष्ठं[3] भवति । इयं वै रथन्तरमस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठत्यातिरात्रो भवति प्रतिष्ठा वाऽअतिरात्रस्तस्मादतिरात्रो भवति ॥५॥ स वै न्येव व्वर्तयते । केशान्न[4] व्वपते व्वीर्यं वाऽएतदपाᳬ रसः सम्भृतो भवति य्येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमान् प्राप्नोति स यत्केशान् व्वपेतैताᳬ श्रियं जिह्मां व्विनाशयेद्व्युदुह्यादथ य्यन्निवर्त्तयते तदात्मन्येवैताᳬ श्रियं नियुनक्ति तस्मान्न्येवं[5] व्वर्तयते केशान्न व्वपते तस्यैषैव व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति ॥६॥ आसन्द्याऽउपानहाऽउपमुञ्चते । उपानद्भ्यामधि य्यदस्य य्यानं भवति रथो वा किञ्चिद्वा सर्व्वं वाऽएषऽइदमुपर्युपरि भवत्यर्वागेवास्मादिदᳬ[6] सर्व्वं भवति य्यो राजसूयेन य्यजते तस्मादस्यैषैव व्व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति ॥७॥ Cf. का. श. ७. ५ २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ ( अ. ५. ३. )

---

१. एवैक इति. ग, घ. २. एतस्मादिति. ग ३. पृष्ठमिति. ग, घ.
४. केशान्न वपत इति. च. ५. न्येव इति. क, घ. ६. दिदᳬइति क.

## ५. ४. ६.

## ( सौत्रामणी )

श्येतऽआश्विनो भवति । श्येताविव ह्यश्विनावविर्मल्हा सारस्वती भवत्यृषभमिन्द्राय सुत्राम्णऽआलभते दुर्वेदाऽएवᳫं समृद्धाः पशवो य्यद्येवᳫं समृद्धान्न विन्देदप्यजानेवालभेरंस्ते हि सुश्रपतरा भवन्ति स य्यद्यजानालभेरंल्लोहितऽआश्विनो भवति तद्यदेतया य्यजते ॥१॥ त्वष्टुर्ह वै पुत्रः । त्रिशीर्षा षडक्षऽआस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवᳫं रूपऽआस तस्माद्विश्वरूपो नाम ॥२॥ तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्माऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥३॥ स य्यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुकऽइव बभ्रुरिव हि सोमो राजा ॥४॥ अथ य्यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत्कऽइव व्वदत्यभिमाद्यन्निव हि सुरां पीत्वा व्वदति ॥५॥ अथ य्यदन्यस्माऽअशनायास । ततस्तित्तिरिः समभवत्तस्मात्स व्विश्वरूपतमऽइव सन्त्येव घृतस्तोकाऽइव त्वन्मधुस्तोकाऽइव त्वत्पर्णेष्वाश्चुततीऽएवᳫं रूपमिव हि स तेनाशनमावयत् ॥६॥ स त्वष्टा चुक्रोध । कुविन्मे पुत्रमवधीदिति सोऽपेन्द्रमेव सोममाजह्रे स य्यथायᳫं सोमः प्रसुतऽएवमपेन्द्रऽएवास ॥७॥ इन्द्रो ह वाऽईक्षाञ्चक्रे । इदं वै मा सोमादन्तर्यन्तीति स य्यथा बलीयानबलीयस ऽएवमनुपहूतऽएव य्यो द्रोणकलशे शुक्रऽआस तं भक्षयाञ्चकार स हैनं जिहिᳫंससोऽस्य व्विष्वङेव प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्राव तस्मात्प्रायश्चित्तिरास स यद्धापि मुखादद्रोष्यन्न हैव प्रायश्चित्तिरभविष्यत् ॥८॥ चत्वारो वै व्वर्णाः । ब्राह्मणो

---

१. भवति इति. घ. २. विव इति. घ. ३. सुत्राम्ण इति क, घ, च.
४. राजा इति. क, ग. ५. वदति इति. च. ६. माजह्रे इति. ग, घ.
७. एवास इति. च. ८. विष्वङ्ङेवेति. ग, घ.

राजन्यो व्वैश्यः शूद्रो न हैतेषामेकश्चन भवति यः सोमं व्वमति स यद्धैतेषामेकश्चित्स्यात्स्याद्धैव प्रायश्चित्तिः ॥९॥ स यन्नस्तोऽद्रवत् । ततः सिꣳहः समभवदथ यत्कर्णाभ्यामद्रवत्ततो व्वृकः समभवदथ यदवाचः प्राणादद्रवत्ततः शार्दूलज्येष्ठाः श्वापदाः समभवन्नथ यदुत्तरात्प्राणादद्रवत्सा परिस्रुदथ त्रिर्निरष्ठीवत्ततः कुवलं कर्कन्धु बदरमिति समभवत्स सर्वेणैव व्यार्ध्यत सर्व्वꣳहि सोमः ॥१०॥ स सोमातिपूतो मङ्कुरिव चचार । तमेतयाश्विनावभिषज्यतां तꣳ सर्व्वेणैव समार्द्धयताꣳ सर्व्वꣳहि सोमः स व्वसीयानेवेष्ट्वाभवत् ॥११॥ ते देवाऽअब्रुवन् । सुत्रातं बतैनमत्रासातामिति तस्मात्सौत्रामणी नाम ॥१२॥ स हैतयापि सोमातिपूतं भिषज्येत् । सर्व्वेण वाऽएष व्यृध्यते यꣳ सोमोऽतिपवते सर्व्वꣳ हि सोमस्तꣳ सर्व्वेणैव समर्द्धयति सर्व्वꣳहि सोमः स व्वसीयानेवेष्ट्वा भवति तस्मादु हैतयापि सोमातिपूतं भिषज्येत् ॥१३॥ तद्यदेतया राजसूययाजी यजते । सर्व्वान्वाऽएष यज्ञक्रतूनवरुन्द्धे सर्व्वाऽइष्टीरपि दर्व्विहोमान्यो राजसूयेन यजते देवसृष्टो वाऽएषेष्टिर्य्यत्सौत्रामण्यनया मेऽपीष्टमसदनयापि सूयाऽइति तस्माद्वाऽएतया राजसूययाजी यजते ॥१४॥ अथ यदाश्विनो भवति । अश्विनौ वाऽएनमभिषज्यतां तथोऽएवैनमेषऽएतदश्विभ्यामेव भिषज्यति तस्मादाश्विनो भवति ॥१५॥ अथ यत्सारस्वतो भवति । व्वाग्वै सरस्वती व्वाचा वाऽएनमश्विनावभिषज्यतां तथोऽ एवैनमेषऽएतद्वाचैव भिषज्यति तस्मात्सारस्वतो भवति ॥१६॥ अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता (सा सैव यज्ञस्य देवता) तयैवैनमे-

---

१. यद्धैतेषामिति. ग. २. दद्रवदिति. ग. घ. ३. मत्रासतामिति. ग, घ.
४. सौत्रामणीति. क, ग. ५. सर्वमिति. ग, घ. ६. नवरुन्द्धे इति. ग.
७. यजते इति. ग. ८. एतदश्विभ्यामिति. ग. ९, १०. भवति इति च
११. कुण्डलान्तर्गतः पाठः 'गघ' पुस्तकयोर्नाऽस्ति ।

तद्भिषज्यति तस्मादैन्द्रो भवति ॥१७॥ एतेषु पशुषु। सिꣳहलोमानि वृकलोमानि शार्दूललोमानीत्यावपत्येतद्वै ततः समभवद्यदेनꣳ सोमोऽत्यपवत तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेतान्यावपति ॥१८॥ तदु तथा न कुर्यात्। उल्कया ह स नाखिन्या पशूननुषुवति यऽएतानि पशुष्वावपति तस्मादु परिस्रुत्येवावपेत्तथा ह्योल्कया नाखिन्या पशून्नानुषुवति तथोऽएवैनꣳ समर्द्धयति कृत्स्नं करोति तस्मादु परिस्रुत्येवावपेत्[1] ॥१९॥ अथ पूर्वेद्युः परिस्रुतꣳ संदधात्य "श्विभ्यां[2] पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वे"ति सा यदा[3] परिस्रुद्भवत्यथैनया प्रचरति ॥२०॥ द्वावग्नीऽउद्धरन्ति। उत्तरवेदावेवोत्तरमुद्धते दक्षिणं नेत्सोमाहुतीश्च सुराहुतीश्च सह जुहवामेति तस्माद् द्वावग्नीऽउद्धरन्त्युत्तरवेदावेवोत्तरमुद्धते दक्षिणमथ यदा[4] वपाभिः प्रचरन्त्यथैतया परिस्रुता प्रचरति ॥२१॥ तां दर्भैः पावयति। पूतासदिति "वायुः[5] पूतः पवित्रेण प्रत्यङ् सोमोऽअतिस्रुतः। इन्द्रस्य युज्यः सखे"ति तत्कुवलसक्तून् कर्कन्धुसक्तून् बदरसक्तूनित्यावपत्येतद्वै ततः समभवद्यत् त्रिर्निरष्ठीवत्तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेतानावपति[6] ॥२२॥ अथ ग्रहान् गृह्णाति। एकं वा त्रीन्वैकस्त्वेव ग्रहीतव्यऽ एका हि पुरोरुग्भवत्येकानुवाक्यैका याज्या तस्मादेकऽएव ग्रहीतव्यः ॥२३॥ स गृह्णाति "कुविदङ्ग[7] यवमन्तो[8] यवं चिद्यथा दान्त्यनुपूर्व्वं वियूय। इहेहैषां कृणुहि भोजनानि ये बर्हिषो नम ऽउक्तिं यजन्ति। उपयामगृहीतोस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्ण"ऽइति यद्यु त्रीन् गृह्णीयादेतयैव गृह्णीयादुपयामैस्तु तर्हि नाना गृह्णीयादथाहाश्विभ्याꣳ सरस्वत्याऽइन्द्राय सुत्राम्णेऽनुब्रूहीति ॥२४॥ सोऽन्वाह। "युवꣳ[9] सुराममश्विना नमुचावासुरे सचा। विपिपाना शुभस्पती-

---

१. वावपेत इति. च. २. मा. सं. १०. ३१. ३. यदा इति. ग.
४. प्रचरन्त्यथेति. क,च. ५. मा. सं. १०. ३१. ६. नावपति इति. च.
७. मा. सं. १०. ३२. ८. यवमन्त इति. ग. घ. ९. मा. सं. १०. ३३.

ऽइन्द्रं कर्मस्वावतमि''त्याश्राव्याहा'श्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणं यजे'ति ॥२५॥ स यजति । ''पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगि''ति द्विर्होता वषट्करोति द्विरध्वर्युर्जुहोत्याहरति भक्षं यद्यु त्रीन् गृह्णीयादेतस्यै वानुहोममितरौ हूयेते ॥२६॥ अथ कुम्भः । शतवितृण्णो वा भवति नववितृण्णो वा स यदि शतवितृण्णः शतायुर्वाऽअयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नववितृण्णः ॥२७॥ तꣳ शिक्योद्युतम् । उपर्युपर्याहवनीयं धारयन्ति सा या परिशिष्टा परिस्रुद्भवति तामासिञ्चति तां विक्षरन्तीमुपतिष्ठते पितॄणाꣳ सोमवतां तिसृभिर्ऋग्भिः पितॄणां बर्हिषदां तिसृभिर्ऋग्भिः पितॄणामग्निष्वात्तानां तिसृभिर्ऋग्भिस्तद्यदेवमुपतिष्ठते यत्र वै सोमऽइन्द्रमत्यपवत स यत्पितॄनगच्छत्त्रया वै पितरस्तेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादेवमुपतिष्ठते ॥२८॥ अथैतानि हवीꣳषि निर्वपति । सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं वारुणं यवमयं चरुमैन्द्रमेकादशकपालं पुरोडाशꣳ ॥२९॥ स यत्सावित्रो भवति । सविता वै देवानां प्रसविता सवितृप्रसूतऽएवैतद्भिषज्यति तस्मात्सावित्रो भवति ॥३०॥ अथ यद्वारुणो भवति । वरुणो वाऽआर्पयिता तद्यऽएवार्पयिता तेनैवैतद्भिषज्यति तस्माद्वारुणो भवति ॥३१॥ अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति तस्मादैन्द्रो भवति ॥३२॥ स यदि हैतयापि सोमातिपूतं भिषज्येत् । इष्टाऽअनुयाजा भवन्त्यव्यूढे स्रुचावथैतैर्हविर्भिः प्रचरति पश्चाद्वै सोमोऽतिपवते पश्चादेवैनमेतेन मेधेनापिदधात्याश्विनमु तर्हि द्विकपालं पुरोडाशं निर्वपेदथ यदा वपाभिः प्रचरत्यथैतेनाश्विनेन द्विकपालेन पुरोडाशेन प्रचरति ॥३३॥

१. मा. सं. १०. ३४. २. मुपतिष्ठते इति. ग. ३. पुरोडाशम् इति ग, घ. ४. भवति इति च. एवमग्रेऽपि ५. स यदि इति क. ६. प्रचरन्ति इति क, च.

तद्‌ तथा न कुर्यात् । ह्वलति वा ऽएष य्यो य्यज्ञपथादेत्येति वा ऽएष य्यज्ञपथाद्य ऽएवं करोति तस्माद्यत्रैवैतेषां पशूनां व्वपाभिः प्रचरन्ति तदेवैतैर्हविर्भिः प्रचरेयुर्नो तद्वाश्विनं द्विकपालं पुरोडाशं निर्व्वपेत् ॥३४॥ तस्य नपुᳬसको गौर्दक्षिणा । न वा ऽएष स्त्री न पुमान् यन्नपुᳬसको गौर्यदह पुमांस्तेन न स्त्री य्यदु स्त्री तेनो न पुमांस्तस्मान्नपुᳬसको गौर्दक्षिणाश्वा वा रथवाही सा हि न स्त्री न पुमान् यदश्वा रथवाही य्यदह रथं व्वहति तेन न स्त्री य्यदु स्त्री तेनो न पुमांस्तस्मादश्वा रथवाही दक्षिणा ॥३५॥ Cf. का. श. ७. ५. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे
चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ( अ. ५. ४. )

५. ४. ७.

( त्रैधातव्युदवसानीया )

ऐन्द्रावैष्णवं द्वादशकपालं पुरोडाशं निर्व्वपति । तद्यदेतया य्यजते व्वृत्रे ह वा ऽइदमग्रे सर्व्वमास यदृचो यद्यजूᳬषि यत्सामानि तस्मा ऽइन्द्रो व्वज्रं प्राजिहीर्षत् ॥१॥ स ह व्विष्णुमुवाच । व्वृत्राय वै व्वज्रं प्रहरिष्याम्यनु मा तिष्ठस्वेति तथेति ह व्विष्णुरुवाचानु त्वा स्थास्ये प्रहरेति तस्मा ऽइन्द्रो व्वज्रमुद्ययाम स ऽउद्यताद्वज्राद्‌वृत्रो बिभयाञ्चकार ॥२॥ स होवाच[2] । अस्ति वा ऽइदं व्वीर्यं तन्नु ते प्रयच्छानि मा[3] नु मे प्रहार्षीरिति तस्मै य्यजूᳬषि प्रायच्छत्तस्मै द्वितीयमुद्ययाम ॥३॥ स होवाच । अस्ति वा ऽइदं व्वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहार्षीरिति तस्मा ऽऋचः प्रायच्छत्तस्मै तृतीयमुद्ययाम ॥४॥ स[4] होवाच । अस्ति वा ऽइदं व्वीर्यं तन्नु ते प्रयच्छानि[5] मा नु मे प्रहार्षीरिति तस्मै सामानि प्रायच्छत्तस्मादप्येतर्ह्येवमेवैते-

१. निर्वपेदिति. ग, घ.
२. होवाच । अस्ति इति. ख. एवमग्रेऽपि
३. मा तु इति. घ, च.
४. स होवाचेति नास्ति 'घच' पुस्तकयोः ।
५. प्रयच्छानि इति. ग.

र्व्वेदैर्यज्ञं तन्वते य्यजुर्भिरेवाग्रेऽथर्ग्भिरथ सामभिरेवॅं ह्यस्माऽएतत्प्रायच्छत् ॥५॥ तस्य यो य्योनिराशय[1] ऽआस । तमनुपरामृश्य संलुप्याच्छिनत्[2]सैषेष्टिरभवत्तद्यदेतस्मिन्नाशये त्रिधातुरिवै[3]षा व्विद्याशेत तस्मात्त्रैधातवी नाम[4] ॥६॥ अथ य्यदैन्द्रावैष्णवॅं हविर्भवति । इन्द्रो हि व्वज्रमुदयच्छद्विष्णुरन्वतिष्ठत[5] ॥७॥ अथ य्यद्द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य संवत्सरसम्मितैषेष्टिस्त[6]स्माद्द्वादशकपालो भवति ॥८॥ तमुभयेषां व्व्रीहियवाणां गृह्णाति । व्व्रीहिमयमेवाग्रे पिण्डमधिश्रयति तद्यजुषाॅं रूपमथ यवमयं तदृचाॅं रूपमथ व्व्रीहिमयं तत्साम्नाॅं रूपं तदेतत् त्रय्यै व्विद्यायै रूपं क्रियते सैषा राजसूययाजिनऽउदवसानीयेष्टिर्भवति ॥९॥ सर्व्वान्वाऽएष य्यज्ञक्रतूनवरुन्धे । सर्व्वाऽइष्टीरपि दर्व्विहोमान्यो राजसूयेन य्यजते तस्य यातयामेव यज्ञो भवति सोऽस्मात्पराङिव भवत्येतावान्वै सर्व्वो यज्ञो य्यावानेष त्रयो व्वेदस्तस्यै[7] तद्रूपं क्रियतऽएष य्योनिराशयस्तदेतेन त्रयेण[8] व्वेदेन पुनर्यज्ञमारभते तथास्यायातयामा यज्ञो भवति[9] तथोऽअस्मान्न पराङ् भवति ॥१०॥ सर्व्वान्वाऽएष यज्ञक्रतूनवरुन्धे । सर्व्वाऽइष्टीरपि दर्व्विहोमान्यो राजसूयेन य्यजते देवसृष्टो वाऽएषेष्टिर्य्यत् त्रैधातव्यनया मेऽपीष्टमसदनयापि सूया[10]ऽइति तस्माद्वाऽएषा राजसूययाजिनऽउदवसानीयेष्टिर्भवति[11] ॥११॥ अथो य्यः सहस्रं वा भूयो वा दद्यात् । तस्य हाप्युदवसानीया स्याद्रिरिचानऽइव वाऽएष भवति य्यः सहस्रं वा भूयो वा ददात्येतद्वै सहस्रं व्वाचः[12] प्रजातं य्यदेष त्रयो व्वेदस्तत्सहस्रेण रिरिचानं पुनराप्याययति तस्मादु ह तस्याप्युदवसानीया स्यात् ॥१२॥ अथो य्ये दीर्घसत्रमासीरन् । संवत्सरं वा भूयो वा तेषाॅं हाप्युदवसा-

---

१. योनिराशय इति च,ङ. २. संलुप्याच्छिनदिति. ख,च. ३. त्रिधातु इति. ग, घ.
४. नाम इति. ग. ५. अन्वतिष्ठत् इति. ग. ६. स्तस्माद्द्वादश इति. ग.
७. स्तस्मै इति च, ङ ८. त्रयेणेति. घ. ९. भवति इति. ग, घ.
१०. सूयाँ इति. च. ११. भवति इति. च. १२. वाच इति. ग, घ.

नीया स्यात्सर्व्वं वै तेषामाप्तं भवति सर्व्वं जितं ये दीर्घसत्रमासते संवत्सरं वा भूयो वा सर्व्वमेषा तस्मादु ह तेषामप्युदवसानीया स्यात् ॥१३॥ अथो हैनयाप्यभिचरेत् । एतया वै भद्रसेनमाजातशत्रवमारुणिरभि चचार क्षिप्रं किलास्तृणुतेति ह स्माह याज्ञवल्क्योऽपि ह वाऽएनयेन्द्रो वृत्रस्यास्थानमच्छिनदपि ह वाऽएनयास्थानं छिनत्ति यऽएनयाभिचरति तस्मादु हैनयाप्यभिचरेत् ॥१४॥ अथो हैनयापि भिषज्येत् । यं न्वेवैकयर्च्चा भिषज्येदेकेन यजुषैकेन साम्ना तं न्वेवागदं कुर्यात्किमु यं त्रयेण वेदेन तस्मादु हैनयापि भिषजेत्[1] ॥१५॥ तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा । तानि ब्रह्मणे ददाति न वै ब्रह्मा प्रचरति न स्तुतेन शꣳसत्यथ स यशो न वै हिरण्येन किं चन कुर्व्वन्त्यथ तद्यशास्तस्मात्त्रीणि शतमानानि ब्रह्मणे[2] ददाति ॥१६॥ तिस्रो धेनूर्होत्रे । भूमा वै तिस्रो धेनवो भूमा होता तस्मात्तिस्रो धेनूर्होत्रे ॥१७॥ त्रीणि वासाꣳस्यध्वर्य्यवे । तनुते वाऽअध्वर्य्युर्यज्ञं[3] तन्वते वासाꣳसि तस्मात्त्रीणि वासाꣳस्यध्वर्य्यवे गामग्नीधे ॥१८॥ ता वाऽएताः । द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरꣳसंमितैषेष्टिस्तस्माद्द्वादश[4] वा त्रयोदश वा दक्षिणा भवन्ति ॥१९॥ Cf. का. शं. ७. ५. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे पञ्चमकाण्डे चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ ( अ. ५. ५. )

चतुर्थः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या १३१ )

( इति पञ्चमोऽध्यायः )

( अस्मिन् काण्डे कण्डिकासंख्या ४७१ )

---

१. भिषज्येदिति ख, ग, घ.  २. ब्रह्मणे इति. ग, घ.
३. यज्ञमिति ग, घ.  ४. संवत्सरसम्मितेति. ग.

॥ श्रीः ॥

# अथ माध्यन्दिनीये शतपथब्राह्मणे

# उखासम्भरणं नाम षष्ठं काण्डम् ॥

( चयनमन्त्र प्रतिपद्यते )

## प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

६. १. १.

( सृष्टिनिरूपणम् )

हरिः ॐ ३॥ असद्वाऽइदमग्रऽआसीत् । तदाहुः किन्तदसदासी- दित्यृषयो वाव तेऽग्रे सदासीत्तदाहुः के तऽऋषयऽइति प्राणा वाऽऋ- षयस्ते य्यत्पुरास्मात्सर्व्वस्मादिदमिच्छन्तः श्रमेण तपसारिषंस्तस्मादृ- षयः ॥१॥ स योऽयं मध्ये प्राणः । एषऽएवेन्द्रस्तानेष प्राणान्मध्यतऽइ- न्द्रियेणैन्द्ध यदैन्द्ध तस्मादिन्धऽइन्धो ह वै तमिन्द्र ऽइत्याचक्षते परोक्षं परोक्षकामा हि देवास्तऽइद्धाः सप्त नाना पुरुषानसृजन्त[1] ॥२॥ तेऽब्रुवन् । न वाऽइत्थᳬं सन्तः शक्ष्यामः प्रजनयितुमिमांत्सप्त पुरु- षानेकं परुषङ्करवामेति तऽएतांत्सप्त पुरुषानेकं पुरुषमकुर्व्वन्यदूर्ध्वं- न्नाभेस्तौ द्वौ समौब्जन्यदवाङ्नाभेस्तौ द्वौ पक्षः पुरुषः पक्षः पुरुषः प्रतिष्ठैकऽआसीत् ॥३॥ अथ यैतेषाᳬं सप्तानां पुरुषाणाᳬं श्रीः । य्यो रसऽआसीत्तमूर्ध्वᳬं समुदौहंस्तदस्य शिरोऽभवद्यच्छ्रियᳬं समुदौ- हं[2]स्तस्माच्छिरस्तास्मिन्नेतस्मिन् प्राणा ऽअश्रयन्त तस्माद्वेवैताच्छिरोऽथ य्यत्प्राणाऽअश्रयन्त तस्मादु प्राणाः श्रियोऽथ य्यत्सर्व्वस्मिन्नात्मन्नश्र- यन्त[3] तस्मादु शरीरᳬं[4] ॥४॥ सऽएव पुरुषः प्रजापतिरभवत् । स य्यः

---

१. असृजन्त इति. च.
२. समुदौहन् इति. ग.
३. सर्वस्मिन्नश्रयन्त इति ग. घ.
४. शरीरम् इति. ग, घ.

स पुरुषः प्रजापतिरभवद्यमेव स य्योऽयमग्निश्चीयते ॥५॥ स वै सप्तपुरुषो भवति । सप्त पुरुषो ह्ययं पुरुषो य्यच्चत्वारऽआत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छान्यथ य्यदेकेन पुरुषेणात्मानं व्वर्द्धयति तेन व्वीर्य्येणाय-मात्मा पक्षपुच्छान्युद्यच्छति ॥६॥ अथ य्याश्चितेग्निर्निधीयते । य्यैवै-तेषाꣳ सप्तानां पुरुषाणाꣳ श्रीर्य्यो रसस्तमेतदूर्ध्वꣳ समुदूहन्ति तदस्यैतच्छिरस्तस्मिन्नेतस्मिन्त्सर्व्वे देवाः श्रिताऽअत्र हि सर्व्वेभ्यो देवेभ्यो जुह्वति तस्माद्वेवैताच्छिरः ॥७॥ सोऽयं पुरुषः प्रजापतिर-कामयत । भूयांस्स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स श्रा-न्तस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव व्विद्याꣳ सैवास्मै प्रतिष्ठा-भवत्तस्मादाहुर्ब्रह्मास्य सर्व्वस्य प्रतिष्ठेति तस्मादनूच्य प्रतितिष्ठति प्रतिष्ठा ह्येषा य्यद्ब्रह्म तस्यां प्रतिष्ठायां प्रतिष्ठितोऽतप्यत ॥८॥ सो-ऽपोऽसृजत । व्वाचऽएव लोकाद्वागेवास्य सासृज्यत सेदꣳ सर्व्व-माप्नोद्यदिदं किञ्च य्यदाप्नोत्तस्मादापो य्यदवृणोत्तस्माद्वाः ॥९॥ सोऽकामयत । आभ्योऽद्भ्योऽधि प्रजायेयेति सोऽनया त्रय्या व्वि-द्यया सहापः प्राविशत्ततऽआण्डꣳ समवर्त्तत तदभ्यमृशदस्त्वित्य-स्तु भूयोऽस्त्वित्येव तदब्रवीत्ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव व्विद्या तस्मादाहुर्ब्रह्मास्य सर्व्वस्य प्रथमजमित्यपि हि तस्मात्पुरुषाद्ब्रह्मैव पूर्व्वमसृज्यत तदस्य तन्मुखमेवासृज्यत तस्मादनूचानमाहुरग्निकल्प-ऽइति मुखꣳ ह्येतदग्नेर्यद्ब्रह्म ॥१०॥ अथ य्यो गर्भोन्तरासीत् । सोऽग्निरसृज्यत स य्यदस्य सर्व्वस्याग्रमसृज्यत तस्मादग्रिरग्रिर्ह वै तमग्निरित्याचक्षते परोक्षं परोक्षकामा हि देवाऽअथ य्यदश्रु संक्ष-

---

१. वर्द्धयति इति. ग, घ. २. न्युद्यच्छति इति. च ३. प्रतिष्ठितो इति. घ.
४. अकामयत । आभ्यो इति. ख, ग, घ. ५. प्राविशत्त आण्डꣳ इति घ.
६. ब्रह्म ॥ १० ॥ अथ इति. ख, घ. ७. अग्निरसृज्यत इति च.
८. दग्निरग्निर्ह इति. च. ९. रित्याचक्षत इति. घ.

रितमासीत्सोऽश्रुरभवदश्रु ह वै तमश्वऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाऽअथ यदरसादिव स रासभोऽभवदथ यः कपाले रसो लिप्तऽआसीत्सोऽजोऽभवदथ यत्कपालमासीत्सा पृथिव्यभवत् ॥११॥ सोऽकामयत[1] । आभ्योऽद्भ्योऽधीमां प्रजनयेयमिति ताꣳसंक्लिश्याप्सु प्राविध्यत्तस्यै यः पराङ्रसोऽत्यक्षरत्स कूर्मोऽभवदथ[2] यदूर्ध्वमुदौक्ष्यतेदं तद्यदिदमूर्ध्वमद्भ्योऽधिजायते सेयꣳ सर्व्वाप[3]ऽएवानुव्यैत्तदिदमेकमेव रूपꣳसमदृश्यताप ऽएव ॥१२॥ सोऽकामयत[4] । भूयऽएव स्यात्प्रजायेतेति सोऽश्राम्यत्स तपोऽतप्यत श्रान्तस्तेपानः फेनमसृजत सोऽवेदन्यद्वाऽएतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपानो मृदꣳ शुष्कापमूषसिकतꣳ शर्करामश्मानमयो हिरण्यमोषधिव्वनस्पत्यसृजत तेनेमां पृथिवीं प्राच्छादयत् ॥१३॥ ता वा ऽएता नव सृष्टयः । इयमसृज्यत तस्मादाहुस्त्रिवृदग्निरितीयꣳ ह्यग्निरस्यै हि सर्व्वोऽग्निश्चीयते[5] ॥१४॥ अभूद्वाऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा[6] पृथिव्यभवत्सेयꣳ सर्व्वा कृत्स्ना मन्यमानाऽगायद्यदगायत्तस्मादि[7]यङ्गायत्र्यथोऽआहुरग्निरेवास्यै[8] पृष्ठे सर्व्वः कृत्स्नो मन्यमानोऽगायद्यदगायत्तस्मादग्निर्गायत्रऽइति तस्मादु हैतद्यः सर्व्वः कृत्स्नो मन्यते गायति वैव गीते वा रमते[9] ॥१५॥ Cf. का. श. ८. १. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे उखासम्भरणाख्ये षष्ठकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ.१.१.)

---

१. अकामयत । आभ्यो इति. घ.
२. दथ यदूर्ध्वमिति. घ.
३. सर्वाप इति. घ.
४. अकामयत इति. घ.
५. चीयते इति घ, चीयत इति च.
६. अप्रथयत्सा इति घ.
७. तस्मादिति घ.
८. अस्यै. इति ग, घ.
९. रमते. इति. घ.

६. १. २.

( सृष्टिनिरूपणम् )

सोऽकामयत प्रजापतिः । भूयऽएव स्यात्प्रजायेतेति सोऽग्निना पृथिवीं मिथुनꣳ समभवत्ततऽआण्डꣳ समवर्त्तत तदभ्यमृशत्पुष्यत्विति पुष्यतु भूयोऽस्त्वित्येव तदब्रवीत् ॥१॥ स यो गर्भोऽन्तरासीत् । स व्वायुरसृज्यताथ यदश्रु संक्षरितमासीत्तानि व्वयाꣳस्यभवन्नथ यः कपाले रसो लिप्तऽआसीत्ता मरीचयोऽभवन्नथ यत्कपालमासीत्तदन्तरिक्षमभवत् ॥२॥ सोऽकामयत । भूयऽएव स्यात्प्रजायेतेति स व्वायुनान्तरिक्षं मिथुनꣳ समभवत्ततऽआण्डꣳ समवर्त्तत तदभ्यमृशद्यशो बिभृहीति ततोऽसावादित्योऽसृज्यतैष वै यशोऽथ यदश्रु संक्षरितमासीत्सोऽश्मा पृश्निरभवदश्रुर्ह वै तमश्मेत्याचक्षते परोक्षं परोक्षकामा हि देवाऽअथ यः कपाले रसो लिप्तऽआसीत्ते रश्मयोऽभवन्नथ यत्कपालमासीत्सा द्यौरभवत् ॥३॥ सोऽकामयत । भूयऽएव स्यात्प्रजायेतेति सऽआदित्येन दिवं मिथुनꣳ समभवत्ततऽआण्डꣳ समवर्त्तत तदभ्यमृशद्रेतो बिभृहीति ततश्चन्द्रमाऽअसृज्यतैष वै रेतोऽथ यदश्रु संक्षरितमासीत्तानि नक्षत्राण्यभवन्नथ यः कपाले रसो लिप्तऽआसीत्ताऽअवान्तरादिशोऽभवन्नथ यत्कपालमासीत्ता दिशोऽभवन् ॥४॥ सऽइमांल्लोकांत्सृष्ट्वाकामयत । ताः प्रजाः सृजेय या मऽएषु लोकेषु स्युरिति ॥५॥ स मनसा व्वाचं मिथुनꣳ समभवत् । सोऽष्टौ द्रप्सान् गर्भ्यभवत्तेऽष्टौ व्वसवोऽसृज्यन्त तानस्यामुपादधात् ॥६॥ स मनसैव । व्वाचं मिथुनꣳ समभवत्सऽएकादश द्रप्सान् गर्भ्यभवत्तऽएकादश रुद्राऽअसृज्यन्त तानन्तरिक्षऽउपादधात् ॥७॥ स मन-

१. अभवत् इति ग, घ.　२. आण्डꣳ इति ग, घ.　३. तत इति. घ.
४. गर्भ्य इति. ग, घ.　५. मनसैव इति. घ.

सैव। व्वाचं मिथुनꣳ समभवत्स द्वादश द्रप्सान् गर्ब्भ्यभवत्ते द्वादशादित्या ऽअसृज्यन्त तान्दिव्युपादधात् ॥८॥ स मनसैवं[1]। व्वाचं मिथुनꣳ समभवत्स गर्ब्भ्यभवत्स व्विश्वान्देवानसृजत तान्दिक्षूपादधात् ॥९॥ अथोऽआहुः। अग्निमेव सृष्टं व्वसवो ऽन्वसृज्यन्त तानस्यामुपादधाद्वायुꣳ रुद्रास्तानन्तरिक्षऽआदित्यमादित्यास्तान्दिवि व्विश्वे देवाश्चन्द्रमसं तान्दिक्षूपादधादिति[2] ॥१०॥ अथोऽआहुः। प्रजापतिरेवेमाँल्लोकान्त्सृष्ट्वा[3] पृथिव्यां प्रत्यतिष्ठत्तस्माऽइमाऽओषधयोऽन्नमपच्यन्त तदाश्नात्स गर्ब्भ्यभवत्सऽऊर्ध्वेभ्य ऽएव प्राणेभ्यो देवानसृजत व्येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजा ऽइत्यतो यत्तमथासृजत तथासृजत प्रजापतिस्त्वेवेदꣳ सर्व्वमसृजत व्यदिदं किञ्च ॥११॥ स प्रजाः सृष्ट्वा[4]। सर्व्वमाजिमित्वा व्यस्रꣳसत तस्मादु हैतद्यः सर्व्वमाजिमेति व्येव स्रꣳसते तस्माद्विस्रस्तात्प्राणो मध्यत ऽउदक्रामत्तस्मिन्नेनमुत्क्रान्ते देवा ऽअजहुः ॥१२॥ सोऽग्निमब्रवीत्। त्वं मा सन्धेहीति किं मे ततो भविष्यतीति त्वया माचक्षान्तै यो वै पुत्राणाꣳ राध्यते तेन पितरं पितामहं पुत्रं पौत्रमाचक्षते त्वया माचक्षान्ताऽअथ मा सन्धेहीति तथेति तमग्निः समदधात्तस्मादेतं प्रजापतिꣳ सन्तमग्निरित्याचक्षतऽआ ह वाऽएनेन पितरं पितामहं पुत्रं पौत्रं चक्षते यऽएवं व्वेद ॥१३॥ तमब्रवीत्। कस्मिंस्त्वोपधास्यामीति हितऽएवेत्यब्रवीत्प्राणो वै हितं प्राणो हि सर्व्वेभ्यो भूतेभ्यो हितस्तद्यदेनꣳ हितऽउपादधात्तस्मादाहोपधास्याम्युपदधाम्युपाधामिति ॥ ॥१४॥ तदाहुः। किꣳ हितं किमुपहितमिति प्राण ऽएव हितं व्वागुपहितं प्राणे हीयं व्वागुपेव हिता[5] प्राणस्त्वेव हितमङ्गान्युपाहितं प्राणे हीमान्यङ्गान्युपेव हितानि ॥१५॥ सोऽस्यैष चित्यऽआसीत्। चेतव्यो ह्यस्यासीत्[6]तस्माच्चित्यश्चित्य ऽउ ऽएवायं यजमानस्य भवति

---

१. मनसैव इति. घ. २. दिति इति च. ३. प्रजापतिरेवेति ग, घ.
४. सृष्ट्वा इति. ग, घ. ५. हिताः इति. ग. ६. ह्यस्य इति घ.

चेतव्यो ह्यस्य भवति तस्माद्वेव चित्यः ॥१६॥ तदेता वाऽअस्यताः । पञ्च तन्वो व्यस्रꣳसन्त लोम त्वङ्माꣳसमस्थिमज्जा ताऽएवैताः पञ्च चितयस्तद्यत्पञ्च चितीश्चिनोत्येताभिरेवैनं तत्तनूभिश्चिनोति यच्चिनोति तस्माच्चितयः ॥१७॥ स यः स प्रजापतिर्व्यस्रꣳसत । संवत्सरः सोऽथ याऽअस्यताः पञ्च तन्वो व्यस्रꣳसन्तर्त्तवस्ते पञ्च वाऽऋतवः पञ्चैताश्चितयस्तद्यत्पञ्च चितीश्चिनोत्यृतुभिरेवैनं तच्चिनोति यच्चिनोति तस्माच्चितयः ॥१८॥ स यः स संवत्सरः प्रजापतिर्व्यस्रꣳसत । अयमेव स वायुर्योऽयं पवतेऽथ याऽअस्यताऽऋतवः पञ्च तन्वो व्यस्रꣳसन्त दिशस्ताः पञ्च वै दिशः पञ्चैताश्चितयस्तद्यत्पञ्च चितीश्चिनोति दिग्भिरेवैनं तच्चिनोति यच्चिनोति तस्माच्चितयः ॥१९॥ अथ यश्चितेऽग्निर्निधीयते । असौ सऽआदित्यः स ऽएष ऽएवैषो ऽग्निश्चितऽएतावन्नु तद्यदेनमग्निः समदधात् ॥२०॥ अथोऽआहुः प्रजापतिरेव विस्रस्तो देवानब्रवीत्सम्मा धत्तेति ते देवा अग्निमब्रुवंस्त्वयीमं पितरं प्रजापतिं भिषज्यामेति स वाऽअहमेतस्मिन्त्सर्व्वेस्मिन्नेव विशानीति तथेति तस्मादेतं प्रजापतिꣳ सन्तमग्निरित्याचक्षते ॥२१॥ ( शतम् ३४०० ) तं देवाऽअग्नावाहुतिभिरभिषज्यन् । ते यां यामाहुतिमजुहवुः सा सैनं पक्वेष्टका भूत्वाप्यपद्यत तद्यादिष्टात्समभवंस्तस्मादिष्टकास्तस्मादग्निनेष्टकाः पचन्त्याहुतीरेवैनास्तत्कुर्व्वन्ति ॥२२॥ सोऽब्रवीत् । यावद्यावद्वै जुहुथ तावत्तावन्मे कं भवतीति तद्यदस्माऽइष्टे कमभवत्तस्मादेवेष्टकाः ॥२३॥ तद्ध स्माहाक्ताक्ष्यः । य ऽएव यजुष्मतीर्भूयसीरिष्टका विद्यात्सो ऽग्निश्चिनुयाद्भूय ऽएव तत्पितरं प्रजापतिं भिषज्यतीति ॥२४॥ अथ ह स्माह ताण्ड्यः । क्षत्रं वै यजुष्मत्यऽइष्टका विशो लोकंपृणाऽअत्ता वै क्षत्रियोऽन्नं विड्यत्र वाऽअत्तुरन्नं भूयो भवति तद्राष्ट्रꣳ समृद्धं भवति

१. ताः इति ग. २. चितय इति. ग, ३. अस्यैताः इति ग, घ.
४. चितयः ॥१९॥ अथ इति. ग, घ. ५. अग्निश्चित इति ग, घ.
६. तं देवा इति ग, घ. ७. भिषज्यतीति घ, तीति इति च.

तदेधते तस्माल्लोकंपृणाऽएव भूयसीरुपदध्यादित्येतदह तयोर्व्वेचो-ऽन्या त्वेवात स्थितिः ॥२५॥ सऽएष पिता पुत्रः । यदेषोऽग्नि-मसृजत तेनैषोऽग्नेः पिता यदेतमग्निः समदधात्तेनैतस्याग्निः पिता यदेष देवानसृजत तेनैष देवानां पिता यदेतन्देवाः समदधुस्तेनैत-स्य देवाः पितरः ॥२६॥ उभयꣳ हैतद्भवति[1] । पिता च पुत्रश्च प्रजा-पतिश्चाग्निश्चाग्निश्च प्रजापतिश्च प्रजापतिश्च देवाश्च देवाश्च[2] प्रजापति-श्च यऽएवं वेद ॥२७॥ सऽउपदधाति । "तया देवतये"ति वाग्वै सा देवताङ्गिरस्वदिति प्राणो वाऽअङ्गिरा "ध्रुवा सीदे"ति स्थिरा सी-देत्येतदथो प्रतिष्ठिता सीदेति वाचा चैवैनमेतत्प्राणेन च चिनोति वाग्वाऽअग्निः प्राणऽइन्द्रऽऐन्द्राग्नोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतच्चिनोतीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्निर्यावान-ग्निर्यावत्यस्य मात्रा तावतैवैनमेतच्चिनोति[3] ॥२८॥ तदाहुः । कस्मा-दस्याऽअग्निश्चीयतऽइति यत्र वै सा देवता व्यस्रꣳसत तदिमामेव रसेनानु व्यक्षरत्तं यत्र देवाः समस्कुर्व्वंस्तदेनमस्याऽएवाधि सम-भरन्त्सैषैकैवेष्टकेयमेवेयꣳ[4] ह्यग्निरस्यै हि सर्व्वोऽग्निश्चीयते सेयं चतुः-स्रक्तिर्दिशो ह्यस्यै स्रक्तयस्तस्माच्चतुःस्रक्तय ऽइष्टका भवन्तीमाꣳ ह्यनु सर्व्वा ऽइष्टकाः[5] ॥२९॥ तदाहुः । यदेवमेकेष्टकोऽथ कथं पञ्चे-ष्टक ऽइतीयं न्वेव प्रथमा मृन्मयीष्टका तद्यत्किञ्चात्र मृन्मयमुपदधा-त्येकैव सेष्टकाथ यत्पशुशीर्षाण्युपदधाति सा पश्विष्टकाथ यद्रुक्म-पुरुषाऽउपदधाति यद्धिरण्यशकलैः प्रोक्षति सा हिरण्येष्टकाथ यत्स्रुचाऽउपदधाति यदुलूखलमुसले याः समिध ऽआदधाति सा वानस्पत्येष्टकाथ यत्पुष्करपर्णमुपदधाति यत्कूर्म्मं यद्दधि मधु घृतं यत्किञ्चात्रान्नमुपदधाति[6] सैवान्नं पञ्चमीष्टकैवमु पञ्चेष्टकः ॥३०॥ तदाहुः । कतरत ऽइष्टकायाः शिरऽइति यतऽउपस्पृश्य यजुर्व्वद-

---

१. हैतदिति घ.
२. देवाश्चेति नास्ति घ.
३. चिनोति इति. च
४. वेयꣳ इति घ.
५. इष्टका इति. ग, घ.
६. उपदधाति इति. ग, घ.

तीत्यु हैकऽआहुः स स्वयमातृण्णाया ऽएवार्द्धादुपस्पृश्य य्यजुर्व्वदेत्तथो हास्यैताः सर्व्वाः स्वयमातृण्णामभ्यावृत्ता भवन्तीति न तथा कुर्य्यादङ्गानि वाऽअस्यैतानि परूᳬंषि यदिष्टका य्यथा वाऽअङ्गेऽङ्गे पुर्व्वन्पर्व्वञ्छिरः कुर्य्यात्तादृक्तद्यो वाव चितेऽग्निर्न्निधीयते तदेवैतासाᳬं सर्व्वासाᳬं शिरः ॥३१॥ तदाहुः । कति पशवोऽग्नाऽउपधीयन्तऽइति पञ्चेति त्वेव ब्रूयात्पञ्च ह्येतान् पशूनुपदधाति ॥३२॥ अथोऽएकऽइति ब्रूयात् । अविरितीयं वाऽअविरियᳬं हीमाः सर्व्वाः प्रजाऽअवतीयमु वाऽअग्निरस्यै हि सर्व्वोऽग्निश्चीयते तस्मादेकऽइति ब्रूयात् ॥३३॥ अथो द्वाविति ब्रूयात् । अवीऽइतीयं चासौ चेमे हीमाः सर्व्वाः प्रजा ऽअवतो यन्मृदि यन्तद्यदापोऽसौ तन्मृच्चापश्चेष्टका भवन्ति तस्माद्द्वाविति ब्रूयात् ॥३४॥ अथो गौरिति ब्रूयात् । इमे वै लोका गौर्य्यद्धि किं च गच्छतीमांस्तल्लोकान्गच्छतीमऽउ लोका ऽएषोऽग्निश्चितस्तस्माद्गौरिति ब्रूयात् ॥३५॥ तदाहुः । कस्मै कामायाग्निश्चीयतऽइति सुपर्णो मा भूत्वा दिवं व्वहादित्यु हैकऽआहुर्न्न तथा व्विद्यादेतद्वै रूपं कृत्वा प्राणाः प्रजापतिरभवन्नेतद्रूपं कृत्वा प्रजापतिर्द्देवानसृजतैतद्रूपं कृत्वा देवा ऽअमृता ऽअभवंस्तद्यदेवैतेन प्राणा ऽअभवन्यत्प्रजापतिर्य्यद्देवास्तदेवैतेन भवति ॥३६॥ Cf. का. श. ८. १. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ. १. २. )

६. १. ३.

( अबादिसृष्टिः कुमारोत्पत्तिश्च )

प्रजापतिर्व्वाऽइदमग्रऽआसीत् । एक ऽएव सोऽकामयत स्यां प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानादापोऽसृज्यन्त तस्मात्पुरुषात्तप्तादापो जायन्ते ॥१॥ आपोऽब्रुवन् । क व्वयं भवामेति तप्यध्वमित्यब्रवीत्ताऽअतप्यन्त ताः फेनमसृजन्त

तस्मादपां तप्तानां फेनो जायते ॥२॥ फेनोऽब्रवीत् । क्वाहं भवानीति तप्यस्वेत्यब्रवीत्सोऽतप्यत स मृदमसृजतैतद्वै फेनस्तप्यते यदप्स्वावेष्टमानः प्लवते स यदोपहन्यते मृदेव भवति ॥३॥ मृदब्रवीत्। क्वाहं भवानीति तप्यस्वेत्यब्रवीत्साऽतप्यत सा सिकताऽसृजतैतद्वै मृत्तप्यते यदेनां विकृषन्ति तस्माद्यद्यपि सुमार्त्स्नं विकृषन्ति सैकतमिवैव भवत्येतावन्नु तद्यत्क्वाहं भवानि क्वाहं भवानीति ॥४॥

( अर्द्धप्रपाठकः )

सिकताभ्यः शर्क्करामसृजत । तस्मात्सिकताः शर्क्करैवान्ततो भवति शर्क्कराया अश्मानं तस्माच्छर्क्कराश्मैवान्ततो भवत्यश्मनोऽयस्तस्मादश्मनोऽयो धमन्त्ययसो हिरण्यं तस्मादयो बहुध्मातꣳ हिरण्यसङ्काशमिवैव भवति ॥५॥ तद्यदसृज्यताक्षरत् । तद्यदक्षरत्तस्मादक्षरं यदष्टौ कृत्वोऽक्षरत्सैवाष्टाक्षरा गायत्र्यभवत् ॥६॥ अभूद्वाऽइयं प्रतिष्ठेति । तद्भूमिरभवत्तामप्रथयत्सा पृथिव्यभवत्तस्यामस्यां प्रतिष्ठायां भूतानि च भूतानां च पतिः संवत्सरायादीक्षन्त भूतानां पतिर्गृहपतिरासीदुषाः पत्नी ॥७॥ तद्यानि तानि भूतानि । ऋतवस्तेऽथ यः स भूतानां पतिः संवत्सरः सोऽथ या सोषाः पत्न्यौषसी सा तानीमानि भूतानि च भूतानां च पतिः संवत्सरऽउषसि रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत सोऽरोदीत् ॥८॥ तं प्रजापतिरब्रवीत् । कुमार किꣳ रोदिषि यच्छ्रमात्तपसोऽधि जातोऽसीति सोऽब्रवीदनपहतपाप्मा वाऽअस्म्यहितनामा नाम मे धेहीति तस्मात्पुत्रस्य जातस्य नाम कुर्यात्पाप्मानमेवास्य तदपहन्त्यपि द्वितीयमपि तृतीयमभि पूर्व्वमेवास्य तत्पाप्मानमपहन्ति ॥९॥ तमब्रवीद्रुद्रोऽसीति । तद्यदस्य तन्नामाकरोदग्निस्तद्रूपमभवदग्निर्व्वै रुद्रो यदरोदीत्तस्माद्रुद्रः सोऽब्रवीज्ज्यायान्वाऽअतो-

१. शर्क्कराश्मैवेति. ग, घ. २. मस्यामिति. घ. ३. अब्रवीत् इति. ग.
४. तृतीयमभि इति. ग, ५. रुद्रो इति ग.

ऽस्मि धेह्येव मे नामेति ॥१०॥ तमब्रवीत्सर्व्वोऽसीति[1] । तद्य-
दस्य तन्नामाकरोदापस्तद्रूपमभवन्नापो वै सर्व्वोऽद्भ्यो हीदꣳ सर्व्वं
जायते सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥११॥
तमब्रवीत्पशुपतिरसीति । तद्यदस्य तन्नामाकरोदोषधयस्तद्रूपमभव-
न्नोषधयो वै पशुपतिस्तस्माद्यदा पशव ऽओषधीर्ल्लभन्तेऽथ पतीयन्ति
सोऽब्रवीज्ज्यायान्वा ऽअतोऽस्मि धेह्येव मे नामेति ॥१२॥ तमब्रवी-
दुग्रोऽसीति । तद्यदस्य तन्नामाकरोद्वायुस्तद्रूपमभवद्वायुर्व्वा ऽउग्रस्त-[2]
स्माद्यदा बलवद्वात्युग्रो व्वातीत्याहुः सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि
धेह्येव[3] मे नामेति ॥१३॥ तमब्रवीदशनिरसीति[4] । तद्यदस्य तन्नामा-
करोद्विद्युत्तद्रूपमभवद्विद्युद्वा ऽअशनिस्तस्माद्यं व्विद्युद्धन्त्यशनिरव-
धीदित्याहुः सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति ॥१४॥
तमब्रवीद्भवोऽसीति । तद्यदस्य तन्नामाकरोत्पर्ज्जन्यस्तद्रूपमभवत्प-
र्ज्जन्यो वै भवः पर्ज्जन्याद्धीदꣳ सर्व्वं भवति सोऽब्रवीज्ज्यायान्वा-
ऽअतोऽस्मि धेह्येव मे नामेति ॥१५॥ तमब्रवीन्महान्देवोऽसीति ।
तद्यदस्य तन्नामाकरोच्चन्द्रमास्तद्रूपमभवत्प्रजापतिर्व्वै[5] चन्द्रमाः प्रजा-
पतिर्व्वै महान्देवः सोऽब्रवीज्ज्यायान्वाऽअतोऽस्मि धेह्येव मे नामेति
॥१६॥ तमब्रवीदीशानोऽसीति[6] । तद्यदस्य तन्नामाकरोदादित्यस्तद्रू-
पमभवदादित्यो वाऽईशान ऽआदित्यो ह्यस्य सर्व्वस्येष्टे सोऽब्रवी-
देतावान्वाऽअस्मि मामेतः परो नाम धाऽइति ॥१७॥ तान्येतान्यष्टा-
वग्निरूपाणि । कुमारो नवमः सैवाग्नेस्त्रिवृत्ता ॥१८॥ यद्वेवाष्टावग्नि-
रूपाणि । अष्टाक्षरा गायत्री तस्मादाहुर्ग्गायत्रोऽग्निरिति सोऽयं कुमारो

---

१. शर्व इति च.  २. तद्रूपमिति. ग, घ.  ३. धेह्येव इति. ग.
४. रसीति इति. घ.  ५. प्रजापतिरिति. घ.

६. इमानि रुद्रादीनीशानान्तानि अष्टौ नामानि शिवनामतया परिगृह्य शूलगवाख्ये कर्मणि बौधायनापस्तम्बादिभिस्तदीयदेवतानामत्वेनोक्तानि. See बौ. गृ. २. १२. १; आप. मन्त्रसं. २. १८. १४; also आश्व. गृ. ४. १०. १४. अत्र तु द्वादश नामानि दृश्यन्ते ।

रूपाण्यनुप्राविशन्न वा॑ऽअग्निं कुमारमिव पश्यन्त्येतान्येवास्य रूपाणि पश्यन्त्येतानि हि रूपाण्यनुप्राविशत् ॥१९॥ तमेतᳪ संवत्सरऽएव चिनुयात् । संवत्सरेऽनुब्रूयाद्द्वयोरित्यु हैकऽआहुः संवत्सरे वै तद्रेतोऽसिञ्चन्त्स संवत्सरे कुमारोऽजायत तस्माद्द्वयोरेव चिनुयाद्द्वयोरनुब्रूयादिति संवत्सरे त्वेव चिनुयात्संवत्सरेऽनुब्रूयाद्यद्वाव रेतः सिक्तं तदेव जायते तत्ततो विक्रियमाणमेव वर्द्धमानᳪशेते तस्मात्संवत्सरऽएव चि॑नुयात्संवत्सरेऽनुब्रूयात्तस्य चितस्य नाम करोति पाप्मानमेवास्य तदपहन्ति चित्रनामानं करोति चित्रोऽसीति सर्वाणि हि चित्राण्य॑ग्निः ॥२०॥ Cf. का. श. ब्रा. ८. १. ३.; आश्व. गृ. ४. १०. १४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
प्रथमपाठके तृतीयं ब्राह्मणम् ॥ ( अ. १. ३. )

( प्रथमोऽध्यायस्समाप्तः )

## ६. १. ४.

## ( चयनाङ्गभूताः पशुभागाः )

प्रजापतिरग्निरूपाण्यभ्यध्यायत् । स योऽयं कुमारो रूपाण्यनुप्रविष्टऽआसीत्तमन्वैच्छत्सोऽग्निरवेदनु वै मा पिता प्रजापतिरिच्छति हन्त तद्रूपमसानि यन्न मऽएष न वेदेति ॥१॥ स ऽएतान् पञ्च पशूनपश्यत् । पुरुषमश्वं गामविमजं यदपश्यत्तस्मादेते पशवः ॥२॥ सऽएतान् पञ्च पशून् प्राविशत् । स ऽएते पञ्च पशवो भवत्तमु वै प्रजापतिरन्वेवैच्छत् ॥३॥ स ऽएतान् पञ्च पशूनपश्यत् । यदपश्यत्तस्मादेते पशवस्तेष्वेतमपश्यत्त॑स्माद्वेवैते पशवः ॥४॥ सऽपेक्षत । इमे वा ऽअग्निरिमानेवात्मानमभिसंस्करवै यथा वाऽअग्निः समिद्धो

१. वा इति. ग.
२. चिनुयात्संवत्सर इति घ.
३. चित्राण्यग्निः इति. ख, ग, घ.
४. तस्मादिति. ग.

दीप्यत ऽएवमेषां चक्षुर्दीप्यते यथाग्नेर्धूम ऽउद्यत ऽएवमेषामूष्मो-द्यते यथाग्निरभ्याहितं दहत्येवं बप्सति यथाग्नेर्भस्म सीदत्येव-मेषां पुरीषꣳ सीदतीमे वाऽअग्निरिमानेवात्मानमभिसंस्करवाऽइति तान्नाना देवताभ्यऽआलिप्सत वैश्वकर्मणं पुरुषं वारुणमश्वमैन्द्र-मृषभं त्वाष्ट्रमविमाग्नेयमजꣳ ॥५॥ सऽऐक्षत । नाना वा ऽइदं देवताभ्यऽआलिप्सेऽग्नेर्वहूꣳ रूपाणि कामये हन्तैनानग्निभ्यः कामा-यालभाऽइति तानग्निभ्यः कामायालभत तद्यदाग्निभ्य ऽइति बहूनि ह्यग्निरूपाण्यभ्यध्यायदथ यत्कामायेति कामेन ह्यालभत तानाप्रीतान् पर्यग्निकृतानुदीचो नीत्वा समज्ञपयत् ॥६॥ सऽऐक्षत । या वै श्री-रभ्यध्यासिषमिमास्ताः शीर्षसु हन्त शीर्षाण्येवोपदधाऽइति स शी-र्षाण्येवोत्कृत्योपाधत्ताथेतराणि कुसिन्धान्यप्सु प्राप्लावयदजेन यज्ञꣳ समस्थापयन्नेन्मे यज्ञो विकृष्टोऽसदित्यात्मा वै यज्ञो नेन्मेऽयमात्मा[1] विकृष्टोऽसदित्येतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याग्नेरन्तं न पर्यैत् ॥७॥ सऽऐक्षत । यमिममात्मानमप्सु प्राप्लिवं तमन्विच्छा-[2] नीति तमन्वैच्छत्तद्यदेषामप्सु प्रविद्धानां प्रत्यतिष्ठत्ताऽअपः समभर-दथ यदस्यां तां मृदं तदुभयꣳ सम्भृत्य मृदं चापश्चेष्टकामकरोत्त-स्मादेतदुभयमिष्टका भवति मृच्चापश्च ॥८॥ सऽऐक्षत । यदि वाऽइदमित्थमेव[3] सदात्मानमभिसंस्कारिष्ये मर्त्यः कुणपोऽनपहतपा-प्मा भविष्यामि हन्तैतदग्निना पचानीति तदग्निनापचत्तदेनदमृतम-करोदेतद्वै हविरमृतं भवति[4] यदग्निना पचन्ति तस्मादग्निनेष्टकाः पचन्त्यमृताऽएवैनास्तत्कुर्व्वन्ति ॥९॥ तद्यदिष्ट्वा पशूनापश्यत् । तस्मा दिष्टकास्तस्मादिष्ट्वैव पशुनेष्टकाः कुर्यादनिष्टका ह ता भवन्ति याः पुरा पशोः कुर्व्वन्त्यथो ह तदन्यदेव ॥१०॥ तद्यास्ताः श्रियः । एतानि तानि पशुशीर्षाण्यथ यानि तानि कुसिन्धान्येतास्ताः पञ्च चित-

१. नेन्मेऽयमा इति. घ.
२. तमिति. घ.
३. इदमित्थमिति घ.
४. भवति इति ग

यस्तद्यत्पशुशीर्षाण्युपधाय चितीश्चिनोत्येतैरेव तच्छीर्षभिरेतानि कुसिन्धानि सन्दधाति ॥११॥ तऽएते सर्व्वे पशवो य्यदग्निः। तस्मादग्नौ पशवो रमन्ते पशुभिरेव तत्पशवो रमन्ते तस्माद्यस्य पशवो भवन्ति तस्मिन्नग्निराधीयतेऽग्निर्ह्येव य्यत्पशवस्ततो वै प्रजापतिरग्निरभवत् ॥१२॥ तद्धैकऽआहुः। अत्रैवैतैः सर्व्वैः पशुभिर्यजेत यद्वाऽएतैरत्र सर्व्वैः प्रजापतिरयक्ष्यत तदेवाग्नेरन्तं पर्य्यैष्यत्तद्यदेतैरत्र सर्व्वैर्य्यजेत तदेवाग्नेरन्तं परीयादिति न तथा कुर्य्याद्देवानां तदितादियादथो पथस्तदियादथो किं ततः सम्भरेदेतानि वाऽएतत्कुसि[1]न्धान्येताश्चितीः सम्भरति तस्मात्तथा न कुर्यात् ॥१३॥ य्यद्वेवैतान् पशूनालभते। आयतनमेवैतदग्नये करोति न ह्यनायतने कश्चन रमतेऽन्नं वाऽआयतनं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपावर्त्तते ॥१४॥ पुरुषोऽश्वो गौरविरजो भवन्ति। एतावन्तो वै सर्व्वे पशवोऽन्नं पशवस्तद्यावदन्नं तदेतत्पुरस्तान्निदधाति तदेनं पश्यन्नग्निरुपावर्त्तते ॥१५॥ पञ्च भवन्ति। पञ्च ह्येतेऽग्नयो य्यदेताश्चितयस्तेभ्य ऽएतत्पञ्चायतनानि निदधाति तदेनं पश्यन्नग्निरुपावर्त्तते॥१६॥ तद्यदग्निभ्य ऽइति। [2]बहवो ह्येतेऽग्नयो य्यदेताश्चितयोऽथ यत्कामायेति य्यथा तं काममाप्नुयाद्यजमानो य्यत्काम ऽएतत्कर्म्म कुरुते॥१७॥ पुरुषं प्रथममालभते। पुरुषो हि प्रथमः पशूनामथाश्वं पुरुषᳬं ह्यन्वश्वोऽथ गामश्वᳬं ह्यनु गौरथाविं गाᳬं ह्यन्वविरथाजमविᳬं ह्यन्वजस्तदेनान्यथापूर्व्वं यथा श्रेष्ठमालभते ॥१८॥ तेषां विषमा रशनाः स्युः। पुरुषस्य वर्षिष्ठाथ ह्रसीयस्यथ ह्रसीयसी तद्यथारूपं पशूनाᳬं रशनाः करो[3]त्यपापवस्यसाय सर्व्वास्त्वेव समाः स्युः सर्व्वाः सदृश्यः सर्व्वे ह्येते समाः सर्व्वे सदृशा ऽअग्नयो ह्यु[4]च्यन्तेऽन्नᳬं ह्युच्यन्ते तेन समास्तेन सदृशाः ॥१९॥ तदाहुः। कथमस्यैषोऽग्निः पञ्चे-

---

१. एतत्कुसि इति. ख.
२. बहवो इति. घ.
३. करोत्यपाप इति. ख.
४. ह्युच्यन्ते इति. च.

ष्टकः सर्व्वः पशुष्वारब्धो भवतीति पुरोडाशकपालेषु न्वेवाप्यतऽइयं प्रथमा मृन्मयीष्टकाथ यत्पशुमालभते तेन पश्विष्टकाप्यतेऽथ यद्रुक्मामभितो हिरण्यशकलौ भवतस्तेन हिरण्येष्टकाप्यतेऽथ यदिध्मो यूपः परिधयस्तेन वानस्पत्येष्टकाप्यतेऽथ यदाज्यं प्रोक्षण्यः पुरोडाशस्तेनान्नं पञ्चमीष्टकाप्यतऽएवमु हास्यैषोऽग्निः पञ्चेष्टकः सर्व्वः पशुष्वारब्धो भवति ॥२०॥ तेषां चतुर्व्विᳬशतिः सामिधेन्यः । चतुर्व्विᳬशत्यर्द्धमासो वै संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥२१॥ यद्वेव चतुर्व्विᳬशतिः । चतुर्व्विᳬशत्यक्षरा वै गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥२२॥ यद्वेव चतुर्व्विᳬशतिः । चतुर्व्विᳬशो वै पुरुषो दश हस्त्याऽअङ्गुलयो दश पाद्याश्चत्वार्य्यङ्गानि पुरुषः प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे॥२३॥ उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह । प्राणो गायत्र्यात्मा त्रिष्टुप्प्राणमेवास्य गायत्रीभिः समिन्द्धऽआत्मानं त्रिष्टुब्भिर्मध्ये त्रिष्टुभो भवन्त्यभितो गायत्र्यो मध्ये ह्ययमात्माभितः प्राणा भूयसीः[1][2] पुरस्ताद्गायत्रीरन्वाह कनीयसीरुपरिष्टाद्भूयाᳬसो हीमे पुरस्तात्प्राणाः कनीयाᳬस ऽउपरिष्टात् ॥२४॥ सोऽन्वाह । समास्त्वाग्नऽऋतवो व्वर्द्धयन्त्वित्वति प्रजापतिं व्विस्रस्तं यत्राग्निः समदधात्तमब्रवीद्या मत्सम्मिताः सामिधेन्यस्ताभिर्मा समिन्त्स्वेति ॥२५॥ स ऽएता ऽअपश्यत् । "समास्त्वाग्नऽऋतवो व्वर्द्धयन्त्वि"ति[3] समाश्च त्वाग्नऽऋतवश्च व्वर्द्धयन्त्वित्येतत् "संवत्सरा ऽऋषयो यानि सत्ये"ति संवत्सराश्च त्वृषयश्च सत्यानि च व्वर्द्धयन्त्वित्येतत् "सं दिव्येन[5] दीदिहि रोचनेने"त्यसौ वा ऽआदित्यो दिव्यᳬ रोचनं तेन सन्दीदिहीत्येत[7]"द्विश्वा ऽआभाहि प्रदिशश्चतस्र" ऽइति सर्व्वा ऽआभाहि प्रदिशश्चतस्र ऽइत्येतत्॥२६॥

---

१. ह्ययमात्मा इति. ग, घ.     २. भूयसीरिति. घ.     ३-६. मा. सं. २७. १.

७. इत्येतत् इति. ग.

ता ऽएता ऽएकव्याख्यानाः । एतमेवाभि य्यथैतमेव संस्कुर्य्यादेतꣳ सन्दध्यादेतं जनयेत्ता ऽआग्नेय्यः प्राजापत्या य्यदग्निरपश्यत्तेनाग्नेय्यो य्यत्प्रजापतिꣳ समैन्द्ध तेन प्राजापत्याः ॥२७॥ द्वादशाप्रियः । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति ॥२८॥ य्यद्वेव द्वादश । द्वादशाक्षरा वै जगतीयं वै जगत्यस्याꣳ ह्रीदꣳ सर्व्वं जगदियमु वाऽअग्निरस्यै हि सर्व्वोऽग्निश्चीयते य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति ॥२९॥ य्यद्वेव द्वादश । द्वादशाक्षरा वै जगती जगती सर्व्वाणि छन्दाꣳसि सर्व्वाणि छन्दाꣳसि प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदाप्रीणाति ॥३०॥ ता ऽएता ऽऊर्ध्वा ऽअस्य समिधो भवन्तीति । प्रजापतिं व्विस्रस्तं य्यत्राग्निः समदधात्तमब्रवीद्या मत्सम्मिता ऽआप्रियस्ताभिर्मा प्रीणीहीति ॥३१॥ स ऽएता ऽअपश्यत् । "ऊर्ध्वा ऽअस्य समिधो भवन्ती"त्यूर्ध्वा ह्येतस्य समिद्धस्य समिधो भवन्त्यू "र्ध्वा शुक्रा शोचीꣳष्यग्नेरि"त्यूर्ध्वानि ह्येतस्य शुक्राणि शोचीꣳष्यर्चीꣳषि भवन्ति "द्युमत्तमे"ति व्वीर्यवत्तमेत्येतत् "सुप्रतीकस्ये"ति सर्व्वतो वाऽअग्निः सुप्रतीकः "सूनो"रिति य्यदेनं जनयति तेनास्यैष सूनुः ॥३२॥ ता ऽएता ऽएकव्याख्यानाः । एतमेवाभि य्यथैतमेव संस्कुर्य्यादेतꣳ सन्दध्यादेतं जनयेत्ता ऽआग्नेय्यः प्राजापत्या य्यदग्निरपश्यत्तेनाग्नेय्यो य्यत्प्रजापतिमाप्रीणात्तेन प्राजापत्याः ॥३३॥ ता व्विषमा व्विषमपदाः । व्विषमाक्षरा व्विषमाणि हि छन्दाꣳस्यथो य्यान्यस्याध्यात्ममङ्गानि व्विषमाणि तान्यस्यैताभिराप्रीणाति ॥३४॥ व्वैश्वानरः पशुपुरोडाशः । व्वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषामग्नीनामुपाप्त्यै ॥३५॥ य्यद्वेव व्वैश्वानरः । ऋतवो हैते य्यदेताश्चितयोऽग्नयो वाऽऋतव ऽऋतवः संवत्सरः संवत्सरो

---

१. यथैतमिति. घ. २. प्राजापत्याः इति. ग, च. ३–७. मा. सं. २७. ११.
८. स्यतो इति. च. ९. यद्वेव इति. ग. १०. ऋतवो इति. च.

वैश्वानरो ऽग्न्य ऽइति स्यादिति तद्वेचयेद् द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो वैश्वानर ऽआग्नेय्यो याज्यानुवाक्या ऽअग्निरूपाणामुपाप्त्यै कामवत्यः कामानामुपाप्त्यै ॥३६॥ तद्धैके । इत्येवैतानि पशुशीर्षाणि चित्वोपदधत्युभयेनैते पशव ऽइति ते ह ते मर्त्याः कुणपाः सम्भवन्त्यनाप्रीतानि हि तानि तद्ध तथाषाढेः सौश्रोमते यस्योपदधुः स ह क्षिप्रऽएव ततो ममार ॥३७॥ हिरण्मयान्यु हैके कुर्व्वन्ति । अमृतेष्टकाऽइति वदन्तस्ता ह ताऽअनृतेष्टका न हि तानि पशुशीर्षाणि ॥३८॥ मृन्मयान्यु हैके कुर्व्वन्ति । उत्सन्ना वाऽएते पशवो यद्वै किञ्चोत्सन्नमियं तस्य सर्व्वस्य प्रतिष्ठा तद्यत्रैते पशवो गतास्ततऽएनानधि सम्भरामऽइति न तथा कुर्याद्यो वाऽएतेषामावृतं च ब्राह्मणं च न विद्यात्तस्यै तऽउत्सन्नाः स्युः सऽएतानेव पञ्च पशूनालभेत यावदस्य वशः स्यात्तान्हैतान् प्रजापतिः प्रथमऽआलेभे श्यापर्णः सायकायनो ऽन्तमोऽथ ह स्मैतानेवान्तरेणालभन्तेऽथैतर्हीमौ द्वावेवालभ्येते प्राजापत्यश्च वायव्यश्च तयोरुतो ब्राह्मणमुच्यते ॥३९॥ Cf. का. श. ८. २. १; तै. सं. ५. १. ८; मै. सं. ३. १. १०; कठ. सं. १९. ८; कपि. सं. ३०-६.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. २. १.)

प्रथमः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ११० )

---

१. प्रीतानि. इति. घ.  २. सायंकायनो इति च.

## अथ द्वितीयः प्रपाठकः ॥

### ६. २. १.

### ( पूर्वोक्तपशुयागशेषः दीक्षा च )

प्राजापत्यं चरकाऽआलभन्ते । प्रजापतिरग्निं चित्वाग्निरभवत्त-द्यदेतमालभते तदेवाग्नेरन्तं पर्यैतीति ॥१॥ श्यामो भवति । द्वयानि वै श्यामस्य लोमानि शुक्लानि च कृष्णानि च द्वन्द्वं मिथुनं प्रज-ननं तदस्य प्राजापत्यꣳ रूपं तूपरो भवति तूपरो हि प्रजापतिः ॥२॥ तस्यैकविꣳशतिः सामिधेन्यः । द्वादश मासाः पञ्चर्त्तवस्त्रयऽ-इमे लोकाऽअसावादित्य ऽएकविꣳशऽएष प्रजापतिः प्रजापतिरग्नि-र्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥३॥ यद्वेवैक-विꣳशतिः । एकविꣳशो वै पुरुषो दश हस्त्याऽअङ्गुलयो दश पा-द्याऽआत्मैकविꣳशः पुरुषः प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्या-वत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥४॥ उभयीर्ग्गायत्रीश्च त्रिष्टुभ-श्चान्वाह । तासामुक्तो बंधुरुक्तंवेवान्वृचꣳ हिरण्यगर्भवत्याघार-माघारयति प्रजापतिर्व्वै हिरण्यगर्भः प्रजापतिरग्निर्द्वादशाप्रियस्ता-सामुक्तो बंधुरुक्तम्वेवान्वृचं[1] प्राजापत्यः पशुपुरोडाशो यऽएव पशो-र्बन्धुः स पुरोडाशस्य द्वादश कपालो द्वादश मासाः संवत्सरः संव-त्सरः प्रजापतिः कद्वत्यो याज्यानुवाक्याः को हि प्रजापतिः ॥५॥ अथैतं व्वायवे नियुत्वते । शुक्लं तूपरमालभते प्रजापतिः प्रजाः सृष्ट्वानुव्यैक्षत तस्यात्यानन्देन रेतः परापतत्सोऽजः[2] शुक्लस्तूपरो लप्सुद्यभवद्रसो वै रेतो यावानु वै रसस्तावानात्मा तद्यदेतमाल-भते तदेवाग्नेरन्तं पर्यैति शुक्लो भवति शुक्लꣳ हि रेतस्तूपरो भवति तूपरꣳ हि रेतो व्वायवे भवति प्राणो वै वायुर्नियुत्वते[3] भव-त्युदानो वै नियुतः प्राणोदानावेवास्मिन्नेतद्दधाति ॥६॥ यद्वेवैतं व्वायवे नियुत्वते । शुक्लं तूपरमालभते प्रजापतिं व्विस्रस्तं यत्र

---

१. बन्धुरुक्तम्वेवेति ग, घ. २. सोऽज इति. ग, घ. ३. नियुत्वते इति. घ.

देवाः समस्कुर्वंस्स योऽस्मात्प्राणो मध्यतऽउदक्रामत्तमस्मिन्नेतेन पशुनादधुस्तथैवास्मिन्नयमेतद्दधाति व्वायवे भवति प्राणा वै व्वायुर्न्नियुत्वते भवत्युदानो वै नियुतः प्राणोदानावेवास्मिन्नेतद्दधाति शुक्लो भवति शुक्लो हि व्वायुस्तूपरो भवति तूपरो हि व्वायुः ॥७॥ तस्य सप्तदश सामिधेन्यः । सप्तदशो वै संवत्सरो द्वादशमासाः पञ्चर्त्तवः संवत्सरः प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥८॥ य्यद्वेव सप्तदश । सप्तदशो वै पुरुषो दश प्राणाश्चत्वार्य्यङ्गान्यात्मा पञ्चदशो ग्रीवाः षोडश्यः शिरः सप्तदशं पुरुषः प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्समिन्द्धे ॥९॥ उभयीर्ग्गायत्रीश्च त्रिष्टुभश्चान्वाह । तासामुक्तो बन्धुरुक्तम्वेवान्वृचं द्वादशाप्रियस्तासामुक्तो बन्धुरुक्तम्वेवान्वृचं प्राजापत्यः पशुपुरोडाशोऽत्रो स कामऽउपात्तऽइति ह स्माह माहित्थिर्यं चरकाः प्राजापत्ये पशावाहुरिति ॥१०॥ य्यद्वेव व्वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशोऽर्द्धᳪ ह प्रजापतेर्व्वायुरर्द्धं प्रजापतिस्तद्यदुभौ व्वायव्यौ स्यातामुभौ वा प्राजापत्यावर्द्धᳪ हैवास्य कृतᳪ स्यान्नार्द्धमथ य्यद्वायव्यः पशुर्भवति प्राजापत्यः पशुपुरोडाशस्तेन हैवैतᳪ सर्व्वं कृत्स्नं प्रजापतिᳪ संस्करोति ॥११॥ य्यद्वेव व्वायव्यः पशुर्भवति । प्राजापत्यः पशुपुरोडाशः प्रजापतिं व्विस्रस्तं य्यत्र देवाः समस्कुर्व्वंस्स योऽस्मात्प्राणो मध्यतऽउदक्रामत्तमस्मिन्नेतेन पशुनादधुरथास्यैतेन पुरोडाशेनात्मानᳪ समस्कुर्व्वंस्सय्यत्प्राजापत्यो भवति प्रजापतिर्ह्यात्मा द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः कद्वत्यो याज्यानुवाक्ये को हि प्रजापतिः ॥१२॥ तद्यद्वपां पुरस्ताज्जुहोति । य्यऽएवायं पुरस्तात्प्राणस्तमस्मिन्नेतद्दधात्यथ य्यदेतेन मध्यतश्चरन्ति मध्यतो ह्ययमात्माथ य्यद्धविषोपरिष्टाच्चरन्ति य्यऽएवायमुपरिष्टात्प्राणस्तमास्मिन्नेतद्दधाति शुक्ल-

---

१. तमस्मिन्निति घ.    २. यद्धविषेति. ग, घ, यद्धविषेति. ख.

वत्यो याज्यानुवाक्याः स्युः शुक्ररूपाणामुपाप्त्यै नियुत्वत्यो यदेव नियुत्वद्रूपं तस्योपाप्त्यै ॥१३॥ तदु वाऽआहुः । वपायाऽएव शुक्रवत्यौ स्यातामेतावद्धै पशौ शुक्रं यद्वपा शुक्रवत्यौ नियुत्वत्यौ हविषो यदेव नियुत्वद्रूपं तस्योपाप्त्याऽइति ॥१४॥ यद्वेवैतं पशुमालभते । एतस्मिन्ह पशौ सर्वेषां पशूनाᳬ रूपं यत्तूपरो लप्सुदी तत्पुरुषस्य रूपं तूपरो हि लप्सुदी पुरुषो यत्तूपरः केसरवान्स्तदश्वस्य रूपं तूपरो हि केसरवानश्वो यदष्टाशफस्तद्गोरूपमष्टाशफो हि गौरथ यदस्यावेरिव शफास्तदवे रूपं यदजस्तदजस्य तद्यदेतमालभते तेन हैवास्यैते सर्वे पशवऽआलब्धा भवन्त्यतो यतमदस्य कर्मोपकल्पेतैते वा पञ्च पशवऽएष वा प्राजापत्यऽएष वा नियुत्वतीयः ॥१५॥ तं पौर्णमास्यामालभेत । अमावास्यायामालभेतेत्यु हैकऽआहुरसौ वै चन्द्रः प्रजापतिः सऽएताᳬ रात्रिमिह वसति तद्यथोपतिष्ठन्तमालभेतैवं तदिति ॥१६॥ तंद्वै पौर्णमास्यामेव । असौ वै चन्द्रः पशुस्तं देवाः पौर्णमास्यामालभन्ते यत्रैनं देवाऽआलभन्ते तदेनमालभाऽइति तस्मात्पौर्णमास्यां यद्वेव पौर्णमास्यां पौर्णमासी ह वाव प्रथमा व्युवास तस्माद्वेव पौर्णमास्याम् ॥१७॥ तंद्वै फाल्गुन्यामेव । एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वा मुखतऽएव तत्संवत्सरमारभते ॥१८॥ स वाऽइष्ट्वैव पौर्णमासेन । अथ पशुमालभेत पौर्णमासेन वा ऽइन्द्रो वृत्रं पाप्मानᳬ हत्वापहतपाप्मैतत्कर्मारभत तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मानᳬ हत्वापहतपाप्मैतत्कर्मारभते ॥१९॥ तद्वाऽउपांशु भवति । एतद्वैतैः प्रजापतिः पशुभिः कर्मैयेष तद्धात्रानद्धेवैवासानिरुक्तमिव तस्मादुपांशु ॥२०॥ यद्वेवोपांशु ।

१. शुक्लवत्यौ इति ख, घ. २. नियुत्वत्यौ हविष इति. ग, घ ३. नियुत्वतीय इति. ख.
४. तद्वै इति. ग, घ. ५. मेव इति. च. ६. पौर्णयास्यामिति. घ.
७. तद्वै इति ग, घ. ८. पौर्णमासेनेति. ग, घ. ९. यजमानः इति. घ.
१०. उपांशुः इति ग, घ.

प्राजापत्यं वाऽएतत्कर्म्म प्रजापतिᳬ ह्येतेन कर्मणारभतेऽनिरुक्तो वै प्रजापतिः ॥२१॥ यद्वेवोपाᳬशु । रेतो वाऽअत्र यज्ञ ऽउपाᳬशु वै रेतः सिच्यते वपा पशुपुरोडाशो हविरेतावान्हि पशुः ॥२२॥ अष्टकायामुखाᳬ सम्भरति । प्राजापत्यमेतदहर्यदष्टका प्राजापत्यमेतत्कर्म्म यदुखा प्राजापत्य ऽएव तदहन् प्राजापत्यं कर्म्म करोति ॥२३॥ यद्वेवाष्टकायाम् । पर्व्वैतत्संवत्सरस्य यदष्टका पर्व्वैतदग्नेर्यदुखा पर्व्वण्येव तत्पर्व्व करोति ॥२४॥ यद्वेवाष्टकायाम् । अष्टका वाऽउखा निधिर्द्धाऽऊर्द्ध्वी तिरश्ची रास्ना तच्चतुश्चतस्र ऽऊर्ध्वास्तदष्टावष्टकायामेव तदष्टकां करोति ॥२५॥ अमावास्यायां दीक्षते । अमावास्यायै वा ऽअधि यज्ञस्तायते यतो यज्ञस्तायते ततो यज्ञं जनयानीति ॥२६॥ ( शतम् ३५०० ॥)यद्वेवामावास्यायाᳬ । रेतो वाऽएतद्भूतमात्मानᳬ सिञ्चत्युखायां योनौ यद्दीक्षते तस्माऽएतं पुरस्ताल्लोकं करोति यद्दीक्षितो भवति तं कृतंल्लोकमभिजायते तस्मादाहुः कृतंल्लोकं पुरुषोऽभि जायतऽइति ॥२७॥ स यत्कनीयः संवत्सराद्दीक्षितः स्यात् । अलोकाऽइष्टका ऽउपदध्यादिष्टका लोकानतिरिच्येरन्नथ यद्भूयसो लोकान् कृत्वेष्टका नानूपदध्याल्लोका ऽइष्टका ऽअतिरिच्येरन्नथ यदमावास्यायां दीक्षित्वामावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथास्यापूर्यमाणपक्षे सर्व्वो[2]ऽग्निश्चीयते ॥२८॥ तदाहुः । यद्यावत्य ऽएतस्याग्नेरिष्टकास्तावन्ति क्रयेऽहोरात्राणि सम्पद्यन्तेऽथ यान्यूर्ध्वानि क्रयादहानि कथमस्यैते लोका ऽअनुपहिता भवन्तीति यद्वाऽअमावास्यायां दीक्षित्वामावास्यायां क्रीणाति तद्यावन्तमेव लोकं करोति तावतीरिष्टका ऽउपदधात्यथ यान्यूर्ध्वानि क्रयादहानि तस्मिन्नवकाशेऽध्वर्युरग्निं चिनोति को हि चिनुयान्न च सोऽवकाशः स्याद्यावन्ति वै संवत्सरस्याहोरात्राणि तावत्य ऽएतस्याग्नेरिष्टका ऽउप च त्रयोदशो

१. उपाᳬशु इति ग, घ.

२. सर्वोऽग्निरिति. घ.

मासस्त्रयोदशो वाऽएष मासो यान्यूर्ध्वानि क्रयादहानि तद्या ऽअमुष्य त्रयोदशस्य मासऽइष्टकास्ताभिरस्य ते लोका ऽअनुपहिता भवन्ति तत्समा लोकाश्चेष्टकाश्च भवन्ति ॥२९॥ एतद्वै सैव प्रथमा पौर्णमासी। तस्यां पशुमालभते या प्रथमाष्टका तस्यामुखाꣳ सम्भरति या प्रथमामावास्या तस्यां दीक्षतऽएतद्वै यान्येव संवत्सरस्य प्रथमान्यहानि तान्यस्य तदारभते तानि च तदाप्नोत्यथातः [1]सम्पदेव ॥३०॥ तदाहुः। कथमस्यैतत्कर्म्म संवत्सरमग्निमाप्नोति कथꣳ [2]संवत्सरेणाग्निना सम्पद्यत ऽइत्येतेषां वै पञ्चानां पशूनां चतुर्व्विꣳशतिः सामिधेन्यो द्वादशाप्रियस्तत्षट्त्रिꣳशदेका दशानुयाजा ऽएकादशोपयजस्तदष्टापञ्चाशत् ॥३१॥ ततो साष्टाचत्[3]वारिꣳशत्। साष्टाचत्वारिꣳशदक्षरा जगतीयं वै जगत्यस्याꣳ हीदꣳ सर्व्वं जगदि[4]यमु वाऽअग्निरस्यै हि सर्व्वोऽग्निश्चीयते यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥३२॥ यद्वेवाष्टाचत्वारिꣳशत्। अष्टाचत्वारिꣳशदक्षरा वै जगती जगती सर्व्वाणि छन्दाꣳसि सर्व्वाणि छन्दाꣳसि प्रजापतिः प्रजापतिरग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥३३॥ अथ यानि दश। सा दशाक्षरा व्विराड्विराडग्निर्द्दश दिशो [5]दिशोऽग्निर्द्दश प्राणाः प्राणा ऽअग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥३४॥ व्वपा पशु[6]पुरोडाशः। तत्षष्टिः षष्टिर्म्मासस्याहोरात्राणि तन्मासमाप्नोति मास ऽआप्त ऽऋतुमाप्नोत्यृतुः संवत्सरं तत्संवत्सरमग्निमाप्नोति ये च संवत्सरे कामाऽअथ य[7]दतोऽन्यद्यदेव संवत्सरेऽन्नं त[8]र्त्तत् ॥३५॥ अथैतस्य [9]प्राजापत्यस्य। एकविꣳशतिः सामिधेन्यो [10]द्वादशाप्रियस्तत्त्रयस्त्रिꣳशदेकादशानुयाजाऽएकादशोपयजस्तत्पञ्च पञ्चाशद्वपा पशुपुरोडाशो हविस्तदष्टापञ्चाश-

१. सम्पदेवेति घ. २. संवत्सरेणेति. ग. ३. चत्वारिꣳशदिति ग,घ
४. दियमु इति. ध. ५. दिशो इति नास्ति ख. ६. पुरोडाश इति.ग.
७. यद्वतो इति. ग. ८. तत्तत् इति. घ.
९. प्राजापत्यस्य इति घ, प्राजापत्यस्य इति. च. १०. द्वादशाप्रिय इति ग,घ.

त्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति द्वावाघारौ तत्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्यथ यदतोऽन्यद्यदेव संवत्सरेऽन्नं तत्तत् ॥३६॥ अथैतस्य नियुत्वतीयस्य । सप्तदश सामिधेन्यो द्वादशाप्रियस्तदेकान्नत्रिंशदेकादशानुयाजाऽएकादशोपयजस्तदेकपञ्चाशद्वपा पशुपुरोडाशो हविस्तच्चतुष्पञ्चाशद्द्वावाघारौ द्वौ स्विष्टकृतौ तदष्टापञ्चाशत्स योऽष्टापञ्चाशति कामोऽत्रैव तमाप्नोति वनस्पतिश्च वसाहोमश्च तत्षष्टिः स यः षष्ट्यां कामोऽत्रैव तमाप्नोत्यथ यदतोऽन्यद्यदेव संवत्सरेऽन्नं तत्तदेवमु हास्यैतत्कर्म्म संवत्सरमग्निमाप्नोत्येवꣳ संवत्सरेणाग्निना सम्पद्यते ॥३७॥ तदाहुः । नैतस्य पशोः समिष्टयजूꣳषि जुहुयान्न हृदयशूलेनावभृथमभ्यवेयादारम्भो वाऽएषोऽग्नेः पशुर्व्यवसर्गो देवतानाꣳ समिष्टयजूꣳषि सꣳस्थावभृथो नेदारम्भे देवता व्यवसृजानि नेद्यज्ञꣳ सꣳस्थापयानीति स वै समेव स्थापयेदेतेन पशुनेष्ट्वा तत्प्रजापतिरपश्यद्यथैतस्याग्नेरन्तं न पर्यैत्तस्मात्सꣳस्थापयेद्यद्वेव सꣳस्थापयति प्राणऽएष पशुस्तस्य यदन्तरियात्प्राणस्य तदन्तरियाद्यदु वै प्राणस्यान्तरियात्ततऽएवं म्रियेत तस्मात्समेव स्थापयेदथातो व्रतानामेव[2] ॥३८॥ तदाहुः[3] । नैतेन पशुनेष्ट्वोपरि शयीत न माꣳसमश्नीयान्न मिथुनमुपेयात्पूर्व्वदीक्षा वाऽएष पशुरनवक्लृप्तं वै तद्यद्दीक्षितऽउपरि शयीत यन्माꣳसमश्नीयाद्यन्मिथुनमुपेयादिति नेत्त्वेवैषा दीक्षा नेव हि मेखलास्ति न कृष्णाजिनमिष्टकां वाऽएतां कुरुते तस्मादु काममेवोपरि शयीतैतदु सर्व्वमन्नं यदेते[4] पशवस्तदस्यात्राप्तमारब्धं भवति तद्यानि कानि चामधुनोऽशनानि तेषामस्य सर्व्वेषां कामाशनं यदि लभेत मिथुनं तु नोपेयात्पुरा मैत्रावरुण्यै पयस्यायै तस्योपरि बंधुः ॥३९॥ तदाहुः । दद्यादेतस्मिन्यज्ञे दक्षिणां नेन्मेऽयं यज्ञोऽदक्षिणोऽ-

---

१. द्वादशाप्रिय इति ग. घ,
२. व्रतानामेव इति. च.
३. तदाहुरिति. च.
४. यदेते इति च.

सद्ब्रह्मणऽआदिष्टदक्षिणां दद्याद्ब्रह्मा वै सर्व्वो यज्ञस्तदस्य सर्व्वो यज्ञो भिषज्जियतो भवतीति न तथा कुर्यादिष्टकां वाऽएतां कुरुते तद्यथेष्टकायामिष्टकायां दद्यात्ताहक्तदमुत्र्यैव दद्याद्यदस्योपकल्पेत ॥४०॥ Cf. का. श. ८. २. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. २. २. )

## ६. २. २.

### ( चितीनामुत्पत्तिक्रमः )

एतद्वै देवाऽअब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तेषां चेतयमानानां प्रजापतिरिमां प्रथमाᳬं स्वयमातृण्णाञ्चितिमपश्यत्तस्मात्तां प्रजापतिर्नोपदधाति ॥१॥ तमग्निरब्रवीत् । उपाहमायानीति केनेति पशुभिरिति तथेति पश्विष्टकया ह तदुवाचैषा वाव पश्विष्टका य्यद्दूर्व्वेष्टका तस्मात्प्रथमायै स्वयमातृण्णायाऽअनन्तर्हिता दूर्व्वेष्टकोपधीयते तस्मादस्याऽअनन्तर्हिताऽओषधयोऽनन्तर्हिताः पशवोऽनन्तर्हितोऽग्निरनन्तर्हितो ह्येषऽएतयोपैत् ॥२॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाव तदब्रुवन्नितऽऊर्ध्वमिच्छतेति तेषाञ्चेतयमानानामिन्द्राग्नी च व्विश्वकर्म्मा चान्तरिक्षं द्वितीयाᳬं स्वयमातृण्णाञ्चितिमपश्यंस्तस्मात्तामिन्द्राग्निभ्याञ्च व्विश्वकर्म्मणा चोपदधाति ॥३॥ तान्वायुरब्रवीत् । उपाहमायानीति केनेति दिग्भिरिति तथेति दिश्याभिर्ह तदुवाच तस्माद्द्वितीयायै स्वयमातृण्णायाऽअनन्तर्हिता दिश्याऽउपधीयन्ते तस्मादन्तरिक्षादनन्तर्हिता दिशोऽनन्तर्हितो व्वायुरनन्तर्हितो ह्येषऽएताभिरुपैत् ॥४॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाव तदब्रुवन्नितऽऊर्ध्वमिच्छतेति

---

१. भिषज्जियितो इति ख, च, भिषज्जयितो इति ग, घ.
२. पश्विष्टकयेति. ग, घ.
३. ण्णाया इति. घ.

तेषाञ्चेतयमानानां परमेष्ठी दिवं तृतीयाꣳस्वयमातृण्णाञ्चितिमपश्यत्तस्मात्तां परमेष्ठिनोपदधाति ॥५॥ तमसावादित्योऽब्रवीत् । उपाह्ममायानीति केनेति लोकम्पृणयेति तथेत्येष वाव लोकम्पृणात्मना हैव तदुवाच तस्मात्तृतीया स्वयमातृण्णानन्तर्हिता लोकम्पृणायाऽउपधीयते तस्मादसावादित्योऽनन्तर्हितो दिवोऽनन्तर्हितो ह्येषऽएतयोपैत् ॥६॥ तदेता वाव षड् देवताः । इदꣳ सर्व्वमभवन्यदिदं किञ्च ते देवाश्चर्षयश्चाब्रुवन्निमा वाव षड्देवता इदꣳसर्व्वमभूमुप तज्जानीत यथा वयमिहाप्यसामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत यथा वयमिहाप्यसामेति तेषाञ्चेतयमानानां देवा द्वितीयाञ्चितिमपश्यन्नृषयश्चतुर्थीम् ॥७॥ तेऽब्रुवन् । उप वयमायामेति केनेति यदेषु लोकेषूपैति तथेति तद्यदूर्ध्वं पृथिव्याऽअर्व्वाचीनमन्तरिक्षात्तेन देवाऽउपायंस्तदेषा द्वितीया चितिरथ यदूर्ध्वमन्तरिक्षादर्व्वाचीनं दिवस्तेनर्षयऽउपायंस्तदेषा चतुर्थी चितिः ॥८॥ ते यदब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्यच्चेतयमानाऽअपश्यंस्तस्माच्चितयः ॥९॥ प्रजापतिः प्रथमां चितिमपश्यत् । प्रजापतिरेव तस्याऽआर्षेयं देवा द्वितीयाञ्चितिमपश्यन्देवाऽएव तस्याऽआर्षेयमिन्द्राग्नी च विश्वकर्म्मा च तृतीयाञ्चितिमपश्यंस्तऽएव तस्याऽआर्षेयमृषयश्चतुर्थीञ्चितिमपश्यन्नृषयऽएव तस्याऽआर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत्परमेष्ठ्येव तस्याऽआर्षेयꣳस यो हैतदेवञ्चितीनामार्षेयं वेदार्षेयवत्यो हास्य बन्धुमत्यश्चितयो भवन्ति ॥ १० Cf. का. श. ८. २. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ. २. ३.)

( द्वितीयोऽध्यायः )

---

१. मातृण्णां इति. ग   २. तस्मादसौ इति. घ.   ३. एतयोपैत् इति. घ.
४. मिच्छतेति. ग, घ.   ५. वयमिहेति. घ.   ६. चेतयमानानां देवा. इति. घ.
७. चतुर्थीमिति. च.   ८. मेष्ठ्येवेति. घ.

## ६. २. ३.

## ( सावित्रहोमादि )

एतद्वै देवाऽअब्रुवन्। चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तेषां चेतयमानानाᳬं सवितैतानि सावित्राण्यपश्यद्यत्सविता पश्यत्तस्मात्सावित्राणि स ऽएतामष्टागृहीतामाहुतिमजुहोत्ताᳬं हुत्वेमामष्टधा विहितामषाढामपश्यत्पुरैव सृष्टाᳬं [1]सतीम् ॥१॥ ते यदब्रुवन्। चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्यच्चेतयमाना [2]अपश्यंस्तस्माच्चितिराहुतिर्वै यज्ञो यदिष्ट्वापश्यत्तस्मादिष्टका ॥२॥

## ( अर्द्धप्रपाठकः )

तां वाऽएता[3]म्। एकाᳬं सतीमष्टागृहीतामष्टाभिर्य्यजुर्भिर्जुहोति तस्मादियमेका सत्यष्टधा वि[4]हिता ॥३॥ तामूर्ध्वामुदगृह्णन् जुहोति। इमां तदूर्ध्वाᳬं रूपैरुदगृह्णाति तस्मादियमूर्ध्वा [5]रूपैः ॥४॥ ताᳬं सन्ततां जुहोति। एतद्वै देवाऽअबिभयुर्यद्वै नऽइह रक्षाᳬंसि नाष्ट्रा नान्ववेयुरिति तऽएतᳬं सन्ततहोममपश्यन् रक्षसां नाष्ट्राणामन्ववायनाय तस्मात्सन्ततां जुहोति ॥५॥ [6]यद्वेवैतामाहुतिं जुहोति। सवितैषोऽग्निस्तमेतयाहुत्या पुरस्तात्प्रीणाति तमिष्ट्वा प्रीत्वाथैनᳬं सम्भरति तद्यदेतया सवितारं प्रीणाति तस्मात्सावित्राणि तस्माद्वाऽएतामाहुतिं जुहोति ॥६॥ यद्वेवैतामाहुतिं जुहोति। सवितैषोऽग्निस्तमे[7]तयाहुत्या पुरस्ताद्रेतो भूतᳬं सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतया सवितारᳬं रेतो भूतᳬं सिञ्चति तस्मात्सावित्राणि तस्माद्वाऽएतामाहुतिं जुहोति ॥७॥ स्रुवश्चात्र स्रुक्च प्रयुज्येते। वाग्वै स्रुक्प्राणः स्रुवो वाचा च वै प्राणेन चैतदग्रे देवाः कर्म्माण्यैच्छंस्तस्मात्स्रुवश्च स्रुक्च ॥८॥

---

१. सतीम् इति. घ. २ अपश्यन् इति. घ. ३. एतामिति. घ.
४. विहिता इति. घ. ५. रूपैः इति. घ. ६. यद्वेवैतामिति. घ.
७. मेतया इति घ.

य्यद्देव स्रुवश्च स्रुक्च। य्यो वै स प्रजापतिरासीदेष स स्रुवः प्राणो वै स्रुवः प्राणः प्रजापतिरथ य्या सा व्वागासीदेषा सा स्रुग्योषा वै व्वाग्योषा स्रुगथ य्यास्ताऽआप ऽआयन्वाचो लोकादेतास्ता य्यामेतामाहुतिं जुहोति ॥९॥ ताᳬं सन्ततां जुहोति। सन्तता हि ता ऽआपऽआयन्नथ य्यः स प्रजापतिस्त्रय्या व्विद्यया सहापः प्राविशदेष स य्यैरेतद्यजुर्भिर्जुहोति ॥१०॥ तद्यानि त्रीणि प्रथमानि। इमे ते लोकाऽअथ य्यच्चतुर्थं य्यजुस्त्रयी सा व्विद्या जगती सा भवति जगती सर्व्वाणि छन्दाᳬंसि सर्व्वाणि छन्दाᳬंसि त्रयी व्विद्याथ य्यानि चत्वार्य्युत्तमानि दिशस्तानीमे च वै लोका दिशश्च प्रजापतिरथैषा त्रयी व्विद्या[1] ॥११॥ स जुहोति। "य्युञ्जानः प्रथमम्मन"ऽइति प्रजापतिर्व्वै य्युञ्जानः स मन ऽएतस्मै कर्म्मणेऽयुङ्क्त तद्यन्मनऽएतस्मै कर्म्मणेऽयुङ्क्त तस्मात्प्रजापतिर्य्युञ्जानः ॥ १२ ॥ "तत्त्वाय[3] सविता धिय" ऽइति। मनो वै सविता प्राणा धियोऽ"ग्नेर्ज्योतिर्निचाय्ये"त्यग्नेर्ज्योतिर्दृष्ट्वेत्येत"त्पृथिव्याऽअध्याभरदि"ति पृथिव्यै ह्येनदध्याभरति ॥१३॥ "य्युक्तेन[6] मनसा व्वयमि"ति। मनऽएवैतदेतस्मै कर्म्मणे य्युङ्क्ते न ह्ययुक्तेन मनसा किञ्चन सम्प्रति शक्नोति कर्त्तुं "देवस्य[7] सवितुः सव" ऽइति देवेन सवित्रा प्रसूताऽइत्येतत् "स्वर्ग्याय[8] शक्त्ये"ति य्यथैतेन कर्म्मणा स्वर्गंल्लोकमियादेवमेतदाह शक्त्येति शक्त्या हि स्वर्गंल्लोकमेति॥१४॥"य्युक्त्वाय[9] सविता देवानि"ति। मनो वै सविता प्राणा देवाः "स्वर्यतो[10] धिया दिवमि"ति स्वर्गᳫं हैनांल्लोकं य्यतो धिये तस्मै कर्म्मणे य्युयुजे "बृहज्ज्योतिः[11] करिष्यत"ऽइत्यसौ वाऽआदित्यो बृहज्ज्योतिरेषऽउऽएषोऽग्निरेतस्वेते संस्कारिष्यन्तो भवन्ति "सविता[12] प्रसुवाति ता"निति सवितृप्रसूता ऽएतत्कर्म्म करवन्नित्येतत् ॥१५॥ "य्युञ्जते[13] मनऽउत य्युञ्जते धिय" ऽइति। मनश्चैवैतत्प्राणांश्चैतस्मै कर्म्मणे य्युङ्क्ते "व्विप्रा[14] व्विप्रस्ये"ति प्रजापतिर्व्वै व्विप्रो देवा व्विप्रा "बृहतो[15] व्विपश्चि-

---

१. विद्या इति. घ.	२-५. मा. सं. ११.१.	६-८. मा. सं. ११.२.
९-१२. मा. सं. ११. ३.	१३-१५. मा. सं. ११. ४.

त''ऽइति प्रजापतिर्व्वै बृहन्विपश्चित् "विहोत्रा दध''ऽइति यद्वाऽएष चीयते तदेष होत्रा विधत्ते चिते ह्येतस्मिन् होत्राऽअधिविधीयन्ते "व्वयुनाविदि''त्येष हीदं व्वयुनमविन्ददेक ऽइदित्येको ह्येषऽइदꣳ सर्व्वं व्वयुनमविन्दन् "मही देवस्य सवितुः परिष्टुति''रिति महती देवस्य सवितुः परिष्टुतिरित्येतत् ॥१६॥ "युजे वां ब्रह्म पूर्व्यन्नमोभिरि''ति। प्राणो वै ब्रह्म पूर्व्यमन्नन्नमस्तत्तदेषैवाहुतिरन्नमेतयैव तदाहुत्यै तेनान्नेन प्राणानेतस्मै कर्म्मणे युङ्क्ते "विश्लोक ऽएतु पथ्येव सूरे''रिति यथोभयेषु देवमनुष्येषु कीर्त्तिश्लोको यजमानस्य स्यादेवमेतदाह "शृण्वन्तु विश्वेऽअमृतस्य पुत्रा''ऽइति प्रजापतिर्व्वाऽअमृतस्तस्य विश्वे देवाः पुत्राऽ"आ ये धामानि दिव्यानि तस्थु''रितीमे वै लोका दिव्यानि धामानि तद्यऽएषु लोकेषु देवास्तानेतदाह ॥१७॥ "यस्य प्रयाणमन्वन्यऽइद्ययुरि''ति। प्रजापतिर्व्वाऽएतदग्रे कर्म्माकरोत्ततो देवाऽअकुर्व्वन् "देवा देवस्य महिमानमोजसे''ति यज्ञो वै महिमा देवा देवस्य यज्ञं व्वीर्यमोजसेत्येतत् "यः पार्थिवानि विममे सऽ एतश''ऽइति यद्वै किञ्चास्यां तत्पार्थिवं तदेष सर्व्वं विमिमीते रश्मिभिर्ह्येनदभ्यवतनोति "रजाꣳसि देवः सविता महित्वने''तीमे वै लोका रजाꣳस्यसावादित्यो देवः सविता तानेष महिम्ना विमिमीते ॥१८॥ "देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाये''ति। असौ वाऽआदित्यो देवः सविता यज्ञो भगस्तमेतदाह प्रसुव यज्ञं प्रसुव यज्ञपतिं यज्ञायेति "दिव्यो गन्धर्व्वः केतपूः केतं नः पुनात्वि''त्यसौ वाऽआदित्यो दिव्यो गन्धर्व्वोऽन्नं केतोऽन्नपूरन्नन्नः पुनात्वित्येत "द्वाचस्पतिर्व्वाचं नः स्वदत्वि''ति व्वाग्वाऽइदं कर्म्म प्राणो व्वाचस्पतिः प्राणो नऽइदं कर्म्म स्वदत्वित्येतत् ॥१९॥ "इमन्नो देव सवितर्यज्ञ

१-३ मा.सं. ११.४. ४-७. मा.सं. ११.५. ८. मा. सं. ११. ६.
९. प्रजापतिर्वा इति घ. १०. देवा इति. घ. ११-१३. मा. सं. ११. ६.
१४. मा.सं ११.७. १५. भगायेति ग घ. पुस्तकयोरुपलभ्यते।
१६, १७. मा. सं. ११.७ १८. मा. सं. ११. ८.

प्रणये''ति । असौ वाऽआदित्यो देवः सविता य्यदु वाऽएष य्यज्ञियं कर्म्म प्रणयति तदनार्त्तᳪ स्वस्त्युदृचमश्नुते ''देवांव्यमि''ति य्यो देवानवदित्ये''तत्साखिविदᳪ सत्राजितं धनजितᳪ स्वर्जितमि''ति य्यऽएतत्सर्व्वं व्विन्दादित्येतदृचे''त्यृचा स्तोमᳪ समर्द्धय गायत्रेण रथन्तरं बृहद्गायत्रवर्त्त''नीति सामानि ''स्वाहे''ति य्यजूᳪषि सैषा त्रयी व्विद्या प्रथमं जायते य्यथैवान्दोऽमुत्राजायतैवमथ य्यः सोऽग्निरसृज्यतैष स य्योऽत ऽऊर्ध्वमग्निश्चीयते ॥२०॥ तान्येतान्यष्टौ सावित्राणि । अष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानाग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतᳪ सिञ्चति तानि नव भवन्ति स्वाहाकारो नवमो नव दिशो दिशोऽग्निर्नव प्राणाः प्राणाऽअग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतᳪ सिञ्चति तानि दश भवन्त्याहुतिर्द्दशमी दशाक्षरा व्विराड्विराडग्निर्द्दश दिशो दिशोऽग्निर्द्दश प्राणाः प्राणाऽअग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥२१॥ एतस्यामाहुत्याᳪहुतायाम् अग्निर्द्देवेभ्यऽउदक्रामत्ते देवाऽअब्रुवन् पशुर्व्वाऽअग्निः पशुभिरिममन्विच्छाम स स्वाय रूपायाविर्भविष्यतीति तं पशुभिरन्वच्छैंत्स स्वाय रूपायाविरभवत्तस्मादुहैतत्पशुः स्वाय रूपायाविर्भवति गौर्व्वा गवेऽश्वो वाश्वाय पुरुषो वा पुरुषाय ॥ २२ ॥ तेऽब्रुवन् । यद्यह सर्व्वैरन्वेषिष्यामो यातयामा ऽअनुपजीवनीया भविष्यन्ति य्यद्युऽअसर्व्वैरसर्व्वमनुवेत्स्यामऽइति तऽएतमेकं पशुं द्वाभ्यां पशुभ्यां प्रैत्यपश्यन्रासभं गोश्चावेश्च तद्यदेतमेकं पशुं द्वाभ्यां पशुभ्यां प्रत्यपश्यंस्तस्मादेषऽएकः सन्द्विरेताः ॥२३॥ अनद्धा पुरुषं पुरुषात् । एष ह वाऽअनद्धा पुरुषो यो न देवानवति न पितॄन्न मनुष्यांस्तत्सर्व्वैरह पशुभिरन्वैच्छन्नो यातयामाऽअनुपजीवनीयाऽअभवन् ॥२४॥ त्रिभिरन्विच्छति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा

---

१. उद्दचमिति. घ.   २-६, ५. मा. सं ११.८.

४. स्वर्जितमिति ग,घ.   ७. प्रत्यपश्यन् इति. घ.

तावतैवैनमेतदन्विच्छति ते पञ्च सम्पदा भवन्ति पञ्चचितिकोऽग्निः पञ्चर्त्तवः सं[1]वत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्त-द्भवति ॥२५॥ ते मौञ्जीभिरभिधानीभिरभिहिता भवन्ति । अग्निर्द्दे-वेभ्यऽउदक्रामत्स मुञ्जं प्राविशत्तस्मात्स सुषिरस्तस्माद्धैवान्तरतो धूमरक्तऽइव सैषा य्योनिरग्नेर्यन्मुञ्जोऽग्निरिमे पशवो न वै य्योनिर्गर्भंᳫँ हिनस्त्यहिᳫँसायै य्योनेर्वै जायमानो जायते य्योनेर्ज्जायमानो जाया-ताऽइति ॥२६॥ त्रिवृतो भवन्ति । त्रिवृद्ध्यग्निरश्वाभिधानीकृता भवन्ति सर्व्वतो वाऽअश्वाभिधानी मुखं परिशेते सर्व्वतो य्योनिर्गर्भं परिशेते योनिरू[2]पमेतत्क्रियते ॥२७॥ ते प्राञ्चस्ति[3]ष्ठन्ति । अश्वः प्रथ-मोऽथ रासभोऽथाजऽएवᳫँ ह्येतेऽनुपूर्व्वं यद्वै तदश्रु[4] संक्षरितमासी-देष सोऽश्वोऽथ यत्तद्रसदिवैष रासभोऽथ यः स कपाले रसो लिप्तऽआसीदेष सोऽजोऽथ यत्तत्कपालमासीदेषा सा मृद्यामेतदाह-रिष्यन्तो भवन्त्येतेभ्यो वाऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्यऽएवैनमेत-ज्जनयति ॥२८॥ ते दक्षिणतस्तिष्ठन्ति । एतद्वै देवाऽअबिभयुर्य्यद्वै नो यज्ञं दक्षिणतो रक्षाᳫँसि नाष्ट्रा न हन्युरिति तऽएतं व्वज्रमपश्य-न्नमुमेवादित्य[5]मसौ वाऽआदित्यऽएषोऽश्वस्तऽएतेन व्वज्रेण दक्षि-णतो रक्षाᳫँसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञमतन्वत तथैवैत-द्यजमानऽएतेन व्वज्रेण दक्षिणतो रक्षाᳫँसि नाष्ट्राऽअप[6]हत्याभयेऽ-नाष्ट्रऽएतं यज्ञं तनुते ॥२९॥ दक्षिणतऽआहवनीयो भवति । उत्त-रतऽएषाभिरुपशेते व्वृषा वाऽआहवनीयो योषाभिर्द्दक्षिणतो वै व्वृषा य्योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि व्वृषा य्योषामुप[7]शेते ॥३०॥ सा व्वैणवी स्यात् । अग्निर्द्देवेभ्यऽउदक्रामत्स व्वेणुं प्राविशत्तस्मात्स सुषिरः सऽएतानि व्वर्माण्यभितोऽकुरुत पर्व्वाण्यननु प्रज्ञानाय य्यत्र य्यत्र निर्द्द[8]दाह तानि कल्माषाण्यभवन् ॥३१॥ सा कल्माषी स्यात् ।

---

१. संवत्सरः संवत्सर इति घ. २. रूपमिति. ग, घ. ३. तिष्ठन्ति । अश्व इति. ग, घ.
४. तदश्रु इति. घ. ५. दित्यमसौ इति. घ. ६. अपहत्याभये इति. घ.
७. उपशेते इति. घ. ८. निर्द्ददाहेति. ग, घ.

सा ह्याग्नेयी य्यदि कल्माषीं न व्विन्देदप्यकल्माषी स्यात्सुषिरा तु स्यात्सैवाग्नेयी सैषा य्योनिरग्नेर्य्यद्वेणुरग्निरियं मृन्न वै य्योनिर्गर्भᳬं हिनस्त्यहिᳬंसायै य्योनेर्व्वै जायमानो जायते य्योनेर्ज्जायमानो जायाताऽइति ॥३२॥ प्रादेशमात्री स्यात् । प्रादेशमात्रᳬं हीदमभि वाग्वदत्यरत्निमात्री त्वेव भवति बाहुर्व्वाऽअरत्निर्बाहुनो वै व्वीर्यं क्रियते व्वीर्य्यसम्मितैव तद्भवति ॥३३॥ अन्यतः क्ष्णुत्स्यात् । अन्यतरतो हीदं व्वाचः क्ष्णुतमुभयतः क्ष्णुत्त्वेव भवत्युभयतो हीदं व्वाचः क्ष्णुतं य्यदेनया दैवञ्च व्वदति मानुषञ्चाथो य्यत्सत्यञ्चानृतञ्च तस्मादुभयतः क्ष्णुत्[1] ॥३४॥ य्यद्वेवोभयतः क्ष्णुत्[2] । अतो वाऽअग्नेर्व्वीर्य्यं य्यतोऽस्यै क्ष्णुतमुभयतऽएवास्यामेतद्वीर्यं दधाति ॥३५॥ य्यद्वेवोभयतः क्ष्णुत् । एतद्वाऽएनन्देवाऽअनुविद्येभ्यो लोकेभ्योऽखनंस्तथैवैनमयमेतदनुविद्येभ्यो लोकेभ्यः खनति ॥३६॥ स य्यदिति खनति । तदेनमस्माल्लोकात्[3]खनत्यथ य्यदूर्ध्वोच्चरति तदमुष्माल्लो[4]कादथ यदन्तरेण सञ्चरति तदन्तरिक्षलोकात्सर्व्वेभ्यऽएवैनमेतदेभ्यो लोकेभ्यः खनति ॥३७॥ तामादत्ते "देवस्य[5] त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो[6] हस्ताभ्यामाददे गायत्रेण छन्दसाङ्गिरस्वदि"ति सवितृप्रसूतऽएवैनामेतदेताभिर्द्देवताभिरादत्ते गायत्रेण छन्दसाथोऽअस्याङ्गायत्रं छन्दो दधाति "पृथिव्याः[9] सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरे"ति पशवो वै पुरीषं पृथिव्याऽउपस्थादग्निं[10] पशव्यमाग्निवदाभरे"त्यैतं[7]त्त्रैष्टुभेन छन्दसाङ्गिरस्वदि"ति तदेनां त्रैष्टुभेन छन्दसादत्तेऽथोऽअस्यां त्रैष्टुभं छन्दो दधाति॥३८॥ "अ[11]भ्रिरसी[12]"ति । अभ्रि-

---

१, २. क्ष्णुत् इति घ.	३. अस्माँल्लोकादिति. ग, घ.

४. अमुष्माँल्लोकादिति ग. घ, च.	५. मा. सं. ११. ९.

६. पूष्णो इति. ख.	७. छन्दसा इति. घ.	८. छन्दो इति. घ.

९, १०. मा. सं.११.९.	११. मा. सं. ११. १०.	१२. रसीति इति. ख, घ.

ह्येषा तदेनां सत्येनादत्ते "नार्यसी"ति व्वज्रो वाऽअभ्रिर्य्योषा नारी न वै य्योषा कञ्चन हिनस्ति शमयत्येवैनामेतदहिंसायै "त्वया व्वयमग्निं शकेम खनितुं सधस्थऽए"तीदं वै सधस्थं त्वया व्वयमग्निं शकेम खनितुमस्मिंत्सधस्थऽइत्येत"ज्जागतेन छन्दसाङ्गिरस्वदि"ति तदेनाञ्जागतेन छन्दसादत्तेऽथो ऽअस्याञ्जागतञ्छन्दो दधाति ॥३९॥ त्रिभिरादत्ते। त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदादत्ते त्रिभिरादायाथैनां चतुर्थेनाभिमन्त्रयतऽएतद्वाऽएनां देवास्त्रिभिरादायाथास्यां चतुर्थेन व्वीर्यमदधुस्तथैवैनामयमेतत्त्रिभिरादायाथास्यां चतुर्थेन व्वीर्यं दधाति ॥४०॥ "हस्तऽआधाय सविते"ति। हस्ते ह्यस्याहिता भवति "बिभ्रदभ्रिमि"ति बिभर्त्ति ह्येनां "हिरण्मयीमि"ति हिरण्मयी ह्येषा य्या छन्दोमय्य"ग्नेर्ज्योतिर्निचाय्ये"त्यग्नेर्ज्योतिर्दृष्ट्वेत्येतत्"पृथिव्याऽअध्याभरदि"ति पृथिव्यै ह्येनदध्याभरत्या"नुष्टुभेन छन्दसाङ्गिरस्वदि"ति तदेनामानुष्टुभेन छन्दसादत्तेऽथोऽअस्यामानुष्टुभञ्छन्दो दधाति तान्येतान्येव छन्दांस्येषाभ्रिरारम्भायैवेयं व्वैणवी क्रियते ॥४१॥ तां हैके हिरण्मयीं कुर्व्वन्ति। हिरण्ययीति वाऽअभ्युक्तेति न तथा कुर्य्याद्यद्वा ऽएषा छन्दांसि तेनैषा हिरण्यममृतं हिरण्यममृतानि छन्दांसि ॥४२॥ ताञ्चतुर्भिरादत्ते। चतुरक्षरा वै सर्व्वा व्वाग्वागित्येकमक्षरमक्षरमिति त्र्यक्षरं तद्यत्तद्वागित्येकमक्षरं य्यैवैषानुष्टुबुत्तमा सा साथ य्यदक्षरमिति त्र्यक्षरमेतानि तानि पूर्व्वाणि य्यजूंषि सर्व्वयैवैतद्वाचाग्निं खनति सर्व्वथा व्वाचा सम्भरति तस्माच्चतुर्भिः ॥४३॥ य्यद्वेव चतुर्भिः। चतस्रो वै दिशश्चतसृषु तद्दिक्षु व्वाचं दधाति तस्माच्चतसृषु दिक्षु व्वाग्वदति छन्दोभिश्च य्यजुर्भिश्चादत्ते तदष्टौ चतस्रो दिशश्चतस्रोऽवान्तरदिशः सर्व्वासु तद्दिक्षु

---

१. तदेना इति. घ. २-४. मा.सं.११.१०.

५. एतद्वा एनां देवास्त्रिभिरिति, घ. ६-११. मा. सं. ११. ११.

व्वाचं दधाति [1]तस्मात्सर्व्वासु दिक्षु व्वाग्वदति ॥४४॥ Cf. का. श. ८. २. १; तै. सं. ५. १. १; मै. सं. ३. १. १२; कपि. सं. २९. ७. ८; कठ. सं. १९. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. ३. १.)

## ६. २. ४.

### (अश्वाद्यभिमन्त्रणादि)

हस्त ऽएषा[2]ग्निर्भवत्यथ पशूनभिमन्त्रयते । एतद्वाऽएषु देवाऽ-अन्वेषिष्यन्तः पुरस्ताद्वीर्यमदधुस्तथैवैष्वयमेतदन्वेषिष्यन् पुरस्ताद्वीर्यं दधाति ॥१॥ सोऽश्वम[3]भिमन्त्रयते। "प्र[4]तूर्त्तं व्वाजिन्नाद्रवे"ति यद्वै क्षिप्रं तत्तूर्त्तमथ य्यत्क्षिप्रात्क्षेपीयस्तत्प्रतूर्त्तं "[5]व्वरिष्ठामनु संव्वतमि"तीयं वै व्वरिष्ठा संव्वदिमामनु संवतमित्येत"द्दिवि ते [6]जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि य्योनिरिदि"ति तदेनमेता देवताः करोत्य-ग्निं व्वायुमादित्यं तदश्वे व्वीर्यं दधा[7]ति ॥२॥ अथ रासभम् । "[8]युं-ञ्जाथाᳬं रासभं य्युवमि"त्यध्वर्य्युं चैतद्यजमानं चाहास्मिन्यामे व्वृ-षण्वसूऽइत्यस्मिन् कर्मणि [9]व्वृषण्वसूऽइत्येतदग्निं भरन्तमस्मयुमित्य-ग्निं भरन्तमस्मत्प्रेषितमित्येतत्तद्रासभे व्वीर्यं दधाति ॥३॥ अथाजम् । "[10]योगे योगे तवस्तरं व्वाजे [11]व्वाजे हवामह" ऽइत्यन्नं वै व्वाजः कर्म्मणि कर्म्मणि तवस्तरमन्नेऽन्ने हवामहऽइत्येत"[12]त्सखायऽइन्द्रमूतय"ऽइतीन्द्रियवन्तमूतय ऽइत्येतत्तदजे व्वीर्यं [13]दधाति ॥४॥ त्रिभिरभिम-न्त्रयते । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैष्वे[14]तद्वीर्यं

---

१. तस्मादित्यारभ्य वाक्यसमाप्तिपर्यन्तं स्वरो नास्ति घ. पुस्तके
२. एषा इति ग, घ. ३. अश्वमभि इति. घ. ४-६. मा. सं. ११. १२.
७. दधाति । अथ इति. ख, ग, घ, ङ. ८. मा. सं. ११. १३.
९. वृषण्वसू इति. ख,ग,घ. १०,१२ मा.सं. ११.१४. ११. वाजे इति. घ.
१३ नधाति इति. च. १४. तद्वीर्यमिति ग, घ, तद्वीर्य इति, ख.

दधाति ॥५॥ अथैनान् प्राचऽउत्क्रमयति । तदेनमेतैः पशुभिरन्विच्छति नोपस्पृशत्यग्निरेष यत्पशवो नेन्मायमग्निर्हिनसदिति ॥६॥ सोऽश्वमुत्क्रमयति । "प्रेतूर्ध्वन्नेह्यवक्रामन्नशस्तीरि"ति पाप्मा वाऽअशस्तिस्त्वरमाणऽएह्यवक्रामन् पाप्मानमित्येत "द्रुद्रस्य गाणपत्यं मयोभूरेही"ति रौद्रा वै पशवो या ते देवता तस्यै गाणपत्यं मयोभूरेहीत्येतत्तदेनमश्वेनान्विच्छति ॥७॥ अथ रासभम् । "उर्व्वन्तरिक्षं व्वीहि स्वस्तिगव्यूतिरभयानि कृण्वन्नि"ति यथैव यजुस्तथा बन्धुः "पूष्णा सयुजा सहे"तीयं वै पूषानया सयुजा सहेत्येतत्तदेनᳪ रासभेनान्विच्छति ॥८॥ अथाजम् । "पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभरे"ति पृथिव्या उपस्थादग्निं पशव्यमग्निवदाभरेत्येतत्तदेनमजेनान्विच्छति ॥९॥ त्रिभिरन्विच्छति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्विच्छति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् षडृतवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१०॥ Cf. का. श. ८. ३. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ३. २.)

द्वितीयः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या १०४ )

---

१. नधाति इति च. २, ३. मा. सं. ११. १५. ४. तदेनम इति. घ.
५. अन्विच्छति इति. च. एवमग्रेऽपि ६, ७. मा. सं. ११. १५.
८. मा. सं. ११. १६. ९. पृथिव्या इति. घ.
१०. यजुः १०४ इति ख पुस्तकपाठः ।

## अथ तृतीयः प्रपाठकः ॥

### ६. ३. १.

### ( मृदाहरणार्थगमनादि )

प्रदीप्ताऽएतेऽग्नयो भवन्ति[1] । अथ मृदमुच्छ यन्तीमे वै लोकाऽएतेऽग्नयस्ते यदा प्रदीप्ता ऽअथैतऽइमे लोकाः पुरो वाऽएतदेभ्यो लोकेभ्योऽग्रे देवाः कर्मान्वैच्छंस्तद्यदेतानग्नीनतीत्य मृदमाहरति तदेनं पुरैभ्यो लोकेभ्योऽन्विच्छति ॥१॥ प्राञ्चो यन्ति । प्राची हि दिगग्नेः स्वायामेवैनमेतद्दिश्[2]यन्विच्छति स्वायां दिशि विन्दति ॥२॥ ते प्रयन्ति । "अग्निं[3] पुरीष्यमङ्गिरस्वदच्छेम"ऽइत्यग्निं पशव्यमग्निवदच्छेमऽइत्येतत्[4] ॥३॥ अथानड्वापुरुषमीक्षते । "अग्निं[5] पुरीष्यमङ्गिरस्वद्भरिष्याम"ऽइत्यग्निं पशव्यमग्निवद्भरिष्यामऽइत्येतत्तदेनमनड्वापुरुषेणान्विच्छति ॥४॥ अथ वल्मीकवपा सुषिरा व्यध्वे निहिता भवति । तामन्वीक्षतऽइयं वै वल्मीकवपेयमु वाऽइमे लोकाऽएतद्वाऽएनं देवाऽएषु लोकेषु विग्राहमैच्छंस्तथैवैनमयमेतदेषु लोकेषु विग्राहमिच्छति[6] ॥५॥ "अन्वग्निरुषसामग्रमख्यदि"ति । तदेनमुखःस्वैच्छन्न"न्वहानि प्रथमो जातवेदा"ऽइति तदेनमहः स्वैच्छन्न"नु सूर्यस्य पुरुत्रा च रश्मीनि"ति तदेनꣳ सूर्यस्य रश्मिष्वैच्छन्न"नु द्यावापृथिवीऽआततन्थे"ति तदेनं द्यावापृथिव्योरैच्छंस्तमविन्दंस्तथैवैनमयमेतद्विन्दति तं यदा परापश्यत्यथ तामवास्यत्यागच्छन्ति मृदम् ॥६॥ अथाश्वमभिमन्त्रयते । एतद्वै देवाऽअब्रुवन् पाप्मानमस्यापहनामेति श्रमो[11] वै पाप्मा श्रममस्य पाप्मानमपहनामेति तस्य श्रमं पाप्मानमपाघ्नंस्तथैवास्यायमेतच्छ्रमं पाप्मानमपहन्ति ॥७॥ "आ[12]गत्य वाज्यध्वानमि"ति । आगतो ह्यस्याध्वा भवति "सर्वा[13]

१. भवन्ति इति घ.   २. दिशि इति. घ.   ३, ५. मा. सं. ११. १६.
४. एतत् इति. ग, घ.   ६. इच्छति इति. घ.   ७, १०. मा. सं. ११. १०.
११. श्रम इति, ग, घ,   १२, १३. मा. सं. ११. १८.

मृधो व्विधूनुत''ऽइति पाप्मा वै मृधः सर्व्वान् पाप्मनो व्विधूनुतऽइत्येतत्तस्माडु हैतदश्वः स्यंत्वा[1] व्विधूनुतेऽ''ग्निᳬ᳴ सधस्थे[2] महति चक्षुषा निचिकीषत''ऽइतीदं वै महत्सधस्थमग्निमस्मिन्महति सधस्थे चक्षुषा दिदृक्षतऽइत्येतत् ॥८॥ अथैनमाक्रमयति। एतद्वाऽऽएषऽएतं देवेभ्योऽनुविद्य प्राब्रवीद्यथायमिहेवेत्येवम् ॥९॥ यद्वेवाक्रमयति। एतद्वै देवाऽअबिभयुर्यद्वै न ऽइममिह रक्षाᳬ᳴सि नाष्ट्रा न हन्युरिति तस्माऽएतं व्वज्रमुपरिष्टादभिगोप्तारमकुर्व्वन्नमुमेवादित्यमसौ वाऽआदित्यऽएषोऽश्वस्तथैवास्माऽअयमेतं व्वज्रमुपरिष्टादभिगोप्तारं करोति ॥१०॥ ''आक्रम्य[3] व्वाजिन्। पृथिवीमग्निमिच्छ रुचा त्वमि''ति चक्षुर्व्वै रुगाक्रम्य त्वं व्वाजिन् पृथिवीमग्निमिच्छ चक्षुषेत्येतद्''भूम्या[4] वृत्वाय नो ब्रूहि यतः खनेम तं व्वयमि''ति भूमेस्तत्स्यात्शयित्वाय नो ब्रूहि यतऽएनं खनेमेत्येतत्[5] ॥११॥ अथैनमुन्मृशति। एतद्वाऽएनं देवाः प्रोचिवाᳬ᳴सं व्वीर्येण समार्द्धयंस्तथैवैनमयमेतत्प्रोचिवाᳬ᳴सं व्वीर्येण समर्द्धयति ''द्यौस्ते[6] पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षᳬ᳴समुद्रो योनिरि''तीत्थमसीत्थमसीत्येवैतदाह ''व्विख्याय[7] चक्षुषा त्वमभितिष्ठ पृतन्यत''ऽइति व्विख्याय चक्षुषा त्वमभितिष्ठ सर्व्वान्पाप्मनऽइत्येतन्नोपस्पृशति व्वज्रो वा[8]ऽअश्वो नेन्मायं व्वज्रो हिनसदिति[9] ॥१२॥ अथैनमुत्क्रमयति। एतद्वै देवाऽअब्रुवन् किमिममभ्युत्क्रमिष्यामऽइति महत्सौभगमिति तं महत्सौभगमभ्युदक्रमयंस्तथैवैनमयमेतन्महत्सौभगमभ्युत्क्रमय''त्युत्क्राम[10] महते सौभगाये''त्युत्क्राम महत्ते सौभगमित्येतत्तस्माडु हैतदश्वः पशूनां भगितमोऽ''स्मादास्थाना[11]दि''ति यत्रैतत्तिष्ठसीत्येतद्''द्रविणोदा[12]''ऽइति द्रविणᳬ᳴ ह्येभ्यो ददाति ''व्वाजिन्नि[13]''ति व्वाजी ह्येष ''व्वयᳬ᳴[14] स्याम सुमतौ पृथिव्याऽअग्नि

---

१. स्यन्त्वा इति. ग, घ. २. मा. सं. ११. १८. ३, ४. मा. सं. ११. १९.
५. एतत्. घ. ६, ७. मा. सं. ११. २०. ८. वा इति ग, घ.
९. दिति. इति. ख. घ. १०, १४. मा. सं. ११. २१.

खनन्तऽउपस्थेऽअस्या''ऽइति व्वयमस्यै पृथिव्यै सुमतौ स्यामाग्निमस्याऽउपस्थे खनन्तऽइत्येतत् ॥१३॥ अथैनमुत्क्रान्तमभिमन्त्रयते । एतद्धाऽएनं देवाः प्रोचिवाꣳसं य्यथा ददिवाꣳसंवन्देतैवमुपास्तुवन्नुपामह्वयंस्तथैवैनमयमेतदुपस्तौत्युपमह्वयत्यु ''दक्रमी'' दित्युद्ध्यक्रमीद्''द्रविणोदा''ऽइति द्रविणꣳ ह्येभ्यो ददाति ''व्वाज्यर्व्वे''ति व्वाजी च ह्येषोऽर्व्वाचा''कः सुलोकꣳ सुकृतं पृथिव्या''मित्यकरः सुलोकꣳ सुकृतं पृथिव्यामित्येत''त्ततः खनेम सुप्रतीकमग्निमि''ति ततऽएनं खनेमेत्येतत्सुप्रतीकमिति सर्व्वतो वाऽअग्निः सुप्रतीकः''स्वो रुहाणाऽअधि नाकमुत्तममि''ति स्वर्गो वै लोको नाकः स्वर्गं लोकꣳ रोहन्तोऽधि नाकमुत्तममित्येतत्तं दक्षिणतोऽपसंक्रमयति यत्रेतरौ पशू भवतस्ते दक्षिणतः प्राञ्चस्तिष्ठन्ति स य्यऽएवामुत्र दक्षिणत स्थानस्य बन्धुः सोऽत्र ॥१४॥ अथोपविश्य मृदमभिजुहोति । एतद्वै देवाऽअब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमानाऽएतामाहुतिमपश्यंस्तामजुहवुस्ताꣳ हुत्वेमांल्लोकानुखामपश्यन् ॥१५॥ तेऽब्रुवन् । चेतयध्वमेवेति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमानाऽएतां द्वितीयामाहुतिमपश्यंस्तामजुहवुस्ताꣳ हुत्वा व्विश्वज्योतिषोऽपश्यन्नेता देवताऽअग्निं व्वायुमादित्यमेता ह्येव देवता व्विश्वं ज्योतिस्तथैवैतद्यजमानऽएतेऽआहुती हुत्वेमांश्च लोकानुखां पश्यत्येताश्च देवता व्विश्वज्योतिषो व्यतिषक्ताभ्यां जुहोतीमांश्च तल्लोकानेताश्च देवता व्यतिषजति ॥१६॥ य्यद्वेवैतेऽआहुती जुहोति । मृदं च तदपश्च प्रीणाति तेऽइष्ट्वा प्रीत्वाथैने सम्भरति व्यतिषक्ताभ्यां जुहोति मृदश्च तदपश्च व्यतिषजति ॥१७॥ आज्येन जुहोति । व्वज्रो वाऽआज्यं व्वज्रमेवा-

---

१–५. मा. सं. ११. २२. ६. संक्रमयतीति. घ. ७. प्राञ्च इति. घ.

८. सोऽत्र इति. ख, सोत्र इति. ग, घ. ९. अपश्यन् इति. ग. ग, घ.

१०. ज्योतिरिति. घ. ११. मृदं इति. ग. १२. व्यतिषजति इति. च.

स्माऽएतदभिगोप्तारङ्करोत्यथो रेतो वाऽआज्यंॅरेतंऽएवैतत्सिञ्चति स्रुवेण व्वृषा वै स्रुवो व्वृषो वै रेतः सिञ्चति स्वाहाकारेण व्वृषा वै स्वाहाकारो व्वृषो वै रेतः सिञ्चति ॥१८॥ "आ त्वा जिघर्म्मि मनसा घृतेने"ति । आ त्वा जुहोमि मनसा च घृतेन चेत्येत"त्प्रतिक्षियन्तं भुवनानि व्विश्वे"ति प्रत्यङ्ह्येष सर्व्वाणि भुवनानि क्षियति "पृथुं तिरश्चा व्वयसा बृहन्तमि"ति पृथुर्व्वाऽएष तिर्यङ्वयसो बृहन्धूमेन "व्यचिष्ठमन्नैरभसं दृशान"मित्यवकाशवन्तमन्नैरन्नादं दीप्यमानमित्येतत् ॥१९॥ "आ व्विश्वतः प्रत्यञ्चं जिघर्म्मी"ति । आ सर्व्वतः प्रत्यञ्चं जुहोमीत्येतद"रक्षसा मनसा तज्जुषेते"त्यहीडमानेन मनसा तज्जोषयेतेत्येत"न्मर्यश्रीः स्पृहयद्वर्णोऽअग्नि"रिति मर्यश्रीर्ह्येष स्पृहयद्वर्णोऽग्निर्नाभिमृशे "तन्वा जर्भुराण"ऽइति न ह्येषोऽभिमृशे तन्वा दीप्यमानो भवति ॥२०॥ द्वाभ्यामभिजुहोति । द्विपाद्यजमानो य्यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतंॅ सिञ्चत्याग्नेयीभ्यामग्निमेवैतद्रेतो भूतंॅसिञ्चति ते य्यदाग्नेय्यौ तेनाग्निरथ य्यत्त्रिष्टुभौ तेनेन्द्रऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतंॅ सिञ्चतीन्द्राग्नी वै सर्व्वे देवाः सर्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतंॅ सिञ्चति ॥२१ अश्वस्य पदे जुहोति । अग्निरेष यदश्वस्तथो हास्यैतेऽअग्निमत्येवाहुती हुते भवतः ॥२२॥ अथैनं परिलिखति । मात्रामेवास्माऽएतत्करोति य्यथैतावानसीत्येवम् ॥२३॥ (शतम् ३६००) य्यद्वेवैनं परिलिखति । एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह रक्षांॅसि नाष्ट्रा न हन्युरिति तस्माऽएतां

---

१. रेत इति. घ. २. सिञ्चति इति. च. ३. मा. सं. ११. २३.
४. घृतेनेति इति. च. ५-६. मा. सं. ११. २३. ७. बृहन्तमिति. घ.
८. इत्येतत् इति. घ. ९. मा. सं. ११. २४. १०. जिघर्मीति इति. घ.
११-१४. मा.सं. ११.२४. १३. यद्वर्णो इति. घ. १५. मभि इति. घ.
१६. अग्निमेवैतद्रेतो इति. घ. १७. देवा इति. च. १८. द्रेतो इति. घ.

पुरं पर्यश्रयंस्तथैवास्मा ऽअयमेतां पुरं परिश्रयत्यभ्रा व्वज्रो वा ऽअ- भ्रिर्व्वज्रमेवास्मा ऽएतदभिगोप्तारं करोति सर्व्वतः परिलिखति सर्व्वत- ऽएवास्मा ऽएतं व्वज्रमभिगोप्तारं करोति त्रिष्कृत्वः परिलिखति त्रिवृत- मेवास्मा ऽएतं व्वज्रमभिगोप्तारं करोति ॥२४॥"परि व्वाजपतिः कविः"। "परि त्वाग्ने पुरं व्वयं" "त्वमग्ने द्युभि"रित्यग्निमेवास्मा ऽएतदुपस्तुत्य व्वर्म करोति परिवतीभिः परीव हि पुर ऽआग्नेयीभिरग्निपुरामेवास्मा- ऽएतत्करोति सा हैषाग्निपुरा दीप्यमाना तिष्ठति तिसृभिस्त्रिपुरमेवा- स्मा ऽएतत्करोति तस्माद्ध हैतत्पुरां परमꣳ रूपं य्यत्त्रिपुरꣳ स वै व्वर्षीयसा व्वर्षीयसा छन्दसा परां परां लेखां व्वरीयसीं करोति तस्मात्पुरां परा परा व्वरीयसी लेखा भवन्ति लेखा हि पुरः ॥२५॥ अथैनमस्यां खनति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽइमामेवात्मानमकुर्व्वन् गुप्त्या ऽआत्मा- त्मानं गोप्स्यतीति सा समम्बिला स्यात्तदस्येयमात्मा भवति य्यद्वेव समम्बिला य्योनिर्व्वा ऽइयꣳ रेत ऽइदं य्यद्वै रेतसो य्योनिमतिरि- च्यते ऽमुया तद्भवत्यथ य्यन्न्यूनं व्यृद्धं तदेतद्वै रेतसः समृद्धं य्य- त्समम्बिलं चतुःस्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्व्वाभ्य ऽएवैनमेताद्दिग्भ्यः खनति ॥२६॥ Cf. का. श. ८. ३. २; मै. सं. ३. १. ३; तै. सं. ५. १. २; कठ. १९. २; कपि. सं. २९. ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. ३. ३.)

( इति तृतीयोऽध्यायः )

---

१. त्रिवृतमिति. घ. २. गोप्तारं इति. घ. ३. मा. सं. ११. २५.
४. कविः इति. ग, घ. ५. मा. सं. ११. २६. ६. मा. सं. ११. २७.
७. हैषा. इति. घ. ८. पुर इति ग, च.

## ६. ३. २.

अथैनमतः खनत्येव[1] । एतद्वाऽएनं देवाऽअनुविद्याखनं स्तथैवैन-मयमेतदनुविद्य खनति "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनामी"ति सवितृप्रसूत ऽएवैनमेतदेताभिर्देवताभिः पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवत्खनति ॥१॥ "ज्योतिष्मन्तं त्वाग्ने सुप्रतीक"मिति । ज्योतिष्मान्वाऽअग्निः सुप्रतीकोऽ"जस्रेण भानुना दीद्यत"मित्यजस्रेणार्चिषा दीप्यमानमित्येत"च्छिवं प्रजाभ्योऽहिंᳪसन्तं पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वत्खनाम" ऽइति शिवं प्रजाभ्योऽहिंᳪसन्तं पृथिव्या ऽउपस्थादग्निं पशव्यमग्निवत्खनाम ऽइत्येतत् ॥२॥ द्वाभ्यां खनति । द्विपाद्यजमानो य्यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवै-नमेतत्खनत्यथो द्वयᳪह्येवैतद्रूपं मृच्चापश्च ॥३॥ स वै खनामि खनाम ऽइति खनति । खनामीति वाऽएतं प्रजापतिरखनत्ख-नामऽइति देवास्तस्मात्खनामि खनामऽइति[4] ॥४॥ स वाऽअभ्र्या खनन् । व्वाचा खनामि खनामऽइत्याह व्वाग्वाऽअभ्रिरारम्भायैवेयं व्वैणवी क्रियते व्वाचा वाऽएतमभ्र्या देवाऽअखनंस्तथैवैनमयमेत-द्वाचैवाभ्र्या खनति ॥५॥ अथैनं कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञऽएवैनमेतत्सम्भरति लोमतश्छन्दाᳫंसि वै लोमानि छन्दस्स्वेवैनमेतत्सम्भरति तत्तूष्णीमुपस्तृणाति यज्ञो वै कृष्णाजिनं प्रजापतिर्व्वै यज्ञोऽनिरुक्तो वै प्रजापतिरुत्तरतस्तस्योपरि बन्धुः प्राचीन-ग्रीवे तद्धि देवत्रा ॥६॥ अथैनं पुष्करपर्णे सम्भरति । य्योनिर्व्वै पुष्क-रपर्णं य्योनौ तद्रेतः सिञ्चति यद्वै य्योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति तन्मन्त्रेणोपस्तृणाति व्वाग्वै मन्त्रो व्वाक् पुष्करपर्णम् ॥७॥

---

१. खनत्येव इति. च. २, ३, ५, ६. मा. सं. ११. २८.

४. वाऽअयमग्निरिति 'ग' पुस्तक एवोपलभ्यते नेतरासु मातृकासु ।

७. इति. इति. च. ८. खनति इति. च. ९. देवत्रा इति. च.

"अपां पृष्ठमसि य्योनिरग्ने"रिति । अपाᳫं ह्येतत्पृष्ठं य्योनिर्ह्येतदग्नेः "समुद्रमभितः पिन्वमान"मिति समुद्रो ह्येतदभितः पिन्वते "व्वर्द्धमानो महाँ२॥ऽआ च पुष्कर"ऽइति व्वर्द्धमानो महीयस्व पुष्करऽइत्येत"द्दिवो मात्रया व्वरिम्णा प्रथस्वे"त्यनुविमाष्र्व्यसौ वाऽआदित्यऽएषोऽग्निर्नो हैतमन्यो दिवो व्वरिमा य्यन्तुमर्हति द्यौर्भूत्वैनं यच्छेत्येवैतदाह ॥८॥ तदुत्तरं कृष्णाजिनादुपस्तृणाति । यज्ञो वै कृष्णाजिनमियं वै कृष्णाजिनमियमु वै य्यज्ञोऽस्याᳫंह्वि यज्ञस्तायते द्यौष्पुष्करपर्णमापो वै द्यौरापः पुष्करपर्णमुत्तरो वाऽअसावस्यै ॥९॥ अथैनेऽअभिमृशति । संज्ञामेवाभ्यामेतत्करोति "शर्म्म च स्थो व्वर्म्म च स्थ"ऽइति शर्म्म च ह्यस्यैते व्वर्म चा"च्छिद्रे बहुलेऽउभे"ऽइत्यच्छिद्रे ह्येते बहुलेऽउभे "व्यचस्वती संव्वसाथा"मित्यवकाशवती संव्वसाथामित्येत"द्भृतमग्निं पुरीष्य"मिति बिभृतमग्निं पशव्यमित्येतत् ॥१०॥ "संव्वसाथाᳪं स्वर्व्विदा । समीचीऽउरसात्मने"ति संव्वसाथामेनᳫं स्वर्व्विदा समीचीऽउरसा चात्मना चेत्येतद"ग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमि"दित्यसौ वाऽआदित्यऽएषोऽग्निः सऽएष ज्योतिष्मानजस्रस्तमेतेऽअन्तरा बिभृतस्तस्मादाह ज्योतिष्मन्तमजस्रमिदिति ॥११॥ द्वाभ्यामभिमृशति । द्विपाद्यजमानो य्यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवाभ्यामेतत्संज्ञाङ्करोत्यथो द्वयᳫं ह्येवैतद्रूपं कृष्णाजिनञ्च पुष्करपर्णञ्च ॥१२॥ Cf. का. श. ८. ४. १; तै. सं. ५. १. २, ३; मै. सं. ३. १. ४; कठ. सं. १९. ३, ४; कपि. ३. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ.४.१.)

---

१-३. मा.सं. ११.२९.　४. महाँ ३॥ऽआ च इति.ख.　५. मा सं. ११.२९.
६ द्यौः पुष्कर इति.ग,घ.　७-१०. मा. सं. ११.३०.　११. एतत् इति. ग, च
१२,१३. मा.सं. ११.३१.　१४. तमेते इति. घ.　१५. कृष्णाजिनं इति.ग.

## ६. ३. ३.

## ( उखानिर्माणम् )

अथ मृत्पिण्डमभिमृशति । "पुरीष्योऽसी"ति पशव्योऽसीत्येत- "द्विश्वभरा"ऽइत्येष हीदꣳ सर्व्वं बिभर्त्य"थर्वा त्वा प्रथमो निरमन्थद- ग्न"ऽइति प्राणो वाऽअथर्व्वा प्राणो वाऽएतमग्रे निरमन्थत्तद्योऽसावग्रे- ऽग्निरसृज्यत सोऽसीति तदाह तमेवैनमेतत्करोति ॥१॥ अथैनं परि- गृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरत"स्त्वामग्ने पुष्करादध्यथर्व्वा निरमन्थते"त्यापो वै पुष्करं प्राणोऽथर्व्वा प्राणो वा- ऽएतमग्रेऽद्भ्यो निरमन्थ"न्मूर्ध्नो व्विश्वस्य व्वाघत"ऽइत्यस्य सर्व्वस्य मूर्ध्नऽइत्येतत् ॥२॥ "तमु त्वा दध्यङ्ङृषिः । पुत्रऽईधेऽअथर्व्वण"- ऽइति व्वाग्वै दध्यङ्ङाथर्व्वणः सऽएनं ततऽऐन्ध "व्वृत्रहणं पुरन्द- र"मिति पाप्मा वै व्वृत्रः पाप्महनं पुरन्दरमित्येतत् ॥३॥ "तमु त्वा पाथ्यो व्वृषा । समीधे दस्युहन्तम"मिति मनो वै पाथ्यो व्वृषा स ऽएनन्ततऽऐन्ध "धनञ्जयꣳ रणे रण"ऽइति य्यथैव य्यजुस्तथा बन्धुः ॥४॥ गायत्रीभिः । प्राणो गायत्री प्राणमेवास्मिन्नेतद्दधाति तिसृभि- स्त्रयो वै प्राणाः प्राणऽउदानो व्यानस्तानेवास्मिन्नेतद्दधाति तासा- न्नव पदानि नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्द- धाति ॥५॥ अथैते त्रिष्टुभाऽउत्तरे भवतः । आत्मा वै त्रिष्टुबात्मानमेवा- स्यैताभ्याꣳ सँस्करोति "सीद होतः स्वऽउ लोके चिकित्वा"नित्यग्निर्व्वै होता तस्यैष स्वो लोको य्यत्कृष्णाजिनञ्चिकित्वानिति व्विद्वानित्येत"त्सा- दया यज्ञꣳ सुकृतस्य य्योना"विति कृष्णाजिनं वै सुकृतस्य य्योनि"र्दे- वावीर्देवान्हविषा यजासी"ति देवः सन्देवानवन्हविषा यजासीत्येत"द्ग्ने बृहद्यजमाने व्वयोधा"ऽइति य्यजमानायाशिषमाशास्ते ॥६॥ "नि होता

---

१-५. मा. सं. ११. ३२. ६, ७. मा. सं. ११. ३३.
८, ९. मा. सं. ११. ३४. १०. त्रिष्टुबात्मानमेवेति ग, घ.
११-१४. मा. सं. ११ ३५. १५. यजमानायेति. घ. १६. मा.सं.११.३६.

होतृषदने विदान" इति । अग्निर्वै होता कृष्णाजिनं होतृषदनं विदान इति विद्वानित्येतत् "त्वेषो दीदिवाँ २ असदत्सुदक्ष" इति त्वेषो दीप्यमानोऽसदत्सुदक्ष इत्येतत् "अदब्धव्रतप्रमतिर्वसिष्ठ" इत्यदब्धव्रतप्रमतिर्ह्येष वसिष्ठः "सहस्रंभरः शुचिजिह्वोऽअग्नि" रिति सर्वं वै सहस्रं सर्वम्भरः शुचिजिह्वोऽग्निरित्येतद्द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्यां तस्योक्तो बन्धुः ॥७॥ अथैषा बृहत्युत्तमा भवति । बृहती वाऽएष सञ्चितोऽभिसम्पद्यते यादृग्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतामत्र बृहतीङ्करोति तस्मादेष सञ्चितो बृहतीमभिसम्पद्यते ॥८॥ "सं सीदस्व महाँ २ असी" ति । इदमेवैतद्रेतःसिक्तं संसादयति तस्माद्योनौ रेतः सिक्तं संसीदति "शोचस्व देववीतम" इति दीप्यस्व देववीतम इत्येतत् "वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शत" मिति यदा वाऽएष समिध्यतेऽथैष धूममरुषं विसृजते दर्शतमिति ददृशऽइव ह्येषः ॥९॥ ताः षट् सम्पद्यन्ते । षडृतवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति यद्वेव संवत्सरमभिसम्पद्यते तद्बृहतीमभिसम्पद्यते बृहती हि संवत्सरो द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्यास्तत्षट्त्रिंशत्षट्त्रिंशदक्षरा बृहती तं दक्षिणतऽउदञ्चमाहरति दक्षिणतो वा ऽउदग्योनौ रेतः सिच्यतऽएषोऽअस्यैतर्हि योनिरविच्छेदमाहरति रेतसोऽविच्छेदाय ॥१०॥ Cf. का. श. ८. ४. २; तै. सं. ५. १. ४; मै. सं. ३. १. ५; कठ. १९. ४, ५; कपि. सं. ३०. २, ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. ४. २.)

---

१. मा. सं. ११. ३६.
२. दीदिवाँ ३ऽअसददिति. ख.
३, ४. मा. सं. ११. ३६.
५-७. मा. सं. ११. ३७.
८. खट्त्रिंशदिति. क.
९. वा इति. च.

## ६. ३. ४.

अथ तत्रापऽउपनिनयति । यद्वाऽअस्यै क्षतं यद्विलिष्टमद्भि-र्व्वै तत्सन्धीयतेऽद्भिरेवास्याऽएतत्क्षतं व्विलिष्टꣳ सन्तनोति सन्द-धाति ॥१॥ "अपो देवीरुपसृज । मधुमतीरयक्ष्माय प्रजाभ्य"ऽइति रसो वै मधु रसवतीरयक्ष्मत्वाय प्रजाभ्य ऽइत्येत"त्तासामास्थानादु-ज्जिहतामोषधयः सुपिप्पला"ऽइत्यपां वाऽआस्थानादुज्जिहतऽओ-षधयः सुपिप्पलाः ॥२॥ अथैनां व्वायुना सन्दधाति । यद्वाऽअस्यै क्षतं यद्विलिष्टं व्वायुना वै तत्संधीयते व्वायुनैवास्याऽएतत्क्षतं व्विलिष्टꣳ सन्तनोति सन्दधाति ॥३॥

( काण्डस्यार्द्धम् २६५ )

"सन्ते व्वायुर्मातरिश्वा दधा"त्विति । अयं वै व्वायुर्म्मातरिश्वा योऽयं पवतऽ"उत्तानाया हृदयं यद्विकस्त"मित्युत्तानाया ह्यस्याऽ एतद्धृदयं व्विकस्तं "यो देवानाञ्चरसि प्राणथेने"त्येष हि सर्व्वेषान्दे-वानाञ्चरति प्राणथेन "कस्मै देव व्वषडस्तु तुभ्य"मिति प्रजापतिर्व्वै कस्तस्माऽएवैतदिमां व्वषट्करोति नो हैतावत्यन्याहुतिरस्ति यथै-षा ॥४॥ अथैनां दिग्भिः सन्दधाति । यद्वाऽअस्यै क्षतं यद्विलिष्टं दिग्भिर्व्वै तत्सन्धीयते दिग्भिरेवास्याऽएतत्क्षतं व्विलिष्टꣳ सन्तनो-ति सन्दधाति सऽ इमाश्चेमाश्च दिशौ सन्दधाति तस्मादेते दिशौ सꣳहितेऽअथेमाश्चेमाश्च तस्माद्धैवैते सꣳहितेऽइत्यग्रे ऽथेति । अथे-त्यथेति तद्दक्षिणावृत्ताद्धि देवत्रानयानया वै भेषजं क्रियतेऽनयैवैना-मेतद्भिषज्यति ॥५॥ अथ कृष्णाजिनञ्च पुष्करपर्णञ्च समुद्गृह्णाति । योनिर्व्वै पुष्करपर्णं योन्या तद्रेतः सिक्तꣳ समुद्गृह्णाति त-स्माद्योन्या रेतः सिक्तꣳ समुद्गृह्यते "सुजातो ज्योतिषा सह

---

१, २. मा.सं. ११. ३८. ३, ५, ७. मा.सं. ११. ३९. ६. चरति. इति.ख.
८. यथैषा इति. च. ९. भिषज्यति इति. घ. १०. मा.सं. ११.४०.

शर्म्म व्वरूथमासदत्स्व''रिति सुजातो ह्येष ज्योतिषा सह शर्म्म चैतद्वरूथञ्च स्वञ्चासदिति[1] ॥६॥ अथैनमुपनह्यति । य्योनौ तद्रेतो य्युनक्ति तस्माद्योनौ रेतो य्युक्तं न निष्पद्यते य्योक्त्रेण य्योक्त्रेण हि य्योग्यं य्युञ्जन्ति मौञ्जेन त्रिवृता तस्योक्तो बन्धुः ॥७॥ तत्पर्य्यस्यति । ''[2]व्वासोऽअग्ने व्विश्वरूपꣳ संव्ययस्व व्विभावस''विति व्वरुण्या वै य्यज्ञे रज्जुरवरुण्यमेवैनदेतत्कृत्वा य्यथा व्वासः परिधापयेदेवं परि[3]धापयति ॥८॥ अथैनमादायोत्तिष्ठति । असौ वा ऽआदित्यऽएषोऽग्निरमुं तदादित्यमुत्थापय''[4]त्युदु तिष्ठ स्वध्वरे''त्यध्वरो वै य्यज्ञ ऽउदु तिष्ठ सुयज्ञियेत्येतद''[5]वा नो देव्या धिये''ति य्या ते दैवी धीस्तया नोऽवेत्येत''[6]द्दृशे च भासा बृहता सुशुक्वनि''रिति दर्शनाय च भासा बृहती सुशुक्वनिरित्येतदा''[7]ग्ने य्याहि सुशस्तिभि''रिति य्ये व्वोढारस्ते सुशस्तयऽ आग्ने य्याहि व्वोढृभिरित्येतत्[8] ॥ ९ ॥

( अर्द्धप्रपाठकः )

अथैनमित ऽऊर्ध्वं प्राञ्चं प्रगृह्णाति । असौ वाऽआदित्यऽएषोऽग्निरमुं तदादित्यमितऽऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्यऽइतऽऊर्ध्वः प्राङ् धीयतऽ''ऊर्ध्वऽऊ षु णऽऊतये तिष्ठा देवो न सविते''ति य्यथैव य्यजुस्तथा बन्धु''रूर्ध्वो व्वाजस्य सनिते''त्यूर्ध्वो वाऽएष तिष्ठन्वाजमन्नꣳ सनोति ''[9-11]य्यदञ्जिभिर्व्वाघद्भिर्व्विह्वयामह''ऽइति रश्मयो वाऽएतस्याञ्जयो व्वाग्रतस्तानेतदाह परोबाहु प्रगृह्णाति परोबाहु ह्येषऽइतोऽथैनमुपावहरति तमुपावहृत्योपरिनाभि धारयति तस्योपरि बन्धुः ॥ १० ॥ का. श. ८. ४. २; तै. सं. ५. १. ५; मै. सं. ३. १. ५; काठ. १९. ५; कपि. सं. ३०. ३,

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ४. ३.)

---

१. आसीदति इति. च. २. मा.सा. ११.४०. ३. परिधापयति. इति, च
४–७. मा.सं. ११.४१. ८. एतत् इति. च. ९–११. मा. सं. ११. ४२.

## ६. ३. ५.

### ( उखानिर्माणव्यापारः )

हस्तऽएष भवत्यथ पशूनभिमन्त्रयते । एतद्वाऽएषु देवाः सम्भरिष्यन्तः पुरस्ताद्वीर्यमदधुस्तथैवैष्वयमेतत्सम्भरिष्यन् पुरस्ताद्वीर्यन्दधाति ॥१॥ सोऽश्वमभिमन्त्रयते । "स[2] जातो गर्भोऽअसि रोदस्यो"रितीमे वै द्यावापृथिवी रोदसी तयोरेष जातो गर्भोऽ"ग्ने[3] चारुर्व्विभृतऽओषधी"ष्विति सर्व्वासु ह्येष चारुर्व्विभृतऽओषधिषु "चित्रः शिशुः परि तमाꣳस्यक्तू"निति चित्रो वाऽएष शिशुः परेण तमाꣳस्यक्तून्तिरोचते "प्र[5] मातृभ्योऽअधि कनिक्रदद्गा"ऽइत्योषधयो वाऽएतस्य मातरस्ताभ्यऽएष कनिक्रदत्प्रैति तदश्वे व्वीर्यं दधाति ॥२॥ अथ रासभꣳ। "स्थिरो भव व्वीड्वङ्गऽआशुर्भव व्वाज्यर्व्व"न्निति स्थिरश्च भव व्वीड्वङ्गश्चाशुश्च भव व्वाजी चार्व्वन्नित्येत"त्पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहण"ऽइति पृथुर्भव सुशीमस्त्वमग्नेः पशव्यवाहन ऽइत्येतत्तद्रासभे व्वीर्यं दधाति ॥३॥ अथाजꣳ। "शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिर"ऽइत्यङ्गिरा वाऽअग्निराग्नेयोऽजः शमयत्येवेनैमेतदहिꣳसायै "मा द्यावापृथिवीऽअभिशोचीर्म्मान्तरिक्षं मा व्वनस्पतीनि"त्येतत्सर्व्वं मा हिꣳसीरित्येतत्तदजे व्वीर्यं दधाति ॥४॥ त्रिभिरभिमन्त्रयते। त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैष्वेतद्वीर्यं दधाति ॥५॥ अथैनमेतेषां पशूनामुपरिष्टात् प्रगृह्णाति । तदेनमेतैः पशुभिः संभरति नोपस्पृशति व्वज्रो वै पशवो रेतऽइदं नेदिदꣳ रेतो व्वज्रेण हिनसानीत्यथोऽअग्निरयं पशवऽइमे नेदयमग्निरिमान्पशून् हिनसदिति ॥६॥ तमश्वस्योपरिष्टात्प्रगृह्णाति। "प्रैतु[11] व्वाजी कनिक्रद"दिति प्रैतु व्वाजी कनिक्रदद्यजमानऽइत्येत"न्नानद[12]द्रासभः पत्वे"ति तद-

---

१. वीर्यमिति. घ. २–५. मा.सं. ११ ४३. ६, ७. मा.सं. ११.४४. ८, ९. मा. सं. १०. ४५. १०. त्रिवृत् इति. घ. ११–१२, मा.सं. १०.४६.

श्वस्य य्यजुषि रासभं निराह तद्रासभे शुचन्दधाति "भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरे"ति भरन्नग्निं पशव्यं मोऽअस्मात्कर्म्मणः पुरा पादीत्येतत्तदेनमश्वेन संभरति ॥७॥ अथ रासभस्य। "व्वृषाग्निं व्वृषणं भर"न्निति व्वृषा वाऽअग्निर्व्वृषा रासभः स व्वृषा व्वृषाणं भरत्य"पां गर्भंᳪं समुद्रिय"मित्यपाᳪं ह्येष गर्भः समुद्रियस्तदेनᳪं रासभेन संभरति ॥८॥ अथापादत्ते। "अग्नऽआयाहि व्वीतय"ऽइत्यु-वितवऽइत्येतत्तदेनं ब्रह्मणा य्यजुषैतस्माच्छौद्राद्वर्णादपादत्ते ॥९॥ अथाजस्य। "ऋतᳪं सत्यमृतᳪं सत्य"मित्ययं वा ऽअग्निर्ऋतमसावा-दित्यः सत्यं य्यदि वासावृतमयᳪं सत्यमुभयम्वेतदयमग्निस्तस्मादा-हर्त्तᳪं सत्यमृतᳪंसत्यमिति तदेनमजेन संभरति ॥१०॥ त्रिभिः संभरति। त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्सं-भरति त्रिभिः पुरस्तादभिमन्त्रयते तत्षट् तस्योक्तो बंधुः ॥११॥ अथैतान्पशूनावर्त्तयन्ति। तेषामजः प्रथमऽएत्यथ रासभोऽथाश्वो ऽथैतो य्यतामश्वः प्रथमऽएत्यथ रासभोऽथाजः क्षत्रं वाऽअन्वश्वो व्वैश्यं च शूद्रश्चानु रासभो ब्राह्मणमजः ॥१२॥ तद्यदितो यताम्। अश्वः प्रथमऽएति तस्मात्क्षत्रियं प्रथमं य्यन्तामितरे त्रयो व्वर्णाः प-श्चादनुयन्त्यथ य्यदमुत ऽआयतामजः प्रथमऽएति तस्माद्ब्राह्मणं प्र-थमं य्यन्तमितरे त्रयो व्वर्णाः पश्चादनुयन्त्यथ य्यन्नेवेतो य्यतां ना-मुतो रासभः प्रथमऽएति तस्मान्न कदा चन ब्राह्मणश्च क्षत्रियश्च व्वैश्यश्च शूद्रश्च पश्चादन्वितस्तस्मादेवं य्यन्त्यपापवस्यसायाथो ब्रह्म-णा चैवैतत्क्षत्रेण चैतौ व्वर्णावभितः परिगृह्णीतेऽनपक्रामिणौ कुरुते ॥१३॥ अथानड्वा पुरुषमीक्षते। "अग्निं पुरीष्यमङ्गिरस्वद्भराम"ऽइत्यग्निं पशव्यमग्निवद्भरामऽइत्येतत्तदेनमनड्वापुरुषेण संभरति ॥१४॥ तमज-

१-२ मा. सं. ११. ४६. ३. भरन्नग्नि इति. घ. ४. वृषणमिति. घ.
५, ७. मा. सं. ११. ४६. ६. अथापादत्तेऽग्न इति. ख, अपादत्ते इति. च.
८. मा. सं. ११. ४७. ९. अथाज इति. घ. १०. यन्तमितरे इति. ख.
११. कुरुते इति घ. १२, मा. सं. ११. ४७. १३. इत्येतत् इति. घ.

स्योपरिष्टात्प्रगृह्णन्नेति । आग्नेयो वाऽअजः स्वेनैवैनमेतदात्मना स्वया देवतया संभरत्यथो ब्रह्म वाऽअजो ब्रह्मणैवैनमेतत्संभरति ॥१५॥ अथैनमुपावहरति । "ओषधयः प्रतिमोदध्वमग्निमेतꣳ शिवमायन्तमभ्यत्र युष्मा"ऽइत्येतद्वैतस्मादायतऽओषधयो बिभ्यति यद्वै नोऽयं न हिꣳस्यादिति ताभ्यऽएवैनमेतच्छमयति प्रत्येनं मोदध्वꣳ शिवो वोऽभ्यैति न वो हिꣳसिष्यतीति "व्यस्यन्विश्वाऽअनिराऽअमीवा निषीदन्नोऽअप दुर्म्मतिञ्जही"ति व्यस्यन्विश्वाऽअनिराश्चामीवाश्च निषीदन्नोऽप सर्व्वं पाप्मानं जहीत्येतत् ॥१६॥ "ओषधयः प्रतिगृभ्णीत । पुष्पवतीः सुपिप्पला"ऽइत्येतद्वैतासाꣳ समृद्धꣳ रूपं यत्पुष्पवत्यः सुपिप्पलाः समृद्धाऽएनं प्रतिगृह्णीतेत्येत"दयं वो गर्भऽऋत्वियः प्रत्नꣳ सधस्थमासद"दित्ययं वो गर्भ ऽऋतव्यः सनातनꣳ सधस्थमासददित्येतत् ॥१७॥ द्वाभ्यामुपावहरति । द्विपाद्यजमानो यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपावहरति तं दक्षिणतऽउदञ्चमुपावहरति तस्योक्तो बंधुरुद्धतमवोक्षितं भवति यत्रैनमुपावहरत्युद्धते वाऽअवोक्षितेऽग्निमादधाति सिकताऽउपकीर्णा भवन्ति तासामुपरि बंधुः ॥१८॥ परिश्रितं भवति । एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्माऽएतां पुरं पर्य्यश्रयंस्तथैवास्माऽअयमेतां पुरं परिश्रयत्यथो योनिर्व्वाऽइयꣳ रेत ऽइदं तिरऽइव वै योनौ रेतः सिच्यते योनिरूपमेतत्क्रियते तस्मादपि स्वया जायया तिरऽइवैव चिँचरिषति ॥१९॥ अथैनं विष्यति । तद्यदेवास्यात्रोपनद्धस्य सꣳशुच्यति तामेवास्मादेतच्छुचं बहिर्द्धा दधात्यथोऽएतस्याऽएवैनमेतद्योनेः प्रजनयति ॥२०॥ "विँ पाजसा पृथुना शोशुचान"ऽइति । वि पाजसा पृथुना दीप्यमानऽइत्येत"द्बाधस्व द्विषो रक्षसोऽअमीवा"ऽइति बाधस्व

---

१, २. मा. सं. ११. ४७ ३, ४. मा. सं. ११. ४८. ५. मासददिति. ख. ६. चिचरिष्यति, इति. च. ७, ८. मा. सं. ११. ४९.

सर्व्वान् पाप्मनऽइत्येत“त्सुशर्मणो बृहतः शर्मणि स्यामग्ने रहॅं सुहवस्य प्रणीता”वित्याशिषमाशास्ते॥२१॥ अथाजलोमान्याच्छिद्य। उदीचः प्राचः पशून्प्रसृजत्येषा ह्योभयेषां देवमनुष्याणां दिग्यदुदीची प्राच्येतस्यां तद्दिशि पशून्दधाति तस्मादुभये देवमनुष्याः पशूनुपजीवन्ति॥२२॥ Cf. का. श. ८. ४. ४; तै. सं. ५. १. ५; मै. सं. ३. १. ६; काठ. सं. १९. ५, ६; कपि. ३०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके पञ्चमं ब्राह्मणम्॥ (अ.४.४.)

( इति चतुर्थोऽध्यायः )

६. ३. ६.

पर्णकषायनिष्पक्का ऽएता ऽआपो भवन्ति । स्थेम्ने न्वेव यद्वेव पर्णकषायेण सोमो वै पर्णश्चन्द्रमा उ वै सोमऽएतदु वाऽएकमग्निरूपमेतस्यै वाग्निरूपस्योपाप्त्यै॥१॥ ताऽउप सृजति । “आपो हि ष्ठा मयोभुव”ऽइति यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सुकर्सा देवता तद्यजुस्ता हैताऽआपऽएवैष ऋचस्तद्वाऽअमूरापऽएकथं रूपॅं समदृश्यन्त ताऽ एतास्तदेवैतद्रूपं करोति॥२॥ अथ फेनं जनयित्वान्ववदधाति । यदेव तत्फेनो द्वितीयॅं रूपमसृज्यत तदेवैतद्रूपङ्करोत्यथ यामेव तत्र मृदॅं संयौति सैव मृच्चत्तृतीयॅं रूपमसृज्यतैतेभ्यो वाऽएष रूपेभ्योऽग्रेऽसृज्यत तेभ्यऽएवैनमेतज्जनयति॥३॥ अथाजलोमैः सॅंसृजति । स्थेम्ने न्वेव यद्वेवाजलोमैरेतद्वाऽएनं देवाः पशुभ्योऽधि समभरंस्तथैवैनमयमेतत्पशुभ्योऽधि सम्भरति तद्यदजलोमैरेवाजे हि सर्व्वेषां पशूनाॅं रूपमथ यल्लोम

१. माशास्ते इति. घ. मा शास्ते इति घ.
२. आच्छिद्योदीचः इति ख, आच्छिद्य । उदीच इति ग, घ.
३. मा. सं. ११. ५०. ४. मयोभुव इति. ग, थ. ५. करोति इति. ख, च.
६. जनयति. इति. ख. ७. सर्वेषां इति. घ. ८. रूपमथ इति. ख.

लोम हि रूपम् ॥४॥ "मित्रः सᳬंसृज्य । पृथिवीं भूमिञ्च ज्योतिषा सहे"ति प्राणो वै मित्रः प्राणो वाऽएतदग्रे कर्म्माकरो"त्सुजातं जातवेद-समयक्ष्माय त्वा सᳬंसृजामि प्रजाभ्य"ऽइति यथैव यजुस्तथा बंधुः ॥५॥ अथैतत्त्रयं पिष्टं भवति । शर्कराश्मायोरसस्तेन सᳬंसृजति स्थेम्ने न्वेव यद्वेव तेनैतावती वाऽइयमग्रेऽसृज्यत तद्यावतीयमग्रे-ऽसृज्यत तावतीमेवैनमेतत्करोति ॥६॥ "रुद्राः सᳬंसृज्य । पृथिवीं बृहज्ज्योतिः समीधिरे"ऽइत्यसौ वाऽआदित्य ऽएषोऽग्निरेतद्वै तद्रुद्राः सᳬंसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे "तेषां भानुरजस्रऽइच्छुक्रो देवेषु रोचत"ऽइत्येष वाऽएषां भानुरजस्रः शुक्रो देवेषु रोचते ॥७॥ द्वाभ्याᳬं सᳬंसृजति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्या-वत्यस्य मात्रा तावतैवैनामेतत्सᳬंसृजति ॥८॥ अथ प्रयौति । "सᳬंसृ-ष्टां वसुभी रुद्रै"रिति सᳬंसृष्टा ह्येषा वसुभिश्च रुद्रैश्च भवति य-न्मित्रेण तद्वसुभिर्यद्रुद्रैस्तद्रुद्रै"र्धीरैः कर्म्मण्यां मृद"मिति धीरा हि ते कर्म्मण्योऽइयं मृद्"स्ताभ्यां मृद्वीं कृत्वा सिनीवाली कृणोतु ता"मिति वाग्वै सिनीवाली सैनाᳬं हस्ताभ्यां मृद्वीं कृत्वा करोत्वित्येतत् ॥९॥ "सिनीवाली सुकपर्द्दा सुकुरीरा स्वौपशे"ति । योषा वै सिनी-वाल्येतदु वै योषायै समृद्धᳬंरूपं यत्सुकपर्द्दा सुकुरीरा स्वौपशा समर्द्धयत्येवैनामेत"त्सा तुभ्यमदिते मह्योखां दधातु हस्तयो"रितीयं वाऽअदितिर्मह्यस्यै तदाह ॥१०॥ "उखां कृणोतु । शक्त्या बाहुभ्या-मदितिर्द्धिये"ति शक्त्या च हि करोति बाहुभ्यां च धिया च "माता

१, २. मा. सं. ११. ५३. ३. रस इति. ख. ४. करोति. इति. च.
५, ७. मा. सं. ११. ५४. ६. समीधिरऽइति. इति. ख.
८, १०, ११. मा. सं. ११. ५५. ९. यद्रुद्रैस्तत्तद्रुद्रैरिति ग, घ.
१२, मा. सं. ११. ५६.
१३. स्त्रीभिः शृङ्गारार्थं शिरसि धार्यमाणः कनकाभरणविशेषः कुरीरः ॥
See. महीधर ११. ५६.
१४. एतत्सा ग, घ. १५. मा. सं. ११.५६. १६, १७, मा. सं. ११. ५७.

पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भऽए''ति यथा माता पुत्रमुपस्थे बिभृयादेवमग्निं गर्भे बिभर्त्वित्येतत् ॥११॥ त्रिभिः प्रयौति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रयौति द्वाभ्याꣳ सꣳसृजति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति त्रिभिरपऽउपसृजति तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवत्यथोऽअष्टाक्षरा वाऽइयमग्रेऽसृज्यत तद्यावतीयमग्रेऽसृज्यत तावतीमेवैनामेतत्करोति ॥१२॥ Cf. का. श. ८. ५. १; तै. सं. ५. १. ६, मै. सं. ३. १. ६; कठसं. १९. ६; कपि. ३०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥ (अ. ५. १.)

६. ३. ७.

( उखानिर्माणम् )

अथ मृत्पिण्डमपादत्ते । यावन्तं निधयेऽलं मन्यते "मखस्य[2] शिरोऽसी"ति यज्ञो वै मखस्तस्यैतच्छिरऽआहवनीयो वै यज्ञस्य शिरऽआहवनीयमु वाऽएतं चेष्यन्भवति तस्मादाह मखस्य शिरोऽसीति ॥१॥ यद्वेवाह मखस्य शिरोसीति । जायतऽएषऽएतद्यच्चीयते शीर्षतो वै मुखतो जायमानो जायते शीर्षतो मुखतो जायमानो जायाताऽइति ॥२॥ तं प्रथयति । "वसवस्त्वा[3] कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्व"दित्ययꣳ ह्येष लोको निधिस्तमेतद्वसवो गायत्रेण छन्दसाकुर्वंस्तथैवैनमयमेतद्गायत्रेण छन्दसा करोत्यङ्गिरस्वदिति प्राणो वाऽअङ्गिरा "ध्रुवासी"ति स्थिरासीत्येतदथो प्रतिष्ठितासीति "पृथिव्यसी"[5]ति पृथिवी ह्येष निधि"र्धारया मयि प्रजाꣳरायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाये''त्येतद्वै वसवऽइमंल्लोकं कृत्वा तस्मिन्नेतामाशिषमाशासत तथैवैतद्यजमानऽइमंल्लोकं

१. त्रिभिरिति. ग, घ. २. मा.स.११.५७. ३–६. मा. सं. ११. ५८.

कृत्वा तस्मिन्नेतामाशिषमाशास्ते तां प्रादेशमात्रीं कृत्वाथास्यै सर्व्वतस्तीरमुन्नयति ॥३॥ अथ पूर्व्वमुद्धिमादधाति । "रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्व"दित्यन्तरिक्षꣳ हैष ऽउद्धिस्तमेतद्रुद्रास्त्रैष्टुभेन छन्दसाकुर्व्वंस्तथैवैनमयमेतत्त्रैष्टुभेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वाऽअङ्गिरा "ध्रुवासी"ति स्थिरासीत्यतदथो प्रतिष्ठितासी"त्यन्तरिक्षमसी"त्यन्तरिक्षꣳ ह्येष ऽउद्धि"र्द्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाये"त्येतद्वै रुद्राऽअन्तरिक्षं कृत्वा तस्मिन्नेतामाशिषमाशासत तथैवैतद्यजमानोऽन्तरिक्षं कृत्वा तस्मिन्नेतामाशिषमाशास्ते ताꣳ संलिप्य सꣳश्लक्ष्णय ॥४॥ अथोत्तरमुद्धिमादधाति । "आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाङ्गिरस्व"दिति द्यौर्हैष ऽउद्धिस्तमेतदादित्या जागतेन छन्दसाकुर्व्वंस्तथैवैनमयमेतज्जागतेन छन्दसा करोत्यङ्गिरस्वदिति प्राणो वाऽअङ्गिरा "ध्रुवासी"ति स्थिरासीत्येतदथो प्रतिष्ठितासीति"द्यौरसी"ति द्यौर्ह्येषऽउद्धि"र्द्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाये"त्येतद्वाऽआदित्या दिवं कृत्वा तस्यामेतामाशिषमाशासत तथैवैतद्यजमानो दिवं कृत्वा तस्यामेतामाशिषमाशास्ते ॥५॥ अथैतेन चतुर्थेन य्यजुषा करोति । "व्विश्वे त्वा देवा व्वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्व"दिति दिशो हैतद्यजुरेतद्वै व्विश्वेदेवा व्वैश्वानराऽएषु लोकेषूखायामेतेन चतुर्थेन य्यजुषा दिशोऽदधुस्तथैवैतद्यजमान ऽएषु लोकेषूखायामेतेन चतुर्थेन य्यजुषा दिशो दधात्याङ्गिरस्वदिति प्राणो वाऽ अङ्गिरा "ध्रुवासी"ति स्थिरासीत्येतदथो प्रतिष्ठितासीति "दिशोऽसी"ति दिशो ह्येतद्यजु"र्द्धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान्यजमानाये"त्येतद्वै व्विश्वे देवा व्वैश्वानरा दिशः कृत्वा तास्वेतामाशिषमाशासत तथैवैतद्यजमानो दिशः कृत्वा तास्वे-

---

१-८. मा.सं. ११.५८.
९. माशास्ते इति. ख, ग, घ,
१०, १२, १३. मा. सं. ११. ५८.
११. स्तथैवैनमिति. ख.

तामाशिषमाशास्ते ॥६॥ तेनैतेनान्तरतश्च बाह्यतश्च करोति । तस्मादेषांल्लोकानामन्तरतश्च बाह्यतश्च दिशोऽपरिमितमेतेन करोत्यपरिमिता हि दिशः ॥७॥ तां प्रादेशमात्रीमेवोर्ध्वाङ्करोति । प्रादेशमात्रीं तिरश्चीं प्रादेशमात्रो वै गर्भो विष्णुर्योनिरेषा गर्भसंमितां तद्योनिङ्करोति ॥८॥ सा यदि वर्षीयसी प्रादेशात्स्यात् । एतेन यजुषा ह्रसीयसीं कुर्याद्यदि ह्रसीयस्येतेन वर्षीयसीᳬं ॥९॥ स यद्येकः पशुः स्यात् । एकप्रादेशां कुर्यादथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्यादिषुमात्रीं वा वीर्यं वाऽइषुर्वीर्यसंम्मितैव तद्भवति पञ्चप्रादेशा ह स्म त्वेव पुरेषुर्भवति ॥१०॥ अथ तिरश्चीᳬं रास्नां पर्यस्यति । दिशो हैव सैतद्वै देवाऽइमाँल्लोकानुखां कृत्वा दिग्भिरदृᳬंहन्दिग्भिः पर्यतन्वंस्तथैवैतद्यजमान ऽइमाँल्लोकानुखां कृत्वा दिग्भिर्दृᳬंहति दिग्भिः परितनोति ॥११॥ तामुत्तरे वितृतीये पर्यस्यति । अत्र हैषाँल्लोकानामन्ताः समायन्ति तदेवैनांस्तद्दृᳬंहति ॥१२॥ "अदित्यै रास्ना"सीति । वरुण्या वै यज्ञे रज्जुरवरुण्यामेवैनामेतद्रास्नां कृत्वा पर्यस्यति ॥१३॥ अथ चतस्रऽऊर्ध्वाः करोति । तूष्णीमेव दिशो हैव ताऽएतद्वै देवा ऽइमाँल्लोकानुखां कृत्वा दिग्भिः सर्व्वतो दृᳬंहंस्तथैवैतद्यजमानऽइमाँल्लोकानुखां कृत्वा दिग्भिः सर्व्वतो दृᳬंहति ॥१४॥ ताऽएता ऽएतस्यै भवन्ति । एतद्वाऽएताऽएतामस्तंभ्नुवंस्तथैवैनामेतत्स्तभ्नुवन्ति तद्यदत ऽऊर्ध्वन्तदेतया तिरश्च्या दृढमथ यदतोर्वाक्तदेताभिः ॥१५॥ तासामग्रेषु स्तनानुन्नयति । एतद्वै देवाऽइमांल्लोकानुखां कृत्वैतैस्तनैः सर्व्वान् कामानदुह्रत तथैवैतद्यजमानऽइमांल्लोकानुखां कृत्वैतैस्स्तनैः सर्व्वान् कामान्दुहे ॥१६॥ सैषा गौरेव । इमे वै लोकाऽउखेमे लोका गौस्तस्याऽएतदूधो यैषा तिरश्ची

१. दृᳬंहति इति. च. २. मा. सं. ११.५९. ३. पर्यवस्यति इति. च.
४. अस्तभ्नुवन्निति. ग. घ. ५. यदतो इति. घ. ६. उन्नयन्तीति. ग, घ.
७. स्तनैरिति. ग, घ. ८. दुहे इति. च. ९. उखेमे लोका इति. घ.

रास्ना सा विवितृतीये भवति विवितृतीये हि गोरूधः ॥१७॥ तस्यै स्तनानुन्नयति । ऊधसस्तत्स्तनानुन्नयति सा चतुस्तना भवति चतुस्तना हि गौः ॥१८॥ ताथ्ं हैके[1] द्विस्तनां कुर्व्वन्ति । अथो ऽअष्टस्तनां न तथा कुर्याद्ये वै गोः कनीयस्तनाः पशवो ये भूयस्तनाऽअनुपजीवनीयतरा वाऽअस्यैतेऽनुपजीवनीयतराथ्ं हैनां ते कुर्व्वतेऽथो ह ते न गां कुर्व्वते शुनीं वाविं वा वडबां वा तस्मात्तथा न कुर्यात् ॥१९॥ अथास्यै बिलमभिपद्यते । "अदितिष्टे[2] बिलं गृभ्णा"त्विति वागवा ऽअदितिरेतद्वा ऽएनां देवाः कृत्वा वाचादित्या निरष्ठापयंस्तथैवैनामयमेतत्कृत्वा वाचादित्या निष्ठापयति ॥२०॥ तां परिगृह्य निदधाति । "कृत्वाय[3] सा महीमुखा"मिति कृत्वाय सा महतीमुखामित्येत"न्मृन्मयीं[4] योनिमग्नय"ऽइति मृन्मयी ह्येषा योनिरग्नेः "पुत्रेभ्यः[5] प्रायच्छददितिः श्रपया"नित्येतद्वाऽएनामदितिः कृत्वा देवेभ्यः पुत्रेभ्यः श्रपणाय प्रायच्छत्तथैवैनामयमेतत्कृत्वा देवेभ्यः श्रपणाय प्रयच्छति ॥२१॥ ता हैके तिस्रः कुर्व्वन्ति । त्रयो वा ऽइमे लोका ऽइमे लोका[6] ऽउखा ऽइति वदन्तोऽथोऽअन्योन्यस्यै प्रायश्चित्यै यदीतरा भेत्स्यतेऽथेतरस्यां भरिष्यामो यदीतराथेतरस्यामिति न तथा कुर्याद्यो वाऽएष निधिः प्रथमोऽयꣳ स लोको यः पूर्व्वऽउद्धिरन्तारिक्षं तद्यऽ उत्तरो द्यौः साथ यदेतच्चतुर्थं यजुर्दिशो हैव तदेतावद्वाऽइदथ्ं सर्व्वं यावदिमे च लोका दिशश्च स यदत्रोपाहरेदति तद्रेचयेद्यदु वै यज्ञेऽतिरिक्तं क्रि[7]

---

1. अत्र 'द्विःस्तनां करोति द्यावापृथिव्योर्दोहाय····अष्टास्तनां करोति च्छन्दसां दोहाय' ( तै. सं. ५. १. ६. ४. ) इति तै. संहितावचनमनुसन्धेयम् ॥ अत्राऽष्टस्तनत्वे शुनीसादृश्यं द्विस्तनत्वेऽविवडबासादृश्यं च बोध्यम् ॥
2. मा. सं. ११. ५९.
3–5. मा. सं. ११. ५९.
6. लोका. इति. ग, घ.
7. क्रियते इति. ग, घ.

यते य्यजमानस्य तद्द्विषन्तं भ्रातृव्यमभ्यतिरिच्यते य्यदु भिन्नायै प्रायश्चित्तिरुत्तरस्मिंस्तदन्वाख्याने ॥२२॥ Cf· का. श. ८. ५. २; तै. सं. ५. १. ६; मै. सं. ३. १. ७; कठ. सं. १९. ६; कपि. सं. ३०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
तृतीयप्रपाठके सप्तमं ब्राह्मणम् ॥ (अ. ५. २)

तृतीयः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ११४ )

## अथ चतुर्थः प्रपाठकः ॥

६. ४. १.

### ( अषाढेष्टकानिर्माणम् )

तस्या ऽएतस्या ऽअषाढां पूर्व्वांङ्करोति । इयं वा ऽअषाढेयमु वा ऽएषांल्लोकानां प्रथमासृज्यत तामेतस्या ऽएव मृदः करोत्येषाᳬं ह्येव लोकानामियं महिषी करोति महिषी हीयं तद्यैव प्रथमा व्विन्ना सा महिषी ॥१॥ पादमात्री भवति । प्रतिष्ठा वै पाद ऽइयमु वै प्रतिष्ठा त्र्यालिखिता भवति त्रिवृद्धीयम् ॥२॥ अथोखाङ्करोति । इमांस्तल्लोकान् करोत्यथ व्विश्वज्योतिषः करोत्येता देवता ऽअग्निं व्वायुमादित्यमेता ह्येव देवता व्विश्वं ज्योतिस्ता ऽएतस्या ऽएव मृदः करोत्येभ्यस्तल्लोकेभ्य ऽएतान्देवान्निर्म्मिमीते य्यजमानः करोति त्र्यालिखिता भवन्ति त्रिवृतो ह्येते देवा ऽइत्यधिदेवतम् ॥३॥ अथाध्यात्मम् । आत्मैवोखा व्वागषाढा तां पूर्व्वां करोति पुरस्ताद्धीयमात्मनो व्वाक्तामेतस्या ऽएव मृदः करोत्यात्मनो ह्येवेयं व्वाङ्महिषी करोति महिषी हि व्वाक्त्र्यालिखिता भवति त्रेधा व्विहिता हि व्वागृचो य्यजूᳬंषि सामान्यथो य्यदिदं त्रयं व्वाचो रूपमुपाᳬंशु

---

१. प्रथमा इति. घ.   २. मादित्य इति. ग, घ.

व्यन्तरामुच्चैः ॥४॥ अथोखाङ्करोति । आत्मानं तत्करोत्यथ व्विश्वज्योतिषः करोति प्रजा वै व्विश्वज्योतिः प्रजा ह्येव व्विश्वं ज्योतिः प्रजननमेवैतत्करोति ता ऽएतस्या ऽएव मृदः करोत्या-[1]त्मनस्तत्प्रजां निर्म्मिमीते यजमानः करोति यजमानस्तदा-त्मनः प्रजां करोत्यनन्तर्हिताः करोत्यनन्तर्हितां तदात्मनः प्रजां करोत्युत्तराः करोत्युत्तरां तदात्मनः प्रजां करोति त्र्यालिखिता भवन्ति त्रिवृद्धि[2] प्रजातिः पिता माता पुत्रोऽथो गर्भ ऽउल्बञ्ज-रायु ॥५॥ ता ऽएता यजुष्कृतायै करोति । अयजुष्कृताया ऽइतरा निरुक्ता ऽएता भवन्त्यनिरुक्ता ऽइतराः परिमिता ऽएता भवन्त्यप-रिमिता ऽइतराः ॥६॥ प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिर्निरु-क्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्या यजुष्कृतायै करोति य-देवास्य निरुक्तं परिमितꣳ रूपं तदस्य तेन सँस्करोत्यथ या ऽअय-जुष्कृतायै यदेवास्या निरुक्तमपरिमितꣳरूपन्तदस्य तेन सँस्करोति स ह वाऽएतꣳ सर्व्वं कृत्स्नं प्रजापतिꣳ सँस्करोति य ऽएवं व्वि-द्वानेतदेवङ्करोत्यथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः[3] ॥७॥ अथैनां धूपयति । स्थेम्ने न्वेवाथो कर्म्मणः प्रकृततायै यद्वेव धूप-यति शिरऽएतद्यज्ञस्य यदुखा प्राणो धूमः शीर्षंस्तत्प्राणन्दधाति[4] ॥८॥ (शतम् ३७००) अश्वशकैर्द्धूपयति[5] । प्राजापत्यो वाऽअश्वः प्रजापतिर-ग्निर्नो वा ऽआत्मात्मानꣳ हिनस्त्यहिꣳसायै तद्वै शक्नेव तद्धि ज-ग्धं यातयाम तथो ह नैवाश्वꣳ हिनस्ति नेतरान्पशून् ॥९॥ "व्वसँ-वस्त्वा धूपयन्तु । गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टु-भेन छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वद्वि-श्वे त्वा देवा व्वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिन्द्रस्त्वा[7]

---

१. त्यात्मन इति. ग, घ.
२. त्रिवृद्धि इति. ग, घ.
३. प्रायश्चित्तिभ्य इति ख, प्रायश्चित्तिभ्य इति च.
४. दधाति इति. ग, घ.
५. अश्वशकैरिति. ख.
६. मा. सं. ११. ६०.
७. दिन्द्र इति. गघ,.

धूपयतु व्वरुणस्त्वा धूपयतु व्विष्णुस्त्वा धूपयत्वि''त्येताभिरेवैनामेतद्देवताभिर्द्धूपयति ॥१०॥ सप्ताश्वशकानि भवन्ति । सप्त य्यजूᳬषि सप्तत्य्य ऽएता देवताः सप्त शीर्षन्प्राणा य्यद्दु वाऽअपि बहुकृत्वः सप्तसप्त सप्तैव तच्छीर्षण्येव तत्सप्त प्राणान्दधाति ॥११॥ Cf. का. ८. ५. ३; तै. सं. ५. १. ७; मै. सं. ३. १. ७; काठ. १९. ६; कपि. ३०. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ५. ३ )

## ६. ४. २.

अथैनमस्यां खनति । एतद्धै देवाऽअविभयुर्य्यद्वै नऽइममिह रक्षाᳬसि नाष्ट्रा न हन्युरिति तस्माऽइमामेवात्मानमकुर्व्वन्गुप्त्याऽआत्मात्मानं गोप्स्यतीति ॥१॥ तं वाऽअदित्या खनति । इयं वाऽअदितिर्नो वाऽआत्मात्मानᳬ हिनस्त्यहिᳬसायै य्यदन्यया देवतया खनेद्धिᳬस्याद्धैनम् ॥२॥ ''अदितिष्ट्वा देवी व्विश्वदेव्यावती । पृथिव्याः सधस्थेऽअङ्गिरस्वत्खनत्ववटे''त्यवटो ह्येष देवत्रात्र सा व्वैणव्यभ्रिरुत्सीदति चतुःस्रक्तिरेष कूपो भवति चतस्रो वै दिशः सर्व्वाभ्यऽएवैनमेतद्दिग्भ्यः खनत्यथ पचनमवधायाषाढामवदधाति तूष्णीमेव ताᳬहि पूर्व्वाङ्करोति ॥३॥ अथोखामवदधाति । ''देवानां त्वा पत्नीर्देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वद्दधतूख''ऽइति देवानाᳬ हैतामग्रे पत्नीर्देवीर्व्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधुस्ताभिरेवैनामेतद्दधाति ता ह ताऽओषधयऽएवौषधयो वै देवानां पत्न्यऽओषधिभिर्हीदᳬसर्व्वᳬहितमोषधिभिरेवैनामेतद्दधात्यथ व्विश्वज्योतिषोऽवदधाति तूष्णीमेवाथ पचनमवधायाभीन्धे ॥४॥ ''धिष-

१. देवताभिरिति. ख, ग, घ. २. भवन्ति इति. ग, घ. ३. यद्वै इति ख.
४. मा. सं. ११. ६१. ५. चतुरिति. घ.
६. करोति. इति ग, घ, करोति इति. च. ७, ८ मा. सं. ११. ६१.

णास्त्वा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वदभीन्धतामुख''ऽइति धिषणा हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीधिरे ताभिरेवैनामेतदभीन्धे सा ह सा वागेव वाग्वै धिषणा वाचा हीदꣳ सर्व्वमिद्धं वाचैवैनामेतदभीन्धेऽथैतानि त्रीणि यजूꣳषीक्षमाणऽएव जपति ॥५॥ "वरूत्रीष्ट्वा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वच्छ्रपयन्तूख''ऽइति वरूत्रीर्हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयाञ्चक्रुस्ताभिरेवैनामेतच्छ्रपयति तानि ह तान्यहोरात्राण्येवाहोरात्राणि वै वरूत्रयोऽहोरात्रैर्हीदꣳ सर्व्वं वृतमहोरात्रैरेवैनामेतच्छ्रपयति ॥६॥ "ग्नास्त्वा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पचन्तूख''इति ग्ना हैतामग्रे देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत्पेचुस्ताभिरेवैनामेतत्पचति तानि ह तानि छन्दाꣳस्येव छन्दाꣳसि वै ग्नाश्छन्दोभिर्हि स्वर्गँल्लोकं गच्छन्ति छन्दोभिरेवैनामेतत्पचति ॥७॥ "जनयस्त्वाच्छिन्नपत्रा देवीः । विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पचन्तूख''ऽइति जनयो हैतामग्रेऽच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत्पेचुस्ताभिरेवैनामेतत्पचति तानि ह तानि नक्षत्राण्येव नक्षत्राणि वै जनयो ये हि जनाः पुण्यकृतः स्वर्गँल्लोकं यन्ति तेषामेतानि ज्योतीꣳषि नक्षत्रैरेवैनामेतत्पचति ॥८॥ स वै खनत्येकेन । अवदधात्येकेनाभीन्धऽएकेन श्रपयत्येकेन द्वाभ्यां पचति तस्माद्द्विः संवत्सरस्यान्नं पच्यते तानि षट् सम्पद्यन्ते षडृतवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥९॥ अथ "मित्रस्य चर्षणीधृत''ऽइति । मैत्रेण यजुषोपन्याचरति यावत्कियच्चो-

१, २, ४, मा. सं. ११. ६१. ३. छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति इति. ख

५ See. तै. सं. ५. ४. १. ३ सुकृतां वा एतानि ज्योतीꣳषि यन्नक्षत्राणि ।

६. त्येकेन । अव इति. ग, घ. ७. भवति इति. च ८. मा. सं. ११. ६२.

पन्याचरति न वै मित्रः कश्चन हिनस्ति न मित्रं कश्चन हिनस्ति तथो हैषऽएतां न हिनस्ति नोऽएतमेषा तां द्विवैवोपवपेद्विवोद्वपेदहर्ह्याग्नेयम् ॥१०॥ ताᳬं सावित्रेण य्यजुषोद्वपति । सविता वै प्रसविता सवितृप्रसूतऽएवैनामेतदुद्वपति "देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्ये"ति सर्व्वमु ह्येतत्सविता ॥११॥ अथैनां पर्य्यावर्त्तयति । "अव्यथमाना पृथिव्यामाशा दिशऽआपृणे"त्यव्यथमाना त्वं पृथिव्यामाशा दिशो रसेनापूरयेत्येतत् ॥१२॥ अथैनामुद्यच्छति । "उत्थाय बृहती भवे"त्युत्थाय हीमे लोका बृहन्तऽ"उदु तिष्ठ ध्रुवा त्वमि"त्युदु तिष्ठ स्थिरा त्वं प्रतिष्ठितेत्येतत् ॥१३॥ तां परिगृह्य निदधाति । "मित्रैतां तऽउखां परिददाम्यभित्याऽएषा मा भेदी"त्ययं वै व्वायुर्म्मित्रो योऽयं पवते तस्माऽएवैनामेतत्परिददाति गुप्त्यै ते हेमे लोका मित्रगुप्तास्तस्मादेषाँल्लोकानां न किञ्चन मीयते ॥१४॥ अथैनामाच्छृणत्ति । स्थेम्ने न्वेवाथो कर्म्मणः प्रकृततायै य्यद्वेवाच्छृणत्ति शिरऽएतद्यज्ञस्य य्यदुखा प्राणः पयः शीर्षंस्तत्प्राणं दधात्यथो य्योषा वाऽउखा य्योषायां तत्पयो दधाति तस्माद्योषायां पयः ॥१५॥ अजायै पयसाच्छृणत्ति । प्रजापतेर्व्वै शोकादजा समभवत्प्रजापतिरग्निर्नो वाऽआत्मात्मानᳬं हिनस्त्यहिᳬंसायै य्यद्वेवाजायाऽअजा ह सर्व्वाऽओषधीरात्ति सर्व्वासामेवैनामेतदोषधीनाᳬं रसेनाच्छृणत्ति ॥१६॥ "व्वसवस्त्वाच्छृन्दन्तु । गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा व्वैश्वानराऽआच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदि"त्येताभिरेवैनामेतद्देवताभिराच्छृणत्ति स वै य्याभिरेव देवताभिः करोति ता-

१. मित्रं इति. ग, च
२. मा. सं. ११. ६२
३. सविता इति. घ.
४. पर्या इति. ग, घ.
५. मा. सं. ११. ६३.
६,७. मा. सं. ११.६४.
८. परिददामीति. घ.
९. लोका इति. ग, घ.
१०. मीयते. इति. च
११. श्र्णंति इति. ख.
१२. मा. सं. ११. ६५.

भिर्द्धूपयति ताभिराच्छृणत्ति यो वाव कर्म्म करोति सऽएव तस्योपचारं व्वेद तस्माद्याभिरेव देवताभिः करोति ताभिर्द्धूपयति ताभिराच्छृणत्ति ॥१७॥ Cf. का. श. ८. ५. ४; तै. सं. ५. १. ७; मै. सं. ६. १. ८, कठ. सं. १९. ७; कपि. ३०. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ.५.४.)

( इति पञ्चमोऽध्यायः )

६. ४. ३.

( दीक्षणीयेष्टिः औदूग्रहणहोमाश्च )

भूयाꣳसि हवीꣳषि भवन्ति । अग्निचित्यायां य्यदु चानग्निचित्यायामतीनि ह कर्म्माणि सन्ति य्यान्यन्यत्कर्म्मोति तान्यतीनि तेषामग्निचित्या राजसूयो व्वाजपेयोऽश्वमेधस्तद्यत्तान्यन्यानि कर्म्माण्यति तस्मात्तान्यतीनि ॥१॥ आग्नावैष्णवऽएकादशकपालः । तदध्वरस्य दीक्षणीयं व्वैश्वानरो द्वादशकपालऽआदित्यश्च चरुस्तेऽअग्नेः[1] ॥२॥ स य्यदाग्नावैष्णवमेव निर्व्वपेत् । नेतरे हविषीऽअध्वरस्यैव दीक्षणीयं कृतꣳस्यान्नाग्नेरथ य्यादितरेऽएव हविषी निर्व्वपेन्नाग्नावैष्णवमग्नेरेव दीक्षणीयं कृतꣳस्यान्नाध्वरस्य ॥३॥ उभयानि निर्व्वपति । अध्वरस्य चाग्नेश्चोभयꣳह्येतत्कर्म्माध्वरकर्म्म चाग्निकर्म्म चाध्वरस्य पूर्व्वमथाग्नेरुपायि ह्येतत्कर्म्म य्यदग्निकर्म्म[2] ॥४॥ स य्यऽएषऽआग्नावैष्णवः । तस्य तदेव ब्राह्मणं य्यत्पुरश्चरणे व्वैश्वानरो द्वादशकपालो व्वैश्वानरो वै सर्व्वेऽग्नयः सर्व्वेषामग्नीनामुपाप्त्यै द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरो व्वैश्वानरः[3] ॥५॥ य्यद्वेवैतं व्वैश्वानरं निर्व्वपति । व्वैश्वानरं वाऽएतमग्निं जनयिष्यन्भवति तमेतत्पुरस्ताद्दीक्षणीयायाꣳरेतो भूतꣳसिञ्चति य्याद्दग्वै य्योनौ रेतः सिच्यते ता-

१. अग्नेरिति. घ. २. कर्म इति. घ. ३. वैश्वानर इति. ग, घ

द्दग्जायते तद्यदेतमत्र व्वैश्वानरꣳरेतो भूतꣳ सिञ्चति तस्माद्देषोऽमुत्र व्वैश्वानरो जायते ॥६॥ यद्द्वेवैते हविषी निर्व्वपति । क्षत्रं वै व्वैश्वानरो व्विडेषऽआदित्यश्चरुः क्षत्रञ्च तद्विशञ्च करोति व्वैश्वानरं पूर्व्वं निर्व्वपति क्षत्रं तत्कृत्वा व्विशं करोति ॥७॥ एकऽएष भवति । एकदेवत्यऽएकस्थं तत्क्षत्रमेकस्थाꣳश्रियं करोति चरुरितरो बहुदेवत्यो भूमा वाऽएष तण्डुलानां यच्चरुर्भूमोऽएष देवानां यदादित्या व्विशि तद्भूमानं दधातीत्यधिदेवतम्[1] ॥८॥ अथाध्यात्मꣳ[2] । शिरऽएव व्वैश्वानरऽआत्मैषऽआदित्यश्चरुः शिरश्च तदात्मानं[3] च करोति व्वैश्वानरं पूर्व्वं निर्व्वपति शिरस्तत्कृत्वात्मानं करोति[4] ॥९॥ एकऽएष भवति । एकमिव हि शिरश्चरुरितरो बहुदेवत्यो भूमा वाऽएष तण्डुलानां यच्चरुर्भूमोऽएषोऽङ्गानां यदात्मात्मंस्तदङ्गानां भूमानं दधाति ॥१०॥ घृतऽएष भवति । घृतभाजना ह्यादित्याः स्वेनैवैनानेतद्भागेन स्वेन रसेन प्रीणात्युपाꣳश्वेतानि हवीꣳषि भवन्ति रेतो वाऽअत्र यज्ञऽउपाꣳशु वै रेतः सिच्यते[5] ॥११॥ अथौद्ग्रभणानि जुहोति । औद्ग्रभणैर्व्वै देवाऽआत्मानमस्माल्लोकात्स्वर्गंल्लोकमभ्युदगृह्णत यदुदगृह्णत तस्मादौद्ग्रभणानि तथैवैतद्यजमानऽऔद्ग्रभणैरेवात्मानमस्माल्लोकात्स्वर्गंल्लोकमभ्युद्गृह्णीते ॥१२॥ तानि वै भूयाꣳसि भवन्ति । अग्निचित्यायां यदु चानग्निचित्यायां तस्योक्तो बंधुरुभयानि भवन्ति तस्योक्तोऽध्वरस्य पूर्व्वाण्यथाग्नेस्तस्योऽएवोक्तः[6] ॥१३॥ पञ्चाध्वरस्य जुहोति । पाङ्क्तो यज्ञो यावान्यज्ञो यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति सप्ताग्नेः सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति तान्युभयानि द्वादश सम्पद्यन्ते द्वादशमासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१४॥

---

१. देवतम् इति. घ. २. ध्यात्मꣳ इति. च. ३. तदात्मानमिति. ग, घ.
४. करोति इति. घ. ५. सिच्यते इति. च. ६. वोक्त इति. घ.

स जुहोति । "आकूतिमग्निं प्रयुजꣳस्वाहे"त्याकूताद्वाऽएतदग्रे कर्म्म समभवत्तदेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥१५॥ "मनो मेधामग्निं प्रयुजꣳ स्वाहे"ति । मनसो वाऽएतदग्रे कर्म्म समभवत्तदेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥१६॥ "चित्तं व्विज्ञातमग्निं प्रयुजꣳ स्वाहे"ति । चित्ताद्वाऽएतदग्रे कर्म समभवत्तदेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥१७॥ "व्वाचो व्विधृतिमग्निं प्रयुजꣳ स्वाहे"ति । व्वाचो वाऽएतदग्रे कर्म्म समभवत्तामेवैतदेतस्मै कर्मणे प्रयुङ्क्ते ॥१८॥ "प्रजापतये मनवे स्वाहे"ति । प्रजापतिर्व्वै मनुः स हीदꣳ सर्व्वममनुत प्रजापतिर्व्वाऽएतदग्रे कर्म्माकरोत्तमेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥१९॥ "अग्नये व्वैश्वानराय स्वाहे"ति । संवत्सरो वाऽअग्निर्व्वैश्वानरः संवत्सरो वाऽएतदग्रे कर्म्माकरोत्तमेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते ॥२०॥ अथ सावित्रीं जुहोति । सविता वाऽएतदग्रे कर्म्माकरोत्तमेवैतदेतस्मै कर्म्मणे प्रयुङ्क्ते "व्विश्वो देवस्य नेतुर्म्मर्त्तो व्वुरीत सख्यम् । व्विश्वो रायऽइषुध्यति द्युम्नं व्वृणीत पुष्यसे स्वाहे"ति य्यो देवस्य सवितुः सख्यं व्वृणीते स द्युम्नञ्च पुष्टिञ्च व्वृणीतऽएष वाऽअस्य सख्यं व्वृणीते य्यऽएतत्कर्म्म करोति ॥२१॥ तान्यु हैके । उखायामेवैतान्यौदृग्रभणानि जुह्वति कामेभ्यो वाऽएतानि हूयन्तऽआत्मोऽएष य्यजमानस्य य्यदुखात्मन्यजमानस्य सर्व्वान् कामान् प्रतिष्ठापयामऽइति न तथा कुर्य्यादेतस्य वै य्यज्ञस्य सꣳस्थितस्यैतासामाहुतीनां य्यो रसस्तदेतदर्चिर्यद्दीप्यते तद्यत्सꣳस्थिते य्यज्ञे हुतेष्वौदृग्रभणेषूखां प्रवृणक्ति तदेनामेष यज्ञऽआरोहति तं यज्ञं बिभर्त्ति तस्मात्सꣳस्थितऽएव यज्ञे हुतेष्वौदृग्रभणेषूखां प्रवृञ्ज्यात् ॥२२॥

( अर्द्धप्रपाठकः )

मुञ्जकुलायेनावस्तीर्णा भवति । आदीप्यादिति न्वेव य्यद्वेव मु-

१-४, ६. मा. सं. ११. ६६.
७. एतदिति. घ.
५. ममनुत इति. घ.
८. मा. सं. ११. ६७.

अकुलायेन य्योनिरेषाग्नेर्यन्मुञ्जो न वै य्योनिर्गर्भंꣳ हिनस्त्यहिꣳसायै य्योनेर्व्वै जायमानो जायते य्योनेर्ज्जायमानो जायाताऽइति ॥२३॥ शणकुलायमन्तरं भवति । आदीप्यादिति न्वेव य्यद्वेव शणकुलायं प्रजापतिर्य्यस्यै य्योनेरसृज्यत तस्याऽउमाऽउल्बमासञ्छणा जरायु तस्मात्ते पूतयो जरायु हि तेन वै जरायु गर्भꣳ हिनस्त्यहिꣳसायै जरायुणो वै जायमानो जायते जरायुणो जायमानो जायाता ऽइति ॥२४॥ Cf. का. श. ८. ६. १; तै. सं. ५. १. ९; मै. सं. ३. १. ९; क. सं. १९. ९; कपि. ३०. ७; ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. ६. १.)

## ६. ४. ४.

### ( उखासन्तपनम् )

तां तिष्ठन् प्रवृणक्ति । इमे वै लोकाऽउखा तिष्ठन्तीव वा ऽइमे लोकाऽअथो तिष्ठन्वै व्वीर्यवत्तरः[2] ॥१॥ उदङ् प्राङ्तिष्ठन् । उदङ्वै प्राङ् तिष्ठन्प्रजापतिः प्रजा[3] असृजत ॥२॥ य्यद्वेवोदङ् प्राङ्तिष्ठन् । एषा ह्योभयेषां देवमनुष्याणां दिग्यदुदीची प्राची ॥३॥ य्यद्वेवोदङ् प्राङ्तिष्ठन् । एतस्याꣳ ह दिशि स्वर्गस्य लोकस्य द्वारं तस्मादुदङ् प्राङ्तिष्ठन्नाहुतीर्ज्जुहोत्युदङ् प्राङ् तिष्ठन्दक्षिणा नयति द्वारैव तत्स्वर्गस्य लोकस्य व्वित्तं प्रपादयति ॥४॥ "मा सु भित्था मा सु रिष" ऽइति । य्यथैव य्यजुस्तथा बन्धुर"म्ब धृष्णु व्वीरयस्व स्वि"ति य्योषा वा ऽउखाम्बेति वै य्योषायाऽआमन्त्रणꣳ स्विव व्वीरयस्वा-"ग्निश्चेदं करिष्यथ" ऽइत्यग्निश्च ह्येतत्करिष्यन्तौ भवतः ॥५॥ "दृꣳहस्व देवि पृथिवि स्वस्तय"ऽइति । य्यथैव य्यजुस्तथा बन्धुरा-

१. योनिरेखाग्ने रति क.
२. वीर्यवत्तम इति. च.
३. प्रजा इति. ग, घ.
४-७. मा. सं ११. ६८.

"सुरी माया स्वधया कृतासी"ति प्राणो वाऽअसुस्तस्यैषा माया स्वधया कृता "जुष्टं देवेभ्यऽइदमस्तु हव्य"मिति य्याऽएवैतास्सिन्नग्नावाहुतीर्होष्यन्भवति ताऽएतदाहाथो ऽएषैव हव्यम्"रिष्टा त्वमुदिहि य्यज्ञेऽअसि"न्निति य्यथैवारिष्टानांत्तैतस्मिन्यज्ञऽउदियादेवमेतदाह ॥६॥ द्वाभ्यां प्रवृणक्ति । द्विपाद्यजमानो य्यजमानो ऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्ति गायत्र्या च त्रिष्टुभा च प्राणो गायत्र्यात्मा त्रिष्टुबेतावान्वै पशुर्य्यावान्प्राणश्चात्मा च तद्यावान्पशुस्तावतैवैनामेतत्प्रवृणक्त्यथो ऽअग्निर्वै गायत्रीन्द्रास्त्रिष्टुबैन्द्राग्नोग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्तीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतत्प्रवृणक्ति तयोः सप्त पदानि सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥७॥ तां य्यदाग्निः सन्तपति । अथैनामर्च्चिरारोहति य्योषा वाऽउखा व्वृषाग्निस्तस्माद्यदा व्वृषा य्योषाᳬं सन्तपत्यथास्याᳬंरेतो दधाति ॥ ८ ॥ तद्धैके । य्यदि चिरमर्च्चिरारोहत्यङ्गारानेवावपत्युभयेनैषोऽग्निरिति न तथा कुर्यादस्थन्वान्वाव पशुर्जायतेऽथ तन्नाग्रऽएवास्थन्वन्तमिव न्यृषन्ति रेतऽइवैव दधति रेतऽउऽएतदनस्थिकं य्यदर्च्चिस्तस्मादेनामर्च्चिरेवारोहेत् ॥९॥ तां य्यदार्च्चिरारोहति । अथास्मिन्त्समिधमादधाति रेतो वाऽएनामेतदापद्यत ऽएषोऽग्निस्तस्मिन्नेताᳬं रेतसि सम्भूतिं दधाति ॥१०॥ सा कार्मुकी स्यात् । देवाश्चासुराश्चोभये प्राजापत्या ऽअस्पर्द्धन्त ते देवाऽ अग्निमनीकं कृत्वासुरानभ्यायंस्तस्यार्च्चिषः प्रगृहीतस्यासुराऽअग्रं प्रावृश्चंस्तदस्यां प्रत्यतिष्ठत्स क्रमुकोऽभवत्तस्मात्स स्वादू रसो हि तस्मादु लोहितो ऽर्च्चिर्हि सऽएषोऽग्निरेव य्यत्क्रमुको ऽग्निमेवास्मिन्नेतत्सम्भूतिं दधाति ॥११॥ प्रादेशमात्री भवति । प्रादेशमात्रो वै गर्भो व्विष्णुरात्मसम्मिता-

१-३. मा सं. ११. ६९. ४. यथैव इति. घ. ५. नेवाव इति. घ.
६. एषो इति. घ. ७. श्चोभये इति. घ. ८. विष्णुरात्मसंमितामेव इति. घ.

मेवास्मिन्नेतत्सम्भूतिं दधाति ॥१२॥ घृते न्युप्ता भवति । अग्निर्य्यस्यै य्योनेरसृज्यत तस्यै घृतमुल्बमासीत्तस्मात्तत्प्रत्युद्दीप्यत ऽआत्मा ह्यस्यैष तस्मात्तस्य न भस्म भवत्यात्मैव तदात्मानमप्येति न वाऽउल्बं गर्भँ हिनस्त्यहिँसाया ऽउल्बाद्धै जायमानो जायत ऽउल्बाज्जायमानो जायाताऽइति ॥१३॥ तामादधाति[1] । "द्रवन्नः सर्पिरासुति"[2] रिति दार्व्वन्नः[3] सर्पिरशनऽइत्येत"त्प्रत्नो होता व्वरेण्य"ऽइति सनातनो होता व्वरेण्य ऽइत्येतत्स "हसस्पुत्रो ऽअद्भुत"[4]ऽइति बलं वै सहो बलस्य पुत्रो[6]ऽद्भुत ऽइत्येतत्तिष्ठन्नादधाति स्वाहाकारेण तस्योपरि बंधुः[5] ॥१४॥ तद्वाऽआत्मैवोखा । य्योनिर्मुञ्जाः शणा जरायूल्बं घृतं गर्भः समित् ॥१५॥ बाह्योखा भवति । अन्तरे मुञ्जा बाह्यो ह्यात्मान्तरा य्योनिर्बाह्ये मुञ्जा[7] भवन्त्यन्तरे शणा बाह्या हि य्योनिरन्तरं जरायु बाह्ये शणा भवन्त्यन्तरं घृतं बाह्यँ हि जराय्वन्तरमुल्बं बाह्यं घृतं भवत्यन्तरा सामद्बाह्यंᳲ ह्युल्बमन्तरो गर्भऽएतेभ्यो वै जायमानो जायते[8] तेभ्य ऽएवैनमेतज्जनयति ॥१६॥ Cf. का. श. ८. ६. ५; तै. सं. ५. १. ९; मै. ३. १. १०; कठ. सं. १९. १०; कपि. ३०. ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ६. २.)

६. ४. ५.

( समिदाधानम् )

अथ व्वैकङ्कतीमादधाति । प्रजापतिर्य्यां प्रथमामाहुतिमजुहोत्स हुत्वा य्यत्र न्यमृष्ट ततो व्विकङ्कतः समभवत्सैषा प्रथमाहुतिर्व्वैकङ्कतस्तामस्मिन्नेतज्जुहोति तयैनमेतत्प्रीणाति "परस्याऽअधि संव्वतोऽवराँ २॥ऽअभ्यातर[10] । य्यत्राहमस्मि ताँ २॥ऽअवे"[9]ति य्यथैव य्यत-

---

१. आदधाति इति. च.　२. मा. सं. ११. ७०.　३. दार्वन्न इति घ.
४, ५. मा. सं. ११. ७०.　६. पुत्रो इति घ.　७. मुञ्जा इति. ग, घ.
८. जायते इति. घ.　९. मा. सं. ११. ७१.　१०. अभ्यातर इति. घ.

जुस्तथा बंधुः ॥१॥ अथौदुम्बरीमादधाति । देवाश्चासुराश्चोभये प्राजापत्याऽअस्पर्द्धन्त ते ह सर्व्वऽएव व्वनस्पतयोऽसुरानभ्युपेयुरुदुम्बरो हैव देवान्न जहौ ते देवाऽअसुराञ्जित्वा तेषां व्वनस्पतीनवृञ्जत ॥२॥ ते होचुः । हन्त य्यैषु व्वनस्पतिषूर्ग्गो रसऽ उदुम्बरे तन्दधाम ते य्यद्यपक्रामेयुर्यातयामाऽअपक्रामेयुर्यथा धेनुर्दुग्धा य्यथानड्वानूहिवानिति तद्यैषु व्वनस्पतिषूर्ग्गो रसऽआसीदुदुम्बरे तमदधुस्तयैतदूर्ज्जा सर्व्वान्वनस्पतीन्प्रति[1] पच्यते तस्मात्स[2] सर्व्वदार्द्रः सर्व्वदा क्षीरी तदेतत्सर्व्वमन्नं य्यदुदुम्बरः सर्व्वे व्वनस्पतयः सर्व्वैरेवैनमेतदन्नेन प्रीणाति सर्व्वैर्व्वनस्पतिभिः समिन्धे ॥३॥ "परमस्याः परावत"[3]ऽइति । य्या परमा परावदित्येत"द्रोहिदश्वऽइहागही"ति रोहितो ह्यग्नेरश्वः "पुरीष्यः पुरुप्रिय"ऽइति पशव्यो बहुप्रियऽइत्येतद"ग्ने त्वं[6] तरामृध"ऽइत्यग्ने त्वं तर सर्व्वान्पाप्मनऽइत्येतत् ॥४॥ अथापरशुवृक्णमादधाति । जायतऽएष ऽएतद्यच्चीयते स ऽएष सर्व्वस्माऽअन्नाय जायतऽएतद्ध्वैकमन्नं य्यदपरशुवृक्णं तेनैनमेतत्प्रीणाति "[7]य्यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । सर्व्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्ये"ति य्यथैव य्यजुस्तथा बधुस्तद्यत्किञ्चापरशुवृक्णं तदस्माऽएतत्स्वदयति तदस्माऽअन्नं कृत्वापिदधाति ॥५॥ अथाधःशयमादधाति । जायतऽएष ऽएतद्यच्चीयते स ऽएष सर्व्वस्माऽअन्नाय जायतऽएतद्ध्वैकमन्नं य्यदधः शयं तेनैनमेतत्प्रीणाति "[8]य्यदत्त्युपजिह्विका य्यद्वम्रोऽअतिसर्पती"त्युपजिह्विका वाहि तदत्ति व्वम्रो वातिसर्पति "[9]सर्व्वं तदस्तुते घृतं तज्जुषस्व यविष्ठ्ये[10]ति य्यथैव य्यजुस्तथा बन्धुस्तद्यत्किञ्चाधः शयं तदस्मा[11]ऽएतत्स्वदयति तदस्माऽअन्नं कृत्वापिदधा[12]ति ॥६॥ अथैताऽउत्तराः पालाश्यो भव-

---

१. प्रतिपद्यत इति. च, ङ. २. तस्मात्स इति. घ. ३–६. मा. सं. ११. ७२. ७. मा. सं. ११.७३. ८, ९. मा. सं. ११. ७४. १०. ष्ठ्येति इति. घ. ११. तदस्वा इति. ग, घ. १२. अपिदधाति इति. च.

न्ति । ब्रह्म वै पलाशो ब्रह्मणैवैनमेतत्समिन्धे यद्वेव पालाश्यः सोमो वै पलाशऽएषो ह परमाहुतिर्यत्सोमाहुतिस्तामस्मिन्नेतज्जुहोति तयैनमेतत्प्रीणाति[1] ॥७॥ "अहरहरप्रयावं[2] भरन्तऽ"इति । अहरहरप्रमत्ताऽआहरन्त ऽइत्येतद् "अश्वायेव[3] तिष्ठते घासमस्मा"ऽइति यथाश्वाय तिष्ठते घासमित्येत"द्रा यस्पोषेण[4] समिषा मदन्त"ऽइति रय्या च पोषेण च समिषा मदन्तऽइत्येत "दग्ने[5] मा ते प्रतिवेशा रिषामे"ति यथैवास्य प्रतिवेशो न रिष्येदेवमेतदाह ॥८॥ "नाभा[6] पृथिव्याः समिधानेऽअग्ना"विति । एषा ह नाभिः पृथिव्यै यत्रैषऽएतत्समिध्यते "रायस्पोषाय बृहते हवामह"ऽइति रय्यै च पोषाय च बृहते हवामहऽइत्येतदि"रंमदमि"तीरया ह्येष मत्तो "बृहदुक्थ"मिति बृहदुक्थो ह्येष "यजत्र"मिति यज्ञियमित्येत"ज्जेतार[11]मग्निं पृतनासु सासहि"मिति जेता ह्यग्निः[12] पृतनाऽउ सासहिः[13] ॥९॥ "याः[14] सेनाऽअभीत्वरीः । व्याधिनीरुगणाऽउत । ये स्तेना ये च तस्करास्तांस्ते अग्नेऽपि दधाम्यास्ये ॥ दंष्ट्राभ्यां मलिम्लून्ये जनेषु मलिम्लवो यो ऽअस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्योऽअस्मान्धिप्साच्च सर्व्वं तं[15] भस्मसा कुर्व्वि"ति ॥१०॥ एतद्वै देवाः । यश्चैनानद्वेड्य[16]श्चाद्विषुस्तमस्माऽअन्नं कृत्वाप्यदधुस्तेनैनमप्रीणन्नन्नमहैतस्या भवद्दहदु देवानां पाप्मानं तथैवैतद्यजमानो यश्चैनं द्वेष्टि यश्च द्वेष्टि तमस्माऽअन्नं कृत्वापिदधाति तेनैनं प्रीणात्यन्नमहैतस्य भवति दहत्यु यजमानस्य पाप्मानम् ॥११॥ ताऽएताऽएकादशा दधाति[17] । अक्षत्रियस्य वा पुरोहितस्य वा सर्व्वं वै तद्यदेकादश सर्व्वं तद्यदक्षत्रियो वा पुरोहितो वा ॥१२॥ द्वादश क्षत्रियस्य वा पुरोहितस्य वा । सर्व्वं वै तद्यद्द्वादश सर्व्वं तद्यत्क्षत्रियो वा पुरोहितो वा ॥१३॥

---

१. प्रीणाति इति. च.  २-५. मा. सं. ११. ७५.  ६-१०. मा सं. ११. ६.
११. जेतारमिति ग.  १२. ह्यग्निरिति. ग, घ.  १३. सासहिः इति. घ.
१४. मा. सं. ११. ७७-८०.  १५. त इति. घ.
१६. नद्वेद्यं इति. घ, नद्वेद्यमिति. ग.  १७. दधाति इति. च.

स पुरोहितस्यादधाति । संँशितं मे ब्रह्म सँशितं वीर्यं बलम् । सँशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहित"ऽइति तदस्य ब्रह्म च क्षत्रं च संँश्यति ॥१४॥ अथ क्षत्रियस्य । "उदेषां वाहूऽअतिरमुद्वर्चोऽअथो बलम् । क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ २॥ ऽअह"मिति यथैव क्षिणुयादमित्रानुन्नयेत्स्वानेवमेतदाहोभे त्वेवैतेऽआदध्यादयं वाऽअग्निर्ब्रह्म च क्षत्रं चेममेवैतदग्निमेताभ्यामुभाभ्याँसमिन्धे ब्रह्मणा च क्षत्रेण च ॥१५॥ तास्त्रयोदश सम्पद्यन्ते । त्रयोदश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥१६॥ प्रादेशमात्र्यो भवन्ति । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसंमितेनैवैनमेतदन्नेन प्रीणाति यदु वाऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति तिष्ठन्नादधाति तस्योपरि बन्धुः स्वाहाकारेण रेतो वाऽइदँ सिक्तमयमग्निस्तस्मिन् यत्काष्ठान्यस्वाहाकृतान्यभ्यादध्याद्धिँस्याद्धैनं ता यत्समिधस्तेन नाहुतयो यदु स्वाहाकारेण तेनान्नमन्नँहि स्वाहाकारस्तथो हैनं न हिनस्ति ॥ १६ ॥ Cf. का. श. ८. ६. ३; मै. सं. ३. १. ९; काठ. १९. १०; कपि. ३०. ८.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ (अ. ६. ३.)

६. ४. ६.

( भस्मोद्वपनादि )

अथ विष्णुक्रमान्क्रात्वा । वात्सप्रेणोपस्थायास्तमितऽआदित्ये भस्मैव प्रथममुद्वपत्येतद्वाऽपनमेतेनान्नेन प्राणीत्येताभिः समिद्भिस्त-

---

१. मा. सं. ११. ८१. २. सँ यति इति. च.

३. क्षत्रियस्य. उदेषां इति. ग, घ. ४. मा. सं ११. ८२.

स्यान्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यावर्त्तयति तस्मिन्नपहतपाप्मन्वाचं व्विसृजते व्वाचं व्विसृज्य समिधमादधाति रात्र्याऽएवैनमेतदन्नेन प्रीणाति रात्रीᳫंरात्रीमप्रयावं भरन्तऽइति तस्योक्तो बन्धू रात्र्याऽएवैतामरिष्टिᳫं स्वस्तिमाशास्ते तद्यत्किंचातो रात्र्योपसमादधात्याहुतिकृतᳫं हैवास्मै तदुपसमादधाति[1] ॥१॥ अथ प्रातरुदितऽआदित्ये । भस्मैव प्रथममुद्वपत्येतद्वाऽएनमेतेनान्नेन प्रीणात्येतया समिधा य्यच्च रात्र्योपसमादधाति तस्यान्नस्य जग्धस्यैष पाप्मा सीदति भस्म तेनैनमेतद्व्यावर्त्तयति तस्मिन्नपहतपाप्मन्वाचं व्विसृजते व्वाचं व्विसृज्य समिधमादधात्यह्नऽएवैनमेतदन्नेन प्रीणात्यहरहरप्रयावं भरन्तऽइति तस्योक्तो बंधुरह्नऽएवैतामरिष्टिᳫंस्वस्तिमाशास्ते तद्यत्किंचातोऽह्नोपसमादधात्याहुतिकृतᳫं हैवास्मै तदुपसमादधाति ॥ २ ॥ अहोरात्रे वाऽअभिवर्त्तमाने । संवत्सरमाप्नुतः संवत्सरऽइदᳫं सर्व्वमाह्नायैवैतामरिष्टिᳫं स्वस्तिमाशास्ते[2] ॥३॥ अथ य्यदास्मै व्व्रतं प्रयच्छन्ति । अथ व्व्रते न्यज्य समिधमादधाति न व्व्रते न्यञ्ज्यादित्यु हैकऽआहुराहुतिं तज्जुहुयादनवक्लृप्तं वै तद्यद्दीक्षित ऽआहुतिं जुहुयादिति ॥४॥ स वै न्यञ्ज्यादेव । दैवो वाऽअस्यैषऽआत्मा मानुषोऽयᳫं[3] स यन्न न्यञ्ज्यान्न[4] हैतं दैवमात्मानं प्रीणीयादथ य्यन्न्यनक्ति तथा हैतं दैवमात्मानं प्रीणाति सा य्यत्समित्तेन नाहुतिर्य्यदु व्व्रते न्यक्ता तेनान्नमन्नᳫं हि व्रतम् ॥५॥ स वै समिधमाधायाथ व्व्रतयति । दैवो वाँ[5]ऽअस्यैषऽआत्मा मानुषोऽयं देवाऽउ वाऽअग्रेऽथ मनुष्यास्तस्मात्समिधमाधायाथ व्व्रतयँति[6] ॥६॥ "अन्नँपतेऽन्नस्य नो देही"[7]ति । अश-

---

१. दधाति इति. च.  २. माशास्ते इति. च.  ३. मामुषो इति. घ.
४. न्यञ्ज्यान्न इति. ग. घ.  ५. वा इति. ग, घ.  ६. व्रतयति इति. च.
७. मा. सं. ११. ८३.

नपते ऽशनस्य नो 'देहीत्येतद्''नमीवस्य शुष्मिण'' ऽइत्यनशनायस्य शुष्मिणऽइत्येत''प्रप्रदातारं तारिष'' ऽइति यजमानो वै दाता प्रयजमानं तारिषऽइत्येतदूर्ज्जं नो धेहि द्विपदे चतुष्पदऽइत्याशिषमाशास्ते यदु भिन्नायै प्रायश्चित्तिमाहोत्तरस्मिंस्तदन्व्याख्यानऽइति ॥७॥ यद्येषोखा भिद्येत । याभिन्ना न वा स्थाल्युरुबिली स्यात्तस्यामेनं पर्य्यावपेदार्च्छति वाऽएषोखा या भिद्यतेऽनार्त्तोऽइयं देवतानार्त्तायामिमनार्त्तं बिभराणीति तत्रोखायै कपालं पुरस्तात्प्रास्यति तथो हैषऽएतस्यै स्वायै योनेर्न च्यवते ॥८॥ अथ मृदमाहृत्य । उखां चोपशयां च पिष्ट्वा सꣳसृज्योखां करोत्येतयैवावृतानुपहरन्यजुस्तूष्णीमेव पक्त्वा पर्य्यावपति कर्मणिरेव तत्र प्रायश्चित्तिःपुनस्तत्कपालमुखायामुपसमस्योखां चोपशयां च पिष्ट्वा सꣳसृज्य निदधाति प्रायश्चित्तिभ्यः ॥९॥ अथ यद्येषऽउख्योऽग्निरनुगच्छेत् । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि स ऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चमुद्धृत्योपसमाधायोखां प्रवञ्ज्यादेतयैवावृतानुपहरन्यजुस्तूष्णीमेव तां यदाग्निरारोहति ॥१०॥ अथ प्रायश्चित्ती करोति । सर्व्वेभ्यो वाऽएषऽएतं कामेभ्यऽआधत्ते तद्यदेवास्यात्र कामानां व्यवच्छिद्यतेऽग्नावनुगते तदेवैतत्संतनोति सन्दधात्युभे प्रायश्चित्ती करोत्यध्वरप्रायश्चित्तिं चाग्निप्रायश्चित्तिं चाध्वरस्य पूर्व्वामथाग्नेस्तस्योक्तो बन्धुः ॥११॥ स समिधाज्यस्योपहत्य । आसीनऽआहुतिं जुहोति ''विश्वकर्मणे स्वाहे''त्यथोपोत्थाय समिधमादधाति ''पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञै''रित्येतास्त्वा देवताः पुनः समिन्धतामित्येतद्''घृतेन त्वं

---

१ देहीति. इति. घ, देहीति, इति. च. २, ३ मा. सं. ११. ८३.
४. प्रप्रदातारमिति. घ. ५. च्यवते इति च. ६. कर्मणिरेव इति. च.
७. प्रायश्चित्तिभ्य इति. च. ८. आरोहति इति. च.
९. उपहृत्य । आसीन इति. ग, घ. १०-१२. मा. सं. १२. ४४.

तन्वंवर्द्धयस्व सत्याः सन्तु य्यजमानस्य कामा''ऽ इति घृतेनाह त्वं तन्वंवर्द्धयस्व य्येभ्यऽउ त्वां कामेभ्यो य्यजमान आधत्त तेऽस्य सर्व्वे सत्याः सन्त्वित्येतत् ॥१२॥ अथ य्यदि गार्हपत्योऽनुगच्छेत् । अरणी वाव स गच्छत्यरणिभ्याᳫं हि सऽआहृतो भवत्यरणिभ्यामेवैनं मथित्वोपसमाधाय प्रायश्चित्ती करोति ॥१३॥ अथ य्यदि प्रसुतऽआहवनीयोऽनुगच्छेत् । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि सऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चᳫंसाङ्गारिणेन हृत्वोपसमाधाय प्रायश्चित्ती करोति य्यस्तस्मिन्काले ऽध्वरः स्यात्तामध्वरप्रायश्चित्तिङ्कुर्य्यात्समान्यग्निप्रायश्चित्तिः ॥१४॥ अथ य्यद्याग्नीध्रीयोऽनुगच्छेत् । गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि सऽआहृतो भवति गार्हपत्यादेवैनं प्राञ्चमुत्तरेण सदो हृत्वोपसमाधाय प्रायश्चित्ती करोत्यथ य्यदि गार्हपत्योऽनुगच्छेत्तस्योक्तो बन्धुः ॥१५॥ Cf. का. श. ८. ६. ४; तै. सं. ५. २. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ (अ. ६. ४)

(षष्ठोऽध्यायः)

इति चतुर्थः प्रपाठकस्समाप्तः ॥

(कण्डिकासंख्या १००)

अथ पञ्चमः प्रपाठकः ॥

६. ५. १.

(रुक्मप्रतिमोचनमुख्याग्निधारणं च)

ॐ रुक्मं प्रतिमुच्य बिभर्त्ति । सत्यᳫं हैतद्यद्रुक्मः सत्यं वा ऽएतं य्यन्तुमर्हति सत्येनैतं देवाऽअबिभरुः सत्येनैवैनमेतद्बिभर्त्ति ॥१॥ त-

१. वर्धयस्वेति. ग, घ. २. करोति इति. च. ३. अनुगच्छेदिति. घ. ४. हृत्वो इति. घ.

 

द्यत्तत्सत्यम् । असौ स ऽआदित्यः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरेषोऽमृतꣳ हिरण्यममृतमेष परिमण्डलो भवति परिमण्डलो ह्येष ऽएकविꣳशतिनिर्बाध ऽएकविꣳशो ह्येष बहिष्टान्निर्बाधं बिभर्त्ति रश्मयो वाऽएतस्य निर्बाधा बाह्यतऽउ वाऽएतस्य रश्मयः ॥२॥ यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । असौ वाऽआदित्यऽएष रुक्मो नो हैतमग्निं मनुष्यो मनुष्यरूपेण यन्तुमर्हत्येतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥३॥ यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । रेतो वाऽइदꣳ सिक्तमयमग्निस्तेजो व्वीर्यꣳ रुक्मोऽस्मिंस्तद्रेतासि तेजो व्वीर्यन्दधाति ॥४॥ यद्वेव रुक्मं प्रतिमुच्य बिभर्त्ति । एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्माऽएतमन्तिकाद्गोप्तारमकुर्व्वन्नमुमेवादित्यमसौ वाऽआदित्यऽएष रुक्मस्तथैवास्माऽअयमेतमन्तिकाद्गोप्तारङ्करोति[1] ॥५॥ कृष्णाजिने निष्यूतो भवति । यज्ञो वै कृष्णाजिनं यज्ञो वाऽएतं यन्तुमर्हति यज्ञेनैतं देवाऽअबिभरुर्यज्ञेनैवैनमेतद्बिभर्त्ति लोमतश्छन्दाꣳसि वै लोमानि छन्दाꣳसि वाऽएतं यन्तुमर्हन्ति छन्दोभिरेतं देवाऽअबिभरुश्छन्दोभिरेवैनमेतद्बिभर्त्ति॥ ६ ॥ अभि शुक्लानि च कृष्णानि च लोमानि निष्यूतो भवति । ऋक्सामयोर्हैते रूपेऽऋक्सामे वाऽएतं यन्तुमर्हतऽऋक्सामाभ्यामेतं देवाऽअबिभरुर्ऋक्सामाभ्यामेवैनमेतद्बिभर्त्ति शाणो रुक्मपाशस्त्रिवृत्तस्योक्तो बंधुः॥७॥ तमुपरि नाभि बिभर्त्ति । असौ वाऽआदित्यऽएष रुक्मऽउपरि नाभ्यु वाऽएषः[2] ॥८॥ ( शतम् ३८०० ) यद्वेवोपरिनाभि[3] । अवाग्वै नाभे रेतः प्रजातिस्तेजो व्वीर्यꣳ रुक्मो नेन्मे रेतः प्रजातिं तेजो व्वीर्यꣳ रुक्मः प्रदहादिति ॥९॥ यद्वेवोपरिनाभि । एतद्वै पशोर्म्मेध्यतरं यदुपरिनाभि पुरीषसꣳहिततरं यदवाङ्नाभेस्तद्यदेव पशोर्म्मेध्यतरं तेनैनमेतद्बिभर्त्ति ॥१०॥ यद्वेवोपरिनाभि[4] । यद्वै प्राणस्यामृतमूर्द्ध्वं तन्नाभेरूर्द्ध्वैः प्राणैरुच्चरत्यथ यन्मर्त्यं पराङ्नाभिम-

---

१. अयमिति. घ. २. एष इति. च. ३, ४. नाभि इति. ग,घ.

त्येति तद्यदेव प्राणस्यामृतं तदेनमेतदभिसम्पादयति तेनैनमेतद्बिभर्त्ति ॥११॥ अथैनमासन्द्या बिभर्त्ति । इयं वाऽआसन्द्यस्याँ हीदꣳ सर्व्वमासन्नमियं वाऽएतं य्यन्तुमर्हत्यनयैतं देवाऽअबिभरुरनयैवैनमेतद्बिभर्त्ति ॥१२॥ औदुम्बरी भवति । ऊर्ग्वै रसऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन बिभर्त्त्यथो सर्व्वे ऽएते व्वनस्पतयो य्यदुदुम्बरः सर्व्वैं वा ऽएतं व्वनस्पतयो य्यन्तुमर्हन्ति सर्व्वैरेतं व्वनस्पतिभिर्देवाऽअबिभरुः सर्व्वैरेवैनमेतद्वनस्पतिभिर्बिभर्त्ति ॥१३॥ प्रादेशमात्र्यूर्द्ध्वा भवति । प्रादेशमात्रो वै गर्भो व्विष्णुर्य्योनिरेषा गर्भसम्मितां तद्योनिङ्करोत्यरत्निमात्री तिरश्ची बाहुर्व्वाऽअरत्निर्बाहुनो वै व्वीर्यं क्रियते व्वीर्यसम्मितैव तद्भवति व्वीर्यं वाऽएतं य्यन्तुमर्हति व्वीर्येणैतं देवाऽअबिभरुर्व्वीर्येणैवैनमेतद्बिभर्त्ति ॥१४॥ चतुःस्रक्तयः पादा भवन्ति । चतुःस्रक्तीन्यनूच्यानि चतस्रो वै दिशो दिशो वाऽएतं य्यन्तुमर्हन्ति दिग्भिरेतं देवाऽअबिभरुर्दिग्भिरेवैनमेतद्बिभर्त्ति मौञ्जीभी रज्जुभिर्व्युता भवति त्रिवृद्भिस्तस्योक्तो बन्धुर्मृदा दिग्धा तस्योऽएवोक्तोऽथोऽअनतिदाहार्यं ॥१५॥ अथैनꣳ शिक्येन बिभर्त्ति । इमे वै लोकाऽएषोऽग्निर्दिशः शिक्यं दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातुं य्यच्छक्नुवन्ति तस्माच्छिक्यं दिग्भिरेवैनमेतद्बिभर्त्ति षडुद्यामं भवति षड्ढि दिशो मौञ्जं त्रिवृत्तस्योक्तो बन्धुर्मृदा दिग्धं तस्योऽएवोक्तोऽथोऽअनतिदाहाय ॥१६॥ तस्यापऽएव प्रतिष्ठा । अप्सु हीमे लोकाः प्रतिष्ठिताऽआदित्यऽआसञ्जनमादित्ये हीमे लोका दिग्भिरासक्ताः स य्यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥१७॥ य्यद्वेवैनꣳ शिक्येन बिभर्त्ति । संवत्सरऽएषोऽग्निर्ऋतवः शिक्यमृतुभिर्हि संवत्सरः शक्नोति स्थातुं य्यच्छक्नोति तस्माच्छिक्यमृतुभिरेवैनमेत-

---

१. बिभर्ति इति. च. एवमग्रेऽपि २. ऊर्ग्वै इति. ग, घ.
३. वनस्पतिभिरिति. ग, घ. ४. दाहाय इति. च. एवमग्रेऽपि ।
५. द्बिभर्ति इति. ग. घ. ६. मृदा इति. घ. ७. लोका इति. ग, घ.
८. मृतु इति. घ.

द्विभर्त्ति षडुद्यामं भवति षड्वृत्यृतवः ॥१८॥ तस्याहोरात्रेऽएव प्रति-ष्ठा । अहोरात्रयोर्ह्ययᳬ संवत्सरः प्रतिष्ठितश्चन्द्रमाऽआसञ्जनं चन्द्रमसि ह्ययᳬ संवत्सरऽऋतुभिरासक्तः स य्यो हैतदेवं व्वेदै-तेनैव रूपेणैतद्रूपं विभार्त्ति तस्य ह वाऽएष संवत्सरभृतो भवति य्यऽएवं व्वेद संवत्सरोपासितो हैव तस्य भवति य्यऽएवं न व्वे-देत्यधिदेवतम् ॥१९॥

( ग्रन्थस्याऽर्द्धम् । कण्डिकाः ३८१२ )

अथाध्यात्मम् । आत्मैवाग्निः प्राणाः शिक्यं प्राणैर्ह्ययमात्मा शक्नोति स्थातुं य्यच्छक्नोति तस्माच्छिक्यं प्राणैरेवैनमेतद्बिभार्त्ति षडुद्यामं भवति षड्ढि प्राणाः ॥२०॥ तस्य मनऽएव प्रतिष्ठा । मनसि ह्ययमात्मा प्रतिष्ठितोऽन्नमासञ्जनमन्ने ह्ययमात्मा प्राणैरा-सक्तः स य्यो हैतदेवं व्वेदैतेनैव रूपेणैतद्रूपं बिभर्त्ति ॥२१॥ अथैन-मुखया बिभर्त्ति । इमे वै लोकाऽउखेमे वाऽएतँल्लोका य्यन्तुमर्हन्त्ये-भिरेतँल्लोकैर्हैवाऽअबिभरुरेभिरेवैनमेतँल्लोकैर्बिभर्त्ति ॥२२॥ सा य्युदुखा नाम । एतद्वै देवाऽएतेन कर्मणैतयावृतेमाँल्लोकानुदखन-न्युदुदखनंस्तस्मादुत्खोत्खा ह वै तामुखेत्याचक्षते परोक्षं परोक्ष-कामा हि देवाः ॥२३॥ तद्वाऽउखेति द्वेऽअक्षरे । द्विपाद्यजमानो य्यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्बिभर्त्ति सोऽएव कुम्भी सा स्थाली तत्षट् षडृतवः संवत्सरः संवत्सरोऽ-ग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥२४॥ अथैनमिण्ड्वा-भ्यां परिगृह्णाति । असौ वाऽआदित्यऽएषोऽग्निरहोरात्रेऽइण्ड्वेऽअमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः ॥२५॥ य्यद्वेवैनमिण्ड्वाभ्यां परिगृह्णाति । असौ वाऽआदित्यऽएषो-

---

१. प्रतिष्ठा इति. च. २. वेद इति. घ. ३. देवतम् इति. ग, घ.
४. एवं 'क ग' पुस्तकयोरेव लिखितमुपलभ्यते । ५. प्राणा इति. घ.
६. प्रतिष्ठा. इति. च. ७. विभर्ति ति. च. एवमग्रेऽपि ८. नुदखनन्निति. घ.
९. देवाः इति. च. १०. भवति इति. च. ११. परिगृह्णातिं इति. घ.

ऽग्निरिमाऽउ लोकाविण्ड्वेऽअमुं तदादित्यमाभ्याँल्लोकाभ्यां परिगृ-
ह्णाति तस्मादेषऽआभ्याँल्लोकाभ्यां परिगृहीतः परिमण्डले भवतः
परिमण्डलौ हीमौ लोकौ मौञ्जे त्रिवृती[1] तस्योक्तो बन्धुर्मृदा दिग्धे
तस्योऽएवोक्तोऽथोऽअनतिदाहाय ॥२६॥ अथातः सम्पदेव । आ-
सन्दी चोखा च शिक्यं च रुक्मपाशश्चाग्निश्च रुक्मश्च तत्षट्
षड्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा ताव-
त्तद्भवतीण्ड्वे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्याव-
त्यस्य मात्रा तावत्तद्भवति[2] ॥२७॥ अथ सर्व्वसम्पत् । चत्वारः पादा-
श्चत्वार्यनूच्यानि शिक्यं च रुक्मपाशश्च यदु किञ्च रज्ज्वयꣳ
शिक्यं तदनूखाग्नी रुक्मस्तत्त्रयोदश त्रयोदश मासाः संवत्सरः
संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति[3] ॥२८॥ Cf.
का. श. ८. ७. १.; तै. सं. ५. १. १०; मै. सं. ३. २. १; काठ
सं. १९. ११; कपि. ३२. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. ७. १. )

## ६. ५. २.

### ( रुक्मप्रतिमोचनविष्णुक्रमणे )

तं तिष्ठन्[4] प्रतिमुञ्चते । असौ वाऽआदित्यऽएष रुक्मस्तिष्ठतीव
वाऽअसावादित्योऽथो तिष्ठन्वै[5] वीर्यवत्तरऽउदङ् प्राङ् तिष्ठंस्त-
स्योक्तो बन्धुः ॥१॥ "[6]दृशानो रुक्मऽउर्व्या व्यद्यौदि"ति । दृश्य-
मानो ह्येष रुक्मऽउर्व्या विद्योतते "दुर्म्मर्षमायुः श्रिये रुचान"ऽइति
दुर्म्मरं वाऽएतस्यायुः श्रियोऽएष रोचतेऽ "ग्निरमृतोऽअभवद्वयोभि"-

---

१ त्रिवृती इति. ग. २, ३. भवति इति. च.

४. See तै. सं. ५. १. १०. आसीनः प्रतिमुञ्चते । ५. तिष्ठन्वै इति. च.

६–८. मा. सं. १२.१. ९. द्वयोभिरिति इति ग, द्वयोभिरिति इति. घ.

रिति सर्व्वैर्व्वा ऽएष व्वयोभिरमृतोऽभव"[1]द्यदेनं द्यौरजनयदि"ति द्यौर्व्वा ऽएतमजनय"[2]त्सुरेता" ऽइति सुरेता ह्येषा य्यस्याऽएष रेतः[3] ॥२॥ अथैनमिण्ड्वाभ्यां परिगृह्णाति । "[4]नक्तोषासा समनसा व्विरूपे" ऽइत्यहोरात्रे वै नक्तोषासा समनसा व्विरूपे "[5]धापयेते शिशुमेकꣳ समीची" ऽइति य्यद्वै किञ्चाहोरात्रयोस्तेनैतमेव समीची [6]धापयेते "द्यावा[7]क्षामा रुक्मोऽअन्तर्व्विभाती"ति ह्रन्नेतद्यजुर्ज्जपतीमे वै द्यावा-पृथिवी द्यावाक्षामा तेऽएष य्यन्नन्तरा व्विभाति तस्मादेतद्ध्ररन्यजुर्ज्ज-पति "देवा[8] ऽअग्निं धारयन्द्रविणोदा" ऽइति परिगृह्य निदधाति प्राणा वै देवा द्रविणोदास्तऽएतमग्रऽएवमधारयंस्तैरेवैनमेतद्धारय[9]ति ॥३॥ अथ शिक्यपाशं प्रतिमुञ्चते । "वि[10]श्वा रूपाणि प्रतिमुञ्चते कवि"-रित्य[11]सौ वाऽआदित्यः कविर्व्विश्वा रूपा शिक्यं "[12]प्रासावीद्भद्रं द्विपदे चतुष्पद" ऽइत्युद्यन्वाऽएष द्विप[13]दे चतुष्पदे च भद्रं प्रसौति "वि ना[14]कमख्यत्सविता व्वरेण्य" ऽइति स्वर्गो वै लोको नाकस्त-मेषऽउद्यन्नेवानुविपश्य "[15]त्यनु प्रयाणमुषसो व्विराजती"त्युषा वाऽ-अग्रे व्युच्छति तस्याऽएष व्युष्टिं व्विराजन्न[16]नूदेति ॥४॥ अथैनमतो व्विकृत्या व्विकरोति । इदमेवैतद्रेतः सिक्तं व्विकरोति तस्माद्योनौ रेतः सिक्तं व्विक्रियते ॥५॥ "[17]सुपर्णोऽसि गरुत्मानि"ति । व्वीर्यं वै सुपर्णो गरुत्मान् व्वीर्यमेवैनमेतदभिसँस्करोति "त्रिवृ[18]त्ते शिर" ऽइति त्रिवृतमस्य स्तोमꣳ शिरः करोति "[19]गायत्रं चक्षुरि"ति गायत्रं चक्षुः करोति "[20]बृहद्रथन्तरे [21]पक्षावि"ति बृहद्रथन्तरे पक्षौ करोति "[22]स्तोमऽआत्मे"ति स्तोममात्मानं करोति पञ्चविꣳश"[23]छन्दाꣳ-

---

१, २. मा. सं. १२. १. ३. रेत इति. घ. ४, ५. मा. सं. १२. २.
६. धापयेते इति. ग. ७, ८. मा. सं. १२. २. ९. धारयति इति. च
१०, १२. मा. सं. १२. ३. ११. त्यसौ इति. ग, घ.
१३. द्विपदे च ष्पदे इति. च. १४, १५. मा. सं. १२. ३.
१६. नूदति इति. च. १७–२०. मा. सं. १२. ४.
२१. पक्षाविति इति. ग. २२, २३ मा. सं. १२. ४.

स्यङ्गानी''ति छन्दाᳬसि वाऽएतस्याङ्गानि "यजूᳬषि नामे''ति यदेनमग्निरित्याचक्षते तदस्य यजूᳬषि नाम "साम ते तनुर्व्वामदेव्यमि''त्यात्मा वै तनूरात्मा ते तनूर्व्वामदेव्यमित्येत "यज्ञायज्ञियं पुच्छमि''ति यज्ञायज्ञियं पुच्छं करोति "धिष्ण्याः शफा''ऽइति धिष्ण्यैर्व्वाऽएषोऽस्मिँल्लोके प्रतिष्ठितः "सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पते''ति तदेनᳬ सुपर्णं गरुत्मन्तं कृत्वाह देवान्गच्छ स्वर्ग्गँल्लोकं पते''ति ॥६॥ तं वाऽएतम्। अत्र पक्षपुच्छवन्तं व्विकरोति यादृग्वै योनौ रेतो व्विक्रियते तादृग्जायते तद्यदेतमत्र पक्षपुच्छवन्तं व्विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवाञ्जायते ॥७॥ तᳬहैके। एतया व्विकृत्याभिमन्त्र्यान्यां चितिं चिन्वन्ति द्रोणचितं वा रथचक्रचितं वा कङ्कचितं वा प्रऽउगचितं वोभयतः प्रऽउगं वा समुह्यपुरीषं वा न तथा कुर्याद्यथा पक्षपुच्छवन्तं गर्भं परिवृश्चेत्तादृक्तत्तस्मादेनᳬ सुपर्णचितमेव चिनुयात् ॥८॥ तमेतया व्विकृत्या। इतऽऊर्द्ध्वं प्राञ्चं प्रगृह्णात्यसौ वाऽआदित्यऽएषोऽग्निरमुं तदादित्यमितऽऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्यऽइतऽऊर्द्ध्वः प्राङ् धीयते परोबाहु प्रगृह्णाति परोबाहु ह्येष इतोऽथैनमुपावहरति तमुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥९॥ अथ व्विष्णुक्रमान्क्रमते। एतद्वै देवा व्विष्णुर्भूत्वेमाँल्लोकानक्रमन्त यद्विष्णुर्भूत्वाक्रमन्त तस्माद्विष्णुक्रमास्तथैवैतद्यजमानो व्विष्णुर्भूत्वेमाँल्लोकान्क्रमते ॥१०॥ स यः स व्विष्णुर्यज्ञः सः। स यः स यज्ञोऽयमेव स योऽयमग्निरुखायामेतमेव तद्देवाऽआत्मानं कृत्वेमाँल्लोकानक्रमन्त तथैवैतद्यजमानऽएतमेवात्मानं कृत्वेमाँल्लोकान्क्रमते ॥११॥ उदङ् प्राङ् तिष्ठन्। एतद्वै तत्प्रजापतिर्व्विष्णुक्रमैरुदङ् प्राङ् तिष्ठन्प्रजाऽअसृजत तथैवैतद्यजमानो व्विष्णुक्रमैरुदङ् प्राङ् तिष्ठन्प्रजाः सृजते ॥१२॥ "व्विष्णोः

---

१–५. मा. सं १२. ४. ६. एतम् इति. ग, घ. ७. पुच्छवन्तं इति. ग.

८. See. तं. सं. ५. ४. ११. द्रोणचितं चिन्वीत, कङ्कचितं चिन्वीत इत्यादि।

९. कृत्वेति. घ. १०. लोकानिति. घ. ११ मा. सं. १२. ५.

क्रमोऽसी''ति । विष्णुर्हि भूत्वा क्रमते "सपत्नहे''ति सपत्नान्ह्यत्र हन्ति "गायत्रं छन्दऽआरोहे''ति गायत्रं छन्दऽआरोहति "पृथिवी-मनु विक्रमस्वे''ति पृथिवीमनु विक्रमते प्रहरति पादं क्रमतऽ-ऊर्ध्वमग्निमुद्गृह्णात्यूर्ध्वो हि रोहति ॥१३॥ "विष्णोः क्रमोऽसी'' ति । विष्णुर्हि भूत्वा क्रमते "ऽभिमातिहे'' त्यभिमातीर्ह्यत्र हन्ति "त्रैष्टुभं छन्दऽआरोहे''ति त्रैष्टुभं छन्दऽआरोहत्य"न्तरिक्षमनु वि-क्रमस्वे''त्यन्तरिक्षमनु विक्रमते प्रहरति पादं क्रमतऽऊर्ध्वमग्निमुद्गृ-ह्णात्यूर्ध्वो हि रोहति ॥१४॥ "विष्णोः क्रमोऽसी''ति । विष्णुर्हि भूत्वा क्रमतेऽ"रातीयतो हन्ते''त्यरातीयतो ह्यत्र हन्ति "जागतं छन्दऽआरोहे''ति जागतं छन्दऽआरोहति "दिवमनु विक्रमस्वे''ति दिवमनु विक्रमते प्रहरति पादं क्रमतऽऊर्ध्वमग्निमुद्गृह्णात्यूर्ध्वो हि रोहति ॥१५॥ "विष्णोः क्रमोऽसी''ति । विष्णुर्हि भूत्वा क्रमते "शत्रूयतो हन्ते''ति शत्रुयतो ह्यत्र हन्त्या"नुष्टुभं छन्दऽआरोहे'' त्यानुष्टुभं छन्दऽआरोहति "दिशोऽनु विक्रमस्वे''ति सर्व्वा दिशो-ऽनु व्वीक्षते न प्रहरति पादं नेदिमाँल्लोकानतिप्रणश्यानीत्यूर्ध्वमेवा-ग्निमुद्गृह्णाति सऽँ ह्यारोहति ॥१६॥ Cf. का. श. ८. ७. २; तै. सं. ५. १. १०, ५. २. १; मै. सं. ३. १. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ. ७. २.)

## ६. ५. ३.

## ( शिक्यपाशोन्मोचनम् )

अथैनमिति प्रगृह्णाति । एतद्वै देवाऽअकामयन्त पर्ज्जन्यो रूपऽँ स्यामेति तऽएतेनात्मना पर्ज्जन्यो रूपमभवंस्तथैवैतद्यजमानऽएतेना-

---

१, ७, विष्णुर्हि इति. ग, घ. २, ४. मा. सं. १२. ५.

५, ११. क्रमत इति. ग, घ. ६, ८–१०, १२–१७. मा. सं. १२. ५.

१८. शत्रूयतो इति. घ. १९, २०. मा. सं. १२. ५.

त्मना पर्ज्जन्यो रूपं भवति ॥१॥ "अक्रन्ददग्निस्तनयन्निव द्यौ"रिति। क्रन्दतीव हि पर्ज्जन्यस्तनयन् "क्षामा रेरिहद्वीरुधः समञ्जन्नि"ति क्षमा वै पर्ज्जन्यो रेरिह्यमाणो व्वीरुधः समनक्ति "सद्यो जज्ञानो व्विहीमिद्धोऽअख्यदि"ति सद्यो वाऽएष जज्ञानऽइदꣳ सर्व्वं व्विख्यापय"त्या रोदसी भानुना भात्यन्तरि"तीमे वै द्यावापृथिवी रोदसी तेऽएष भानुनाभाति परोबाहु प्रगृह्णाति परोबाहु हि पर्ज्जन्यः ॥२॥ अथैनमुपावहरति । एतद्वै योऽस्मिँल्लोके रसो य्यदुपजीवनं तेनैतत्सहोर्ध्वऽइमाँल्लोकान् रोहत्यग्निर्व्वाऽअस्मिँल्लोके रसोऽग्निरुपजीवनं तद्यत्तावदेव स्यान्न हास्मिँल्लोके रसो नोपजीवनꣳ स्यादथ य्यत्प्रत्यवरोहत्यस्मिन्नेवैतल्लोके रसमुपजीवनं दधाति ॥३॥ य्यद्वेव प्रत्यवरोहति । एतद्वाऽएतदिमाँल्लोकानितऽऊर्ध्वो रोहति स स पराङिव रोहऽइयमु वै प्रतिष्ठा तद्यत्तावदेव स्यात्प्र हास्माल्लोकाद्यजमानश्च्यवेताथ य्यत्प्रत्यवरोहतीमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥४॥ य्यदेव प्रत्यवरोहति । एतद्वाऽएतादिमाँल्लोकानितऽऊद्ध्वो जयति स स पराङिव जयो सो वै पराङेव जयत्यन्ये वै तस्य जितमन्ववस्यन्त्यथ य्यऽउभयथा जयति तस्य तत्र कामचरणं भवति तद्यत्प्रत्यवरोहतीमानेवैतल्लोकानितश्चोद्ध्वानमुतश्चार्व्वाचो जयति ॥५॥ "अग्नेऽभ्यावर्त्तिन्। अभि मा निवर्त्तस्वाग्नेऽअङ्गिरः पुनरूर्ज्जा सह रय्ये"त्येतेन मा सर्व्वेणाभिनिवर्त्तस्वेत्येतच्चतुष्कृत्वः प्रत्यवरोहति चतुर्हि कृत्वऽऊद्ध्वो रोहति तद्यावत्कृत्वऽऊद्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति तमुपावहृत्योपरिनाभि धारयति तस्योक्तो बन्धुः ॥६॥ अथैनमभिमन्त्रयते । आयुर्व्वाऽअग्निरायुरेवैतदात्मन्धत्तऽ"आ त्वाहार्षमि"त्या ह्येनꣳ हरन्त्य"न्तरभूरि"त्यायुरेवैतदन्तरात्मन्धत्ते "ध्रुवस्तिष्ठा

१. भवति इति. घ. २–५. मा. सं. १२. ६. ६. पर्जन्य इति. घ.
७. एतद्वै इति. ग, घ. ८. सहोर्ध्व इति. ग, घ. ९. एतदिमानिति. ग, घ.
१०. जयति इति. च. ११–१४. मा. सं. १२. ७–१०. १५, १६. मा. सं. १२. ११.
१७. एवैतदात्मन्धत्ते इति. ग, घ. १८. मा. सं. १२. ११.

विचाचलिरि''त्यायुरेवैतद्ध्रुवमन्तरात्मन्धत्ते ''व्विँशस्त्वा सर्व्वा व्वाञ्छन्त्वि''त्यन्नं वै व्विशोऽन्नं त्वा सर्व्वं व्वाञ्छत्वित्येत''न्मा त्वद्राष्ट्रमधिभ्रशादि''ति श्रीर्व्वै राष्ट्रं मा त्वच्छ्रीरधिभ्रशादित्येतत् ॥७॥

( अर्द्धप्रपाठकः )

अथ शिक्यपाशं च रुक्मपाशं चोन्मुञ्चते । व्वारुणो वै पाशो व्वरुणपाशादेव तत्प्रमुच्यते व्वारुण्यर्चा स्वेनैव तदात्मना स्वया देवतया व्वरुणपाशात्प्रमुच्यत ऽ''उदुत्तमं व्वरुण पाशमस्मदवाधमं व्वि मध्यमꣳश्रथाये''ति य्यथैव य्यजुस्तथा बन्धु''रथा व्वयमादित्य व्व्रते तवानागसोऽअदितये स्यामे''तीयं वाऽअदितिरनागसस्तुभ्यं चास्यै च स्यामेत्येतत् ॥८॥ अथैनामिति प्रगृह्णाति । एतद्वाऽएनमदो व्विकृत्येतऽऊर्ध्वं प्राञ्चं प्रगृह्णाति तं ततऽइति प्रगृह्णाति तद्यत्तावदेवाभविष्यदत्र हैवैष व्यरꣳस्यताथ य्यदेनमिति प्रगृह्णाति तस्मादेषऽइतीत्वाथेति पुनरैति ॥९॥ ''अग्रे बृहन्नुषसामूर्द्ध्वोऽअस्थादि''ति । अग्रे ह्येष बृहन्नुषसामूर्द्ध्वस्तिष्ठति ''निर्ज्जगन्वान्तमसो ज्योतिषागादि''ति निर्ज्जगन्वान्वाऽएष रात्र्यै तमसोऽह्ना ज्योतिषै''त्यग्निर्भानुना रुशता स्वङ्ग''ऽइत्यग्निर्व्वाऽएष भानुना रुशता स्वङ्गऽ''आ जातो व्विश्वा सद्मान्यप्रा''ऽइतीमे वै लोका व्विश्वा सद्मानि तानेष जातऽआपूरयति परोवाहु प्रगृह्णाति परोबाहु ह्येष ऽइतोऽथैनमुपावहरतीमामेवैतत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति जगत्या जगती हेमाँल्लोकानमुतोऽर्व्वाचो व्यश्नुते ॥१०॥ ''हꣳसः शुचिषदि''ति । असौ

---

१. २. मा. सं. १२. ११.
३. मभिभ्रशदिति. ग.
४. एतत इति. घ.
५. पाशं इति. घ.
६, ८. मा. सं १२. १२.
७. बन्धुरथा इति. ग, घ.
९. एतत् इति. घ.
१०. देष इति. ग, घ.
११. पुनरेति इति. घ.
१२, १३. मा.सं. १२. १३.
१४. तमसो इति. घ.
१५, १६. मा.सं. १२. १३.
१७. व्यश्नुते इति. च.
१८. मा. सं. १२. १४.

वाऽआदित्यो हꣳसः शुचिष"[१]द्वसुरन्तरिक्षसदि"ति व्वायुर्व्वै व्वसुरन्तरिक्षस"[२]द्धोता व्वेदिषदि"त्यग्निर्व्वै होता व्वेदिष"[३]दतिथिरि"ति सर्व्वेषां वाऽएष भूतानामतिथि"[४]र्दुरोणसदि"ति विषमसदित्येत"[५]न्नृषदि"ति प्राणो [६]वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमेतदाह "[७]वरसदि"ति सर्व्वेषु ह्येष व्वरेषु[८] सन्न्ऽ"ऋतसदि"ति सत्यसदित्येत"[९]द्व्योमसदि"ति सर्व्वेषु ह्येष व्योमसु सन्नोऽ"[१०][११]ब्जा गोजा"ऽइत्यब्जाश्च ह्येष गोजाश्च"[१२][१३]र्तजाऽ"इति सत्यजाऽइत्येत"[१४]दद्रिजा"ऽइत्यद्रिजा ह्येषऽ"[१४]ऋतमि"ति सत्यमित्ये"[१५]तद्बृहदि"ति निदधाति बृहद्ध्येष तद्यदेष तदेनमेतत्कृत्वा नि[१६]दधाति ॥११॥ द्वाभ्यामक्षराभ्याम् । द्विपाद्यजमानो य्यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतन्निदधाति ॥१२॥ अथैनमुपतिष्ठते । एतद्वाऽएनमेतल्लघूयतीव य्यदेनेन सहेति चेति चेमाँल्लोकान्क्रमते तस्माऽएवैतन्निह्नुतेऽहिꣳसायै ॥१३॥ य्यद्वेवोपतिष्ठते। एतद्वै देवाऽअबिभयुर्य्यद्वै नोऽयमिमाँल्लोकानन्तिकान्न हिꣳस्यादिति तदेभ्यऽएवैनमेतल्लोकेभ्योऽशमयंस्तथैवैनमयमेतदेभ्यो लोकेभ्यः शमयति ॥१४॥ "[१७]सीद त्वं मातुः। अस्याऽउपस्थेऽन्त[१८]रग्ने रुचा त्वꣳ[१९] शिवो भूत्वा मह्यमग्नेऽअथो सीद शिवस्त्वमि"ति शिवः शिवऽइति शमयत्येवैनमेतदहिꣳसायै तथो हैषऽइमाँल्लोकाञ्छान्तो न हिनस्ति ॥१५॥ त्रिभिरुपतिष्ठते । त्रयऽइमे लोकाऽअथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्माऽएतन्निह्नुतेऽथो तावतैवैनमेतदेभ्यो लोकेभ्यः शमयति ॥१५॥ Cf. का. श. ८. ७. ३; मै. सं. ३. २. १; तै. सं. ५. २. १; कठ. सं. १९. ११; कपि. ३२. १.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. ७. ३. )

---

१-५ मा. सं. १२. १४. ६. त्रै इति ग, घ. ७, ९-१५. मा. सं. १२, १४. ८. वरेषु इति. घ. १६. निदधाति इति. च. १७-१९. मा. सं. १२. १५-१७.

## ६. ५. ४.

## ( वात्सप्रोपस्थानादि )

अथ व्वात्सप्रेणोपतिष्ठते । एतद्वै प्रजापतिर्व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो व्वात्सप्रेणायुष्यमकरोत्तथैवैतद्यजमानो व्विष्णुक्रमैः प्रजाः सृष्ट्वा ताभ्यो व्वात्सप्रेणायुष्यं करोति ॥१॥ स हैष दाक्षायणहस्तः । यद्वात्सप्रं तस्माद्यं जातं कामयेत सर्व्वमायुरियादिति व्वात्सप्रेणैनमभिमृशेत्तदस्मै जातायायुष्यं करोति तथो ह स सर्व्वमायुरेत्यथ यङ्कामयेत व्वीर्य्यवान्त्स्यादिति व्विक्रत्यैनं[1] पुरस्तादभिमन्त्रयेत तथो ह स व्वीर्यवान्भवति॥२॥ "दिवस्परि[2] प्रथमं जज्ञेऽअग्निरि"ति । प्राणो वै दिवः प्राणादु वाऽएष प्रथममजायता"स्मद्द्वितीयं[3] परि जातवेदा" ऽइति यदेनमदो द्वितीयं पुरुषविधोऽजनय"त्तृतीयमप्स्वि[4]"ति यदेनमदस्तृतीयमद्भ्योऽजनय"न्नृमणाऽअजस्रमि[5]"ति प्रजापतिर्व्वै नृमणाऽअग्निरजस्रऽ"इन्धान[6]ऽएनं जरते स्वाधी"रिति यो वाऽएनमिन्द्धे सऽएनञ्जनते स्वाधीः ॥३॥ "विद्मा[7] तेऽअग्ने त्रेधा त्रयाणी"ति । अग्निर्व्वायुरादित्यऽएतानि हास्य तानि त्रेधा त्रयाणि "व्विद्मा[8] ते धाम व्विभृता पुरुत्रे"ति यदिदं बहुधा व्विह्रियते "विद्मा[9] ते नाम परमं गुहा यदि"ति यविष्ठऽइति वाऽअस्य तन्नाम परमं गुहा "व्विद्मा[10] तमुत्सं यतऽआजगन्थे"त्यापो वाऽउत्सोऽद्भ्यो वाऽएष प्रथममाजगाम ॥४॥ "समुद्रे[11] त्वा नृमणाऽअप्स्वन्त"रिति । प्रजापतिर्व्वै नृमणाऽअप्सु त्वा प्रजापतिरित्येत"न्नृचक्षाऽईधे[12] दिवोऽअग्नऽऊधन्नि"ति प्रजापतिर्व्वै नृचक्षाऽआपो दिव ऽऊध"स्तृतीये[13] त्वा रजसि तस्थिवाꣳसमि"ति द्यौर्व्वै तृतीयꣳ रजो"ऽपामुपस्थे[14] महिषा ऽअवर्द्धन्नि"ति प्राणा वै महिषा दिवि त्वा प्राणाऽअवर्द्धन्नित्येतत् ॥५॥ ताऽएताऽएकव्याख्यानाः । एतमेवाभि ताऽआग्नेय्यस्त्रिष्टुभस्ता यदाग्नेय्यस्तेनाग्निरथ यत्त्रिष्टुभो यदेकादश तेनेन्द्रऽऐन्द्राग्नोऽग्निर्य्यावान-

---

१. विक्रत्येति. ग, घ. २-६. मा. सं. १२. १८.
७-१०. मा. सं. १२. १९. ११-१४. मा. सं. १२. २०.

ग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठतऽइन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्निर्य्यावानाग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपतिष्ठते ॥६॥ यद्वेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्व्वै प्रजापतिरिमँल्लोकमसृजत वात्सप्रेणाग्निं विष्णुक्रमैर्व्वै प्रजापतिरन्तरिक्षमसृजत वात्सप्रेण वायुं विष्णुक्रमैर्व्वै प्रजापतिर्द्दिवमसृजत वात्सप्रेणादित्यं विष्णुक्रमैर्व्वै प्रजापतिर्द्दिशोऽसृजत वात्सप्रेण चन्द्रमसं विष्णुक्रमैर्व्वै प्रजापतिर्भूतमसृजत वात्सप्रेण भविष्यद्विष्णुक्रमैर्व्वै प्रजापतिर्व्वित्तमसृजत वात्सप्रेणाशां विष्णुक्रमैर्व्वै प्रजापतिरहरसृजत वात्सप्रेण रात्रिं विष्णुक्रमैर्व्वै प्रजापतिः पूर्व्वपक्षानसृजत[1] वात्सप्रेणापरपक्षान्विष्णुक्रमैर्व्वै प्रजापतिरर्द्धमासानसृजत वात्सप्रेण मासान्विष्णुक्रमैर्व्वै प्रजापतिर्ऋतूनसृजत वात्सप्रेण संवत्सरं तद्यद्विष्णुक्रमवात्सप्रे भवतऽएतदेव तेन सर्व्वँ सृजते ॥७॥ यद्वेव विष्णुक्रमवात्सप्रे भवतः । विष्णुक्रमैर्व्वै प्रजापतिः स्वर्गँल्लोकमभिप्रायात्सऽएतदवसानमपश्यद्वात्सप्रं तेनावास्यदप्रदाहाय यद्धि युक्तं न विमुच्यते प्र तद्दह्यते तथैवैतद्यजमानो विष्णुक्रमैरेव स्वर्गँल्लोकमभिप्रयाति वात्सप्रेणावस्यति ॥८॥ स वै विष्णुक्रमान् क्रान्त्वा[2] । अथ तदानीमेव वात्सप्रेणोपतिष्ठते यथा प्रयायाथ तदानीमेव विमुञ्चेत्तादृक्तद्देवानां वै विधामनु मनुष्यास्तस्मादु हेदमुत मानुषो ग्रामः प्रयायाथ तदानीमेवावस्यति ॥९॥ तद्वा ऽअहोरात्रे ऽएव विष्णुक्रमा भवन्ति । अहोरात्रे वात्सप्रमहोरात्रेऽएव तद्यात्यहोरात्रे क्षेम्यो भवति तस्मादु हेदमुत मानुषो ग्रामोऽहोरात्रे यात्वाहोरात्रे क्षेम्यो भवति ॥१०॥ स वाऽ अर्द्धमेव संवत्सरस्य विष्णुक्रमान् क्रमते[3] । अर्द्धं वात्सप्रेणोपतिष्ठते मध्ये ह संवत्सरस्य स्वर्गो लोकः स यत्कनीयोऽर्द्धात्क्रमेत न हैतँ स्वर्गँल्लोकमभिप्राप्नुयादथ[4] यद्भूयोऽर्द्धात्पराङ् हैतँ स्वर्ग-

---

१. नसृजत इति. ग, घ.  २. क्रान्त्वा । अथ तदानीमेव. ग, घ.
३. क्रमान् क्रमते इति. ग, घ.  ४. दथ इति ग, घ.

ल्लोकमतिप्रणश्येदथ य्यदूर्द्ध्वं क्रमतेऽर्द्ध्वमुपतिष्ठते तत्सम्प्रति स्वर्गं-ल्लोकमाप्त्वा व्विमुञ्चते ॥११॥ ताभ्यां वै व्विपर्य्यासमेति । य्यथा महान्तमध्वानं व्विमोकछं समश्नुवीत तादृक्तत्स वै पुरस्ताच्चोपरिष्टाच्चोभे व्विष्णुक्रमवात्सप्रे समस्यत्यहर्व्वै व्विष्णुक्रमा रात्रि-र्व्वात्सप्रमेतद्वाऽइदꣳ सर्व्वं प्रजापतिः प्रजनयिष्यंश्च प्रजनयित्वा चाहोरात्राभ्यामुभयतः पर्य्यगृह्णात्तथैवैतद्यजमान इदꣳ सर्व्वं प्रजन-यिष्यंश्च प्रजनयित्वा चाहोरात्राभ्यामुभयतः परिगृह्णाति ॥१२॥ तदाहुः । यदहर्व्विष्णुक्रमा रात्रिर्व्वात्सप्रमथोभेऽएवाहन्भवतो न रात्र्यां कथमस्यापि रात्र्यां कृते भवतऽइत्येतद्वाऽएनेऽअदो दीक्ष-माणः पुरस्तादपराह्णऽउभे समस्यति रात्रिर्हैतद्यदपराह्णोऽथैनेऽएत-त्सन्निवप्स्यन्नुपरिष्टात्पूर्वाह्णऽउभे समस्यत्यहर्हैतद्यत्पूर्व्वाह्णऽएवमु हास्योभेऽएवाहन्कृते भवतऽउभे रात्र्याꣳ ॥१३॥ स यदहः सान्नि-वप्स्यन्त्स्यात् । तदहः प्रातरुदितऽआदित्ये भस्मैव प्रथममुद्वपति भस्मोदुप्य व्वाचं व्विसृजते व्वाचं व्विसृज्य समिधमादधाति समिधमाधाय भस्मापोऽभ्य्[1]वहराति य्यथैव तस्याभ्यवहरणं तथा-पादाय भस्मनः प्रत्येत्योखायामोप्योपतिष्ठतेऽथ प्रायश्चित्ती करोति ॥१४॥ स य्यदि व्विष्णुक्रमीयमहः स्यात् । व्विष्णुक्रमान् क्रान्त्वा व्वात्सप्रेणोपतिष्ठेताथ य्यदि व्वात्सप्रीयं व्वात्सप्रेणोपस्थाय व्विष्णु-क्रमान्क्रान्त्वा व्वात्सप्रमन्[2]ततः कुर्यान्न व्विष्णुक्रमानन्ततः कुर्याद्यथा प्रयाय न व्विमुञ्चेत्तादृक्तदथ य्यद्वात्सप्रमन्ततः करोति प्रतिष्ठा वै व्वात्सप्रं य्यथा प्रतिष्ठापयेदवसाययेत्तादृक्तत्तस्मादु व्वात्सप्रमेवा-न्ततः कुर्यात् ॥१५॥ Cf. का. श. ८. ७. ४; तै. सं. ५. २. १; मै. सं. ३. २. २; कठ. १९. १२; कपि. ३२. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ७. ४.)

( सप्तमोऽध्यायः )

---

१. अभ्यवहरति इति. घ. २. मन्तत इति. घ.

## ६. ५. ५.

## ( उख्याग्निप्रणयनम् )

व्वनीवाह्येताग्निं विभ्रदित्याहुः । देवाश्चासुराश्चोभये प्राजापत्याऽअस्पर्द्धन्त ते देवाश्चक्रमचरंश्छालमसुरा ऽआसंस्ते देवाश्चक्रेण चरन्त ऽएतत्कर्म्मापश्यंश्चक्रेण हि वै देवाश्चरन्त ऽएतत्कर्म्मापश्यंस्तस्मादनस ऽएव पौराडाशेषु य्यजूᳬंष्यनसोऽग्नौ ॥१॥ स य्यो व्वनीवाह्यते । देवान् कर्म्मणैति दैवᳯं हास्य कर्म्म कृतं भवत्यथ य्यो न व्वनीवाह्यतेऽसुरान् कर्म्मणैत्यसुर्यᳬं हास्य कर्म्म कृतं भवति ॥२॥ तद्धैकऽआहुः । स्वयं वाऽएष व्वनीवाहितो व्विष्णुक्रमैर्व्वाऽएष प्रयाति व्वात्सप्रेणावस्यतीति न तथा व्विद्याद्दैवं वाऽअस्य तत्प्रयाणं य्यद्विष्णुक्रमा दैवमवसानं य्यद्वात्सप्रमथास्येदं मानुषं प्रयाणं य्यदिदं प्रयाति मानुषमवसानं य्यदवस्यति ॥३॥ प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिर्य्यच्च देवा य्यच्च मनुष्यास्तद्यद्विष्णुक्रमवात्सप्रे भवतो य्यद्देवास्य दैवᳯं रूपं तदस्य तेन सँस्करोत्यथ य्यद्वनीवाह्यते य्यद्देवास्य मानुषᳬं रूपं तदस्य तेन सँस्करोति स ह वाऽएतᳯं सर्व्वं कृत्स्नं प्रजापतिᳯं सँस्करोति य्यऽएवं व्विद्वान्व्वनीवाह्यते तस्मादु व्वनीवाह्येतैव ॥४॥ स य्यदहः प्रयास्यन्त्स्यात् । तदहरुत्तरतोऽग्नेः प्रागन ऽउपस्थाप्याथास्मिन्त्समिधमादधात्येतद्वाऽएनं देवाऽएष्यन्तं पुरस्तादन्नेनाप्रीणन्नेतया समिधा तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्येतया समिधा ॥५॥ "समिधाग्निं दुवस्यते"ति । समिधाग्निं नमस्यतेत्येतद् "घृतैर्बोधयतातिथिमास्मिन्हव्या जुहोतने"ति घृतैरह बोधयतातिथिमोऽअस्मिन्हव्यानि जुहुतेत्येतद्बुद्धवत्येत्यायै ह्येनमेतद्बोधयति ॥६॥ अथैनमुद्यच्छति । "उदु त्वा व्विश्वे देवाऽअग्ने भरन्तु चित्तिभिरि"ति व्विश्वे वाऽएतमग्रे

---

१. अग्नौ इति. घ. २. यद्धेवास्येति ग, घ. ३, ४. मा. सं. १२. ३०
५. मा.सं १२. ३१.

देवाश्चित्तिभिरुदभरन्नेतद्ध्येषां तदा चित्तमासीत्तथैवैनमयमेतच्चित्तिभिरुद्धरत्येतद्ध्यस्य तदा चित्तं भवति "सं नो भव शिवस्त्वꣳ सुप्रतीको विभावसुरि"ति यथैव यजुस्तथा बन्धुस्तन्दक्षिणतऽउदञ्चमादधाति तस्योक्तो बन्धुः स्थाल्यां गार्हपत्यꣳ समुप्यापरमादधाति स यदि कामयेतोपाधिरोहेत्पार्श्वतो वा व्रजेत् ॥७॥ अथानड्वाहौ युनक्ति । दक्षिणमग्रेऽथ सव्यमेवं देवत्रेतरथा मानुषे स यां काञ्च दिशं यास्यन्त्स्यात्प्राङेवाग्रे प्रयायात्प्राची हि दिगग्नेः स्वामेव तद्दिशमनु प्रयाति ॥८॥ "प्रेदग्ने ज्योतिष्मान्याहि । शिवेभिरर्च्चिभिष्ट्व"मिति प्रेदग्ने त्वं ज्योतिष्मान्याहि शिवेभिरर्च्चिभिर्द्दीप्यमानैरित्येतद् "बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तन्वा प्रजा"ऽइति बृहद्भिरर्च्चिभिर्द्दीप्यमानैर्मा हिꣳसीरात्मना प्रजाऽइत्येतत् ॥९॥ स यदाक्षऽउत्सर्ज्जेत् । अथैतद्यजुर्ज्जपेदसुर्य्या वाऽएषा वाग्याक्षस्य तामेतच्छामयति तामेतद्देवत्रा करोति ॥१०॥ यद्वेवैतद्यजुर्ज्जपाति । यस्मिन्वै कस्मिंश्चाहितेऽक्ष ऽउत्सर्ज्जति तस्यैव सा वाग्भवति तद्यदग्नावाहितेऽक्ष ऽउत्सर्ज्जत्यग्नेरेव सा वाग्भवत्यग्निमेव तद्देवा ऽउपास्तुवन्नुपामहयंस्तथैवैनमयमेतदुपस्तौत्युपमहय "त्यक्रन्ददग्निस्तनयन्निव द्यौरि"ति तस्योक्तो बन्धुः ॥११॥ स यदि पुरा वसत्यै विमुञ्चेतँ । अनस्येवाग्निः स्यादथ यदा वसत्यै विमुञ्चेत प्रागनऽउपस्थाप्योत्तरत ऽउद्धत्यावोक्षति यत्रैनमुपावहराति तं दक्षिणत ऽउदञ्चमुपावहराति तस्योक्तो बन्धुः ॥१२॥ अथास्मिन्त्समिधमादधाति । एतद्वाऽएनं देवाऽईयिवाꣳसमुपरिष्टादन्नेनाप्रीणन्नेतया समिधा तथैवैनमयमेतदीयिवाꣳसमुपरिष्टादन्नेन प्रीणात्येतया समिधा ॥१३॥ "प्रप्रायमग्निर्भरतस्य शृण्व"ऽइति ।

---

१. मा. सं. १२. ३१. २. सव्यमेवं इति. घ. ३. स्वामेवेति. घ.
४, ५. मा. सं. १२. ३२. ६. मा सं. १२. ३३.
७. विमुञ्चेत इति ग. विमुञ्चेत इति घ. ८. अनस्येवेति घ.
९. समिधमिति घ. १०. मा. सं. १२. ३४.

प्रजापतिर्व्वै भरतः स हीदᳪसर्व्वं बिभर्त्ति "व्वि यत्सूर्यो न रोचते बृहद्भा" ऽइति व्वि यत्सूर्यऽइव रोचते बृहद्भाऽइत्येत "दभि यः पूरुं पृतनासु तस्थौ" इति पूरुर्ह नामासुररक्षसमास तमग्निः पृतनास्वभितष्ठौ "दीदाय दैव्योऽअतिथिः शिवो न" ऽइति दीप्यमानो दैवोऽतिथिः शिवो नऽइत्येतत्स्थितवत्या व्वसत्यै ह्येनमेतत्स्थापयति ॥१४॥ अथातः सम्पदेव । सामिधं प्रथमेनादधात्युद्यच्छत्येकेन प्रयात्येकेनाक्षमेकेनानुमन्त्रयते समिधमेव पञ्चमेनादधाति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१५॥ Cf. का. श. ८. ८. १; तै. सं. ५. २. २; मै. सं. ३. १. २; कठ. १९. १२; कपि. ३२. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥ (अ. ८. १.)

## ६. ५. ६.

अथातो भस्मनऽएवाभ्यवहरणस्य । देवा वाऽएतदग्रे भस्मोदवपंस्तेऽब्रुवन्यदि वाऽइदमित्थमेव सदात्मानमभिसंस्करिष्यामहे मर्त्त्याः कुणपा ऽअनपहतपाप्मानो भविष्यामो व्यद्यु परावप्स्यामो व्यदत्राग्नेयं बहिर्द्धा तदग्नेः करिष्याम ऽउप तज्जानीत व्यथेदङ्करवामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्तदिच्छत व्यथेदङ्करवामेति ॥१॥ ते चेतयमानाः । एतदपश्यन्नपऽएवैनदभ्यवहरामापो वाऽअस्य सर्व्वस्य प्रतिष्ठा तद्यत्रास्य सर्व्वस्य प्रतिष्ठा तदेनत्प्रतिष्ठाप्य व्यदत्राग्नेयन्तददूभ्योऽधि जनयिष्याम ऽइति तदपोऽभ्यवाहरंस्तथैवैनदयमेतदपोऽभ्यवहरति ॥२॥ "आपो देवीः । प्रतिगृभ्णीत भस्मैतत्स्योने कृणुध्वᳪ सुरभाऽउ लोक" ऽइति जग्धं वाऽएतद्यातयाम भवति तदेतदाह सुरभिष्ठऽएनल्लोके कुरुध्वमिति "तस्मै नमन्तां

१-३. मा. सं. १२. ३४. ४. वसत्यं इति. ग, १, घ. ५. समिधमेवेति घ.
६. वपंस्ते इति. घ. ७, ८. मा. सं. १२. ३५.

जनय" ऽइत्यापो वै जनयोऽद्भ्यो हीदꣳसर्व्वं जायते "सुपत्नी"-रित्यग्निना वाऽआपः सुपत्न्यो "मातेव पुत्रं बिभृताप्स्वेनदि"ति यथा माता पुत्रमुपस्थे बिभृयादेवमेनद्बिभृतेत्येतत् ॥३॥ "अप्स्वग्ने सधिष्टवे"ति। अप्स्वग्ने योनिष्टवेत्येतत् "सौषधीरनुरुध्यस" ऽइत्योषधीर्ह्येषोऽनुरुध्यते "गर्भे सञ्जायसे पुनरि"ति गर्भे ह्येष सञ्जायते पुन"र्गर्भोऽअस्योषधीनां गर्भो वनस्पतीनाम्। गर्भो विश्वस्य भूतस्याग्ने गर्भोऽअपामसी"ति तदेनमस्य सर्व्वस्य गर्भं करोति ॥४॥ त्रिभिरभ्यवहरति। त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनदेतदभ्यवहरत्येकेनाग्रेऽथ द्वाभ्यां द्वाभ्यां वाग्रेऽथैकेन द्विस्तु कृत्वोऽभ्यवहरति तद्ये द्विपादाः पशवस्तैरेवैनदेतदभ्यवहरति ॥५॥ अथापादत्ते। तद्यदत्राग्नेयं तदेतदद्भ्योऽधि जनयत्यनयानया वै भेषजं क्रियतेऽनयैवैनमेतत्सम्भरति "प्रसद्य भस्मना योनिमपश्च पृथिवीमग्न"ऽइति प्रसन्नो ह्येष भस्मना योनिमपश्च पृथिवीञ्च भवति "सꣳसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासद" *ऽइति सङ्गत्य मातृभिष्ट्वञ्ज्योतिष्मान्पुनरासद* ऽइत्येतत् "पुनरासद्य सदनं" "पुनरूर्ज्जा" "सह रय्ये"त्येतेन मा सर्व्वेणाभिनिवर्त्तस्वेत्येतत् ॥६॥ चतुर्भिरपादत्ते। तद्ये चतुष्पादाः पशवस्तैरेवैनमेतत्सम्भरत्यथोऽअन्नं वै पशवोऽन्नेनैवैनमेतत्सम्भरति त्रिभिरभ्यवहरति तत्सप्त सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥७॥ अपादाय भस्मनः प्रत्येत्य। उखायामोप्योपतिष्ठतऽएतद्वाऽएतदयथायथं करोति यदग्निमपोऽभ्यवहरति तस्माऽएवैतन्निह्नुतेऽहिꣳसायाऽआग्नेयीभ्यामग्नयऽएवैतन्निह्नुते बुद्धवतीभ्यां यथैवास्यैतदग्निर्व्वचो निबोधेत् ॥८॥ "बोधा मेऽअस्य वचस-

---

१, २. मा. सं. १२. ३५. ३, ५, ६. मा.सं. १२.३६.
४. सधिष्टवेति · घ. ७, मा. सं. १२, ३७.
८, ९. मा. सं. १२. ३८. १०. *एतच्चिह्नान्तर्गतः पाठो 'ग घ' पुस्तकयोर्नास्ति।
११. मा. सं. १२. ३९–४१ १२. पशव इति. घ. १३. मा. सं. १२. ४२.

सो व्यविष्ठे''ति । बोध मेऽस्य व्वचसो व्यविष्ठेत्ये त''न्म(ᳲ)हिष्ठस्य प्रभृतस्य स्वधाव''ऽइति भूयिष्ठस्य प्रभृतस्य स्वधावऽइत्येत''त्पीयति त्वोऽअनु त्वो गृणाती''ति पीयत्येकोऽन्वेको गृणाति ''व्वन्दारुष्टे तन्वं व्वन्देऽअग्न''ऽइति व्वन्दिता तेऽहं तन्वं व्वन्देऽग्नऽइत्येत''त्सँ बोधि सूरिर्म्मघवा व्वसुपते व्वसुदावन् । य्युयोध्यस्मद् द्वेषाᳲसी''ति यथैवास्माद् द्वेषाᳲसि य्युयादेवमेतदाह द्वाभ्यामुपतिष्ठते गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥९॥ तानि नव भवन्ति । नव दिशो-दिशोऽग्निर्नव प्राणाः प्राणाऽअग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१०॥ अथ प्रायश्चित्ती करोति । सर्व्वेभ्यो वाऽएषऽएतं कामेभ्यऽआधत्ते तद्यदेवास्यात्र कामानां व्यवच्छिद्यतेऽग्नावपोऽभ्यवह्रियमाणे तदेवैतत्सन्तनोति सन्दधात्युभे प्रायश्चित्ती करोति य्येऽएवाग्नावनुगते तस्योक्तो बन्धुः ॥११॥ तानि दश भवन्ति । दशाक्षरा व्विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणाऽअग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥१२॥ Cf. का. श. ८. ८. १; तै. सं. ५. २. २; मै. सं. ३. २. २; कठ. १९. १२; कपि. ३२. २.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे षष्ठकाण्डे
पञ्चमप्रपाठके षष्ठं ब्राह्मणम् ॥ ( अ.८.२. )

इति पञ्चमः प्रपाठकस्समाप्तः ॥

( कण्डिका संख्या १०२ )

( इत्यष्टमोऽध्यायः )

इति माध्यन्दिनीये शतपथब्राह्मणे उखासम्भरणं नाम
षष्ठं काण्डं समाप्तम् ॥

( अस्मिन् काण्डे कण्डिकासंख्या ५३० )

---

१-३. मा. सं. १२. ४२.　　४. मा. सं. १२. ४३.
५. द्वेषाᳲसि इति. घ.　　६. सन्दधात्युभे इति. ग, घ, ङ.

॥ श्रीः ॥

# अथ माध्यन्दिनशाखीये शतपथब्राह्मणे

# हस्तिघटनामकं सप्तमं काण्डम् ॥

## ( अत्राऽपि चयनविधिरेव )

### प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

### ७. १. १.

### ( गार्हपत्यचितिः )

हरिः ॐ । गार्हपत्यं चेष्यन्पलाशशाखया व्युदूहति[1] । अवस्यति हैतद्यद्गार्हपत्यं चिनोति य्यऽउ वैके चाग्निचितोऽस्यामेव तेऽवसितास्तद्यद्व्युदूहत्यवसितानेव तद्व्युदूहति नेदवसितानध्यवस्यानीति ॥१॥ "अपेत[2] व्वीत व्वि च सर्प्पतात"ऽइति[3] । अप चैवेत व्विं चेत व्यु च सर्प्पतातऽइत्येतद्यऽउदरसर्प्पिणस्तानेतदाह "य्येऽत्र[4] स्थ पुराणा य्ये च नूतना"ऽइति य्येऽत्र स्थ सनातना य्ये चाधुनातनाऽइत्येतत् ॥२॥ "अदाद्[5]यमोऽवसानं पृथिव्या" ऽइति । य्यमो ह वाऽअस्या[6]ऽअवसानस्येष्टे सऽएवास्माऽअस्यामवसानं ददाति[7] ॥३॥ "अक्रन्निमं[8] पितरो लोकमस्मा"ऽइति । क्षत्रं वै य्यमो व्विशः पितरो य्यस्माऽउ वै क्षत्रियो व्विशा सँव्विदानोऽस्यामवसानं ददाति तत्सुदत्तं तथो हास्मै क्षत्रं य्यमो व्विशा पितृभिः सँव्विदानोऽस्यामवसानं ददाति ॥४॥ पलाशशाखया व्युदूहति । ब्रह्म वै पलाशो ब्रह्मणैव तदवसितान्व्युदूहति मन्त्रेण ब्रह्म वै मन्त्रो ब्रह्मणैव तदवसितान्व्यु-

---

१. व्युद्वहति । अस्य इति ख, ग, ङ, ञ. २. मा. सं. १२. ४५.

३. इति इति. ङ, इति इति. ञ. ४, ५. मा. सं. १२. ४५.

६. अस्या इति. ङ. ७. दद्याति इति. ख, ङ, ञ. ८. मा. सं. १२. ४५.

दूहति तामुदीचीमुदस्यति ॥५॥ (शतम् ३९००) अथोषान्निवपति । अयं वै लोको गार्हपत्यः पशवऽऊषाऽअस्मिंस्तल्लोके पशून्दधाति तस्मादिमेऽस्मिँल्लोके पशवः ॥६॥ य्यद्वेवोषान्निवपति । प्रजापतिः प्रजाऽअसृजत ता नानोल्बाऽअसृजत ता न समजानत सोऽकामयत सञ्जानीरन्निति ताः समानोल्वाऽअकरोत्तासामूषानुल्बमकरोत्ताः समजानत तस्मादप्येतर्हि समानोल्वाः समेव जानते देवैः समानोल्बोऽसानीत्यु वै य्यजते य्यो य्यजते तद्यदूषान्निवपति देवैरेव तत्समानोल्बो भवति ॥७॥ "संज्ञानमसी"ति । समजानत ह्येतेन "कामधरण"मिति पशवो वाऽऊषाः पशवः कामधरणं "मयि ते कामधरणं भूयादि"ति मयि ते पशवो भूयासुरित्येतत्तैः सर्व्वं गार्हपत्यं प्रच्छादयति य्योनिर्व्वै गार्हपत्या चितिरुल्बमूषाः सर्व्वां तद्योनिमुल्बेन प्रच्छादयति[3] ॥८॥ अथ सिकता निवपति । अग्नेरेतद्वैश्वानरस्य भस्म य्यत्सिकताऽअग्निमु वाऽएतं व्वैश्वानरं चेष्यन्भवति न वाऽअग्निः स्वं भस्मातिदहत्यनतिदाहाय ॥९॥ य्यद्वेव सिकता निवपति । अग्नेरेतद्वैश्वानरस्य रेतो य्यत्सिकताऽअग्निमु वाऽएतं व्वैश्वानरं चेष्यन्भवति न वाऽअरेतस्कात्किं चन व्विक्रियतेऽस्माद्रेतसोऽधि व्विक्रियाताऽइति ॥१०॥ "अग्नेर्भस्मास्यग्नेः पुरीषमसी"ति । य्यातयाम वाऽअग्नेर्भस्मायातयाम्न्यः सिकताऽअयातयाममेवैनदेतत्करोति ताभिः सर्व्वं गार्हपत्यं प्रच्छादयति य्योनिर्व्वै गार्हपत्या चिती रेतः सिकताः सर्व्वस्यां तद्योनौ रेतो दधाति[5] ॥११॥ अथैनं परिश्रिद्भिः परिश्रयति । य्योनिर्व्वै परिश्रितऽइदमेवैतद्रेतः सिक्तं य्योन्या परिगृह्णाति तस्माद्योन्या रेतः सिक्तं परिगृह्यते ॥१२॥ य्यद्वेवैनं परिश्रिद्भिः परिश्रयति । अयं वै लोको गार्हपत्यऽआपः परिश्रितऽइमं तँल्लोकमद्भिः[6] परितनोति समुद्रेण हैनं तत्परितनोति सर्व्वतस्तस्मादिमं लोकँ सर्व्वतः समुद्रः

१, २. मा. सं. १२. ४६.  ३. प्रच्छादयति इति. ङ, ञ.
४. मा. सं. १२. ४६.  ५. दधाति इति. ख,ङ,ञ.  ६. तं लोकमिति.ग,ङ,ट.

पर्य्येति दक्षिणावृत्तस्मादिमं लोकं दक्षिणावृत्समुद्रः पर्य्येति खातेन तस्मादिमं लोकं खातेन समुद्रः पर्य्येति ॥१३॥ "चितं स्थे"ति। चिनोति ह्येनाः "परिचित स्थे"ति परि ह्येनाश्चिनो"त्यूर्द्ध्वचितः श्रयध्वमि"त्यूर्द्ध्वाऽउपदधदाह तस्मादूर्द्ध्वऽएव समुद्रो विजतेऽथ यत्तिरश्चीरुपदध्यात्सकृद्धैवेदꣳ सर्व्वꣳ समुद्रो निर्मृर्ज्यान्न स्वाद-यत्यसन्ना ह्यापो न सूददोहसाधिवदति ॥१४॥ अस्थीनि वै परि-श्रितः। प्राणः सूददोहा न वाऽअस्थिषु प्राणोऽस्त्येकेन यजुषा बह्वीरिष्टकाऽउपदधात्येकꣳ ह्येतद्रूपं यदापोऽथ यद्बह्व्यः परि-श्रितो भवन्ति बह्व्यो ह्यापः ॥१५॥ तद्वै योनिः परिश्रितः। उल्बमूषा रेतः सिकता बाह्याः परिश्रितो भवन्त्यन्तरऽऊषा बाह्या हि योनिरन्तरमुल्बं बाह्यऽऊषा भवन्त्यन्तराः सिकता बाह्यꣳ ह्युल्बमन्तरꣳ रेतऽएतेभ्यो वै जायमानो जायते तेभ्यऽएवैनमेत-ज्जनयति ॥१६॥ अथैनमतश्चिनोति। इदमेवैतद्रेतः सिक्तं विकरोति तस्माद्योनौ रेतः सिक्तं विक्रियते ॥१७॥ स चतस्रः प्राची-रुपदधाति। द्वे पश्चात्तिरश्च्यौ द्वे पुरस्तात्तद्याश्चतस्रः प्राची-रुपदधाति सऽआत्मा तद्यत्ताश्चतस्रो भवन्ति चतुर्विधो ह्यय-मात्माथ ये पश्चात्ते सक्थ्यौ ये पुरस्तात्तौ बाहू यत्र वाऽआत्मा तदेव शिरः ॥१८॥ तं वाऽएतम्। अत्र पक्षपुच्छवन्तं विकरो-ति यादृग्वै योनौ रेतो विक्रियते तादृग्जायते तद्यदेतमत्र पक्ष-पुच्छवन्तं विकरोति तस्मादेषोऽमुत्र पक्षपुच्छवाञ्जायते ॥१९॥ तं वै पक्षपुच्छवन्तमेव सन्तम्। न पक्षपुच्छवन्तमिव पश्यन्ति तस्माद्योनौ गर्भं न यथारूपं पश्यन्त्यथैनममुत्र पक्षपुच्छवन्तं पश्यन्ति तस्माज्जातं गर्भं यथारूपं पश्यन्ति ॥२०॥ स चतस्रः पूर्व्वाऽउपदधाति। आत्मा ह्येवाग्रे सम्भवतः सम्भवति दक्षिणतऽ उदङ्ङासीनऽउत्तराध्यां प्रथमामुपदधाति तथो ह्यस्यैषोऽभ्या-

१-३. मा. सं. १२. ४६. ४. निर्मृज्यान्नेति ग, ङ. ५. वदति इति ग, ङ, ञ. ६. जनयति इति. ख. ७. एतम् इति. ख. ८. उदङ्ङासीन इति. ख.

त्ममेवाग्निश्चितो भवति ॥२१॥ "अय ँ सोऽअग्निः । य्यस्मिन्त्सो-ममिन्द्रः सुतं दध"ऽइत्ययं वै लोको गार्हपत्यऽआपः सोमः सुतोऽस्मिँस्तल्लोकेऽपऽइन्द्रोऽधत्त "जठरे व्वावशान"ऽइति मध्यं वै जठर ँ "सहस्रियं व्वाजमत्यं न सप्तिमि"त्यापो वै सहस्रियो व्वाजः "ससवान्त्सन्त्स्तूयसे जातवेद"ऽइति चितः संश्चीयसे जातवेदऽइत्येतत् ॥२२॥ "अग्ने य्यत्ते दिवि व्वर्च्च"ऽइति । आदित्यो वाऽअ-स्य दिवि व्वर्चः पृथिव्यामित्ययमग्निः "पृथिव्यां य्यदोषधीष्वप्स्वा-यजत्रे"ति य्यऽएवौषधिषु चाप्सु चाग्निस्तमेतदाह "य्येनान्तरि-क्षमुर्व्वाततन्थे"ति व्वायुः स "त्वेषः स भानुरर्णवो नृचक्षा"ऽइति महान्त्स भानुरर्णवो नृचक्षाऽइत्येतत् ॥२३॥ "अग्ने दिवोऽअर्णमच्छा जिगांसी"ति । आपो वाऽअस्य दिवोर्ण्णस्ताऽएष धूमे-नाच्छैत्य"च्छा देवाँ २॥ ऽऊचिषे धिष्ण्या ऽ"ऽइति प्राणा वै देवा धिष्ण्यास्ते हि सर्व्वा धियऽइष्णन्ति "य्या रोचने परस्तात्सूर्य्यस्य य्याश्चावस्तादुपतिष्ठन्तऽआप" ऽइति रोचनो ह नामैष लोको य्यत्रैषऽएतत्तपति तद्याश्चैतं परेणापो य्याश्चावरेण ताऽएतदाह ॥२४॥ "पुरीष्यासोऽअग्नय"ऽइति । पशव्यासोऽग्नयऽइत्येतत् "प्रा-वणेभिः सजोषस"ऽइति प्रायणरूपं प्रायण ँ ह्येतदग्नेर्यद्गार्हपत्यो "जुषन्तां यज्ञमद्रुहोऽनमीवाऽइषो महीरि"ति जुषन्तां यज्ञमद्रुहोऽनशनायाऽइषो महीरित्येतत् ॥२५॥ नानोपदधाति । य्ये नाना-कामाऽआत्मंस्तांस्तद्दधाति सकृत्सादयत्येकं तदात्मानं करोति सूददोहसाधिवदति प्राणो वै सूददोहाः प्राणेनैवैनमेतत्सन्त-नोति सं दधाति ॥२६॥ अथ जघनेन परीत्य । उत्तरतो दक्षि-णासीनोऽपरयोर्द्दक्षिणामग्रऽउपदधाती "डामग्ने पुरुद ँ सश्ँ सनिं गोरि"ति पशवो वाऽइडा पशूनामेवास्माऽएतामाशिषमाशा-

---

१-४. मा. सं. १२.४७. ५-८. मा. सं. १२. ४८. ९. मा. सं. १२. ४९.
१०. जिगासीति इति. ख, ङ, ञ, ट. ११, १२. मा. सं. १२. ४९.
१३-१५. मा. सं. १२. ५०. १६. मा. सं. १२. ५१.

स्तै "शश्वत्तमᳪं हुवमानाय साधे"ति य्यजमानो वै हुवमानः "स्यान्नः सूनुस्तनयो व्विजावे"ति प्रजा वै सूनु "रग्ने सा ते सुमतिर्भूत्वस्मे" ऽइत्याशिषमाशास्ते ॥२७॥ अथोत्तराम् । "अयं ते य्योनिर्ऋत्वियो य्यतो जातोऽअरोचथा"ऽइत्ययं ते य्योनिर्ऋतव्यः सनातनो य्यतो जातोऽदीप्यथाऽइत्येत "त्तं जानन्नग्नऽआरोहाथा नो व्वर्द्धया रयिमि"ति य्यथैव य्यजुस्तथा बन्धुः ॥२८॥ सक्थ्यावस्यैते । ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमे सक्थ्यौ द्वे भवतो द्वे हीमे सक्थ्यौ पश्चादुपदधाति पश्चाद्धीमे सक्थ्यावग्राभ्याᳪं सᳪंस्पृष्टे भवतऽएवᳪं हीमे सक्थ्यावग्राभ्याᳪं सᳪं स्पृष्टे ॥२९॥ अथ तेनैव पुनः परीत्य । दक्षिणतऽउदङ्ङासीनः पूर्व्वयोरुत्तरामग्रऽउपदधाति "चिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीदे"त्यथ दक्षिणां "परिचिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीदे"ति ॥३०॥ बाहूऽअस्यैते । ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू द्वे भवतो द्वौ हीमौ बाहू पूर्व्वार्द्धऽउपदधाति पुरस्ताद्धीमौ बाहूऽअग्राभ्याᳪं सᳪं स्पृष्टे भवतऽएवᳪं हीमौ बाहूऽअग्राभ्याᳪं सᳪं स्पृष्टौ स वाऽइतीमाऽउपदधातीतीमेऽइतीमे तद्दक्षिणावृत्तद्धि देवत्रा ॥३१॥ अष्टाविष्टकाऽउपदधाति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति पञ्चकृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यष्टाविष्टकाः पञ्च कृत्वः सादयति तत्त्रयोदश त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥३२॥ अथ लोकम्पृणामुपदधाति । तस्याऽउपरि बन्धु-

१—३. मा. सं. १२. ५१. ४, ५. मा. सं. १२. ५२. ६. वर्धया इति. ग, ङ.
७, ८. मा. सं. १२. ५३. ९. भवति । अथ इति.

स्तिस्रः पूर्व्वांस्त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति दशोत्तरास्तासामुपरि बन्धुर्द्वे वाग्रेऽथ दशाथैकामेवथ्ंहि चितिं चिन्वन्ति तास्त्रयोदश सम्पद्यन्ते तस्योक्तो बन्धुः ॥३३॥ ताऽउभय्यऽएकविंशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चर्त्तवस्त्रयऽइमे लोकाऽअसावादित्यऽएकविंशोऽमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति ॥३४॥ एकविंशतिर्व्वेव परिश्रितः । द्वादश मासाः पञ्चर्त्तवस्त्रयऽइमे लोकाऽअयमग्निरमुतोऽध्येकविंशऽइमं तदग्निममुष्मिन्नादित्ये प्रतिष्ठापयति तद्यदेताऽएवमुपदधात्येतावेवैतदन्योऽन्यस्मिन्प्रतिष्ठापयाति तावेतावन्योन्यस्मिन्प्रतिष्ठितौ तौ वाऽएतावत्र द्वावेकविंशौ सम्पादयत्यत्र ह्येवेमौ तदोभौ भवतऽआहवनीयश्च गार्हपत्यश्च ॥३५॥ अथ पुरीषं निवपति । तस्योपरि बन्धुस्तच्चात्वालवेलाया ऽआहरत्यग्निरेष यच्चात्वालस्तथो हास्यैतदाग्नेयमेव भवति सा समम्बिला स्यात्तस्योक्तो बन्धुः ॥३६॥ व्याममात्री भवति । व्याममात्रो वै पुरुषः पुरुषः प्रजापतिः प्रजापतिरग्निरात्मसंमितां तद्योनिं करोति परिमण्डला भवति परिमण्डला हि य्योनिरथोऽअयं वै लोको गार्हपत्यः परिमण्डलऽउ वाऽअयं लोकः ॥३७॥ अथैनौ सन्निवपति । संज्ञामेवाभ्यामेतत्करोति "सँमितथ्ं सङ्कल्पेथाथ्ं" "सं वाँ मनाथ्ंसि सं व्व्रता" "ग्ने त्त्वं पुरीष्यो" "भंवतं नः समनसावि"ति शमयत्येवैनावेतदहिथ्ंसायै य्यथा नान्योन्यँ हिथ्ंस्याताम् ॥३८॥ चतुर्भिः सन्निवपति । तद्ये चतुष्पदाः पशवस्तैरेवाभ्यामेतत्संज्ञां करोत्यथोऽअन्नं वै पशवोऽन्नेनैवाभ्यामेतत्संज्ञां करोति ॥३९॥ तां न रिक्तामवेक्षेत । नेद्रिक्तामवेक्षाऽइति य्यद्रिक्तामवेक्षेत ग्रसेत हैनम् ॥४०॥ अथास्याथ्ं सिकता ऽआवपति । अग्नेरेतद्वैश्वानरस्य रेतो यत्सिकताऽ अग्निमेवास्यामेतद्वैश्वानरथ्ं

१. द्वे वाऽअग्रे इति. ग. २. प्रतिष्ठापयति इति. ख, ग, ङ, ञ.
३. प्रतिष्ठितौ ग, ङ. ४. गार्हपत्यश्च इति. ख, ग, ङ, ञ.
५. लोक इति. ख, ग, ङ, ञ. ६-९. मा. सं. इति. १२. ५७-६०.

रेतोभूतᳬं सिञ्चति सा समम्बिला स्यात्तस्योक्तो बन्धुः ॥४१॥ अथैनां विमुञ्चति[1] । अप्रदाहाय यद्धि व्युक्तं न विमुच्यते प्र तद्दह्यतऽएतद्वाऽएतद्युक्ता रेतोऽभार्षीदेतमग्निं तमत्राजीजनदथापरं धत्ते व्योषा वाऽउखा तस्माद्यदा व्योषा पूर्वᳬं रेतः प्रजनयत्यथापरं धत्ते ॥४२॥ "मातेव[2] पुत्रं पृथिवी पुरीष्यमि"ति । मातेव पुत्रं पृथिवी पशव्यमित्येतद"ग्निᳬं स्वे व्योनावभारुखे"त्याग्निᳬं स्वे व्योनावभार्षीदुखेत्येत"त्तां[3] विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चत्वि[4]"त्यृतवो वै विश्वे देवास्तदेनां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चति तामुत्तरतोऽग्नेर्निदधात्यरत्निमात्रे तस्योक्तो बन्धुः ॥४३॥ अथास्यां पयऽआनयति । एतद्वाऽएतद्रेतो धत्तेऽथ पयो धत्ते व्योषा वाऽउखा तस्माद्यदा व्योषा रेतो धत्तेऽथ पयो धत्तेऽधराः सिकता भवन्त्युत्तरं पयोऽधरᳬं हि रेतऽउत्तरं पयस्तन्मध्यऽआनयति यथा तत्प्रति पुरुषशीर्षमुपदध्यात्[5] ॥ ४४ ॥ Cf. का. श. ८. ८. २; तै. सं. ५. २. ३, ४; मै. सं ३. २. ३; कठ. २०. १. कपि.* ३१. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ. १. १. )

## ७. १. २.

प्रजापतिः प्रजाऽअसृजत । स प्रजाः सृष्ट्वा सर्व्वमाजिमित्वा व्यस्रᳬंसत तस्माद्विस्रस्तात्प्राणो मध्यत ऽउदक्रामदथास्माद्वीर्यमुदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत तस्मात्पन्नादन्नमस्रवद्यच्चक्षुरध्यशेत तस्मादस्यान्नमस्रवन्नो हैव तर्हि का चन प्रतिष्ठास ॥१॥ ते देवा ऽअब्रु-

---

१. विमुञ्चति इति. ख, ग, ङ, ञ. २-४. मा सं. १२. ६१.

५. उपदध्यात् इति. ग.

*. मुद्रितकपिष्ठलसंहिता पुस्तकेऽध्यायोऽयं एकत्रिंशत्तमत्वेन संख्यातः । श्रेडर महोदयेन तु ३० तमत्वेन परिगणितः ।

वन् । न वाऽइतोऽन्या प्रतिष्ठास्तीममेव पितरं प्रजापतिꣳ संस्करवाम सैव नः प्रतिष्ठा भविष्यतीति ॥२॥ तेऽग्निमब्रुवन् । न वाऽइतोऽन्या प्रतिष्ठास्ति त्वयीमं पितरं प्रजापतिꣳसंस्करवाम सैव नः प्रतिष्ठा भविष्यतीति किं मे ततो भविष्यतीति ॥३॥ तेऽब्रुवन् । अन्नं वाऽअयं प्रजापतिस्त्वन्मुखा ऽएतदन्नमदाम त्वन्मुखानां न ऽएषोऽन्नमसदिति तथेति तस्माद्देवा ऽअग्निमुखा ऽअन्नमदन्ति य्यस्यै हि कस्यै च देवतायै जुह्वत्यग्नावेव जुह्वत्यग्निमुखा हि तद्देवा ऽअन्नमकुर्व्वत ॥४॥ स य्योऽस्मात्प्राणो मध्यत ऽउदक्रामत् । अयमेव स व्वायुर्य्योऽयं पवतेऽथ य्यदस्माद्वीर्य्यमुदक्रामदसौ स ऽआदित्योऽथ य्यदस्मादन्नमस्रवद्यदेव संवत्सरेऽन्नं तत्तत्[1] ॥५॥ तं देवा ऽअग्नौ प्रावृञ्जन् । तद्य ऽएनं प्रवृक्तमग्निरारोहद्य ऽएवास्मात्स प्राणो मध्यत ऽउदक्रामत्स ऽएवैनꣳ स ऽआपद्यत तमस्मिन्नदधुरथ य्यदस्माद्वीर्य्यमुदक्रामत्तदस्मिन्नदधुरथ य्यदस्मादन्नमस्रवत्तदस्मिन्नदधुस्तꣳ सर्व्वं कृत्स्नꣳ संस्कृत्योर्द्ध्वमुदश्रयंस्तद्यं तमुदश्रयन्निमे स लोकाः ॥६॥ तस्यायमेव लोकः प्रतिष्ठा[2] । अथ य्योऽस्मिंल्लोकेऽग्निः सोऽस्यावाङ् प्राणोऽथास्यान्तरिक्षमात्माथ योऽन्तरिक्षे व्वायुर्य्य ऽएवायमात्मन्प्राणः सोऽस्य स द्यौरेवास्य शिरः सूर्य्याचन्द्रमसौ चक्षुषी यच्चक्षुरध्यशेत स चन्द्रमास्तस्मात्स मीलिततरोऽन्नꣳ हि तस्मादस्रवत् ॥७॥ तदेषा वै सा प्रतिष्ठा । यां तद्देवाः समस्कुर्व्वन्त्सैवेयमद्यापि प्रतिष्ठा सोऽएवाप्यतोऽ[3]धि भविता ॥८॥ स यः स प्रजापतिर्व्यस्रꣳसत । अयमेव स योऽयमग्निश्चीयते[4] तद्यदेषोखा रिक्ता शेते पुरा प्रवर्जनाद्यथैव तत्प्रजापतिरुत्क्रान्ते प्राणऽउत्क्रान्ते व्वीर्ये स्रुतेऽन्ने रिक्तोऽशयदेतस्य तद्रूपम् ॥९॥ तामग्नौ प्रवृणक्ति । यथैवैनमदो देवाः प्रावृञ्जंस्तद्य ऽएनां प्रवृक्तामग्निरारोहति य्य ऽएवास्मात्स प्राणो मध्यत ऽउदक्रामत्स ऽएवैनꣳ स ऽआपद्यते तमस्मिन्द-

---

१. तत्तत् इति. ग.       २. प्रतिष्ठा इति. ग, ख, ङ, ञ.

३. प्यतो इति. ङ.       ४. चीयते इति. ङ.

धात्यथ य्यद्रुक्मं प्रतिमुच्य बिभर्त्ति य्यदेवास्माद्वीर्यमुदक्रामत्तदस्मिन्दधात्यथ य्याः समिध ऽआदधाति य्यदेवास्मादन्नमस्रवत्तदस्मिन्दधाति ॥ १० ॥

( अर्द्धप्रपाठकः ५४ )

ता वै सायं प्रातरादधाति । अह्नश्च हि तद्रात्रेश्चान्नमस्रवत्तान्येतानि सर्वस्मिन्नेव संवत्सरे स्युः संवत्सरो हि स प्रजापतिर्य्यस्मात्तान्युदक्रामंस्तदस्मिन्नेतत्सर्व्वस्मिन्नेव सर्वं दधाति य्यस्मिन्हास्यैतदतो न कुर्यान्न हास्य तस्मिन्नेतद्ध्यान्नासंवत्सरभृतस्योक्षकेण च न भवितव्यमिति ह स्माह व्वामकक्षायणो नेदिमं पितरं प्रजापतिं व्विच्छिद्यमानं पश्यानीति तꣳ संवत्सरे सर्व्वं कृत्स्नꣳ संस्कृत्योर्द्ध्वमुच्छ्रयति य्यथैवैनमदो देवा ऽउदश्रयन् ॥११॥ तस्य गार्हपत्यऽ एवायँल्लोक[1]ः । अथ य्यो गार्हपत्येऽग्निर्षऽएवायमास्मिँल्लोकेऽग्निः सोऽस्य सोऽथ य्यदन्तराहवनीयं च गार्हपत्यं च तदन्तरिक्षमथ य्यऽआग्नीध्रीयेऽग्निर्षऽएवायमन्तरिक्षे व्वायुः सोऽस्य सऽआहवनीयऽएव द्यौरथ य्यऽआहवनीयेऽग्निस्तौ सूर्याचन्द्रमसौ सोऽस्यैषऽआत्मैव ॥१२॥ तस्य शिरऽएवाहवनीय[2]ः । अथ य्यऽआहवनीयेऽग्निर्षऽएवायꣳ शीर्षन्प्राणः सोऽस्य स तद्यत्स पक्षपुच्छवान्भवति पक्षपुच्छवान्ह्ययꣳ शीर्षन्प्राणश्चक्षुः शिरो[3] दक्षिणꣳ श्रोत्रं दक्षिणः पक्षऽउत्तरꣳश्रोत्रमुत्तरः पक्षः प्राणो मध्यमात्मा व्वाक्पुच्छं प्रतिष्ठा तद्यत्प्राणा व्वाचान्नं जग्ध्वा प्रतितिष्ठन्ति तस्[4]मात्प्राणानां व्वाक्पुच्छं प्रतिष्ठा ॥१३॥ अथ य्यदन्तराहवनीयं च गार्हपत्यं च । सऽआत्माथ य्यऽआग्नीध्रीयेऽग्निर्षऽएवायमन्तरात्मन्प्राणः सोऽस्य स प्रतिष्ठैवास्य गार्हपत्योऽथ य्यो गार्हपत्येऽग्निः सोऽस्यावाङ् प्राणः ॥१४॥ तꣳहैके त्रिचितं चिन्वन्ति । त्रयो

---

१. लोक इति. ग, ख, ङ, ञ. २. आहवनीय इति. ग, ख, ङ, ञ.
३. शिरो इति. ग, ङ, ४. तस्माद्वाक्पुच्छं इति. ग, ङ.

वाऽइमेऽवाञ्चः प्राणाऽइति न तथा कुर्य्यादिति ते रेचयन्त्येकविꣳश-
सम्पदमथोऽअनुष्टुप्सम्पदमथो बृहतीसम्पदं[1] ये तथा कुर्व्वन्त्ये-
कꣳ ह्येवैतद्रूपं योनिरेव प्रजातिरेव यदेतेऽवाञ्चः प्राणा यद्धि
मूत्रं करोति यत्पुरीषं प्रैव तज्जायते ॥१५॥ अथातः सम्पदेव[2] ।
एकविꣳशतिरिष्टका नव यजूꣳषि तत्त्रिꣳशत्सादनं च सूददोहाश्च
तद्द्वात्रिꣳशद्द्वात्रिꣳशदक्षरानुष्टुप्सैषानुष्टुप् ॥१६॥ एकविꣳशति-
र्व्वेव परिश्रितः । यजुर्द्वाविꣳशं व्युदूहनस्य यजुरूषाश्च यजुश्च सि-
कताश्च यजुश्च पुरीषं च यजुश्च चतुर्भिः सन्निवपति विमुञ्चति
पञ्चमेन ततस्त्रिभिरियं द्वात्रिꣳशदक्षरानुष्टुप्सैषानुष्टुप् ॥१७॥ अथैते
द्वे यजुषी । सोऽनुष्टुवेव वाग्वाऽअनुष्टुप्तद्यदिदं द्वयं वाचो
रूपं दैवं च मानुषं चोच्चैश्च शनैश्च तदेते द्वे ॥१८॥ ता वाऽएता-
स्तिस्रोऽनुष्टुभः । चितऽएष गार्हपत्यस्तद्यदेताऽअत्र तिस्रोऽनुष्टुभः
सम्पादयन्त्यत्र ह्येवेमे तदा सर्व्वे लोका भवन्ति ततोऽन्यतरां
द्वात्रिꣳशदक्षरामनुष्टुभमाहवनीयꣳ हरन्ति सऽआहवनीयः सा
द्यौस्तच्छिरोऽथेहान्यतरा परिशिष्यते स गार्हपत्यः सा प्रतिष्ठा
सऽउऽअयँल्लोकः[3] ॥१९॥ अथ येऽएते द्वे यजुषी । एतत्तद्यदन्तरा-
हवनीयं च गार्हपत्यं च तदन्तरिक्षꣳ सऽआत्मा तद्यत्ते द्वे भवत-
स्तस्मादेतत्तनीयो यदन्तराहवनीयं च गार्हपत्यं च तस्मादेषाँल्लोका-
नामन्तरिक्षलोकस्तनिष्ठः॥२०॥सैषा त्रेधाविहिता वागनुष्टुप् । तामे
षोऽग्निः प्राणो भूत्वानुसञ्चरति यऽआहवनीयेऽग्निः स प्राणः सो-
ऽसावादित्योऽथ यऽआग्नीध्रीयेऽग्निः स व्यानः सऽउऽअयं वायु-
र्योऽयं पवतेऽथ यो गार्हपत्येऽग्निः सऽउदानः सऽउऽअयं यो-
ऽयमस्मिँल्लोकेऽग्निरेवं विद्ध वाव सर्व्वां वाचं सर्व्वं प्राणꣳ सर्व्व-
मात्मानꣳ संस्कुरुते ॥२१॥ सैषा बृहत्येव । ये वै द्वे द्वात्रिꣳशतौ

---

१. सम्पदं इति. ग, ङ.   २. सम्पदेव इति. ग, ख, ङ, ञ.

३. लोकः इति. ग, ङ, ञ.

द्वात्रिꣳशदेव तदु थैते द्वे यजुषी तच्चतुस्त्रिꣳशदग्निरेव पञ्चत्रिꣳशो नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्याꣳ स उ त्र्यक्षरस्तत्षट्त्रिꣳ शत्षट्त्रिꣳशदक्षरा बृहती बृहतीं वाऽएष सञ्चितोऽभिसम्पद्यते यथा-ह्वै योनौ रेतः सिच्यते तादृग्जायते तद्यदेतामत्र बृहतीं करोति तस्मादेष सञ्चितो बृहतीमभिसम्पद्यते ॥२२॥ तदाहुः । यदयं लोको गार्हपत्योऽन्तरिक्षं धिष्ण्या द्यौराहवनीयोऽन्तरिक्षलोकऽउ ऽअस्माल्लोकादनन्तर्हितोऽथ कस्माद्गार्हपत्यं चित्वाहवनीयं चिनो-त्यथ धिष्ण्यानिति सह हैवेमावग्रे लोकावासतुस्तयोर्वियतोर्योऽन्त-रेणाकाश ऽआसीत्तदन्तरिक्षमभवदीक्षꣳ हैतन्नाम ततः पुरान्तरा वाऽइदमीक्षमभूदिति तस्मादन्तरिक्षं तद्यद्गार्हपत्यं चित्वाहवनीयं चिनोत्येतौ ह्यग्रे लोकावसृज्येतामथ प्रत्येत्य धिष्ण्यान्निवपति कर्म्मण ऽएवानन्तरयायाथोऽअन्तयोर्व्वाव संस्क्रियमाणयोर्मध्यꣳ संस्क्रियते ॥२३॥ Cf. का. श. ८. ८. ३; तै. सं. ५. २. ४; मै. सं. ३. २. ४; कठ. २०. २; कपि ३१. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
प्रथमप्रपाठके द्वितीयं ब्राह्मणम्॥ (अ. . १. २. )

( इति प्रथमोऽध्यायः )

## ७. १. ३.

अथातो नैर्ऋतीर्हरन्ति । एतद्वै देवा गार्हपत्यं चित्वा समारो-हन्नयं वै लोको गार्हपत्यऽइममेव तँल्लोकꣳ संस्कृत्य समारोहं-स्ते तमऽएवानतिदृश्यमपश्यन् ॥१॥ तेऽब्रुवन् । उप तज्जानीत यथेदं तमः पाप्मानमपहनामहाऽइति तेऽब्रुवंश्चेतयध्वमिति चिति-मिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेदं तमः पाप्मानमपहनाम-हाऽइति ॥२॥ ते चेतयमानाः । एता ऽइष्टका ऽअपश्यन्नैर्ऋतीस्ता

१. तस्मादिति ङ.

ऽउपादधत ताभिस्तत्तमः पाप्मानमपाघ्नत पाप्मा वै निर्ऋतिस्त-
द्यदेताभिः पाप्मानं निर्ऋतिमपाघ्नत तस्मादेता नैर्ऋत्यः ॥३॥ तद्वा-
ऽएतत्क्रियते । यद्देवाऽअकुर्वन्निदं नु तत्तमः स पाप्मा देवैरेवा-
पहतो यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्यथो य ऽएव
पाप्मा या निर्ऋतिस्तमेताभिरपहते तद्यदेताभिः पाप्मानं निर्ऋति-
मपहते तस्मादेता नैर्ऋत्यः ॥४॥ यद्वेवैता नैर्ऋतीर्हरन्ति । प्रजापतिं
विस्रस्तं यत्र देवाः समस्कुर्वंस्तमुखायां योनौ रेतोभूतमसिञ्च-
न्योनिर्वाऽउखा तस्माऽएताᳪं संवत्सरे प्रतिष्ठाᳪं समस्कुर्वन्निममेव
लोकमयं वै लोको गार्हपत्यस्तस्मिन्नेनं प्राजनयंस्तस्य यः पाप्मा
यः श्लेष्मा यदुल्बं यज्जरायु तदस्यैताभिरपाघ्नंस्तद्यदस्यैताभिः
पाप्मानं निर्ऋतिमपाघ्नंस्तस्मादेता नैर्ऋत्यः ॥५॥ तथैवैतद्यजमानः ।
आत्मानमुखायां योनौ रेतोभूतᳪं सिञ्चति योनिर्वाऽउखा
तस्माऽएताᳪं संवत्सरे प्रतिष्ठाᳪं संस्करोतीममेव लोकमयं वै
लोको गार्हपत्यस्तस्मिन्नेनं प्रजनयति तस्य यः पाप्मा यः श्लेष्मा
यदुल्बं यज्जरायु तदस्यैताभिरपहन्ति तद्यदस्यैताभिः पाप्मानं नि-
र्ऋतिमपहन्ति[1] तस्मादेता नैर्ऋत्यः ॥६॥ पादमात्र्यो भवन्ति । अध-
स्पदमेव तत्पाप्मानं निर्ऋतिं कुरुतेऽलक्षणा भवन्ति यद्वै नास्ति
तदलक्षणमसन्तमेव तत्पाप्मानं निर्ऋतिं कुरुते तुषपक्वा भवन्ति
नैर्ऋता वै तुषा नैर्ऋतैरेव तन्नैर्ऋतं कर्म करोति कृष्णा भवन्ति
कृष्णᳪं हि तत्तमऽआसीदथो कृष्णा वै निर्ऋतिः ॥७॥ ताभिरेतां
दिशं यन्ति । एषा वै नैर्ऋती दिङ्नैर्ऋत्यामेव तद्दिशि[2] निर्ऋतिं
दधाति स यत्र स्वकृतं वेरिणᳪं श्वभ्रप्रदरो वा स्यात्तदेना ऽउ-
पदध्याद्यत्र वाऽअस्याऽअवदीर्यते यत्र वास्याऽओषधयो न जायन्ते
निर्ऋतिर्हास्यैतद्गृह्णाति नैर्ऋतऽएव तद्भूमेर्निर्ऋतिं दधाति ताः

---

१. अवहन्ति इति. ग, ङ,     २. तद्दिशि इति. ग, ख, ङ, ञ,

पराचीर्लोकभाजः कृत्वापदधाति ॥८॥ "असुन्वन्तमयजमानमिच्छे"-
ति । यो वै न सुनोति न यजते तं निर्ऋतिर्ऋच्छति "स्तेनस्ये-
त्यामन्विहि तस्करस्ये"ति स्तेनस्य चेत्यामन्विहि तस्करस्य चेत्येत-
द्यथा स्तेनस्तस्करः प्रलायमेत्येवं प्रलायमिहीत्य"न्यमस्मदिच्छ
सा त"ऽइत्येत्यमिच्छं विद्वाꣳसमिच्छेत्येत"न्नमो देवि निर्ऋते
तुभ्यमस्त्वि"ति नमस्कारेणैवैनामपहते ॥९॥ "नमः सु ते निर्ऋते
तिग्मतेज"ऽइति । तिग्मतेजा वै निर्ऋतिस्तस्या ऽएतन्नमस्करो"त्य-
यस्मयं विचृता बन्धमेतमि"त्ययस्मयेन ह वै तं बन्धेन निर्ऋतिर्ब-
ध्नाति यं बध्नाति "यमेन त्वं यम्या संविदाने"त्यग्निर्वै यमऽ-
इयं यम्याभ्याꣳ हीदꣳ सर्वं यतमाभ्यां त्वꣳ संविदानेत्येत"दु
त्तमे नाकेऽअधि रोहयैनमि"ति स्वर्गो वै लोको नाकः स्वर्गे लोके
यजमानमधिरोहयेत्येतत् ॥१०॥ "यस्यास्ते घोरऽआसञ्जुहोमी"ति ।
घोरा वै निर्ऋतिस्तस्याऽएतदासञ्जुहोति यत्तद्देवत्यं कर्म्म करो"त्ये-
षां बन्धानामवसर्जनाये"ति यैर्बन्धैर्बद्धो भवति"यां त्वा जनो
भूमिरिति प्रमन्दत"ऽइतीयं वै भूमिरस्यां वै स भवति यो भवति
"निर्ऋतिं त्वाहं परिवेद विश्वत"ऽइति निर्ऋतिरिति त्वाहं परि-
वेद सर्वत ऽइत्येतदियं वै निर्ऋतिरियं वै तं निरर्पयति यो निर्ऋ-
च्छति तद्यथा वै ब्रूयादसावामुष्यायणोऽसि वेद त्वा मा मा हिꣳ-
सीरित्येवमेतदाह नतराꣳ हि विदितऽआमन्त्रितो हिनस्ति ॥११॥
नोपस्पृशति । पाप्मा वै निर्ऋतिर्नेत्पाप्मना सꣳस्पृशाऽइति न
सादयति प्रतिष्ठा वै सादनं नेत्पाप्मानं प्रतिष्ठापयानीति न सूददो-
हसाधिवदति प्राणो वै सूददोहा नेत्पाप्मानं प्राणेन सन्तनवानि
सन्दधानीति ॥१२॥ ता हैके परस्तादर्वाचीरुपदधति । पाप्मा वै
निर्ऋतिर्नेत्पाप्मानं निर्ऋतिमन्ववायामेति न तथा कुर्यात्पराचीरेवो-
पदध्यात्पराञ्चमेव तत्पाप्मानं निर्ऋतिमपहते ॥१३॥ तिस्रऽइष्टका

१. दधाति. इति. ग, ङ. २–५. मा सं. १२. ६२.
६–९. मा. सं. १२.६३. १०–१३. मा. सं. १२.६४. १४. निर्ऋतिरिति. ङ.

ऽउपदधाति। त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैव तत्पाप्मानं निर्ऋतिमपहते ॥१४॥ अथासन्दीᳬं शिक्यᳬं । रुक्मपाशमिण्ड्वे तत्पराद्धें न्यस्यति नैर्ऋतो वै पाशो निर्ऋतिपाशादेव तत्प्रमुच्यते "यं[1] ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यमि"त्यनेवंविदुषा ह्यविचृत्य"स्तं ते[3] विष्याम्यायुषो न मध्यादि"त्यग्निर्वाऽआयुस्तस्यैतन्मध्यं व्यच्चितो गार्हपत्यो भवत्युचितऽआहवनीयस्तस्माद्यदि व्युवाग्निं चिनुते य्यदि स्थविर ऽआयुषो न मध्यादित्येवाह्वा "थैतं[4] पितुमद्धि प्रसूत" ऽइत्यन्नं वै पितुरथैतदन्नमद्धि प्रमुक्तऽइत्येतत्त्रिष्टुब्भिर्व्वज्रो वै[6] त्रिष्टुब्व्रज्रेणैव तत्पाप्मानं निर्ऋतिमपहते ॥१५॥ तिस्रऽइष्टका भवन्ति । आसन्दी शिक्यᳬं रुक्मपाशऽइण्ड्वे तदष्टावष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैव तत्पाप्मानं निर्ऋतिमपहते ॥१६॥ अथान्तरेणोदचमसं निनयति। व्वज्रो वाऽआपो व्वज्रेणैव तत्पाप्मानं निर्ऋतिमन्तर्द्धत्ते "नमो भूत्यै य्येदं चकारे"त्युपोत्तिष्ठन्ति भूत्यै वाऽएतदग्रे देवाः कर्म्माकुर्व्वत तस्याऽएतन्नमोऽकुर्व्वन्भूत्याऽउऽएवायमेतत्कर्म कुरुते तस्याऽएतन्नमस्करोत्यप्रतीक्षमायन्त्यप्रतीक्षमेव तत्पाप्मानं निर्ऋतिं जहति ॥१७॥ प्रत्येत्याग्निमुपतिष्ठते । एतद्वाऽएतदयथायथं करोति य्यदग्नौ सामिचितऽएतां दिशमेति तस्माऽएवैतन्निह्नुतेऽहिᳬंसायै ॥१८॥ य्यद्वेवोपतिष्ठते । अयं वै लोको गार्हपत्यः प्रतिष्ठा वै गार्हपत्यऽइयमु वै प्रतिष्ठाथैतदपथमिवैति य्यदेतां दिशमेति तद्यदुपतिष्ठतऽइमामेवैतत्प्रतिष्ठामभि प्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥१९॥ "निवेशनः संगमनो व्वसूनामि"ति । निवेशनो ह्ययं लोकः संगमनो व्वसूनां "व्विश्वा रूपाभिचष्टे शचीभिरि"ति सर्व्वाणि रूपाण्यभिचष्टे शचीभिरित्येत "द्देवं

---

१. मपहते इति. ख. २-४, ७. मा. सं. १२. ६५. ५. इत्येतदिति. ग, ङ.
६. वै इति. ग, ङ. ८. दिशमेतीति. ङ. ९-११. मा. सं. १२. ६६.

ऽइव सविता सत्यधर्म्मेन्द्रो न तस्थौ समरे पथीनामि''ति व्यथैव व्यजुस्तथा बन्धुः ॥२०॥ Cf. का. श. ९. १. १; तै. सं. ५. २. ४; मै. सं. ३. २. ४; कठ. सं. २०. २; कपि. सं. ३१. ४.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ (अ. २. १.)

## ७. १. ४.

### ( प्रायणीयेष्टिः भूकर्षणं च )

अथ प्रायणीयं निर्व्वपति । तस्य हविष्कृता व्वाचं व्विसृजते व्वाचं व्विसृज्य स्तम्बयजुर्हरति स्तम्बयजुर्हृत्वा पूर्व्वेण परिग्रहेण परिगृह्य लिखित्वाह हर त्रिरिति हरति त्रिराग्नीध्रः ॥१॥ प्रत्येत्य प्रायणीयेन प्रचरति । प्रायणीयेन प्रचर्य सीरं युनक्त्येतद्वाऽएनं देवाः संस्करिष्यन्तः पुरस्तादन्नेन समार्द्धयंस्तथैवैनमयमेतत्संस्करिष्यन् पुरस्तादन्नेन समर्द्धयति सीरं भवति सेरᳬहैतद्यत्सीरमिरामेवास्मिन्नेतद्दधाति ॥२॥ औदुम्बरं भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति मौञ्जं परिसार्यं त्रिवृत्तस्योक्तो बन्धुः ॥३॥ सोऽग्नेर्द्दक्षिणाᳬश्रोणिम् । जघनेन तिष्ठन्नुत्तरस्याᳬसस्य पुरस्ताद्युज्यमानमभिमन्त्रयते "सीरा व्युञ्जन्ति कवयो युगा व्वितन्वते पृथगि''ति व्ये व्विद्वाᳬसस्ते कवयस्ते सीरं च युञ्जन्ति युगानि च व्वितन्वते पृथ"ग्धीरा देवेषु सुम्नये''ति यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वानाऽइत्येतत् ॥४॥ "युनक्त सीरा व्वि व्युगा तनुध्वमि''-ति । युञ्जन्ति हि सीरं व्वि युगानि तन्वन्ति "कृते व्योनौ व्वपतेह बीजमि''ति बीजाय वाऽएषा व्योनिष्क्रियते यत्सीता व्यथा ह वाऽअयोनौ रेतः सिञ्चेदेवं तद्यदकृष्टे व्वपति "गिरा च श्रुष्टिः सभरा ऽअसन्न''ऽइति व्वाग्वै गीरन्नᳬश्रुष्टि"र्नेदीयऽइत्सृण्यः

---

१. वन्धुः इति. ग. २, ३. मा: सं. १२. ६७ ४–७. मा. सं. १२. ६८.

पक्वमेयादि''ति यदा वाऽअन्नं पच्यतेऽथ तत्स्रुण्योपचरन्ति द्वाभ्यां युनक्ति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥५॥ स दक्षिणमेवाग्रे युनक्ति। अथ सव्यमेवं देवत्रेतरथा मानुषे षड्गवं भवति द्वादशगवं वा चतुर्व्विंशतिगवं वा संवत्सरमेवाभिसम्पदम् ॥६॥ अथैनं विकृषति । अन्नं वै कृषिरेतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादन्नमदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादन्नं [1]दधाति ॥७॥ स वाऽआत्मानमेव विकृषति । न पक्षपुच्छान्यात्मंस्तदन्नं दधाति यदु वाऽआत्मन्नन्नं धीयते तदात्मानमवति [2]तत्पक्षपुच्छान्यथ यत्पक्षपुच्छेषु नैव तदात्मानम[3]वति न पक्षपुच्छानि ॥८॥ स [4]दक्षिणार्द्धेनाग्नेः । अन्तरेण परिश्रितः प्राचीं प्रथमाᳬ सीतां कृषति ''[5]शुनᳬ सुफाला विकृषन्तु भूमिᳬ शुनं कीनाशाऽअभियन्तु वाहैरि''ति शुनᳬ शुनमिति यद्वै समृद्धं तच्छुनᳬ समर्द्धयत्येवैनामे[6]तत् ॥९॥ अथ जघनार्द्धेनोदीचीम् । ''घृतेन[7] सीता मधुना समज्यतामि''ति यथैव यजुस्तथा बन्धु''र्विश्वैर्देवैरनुमता मरुद्भिरि''ति विश्वे च वै देवा मरुतश्च वर्षस्येशत''ऽऊर्ज्जस्वती पयसा पिन्वमाने''ति रसो वै पय ऽऊर्ज्जस्वती रसेनान्नेन पिन्वमानेत्येत''दस्[10]मान्त्सीते पयसाभ्याववृत्स्वे''त्यस्मान्त्सीते रसेनाभ्याववृत्स्वेत्येतत्॥१०॥ अथोत्तरार्द्धेन प्राचीम् । ''लाङ्[11]गलं पवीरवदि''ति लाङ्गलᳬ रयिमदित्येत''त्सुशे[12]वᳬ सोमपित्सर्व्वि''त्यन्नं वै सोम''स्त[13]दुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहनामि''त्येतद्धि सर्व्वᳬ सीतोद्वपति ॥११॥ अथ पूर्व्वार्द्धेन [14]दक्षिणा । ''[15]कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्यऽओषधीभ्य'' ऽइति सर्व्वदेवत्या वै कृषिरेताभ्यो देवताभ्यः सर्व्वान् कामान्धुक्ष्वेत्येतादित्यग्रे

१. दधाति इति. च.  २. तत्पक्ष इति. ग, ङ.  ३. मवति इति. ग, ङ.
४. दक्षिणार्द्धेनाग्नेः इति. च.  ५. मा. सं. १२. ६९  ६. मेतत् इति. च.
७–१० मां सं. १२. ७०.  ११–१३. मा. सं. १२. ७१.
१४. दक्षिणाम् इति ग.  १५. मा. सं. १२. ७२.

कृषत्यथेति। अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥१२॥ चतस्रः सीता य्यजुषा कृषति । तद्यच्चतसृषु दिक्ष्वन्नं तदस्मिन्नेतद्दधाति तद्वै य्यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥१३॥ अथात्मानं व्विकृषति । तद्यदेव संवत्सरेऽन्नं तदस्मिन्नेतद्दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीꣳ सर्व्वं वाऽअनिरुक्तꣳ सर्व्वेणैवास्मिन्नेतदन्नं दधातीत्यग्रे कृषत्यथेति । अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥१४॥ तिस्रस्तिस्रः सीताः कृषति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१५॥ द्वादश सीतास्तूष्णीं कृषति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१६॥ ताऽउभय्यः षोडश सम्पद्यन्ते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितमेवास्मिन्नेतदन्नं दधाति य्यद्वु वाऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥१७॥ य्यद्वेवैनं व्विकृषति । एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तात्प्राणानदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तात्प्राणान्दधाति लेखा भवन्ति लेखासु हीमे प्राणाः ॥१८॥ ( शतम् ४००० ) चतस्रः सीता य्यजुषा कृषति । तद्यऽइमे शीर्षंश्चत्वारो निरुक्ताः प्राणास्तानस्मिन्नेतद्दधाति तद्वै य्यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमे शीर्षन्प्राणाः ॥१९॥ य्यद्वेवात्मानं व्विकृषति । य्यऽएवेमेऽन्तरात्मन्प्राणास्तानास्मिन्नेतद्दधाति तूष्णीं को हि तद्वेद य्यावन्त ऽइमेन्तरात्मन्प्राणाः ॥२०॥ अथैनान्विमुञ्चति । आप्त्वा तं कामं य्यस्मै कामायैनान्युङ्क्ते "व्विमुच्यध्वमघ्न्या" ऽइत्यघ्न्या हैते देवत्रा "देवयाना" ऽइति दैवꣳ ह्येभिः कर्म करोत्य"गन्म तमसस्पारमस्ये"त्यशनाया वै तमो ऽगन्मास्याऽअशनायायै पारमित्येत"ज्ज्योतिरापामे"ति ज्योतिर्ह्याप्नोति य्यो देवान्यो यज्ञमथैनानुदीचः प्राचः प्रसृजति तस्योक्तो बन्धुस्तानध्व-

१. देवत्र इति च. २. दिश इति. ग, ख, ङ, ञ. ३-६. मा. सं. १२. ७३.

र्य्यवे ददाति स हि तैः करोति तांस्तु दक्षिणानां कालेऽनुदिशेत् ॥२१॥ Cf. का. श. ९. १. २; तै. सं. ५. २. ५; मै. सं. ३. २. ५. कठ. सं. २०. ३; कपि. सं. ३२. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ( अ.२.२. )

( प्रथमः प्रपाठकस्समाप्तः ॥ )

( कण्डिकासंख्या १०८ )

## अथ द्वितीयः प्रपाठकः

### ७. २. १.

ॐ अथ दर्भस्तम्बमुपदधाति । एतद्वै देवाऽ ओषधीरुपादधत तथैवैतद्यजमान ऽओषधीरुपधत्ते ॥१॥ यद्वेव दर्भस्तम्बमुपदधाति । जायतऽएषऽएतद्यच्चीयते सऽएष सर्व्वस्माऽअन्नाय जायतऽउभय-स्यैतदन्नं यद्दर्भाऽआपश्च ह्येताऽओषधयश्च या वै वृत्राद्बीभत्समा-नाऽआपो धन्व दभन्त्यऽउदायंस्ते दर्भाऽअभवन्यद्दभन्त्यऽउदा-यंस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्याऽआपो वृत्राभिप्रक्षरिता यद्द-र्भा यदु दर्भास्तेनौषधय ऽउभयेनैवैनमेतदन्नेन प्रीणाति ॥२॥ सीतासमरे । वाग्वै सीतासमरः प्राणा वै सीतास्तासामयँ समयो वाचि वै प्राणेभ्योऽन्नं धीयते मध्यतो मध्यतऽएवास्मिन्नेतदन्नं दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीँ सर्व्वं वाऽअनिरुक्तँ सर्व्वे-णैवास्मिन्नेतदन्नं दधाति ॥३॥ अथैनमभिजुहोति । जायतऽएषऽ एतद्यच्चीयते सऽएष सर्व्वस्माऽअन्नाय जायते सर्व्वस्योऽअस्यैष रसो यदाज्यमपाꣳ ह्येषऽओषधीनां च रसोऽस्यैवैनमेतत्सर्व्वस्य रसेन प्रीणाति यावानु वै रसस्तावानात्मानेनैवैनमेतत्सर्व्वेण प्रीणा-ति पञ्चगृहीतेन पाङ्क्तोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽ-

1. समरे इति. ग.　　2. दन्ने दधाति इति. ग, ङ.

कृषत्यथेति। अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥१२॥ चतस्रः सीता य्यजुषा कृषति। तद्यच्चतसृषु दिक्ष्वन्नं तदस्मिन्नेतद्दधाति तद्वै य्यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥१३॥ अथात्मानं व्विकृषति। तद्यदेव संवत्सरेऽन्नं तदस्मिन्नेतद्दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीᳬं सर्व्वं वाऽअनिरुक्तᳬं सर्व्वेणैवास्मिन्नेतदन्नं दधातीत्यग्रे कृषत्यथेति। अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥१४॥ तिस्रस्तिस्रः सीताः कृषति। त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१५॥ द्वादश सीतास्तूर्ष्णीं कृषति। द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१६॥ ताऽउभय्यः षोडश सम्पद्यन्ते। षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितमेवास्मिन्नेतदन्नं दधाति य्यदु वाऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥१७॥ य्यद्वेवैनं व्विकृषति। एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तात्प्राणानदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तात्प्राणान्दधाति लेखा भवन्ति लेखासु ह्यीमे प्राणाः ॥१८॥ ( शतम् ४००० ) चतस्रः सीता य्यजुषा कृषति। तद्यऽइमे शीर्षँश्चत्वारो निरुक्ताः प्राणास्तानस्मिन्नेतद्दधाति तद्वै य्यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमे शीर्षन्प्राणाः ॥१९॥ य्यद्वेवात्मानं व्विकृषति। य्यऽएवेमेऽन्तरात्मन्प्राणास्तानास्मिन्नेतद्दधाति तूर्ष्णीं को हि तद्वेद य्यावन्त ऽइमेन्तरात्मन्प्राणाः ॥२०॥ अथैनान्विमुञ्चति। आप्त्वा तं कामं य्यस्मै कामायैनान्युङ्क्ते "व्विमुँच्यध्वमघ्न्या" ऽइत्यघ्न्या ह्येते देवत्रा "देवयाना" ऽइति दैवᳬं ह्येभिः कर्म करोत्य"गन्म तमसस्पारमस्ये"त्यशनाया वै तमो ऽगन्मास्या ऽअशनायायै पारमित्येत"ज्ज्योतिरापामे"ति ज्योतिर्ह्याप्नोति य्यो देवान्यो यज्ञमुथैनानुदीचः प्राचः प्रसृजति तस्योक्तो बन्धुस्तानध्व-

१. देवत्र इति च. २. दिश इति. ग, ख, ङ, ञ. ३-६. मा. सं. १२. ७३.

र्थ्युवे ददाति स हि तैः करोति तांस्तु दक्षिणानां कालेऽनुदिशेत् ॥२१॥ Cf. का. श. ९. १. २; तै. सं. ५. २. ५; मै. सं. ३. २. ५. कठ. सं. २०. ३; कपि. सं. ३२. ५.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
प्रथमप्रपाठके चतुर्थं ब्राह्मणम्॥ ( अ.२.२. )

( प्रथमः प्रपाठकस्समाप्तः ॥ )

( कण्डिकासंख्या १०८ )

## अथ द्वितीयः प्रपाठकः

### ७. २. १.

ॐ अथ दर्भस्तम्बमुपदधाति। एतद्वै देवाऽ ओषधीरुपादधत तथैवैतद्यजमान ऽओषधीरुपधत्ते ॥१॥ य्यद्वेव दर्भस्तम्बमुपदधाति। जायतऽएषऽएतद्यच्चीयते सऽएष सर्व्वस्माऽअन्नाय जायतऽउभयम्वेतदन्नं य्यद्दर्भाऽआपश्च ह्येताऽओषधयश्च या वै व्वृत्राद्वीभत्समानाऽआपो धन्व दृभन्त्यऽउदायंस्ते दर्भाऽअभवन्यदृदृभन्त्यऽउदायंस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्याऽआपो व्वृत्राभिप्रक्षरिता य्यद्दर्भा य्यदु दर्भास्तेनौषधय ऽउभयेनैवैनमेतदन्नेन प्रीणाति ॥२॥ सीतासमरे। व्वाग्वै सीतासमरः प्राणा वै सीतास्तासामयँ समयो व्वाचि वै प्राणेभ्योऽन्नं धीयते मध्यतो मध्यतऽएवास्मिन्नेतदन्नं दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीँ सर्व्वं वाऽअनिरुक्तँ सर्व्वेणैवास्मिन्नेतदन्नं दधाति ॥३॥ अथैनमभिजुहोति। जायतऽएषऽएतद्यच्चीयते सऽएष सर्व्वस्माऽअन्नाय जायते सर्व्वस्योऽअस्यैष रसो यदाज्यमपाञ्च ह्येषऽओषधीनां च रसोऽस्यैवैनमेतत्सर्व्वस्य रसेन प्रीणाति य्यावानु वै रसस्तावानात्मानेनैवैनमेतत्सर्व्वेण प्रीणाति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽ-

---

१. समरे इति. ग.	२. दन्ने दधाति इति. ग, ङ.

ग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन [1]प्रीणाति ॥४॥ यद्वेवैनमभिजुहोति । एतद्वै यत्रैतं प्राणा ऽऋषयो ऽग्रे ऽग्निᳬ समस्कुर्व्वंस्तदस्मिन्नेतं पुरस्ताद्भागमकुर्व्वत तस्मात्पुरस्ताद्भागास्तद्यदभिजुहोति य ऽएवास्मिंस्ते प्राणा ऽऋषयः पुरस्ताद्भागमकुर्व्वत तानेवैतत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥५॥ यद्वेवैनमभिजुहोति । एतद्वै यान्येतास्मिन्नग्नौ रूपाण्युपधास्यन्भवति साम्नस्तोमान्यानि पृष्ठानि यानि छन्दाᳬसि तेभ्य ऽएतं पुरस्ताद्भागं करोति तान्येवैतत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥६॥ यद्वेवैनमभिजुहोति । एतद्वै देवा ऽ अबिभयुर्दीर्घं वा ऽइदं कर्म्म यद्वै न ऽइममिह रक्षाᳬसि नाष्ट्रा न हन्युरिति त ऽएतामेतस्य कर्म्मणः पुरस्तात्सᳬस्थामपश्यंस्तमत्रैव सर्व्वᳬसमस्थापयन्नत्राचिन्वंस्तथैवैनमयमेतदत्रैव सर्व्वᳬ सᳬस्थापयत्यत्र चिनोति ॥७॥ "सजूरब्द"[2] ऽइति चितिः । "अयवोभिरि"[3]ति पुरीषᳬ "सजूरुषा"[4] ऽइति चितिः "रुणीभिरि"[5]ति पुरीषᳬ "सजोषसावश्विने"[6]ति चिति"दᳬसोभिरि"[7]ति पुरीषᳬ"सजूः सूर" ऽइति चिति"रेतशेने"ति पुरीषᳬ "सजूर्वैश्वानर" ऽइति चिति"रिडये"ति पुरीषं "घृतेने"[11]ति चितिः "स्वे"[12]ति पुरीषᳬ "[13]हे"ति चितिः ॥८॥ त्रयोदशैता व्याहृतयो भवन्ति । त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्याज्येन जुहोत्यग्निरेष यदाज्यमग्निमेवैतच्चिनोति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यूर्ध्वामुद्गृह्णञ्जुहोत्यूर्ध्वं तदग्निं चितिभिश्चिनोति ॥९॥

Cf. का. श. ९. १. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे

द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. २. ३.)

---

१. प्रीणाति इति च. २-१३. मा. सं. १२. ७४.

## ७. २. २.

### ( कृष्टेऽपांनिनयनम् )

अथोदचमसान्निनयति । एतद्वै देवा ऽअब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना वृष्टिमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥१॥ उदचमसा भवन्ति[1] । आपो वै वृष्टिर्वृष्टिमेवास्मिन्नेतद्दधात्यौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्यो वृष्टिं दधाति॥२॥त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति॥३॥द्वादशोदचमसान् कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥४॥ स वै कृष्टे निनयति । तस्मात्कृष्टाय वर्षति स यत्कृष्टऽएव निनयेन्नाकृष्टे कृष्टायैव वर्षेन्नाकृष्टायाथ यदकृष्टऽएव निनयेन्न कृष्टेऽकृष्टायैव वर्षेन्न कृष्टाय कृष्टे चाकृष्टे च निनयति तस्मात्कृष्टाय चाकृष्टाय च वर्षति ॥५॥ त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥६॥ स्रुक्त्रेवोदचमसान्निनयति । एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादपो दधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादपो दधाति ॥७॥ त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥८॥ द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥९॥ स वै कृष्टे निनयति । प्राणेषु तदपो दधाति स यत्कृष्टऽएव निनयेन्नाकृष्टे प्राणेष्वेवापः स्युर्नैतरस्मिन्नात्मन्नथ यदकृष्टऽएव निनयेन्न कृष्टेऽआत्मन्नेवापः स्युर्न[2] प्राणेषु कृष्टे चाकृष्टे च निनयति तस्मादिमाऽउभयत्रापः प्राणेषु चात्मंश्च ॥१०॥ त्रीन्कृष्टे

---

१. भवन्ति २. नापः इति, ब.

ग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन [1]प्रीणाति ॥४॥ य्यद्वेवैनमभिजुहोति । एतद्वै य्यत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निꣳ समस्कुर्व्वंस्तदस्मिन्नेतं पुरस्ताद्भागमकुर्व्वत तस्मात्पुरस्ताद्भागास्तद्यदभिजुहोति य्यऽएवास्मिंस्ते प्राणाऽऋषयः पुरस्ताद्भागमकुर्व्वत तानेवैतत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥५॥ य्यद्वेवैनमभिजुहोति । एतद्वै य्यान्येतस्मिन्नग्नौ रूपाण्युपधास्यन्भवति' सामान्स्तोमान्यानि पृष्ठानि य्यानि छन्दाꣳसि तेभ्य ऽएतं पुरस्ताद्भागं करोति तान्येवैतत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥६॥ य्यद्वेवैनमभिजुहोति । एतद्वै देवाऽ अबिभयुर्दीर्घं वाऽइदं कर्म्म यद्वै नऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तऽएतामेतस्य कर्म्मणः पुरस्तात्सꣳस्थामपश्यंस्तमत्रैव सर्व्वꣳ समस्थापयन्नत्राचिन्वंस्तथैवैनमयमेतदत्रैव सर्व्वꣳ सꣳस्थापयत्यत्र चिनोति ॥७॥ "सजूरब्द" ऽइति चितिः । "अयवोभिरि"ति पुरीषꣳ "सजूरुषा" ऽइति चिति"रुणीभिरि"ति पुरीषꣳ "सजोषसावश्विने"ति चिति"र्दꣳसोभिरि"ति पुरीषꣳ"सजूः सूर"ऽइति चिति"रेतशेने"ति पुरीषꣳ "सजूर्व्वैश्वानर"ऽइति चिति"रिडये"ति पुरीषं "घृतेने"ति चितिः "स्वे"ति पुरीषꣳ "हे"ति चितिः ॥८॥ त्रयोदशैता व्याहृतयो भवन्ति । त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्याज्येन जुहोत्यग्निरेष यदाज्यमग्निमेवैतच्चिनोति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यूर्ध्वामुद्गृह्णञ्जुहोत्यूर्ध्वं तदग्निं चितिभिश्चिनोति ॥९॥

Cf. का. श. ९. १. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ (अ. २. ३.)

---

१. प्रीणाति इति च. २-१३. मा. सं. १२. ७४.

## ७. २. २.

### ( कृष्टेऽपान्निनयनम् )

अथोदचमसान्निनयति । एतद्वै देवा ऽअब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमाना व्वृष्टिमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥१॥ उदचमसा भवन्ति[1] । आपो वै व्वृष्टिर्व्वृष्टिमेवास्मिन्नेतद्दधात्यौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्व्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्यो व्वृष्टिं दधाति॥२॥त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति॥३॥द्वादशोदचमसान् कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥४॥ स वै कृष्टे निनयति । तस्मात्कृष्टाय व्वर्षति स यत्कृष्टऽएव निनयेन्नाकृष्टे कृष्टायैव व्वर्षेन्नाकृष्टायाथ यदकृष्टऽएव निनयेन्न कृष्टेऽकृष्टायैव व्वर्षेन्न कृष्टाय कृष्टे चाकृष्टे च निनयति तस्मात्कृष्टाय चाकृष्टाय च व्वर्षति ॥५॥ त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥६॥ यद्वेवोदचमसान्निनयति । एतद्वाऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादपो दधुस्तथैवास्मिन्नयमेतत्संकरिष्यन्पुरस्तादपो दधाति ॥७॥ त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥८॥ द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥९॥ स वै कृष्टे निनयति । प्राणेषु तदपो दधाति स यत्कृष्टऽएव निनयेन्नाकृष्टे प्राणेष्वेवापः[2] स्युर्न्नैतरस्मिन्नात्मन्नथ यदकृष्टऽएव निनयेन्न कृष्टेऽआत्मन्नेवापः स्युर्न्न प्राणेषु कृष्टे चाकृष्टे च निनयति तस्मादिमाऽउभयत्रापः प्राणेषु चात्मंश्च ॥१०॥ त्रीन्कृष्टे

---

१. भवन्ति २. वापः इति. ङ.

चाकृष्टे च निनयति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥११॥ पञ्चदशोदचमसान्निनयति । पञ्चदशो वै व्वज्रऽएतेनैवास्यैतत्पञ्चदशेन व्वज्रेण सर्व्वं पाप्मानमपहन्ति ॥१२॥ अथ सर्व्वौषधं व्वपति । एतद्वै देवाऽअब्रुवंश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवंस्ते चेतयमानाऽअन्नमेव चितिमपश्यंस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥१३॥ सर्व्वौषधं भवति । सर्व्वमेतदन्नं य्यत्सर्व्वौषधꣳ सर्व्वमेवास्मिन्नेतदन्नं दधाति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्व्वाभ्यऽएवास्मिन्नेतद्दिग्भ्योऽन्नं दधात्यनुष्टुब्भिर्व्वपति व्वाग्वाऽअनुष्टुब्वाचो वाऽअन्नमद्यते ॥१४॥ तिसृभिस्तिसृभिर्ऋग्भिर्व्वपति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१५॥ द्वादशभिर्ऋग्भिः कृष्टे व्वपति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१६॥ स वै कृष्टे व्वपति । तस्मात्कृष्टेऽन्नं पच्यते स य्यत्कृष्टऽएव व्वपेन्नाकृष्टे कृष्टऽएवान्नं पच्येत नाकृष्टेऽथ य्यदकृष्टऽएव व्वपेन्न कृष्टेऽकृष्टऽएवान्नं पच्येत न कृष्टे कृष्टे चाकृष्टे च व्वपति तस्मात्कृष्टे चाकृष्टे चान्नं पच्यते ॥१७॥ तिसृभिः कृष्टे चाकृष्टे च व्वपति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१८॥ य्यद्वेव सर्व्वौषधं व्वपति । एतद्वाऽएनं देवाः संस्करिष्यन्तः पुरस्तात्सर्व्वेण भेषजेनाभिषज्यंस्तथैवैनमयमेतत्संस्करिष्यन्पुरस्तात्सर्व्वेण भेषजेन भिषज्यति ॥१९॥ सर्व्वौषधं भवति । सर्व्वमेतद्भेषजं य्यत्सर्व्वौषधꣳ सर्व्वेणैवैनमेतद्भेषजेन भिषज्यति ॥२०॥ तिसृभिस्तिसृभिर्ऋग्भिर्व्वपति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा ता-

---

१. हन्ति इति. च. २. जीवमौदुम्बरेण इति. ग, ङ. ३. स इति. नास्ति. ग, ङ.
४. कृष्ट इति. ग, ङ. ५. एतद्वा इति. ङ.

वतैवैनमेतद्भिषज्यति ॥२१॥ द्वादशभिर्ऋग्भिः कृष्टे वपति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवेनमेतद्भिषज्यति ॥२२॥ स वै कृष्टे वपति । प्राणांस्तद्भिषज्यति स यत्कृष्टऽएव वपेन्नाकृष्टे प्राणानेव भिषज्येन्नेतरमात्मानमथ यदकृष्टऽएव वपेन्न कृष्ट ऽआत्मानमेव भिषज्येन्न प्राणान्कृष्टे चाकृष्टे च वपति प्राणांश्च तदात्मानं च भिषज्यति ॥२३॥ तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥२४॥ पञ्चदशोदचमसान्निनयति । पञ्चदशभिर्ऋग्भिर्वपति तत्त्रिꣳशत्त्रिꣳशदक्षरा विराड्विराडु कृत्स्नमन्नꣳ सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति ॥२५॥ "याऽओषधीः पूर्वा जाताः । देवेभ्यस्त्रियुगं पुरे"त्यृतवो वै देवास्तेभ्य ऽएतास्त्रिः पुरा जायन्ते वसन्ता प्रावृषि शरदि "मनै नु बभ्रूणामहमि"ति सोमो वै बभ्रुः सौम्याऽओषधय ऽऔषधः पुरुषः "शतं धामानी"ति यदिदꣳ शतायुः शतार्द्धः शतवीर्य्यऽएतानि ह्यस्य तानि शतं धामानि "सप्त चे"ति यऽएवेमे सप्त शीर्षन्प्राणास्तानेतदाह ॥२६॥ "शतं वोऽअम्ब धामानि । सहस्रमुत वो रुह"ऽइति यदिदꣳ शतधा च सहस्रधा च विरूढाऽ"अधा शतक्रत्वो यूयमिमं मेऽअगदं कृते"ति यमिमं भिषज्यामीत्येतत् ॥२७॥ ताऽएता ऽएकव्याख्यानाः । एतमेवाभि यथैतमेव भिषज्येदेतं पारयेत्ता ऽअनुष्टुभो भवन्ति वाग्वा ऽनुष्टुब्वागु सर्वं भेषजꣳ सर्वेणैवेनमेतद्भेषजेन भिषज्यति ॥२८॥ अथातो निरुक्तानिरुक्तानामेव । यजुषा द्वावनड्वाहौ युनक्ति तूर्ष्णीमितरान्यजुषा चतस्रः सीताः कृषति तूर्ष्णीमितरास्तूर्ष्णीं दर्भस्तम्बमुपदधाति यजुषाभिजुहोति तूर्ष्णीमुदचमसान्निनयति यजुषा वपति ॥२९॥ प्रजापतिरेषोऽग्निः । उभयस्वे-

---

१-४. मा. सं, १२. ७५. ५, ६. मा. सं. १२. ७६. ७. भिषज्येदिति. ग, ङ.
८. तूर्ष्णीमिति. ग.   ९. जुहोति. इति. ङ.

तत्प्रजापतिर्न्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति य्यदेवास्य निरुक्तं परिमितᳯँ रूपं तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितᳯँ रूपं तदस्य तेन संस्करोति स ह वाऽएतᳯँ सर्व्वं कृत्स्नं प्रजापतिᳯँ संस्करोति य्यऽएवं व्विद्वानेतदेवं करोति बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि पशुरेष य्यदग्निस्तस्मात्पशोर्बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि ॥३०॥ Cf. का. श. ९. १. ४; तै. सं. ५. २. ५; मै. सं ३. २. ५; कठ. सं. २०. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ (अ. २. ४.)

( द्वितीयोऽध्यायः )

७. २. ३.

( सोमक्रयणादि )

चितो गार्हपत्यो भवति[1][2]। अचित ऽआहवनीयो[3]ऽथ राजानं क्रीणात्ययं वै लोको गार्हपत्यो द्यौराहवनीयोऽथ य्योऽयं व्वायुः पवतऽएष सोमऽएतं तदिमौ लोकावन्तरेण दधाति तस्मादेषऽइमौ लोकावन्तरेण पवते ॥१॥ य्यद्वेव चिते गार्हपत्ये[4]। अचितऽआहवनीयेऽथ राजानं क्रीणात्यात्मा वाऽग्निः प्राणः सोमऽआत्मंस्तत्प्राणं मध्यतो दधाति तस्मादयमात्मन्प्राणो मध्यतः ॥२॥ य्यद्वेव चिते गार्हपत्ये[5]। अचितऽआहवनीये[6]ऽथ राजानं क्रीणात्यात्मा वाऽअग्नी रसः सोमऽआत्मानं तद्रसेनानुषजति तस्मादयमान्तमेवात्मा रसेनानुषक्तः ॥३॥ राजानं क्रीत्वा पर्य्युह्य[7]। अथास्माऽआतिथ्यᳯँ हविर्न्निर्व्वपति तस्य हविष्कृता व्वाचं व्विसृजतेऽथ वाऽएतच्छ्यतिषजत्यध्वरकर्म्म चाग्नि-

१. कृत्स्नमिति ग. २. भवति इति. ख, ग, भवति इति. ङ. च
३. आहवनीयो इति. ग, ङ, ञ. ४. ५. गार्हपत्ये इति. ङ, ञ. च
६. आहवनीये इति च, ७. पर्य्युह्य इति. ग, ङ, ञ; पर्य्युह्य । अथ इति, ख.

कर्म्म च कर्म्मणः समानतायै समानमिदं कर्म्मासदिति ॥४॥ व्यद्धेव व्यतिषजति । आत्मा वाऽअग्निः प्राणोऽध्वरऽआत्मंस्तत्प्राणं मध्यतो दधाति तस्मादयमात्मन्प्राणो मध्यतः ॥५॥ व्यद्धेव व्यतिषजति । आत्मा वाऽअग्नी रसोऽध्वरऽ आत्मानं तद्रसेनानुषजति तस्मादयमान्तमेवात्मा रसेनानुषक्तोऽथाहवनीयस्यार्द्धमैति ॥६॥ तद्धैके । उभयत्रैव पलाशशाखया व्युदूहन्त्युभयत्र वै चिनोतीति न तथा कुर्य्यादवस्यति वाव गार्हपत्येनोर्ध्वऽएवाहवनीयेन रोहति तस्मात्तथा न कुर्य्यात् ॥७॥ अथ गार्हपत्यऽ एवोषान्निवपति[1] । नाहवनीयेऽयं वै लोको गार्हपत्यः पशवऽऊषा ऽअस्मिंस्तल्लोके पशून्दधाति तस्मादिमेऽस्मिंल्लोके पशवः[2] ॥८॥ अथाहवनीयऽएव पुष्करपर्णमुपदधाति । न गार्हपत्यऽआपो वै पुष्करपर्णं द्यौराहवनीयो दिवि तदपो दधात्युभयत्र सिकता निवपति रेतो वै सिकताऽउभयत्र वै विक्रियते तस्माद्[3] रेतसोऽधि विक्रियाता ऽइति ॥९॥ ता नाना मन्त्राभ्यां निवपति । मनुष्यलोको वै गार्हपत्यो देवलोक ऽआहवनीयो नानो वाऽएतद्यद्दैवञ्च मानुषञ्च द्राघीयसा मन्त्रेणाहवनीये निवपति ह्रसीयसा गार्हपत्ये द्राघीयो हि देवायुषᳬं ह्रसीयो मनुष्यायुषᳬं स पूर्व्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति रेतो वै सिकताऽ अस्माद्रेतसोऽधीमा विक्रियान्ता ऽइति ॥१०॥ तदाहुः । यद्योनिः परिश्रितो रेतः सिकता ऽअथ पूर्व्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति कथमस्यै तद्रेतोऽपरासिक्तं परिगृहीतं भवतीत्युल्बं वाऽ ऊषास्तद्यदूषान् पूर्व्वान्निवपत्येतेनो हास्यैतदुल्बेन रेतोऽपरासिक्तं परिगृहीतं भवत्यथाहवनीये परिश्रितोऽभिमन्त्रयते तस्योक्तो बन्धुरथ सिकता निवपति रेतो वै सिकताऽएतयोऽअस्यैतद्योन्या रेतोऽपरासिक्तं परिगृहीतं भवति[4] ॥११॥ अथाहवनीयऽएवाप्यानवतीभ्या-

---

१. वपति इति. ग. ङ,  २. पशव इति. ख, ग, ङ, ञ.

३. तस्मादिति ग, ङ.  ४. भवति. इति ख, ग, ङ, ञ.

मभिमृशति । न गार्हपत्ये ऽयं वै लोको गार्हपत्यः स्वर्गो लोकऽ आहवनीयोऽद्धो वाऽअयमस्मिँल्लोके जातो यद्यजमानः स्वर्गऽएव लोके प्रजिजनयिषितव्यस्तद्यदाहवनीय ऽएवाप्यानवतीभ्यामभिमृशति न गार्हपत्ये स्वर्गऽएवैनं तल्लोके प्रजनयाति ॥१२॥ अथ लोगेष्टका ऽउपदधाति । इमे वै लोकाऽएषोऽग्निर्दिशो लोगेष्टकाऽएषु तल्लोकेषु दिशो दधाति तस्मादिमाऽएषु लोकेषु दिशः ॥१३॥ बाह्येनाग्निमाहरति । आप्ता वाऽअस्य ता दिशो याऽएषु लोकेष्वथ याऽइमांल्लोकान् परेण दिशस्ताऽअस्मिन्नेतद्दधाति ॥१४॥

( अर्द्धप्रपाठकः ५३ )

बहिर्व्वेदेरियं वै व्वेदिः । आप्ता वाऽअस्य ता दिशो याऽअस्यामथ याऽइमां परेण दिशस्ता ऽअस्मिन्नेतद्दधाति ॥१५॥ यद्वेव लोगेष्टकाऽउपदधाति । प्रजापतेर्व्विस्रस्तस्य सर्व्वा दिशो रसोऽनु व्यक्षरत्तं यत्र देवाः समस्कुर्व्वंस्तदस्मिन्नेताभिर्लोगेष्टकाभिस्तꣳ रसमदधुस्तथैवास्मिन्नयमेतद्दधाति ॥१६॥ बाह्येनाग्निमाहरति । आप्तो वाऽअस्य स रसो य ऽएषु लोकेष्वथ यऽइमांल्लोकान् पराङ्सोऽत्यक्षरत्तमस्मिन्नेतद्दधाति ॥१७॥ बहिर्व्वेदेरियं वै व्वेदिः । आप्तो वाऽअस्य स रसोऽ योऽस्यामथ यऽइमां पराङ्सोऽत्यक्षरत्तमस्मिन्नेतद्दधाति ॥१८॥ स्पेयनाहरति । व्वज्रो वै स्फ्यो व्वीर्यं वै व्वज्रो व्वित्तिरियं व्वीर्येण वै व्वित्तिं व्विन्दते ॥१९॥ स पुरस्तादाहरति । "मा मा हिꣳसीज्जनिता यः पृथिव्या" ऽइति प्रजापतिर्व्वै पृथिव्यै जनिता मा मा हिꣳसीत्प्रजापतिरित्येत"द्यो वा दिवꣳ सत्यधर्मा व्यानडि"ति यो वा दिवꣳ सत्यधर्मासृजतेत्येत"द्यश्चापश्चन्द्राः प्रथमो जजाने"ति मनुष्या वाऽआपश्चन्द्रा यो मनुष्यान् प्रथमोऽसृजतेत्येत"त्कस्मै देवाय हविषा व्विधेमे"ति प्रजापतिर्व्वै कस्तस्मै हविषा व्विधेमेत्येतत्तामाहृत्यान्तरेण परिश्रित ऽआत्मन्नुपदधाति स

१. एषु. इति. ग, ङ. २-५. मा सं. १२. १०२.

यः प्राच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्राचीमेवास्मिन्नेतद्दिशं दधाति ॥२०॥ अथ[1] दक्षिणतः । "अभ्यावर्त्तस्व पृथिवि यज्ञेन पयसा सहे"ति यथैव यजुस्तथा बन्धु"र्व्वपां तेऽअग्निरिषितोऽअरोहदि"ति यद्वै किं चास्याᳪ सास्यै व्वपा तामग्निरिषित ऽउपादीप्तो रोहति तामाहृत्यान्तरेण पक्षसन्धिमात्मन्नुपदधाति स यो दक्षिणायां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो दक्षिणामेवास्मिन्नेतद्दिशं[4] दधाति ॥२१॥ अथ पश्चात् । "अग्ने[5] यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियमि"तीयं वाऽअग्निरस्यैतदाह "तद्[6]देवेभ्यो भरामसी"ति तदस्मै दैवाय कर्मणे हरामऽइत्येतत्तामाहृत्यान्तरेण पुच्छसन्धिमात्मन्नुपदधाति स यः प्रतीच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्रतीचीमेवास्मिन्नेतद्दिशं दधाति स नु सम्प्रति पश्चादाहरेन्नेद्यँज्ञपथाद्रसमाहराणीतीत ऽइवाहरति ॥२२॥ अथोत्तरतः । "इषमूर्ज्जमहमित ऽआद"मितीषमूर्ज्जमहमित ऽआददऽइत्येत"दृतस्य[9] योनिमि"ति सत्यं वाऽऋतᳪ सत्यस्य योनिमित्येत"र्म्महिषस्य[11] धारा"मित्यग्निर्व्वै महिषः स हीदं जातो महान्सर्व्वमैषणा"दा[12] मा गोषु व्विशत्वा तनूष्वि"त्यात्मा वै तनूरा मा गोषु चात्मनि च व्विशत्वित्येत"ज्जहामि[13] सेदिम निराममीवामि"ति सिकताः प्रध्वᳪसयति तथैव सेदिर्य्यानिरा यामीवा तामेतस्यां दिशि दधाति तस्मादेतस्यां दिशि प्रजाऽअशनायुकास्तामाहृत्यान्तरेण पक्षसन्धिमात्मन्नुपदधाति स यऽउदीच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथोऽउदीचीमेवास्मिन्नेतद्दिशं दधाति ॥२३॥ ता ऽएता दिशः । ताः सर्व्वत ऽउपदधाति सर्व्वतस्तद्दिशो दधाति तस्मात्सर्व्वतो दिशः सर्व्वतः समीचीः सर्व्वतस्तत्समीची-

---

१. अथ इति. ङ. २, ३. मा. सं. १२. १०३. ४. दधाति इति. ख, ग, ङ, ञ. ५, ६. मा. सं. १२. १०४. ७. यज्ञमिति. ग, ङ.

८. हरति इति ख, ग, ङ, ञ. ९–१३. मा सं. १२. १०५.

र्द्दिशो दधाति तस्मात्सर्व्वतः समीच्यो दिशस्ता नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हि दिशस्तिष्ठन्नुपदधाति तिष्ठन्तीव हि दिशोऽथो तिष्ठन्वै व्वीर्यवत्तरः ॥२४॥ ताऽएता य्यजुष्मत्यऽइष्टकाः। ताऽआत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्ह्येव य्यजुष्मत्य ऽइष्टका उपधीयन्ते न पक्षपुच्छेषु ॥२५॥ तदाहुः। कथमस्यैताः पक्वाः शृता ऽउपहिता भवन्तीति रसो वाऽएताः स्वयंᳫँशृत ऽउ वै रसो ऽथो यद्वै किं चैतमग्निं व्वैश्वानरमुपनिगच्छति ततऽएव तत्पक्वᳫँ शृतमुपहितं भवति ॥२६॥ अथोत्तरवेदिं निवपति। इयं वै[1] व्वेदिर्द्यौरुत्तरवेदिर्द्दिशो लोगेष्टकास्तद्यदन्तरेण व्वेदिं चोत्तरवेदिं च लोगेष्टकाऽउपदधातीमौ तल्लोकावन्तरेण दिशो दधाति तस्मादिमौ लोकावन्तरेण दिशः[2]स्तां य्युगमात्रीं वा सर्व्वतः करोति चत्वारिᳫँशत्पदां वा य्यतरथा[3]कामयेताथ सिकता निवपति तस्योक्तो बन्धुः ॥२७॥ ताऽउत्तरवेदौ निवपति। य्योनिर्व्वाऽउत्तरवेदिर्य्योनौ तद्रेतः सिञ्चति यद्वै य्योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति ताभिः सर्व्वमात्मानं प्रच्छादयति सर्व्वस्मिंस्तदात्मन्नेतो दधाति तस्मात्सर्व्वस्मादेवात्मनो रेतः सम्भवति ॥२८॥ "अग्ने[4] तव श्रवो व्वय"ऽइति। धूमो वाऽअस्य श्रवो व्वयः स ह्येनममुष्मिँल्लोके श्रावयति "मँहि[5] भ्राजन्तेऽअर्च्चयो व्विभावसवि"ति महतो भ्राजन्तेऽर्च्चयः प्रभूवसवित्येत"दृबृँहद्[6]भानो शवसा व्वाजमुक्थ्यामि"ति बलं वै शवो बृहद्भानो बलेनान्नमुक्थ्यमित्येत"दद्[7]धासि दाशुषे कव"ऽइति य्यजमानो वै दाश्वान्दधासि य्यजमानाय कवऽइत्येतत् ॥२९॥ "पावकवर्च्चाः[8] शुक्रवर्च्चाऽ"इति। पावकवर्च्चा ह्येष शुक्रवर्च्चाऽ"अनूनवर्च्चाऽउदियर्षि[9] भानुने"त्यनूनवर्च्चाऽउदुदीप्यसे भानुनेत्येत"त्पुत्रो[10] मातरा व्विचरन्नुपावसी"ति पुत्रो ह्येष मातरा व्विचरन्नुपावति "पृणक्षि[11]

---

१. वै वेदिः इति. ग, ङ. २. दिश इति ङ. ३. कामयेत इति. ङ.
४–७. मा. सं. १२. १०६. ८–११. मा. सं. १२. १०७

रोदसीऽउभे''ऽइतीमे वै द्यावापृथिवी रोदसी तेऽएष ऽउभे पृणक्ति धूमेनामूं व्वृष्ट्येमाम् ॥३०॥ "ऊर्ज्जो[1] न पाज्जातवेदः सुशस्तिभि"-रिति । ऊर्ज्जो न पाज्जातवेदः सुष्टुतिभिरित्येत"न्मन्दस्व[2] धीतिभि-र्हित''ऽइति दीप्यस्व धीतिभिर्हितऽइत्येत"त्वेऽइषः संदधुर्भूरिवर्पस[3]''ऽइति त्वेऽइषः संदधुर्वहुवर्पसऽइत्येत"च्चित्रोतयो[4] व्वामजाता''ऽइति व्यथैव व्युजुस्तथा बन्धुः ॥३१॥ "इरज्यन्नग्ने[5] प्रथयस्व जन्तुभि"रिति । मनुष्या वै जन्तवो दीप्यमानोऽग्ने प्रथस्व मनुष्यैरित्यत"दस्मे[6] रायोऽअमर्त्ये''त्यस्मे रयिं दधदमर्त्येत्येत"त्स[7] दर्शतस्य व्वपुषो व्विराजसी''ति दर्शतस्य ह्येष व्वपुषो व्विराजति "पृणक्षि[8] सानसिं क्रतुमि''ति पृणक्षि सनातनं क्रतुमित्येतत् ॥३२॥ "इष्कर्तारमध्वरस्य[9] प्रचेतसमि''ति । अध्वरो वै यज्ञः प्रकल्पयितारं यज्ञस्य प्रचेतसमित्येत"त्क्षयन्तथ्ं[10] राधसो मह''ऽइति क्षयन्तꣳ राधसि महतीत्येत"द्रातिं[11] व्वामस्य सुभगां महीमिषमि''ति रातिं[12] व्वामस्य सुभगां महतीमिषमित्येतद्"दधासि सानसिꣳ[13] रयिमि''ति दधासि सनातनꣳ रयिमित्येतत् ॥३३॥ "ऋतावानमि[14]''ति । सत्यावानमित्येत"न्माहिषमि[15]''त्यग्निर्व्वै माहिषो "व्विश्वदर्शतमि[16]''ति व्विश्वदर्शतो ह्येषोऽ"ग्निꣳ[17] सुम्नाय दधिरे पुरो जना''ऽइति यज्ञो वै सुम्नं यज्ञाय वाऽएतं पुरो दधते "श्रुत्कर्णꣳ[18] सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगे''त्याशु एव तꣳ सप्रथस्तमं त्वा गिरा देवं मनुष्या हवामहऽइत्येतत् ॥३४॥ स एषोऽग्निरेव व्वैश्वानरः । एतत्षडृचमारम्भायैवेमाः सिकता न्युप्यन्तेऽग्निमेवास्मिन्नेतद्वैश्वानरथ्ं रेतो भूतꣳ सिञ्चति षडृचेन षडृतवः संवत्सरः संवत्सरो व्वैश्वानरः ॥३५॥ तदाहुः । यद्रेतः सिकताऽउच्यन्ते किमासाꣳ[19] रेतो

---

१-४, १६. मा. सं. १२. १०८. ५-४. मा. सं. १२. १०९.
९-११, १३. मा. सं. १२. ११०. १२. रातिं इति. ग, ङ.
१४-१८. मा. सं. १२. १११. १९. रेत इति. ग, ङ.

रूपमिति शुक्लाऽइति ब्रूयाच्छुक्लꣳ हि रेतोऽथो पृश्नयऽइति पृश्नीव हि रेतः ॥३७॥ तदाहुः । य्यदार्द्रꣳ रेतः शुष्काः सिकता निवपति कथमस्यैताऽआर्द्रा रेतोरूपं भवन्तीति रसो वै छन्दाꣳस्यार्द्रऽउ वै रसस्तद्यदेनाश्छन्दाभिर्निवपत्येवमु हास्यैताऽआर्द्रा रेतोरूपं भवन्ति ॥३७॥ तदाहुः । कथमस्यैताऽअहोरात्राभ्यामुपहिता भवन्तीति द्वे वाऽअहोरात्रे शुक्लं च कृष्णं च द्वे सिकते शुक्ला च कृष्णा चैवमु हास्यैताऽअहोरात्राभ्यामुपहिता भवन्ति ॥३८॥ तदाहुः । कथमस्यैताऽअहोरात्रैः सम्पन्ना ऽअन्यूनाऽअनतिरिक्ता ऽउपहिता भवन्तीत्यनन्तानि वाऽअहोरात्राण्यनन्ताः सिकताऽएवमु हास्यैता ऽअहोरात्रैः सम्पन्नाऽअन्यूनाऽअनतिरिक्ताऽउपहिता भवन्त्यथ कस्मात्समुद्रियं छन्दऽइत्यनन्तो वै समुद्रोऽनन्ताः सिकतास्तस्मात्समुद्रियं छन्दः ॥३९॥ तदाहुः । कथमस्यैताः पृथङ्नाना य्यजुर्भिरुपहिता भवन्तीति मनो वै य्यजुस्तदिदं मनो य्यजुः सर्व्वाः सिकता ऽअनुविभवत्येवमु हास्यैताः पृथङ्नाना य्यजुर्भिरुपहिता भवन्ति ॥४०॥ तदाहुः । कथमस्यैताः सर्व्वैश्छन्दोभिरुपहिता भवन्तीति यदेवैनाऽएतेन षडृचेन निवपति य्यावन्ति हि सप्तानां छन्दसामक्षराणि तावन्त्येतस्य षडृचस्याक्षराण्येवमु हास्यैताः सर्व्वैश्छन्दोभिरुपहिता[1] भवन्ति ॥४१॥ य्यद्वेव सिकता निवपति । प्रजापतिरेषोऽग्निः सर्व्वमु ब्रह्म प्रजापतिस्तद्धैतद्ब्रह्मणऽउत्सन्नं[2] यत्सिकताऽअथ य्यदनुत्सन्नमिदं तद्योऽयमग्निश्चीयते तद्यत्सिकता निवपति य्यदेव तद्ब्रह्मण ऽउत्सन्नं तदस्मिन्नेतत्प्रतिदधाति ता ऽअसंख्याताऽअपरिमिता निवपति को हि तद्वेद य्यावत्तद्ब्रह्मण ऽउत्सन्नꣳ स ह वाऽएतꣳ सर्व्वं कृत्स्नं प्रजापतिꣳ संस्करोति य्यऽएवं विद्वान्सिकता निवपति ॥४२॥ तदाहुः । कैतासामसंख्यातानाꣳ संख्येति द्वेऽइति ब्रूयाद्द्वे हि सिकते शुक्ला च कृष्णा चाथो सप्त विꣳ-

१. छन्दोभिरिति. ङ. २. उत्सन्नं इति. ग, ङ,

शतिशतानीति ब्रूयादेतावन्ति हि संवत्सरस्याहोरात्राण्यथो द्वे द्वापञ्चाशे शते इत्येतावन्ति ह्येतस्य षड्चस्याक्षराण्यथो पञ्चविꣳशतिरिति पञ्चविꣳशꣳहि रेतः ॥४३॥ ता ऽएता य्यजुष्मत्य ऽइष्टकाः । ताऽआत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्ह्येव य्यजुष्मत्य ऽइष्टका ऽउपधीयन्ते न पक्षपुच्छेषु न सादयति नेद्रेतः प्रजातिꣳ स्थापयानीति[1] ॥४४॥ अथैना ऽआप्यानवतीभ्यामभिमृशति । इदमेवैतद्रेतः सिक्तमाप्याययति तस्माद्योनौ रेतः सिक्तमाप्यायते सौमीभ्यां प्राणो वै सोमः प्राणं तद्रेतसि दधाति तस्माद्रेतः सिक्तं प्राणमभिसम्भवति पुरेद्ध व्यद्दते प्राणात्सम्भवेदेषो हैवात्र सूददोहाः प्राणो वै सोमः प्राणः सूददोहाः ॥४५॥ "आप्यायस्व[2] समेतु ते । व्विश्वतः सोम व्वृष्ण्यमि"ति रेतो वै व्वृष्ण्यमाप्यायस्व समेतु ते सर्व्वतः सोम रेत ऽइत्येत"द्भवा व्वाजस्य सङ्गथ ऽ"इत्यन्नं[4] वै व्वाजो भवान्नस्य सङ्गथ ऽइत्येत"त्सं ते पयाꣳसि[3] समुयन्तु व्वाजा ऽ"इति रसो वै पयोऽन्नं व्वाजाः सं ते रसाः समु सन्त्वन्नानीत्येत"त्सं व्वृष्ण्यान्यभिमातिषाहऽ"इति सꣳ रेताꣳसि पाप्म सह ऽइत्येत"दाप्यायमानो ऽअमृताय सोमे[5]"ति प्रजात्यां तदमृतं दधाति तस्मात्प्रजातिरमृता "दिवि श्रवाꣳस्युत्तमानि धिष्वे"ति चन्द्रमा वा ऽअस्य दिवि श्रव ऽउत्तमꣳ स ह्येनममुष्मिँल्लोके श्रावयति द्वाभ्यामाप्याययति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥४६॥ अथातः सम्पदेव । चतस्रो लोगेष्टका ऽउपदधाति षड्चेन निवपति द्वाभ्यामाप्याययति तद्द्वादश द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥४७॥ Cf. का. श. ९. १. ५; तै. सं. ५. २. ६; मै. सं. ३. २. ५; काठ. सं. २०. ४; कपि. ३१ ६.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ( अ. ३. १. )

---

१. स्थापयनीति इति. ख, ग, ङ, ञ. २, ३. मा. स. १२. ११२.
४. अन्ने इति. ग, ङ. एवमग्रेऽपि. ५–८. मा सं. १२. ११३.

## ७. २. ४.

### ( इष्टकाप्रोक्षणादि )

आप्यानवतीभ्यामभिमृश्य । प्रत्येत्यातिथ्येन प्रचरत्यातिथ्येन प्रचर्य प्रवर्ग्योपसद्भ्यां प्रचरति प्रवर्ग्योपसद्भ्यां प्रचर्य्याथैतां चर्मणि चितिᳬं समवशमयन्ति तद्यच्चर्मणि चर्म वै रूपᳬं रूपाणामुपाप्त्यै लोमतो लोम वै रूपᳬं रूपाणामुपाप्त्यै रोहिते रोहिते ह सर्व्वाणि रूपाणि सर्व्वेषाᳬं रूपाणामुपाप्त्याऽआनडुहेऽग्निरेष यदनड्वानग्नि-रूपाणामुपाप्त्यै प्राचीनग्रीवे तद्धि देवत्रा ॥१॥ तदग्रेण गार्हपत्यम् । अन्तर्व्वेद्युत्तरलोम प्राचीनग्रीवमुपस्तृणाति तदेतां चितिᳬं समवशमयन्त्यथ प्रोक्षति तद्यत्प्रोक्षति शुद्धमेवैतन्मेध्यं करोत्याज्येन तद्धि शुद्धं मेध्यमथोऽअनभ्यारोहाय न हि किं चनान्यद्धविराज्येन प्रोक्षति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीᳬं सर्व्वं वाऽअनिरुक्तᳬं सर्व्वेणैवैतच्छुद्धं मेध्यं करोत्यथोऽअनभ्यारोहाय न हि किञ्चनान्यद्धविस्तूष्णीं प्रोक्षन्ति ॥२॥ यद्वेव प्रोक्षति । हविर्व्वाऽएतत्तदेतदभिघारयति यद्वै हविरभ्यक्तं यदभिघारितं तज्जुष्टं तन्मेध्यमाज्येनाज्येन हि हविरभिघारयन्ति तूष्णीं तूष्णीᳬं हि हविरभिघारयन्ति दर्भैस्ते हि शुद्धा मेध्याऽअग्नेरग्रᳬं हि देवानाम् ॥३॥ तदाहुः । यत्प्रथमामेव चितिं प्रोक्षति कथमस्यैष सर्व्वोऽग्निः प्रोक्षितो भवति कथं चर्मणि प्रणीतः कथमश्वप्रणीतऽइति यदेवात्र सर्व्वासां चितीनामिष्टकाः प्रोक्षत्येवमु हास्यैष सर्व्वोऽग्निः प्रोक्षितो भवत्येवं चर्मणि प्रणीतऽएवमश्वप्रणीत ऽउद्यच्छन्त्येतां चितिम् ॥४॥ अथाहाग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति । एतद्वै देवानुपप्रैष्यत ऽएतं यज्ञं तᳬंस्यमानान्रक्षाᳬंसि नाष्ट्राऽअजिघाᳬंसन्न यक्ष्यध्वे न यज्ञं तᳬंस्यध्वऽइति तेभ्यऽएतानग्नीनेताऽइष्टका वज्रान्क्षुरपवीन्कृत्वा प्राहरंस्तैरेनानस्तृण्वत तान्स्तृत्वाभयेऽनाष्ट्रऽएतं यज्ञमतन्वत ॥५॥

( काण्डस्यार्द्धम् १९९ )

तद्वा ऽएतत्क्रियते । य्यद्देवा ऽअकुर्व्वन्निदं नु तानि रक्षाᳬंसि देवैरेवोपहतानि य्यत्त्वेतत्करोति य्यद्देवा ऽअकुर्व्वंस्तत्करवाणीत्यथो य्यदेव रक्षो य्यः पाप्मा तेभ्य ऽएतानग्नीनेता ऽइष्टका व्वज्रान्क्षुरपवीन्कृत्वा प्रहरति तैरेनांस्तृणुते तांस्तृत्वाभये ऽनाष्ट्र ऽएतं यज्ञं तनुते ॥६॥ तद्यदग्निभ्य ऽइति । वहवो ह्येते ऽग्नयो य्यदेताश्चितयो ऽथ य्यत्प्रह्रियमाणेभ्य ऽइति प्र हि हरति ॥७॥ तद्धैके ऽन्वाहुः । पुरीष्यासो ऽअग्नयः प्रावणेभिः सजोषस ऽइति प्रायणरूपं न तथा कुर्यादाग्नेयीरेव गायत्रीः कामवतीरनुब्रूया"द[२]ा ते व्वत्सो मनो यमत्[३]तुभ्यं ता ऽअङ्गिरस्तमाग्निः प्रियेषु धामस्वि"ति ॥८॥ आग्नेयीरन्वाह । अग्निरूपाणामुपाप्त्यै कामवतीः कामानामुपाप्त्यै गायत्रीर्गायत्रो ऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतᳬं सिञ्चति तिस्रस्त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतᳬं सिञ्चति ताः सप्त सम्पद्यन्ते सह त्रिरनूक्ताभ्याᳬं सप्तचितिको ऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरो ऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवत्युपाᳬंश्वन्वाह रेतो वा ऽअत्र यज्ञ ऽउपाᳬंशु वै रेतः सिच्यते पश्चादनुब्रुवन्नन्वेति छन्दोभिरेवैतद्यज्ञं पश्चादभिरक्षन्नेति ॥९॥ अथाश्वᳬं शुक्लं पुरस्तान्नयन्ति । एतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइह रक्षाᳬंसि नाष्ट्रा न हन्युरिति त ऽएतं व्वज्रमपश्यन्नमुमेवादित्यमसौ वा ऽआदित्य ऽएषो ऽश्वस्त ऽएतेन व्वज्रेण पुरस्ताद्रक्षाᳬंसि नाष्ट्रा ऽअपहत्याभये ऽनाष्ट्रे स्वस्ति समाश्नुवत तथैवैतद्यजमान ऽएतेन व्वज्रेण पुरस्ताद्रक्षाᳬंसि नाष्ट्रा ऽअपहत्याभये ऽनाष्ट्रे स्वस्ति समश्नुत ऽआगच्छन्त्यग्निं दक्षिणतः पुच्छस्य चितिमुपनिदधत्युत्तरतो ऽश्वमाक्रमयन्ति ॥१०॥ तमुत्तरार्द्धेनाग्नेः । अन्तरेण परिश्रितः प्राञ्चं नयन्ति तत्प्राच्यै दिशः पाप्मानमपहन्ति तं दक्षिणा तद्दक्षिणायै दिशः पाप्मानमपहन्ति तं प्रत्यञ्चं तत्प्रतीच्यै दिशः पाप्मानमपहन्ति तमुदञ्चं तदुदीच्यै दिशः पाप्मान-

---

१. अपहृतानि इति. च.  २-४ मा. सं. १२. ११५-११७.

मुपहन्ति सर्व्वाभ्यऽएवैताद्दिग्भ्यो रक्षाᳫंसि नाष्ट्राऽअपहत्याथैनमुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुः ॥११॥ (शतम् ४१००) तं प्रत्यञ्चं य्यन्तम्। एतां चितिमवघ्रापयत्यसौ वाऽआदित्यऽएषोऽश्वऽइमाऽउ सर्व्वाः प्रजा य्याऽइमाऽइष्टकास्तद्यदवघ्रापयत्यसावेव तदादित्यऽइमाः प्रजाऽअभिजिघ्रति तस्मादु हैतत्सर्व्वोऽस्मीति मन्यते प्रजापतेर्व्वीर्य्येण तद्यत्प्रत्यञ्चं य्यन्तमवघ्रापयति प्रत्यङ् ह्येवैष य्यन्निमाः सर्व्वाः प्रजाऽअभिजिघ्रति ॥१२॥ य्यद्वेवावघ्रापयति। असौ वाऽआदित्यऽएषोऽश्वऽइमऽउ लोकाऽएताः स्वयमातृण्णास्तद्यदवघ्रापयत्यसावेव तदादित्यऽइमाँल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रमुपरि तस्य बन्धुः ॥१३॥ य्यद्वेवावघ्रापयति। अग्निर्द्देवेभ्यऽउदक्रामत्सोऽपः प्राविशत्ते देवाः प्रजापतिमब्रुवंस्त्वमिममन्विच्छ स तुभ्यᳫं स्वाय पित्रऽआविर्भविष्यतीति तमश्वः शुक्लो भूत्वान्वैच्छत्तमद्भ्यऽउपोदासृप्तं पुष्करपर्णे व्विवेद तमभ्यवेक्षां चक्रे स हैनमुदुवोष तस्मादश्वः शुक्लऽउदुष्टमुख ऽइवाथो ह दुरक्षो भावुकस्तमु वाऽऋत्वेव हिᳫंसित्वेव मेने तᳫं होवाच व्वरं ते ददामीति ॥१४॥ स होवाच। य्यस्त्वानेन रूपेणान्विच्छाद्विन्दादेव त्वा सऽइति स य्यो हैनमेतेन रूपेणान्विच्छति व्विन्दति हैनं व्वित्वा ह्वैवैनं चिनुते ॥१५॥ स शुक्लः स्यात्। तद्ध्येतस्य रूपं य्यऽएष तपति य्यदि शुक्लं न व्विन्देदप्यशुक्लः स्यादश्वस्त्वेव स्याद्यद्यश्वं न व्विन्देदप्यनड्वानेव स्यादाग्नेयो वाऽनड्वानग्निरु सर्व्वेषां पाप्मनामपहन्ता ॥१६॥ अथातोऽधिरो[1]हणस्यैव। तद्धं हैके पुरस्तात्प्रत्यञ्चमधिरोहन्ति पश्चाद्वा प्राञ्चं न तथा कुर्यात्पशुरेष य्यदग्निर्यो वै पशुं पुरस्तात्प्रत्यञ्चमधिरोहति व्विषाणाभ्यां तᳫं हन्त्यथ य्यः पश्चात्प्राञ्चं पद्भ्यां तमात्मनैवैनमारोहेद्यं वाऽआत्मना पशुमा[2]रोहन्ति स पारयति स न हिनस्त्युत्तरतो यᳫं हि कं च पशुमारोहन्त्युत्तरतऽएवैनमारोहन्त्यारुह्याग्निमौत्तरवेदिकं कर्म्म कृत्वात्मन्नग्निं गृह्णीतऽआत्मन्[3]नग्निं गृहीत्वा सत्यᳫं साम

१ अथातोऽधिरोहणस्यैव इति.च. २ पशुमारोहन्ति इति.ग,घ. ३ आत्मन् इति. ङ.

गायति पुष्करपर्णमुपदधाति तस्यो॑तः ॥१७॥ अथैतꣳ सायं भूतेऽश्वं परिणयन्ति । एतद्वै देवाऽअबिभयुर्यद्वै नऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्माऽएतं व्वज्रमभिगोप्तारमकुर्व्वन्नमुमेवादित्यमसौ वाऽआदित्य ऽएषोऽश्वस्तथैवास्माऽअयमेतं व्वज्रमभिगोप्तारं करोति ॥१८॥ तं वाऽउपास्तमयमादित्यस्य परिणयति । एष वाऽअस्य प्रत्यक्षं दिवा गोप्ता भवति रात्रिसाचयान्यु वै रक्षाꣳसि रात्र्याऽ एवास्माऽएतं व्वज्रमभिगोप्तारं करोति सर्व्वतः परिणयति सर्व्वतऽ एवास्माऽएतं व्वज्रमभिगोप्तारं करोति त्रिष्कृत्वः परिणयति त्रिवृत-मेवास्माऽएतं व्वज्रमभिगोप्तारं करोत्यथैनमुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुरथ स पुनर्व्विपल्ययते तस्योपरि बन्धुः ॥१९॥

Cf. का. श. ९. २. २; तै. सं. ५. २. ६; मै. सं. ३. २. ५; काठ. सं. २०. ५; कपि. सं. ३२. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ (अ. ३. २.)

( तृतीयोऽध्यायः )

द्वितीयः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या १०५ )

## अथ तृतीयः प्रपाठकः ॥

### ७. ३. १.

( चितः प्रथमः प्रस्तारः )

आत्मन्नग्निं गृह्णीते चेष्यन् । आत्मनो वाऽएतमधिजनयति यादृशाद्वै जायते तादृङेव भवति स य्यदात्मन्नगृहीत्वाग्निं चिनुया-न्मनुष्यादेव मनुष्यं जनयेन्मर्त्यान्मर्त्यमनुपहतपाप्मनोऽनपहतपाप्मा-

१ तस्यातः इति ग, ङ.    २ मनपहृत इति. ग, ङ.

नमथ य्यदात्मन्नग्निं गृहीत्वा चिनोति तदग्नेरेवाध्यग्निं जनयत्यमृतादमृतमपहतपाप्मनोऽपहतपाप्मानम् ॥१॥ स गृह्णाति । "मयि गृह्णाम्यग्रेऽअग्निमि"ति । तदात्मन्नेवाग्रेऽग्निं गृह्णीते "रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेऽ"ति तदु सर्व्वाऽआशिषऽआत्मन्गृह्णीते "मामु देवताः सचन्तामि"ति तदु सर्व्वान्देवानात्मन्गृह्णीते तद्यत्किञ्चात्मनोऽधि जनयिष्यन्भवति तत्सर्वमात्मन्गृह्णीते स वै तिष्ठन्नात्मन्नग्निं गृहीत्वानूपविश्य चिनोति पशुरेष य्यदग्निस्तस्मात्पशुस्तिष्ठन्गर्भं धित्वानूपविश्य विजायते ॥२॥ अथ सत्यꣳ साम गायति । एतद्वै देवाऽअब्रुवन्त्सत्यमस्य मुखं करवाम ते सत्यं भविष्यामः सत्यं नोऽनुवर्त्स्यति सत्यो नः स कामो भविष्यति य्यत्कामाऽएतत्करिष्यामहऽइति ॥३॥ तऽएतत्सत्यꣳ साम पुरस्तादगायन् । तदस्य सत्यं मुखमकुर्व्वंस्ते सत्यमभवन्त्सत्यमेनानन्ववर्त्तत सत्यऽएषाꣳ सकामोऽभवद्यत्कामाऽएतदकुर्व्वत ॥४॥ तथैवैतद्यजमानः । य्यत्सत्यꣳ साम पुरस्ताद्गायति तदस्य सत्यं मुखं करोति स सत्यं भवति सत्यमेनमनुवर्त्तते सत्योऽस्य स कामो भवति य्यत्कामऽएतत्कुरुते ॥५॥ तद्यत्तत्सत्यम् । आपऽएव तदापो हि वै सत्यं तस्माद्येनापो य्यन्ति तत्सत्यस्य रूपमित्याहुरपऽएव तँदस्य सर्व्वस्याग्रमकुर्व्वंस्तस्माद्यदैवापो सन्त्यथेदꣳ सर्व्वं जायते य्यदिदं किञ्च ॥६॥ अथ पुष्करपर्ण्णमुपदधाति । य्योनिर्व्वै पुष्करपर्ण्णं य्योनिमेवैतदुपदधाति ॥७॥ य्यद्वेव पुष्करपर्ण्णमुपदधाति । आपो वै पुष्करं तासामियं पर्ण्णं य्यथा ह वाऽइदं पुष्करपर्ण्णमप्स्वध्याहितमेवमियमप्स्वध्याहिता सेयं य्योनिरग्नेरियꣳ ह्यग्निरस्यै हि सर्व्वोऽग्निश्चीयतऽइमामेवैतदुपदधाति तामनन्तर्हिताꣳ सत्यादुपदधातीमां तत्सत्ये प्रतिष्ठापयति तस्मादियꣳ सत्ये प्रतिष्ठिता तस्मादियमेव सत्यमियꣳ ह्येवैषां लोकानामद्धातमाम् ॥८॥ "अँपां पृष्ठमसि य्योनिरग्ने"रिति । अपाꣳ

---

१-३. मा. सं. १३. १
४ तस्य इति ग, ङ.
५ किञ्च ॥६॥ अथ इति. ञ.
६ मा. सं. १३. २.

हीयं पृष्ठं य्योनिर्हीयमग्नेः "समुद्रमभितः पिन्वमानमि"ति समुद्रो हीमामभितः पिन्वते "व्वर्धमानो महाँ २॥ ऽआ च पुष्कर"ऽइति व्वर्द्धमानो महीयस्व पुष्करऽइत्येत् "द्दिवो मात्रया व्वरिम्णा प्रथस्वे"त्यनुविमाष्ट्यसौ वाऽआदित्यऽएषोऽग्निर्नो हैतमन्यो दिवो व्वरिमा य्यन्तुमर्हति द्यौर्भूत्वैनं सच्छेत्येवैतदाह स्वराजोपदधाति स्वाराज्यᳬ ह्यपाᳬ सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः॥९॥ अथ रुक्ममुपदधाति । असौ वाऽआदित्यऽएष रुक्मऽएष हीमाः सर्व्वाः प्रजाऽअतिरोचते रोचो ह वै तᳬ रुक्मऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाऽअमुमेवैतदादित्यमुपदधाति स हिरण्मयो भवति परिमण्डलऽएकविᳬशतिनिर्बाधस्तस्योक्तो बन्धुरधस्तान्निर्बाधमुपदधाति रश्मयो वाऽएतस्य निर्बाधाऽअवस्ताद्‌ वाऽएतस्य रश्मयः ॥१०॥ तं पुष्करपर्णेऽउपदधाति । य्योनिर्व्वै पुष्करपर्णं य्योनावेवैनमेतत्प्रतिष्ठापयति ॥११॥ य्यद्वेव पुष्करपर्णऽउपदधाति । प्रतिष्ठा वै पुष्करपर्णमियं वै पुष्करपर्णमियमु वै प्रतिष्ठा सो वाऽअस्यामप्रतिष्ठितोऽपि दूरे सन्नप्रतिष्ठितऽएव स रश्मिभिर्व्वाऽएषोऽस्यां प्रतिष्ठितोऽस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥१२॥ य्यद्वेव पुष्करपर्णेऽउपद⁴धाति । इन्द्रो व्वृत्रᳬ हत्वा नास्तृषीति मन्यमानोऽपः प्राविशत्ताऽअब्रवीद्बिभेमि वै पुरं मे कुरुतेति स योऽपाᳬरसऽआसीत्तमूर्ध्वᳬसमुदौहंस्तामस्मै पुरमकुर्व्वंस्तद्यदस्मै पुरमकुर्व्वंस्तस्मात्पु⁵ष्करं पुष्करᳬ ह वै तत्पुष्करमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तद्यत्पुष्करपर्णऽउपदधाति य्यमेवास्यैतमापो रसᳬ समुदौहन्यामस्मै पुरमकुर्व्वंस्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति ॥१३॥ "ब्र⁶ह्म जज्ञानं प्रथमं पुरस्तादि"ति । असौ वाऽआदित्यो ब्रह्माहरहः पुरस्ताज्जायते "व्वि⁷ सीमतः सुरुचो व्वेनऽ आवरि"ति मध्यं वै

---

१-३ मा. सं. १३. २. ४ उपदधाति ग, ङ, ञ, ५ पुष्करं पुष्करᳬ इति. ग
६, ७ मा. सं. १३. ३

सीमेमे लोकाः सुरुचोऽसावादित्यो व्वेनो यद्वै प्रजिजनिषमाणो व्वेनत्तस्माद्वेनस्तानेष सीमतो मध्यतो व्विवृण्वन्नुदेति "स बुध्न्या ऽउपमाऽअस्य व्विष्ठा" ऽइति दिशो वाऽअस्य बुध्न्याऽउपमा व्विष्ठा- स्ता ह्येषऽउपवितिष्ठते "सतश्च य्योनिमसतश्च व्विवरि"तीमे वै लोकाः सतश्च य्योनिरसतश्च यच्च ह्यस्ति यच्च न तदेभ्यऽएव लोकेभ्यो जायते त्रिष्टुभोपदधाति त्रैष्टुभो ह्येष सादयित्वा सूददो- हसाधिवदति तस्योक्तो बन्धुः ॥१४॥ अथ पुरुषमुपदधाति । स प्रजापतिः सोऽग्निः स य्यजमानः स हिरण्मयो भवति ज्योतिर्व्वै हिरण्यं ज्योतिरग्निरमृतꣳ हिरण्यममृतमग्निः पुरुषो भवति पुरुषो हि प्रजापतिः ॥१५॥ यद्वेव पुरुषमुपदधाति । प्रजापतेर्व्विस्रस्ता- द्रम्या तनूर्मध्यतऽउदक्रामत्तस्यामेनमुत्क्रान्तायां देवाऽअजहुस्तं यत्र देवाः समस्कुर्व्वंस्तदस्मिन्नेताꣳ रम्यां तनूं मध्यतोऽदधुस्त- स्यामस्य देवाऽअरमन्त तद्यदस्यैतस्याꣳ रम्यायां तन्वां देवाऽअर- मन्त तस्माद्धि रम्यꣳ हि रम्यꣳ ह वै तद्धिरण्यमित्याचक्षते परो- क्षं परोक्षकामा हि देवास्तथैवास्मिन्नयमेताꣳ रम्यां तनूं मध्यतो दधाति तस्यामस्य देवा रमन्ते प्राणो वाऽअस्य सा रम्या तनूः प्राणमेवास्मिन्नेतं मध्यतो दधाति ॥१६॥ तꣳ रुक्मऽउपदधाति । असौ वाऽआदित्यऽएष रुक्मोऽथ यऽएषऽएतस्मिन्मण्डले पुरुषः सऽएष तमेवैतदुपदधाति ॥१७॥ उत्तानमुपदधाति । एतद्वै देवा ऽअब्रुवन्यदि वाऽइमावर्व्वाञ्चाऽउपधास्यामः सर्व्वमेवेदं प्रधक्ष्यतो यद्यु पराञ्चौ पराञ्चावेव तप्स्यतो यद्यु सम्यञ्चावन्तरैवैतावेत- ज्ज्योतिर्भविष्यत्यथोऽअन्योन्यꣳ हिꣳसिष्यतऽइति तेऽर्व्वाञ्चम- न्यमुपादधुः पराञ्चमन्यꣳ सऽएष रश्मिभिरर्व्वाङ् तपति रुक्मः प्राणैरेषऽऊर्द्ध्वः पुरुषः प्राञ्चमुपदधाति प्राङ्ह्येषाऽग्निश्चीयते ॥१८॥ "हिरण्यगर्भः समवर्त्तताग्र"ऽइति । हिरण्यगर्भो ह्येष समवर्त्तताग्रे

१-३ मा. सं. १३. ४

"भूतस्य जातः पतिरेकऽआसीदि"त्येष ह्यस्य सर्व्वस्य भूतस्य जातः पतिरेकऽआसी"त्स दाधार पृथिवीं द्यामुतेमामि"त्येष वै दिवं च पृथिवीं च दाधार "कस्मै देवाय हविषा विधेमे"ति प्रजापतिर्वै कस्तस्मै हविषा विधेमेत्येतत् ॥१९॥ "द्रप्सश्चस्कन्द पृथिवीमनु द्यामि"ति । असौ वाऽआदित्यो द्रप्सः स दिवं च पृथिवीं च स्कन्दतीत्यमूमितीमा"मिमं च य्योनिमनु यश्च पूर्व्व"ऽइतीमं च लोकमसुं चेत्येतदथो य्यश्चेदमेतर्हि चीयते य्यश्चादः पूर्व्वमचीयतेति "समानं य्योनिमनु सञ्चरन्तमि"ति समानꣳ ह्येषऽएतं य्योनिमनु सञ्चरति "द्रप्सं जुहोम्यनु सप्त होत्राऽ"इत्यसौ वाऽआदित्यो द्रप्सो दिशः सप्त होत्राऽअमुं तदादित्यं दिक्षु प्रतिष्ठापयति ॥२०॥ द्वाभ्यामुपदधाति । द्विपाद्यजमानो य्यजमानोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति । त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥२१॥ अथ साम गायति । एतद्वै देवाऽएतं पुरुषमुपधाय तमेतादृशमेवापश्यन्यथैतच्छुष्कं फलकम् ॥२२॥ तेऽब्रुवन् । उप तज्जानीत य्यथास्मिन्पुरुषे व्वीर्यं दधामेति तेऽब्रुवंश्चेतयध्वमिति चितिमिच्छतेति व्वाव तदब्रुवंस्तदिच्छत य्यथास्मिन्पुरुषे व्वीर्यं दधामेति ॥२३॥ ते चेतयमानाः । एतत्सामापश्यंस्तदगायंस्तदस्मिन्वीर्यमदधुस्तथैवास्मिन्नयमेतद्दधाति पुरुषे गायति पुरुषे तद्वीर्यं दधाति चित्रे गायति सर्व्वाणि हि चित्राण्यग्निस्तमुपधाय न पुरस्तात्परीयान्नेन्मायमग्निर्हिनसदिति ॥२४॥ अथ सर्प्पनामैरुपतिष्ठते । इमे वै लोकाः सर्पास्ते ह्यनेन सर्व्वेण सर्प्पन्ति य्यदिदं किञ्च सर्व्वेषामु ह्येष देवानामात्मा य्यदग्निस्ते देवाऽएतमात्मानमुपधायाबिभयुर्यद्वै नऽइमे लोकाऽअनेनात्मना न सर्प्पेयुरिति ॥२५॥ तऽएतानि सर्प्पनामान्यपश्यन् । तैरुपातिष्ठन्त तैरस्माऽइमां लोकानस्थापयंस्तैरनमयन्यदनमयंस्तस्मात्सर्प्पनामानि

---

१-३ मा॰ सं॰ १३. ४　५-७ मा. सं. १३. ५.　८ हिनसादिति ख,

तथैवैतद्यजमानो यत्सर्प्पनामैरुपतिष्ठतऽइमानेवास्माऽएतल्लोकान्त्स्थापयतीमाँल्लोकान्नमयति तथो हास्यैतऽएतेनात्मना न सर्प्पन्ति ॥२६॥ यद्वेव सर्प्पनामैरुपतिष्ठते । इमे वै लोकाः सर्प्पा यद्धि किञ्च सर्प्पत्येष्वेव तल्लोकेषु सर्प्पति तद्यत्सर्प्पनामैरुपतिष्ठते यैवेषु लोकेषु नाष्ट्रा यो व्यद्वरो या शिमिदा तदेवैतत्सर्व्वं शमयति ॥२७॥ "नमोऽस्तु[1] सर्व्वेभ्यो ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नम"ऽइति यऽएवैषु त्रिषु लोकेषु सर्प्पास्तेभ्य ऽएतन्नमस्करोति॥२८॥ "या[2] ऽइषवो यातुधानानामि"ति । यातुधानप्रेषिता हैके दशन्ति "ये वा[3] वनस्पती १।ऽरनु । ये वावटेषु शेरते तेभ्यः सर्प्पेभ्यो नम"ऽइति ये चैव वनस्पतिषु सर्प्पा ये चावटेषु शेरते तेभ्य ऽएतन्नमस्करोति ॥२९॥ "ये[4] वामी रोचने दिवः । ये वा सूर्यस्य रश्मिषु । येषामप्सु सदस्कृतं तेभ्यः सर्व्वेभ्यो नम"ऽइति यत्र यत्रैते तदेवैभ्य ऽएतन्नमस्करोति नमो नमऽइति यज्ञो वै नमो यज्ञेनैवैनानेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्तऽइति यथा हैनं ब्रूयाद्यज्ञस्तऽइति तादृक्तत् ॥३०॥ त्रिभिरुपातिष्ठते । त्रयऽइमे[5] लोका ऽअथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्माऽएतदिमाँल्लोकान्त्स्थापयत्यथो तावतैवैतदिदं सर्व्वं शमयति तिष्ठन्नुपतिष्ठते तिष्ठन्तीव वाऽइमे लोका ऽअथो तिष्ठन्वै वीर्यंवत्तरः[6] ॥३१॥ अथैनमुपविश्याभिजुहोति । आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः सर्व्वतः परिसर्प्पं सर्व्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेन प्रीणाति ॥३२॥ यद्वेवैनमभिजुहोति । एतद्वै देवा ऽएतमात्मानमुपधायाबिभयुर्यद्वै नऽइममिह रक्षांसि नाष्ट्रा न हन्युरिति तऽएतान्राक्षोघ्नान्प्रतिसरानपश्यन् "कृणुष्व[7] पाजः प्रसितिं न पृथ्वीमि"ति राक्षोघ्ना वै प्रतिसरास्तऽएतैः प्रतिसरैः सर्व्वाभ्यो दिग्भ्यो

---

१ मा. सं. १३. ६ २, ३. मा. सं. १३. ७ ४. मा. सं. १३. ८
५ इमे इति. ग. ६. वत्तरः इति. ख, ग, ञ. ७. मा. सं. १३. ९.

रक्षाᳬंसि नाष्ट्रा अपहत्याऽभयेऽनाष्ट्रऽएतामात्मानᳬं समस्कुर्व्वत तथैवैतद्यजमानऽएतैः प्रतिसरैः सर्व्वाभ्यो दिग्भ्यो रक्षाᳬंसि नाष्ट्रा ऽअपहत्याऽभयेऽनाष्ट्रऽएतमात्मानᳬं संस्कुरुते ॥३३॥ आज्येन जुहोति । व्वज्रो वाऽआज्यं व्वज्रेणैवैतद्रक्षाᳬंसि नाष्ट्राऽअपहन्ति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैतद्रक्षाᳫंसि नाष्ट्रा ऽअपहन्त्याग्नेयीभिराग्निर्व्वै ज्योती रक्षोहाग्निनैवैतद्रक्षाᳫंसि नाष्ट्रा ऽअपहन्ति त्रिष्टुब्भिर्व्वज्रो वै त्रिष्टुब्व्वज्रेणैवैतद्रक्षाᳫंसि नाष्ट्रा ऽअपहन्ति सर्व्वतः परिसर्पᳫं सर्व्वाभ्यऽएवैतद्दिग्भ्यो रक्षाᳫंसि नाष्ट्रा ऽअपहन्ति ॥३४॥ पश्चादग्नेः प्राङासीनः[1] । अथोत्तरतो[2] दक्षिणाथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य दक्षिणतऽउदङासीनस्तद्दक्षिणावृत्तद्धि देवत्राथानुपरीत्य पश्चात्प्राङासीनस्तथो हास्यैतत्प्रागेव कर्म कृतं भवति ॥३५॥ अथ स्रुचाऽउपदधाति । बाहू वै स्रुचौ बाहूऽएवास्मिन्नेतत्प्रतिदधाति ते सत्स्रुचौ भवतः स्रुचौ हि बाहूऽइदमेव कपुत्सलमयं[3] दण्डो द्वे भवतो द्वौ हीमौ बाहू पार्श्वतऽउपदधाति पार्श्वतो हीमौ बाहू ॥३६॥ कार्ष्मर्यमयीं दक्षिणतऽउपदधाति । एतद्वै देवाऽअबिभयुर्यद्वैनो यज्ञं दक्षिणतो रक्षाᳫंसि नाष्ट्रा न हन्युरिति तऽएतᳬं रक्षोहणं व्वनस्पतिमपश्यन्कार्ष्मर्य्यं तऽएतेन व्वनस्पतिना दक्षिणतो रक्षाᳫंसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञमतन्वत तथैवैतद्यजमानऽएतेन व्वनस्पतिना दक्षिणतो रक्षाᳫंसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्रऽएतं यज्ञं तनुतऽआज्येन पूर्ण्णा भवति व्वज्रो वाऽआज्यं व्वज्रेणैवैतद्दक्षिणतो रक्षाᳫंसि नाष्ट्रा ऽअपहन्ति ॥३७॥ अथौदुम्बरीमुत्तरतऽउपदधाति । ऊर्ग्वै रसऽउदुम्बरऽऊर्ज्जमेवास्मिन्नेतद्रसं दधाति दध्ना पूर्ण्णा भवति रसो वै दधि रसमेवास्मिन्नेतद्दधाति ॥३८॥ व्यद्वेव स्रुचाऽउपदधाति । प्रजापतेर्व्विस्रस्तस्याग्निस्तेज ऽआदाय दक्षिणाकर्षत्सोऽत्रोदरमद्यत्कृष्ट्वोदरमत्तस्मात्कार्ष्मर्य्योऽथास्येन्द्र ऽओज

---

1 प्राङासीन इति. ज.   2 अथ इति. ख.   3. कपुच्छलमयं इति घ,

ऽआदायोदङ्ङुदक्रामत्सऽउदुम्बरोऽभवत् ॥३९॥ तावब्रवीत् । उप मेतं प्रति मऽएतद्धत्तं य्येन मे य्युवमुदक्रमिष्टमिति ताभ्यां वै नौ सर्व्वमन्नं प्रयच्छेति तौ वै मा बाहू भूत्वा प्रपद्येथामिति तथेति ताभ्यां वै सर्व्वमन्नं प्रायच्छत्तावेनं बाहू भूत्वा प्रापद्येतां तस्माद्बाहुभ्यामेवान्नं क्रियते बाहुभ्यामद्यते बाहुभ्याᳩं हि स सर्व्वमन्नं प्रायच्छत् ॥४०॥ स कार्ष्मर्यमयीं दक्षिणतऽउपदधाति । "अग्नेष्ट्वा तेजसा सादयामी"ति य्यदेवास्य तदग्निस्तेज ऽआदाय दक्षिणाकर्षत्तदस्मिन्नेतत्प्रतिदधात्य"ग्निर्मूर्द्धा दिवः ककुदि"त्येषऽउ सोऽग्निर्गायत्र्या गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति घृतेन पूर्णा भवत्याग्नेयं वै घृतᳩं स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥४१॥ अथौम्बुरीमुत्तरतऽउपदधाति । "इन्द्रस्य त्वौजसा सादयामी"ति य्यदेवास्य तदिन्द्र ऽओजऽआदायोदङ्ङुदक्रामत्तदस्मिन्नेतत्प्रतिदधाति "भुवो यज्ञस्य रजसश्च नेते"त्येष ऽउ सऽइन्द्रः सा य्यदाग्नेय्यग्निकर्म ह्यथ य्यत्त्रिष्टुप्त्रैष्टुभो हीन्द्रऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधातीन्द्राग्नी वै सर्व्वे देवाः सर्व्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति दध्ना पूर्णा भवत्यैन्द्रं वै दधि स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥४२॥ तावस्यैताविन्द्राग्नी ऽएव बाहू । तावेनं तेजसा च व्वीर्येण च प्रपद्येते स सम्प्रत्युरः पुरुषमाकाश्य य्यत्राभ्याप्नोति तदालिख्यैनेऽउपदधात्येष हैतयोर्लोकः ॥४३॥

( अर्द्धप्रपाठकः )

ते हैके तिरश्च्याऽउपदधाति । तिर्य्यञ्चौ व्वाऽइमौ बाहूऽइति न तथा कुर्यात्प्राच्यावेवोपदध्यात्प्राङ् ह्येषोऽग्निश्चीयतेऽथोऽएवं वै बाहू व्वीर्यवत्तरौ ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू ॥४४॥ तदाहुः । नैतस्य पुरुषस्य

१. मा. सं. १३. १३ २, ३. मा. सं. १३. १४. ४. मा. सं. १३. १५

वाहू कुर्षादेतौ वाऽअस्य बाहू य्येऽएते स्रुचौ नेदाति रेचयानीति स वै कुर्य्यादेवैतौ वाऽअस्य वाहूऽअन्वेते स्रुचावथोऽएतौ पक्षावथो य्यान्येतस्मिग्नग्नौ रूपाण्युपधास्यन्भवति यान्स्तोमान्यानि पृष्ठानि यानि छन्दाꣳस्येतयोरेव सा संस्कृतिरेतयोर्व्वृद्धिस्तस्माद्‌ कुर्य्यादेवैतस्य पुरुषस्य बाहू ॥४५॥ Cf. का. श. ९. ३. १–४; तै सं. ५. २. ७; मै' सं ३. २. ६; काठ. सं. २०. ५; कपि. सं. ३२. ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ( अ.२.२. )

७. ३. २.

( स्वयमातृण्णादीष्टकोपधानम् )

स्वयमातृण्णामुपदधाति । इयं वै स्वयमातृण्णेमामेवैतदुपदधाति तामनन्तर्हितां पुरुषादुपदधात्यन्नं वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वाऽअन्नमस्याꣳ हि सर्व्वमन्नं पच्यतेऽनन्तर्हितमेवास्मादेतदन्नं दधात्युत्तरामुत्तरमेवास्मादेतदन्नं दधाति ॥१॥ य्यद्वेव स्वयमातृण्णामुपदधाति । प्राणो वै स्वयमातृण्णा प्राणो ह्येवैतत्स्वयमात्मनऽआतृन्ते प्राणमेवैतदुपदधाति तामनन्तर्हितां पुरुषादुपदधाति प्राणो वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वै प्राणो यद्धि किञ्च प्राणीयं तत्सर्व्वं बिभर्त्यनन्तर्हितमेवास्मादेतत्प्राणं दधात्युत्तरामुत्तरमेवास्मादेतत्प्राणं दधाति ॥२॥ य्यद्वेव स्वयमातृण्णामुपदधाति । प्रजापतिं व्विस्रस्तं देवताऽआदाय व्युदक्रामंस्तासु व्युत्क्रामन्तीषु प्रतिष्ठामभिपद्योपाविशत् ॥३॥ स यः स प्रजापतिर्व्यस्रꣳसत । अयमेव स योऽयमग्निश्चीयतेऽथ या सा प्रतिष्ठैषा सा प्रथमा स्वयमातृण्णा तद्यदेतामत्रोपदधाति य्यदेवास्यैषात्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ॥४॥ तां वै प्रजापतिनोपदधाति । प्रजापतिर्ह्येवैत-

१ मात्मन इति. ग.  २ उपदधाति इति. ग.  ३ एतामिति. ग

त्स्वयमात्मनः प्रत्यधत्त "ध्रुवासी"ति स्थिरासीत्येतदथो प्रतिष्ठितासीति "धरुणे"ति प्रतिष्ठा वै धरुणामा"स्तृता विश्वकर्मणे"ति प्रजापतिर्व्वै विश्वकर्मा तेनास्तृतासीत्येत"न्मा त्वा समुद्रऽउद्वधीन्मा सुपर्ण"ऽइति रुक्मो वै समुद्रः पुरुषः सुपर्ण्णस्तौ त्वा मोद्वाधिष्टामित्येत"दव्यथमाना पृथिवीं दृꣳहे"ति व्यथैव व्यजुस्तथा बन्धुः ॥५॥ "प्रजापतिष्ट्वा सादयत्वि"ति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्य"दपां पृष्ठे समुद्रस्येमन्नि"त्यपाꣳ हीयं पृष्ठꣳ समुद्रस्य हीयमेमा "व्यचस्वतीं प्रथस्वतीमि"ति व्यचस्वती च हीयं प्रथस्वती च "प्रथस्व पृथिव्यसी"ति प्रथस्व पृथिवी चासीत्येतत् ॥६॥ "भूरसी"ति । भूर्हीयं "भूमिरसी"ति भूमिर्हीय"मदितिरसी"तीयं वाऽ अदितिरियꣳ हीदꣳ सर्व्वं ददते "विश्वधाया"ऽइत्यस्याꣳ हीदꣳ सर्व्वꣳ हितं "विश्वस्य भुवनस्य धर्त्री"ति सर्व्वस्य भुवनस्य धर्त्रीत्येत"त्पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसी"रित्यात्मानं यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्येतत् ॥७॥ "विश्वस्मै प्राणायापानाय । व्यानायोदानाये"ति प्राणो वै स्वयमातृण्णा सर्व्वस्माऽउ वाऽएतस्मै प्राणः "प्रतिष्ठायै चरित्राये"तीमे वै लोकाः स्वयमातृण्णा ऽइमऽउ लोकाः प्रतिष्ठा चरित्रम"ग्निष्ट्वाभिपात्वि"त्यग्निष्ट्वाभिगोपायत्वित्येत"न्मह्या स्वस्त्ये"ति महत्या स्वस्त्येत्येत'च्छर्दिषा शंतमेने"ति यच्छर्दिः शंतमं तेनेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो वन्धुरथ साम गायति तस्योपरि बन्धुः ॥८॥ तदाहुः। कथमेष पुरुषः स्वयमातृण्णयानभिनिहितो भवतीत्यन्नं वै स्वयमातृण्णा प्राणः स्वयमातृण्णानभिनिहितो वै पुरुषोऽन्नेन च प्राणेन च ॥९॥ अथ दूर्व्वेष्टकामुपदधाति । पशवो वै दूर्व्वेष्टका पशूनेवैतदुपदधाति तद्वैरदोऽग्निरनन्तर्हितैः पशुभिरुपैत्तऽएते तानेवैतदुपदधाति तामनन्तर्हिताꣳ

१-५ मा. स. १३. १६. ६-९ मा. सं. १३. १७.
१०-१६ मा. सं. १३. १८. १७-२१ मा. सं. १३. १९.

स्वयमातृण्णायाऽउपदधातीयं वै स्वयमातृण्णानन्तर्हितांस्तदस्यै पशून्दधात्युत्तरामुत्तरांस्तदस्यै पशून्दधाति ॥१०॥ यद्वेव दूर्वेष्टकामुपदधाति । प्रजापतेर्विस्रस्तस्य यानि लोमान्यशीयन्त ताऽइमाऽओषधयोऽभवन्नथास्मात्प्राणो मध्यत ऽउदक्रामत्तस्मिन्नुत्क्रान्तेऽपद्यत ॥११॥ सोऽब्रवीत् । अयं वाव माधूर्वीदिति यदब्रवीद्धूर्वीन्मेति तस्माद्धूर्वा धूर्वा ह वै तां दूर्वेत्याचक्षते परोक्षं परोक्षकामा हि देवास्तदेतत्क्षत्त्रं प्राणो ह्येष रसो लोमान्यन्याऽओषधयऽएतामुपदधत्सर्वाऽओषधीरुपदधाति ॥१२॥ तं यत्र देवाः समस्कुर्वन् । तदस्मिन्नेतं प्राणꣳ रसं मध्यतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति तामनन्तर्हिताꣳ स्वयमातृण्णायाऽउपदधातीयं वै स्वयमातृण्णानन्तर्हितास्तदस्याऽओषधीर्दधात्युत्तरामुत्तरास्तदस्याऽओषधीर्दधाति सा स्यात्समूला साग्रा कृत्स्नतायै यथा स्वयमातृण्णायामुपहिता भूमिं प्राप्नुयादेवमुपदध्यादस्याꣳ ह्येवैता जायन्तऽइमामनु प्ररोहन्ति ॥१३॥ "काण्डात्काण्डात्प्ररोहन्ती । परुषः परुषस्परी"ति काण्डात्काण्डाद्ध्येषा पर्वणः पर्वणः प्ररोह"त्येवा नो दूर्वे प्रतनु सहस्रेण शतेन चे"ति यथैव यजुस्तथा बन्धुः ॥१४॥ "या शतेन प्रतनोषि । सहस्रेण विरोहसी"ति शतेन ह्येषा प्रतनोति सहस्रेण विरोहति "तस्यास्ते देवीष्टके विधेम हविषा वयमि"ति यथैव यजुस्तथा बन्धुर्द्वाभ्यामुपदधाति तस्योक्तो बन्धुः सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥१५॥ अथ द्वियजुषमुपदधाति । इन्द्राग्नीऽअकामयेताꣳ स्वर्गं लोकमियावेति तावेतामिष्टकामपश्यतां द्वियजुषमिमामेव तामुपादधातां तामुपधायास्यै प्रतिष्ठायै स्वर्गं लोकमैतां तथैवैतद्यजमानो यद्द्वियजुषमुपदधाति येन रूपेण यत्कर्म कृत्वेन्द्राग्नी स्वर्गं लोकमैतां तेन रूपेण तत्कर्म कृत्वा स्वर्गं लोकमयानीति सा यद्द्वियजुर्नाम द्वे ह्येतां देवतेऽअपश्यतां यद्वेव द्वियजुषमुपदधाति यजमानो वै द्वियजुः ॥१६॥ तदाहुः । यदसावेव

१. प्राणो इति. ग. २, ३. मा. सं. १३. २०. ४. मा. सं. १३. २१.

यजमानो यो ऽसौ हिरण्मयः पुरुषोऽथ कतमदस्येदꣳ रूपमिति
दैवो वाऽअस्य सऽआत्मा मानुषोऽयं तद्यत्स हिरण्मयो भवत्यमृतं
वाऽअस्य तद्रूपं देवरूपममृतꣳ हिरण्यमथ यदिदं मृदः कृता भ-
वति मानुषꣳ ह्यस्येदꣳ रूपम् ॥१७॥ स यदमूमेवोपदध्यात् । ने-
मामपाशिꣳष्यात्क्षिप्रे हास्माल्लोकाद्यजमानः प्रेयादथ यदिमामपाशि-
नष्टि यदेवास्येदं मानुषꣳ रूपं तदस्यैतदपाशिनष्टि तथो हानेना-
त्मना सर्व्वमायुरेति ॥१८॥ स यन्नानूपदध्यात्[1] । न हैतं दैवमात्मा-
नमनुप्रजानीयादथ यदनूपदधाति तथो हैतं दैवमात्मानमनुप्रजा-
नाति तामनन्तर्हितां दूर्व्वेष्टकायाऽउपदधाति पशवो वै दूर्व्वेष्टका
यजमानं तत्पशुषु प्रतिष्ठापयति ॥१९॥ तदाहुः । कथमस्यैतावात्मा-
नौ प्राणेन संततावव्यवच्छिन्नौ भवतऽइति प्राणो वै स्वयमातृण्णा
प्राणो दूर्व्वेष्टका यजमानो द्वियजुः स यदनन्तर्हिताꣳ स्वयमातृण्णायै
दूर्व्वेष्टकामुपदधाति प्राणेनैव तत्प्राणꣳ सन्तनोति सन्दधात्यथ
यदनन्तर्हितां दूर्व्वेष्टकायै द्वियजुषमुपदधाति प्राणो वै दूर्व्वेष्टका
यजमानो द्वियजुरेवमु हास्यैतावात्मानौ प्राणेन सन्ततावव्यवच्छिन्नौ
भवतः ॥२०॥ "[2]या स्तेऽअग्ने सूर्ये रुचः"। "[3]या वो देवाः सूर्ये रुच"
ऽइति रुचꣳ रुचमित्यमृतत्वं वै रुगमृतत्वमेवास्मिन्नेतद्दधाति द्वा-
भ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैतद्रूपं मृच्चापश्च साद-
यित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥२१॥ अथ रेतःसिचा-
ऽउपदधाति । इमौ वै लोकौ रेतःसिचाविमौ ह्येव लोकौ रेतः
सिञ्चतऽइतो वाऽअयमूर्द्ध्वꣳ रेतः सिञ्चति धूमꣳ सामुत्र वृष्टिर्भ-
वति तामसावमुतो वृष्टिं तदिमाऽअन्तरेण प्रजाः प्रजायन्ते तस्मा-
दिमौ लोकौ रेतःसिचौ ॥२२॥ "वि[4]राड्ज्योतिरधारयदि"ति ।
अयं वै लोको विराट् सऽइममग्निं ज्योतिर्धारयति "स्व[5]राड्ज्योति-

---

१. दध्यात् इति. ग. २. मा. सं. १३. २२.
३. मा. सं. १३. २३. ४, ५. मा. सं. १३. २४

रधारयदि''त्यसौ वै लोकः स्वराट् सोऽमुमादित्यं ज्योतिर्द्धारयति विराट्च हेमौ लोकौ स्वराट्च नानोपदधाति नाना हीमौ लोकौ सकृत्सादयति समानं तत्करोति तस्मादु ह्यनयोर्लोकयोरन्ताः समायन्ति ॥२३॥ य्यद्वेव रेतःसिचाऽउपदधाति । आण्डौ वै रेतःसिचौ य्यस्य ह्याण्डौ भवतः सऽएव रेतः सिञ्चति विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयदिति विराट्च हेमावाण्डौ स्वराट्च तावेतज्ज्योतिर्द्धारयतो रेतऽएव प्रजातिमेव नानोपदधाति नाना हीमावाण्डौ सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनौ तेऽअनन्तर्हिते द्वियजुषऽउपदधाति य्यजमानो वै द्वियजुरनन्तर्हितौ तद्यजमानादाण्डौ दधाति ॥२४॥ अथ विश्वज्योतिषमुपदधाति । अग्निर्वै प्रथमा विश्वज्योतिरग्निर्ह्येवास्मिँल्लोके विश्वं ज्योतिरग्निमेवैतदुपदधाति तामनन्तर्हितार्ठं रेतःसिग्भ्यामुपदधातीमौ वै लोकौ रेतःसिचावनन्तर्हितं तदाभ्यां लोकाभ्यामग्निं दधात्यन्तरेवोपदधात्यन्तरेव हीमौ लोकावग्निः ॥२५॥ य्यद्वेव विश्वज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजननमेवैतदुपदधाति तामनन्तर्हितार्ठं रेतःसिग्भ्यामुपदधात्याण्डौ वै रेतः सिचावनन्तर्हितां तदाण्डाभ्यां प्रजातिं दधात्यन्तरेवोपदधात्यन्तरेव ह्याण्डौ प्रजाः प्रजायन्ते ॥२६॥ ''प्रजापतिष्ट्वा सादयत्वि''ति । प्रजापतिर्ह्येतां प्रथमां चितिमपश्यत् ''पृष्ठे पृथिव्या ज्योतिष्मतीमि''ति पृष्ठे ह्ययं पृथिव्यै ज्योतिष्मानग्निः ॥२७॥ ''विश्वस्मै प्राणायापानाय । व्यानाये''ति प्राणो वै विश्वज्योतिः सर्व्वस्माऽउ वाऽएतस्मै प्राणो ''विश्वं ज्योतिर्यच्छे''ति सर्व्वं ज्योतिर्य्यच्छेत्येतद''ग्निष्टेऽधिपति''रित्यग्निमेवास्याऽअधिपतिं करोति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥२८॥ अथर्त्तव्येऽउपदधाति । ऋतवऽएते य्यदृतव्येऽऋतूनेवैतदुपदधाति ''मधुश्च माधवश्च व्वासन्तिकावृतू''ऽइति नामनीऽएनयोरेते नामभ्यामेवैनेऽएतदुपदधाति द्वेऽ-

---

१ प्रजापतिमिति. न. २-६. मा. सं. १३.२४. ७. मा. सं. १३. २५.

इष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥२९॥
तद्यदेते ऽअत्रोपदधाति। संवत्सर ऽएषोऽग्निरिम ऽउ लोकाः संवत्स-
रस्तस्यायमेव लोकः प्रथमा चितिरयमस्य लोको व्वसन्त ऽऋतुस्त-
द्यदेते ऽअत्रोपदधाति य्यदेवास्यैते ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति
तस्मादेते ऽअत्रोपदधाति ॥३०॥ य्यद्वेवैते ऽअत्रोपदधाति। प्रजापति-
रेषोऽग्निः संवत्सर ऽउ प्रजापतिस्तस्य प्रतिष्ठैव प्रथमा चितिः प्रति-
ष्ठोऽअस्य व्वसन्त ऽऋतुस्तद्यदेते ऽअत्रोपदधाति य्यदेवास्यैते ऽआत्म-
नस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ते ऽअनन्तर्हिते
व्विश्वज्योतिष ऽउपदधाति प्रजा वै व्विश्वज्योतिरनन्तर्हितास्तत्प्रजा
ऽऋतुभ्यो दधाति तस्मात्प्रजा ऽऋतूनेवानुप्रजायन्त ऽऋतुभिर्ह्येव गर्भं
सन्तꣳसम्पश्यन्त्यृतुभिर्ज्जातम् ॥३१॥ अथाषाढामुपदधाति। इयं
वा ऽअषाढेमामेवैतदुपदधाति तां पूर्व्वार्द्ध ऽउपदधाति प्रथमा हीयम-
सृज्यत ॥३२॥ सा य्यदषाढा नाम। देवाश्चासुराश्चोभये प्राजाप-
त्या ऽअस्पर्द्धन्त ते देवा ऽएतामिष्टकामपश्यन्नषाढामिमामेव तामुपादधत
तामुपधायासुरान्त्सपत्नान् भ्रातृव्यानस्मात्सर्व्वस्मादसहन्त यदस-
हन्त तस्मादषाढा तथैवैतद्यजमान ऽएतामुपधाय द्विषन्तं भ्रातृव्यम-
स्मात्सर्व्वस्मात्सहते ॥३३॥ य्यद्वेवाषाढामुपदधाति। व्वाग्वा ऽअ-
षाढा व्वाचैव तद्देवा ऽअसुरान्त्सपत्नान्भ्रातृव्यानस्मात्सर्व्वस्मादस-
हन्त तथैवैतद्यजमानो व्वाचैव द्विषन्तं भ्रातृव्यमस्मात्सर्व्वस्मात्सहते
व्वाचमेव तद्देवा ऽउपादधत तथैवैतद्यजमानो व्वाचमेवोपधत्ते ॥३४॥
सेयं व्वामभृत्। प्राणा वै व्वामं यद्धि किञ्च प्राणीयं तत्सर्व्वं बिभर्त्ति
तेनेयं व्वामभृद्वाग्घ त्वेव व्वामभृत्प्राणा वै व्वामं व्वाचि वै प्राणेभ्यो-
ऽन्नं धीयते तस्माद्वाग्वामभृत् ॥३५॥ त ऽएते सर्व्वे प्राणा यदषाढा।
तां पूर्वार्द्ध ऽउपदधाति पुरस्तात्तत्प्राणान्दधाति तस्मादिमे पुरस्ता-
त्प्राणास्तान्नान्यया य्यजुष्मत्येष्टकया पुरस्तात्प्रत्युपदध्यादेतस्यां
चितौ नेत्प्राणानपिदधानीति ॥३६॥ य्यद्वपस्याः पञ्च पुरस्तादुपद-
धाति। अन्नं वा ऽआपोऽनपिहिता वा ऽअन्नेन प्राणास्तामनन्तर्हिता-

मृतव्याभ्यामुपदधात्यृतुषु तद्वाचं प्रतिष्ठापयाति सेयं व्वागृतुषु प्रतिष्ठिता व्वदति ॥३७॥ तदाहुः । य्यत्प्रजा व्विश्वज्योतिर्व्वागषाढाथ कस्मादन्तरेणर्त्तव्ये ऽउपदधातीति संवत्सरो वा ऽऋतव्ये संवत्सरेण तत्प्रजाभ्यो व्वाचमन्तर्द्दधाति तस्मात्संवत्सरवेलायां प्रजा व्वाचं प्रवदन्ति ॥३८॥ "अषाढासि सहमाने"ति । असहन्त ह्येतया देवाऽ-असुरा"न्त्सहस्वारातीः सहस्व पृतनायत"ऽइति य्यथैव य्यजुस्तथा बन्धुः "सहस्रवीर्यासि सा मा जिन्वे"ति सर्व्वं वै सहस्रꣳसर्व्ववीर्यासि सा मा जिन्वेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥३९॥ तदाहुः । कस्मादभिस्वयमातृण्णमन्याऽइष्टकाऽउपधीयन्ते प्राच्यऽएताऽइति द्वौ वै य्योनीऽइति ब्रूयाद्देवयोनिरन्यो मनुष्ययोनिरन्यः प्राचीनप्रजनना वै देवाः प्रतीचीनप्रजनना मनुष्यास्तद्यदेताः प्राचीरुपदधाति देवयोनेरेवैतद्यजमानं प्रजनयाति ॥४०॥

Cf. का. श. ९. ४. १; तै. सं. ५. २. ८; मै. सं. ३. २. ६, ७.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( अ.४.२. )

तृतीयः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या ८५ )

( चतुर्थोऽध्यायः )

---

## अथ चतुर्थः प्रपाठकः

### ७. ४. १.

### ( कूर्माद्युपधानम् )

कूर्म्ममुपदधाति । रसो वै कूर्म्मो रसमेवैतदुपदधाति यो वै सऽएषां लोकानामप्सु प्रविद्धानां पराङ्रसोऽत्यक्षरत्सऽएष कूर्म्मस्त-

---

१–३. मा. सं. १३. २६.      ४. सर्वं इति. ग.

मेवैतदुपदधाति यावान्वै रसस्तावानात्मा सऽएषऽइमऽएव लोकाः ॥१॥ तस्य यदधरं कपालम्। अयंᳫं स लोकस्तत्प्रतिष्ठितमिव भवति प्रतिष्ठितऽइव ह्ययं लोकोऽथ यदुत्तरᳫं सा द्यौस्तद्व्यवगृहीतान्तमिव भवति व्यवगृहीतान्तेव हि द्यौरथ यदन्तरा तदन्तरिक्षᳫंसऽ एषऽइमऽएव लोकाऽइमानेवैतल्लोकानुपदधाति ॥२॥ तमभ्यनक्ति। दध्ना मधुना घृतेन दधि हैवास्य लोकस्य रूपं[1] घृतमन्तरिक्षस्य मध्वमुष्य स्वेनैवैनमेतद्रूपेण समर्द्धयत्यथो दधि हैवास्य लोकस्य रसो घृतमन्तरिक्षस्य मध्वमुष्य स्वेनैवैनमेतद्रसेन समर्द्धयति ॥३॥ "मधु[2] वाता ऋतायत"ऽइति। यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सऽर्क्सो देवता तद्यजुस्तद्धैतन्मध्वेवैष त्रिचो रसो वै मधु रसमेवास्मिन्नेतद्दधाति गायत्रीभिस्तितसृभिस्तस्योक्तो बन्धुः ॥४॥ स यत्कूर्मो नाम। एतद्वै रूपं कृत्वा प्रजापतिः प्रजाऽअसृजत यदसृजताकरोत्तद्यदकरोत्तस्मात्कूर्मः कश्यपो वै कूर्मस्तस्मादाहुः सर्व्वाः प्रजाः काश्यप्यऽइति ॥५॥ स यः स कूर्मोऽसौ सऽआदित्यः। अमुमेवैतदादित्यमुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधात्यमुं तदादित्यं पुरस्तात्प्रत्यञ्चं दधाति तस्मादसावादित्यः पुरस्तात्प्रत्यङ् धीयते दक्षिणतोऽषाढायै वृषा वै कूर्मो योषाऽषाढा दक्षिणतो वै वृषा योषामुपशेतेऽरत्निमात्रेऽरत्निमात्राद्धि वृषा योषामुपशेते सैषा सर्व्वासामिष्टकानां महिषी यदषाढैतस्यै दक्षिणतः सन्त्सर्व्वासामिष्टकानां दक्षिणतो भवति ॥६॥ यद्वेव कूर्ममुपदधाति। प्राणो वै कूर्मः प्राणो हीमाः सर्व्वाः प्रजाः करोति प्राणमेवैतदुपदधाति तं पुरस्तात्प्रत्यञ्चमुपदधाति पुरस्तात्तत्प्रत्यञ्चं प्राणं दधाति तस्मात्पुरस्तात्प्रत्यङ् प्राणो धीयते पुरुषमभ्यावृत्तं यजमाने तत्प्राणं दधाति दक्षिणतोऽषाढायै प्राणो वै कूर्मो वागषाढा प्राणो वै वाचो वृषा प्राणो मिथुनम् ॥७॥ (शतम् ४२००) "अपां[3] गम्भन्त्सीदे"ति। एतद्धापां

---

१. रूपं इति. ग. २. मा. सं. १३. २७. ३ मा. सं. १३. ३०

गुस्मिष्ठं यन्नैषऽएतत्तपति "मा त्वा सूर्योऽभितापसीन्माग्निर्व्वैश्वानर" ऽइति मैव त्वा सूर्यो हिꣳसीन्मोऽअग्निर्व्वैश्वानरऽइत्येत "दच्छिन्नपत्राः प्रजाऽअनुवीक्षस्वे"तीमा वै सर्व्वाः प्रजा य्याऽइमाऽइष्टकास्ताऽअरिष्टाऽअनार्त्ताऽअनुवीक्षस्वेत्येतद"नु त्वा दिव्या व्वृष्टिः सचतामि"ति यथैवैनं दिव्या व्वृष्टिरनुसचेतैवमेतदाह[4] ॥८॥ अथैनमेजयति । "त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानि"[5]तीमे वै त्रयः समुद्राः स्वर्ग्गा लोकास्तानेष कूर्मो भूत्वानुसꣳसर्प्पा"पां पतिर्व्वृषभऽइष्टकानामि"त्यपाꣳ ह्येष पतिर्व्वृषभऽइष्टकानां "पुरीषं व्वसानः सुकृतस्य लोक"ऽइति पशवो वै पुरीषं पशून्वसानः सुकृतस्य लोकऽइत्येत"त्तत्र गच्छ य्यत्र पूर्व्वे परेता"ऽइति तत्र गच्छ य्यत्रैतेन पूर्व्वे कर्मणेयुरित्येतत् ॥९॥ "मही द्यौः पृथिवी च न"ऽइति । महती द्यौः पृथिवी च नऽइत्येतदि"मं यज्ञं मिमिक्षतामि"तीमं यज्ञमवतामित्येत"त्पिपृतां[11] नो भरीमभि"रिति बिभृतां नो भरीमभिरित्येतद्द्यावापृथिव्ययोत्तमयोपदधाति द्यावापृथिव्यो हि कूर्मः ॥१०॥ त्रिभिरुपदधाति । त्रयऽइमे लोकाऽअथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिभिरभ्यनक्ति तत्पद्तस्योक्तो बन्धुरवकाऽअधस्ताद्भवन्त्यवकाऽउपरिष्टादापो वाऽअवका अपामेवैनमेतन्मध्यतो[12] दधाति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः॥११॥ अथोलूखलमुसलेऽउपदधाति । व्विष्णुरकामयतान्नादः स्यामिति सऽएतेऽइष्टकेऽअपश्यदुलूखलमुसले तेऽउपाधत्त तेऽउपधायान्नादोऽभवत्तथैवैतद्यजमानो य्यदुलूखलमुसलेऽउपदधाति य्येन रूपेण यत्कर्म्म कृत्वा व्विष्णुरन्नादोऽभवत्तेन रूपेण तत्कर्म्म कृत्वान्नादोऽसानीति तदेत्सर्व्वमन्नं य्यदुलूखलमुसलेऽउलूखलमुसलाभ्याꣳ ह्येवान्नं क्रियतऽउलूखलमुसलाभ्यामद्यते ॥१२॥ ते रेतः सिचोर्व्वेलयोपद-

---

१-३. मा. सं. १३. ३०　४. एतदाह इति. ञ.　५-८. मा. सं. १३. ३१.

९-११. मा. सं. १३. ३२.　१२. अपामिति. ख.

धाति । पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मध्यतऽएवास्मिन्नेतदन्नं दधात्युत्तरेऽउत्तरमेवास्मादेतदन्नं दधात्यरत्निमात्रेऽरत्निमात्राद्ध्यन्नमद्यते ॥१३॥ प्रादेशमात्रे भवतः । प्रादेशमात्रो वै गर्भो विष्णुरन्नमेतदात्मसम्मितमेवास्मिन्नेतदन्नं[1] दधाति यदु वाऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति॥१४॥ औदुम्बरे भवतः । ऊर्ग्वै रसऽउदुम्बरऽऊर्ज्जमेवास्मिन्नेतद्रसं दधात्यथो सर्व्वेऽएते व्वनस्पतयो यदुदुम्बरे[2] एतेऽउपदधत्सर्व्वान्वनस्पतीनुपधाति रेतः सिचोर्व्वेलयेमे वै रेतःसिचावनयोस्तद्वनस्पतीन्दधाति तस्मादनयोर्व्वनस्पतयश्चतुःस्राक्ति भवति चतस्रो वै दिशः सर्व्वासु तद्दिक्षु व्वनस्पतीन्दधाति तस्मात्सर्व्वासु दिक्षु व्वनस्पतयो मध्ये संगृहीतं भवत्युलूखलरूपतायै ॥१५॥ यद्वेवोलूखलमुसलेऽउपदधाति । प्रजापतेर्व्विस्रस्तात्प्राणो मध्यतऽउदचिक्रमिषत्तमन्नेनागृह्णात्तस्मात्प्राणोऽन्नेन गृहीतो यो ह्येवान्नमत्ति स प्राणिति ॥१६॥ प्राणे गृहीते । अस्मादन्नमुदचिक्रमिषत्तत्प्राणेनागृह्णात्तस्मात्प्राणेनान्नं गृहीतं यो ह्येव प्राणिति सोऽन्नमत्ति ॥१७॥ एतयोरुभयोर्गृहीतयोः । अस्मादूर्गुदचिक्रमिषत्तामेताभ्यामुभाभ्यामगृह्णात्तस्मादेताभ्यामुभाभ्यामूर्ग्गृहीता यो ह्येवान्नमत्ति स प्राणिति तमूर्ज्जयति ॥१८॥ ऊर्जि गृहीतायाम् । अस्मादेतेऽउभेऽउदचिक्रमिषतां तेऽऊर्ज्जागृह्णात्तस्मादेतेऽउभेऽऊर्ज्जा[3] गृहीतेयँ ह्येवोर्ज्जयति स[4] प्राणिति सोऽन्नमत्ति ॥१९॥ तान्येतान्यन्योन्येन गृहीतानि[5] । तान्यन्योन्येन गृहीत्वात्मन्प्रापादयत तदेतदन्नं प्रपद्यमान[6]ँ सर्व्वे देवाऽअनुप्रापद्यन्तान्नजीवनँ हीदँ सर्व्वम् ॥२०॥ तदेष श्लोकोऽभ्युक्तः । तद्वै स प्राणोऽभवदिति तद्धि स प्राणोऽभवन्महान् भूत्वा प्रजापतिरिति महान्हि स तदभवद्यदेनमेते देवाः प्रापद्यन्त भुजो

---

१. दन्नं दधाति इति. ग. २. उदुम्बर इति. ज. ३. ऊर्जा इति. ग.
४. स इति. ग. ५. गृहीतानि इति. ग. ६. प्रपद्यमा इति ज.

भुजिष्या व्वित्त्वेति प्राणा वै भुजोऽन्नं भुजिष्याऽएतत्सर्व्वं व्वित्त्वेत्ये-तद्यत्प्राणान्प्राणयत्पुरीत्यात्मा वै पूर्य्यद्धै प्राणान्प्राणयत्तस्मात्प्राणा देवाऽअथ य्यत्प्रजापतिः प्राणयत्तस्माद्ध प्रजापतिः प्राणो यो वै स प्राणऽएषा सा गायत्र्यथ यत्तदन्नमेष स व्विष्णुर्द्देवताथ या सोगैष स ऽउदुम्बरः ॥२१॥ सोऽब्रवीत् । अयं वाव मा सर्व्वस्मात्पाप्मनऽ-उदभार्षीदिति यदब्रवीदुदभार्षीन्मेति तस्मादुदुम्भरऽउदुम्भरो ह वै तमुदुम्बरऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाऽउरु मे करदिति तस्माद्धुरूकरमुरूकरꣳ ह वै तदुलूखलमित्याचक्षते परोक्षं परोक्ष-कामा हि देवाः सैषा सर्व्वेषां प्राणानां य्योनिर्य्यदुलूखलꣳ शिरो वै प्राणानां य्योनिः ॥२२॥ तत्प्रादेशमात्रं भवति । प्रादेशमात्रमिव हि शिरश्चतुःस्रक्ति भवति चतुःस्रक्तीव हि शिरो मध्ये संगृहीतं भवति मध्ये सङ्गृहीतमिव हि शिरः ॥२३॥ तं य्यत्र देवाः समस्कुर्व्वन् । तदस्मिन्नेतत्सर्व्वं मध्यतोऽदधुः प्राणमन्नमूर्ज्जं तथैवास्मिन्नयमेतद्द-धाति रेतःसिचोर्व्वेलया पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मध्य-तऽएवास्मिन्नेतत्सर्व्वं दधाति ॥२४॥ "व्विष्णोः कर्माणि पश्यते" ति । व्वीर्यं वै कर्म्म व्विष्णोर्व्वीर्य्याणि पश्यतेत्येत"द्युतो व्रतानि पस्पश"ऽइत्यन्नं वै व्रतं यतोऽन्नꣳ स्पाशयाञ्चक्रऽइत्येतदि "न्द्रस्य य्युज्यः सखे"तीन्द्रस्य ह्येष य्युज्यः सखा द्विदेवत्यययोपदधाति द्वे ह्युलूखलमुसले सकृत्सादयति समानं तत्करोति समानꣳ ह्येतदन्नमेव सादयित्वा सूददोहसाधिवदति तस्योक्ता बन्धुः ॥२५॥ अथोखामु-पदधाति । य्योनिर्व्वाऽउखा य्योनिमेवैतदुपदधाति तामुलूखलऽउप-दधात्यन्तरिक्षं वाऽउलूखलं यद्धि किञ्चास्याऽऊर्ध्वमन्तरिक्षमेव तन्मध्यं वाऽअन्तरिक्षं मध्यतस्तद्योनिं दधाति तस्मात्सर्व्वेषां भूतानां मध्यतो य्योनिरपि व्वनस्पतीनाम् ॥ २६ ॥ य्यद्वेवोखामुपदधाति । यो वै स प्रजापतिर्व्यस्रꣳसतैषा सोखेमे वै लोकाऽउखेमे लोकाः

---

१. उरुकरमुरु इति अ  २-३. मा. सं. १३. ३३.

प्रजापतिस्तामुलूखलऽउपदधाति तदेनमेतस्मिन् सर्व्वस्मिन्प्रतिष्ठापयति प्राणेऽन्नऽऊर्ज्यथोऽएतस्मादेवैनमेतत्सर्व्वस्मादनन्तर्हितं दधाति ॥२७॥ अथोपशयां पिष्ट्वा। लोकभाजमुखां कृत्वा पुरस्तादुखायाऽउपनिवपत्येष हैतस्यै लोकस्तथो हास्यैषानन्तरिता भवति ॥२८॥ तदाहुः। कथमस्यैषा पक्वा शृतोपहिता भवतीति य्यदेव य्यजुष्कृता तेनाथो यद्वै किञ्चैतमग्निं व्वैश्वानरमुपानिगच्छति तत एव तत्पक्वꣳ शृतमुपहितं भवति ॥२९॥ "ध्रुवासि धरुणे"ति। तस्योक्तो बन्धुरि"तो जज्ञे प्रथममेभ्यो य्योनिभ्योऽअधि जातवेदा"ऽइत्येतेभ्यो हि य्योनिभ्यः प्रथमं जातवेदाऽअजायत "स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं व्वहतु प्रजानन्नि"त्येतैर्व्वाऽएष छन्दोभिर्देवेभ्यो हव्यं व्वहति प्रजानन् ॥३०॥ "इषे राये रमस्व। सहसे द्युम्नऽऊर्जेऽअपत्याये"त्येतस्मै सर्व्वस्मै रमस्वेत्येत"त्सम्राडसि स्वराडसी"ति सम्राट्च ह्येष स्वराट्च "सारस्वतौ त्वोत्सौ प्रावतामि"ति मनो वै सरस्वान्वाक्सरस्वत्येतौ सारस्वताऽउत्सौ तौ त्वा प्रावतामित्येतद्द्वाभ्यामुपदधाति तस्योक्तो बन्धुरथो द्वयꣳ ह्येवैतद्रूपं मृच्चापश्च स्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥३१॥ अथैनामभिजुहोति। एतद्वाऽअस्यामेतत्पूर्व्वꣳ रेतः सिक्तं भवति सिकतास्तदेतदभिकरोति तस्माद्योनौ रेतः सिक्तमभिक्रियतऽआज्येन जुहोति स्रुवेण स्वाहाकारेण द्वाभ्यामाग्नेयीभ्यां गायत्रीभ्यां तस्योक्तो बन्धुः ॥३२॥ "अग्ने युक्ष्वा हि ये तव"। "य्युक्ष्वा हि देवहूतमानि"ति य्युक्तवतीभ्यामिदमेवैतद्योनौ रेतो य्युनक्ति तस्माद्योनौ रेतो य्युक्तं न निष्पद्यते ॥३३॥ स य्यदि सम्वत्सरभृतः स्यात्। अथाभिजुहुयात्सर्व्वं वै तद्यत्संवत्सरभृतः सर्व्वं तद्यदभिजुहोत्यथ यद्यसंवत्सरभृतः स्यादुपैव तिष्ठेतासर्व्वं वै तद्यदसंवत्सरभृतोऽसर्व्वं

१–३. मा. सं. १३. ३४. ४–६. मा. सं. १३. ३५. ७. मा. सं. १३. ३६. ८. मा. सं. १३. ३७. ९. यद्यत्संवत्सर इति. ग, ञ.

तद्यदुपतिष्ठतेऽभित्त्वेव जुहुयात् ॥३४॥ पशुरेष यदग्निः। सोऽत्रैव सर्व्वः कृत्स्नः संस्कृतस्तस्यावाङ् प्राणः स्वयमातृण्णा श्रोणी द्वियजुः पृष्ट्यौ रेतःसिचौ कीकसा विश्वज्योतिः ककुदमृतव्ये ग्रीवाऽअषाढा शिरः कूर्मो यये कूर्मे प्राणा यये शीर्षन्प्राणास्ते ते ॥३५॥ तं वाऽअतम्। इतऽऊर्ध्वं प्राञ्चं चिनोत्यसौ वाऽआदित्यऽएषोऽग्निरमुं तदादित्यमितऽऊर्ध्वं प्राञ्चं दधाति तस्मादसावादित्यऽइतऽऊर्ध्वः प्राङ् धीयते[1] ॥३६॥ अथैनं प्रसलव्यावर्त्तयति। अमुं तदादित्यं प्रसलव्यावर्त्तयति तस्मादसावादित्यऽइमांल्लोकान्प्रसलव्यनुपर्य्यैति ॥३७॥ उदरमुखा। योनिरुलूखलमुत्तरोखा भवत्यधरमूलूखलमुत्तरँ ह्युदरमधरा योनिः शिश्नं[2] मुसलं तद्वृत्तमिव भवति वृत्तमिव हि शिश्नं तद्दक्षिणतऽउपदधाति दक्षिणतो वै वृषा योषामुपशेते यदु पशोः संस्कृतस्यान्नं तदूर्व्वेष्टका तस्य वाऽएतस्योत्तरोऽर्द्धऽउदाहिततरो भवति पशुरेष यदग्निस्तस्मात्पशोः सुहितस्योत्तरः कुक्षिरुन्नततरो भवति ॥३८॥ Cf. का. श. ९. ४. २; तै. सं. ५. २. ९; मै. सं. ३. २. ९; काठ. सं. २०. ६, ७. कपि. ३२. ८, ९.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे सप्तमकाण्डे
चतुर्थप्रपाठके प्रथमं ब्राह्मणम्॥ (अ. ५. १.)

## ७. ४. २.

### (पशुमस्तकाद्युपधानम्)

पशुशीर्षाण्युपदधाति। पशवो वै पशुशीर्षाणि पशूनेवैतदुपदधाति तान्युखायामुपदधातीमे वै लोकाऽउखा पशवः पशुशीर्षाण्येषु तल्लोकेषु पशून्दधाति तस्मादिमऽएषु लोकेषु पशवः॥१॥ यद्वेवोखायाम्। योनिर्व्वाऽउखा पशवः पशुशीर्षाणि योनौ तत्पशून्प्रतिष्ठापयति तस्माद्दह्यमानाः पच्यमानाः पशवो न क्षीयन्ते योनौ ह्येनान्प्रतिष्ठापयति ॥२॥ यद्वेव[3] पशुशीर्षाण्युपदधाति। या वै ताः

1. धीयते इति. ग, ख, ञ. 2. शिश्नं इति. ख. 3. यद्वेव इति. ग.

श्रियऽएतानि तानि पशुशीर्षाण्यथ य्यानि तानि कुसिन्धान्येता-
स्ताः पञ्चचितयस्तद्यास्ताः पञ्च चितयऽइमे ते लोकास्तद्ये तऽइमे
लोकाऽएषा सोखा तद्यदुखायां पशुशीर्षाण्युपदधात्येतैरेव तच्छी-
र्षभिरेतानि कुसिन्धानि सन्दधाति ॥३॥ तान्पुरस्तात्प्रतीचऽउप-
दधाति । एतद्वै य्यत्रैतान्प्रजापतिः पशूनालिप्सत तऽआलिप्स्यु-
मानाऽउदचिक्रमिषंस्तान्प्राणेषु समगृह्णात्तान्प्राणेषु संगृह्य पुरस्ता-
त्प्रतीचऽआत्मन्नधत्त ॥४॥ तद्वाऽएतत्क्रियते । य्यद्देवाऽअकुर्व्वन्निदं
न्वस्मात्ते पशवो नोच्चिक्रमिषन्ति य्यत्त्वेतत्करोति य्यद्देवाऽअकुर्व्वं-
स्तत्करवाणीत्यथो प्राणेष्वेवैनानेतत्संगृह्य पुरस्तात्प्रतीचऽआत्म-
न्धत्ते ॥५॥ य्यद्वेव पशुशीर्षाण्युपदधाति । प्रजापतिर्व्वाऽइदमग्रऽ-
आसीदेकऽएव सोऽकामयतान्नꣳ सृजेय प्रजायेयेति स प्राणेभ्यऽ-
एवाधि पशून्निरमिमीत मनसः पुरुषं चक्षुषोऽश्वं प्राणाद्गाꣳ-
श्रोत्रादविं व्वाचोऽजं तद्यदेनान्प्राणेभ्योऽधि निरमिमीत तस्मादाहुः
प्राणाः पशवऽइति मनो वै प्राणानां प्रथमं तद्यन्मनसः पुरुषं निर-
मिमीत तस्मादाहुः पुरुषः प्रथमः पशूनां व्वीर्यवत्तमऽइति मनो वै
सर्व्वे प्राणा मनसि हि सर्व्वे प्राणाः प्रतिष्ठितास्तद्यन्मनसः पुरुषं
निरमिमीत तस्मादाहुः पुरुषः सर्व्वे पशवऽ इति पुरुषस्य ह्येवैते
सर्व्वे भवन्ति ॥६॥ तदेतदन्नꣳ सृष्ट्वा । पुरस्तात्प्रत्यगात्मन्नधत्त
तस्माद्यः कश्चान्नꣳ सृजते पुरस्तादेवैनत्प्रत्यगात्मन्धत्ते तद्वाऽउ-
खायामुदरं व्वाऽउखोदरे तदन्नं दधाति ॥७॥ अथैषु हिरण्यशकला-
न्प्रत्यस्यति । प्राणा वै हिरण्यमथ व्वाऽएतेभ्यः पशुभ्यः संज्ञप्यमा-
नेभ्यऽएव प्राणाऽउत्क्रामन्ति तद्यद्धिरण्यशकलान्प्रत्यस्यति प्राणाने-
वैष्वेतद्दधाति ॥८॥ सप्त प्रत्यस्यति । सप्त वै शीर्षन्प्राणास्तानस्मि-
न्नेतद्दधात्यथ य्यदि पञ्च पशवः स्युः पञ्चैव कृत्वः सप्त सप्त प्रत्य-
स्येत्पञ्च व्वाऽएतान्पशूनुपदधाति सप्त सप्त वाऽएकैकस्मिन्पशौ प्रा-
णास्तदेषु सर्व्वेषु प्राणान्दधाति ॥९॥ तद्धैकेऽपि । यद्येकः पशुर्भ-
वति पञ्चैव कृत्वः सप्त सप्त प्रत्यस्यन्ति पञ्च वाऽएतान्पशूनुपदधाति

सप्त सप्त वाऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्व्वेषु प्राणान्दधमऽइति न तथा कुर्यादेतस्मिन्वै पशौ सर्व्वेषां पशूनाᳬ रूपं तद्यदेतस्मिन्प्रत्यस्यति तदेवैषु सर्व्वेषु प्राणान्दधाति ॥१०॥ मुखे प्रथमं प्रत्यस्यति । "सम्यक्स्रवन्ति सरितो न धेना"ऽइत्यन्नं वै धेनास्तदिदᳬ सम्यङ्मुखमभिसᳬ स्रवत्य"न्तर्हृदा मनसा पूयमाना"ऽइत्यन्तर्वै हृदयेन मनसा सतान्नं पूतं य्यऽङ्कुस्तस्य "घृतस्य धाराऽअभिचाकशीमी"ति य्या ऽएवैतस्मिन्नन्नावाहुतीर्हौष्यन्भवति ताऽएतदाह "हिरण्ययो व्वेतसो मध्येऽअग्ने"रिति य्यऽएवैष हिरण्मयः पुरुषस्तमेतदाह ॥११॥ "ऋचे त्वे"तीह । प्राणो वाऽऋक्प्राणेन ह्यर्चति "रुचे त्वेती"ह प्राणो वै रुक्प्राणेन हि रोचतेऽथो प्राणाय हीदᳬ सर्व्वᳬ रोचते "भासे त्वे"तीह "ज्योतिषे त्वे"तीह भास्वती हीमे ज्योतिष्मती चक्षुषीऽ"अभूदिदं व्विश्वस्य भुवनस्य व्वाजिनमग्नेर्व्वैश्वानरस्य चे"तीहा"ग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो व्वर्च्चसा व्वर्चस्वानि"ती ह व्विश्वावतीभ्यां व्विश्वᳬ हि श्रोत्रम् ॥१२॥

( अर्द्धप्रपाठकः ५० )

अथ पुरुषशीर्षमुद्गृह्णाति । मह्यत्येवैनदेत"त्सहस्रदाऽअसि सहस्राय त्वे"ति सर्व्वं वै सहस्रᳬ सर्व्वस्य दातासि सर्व्वस्मै त्वेत्येतत् ॥१३॥ अथैनानुपदधाति । पुरुषं प्रथमं पुरुषं तद्वीर्येणात्या दधाति मध्ये पुरुषमभितऽइतरान्पशून्पुरुषं तत्पशूनां मध्यतोऽत्तारं दधाति तस्मात्पुरुषऽएव पशूनां मध्यतोऽत्ता ॥१४॥ अश्वं चाविं चोत्तरतः । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥१५॥ गां चाजं च दक्षिणतः । एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ ॥१६॥ पयसि पुरुषमुपदधाति । पशवो वै पयो य्यजमानं तत्पशुषु प्रतिष्ठापयत्या-

१-४. मा. सं. १३. ३८.
१०, ११. मा. सं. १३. ४०.
१३. अश्वं इति. च.
५-९. मा. सं. १३. ३९.
१२. वीर्येणात्यां इति. पा.

"दि[1]व्यं गर्भं पयसा समङ्धी'"त्यादित्यो वाऽएष गर्भोऽ अत्पुरुषस्तं
पयसा समङ्धीत्येत"[2]त्सहस्रस्य प्रतिमां विश्वरूपमि"ति पुरुषो वै
सहस्रस्य प्रतिमा पुरुषस्य ह्येव सहस्रं भवति "[3]परिवृङ्धि हरसा
माभिमꣳस्था"ऽइति पर्य्येनं वृङ्ध्यर्च्चिषा मैनꣳ हिꣳसीरित्ये-
तच्छ"[4]तायुषं कृणुहि चीयमान"ऽइति पुरुषं तत्पशूनाꣳ शतायुं
करोति तस्मात्पुरुषऽएव पशूनाꣳ शतायुः ॥१७॥ अथोत्तरतो-
ऽश्वम् । "[5]वातस्य जूतिमि"ति वातस्य वाऽएष जूतिर्य्यदश्वो
"[6]वरुणस्य नाभिमि"ति वारुणो ह्यश्वोऽ"[7]श्वं जज्ञानꣳ सरिरस्य
मध्य"ऽइत्यापो वै सरिरमप्सुजाऽउ वाऽअश्वः "[8]शिशुं नदीनाꣳ
हरिमद्रिबुध्न"मिति गिरिर्व्वाऽअद्रिर्गिरिबुध्नाऽउ वाऽआपो"[9]ऽग्ने
मा हिꣳसीः परमे व्योम"न्नितीमे वै लोकाः परमं व्योमैषु लो-
केष्वेनं मा हिꣳसीरित्येतत् ॥१८॥ अथ दक्षिणतो गाम् । "[10]अज-
स्रमिन्दुमरुषमि"ति सोमो वाऽइन्दुः स हैष सोमोऽजस्रो यद्गौ-
"[11]र्भुरण्युमि"ति भर्त्तारमित्येतद"[12]ग्निमीडे पूर्व्वचित्तिं नमोभि"रि-
त्याग्नेयो वै गौः पूर्व्वचित्तिमिति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्राञ्चमुप-
चरन्ति "[13]स पर्व्वभिर्ऋतुशः कल्पमान"ऽइति यद्वाऽएष चीयते
तदेष पर्व्वभिर्ऋतुशः कल्पते "गां [14]मा हिꣳसीरदितिं विराज-
मि"ति विराड्वै गौरन्नं वै विराडन्नमु गौः ॥१९॥ अथोत्तरतोऽ-
विम् । "[15]वरूत्रीं त्वष्टुर्व्वरुणस्य नाभिमि"ति वारुणी च हि त्वाष्ट्री
चाविर"[16]वि जज्ञानाꣳ रजसः परस्मादि"ति श्रोत्रं वै परꣳ [17]रजो दि-
शो वै श्रोत्रं दिशः परꣳ रजो "[18]महीꣳ साहस्रीमसुरस्य [19]माया-
मि"ति महतीꣳ साहस्रीमसुरस्य मायामित्येत"दग्ने [20]मां हिꣳसीः
परमे व्योम"न्नितीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिꣳ-
सीरित्येतत् ॥२०॥ अथ दक्षिणतोऽजम् । "[21]यो ऽअग्निरग्नेरध्यजा-

१–४. मा. सं. १३. ४१. ५–९. मा सं. १३. ४२.
१०–१४. मा. सं. १३, ४३. १५, १६. मा. सं. १३. ४४. १७. रजो इति. ग.
१८, २० मा. सं. १३. ४४. १९. मायामिति. ख. २१ मा. सं. १३, ४५

यते''त्यग्निर्व्वा ऽएषोऽग्नेरध्यजायत ''शोकात्पृथिव्या ऽउत वा दिवस्परी''ति यद्वै प्रजापतेः शोकादजायत तद्दिवश्च पृथिव्यै च शोकादजायत ''येन प्रजा व्विश्वकर्मा जजाने''ति व्वाग्वा ऽअजो व्वाचो वै प्रजा व्विश्वकर्म्मा जजान ''तमग्ने हेडः परि ते व्वृणक्त्वि''ति यथैव यजुस्तथा बन्धुः ॥२१॥ तऽएते पशवः । तान्नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना ह्येते पशवः ॥२२॥ अथ पुरुषशीर्षमभिजुहोति । आहुतिर्व्वै यज्ञः पुरुषं तत्पशूनां यज्ञियं करोति तस्मात्पुरुषऽएव पशूनां यजते ॥२३॥ यद्वेवैनदभिजुहोति । शीर्षंस्तद्वीर्यं दधात्याज्येन जुहोति व्वज्रो वा ऽआज्यं व्वीर्यं वै व्वज्रो व्वीर्यमेवास्मिन्नेतद्दधाति स्रुवेण व्वृषा वै स्रुवो व्वीर्यं वै व्वृषा व्वीर्यमेवास्मिन्नेतद्दधाति स्वाहाकारेण व्वृषा वै स्वाहाकारो व्वीर्यं वै व्वृषा व्वीर्यमेवास्मिन्नेतद्दधाति त्रिष्टुभा व्वज्रो वै त्रिष्टुब्व्वीर्यं वै व्वज्रो व्वीर्यं त्रिष्टुब्वीर्येणैवास्मिन्नेतद्वीर्यं दधाति ॥२४॥ स वा ऽअर्द्धर्च्चमनुद्रुत्य स्वाहाकरोति । अस्थि वा ऽऋगिदं तच्छीर्षकपालं विहाप्य यदिदमन्तरतः शीर्ष्णो व्वीर्यं तदस्मिन्दधाति ॥२५॥ अथोत्तरमर्द्धर्च्चमनुद्रुत्य स्वाहाकरोति । इदं तच्छीर्षकपालꣳ सन्धाय यदिदमुपरिष्टाच्छीर्ष्णो व्वीर्यं तदस्मिन्दधाति ॥२६॥ ''चित्रन्देवानामुदगादनीकमि''ति । असौ वा ऽआदित्यऽएष पुरुषस्तदेतच्चित्रं देवानामुदेत्यनीकं ''चक्षुर्मित्रस्य व्वरुणस्याग्ने''रित्युभयेषाꣳ हैतद्देवमनुष्याणां चक्षु''राप्रा द्यावापृथिवी ऽअन्तरिक्ष''मित्युद्यन्वा ऽएषऽइमाँल्लोकानापूरयति ''सूर्यऽआत्मा जगतस्तस्थुषश्चे''त्येष ह्यस्य सर्व्वस्यात्मा यच्च जगद्यच्च तिष्ठति ॥२७॥ अथोत्सर्गैरुपतिष्ठते । एतद्वै यत्रैतान्प्रजापतिः पशूनालिप्सत तऽआलिप्स्यमाना ऽअशोचंस्तेषामेतैरुत्सर्गैः शुचं पाप्मानमपाहंस्तथैवैषामयमेतदेतैरुत्सर्गैः शुचं पाप्मानमपहन्ति ॥२८॥ तद्धैके । यं यमेव

१–३. मा. सं. १३. ४५.
४. पशव इति ख, पशव इति. ग, ज.
५. जुहोति. इति. ख, ग, ज.
६–९ मा. सं. १३. ४६.

पशुमुपदधति तस्य तस्य शुचमुत्सृजन्ति नेच्छुचं पाप्मानमभ्युपदधामहाऽइति ते ह ते शुचं पाप्मानमभ्युपदधति साधं हि पूर्वस्य शुचमुत्सृजन्ति तामुत्तरेण सहोपदधति ॥२९॥ त्रिपरिक्रामम्मुहैकऽउपतिष्ठन्ते। ऊर्ध्वाᳬ शुचमुत्सृजामऽइति ते ह ते शुचं पाप्मानमनूद्यन्त्यूर्ध्वां ह्येतेन कर्मणेत्यूर्द्ध्वांसु शुचमुत्सृजन्ति ॥३०॥ बाह्येनैवाग्निमुत्सृजेत्। इमे वै लोकाऽएषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्द्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद्बहिर्द्धा शुचं दधात्युदङ् तिष्ठन्नेतस्याᳬ ह दिश्येते पशवस्तद्यत्रैते पशवस्तदेवैष्वेतच्छुचं दधाति ॥३१॥ पुरुषस्य प्रथममुत्सृजति। तᳬ हि प्रथममुपदधाती"मं मा हिᳬसीर्द्विपादं पशुमि"ति द्विपाद्वाऽएष पशुर्यत्पुरुषस्तं मा हिᳬसीरित्येत"त्सहस्राक्षो मेधाय चीयमान"ऽइति हिरण्यशकलैर्वाऽएष सहस्राक्षो मेधायेत्यन्नायेत्येत"न्मयुं पशुं मेधमग्ने जुषस्वे"ति किम्पुरुषो वै मयुः किम्पुरुषमग्ने जुषस्वेत्येत"त्तेन चिन्वानस्तन्वो निषीदे"त्यात्मा वै तनूस्तेन चिन्वानऽआत्मानᳬ संस्कुरुष्वेत्येत"न्मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि"ति तन्मयौ च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३२॥ अथाश्वस्य।
"इमं मा हिᳬसीरेकशफं पशुमि"त्येकशफो वाऽएष पशुर्यदश्वस्तं मा हिᳬसीरित्येत"त्कनिक्रदं वाजिनं वाजिनेष्वि"ति कनिक्रदो वाऽएष वाज्यु वाजिनेषु "गौरमारण्यमनु ते दिशामी"ति तदस्मै गौरमारण्यमनुदिशति "तेन चिन्वानस्तन्वो निषीदे"ति तेन चिन्वानऽआत्मानᳬ संस्कुरुष्वेत्येत"द्गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि"ति तद्गौरे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३३॥ अथ गोः। "इमᳬ साहस्रᳬ शतधारमुत्समि"ति साहस्रो वाऽएष शतधारऽउत्सो यद्गौ"र्व्यच्यमानᳬ सरिरस्य मध्य"ऽइतीमे वै लोकाः सरिरमुपजीव्यमानमेषु लोकेष्वित्येत"द्घृतं

१-५. मा.सं. १३. ४७, ६-१०. मा.सं. १३. ४८, ११-१३. मा.सं. १३. ४९

दुहानामदितिं जनाये''ति घृतं वाऽएषादितिर्ज्जनाय दुहेऽ''ग्ने मा हिंᳬसीः परमे व्योमन्नि''तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिᳬसीरित्येत''द्गवयमारण्यमनु ते दिशामी''ति तदस्मै गवयमारण्यमनुदिशाति ''तेन चिन्वानस्तन्वो निषीदे''ति तेन चिन्वानऽआत्मानᳬसंस्कुरुष्वेत्येतद् ''गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि''ति तद्गवये च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३४॥ अथावेः । ''इमᳬसूर्णायु''मित्यूर्णावलमित्येत''द्वरुणस्य नाभि''मिति व्वारुणो ह्यवि''स्त्वचं पशूनां द्विपदां चतुष्पदामि''त्युभयेषाᳬ ह्येष पशूनां त्वग्द्विपदां च चतुष्पदां च ''त्वष्टुः प्रजानां प्रथमं जनित्रमि''त्येतद्ध त्वष्टा प्रथमᳬ रूपं व्विचकारा''ग्ने मा हिᳬसीः परमे व्योमन्नि''तीमे वै लोकाः परमं व्योमैषु लोकेष्वेनं मा हिᳬसीरित्येत''दुष्ट्रमारण्यमनु ते दिशामी''ति तदस्माऽउष्ट्रमारण्यमनुदिशाति''तेन चिन्वानस्तन्वो निषीदे''ति तेन चिन्वानऽआत्मानᳬ संस्कुरुष्वेत्येत''दुष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि''ति तदुष्ट्रे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च[13] ॥३५॥ अथाजस्य । ''अजो[14] ह्यग्नेरजनिष्ट शोकादि''ति सह्वै प्रजापतेः शोकादजायत तदग्नेः शोकादजायत ''सोऽअपश्यज्जनितारमग्न''ऽइति प्रजापतिर्व्वै जनिता सोऽपश्यत्प्रजापतिमग्नऽइत्येत''त्तेन देवा देवतामग्रमायन्नि''ति व्वाग्वाऽअजो व्वाचो वै देवा देवतामग्रमायं''स्तेन रोहमायन्नुप मेध्यास''ऽइति स्वर्गो वै लोको रोहस्तेन स्वर्गं लोकमायन्नुपमेध्याऽसऽइत्येत''च्छरभमारण्यमनु ते दिशामी''ति तदस्मै शरभमारण्यमनुदिशाति ''तेन चिन्वानस्तन्वो निषीदे''ति तेन चिन्वान ऽआत्मानᳬ संस्कुरुष्वेत्येत''च्छरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छत्वि''ति तच्छरभे च शुचं दधाति यं च द्वेष्टि तस्मिंश्च ॥३६॥ तदाहुः । यां वै तत्प्रजापतिरेतेषां पशूनाᳬ शुचं पाप्मा-

---

१—४. मा. सं. १३. ४९.    ५—१२. मा. सं. १३. ५०.
१३. तस्मिंश्च इति. ख, ग, ञ,    १४—२०. मा. सं. १३. ५१.

नमपाहंस्तऽएते पञ्च पशवोऽभवंस्तऽएतऽउत्क्रान्तमेधाऽअमेध्याऽ-
अयज्ञियास्तेषां ब्राह्मणो नाश्नीयात्तानेतस्यां दिशि दधाति तस्मा-
देतस्यां दिशि पर्ज्जन्यो न व्वर्षुको य्यत्रैते भवन्ति ॥३७॥ प्रत्येत्या-
ग्निमुपतिष्ठते । एतद्वाऽएतदयथायथं करोति य्यदग्नौ सामिचिते
बहिर्वेद्येति तस्माऽएवैतन्निह्नुतेऽहिꣳसायाऽआग्नेय्याग्नयऽएवैतन्नि-
ह्नुते गायत्र्या गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मा
ऽएतन्निह्नुतेऽनिरुक्तया सर्व्वं वाऽअनिरुक्तꣳ सर्व्वेणैवास्माऽएत-
न्निह्नुते य्यविष्ठवत्यैतद्धास्य प्रियं धाम यद्यविष्ठऽइति यद्धै आ-
ऽइदꣳसर्व्वमयुक्त तस्माद्यविष्ठः ॥३८॥ "त्वं यविष्ठ दाशुष"ऽइति ।
य्यजमानो वै दाश्वान् "नॄः पाहो"ति मनुष्या वै नरः "शृणुधी गिर"
ऽइति शृणु नऽइमाꣳ स्तुतिमित्येत "द्रक्षा तोकमुत त्मने"ति प्रजा
वै तोकꣳ रक्ष प्रजां चात्मानं चेत्येतत् ॥३९॥ आरुह्याग्निं जघनेन
स्वयमातृण्णां परीत्यापस्याऽउपदधाति । आप एता य्यदपस्या
ऽअथ वाऽएतेभ्यः पशुभ्यः ऽआपऽउत्क्रान्ता भवन्ति तद्यदपस्याऽ-
उपदधात्येष्वेवैतत्पशुष्वपो दधात्यनन्तर्हिताः पशुभ्य ऽउपदधात्यन-
न्तर्हितास्तत्पशुभ्योऽपो दधाति पञ्च पञ्चोपदधाति पञ्च ह्येते पशवः
सर्व्वत ऽउपदधाति सर्व्वत ऽएवैष्वेतदपो दधाति ॥४०॥ तद्याः
पञ्चदश पूर्व्वाः । ता ऽअपस्या व्वज्रो वाऽआपो व्वज्रः पञ्चदशस्त-
स्माद्येनापो यन्त्यपैव तत्र पाप्मानं घ्नन्ति व्वज्रो हैव तस्यार्द्धस्य
पाप्मानमपहन्ति तस्माद्वर्षत्यप्रावृतो व्व्रजेदयं मे व्वज्रः पाप्मानमपह-
नदिति ॥४१॥ अथ य्याः पञ्चोत्तराः । ताश्छन्दस्याः पशवो वै छन्दा-
ꣳस्यन्नं पशवोऽन्नमु पशोर्माꣳसमथ वाऽएतेभ्यः पशुभ्यो माꣳसा-
न्युत्क्रान्तानि भवन्ति तद्यच्छन्दस्या ऽउपदधात्येष्वेवैतत्पशुषु माꣳ-
सानि दधात्यनन्तर्हिताः पशुभ्यऽउपदधात्यनन्तर्हितानि तत्पशुभ्यो
माꣳसानि दधात्यनन्तराऽ अपस्या भवन्ति बाह्याश्छन्दस्या ऽअन्तरा

१. यदग्नौ इति ख. २—५. मा. सं. १३. ५२. ६. व्रजेदयं इति. ख.

ह्यापो बाह्यानि माꣳसानि ॥४२॥ तदाहुः। यदिमाऽआप ऽएतानि माꣳसान्यथ क्व त्वक् लोमेत्यन्नं वाव पशोस्त्वगन्नं लोम तद्यच्छन्दस्याऽउपदधाति सैव पशोस्त्वक्तल्लोमाथो यान्यमून्युखायामजलोमानि तानि लोमानि बाह्योखा भवत्यन्तराणि पशुशीर्षाणि बाह्यानि हि लोमान्यन्तरऽआत्मा यदीतरेण यदीतरेणेति ह स्माह शाण्डिल्यः सर्वानेव वयं कृत्स्नान्पशून्त्संस्कुर्मऽइति ॥ ४३ ॥ यद्वेवापस्याऽउपदधाति। प्रजापतेर्विस्रस्तादापऽआयंस्तास्विताखविशद्यदविशत्तस्माद्विꣳशतिस्ताऽअस्याङ्गुलिभ्योऽध्यस्रवन्नन्तो वाऽअङ्गुलयोऽन्तऽएवास्मात्ताऽआपऽआयन् ॥ ४४ ॥ स यः स प्रजापतिर्व्यस्रꣳसत। अयमेव स योऽयमग्निश्चीयतेऽथ याऽअस्मात्ताऽआपऽआयन्नेतास्ताऽअपस्यास्तद्यदेताऽउपदधाति याऽएवास्मात्ताऽआपऽआयँस्ताऽअस्मिन्नेतत्प्रतिदधाति तस्मादेताऽअत्रोपदधाति ॥४५॥ "अपां त्वेमन्त्सादयामी"ति। वायुर्वाऽअपामेम यदा ह्येवैषऽइतश्चेतश्च वात्यथापो यन्ति वायौ ताꣳ सादयति ॥४६॥ "अपां त्वोद्मन्त्सादयामी"ति। ओषधयो वाऽअपामोद्म यत्र ह्यापऽउन्दन्त्यस्तिष्ठन्ति तदोषधयो जायन्तऽओषधिषु ताꣳ सादयति ॥४७॥ "अपां त्वा भस्मन्त्सादयामी"ति। अभ्रं वाऽअपां भस्माभ्रे ताꣳ सादयति ॥ ४८ ॥ "अपां त्वा ज्योतिषि सादयामी"ति। विद्युद्वाऽअपां ज्योतिर्विद्युति ताꣳ सादयति ॥४९॥ "अपां त्वायने सादयामी"ति। इयं वाऽअपामयनमस्याꣳ ह्यापो यन्त्यस्यां ताꣳ सादयति तद्याऽअस्यैतेभ्यो रूपेभ्यऽआपऽआयंस्ताऽअस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५० ॥ "अर्णवे त्वा सदने सादयामी"ति। प्राणो वाऽअर्णवः प्राणे ताꣳ सादयति ॥ ५१ ॥ "समुद्रे त्वा सदने सादयामी"ति। मनो वै समुद्रो मनसो वै समुद्राद्वाचाभ्र्या देवास्त्रयीं विद्यां निरखनंस्तदेष श्लोकोऽभ्युक्तो ये समुद्रान्निरखनन्देवास्तीक्ष्णा-

---

१—७, मा. सं. १३. ५३.

भिरग्निभिः सुदेवोऽद्य तद्विद्याद्यत्र निर्व्वपणं दधुरिति मनः समुद्रो ब्वाक्तीक्ष्णाग्निस्त्रयी विद्या निर्व्वपणमेतदेष श्लोकोऽभ्युक्तो मनसि ताᳬं सादयति ॥ ५२ ॥ "सरिरे त्वा सदने सादयामी"ति । वाग्वै सरिरं वाचि ताᳬं सादयति ॥ ५३ ॥ "अपां त्वा क्षये सादयामी" ति । चक्षुर्व्वाऽअपां क्षयस्तत्र हि सर्व्वदैवापः क्षियन्ति चक्षुषि ताᳬं सादयति ॥ ५४ ॥ "अपां त्वा सधिषि सादयामी"ति । श्रोत्रं वाऽअपाᳬं सधिः श्रोत्रे ताᳬं सादयति तद्याऽअस्यैतेभ्यो रूपेभ्यऽ-आपऽआयंस्ताऽअस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ५५ ॥ "अपां त्वा सदने सादयामी"ति । द्यौर्व्वाऽअपाᳬं सदनं दिवि ह्यापः सन्ना दिवि ताᳬं सादयति ॥ ५६ ॥ "अपां त्वा सधस्थे सादयामी"ति । अन्तरिक्षं वा अपाᳬं सधस्थमन्तरिक्षे ताᳬं सादयति ॥ ५७ ॥ अपां त्वा योनौ सादयामी"ति । समुद्रो वाऽअपां योनिः समुद्रे ताᳬं सादयति ॥ ५८ ॥ "अपां त्वा पुरीषे सादयामी"ति । सिकता वाऽअपां पुरीषᳬं सिकतासु ताᳬं साद-यति ॥ ५९ ॥ "अपां त्वा पाथसि सादयामी"ति । अन्नं वाऽअपां पाथोऽन्ने ताᳬं सादयति तद्याऽअस्यैतेभ्यो रूपेभ्यऽआपऽआयंस्ता-ऽअस्मिन्नेतत्प्रतिदधात्यथोऽएतान्येवास्मिन्नेतद्रूपाणि दधाति ॥ ६० ॥ "गायत्रेण त्वा छन्दसा सादयामि । त्रैष्टुभेन त्वा छन्दसा सादयामि जागतेन त्वा छन्दसा सादयाम्यानुष्टुभेन त्वा छन्दसा सादयामि पाङ्क्तेन त्वा छन्दसा सादयामी"ति तद्याऽअस्यैतेभ्यश्छन्दोभ्यऽआप-ऽआयंस्ताऽअस्मिन्नेतत्प्रातिदधात्यथो ऽएतान्येवास्मिन्नेतच्छन्दाᳬंसि दधाति ॥ ६१ ॥ ताऽएताऽअङ्गुलयः । ताः सर्व्वतऽउपदधाति सर्व्वतो हीमाऽअङ्गुलयोऽन्तेषूपदधात्यन्तेषु हीमाऽअङ्गुलयश्चतु-र्द्धोपदधाति चतुर्द्धा हीमाऽअङ्गुलयः पञ्च पञ्चोपदधाति पञ्च पञ्च

१—८, १० मा. सं. १३. ५३. ९. सादयामीति इति ग, ख, भं.

ह्वीमा ऽअङ्गुलयो नानोपदधाति नाना ह्वीमा ऽअङ्गुलयः सकृत्सकृत्सादयति समानं तत्करोति तस्मात्समानसम्बन्धनाः ॥६२॥ (५.२.)॥

cf. का. श. ६. ५. १-४. तै. सं. ५. २. ६-१०, मै. सं. ७-८. काठ. २०. ८, ६. कपि ३२. १०. ११.

इति माध्यन्दिनीये शतपथब्राह्मणे हस्तिघटनाम

सप्तमं काण्डं समाप्तम् ॥ ७ ॥

चतुर्थः प्रपाठकस्समाप्तः ॥

( कण्डिकासंख्या १०० )

( पञ्चमोऽध्यायः )

( अस्मिन्काण्डे कण्डिकासंख्या ३९८ ॥ )

( ब्राह्मणसंख्या १२ )



प्राप्तिस्थानम्—

जयकृष्णदास-हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पंक्तिः पृ० |
|---|---|---|
| त्यतत्. | त्येतत्. | ५. ५१४ |
| यथैवान्दो | यथैवादो | ६. ५१५ |
| व्ययꣳ | व्वयꣳ | २३. ५२२ |
| देवा स्या- | देवास्या. | १३. ५४२ |
| द्रा यस्पो- | द्रायस्पो. | ५. ५५३ |
| दुम्न माते | दुम्ने माते | ६. ५५३ |
| रात्र्याꣳ | राज्यामिति अ. | १२. ५७० |
| वाहनामि. | वाहनमि. | २०. ५७१ |
| शामयति. | शमयति | १३. ५७२ |
| त्वापदधाति | त्वोपदधाति. | १. ५८८ |
| अनिच्छं विद्वान् | अनित्यं विद्वान् भा. सं. पा. | ५. ५८८ |
| करोत्यं | करोत्ये | १३. ५८८ |
| सप्रंथस्तमं | सप्रथस्तमं | १९. ६०३ |
| छन्दाभिः | छन्दोभिः | ४. ६०४ |
| यैवेषु | यैवैषु. | ४. ६१४ |
| ह्येवैता | ह्येवैता. | १३. ६१९ |

# अथ चितिनामाष्टकं काण्डम्



अस्मिन् काण्डे प्रतिपाद्या विषयाः– प्राणभृत्संज्ञकेष्टकोपधानम्, आश्विनीष्टकोपधानादि, स्वयमातृण्णाद्युपधानम्, विश्वज्योतिर्ऋतव्याद्युपधानम्, स्तोमभागाद्युपधानम्, स्तोमचित्यर्थवादः, असपत्नाद्युपधानम्, ऋतव्याद्यर्थवादादि, इष्टकाप्रमाणम्, पुरीषनिवापादि, सुवर्णशकलसहस्रेण प्रोक्षणादिकं चेति ।



[ प्राणभृत्संज्ञकेष्टकोपधानम् ]

ॐ ॥ प्राणभृत ऽउपदधाति । प्राणा वै प्राणभृतः प्राणानेवैतदुपदधाति ताः प्रथमायां चिता ऽउपदधाति पूर्वार्द्धे ऽएषोऽग्नेर्यत्प्रथमा चितिः पुरस्तात्तत्प्राणान्दधाति तस्मादिमे पुरस्तात्प्राणाः ॥ १ ॥ ता दश-दशोपदधाति । दश वै प्राणा यद्‌ु वा ऽअपि बहुकृत्वो दश-दश दशैव तत्पञ्चकृत्वो दश-दशोपदधाति पञ्च वा ऽएतान्पशूनुपदधाति दश-दश वा ऽएकैकस्मिन्पशौ प्राणास्तदेषु सर्व्वेषु प्राणान्दधात्यनन्तर्हिताः पशुभ्य ऽउपदधात्यनन्तर्हिताँस्तत्पशुभ्यः प्राणान्दधाति सर्व्वत ऽउपदधाति सर्व्वत ऽएवैष्वेतत्प्राणान्दधाति ॥ २ ॥ यद्वेव प्राणभृत ऽउपदधाति । प्रजापतेर्व्विस्रस्तात्प्राणा ऽउदक्रामन्देवता भूत्वा तानब्रवीदुप मेत प्रति म ऽएतद्धत्त येन मे यूयमुदक्रमिष्टेति स वै तदन्नः सृजस्व यत्ते वयं पश्यन्त ऽउपवसामेति ते वा ऽउभये

सृजामहा इति तथेति ते प्राणाश्च प्रजापतिश्चै-
तदन्नमसृजन्तैताः प्राणभृतः ॥ ३ ॥ स * पुरस्तादुप-
दधाति । 'अयं पुरो भुव' इत्यग्निर्वै पुरस्तद्यत्तमाह पुर-
इति प्राञ्चं ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्भुव-
इत्याहाग्निर्वै भुवोऽग्नेर्हीदꣳ सर्वं भवति प्राणो ह्यग्नि-
र्भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधाति ॥ ४ ॥ 'तस्य
प्राणो भौवायन' इति । प्राणं तस्माद्रूपादग्नेर्निरमिमीत
'वसन्तः प्राणायन' इति वसन्तमृतुं प्राणान्निरमिमीत
'गायत्री वासन्ती'ति गायत्रीं छन्दो वसन्तादृतोर्निर-
मिमीत 'गायत्र्यै गायत्रमि'ति गायत्र्यै च्छन्दसो गायत्रꣳ
साम निरमिमीत 'गायत्रादुपाꣳशुरि'ति गायत्रात्साम्न-
उपाꣳशुं ग्रहं निरमिमीतो'पाꣳशोस्त्रिवृदि'त्युपाꣳशो-
र्ग्रहात्त्रिवृतꣳ स्तोमं निरमिमीत 'त्रिवृतो रथन्तरमि'ति
त्रिवृत स्तोमाद्रथन्तरं पृष्ठं निरमिमीत ॥ ५ ॥ 'वसिष्ठ-
ऋषिरि'ति । प्राणो वै वसिष्ठ ऋषिर्यद्वै नु श्रेष्ठस्तेन
वसिष्ठोऽथो यद्वस्तृतमो वसति तेनो एव वसिष्ठः
'प्रजापतिगृहीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत-
'त्प्राणं गृह्णामि प्रजाभ्य' इति प्राणं पुरस्तात्प्रा-

* का० श्रौ० सू० १७. ६ ३ ।

( १ ) शु० य० सं० अ० १३ क० ५४ । ( २ ) शु० य० सं० अ० १३ क० ५४ ।
( ३ ) शु० य० सं० अ० १३ क० ५४ । ( ४ ) शु० य० सं० अ० १३ क० ५४ ।
( ५ ) शु० य० सं० अ० १३ क० ५४ । ( ६ ) शु० य० सं० अ० १३ क० ५४ ।
( ७ ) शु० य० सं० अ० १३ क० ५४ । ( ८ ) शु० य० सं० अ० १३ क० ५४ ।
( ९ ) शु० य० सं० अ० १३ क० ५४ । ( १० ) शु० य० सं० अ० १३ क० ५४ ।
( ११ ) शु० य० सं० अ० १३ क० ५४ ।

पादयत नानोपदधाति ये नानाकामाः प्राणे ताँस्तद्दधाति सकृत्सादयत्येकं तत्प्राणं करोत्यथ यन्नाना सादयेत्प्राणꣳ ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका यजुः सादनꣳ सूददोहास्तत्त्रिवृत्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तत्कृत्वोपदधाति ॥ ६ ॥ अथ दक्षिणतः । 'अयं दक्षिणा विश्वकर्म्मे'त्ययं वै वायुर्विश्वकर्म्मा योऽयं पवत एष हीदꣳ सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति मनो ह वायुर्भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ ७ ॥ * 'तस्य मनो वैश्वकर्म्मणमि'ति । मनस्तस्माद्रूपाद्वायोर्न्निरमिमीत 'ग्रीष्मो मानस' इति ग्रीष्ममृतुं मनसो निरमिमीत 'त्रिष्टुब्ग्रैष्मी'ति त्रिष्टुभं छन्दो ग्रीष्मादृतोर्न्निरमिमीत 'त्रिष्टुभः स्वारमि'ति त्रिष्टुभश्छन्दसः स्वारꣳ साम निरमिमीत 'स्वारादन्तर्यामि' इति स्वारात्साम्नोऽन्तर्यामं ग्रहं निरमिमीता'न्तर्यामात्पञ्चदश' इत्यन्तर्यामाद् ग्रहात्पञ्चदशꣳ स्तोमं निरमिमीत 'पञ्चदशाद् बृहदि'ति पञ्चदशात्स्तोमाद् बृहत्पृष्ठं निरमिमीत ॥ ८ ॥ 'भरद्वाज ऋषिरि'ति । मनो वै भरद्वाज ऋषिरन्नं वाजो यो वै मनो बिभर्त्ति सोऽन्नं

(१) शु० य० सं० अ० १३ क० ५५ ।
* अत्र शतम् ४३०० ॥
(२) शु० य० सं० अ० १३ क० ५५ (३) शु० य० सं० अ० १३ क० ५५ । (४) शु० य० सं० अ० १३ क० ५५ । (५) शु० य० सं० अ० १३ क० ५५ । (६) शु० य० सं० अ० १३ क० ५५ । (७) शु० य० सं० अ० १३ क० ५५ । (८) शु० य० सं० अ० १३ क० ५५ । (९) शु० य० सं० अ० १३ क० ५५ ।

व्राजं भरति तस्मान्मनो भरद्वाज ऽऋषिः '[1]प्रजापति-गृहीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत'न्मनो[2] गृह्णामि प्रजाभ्य' ऽइति मनो दक्षिणतः प्राणादयत नानोपदधाति ये नानाकामा मनसि ताँस्तद्दधाति सकृत्सादयत्येकं तन्मनः करोत्यथ यन्नाना सादयेन्मनो ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ९ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



अथ * पश्चात् । '[3]अयं पश्चाद्विश्वव्यचा' ऽइत्यसौ वा ऽआदित्यो विश्वव्यचा यदा ह्येवैष ऽउदेत्यथेदः सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति चक्षुर्हादित्यो भूत्वा पश्चात्तस्थौ तदेव तद्रूपमुपदधाति ॥ १ ॥ '[4]तस्य चक्षुर्वैश्वव्यचसमि'ति । चक्षुस्तस्माद्रूपादादित्यान्निरमिमीत '[5]वर्षाश्चाक्षुष्य' ऽइति वर्षा ऽऋतुं चक्षुषो निरमिमीत '[6]जगती वार्षी'ति जगतीं छन्दो वर्षाभ्य ऽऋतोर्निरमिमीत '[7]जगत्या ऽऋक्समामि'ति जगत्यै च्छन्दस ऽऋक्समः साम निरमिमीत'[8]र्क्समाच्छुक्र' ऽइत्यृक्समात्साम्नः शुक्रं

( १ ) शु० य० सं० अ० १३ क० ५५ । ( २ ) शु० य० सं० अ० १३ क० ५५ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० श० १०. १. १; कठ० सं० १६. १९; कपि० सं० २५. ९; मै० सं० ११. ७. १९; तै० सं० ४. ३. २ ।

* का० श्रौ० सू० १७. ६. ४ ।

( ३ ) शु० य० सं० अ० १३ क० ५६ । ( ४ ) शु० य० सं० अ० १३ क० ५६ । ( ५ ) शु० य० सं० अ० १३. ५६ । ( ६ ) शु० य० सं० अ० १३ क० ५६ । ( ७ ) शु० य० सं० अ० १३ क० ५६ । ( ८ ) शु० य० सं० अ० १३ क० ५६ ।

ग्रहं निरमिमीत 'शुक्रात्सप्तदश' ऽइति शुक्राद् ग्रहात्सप्तदशꣳ स्तोमं निरमिमीत 'सप्तदशाद्वैरूपमि'ति सप्तदशात्स्तोमाद्वैरूपं पृष्ठं निरमिमीत ॥ २ ॥ 'जमदग्निर्ऋषि-रि'ति । चक्षुर्वै जमदग्निर्ऋषिर्यदनेन जगत्पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः 'प्रजापतिगृहीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत'च्चक्षुर्गृह्णामि प्रजाभ्य' ऽइति चक्षुः पश्चात्प्रापादयत * नानोपदधाति ये नानाकामाश्चक्षुषि तांस्तद्दधाति सकृत्सादयत्येकं तच्चक्षुः करोत्यथ यन्नाना सादयेच्चक्षुर्ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ३ ॥ अथोत्तरतः । 'इदमुत्तरात्स्वरि'ति दिशो वा ऽउत्तरात्तद्यत्ता ऽआहोत्तरा-दित्युत्तरा ह्यस्मात्सर्वस्माद्दिशोऽथ यत्स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रꣳ ह दिशो भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ ४ ॥ 'तस्य श्रोत्रꣳ सौवमि'ति । श्रोत्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीत 'शरच्छ्रौत्री'ति शरदमृतुꣳ श्रोत्रान्निरमिमी'तानुष्टुप्शारदी'त्यनुष्टुभं छन्दः शरद ऽऋतोर्निरमिमीता'नुष्टुभ ऽऐडमि'त्यनुष्टुभश्छन्दस-ऽऐडꣳ साम निरमिमी'तैडान्मन्थी'त्यैडात्साम्नो मन्थिनं ग्रहं निरमिमीत 'मन्थिन ऽएकविꣳश' ऽइति मन्थिनो

(१) शु० य० सं० अ० १३ क० ५६। (२) शु० य० सं० अ० १३ क० ५६।
(३) शु० य० सं० अ० १३ क० ५६। (४) शु० य० सं० अ० १३ क० ५६।
(५) शु० य० सं० अ० १३ क० ५६। * 'यन्त' इति 'ख' पुस्तके।
(६) शु० य० सं० अ० १३ क० ५७। (७) शु० य० सं० अ० १३ क० ५७।
(८) शु० य० सं० अ० १३ क० ५७। (९) शु० य० सं० अ० १३ क० ५७।
(१०) शु० य० सं० अ० १३ क० ५७। (११) शु० य० सं० अ० १३ क० ५७।
(१२) शु० य० सं० अ० १३ क० ५७।

ग्रहादेकविꣳशꣳ स्तोमं निरमिमी'तैकविꣳशाद्वैराजमि'त्येकविꣳशात्स्तोमाद्वैराजं पृष्ठं निरमिमीत ॥ ५ ॥ 'विश्वामित्र ऽऋषिरि'ति । श्रोत्रं वै विश्वामित्र ऽऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं * भवति तस्माच्छ्रोत्रं विश्वामित्र ऽऋषिः 'प्रजापतिगृहीतया त्वये'ति प्रजापतिसृष्टया त्वयेत्येत'च्छ्रोत्रं गृह्णामि प्रजाभ्य' ऽइति श्रोत्रमुत्तरतः प्रापादयत नानोपदधाति ये नानाकामाः श्रोत्रे ताँस्तद्दधाति सकृत्सादयत्येकं तच्छ्रोत्रं करोत्यथ यन्नाना सादयेच्छ्रोत्रꣳ ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ६ ॥ अथ मद्ध्ये । 'इयमुपरि मतिरि'ति चन्द्रमा वा ऽउपरि तद्यत्तमाहोपरीत्युपरि हि चन्द्रमा ऽअथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदꣳ सर्वं मनुते वागु चन्द्रमा भूत्वोपरिष्टात्तस्थौ तदेव तद्रूपमुपदधाति ॥ ७ ॥ 'तस्यै वाङ्मात्ये'ति । वाचं तस्माद्रूपाच्चन्द्रमसो निरमिमीत 'हेमन्तो वाँच्य' ऽइति हेमन्तमृतुं वाचो निरमिमीत 'पङ्क्तिर्हैमन्ती'ति पङ्क्तिं छन्दो हेमन्तादृतोर्निरमिमीत 'पङ्क्त्यै निधनवदि'ति पङ्क्त्यै च्छन्दसो निधनवत्साम निरमिमीत 'निधनवत ऽआग्रयण' ऽइति निधनवतः साम्न ऽआग्रयणं ग्रहं निरमिमी'ता-

(१) शु० य० सं० अ० १३ क० ५७। (२) शु० य० सं० अ० १३ क० ५७।

* 'ते भवति' इति 'ख' पाठः ।

(३) शु० य० सं० अ० १३ क० ५७। (४) शु० य० सं० अ० १३ क० ५७।
(५) शु० य० सं० अ० १३ क० ५७। (६) शु० य० सं० अ० १३ क० ५८।
(७) शु० य० सं० अ० १३ क० ५८। (८) शु० य० सं० अ० १३ क० ५८।
(९) शु० य० सं० अ० १३ क० ५८। (१०) शु० य० सं० अ० १३ क० ५८।

ग्रयणास्त्रिणवत्रयस्त्रिꣳशावि'त्याग्रयणाद् ग्रहात्त्रिणवत्रयस्त्रिꣳशौ स्तोमौ निरमिमीत त्रिणवत्रय'स्त्रिꣳशाभ्याꣳ शाक्वररैवते' इति त्रिणवत्रयस्त्रिꣳशाभ्याꣳ स्तोमाभ्याꣳ शाक्वररैवते पृष्ठे निरमिमीत ॥ ८ ॥ 'विश्वकर्म्म ऋषि-रि'ति। वाग्वै विश्वकर्म्मर्षिर्वाचा हीदꣳ सर्वं कृतं तस्मा-द्वाग्विश्वकर्म्मर्षिः 'प्रजापतिगृहीतया त्वये'ति प्रजापति-सृष्टया त्वयेत्येत'द्वाचं गृह्णामि प्रजाभ्य' इति वाच-मुपरिष्टात्प्रापादयत नानोपदधाति ये नानाकामा वाचि ताँस्तद्दधाति सकृत्सादयत्येकां तद्वाचं करोत्यथ यन्नाना सादयेद्वाचꣳ ह विच्छिन्द्यात्सैषा त्रिवृदिष्टका तस्योक्तो बन्धुः ॥ ९ ॥ एतद्वै तदन्नम्। यत्तत्प्राणाश्च प्रजापति-श्चासृजन्तैतावान्वै सर्वो यज्ञो-यज्ञ उ देवानामन्नम् ॥ १० ॥ ता दश दशोपदधाति। दशाक्षरा विराड्विराडु कृत्स्नमन्नꣳ सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति सर्वत-उपदधाति सर्वत एवास्मिन्नेतत्कृत्स्नमन्नं दधाति ता हैता विराज एतान्प्राणान्बिभ्रति यत्प्राणान्बिभ्रति तस्मात्प्राणभृतः ॥ ११ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

(१) शु० य० सं० अ० १३ क० ५८। (२) शु० य० सं० अ० १३ क० ५८। (३) शु० य० सं० अ० १३ क० ५८। (४) शु० य० सं० अ० १३ क० ५८। (५) शु० य० सं० अ० १३ क० ५८।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १० १. १; कठ० सं० १६. १९; कपि० २५. ९; मै० सं० ११. ७. १९; तै० सं ४. ३. २।

[ प्राणभृच्छन्दनिर्वचनम्, तत्स्तुतिश्च ]

तदाहुः । किं प्राणाः किं प्राणभृत इति प्राणा एव प्राणा अङ्गानि प्राणभृत्यङ्गानि हि प्राणान्बिभ्रति प्राणास्त्वेव प्राणा अन्नं प्राणभृदन्नं हि प्राणान्बिभर्त्ति ॥ १ ॥ तदाहुः । कथमस्यैताः सर्वाः प्राजापत्या भवन्तीति यदेव सर्वास्वाह प्रजापतिगृहीतया त्वयेत्येवमु हास्यैताः सर्वाः प्राजापत्या भवन्ति ॥ २ ॥ तदाहुः । यद् * ग्राहाय गृहीताय स्तुवतेऽथ शंसत्यथ कस्मात्पुरस्ताद् ग्रहाणामृचश्च सामानि चोपदधातीति संस्था वै कर्म्मणोऽन्वीक्षितव्यर्चा वै प्रतिपदा ग्रहो गृह्यत ऋचि साम गीयते तदस्यैतद्यत्पुरस्ताद् ग्रहाणामृचश्च सामानि चोपदधात्यथ यदुपरिष्टाद् ग्रहाणां स्तुतशस्त्रे भवत-स्तदस्यैतद्यदुपरिष्टाद् ग्रहाणां स्तोमाँश्च पृष्ठानि चोपदधाति ॥ ३ ॥ तदाहुः । यदेतत्त्रयं सह क्रियते ग्रह-स्तोत्रं शस्त्रमथात्र ग्रहं चैव स्तोत्रं चोपदधाति कथम-स्यात्रापि शस्त्रमुपहितं भवतीति यद्वाव स्तोत्रं तच्छस्त्रं यासु ह्येव स्तुवते ता उ एवानुशंसत्येवमु हास्या-त्रापि शस्त्रमुपहितं भवति ॥ ४ ॥ तदाहुः । यद्यथा पितुः पुत्रमेवं त्रीणि प्रथमान्याहाथ कस्मादृक्सामयोः सङ्क्रा-मतीति साम वा ऋचः पतिस्तद्यत्तत्रापि यथा पितुः पुत्रमेवं ब्रूयाद्यथा पतिः सन्तं पुत्रं ब्रूयात्तादृक्तत्तस्मा-दृक्सामयोः सङ्क्रामति कस्मादु त्रिः सन्तनोतीति पितरं

* 'ग्रहाय' इति 'ग' पुस्तके ।

पुत्रं पौत्रं ताँस्तत्सन्तनोति तस्म्मादु तेब्भ्य ऽएक ऽएव ददाति ॥ ५ ॥ तद्याः पुरस्तादुपदधाति । ताः प्प्राणभृतोऽथ याः पश्चात्ताश्चक्षुर्ब्भृतस्ता ऽअपानभृतोऽथ या दक्षिणतस्ता मनोभृतस्ता ऽउ व्यानभृतोऽथ या ऽउत्तरतस्ताः श्श्रोत्रभृतस्ता ऽउदानभृतोऽथ या मध्ये ता व्वाग्भृतस्ता ऽउ समानभृतः ॥ ६ ॥ तदु ह चरकाद्ध्वर्य्यवः । अन्न्या ऽएवापानभृतो व्व्यानभृत ऽउदानभृतः समानभृतश्चक्षुर्ब्भृतो मनोभृतः श्श्रोत्रभृतो व्वाग्भृत ऽइत्युपदधति न तथा कुर्य्यादत्त्यहैव रेचयन्त्यत्रो ऽएवैतानि सर्व्वाणि रूपाण्युपधीयन्ते ॥ ७ ॥ स वै पुरस्तादुपधाय । पश्चादुपदधाति प्प्राणो ह्यपानो भूत्त्वाङ्गुल्यग्ग्रेब्भ्य ऽइति सञ्चरत्यपान ऽउ ह प्राणो भूत्त्वाङ्गुल्यग्ग्रेब्भ्य ऽइति सञ्चरति तद्यत्पुरस्तादुपधाय पश्चादुपदधात्त्येतावेवैतत्प्राणौ सन्तनोति सन्दधाति तस्म्मादेतौ प्प्राणौ सन्ततौ सꣳहितौ ॥८॥ अथ दक्षिणत ऽउपधाय । उत्तरत ऽउपदधाति व्व्यानो होदानो भूत्त्वाङ्गुल्यग्ग्रेब्भ्य ऽइति सञ्चरत्युदान ऽउ ह व्व्यानो भूत्त्वाङ्गुल्यग्ग्रेब्भ्य ऽइति सञ्चरति तद्यद्दक्षिणत ऽउपधायोत्तरत ऽउपदधात्त्येतावेवैतत्प्राणौ सन्तनोति सन्दधाति तस्म्मादेतौ प्प्राणौ सन्ततौ सꣳहितौ ॥ ९ ॥ अथ या मद्ध्य ऽउपदधाति । स प्राणस्ता रेतःसिचोर्व्वेलयोपदधाति पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मद्ध्यत ऽएवास्मिन्नेतत्प्राणं दधाति सर्व्वत ऽउपदधाति सर्व्वत ऽएवास्मिन्नेतत्प्राणं दधात्त्यथो ऽएवꣳ हैष गुदः प्प्राणः

समन्तं नाभिं पुरुषंक्नोऽनूचीश्च तिरश्चीश्चोपदधाति तस्मादिमेऽन्वञ्चश्च तिर्य्यञ्चश्चात्मन्प्राणाः सꣳस्पृष्टाऽउपदधाति प्प्राणानेवैतत्सन्तनोति सन्दधाति तस्मादिमे प्प्राणाः सन्तताः सꣳहिताः ॥ १० ॥ (C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ प्राणभृदिष्टकानिधानस्थानादि ]

ता हैके पुरुषमुपाप्प्योंपदधति । एष वै प्प्राणस्तमेता बिभ्रति यत्प्राणं बिभ्रति तस्मात्प्राणभृत ऽइति न तथा कुर्य्यादेषोऽहैव प्राणो य ऽएष हिरण्मयः पुरुषस्तस्य त्वयमात्मा यावदिदमभ्ययमग्निर्विहितस्तद्यद्धास्यैता ऽअङ्गं नाभिप्राप्नुयुः प्प्राणो ह्यस्य तदङ्गं नाभिप्राप्नुयाद्यदु वै प्प्राणोऽङ्गं नाभिप्राप्नोति शुष्यति वा वै तन्म्लायति वा तस्मादेनाः परिश्रित्स्वेवोपाप्प्योंपदध्यादथ या मध्य ऽउपदधाति ताभिरस्यैष ऽआत्मा पूर्णस्ता ऽउ ऽएवैतस्मादनन्तर्हिताः ॥ १ ॥ तदाहुः । यदयं पुरो भुवोऽयं दक्षिणा विश्वकर्म्मायं पश्चाद्विश्वव्यचा ऽइदमुत्तरात्स्वरियमुपरि मतिरिति सम्प्रति दिशोऽभ्यनूच्यन्तेऽथ कस्मादेना ऽअक्षणयादेशेषूपदधातीति प्राणा वै प्प्राणभृतस्ता यत्सम्प्रति दिशऽउपदध्यात्प्रागपꣳ हैवायं प्राणः सञ्चरेदथ यदेना ऽएवमभ्यनूक्ताः सतीरक्षणयादेशेपूपदधाति तस्मादयं प्रागपं प्राणः सन्नक्षणया सर्वाण्यङ्गानि सर्वमात्मानमनुसञ्चरति ॥ २ ॥ स ऽएष पशुर्यदग्निः । सोऽत्रैव सर्वः कृत्स्नः

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १०. २. १ ।

संस्कृतस्तस्य याः पुरस्तादुपदधाति तौ बाहू ऽअथ याः पश्चात्ते सक्थ्यावथ या मध्य ऽउपदधाति स ऽआत्मा ता रेतःसिचोर्वेलयोपदधाति पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यतो ह्ययमात्मा सर्वत ऽउपदधाति सर्वतो ह्ययमात्मा ॥ ३ ॥ तदाहुः । यत्पूर्वेषु गणेष्वेकैकथं स्तोममेकैकं पृष्ठमुपदधात्यथ कस्मादत्र द्वौ स्तोमौ द्वे पृष्ठेऽउपदधातीत्यात्मा वा ऽअस्यैष ऽआत्मानं तदङ्गानां ज्येष्ठं वरिष्ठं वीर्य्यवत्तमं करोति तस्मादयमात्माङ्गानां ज्येष्ठो वरिष्ठो वीर्य्यवत्तमः ॥ ४ ॥ तदाहुः । कथमस्यैषोऽग्निः सर्वः कृत्स्न ऽइष्टकायामिष्टकायाथं संस्कृतो भवतीति मज्जा यजुरस्थीष्टका माथंसथं सादनं त्वक्सूददोहा लोम पुरीषस्य यजुरन्नं पुरीषमेवमु हास्यैषोऽग्निः सर्वः कृत्स्न ऽइष्टकायामिष्टकायाथं संस्कृतो भवति ॥ ५ ॥ स ऽएष सार्वायुषोऽग्निः । स यो हैतमेवथं सार्वायुषमग्निं वेद सर्वथं हैवायुरेति ॥ ६ ॥ अथातः समञ्चनप्रसारणस्यैव । सञ्चितथं हैके समञ्चनप्रसारणेनेत्यभिमृशन्ति पशुरेष यदग्निर्यदा वै पशुरङ्गानि संचाञ्चति प्र च सारयत्यथ स तैर्वीर्य्यं करोति ॥ ७ ॥ '[1]संवत्सरोऽसि । परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि । उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्तामर्द्धमासास्ते कल्पन्तां मासास्ते कल्पन्तामृतवस्ते कल्पन्ताथं संवत्सरस्ते कल्पताम् । प्रेत्या ऽएत्यै संचाञ्च प्र च

(१) शु० य० सं० अ० २७ क० ४५ ।

सारय । सुपर्णचिदसि तया देवतयाङ्गिरस्वद् ध्रुवः सीदे'ति ॥ ८ ॥ अपि ह स्माह शाट्यायनिः । स्फोटतोहैकः पक्षयोरुपशुश्रावैतेनाभिमृष्टस्य तस्मादेनमेतेनाभ्येव मृशेदिति ॥ ९ ॥ अथ ह स्माह स्वर्जिन्नाग्नजितः । नग्नजिद्वा गान्धारः प्राणो वै समञ्चनप्रसारणं यस्मिन्वा ऽअङ्गे प्राणो भवति तत्संचाञ्चति प्र च सारयति सञ्चितमेवैनं बहिष्टादुभ्यदध्यात्तदस्मिन्प्राणः समञ्चनप्रसारणं दधाति तथा संचाञ्चति प्र च सारयतीति तदुहैव समञ्चनप्रसारणं यत्स तदुवाच राजन्यबन्धुरिवत्त्वेव तदुवाच यन्नु शतङ्कृत्वोऽथो सहस्रं * बहिष्टादभ्यदध्युर्न वै तस्मिँस्ते प्राणं दध्युरयो वा ऽआत्मन्प्राणः स ऽएव प्राणस्तद्यत्प्राणभृत ऽउपदधाति तदस्मिन्प्राणः समञ्चनप्रसारणं दधाति तथा संचाञ्चति प्र च सारयत्यथ लोकम्पृणे ऽउपदधात्यस्याᳪ स्रक्त्यां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः ॥ १० ॥ (D)

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ द्वितीयायां चितावश्विनीष्टकोपधानम् ]

द्वितीयां चितिमुपदधाति । एतद्वै देवाः प्रथमां चितिं चित्त्वा समारोहन्नयं वै लोकः प्रथमा चितिरिममेव

---

* 'बहिष्टादभ्यन्न्युः' इति 'ग' पुस्तके ।

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का॰ श॰ १० २ ३,४ ।

तल्लोकꣳ संस्कृत्य समारोहन् ॥ १ ॥ तेऽब्रुवन् । चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्नित ऽऊर्द्ध्वमिच्छतेति ते चेतयमाना ऽएतां द्वितीयां चितिमपश्यन्न्यदूर्द्ध्वं पृथिव्या ऽअर्वाचीनमन्तरिक्षात्तेषामेष लोकोऽध्रुव ऽइवाप्रतिष्ठित ऽइव मनस्यासीत् ॥ २ ॥ तेऽश्विनावब्रुवन् । युवं वै ब्रह्माणौ भिषजौ स्थो युवन्न ऽइमां द्वितीयां चितिमुपधत्तमिति किं नौ ततो भविष्यतीति युवमेव नोऽस्या ऽअग्निचित्याया ऽअद्ध्वर्यू भविष्यथ ऽइति तथेति तेभ्य ऽएतामश्विनौ द्वितीयां चितिमुपाधत्तां तस्मादाहुरश्विनावेव देवानामद्ध्वर्यू ऽइति ॥ ३ ॥ स ऽउपदधाति । 'ध्रुवक्षिति'[१] 'र्ध्रुवयोनिर्ध्रुवासी'ति यद्वै स्थिरं यत्प्रतिष्ठितं तद्ध्रुवमथ वा ऽएषामेष लोकोऽध्रुव इवाप्रतिष्ठित ऽइव मनस्यासीत्तमेवैतत्स्थिरं ध्रुवं कृत्वा प्रत्यधत्तां 'ध्रुवं योनिमासीद[२] साधुये'ति स्थिरं योनिमासीद साधुयेत्येत'[३]दुख्यस्य केतुं प्रथमं जुषाणे'त्ययं वा ऽअग्निरुख्यस्तस्यैष प्रथमः केतुर्यत्प्रथमा चितिस्तं जुषाणेत्येत'[४]दश्विनाद्ध्वर्यू सादयतामिह त्वे'त्यश्विनौ ह्यद्ध्वर्यू ऽउपाधत्ताम् ॥ ४ ॥ '[५]कुलायिनी घृतवती पुरन्धिरि'ति । कुलायमिव वै द्वितीया चितिः 'स्योने सीद सदने पृथिव्या' ऽइति पृथिवी वै प्रथमा चितिस्तस्यै शिवे स्योने सीद सदन ऽइत्येतद्'[६]भि

(१) शु० य० सं० अ० २७ क० ४५। (२) शु० य० सं० अ० १४ क० १। (३) शु० य० सं० अ० १४ क० १। (४) शु० य० सं० अ० १४ क० १। (५) शु० य० सं० अ० १४ क० २। (६) शु० य० सं० अ० १४ क० २।

त्वा रुद्रा वसवो गृणन्त्वि'त्येतास्त्वा देवता ऽअभिगृणन्त्वित्येत'[2]दिमौ ब्रह्म पीपिहि सौभगाये'तीमा ब्रह्माव सौभगायेत्येत'[3]द्वश्विना ऽध्वर्यू सादयतामिह त्वे'त्यश्विनौ ह्यध्वर्यू ऽउपाधत्ताम् ॥ ५ ॥ 'स्वैर्दक्षैर्दक्षपितेह सीदे'ति । स्वेन वीर्येणेह सीदेत्ये'[5]तद्देवानाथं सुम्ने बृहते रणाये'ति देवानाथं सुम्नाय महते रणायेत्येत'[6]त्पितेवैधि सूनव ऽआ सुशेवे'ति यथा पिता पुत्राय स्योनः सुशेव ऽएवः सुशेवैधीत्येत'त्स्वावेशा तन्वा संविशस्वे'त्यात्मा वै तनूः स्वावेशेनात्मना संविशस्वेत्येत'द्वश्विनाध्वर्यू सादयतामिह त्वे'त्यश्विनौ ह्यध्वर्यू ऽउपाधत्ताम् ॥ ६ ॥ 'पृथिव्याः पुरीषमसी'ति । पृथिवी वै प्रथमा चितिस्तस्या ऽएतत्पुरीषमिव यद् द्वितीया'प्सो नामे'ति रसो नामेत्येत'त्तां [11]त्वा विश्वे ऽअभिगृणन्तु देवा' ऽइति तां त्वा सर्वेऽभिगृणन्तु देवा ऽइत्येत'त्स्तोमपृष्ठा[12] घृतवतीह सीदे'ति यान्त्स्तोमानस्यां तथंस्यमानो भवति तैरेषा स्तोमपृष्ठा 'प्रजावदस्मे[13] द्रविणायजस्वे'ति प्रजावदस्मे द्रविणमायजस्वेत्येत'द्वश्विनाध्वर्यू[14] सादयतामिह त्वे'त्यश्विनौ ह्यध्वर्यू ऽउपाधत्ताम् ॥ ७ ॥ ता ऽएता दिशः । ता रेतः-

---

(१) शु० य० सं० अ० १४ क० २। (२) शु० य० सं० अ० १४ क० २। (३) शु० य० सं० अ० १४ क० २। (४) शु० य० सं० अ० १४ क० ३। (५) शु० य० सं० अ० १४ क० ३। (६) शु० य० सं० अ० १४ क० ३। (७) शु० य० सं० अ० १४ क० ३। (८) शु० य० सं० अ० १४ क० ३। (९) शु० य० सं० अ० १४ क० ४। (१०) शु० य० सं० अ० १४ क० ४। (११) शु० य० सं० अ० १४ क० ४। (१२) शु० य० सं० अ० १४ क० ४ (१३) शु० य० सं० अ० १४ क० ४। (१४) शु० य० सं० अ० १४ क० ५।

सिचोर्व्वेलयोपदधातीमे वै रेतःसिचावनयोस्तद्दिशो दधाति तस्मादनयोर्द्दिशः सर्व्वत ऽउपदधाति सर्व्वतस्तद्दिशो दधाति तस्मात्सर्व्वतो दिशः सर्व्वतः समीचीः सर्व्वतस्तत्समीचीर्द्दिशो दधाति तस्मात्सर्व्वतः समीच्यो दिशस्ता नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हि दिशः ॥ ८ ॥ अथ पञ्चमीं दिश्श्यामुपदधाति । ऊर्द्ध्वा ह सा दिक्सा या सोर्द्ध्वा दिगसौ स ऽआदित्योऽमुमेवैतदादित्यमुपदधाति तामन्तरेण दक्षिणां दिश्श्यामुपदधात्यमुं तदादित्यमन्तरेण दक्षिणां दिशं दधाति तस्मादेषोऽन्तरेण दक्षिणां दिशमेति ॥ ९ ॥ 'अदित्यास्त्वा[1] पृष्ठे सादयामी'ति । इयं वा ऽअदितिरस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापय'त्यन्तरिक्षस्य[2] धर्त्रीं विष्टम्भनीं दिशामधिपत्नीं भुवनानामि'त्यन्तरिक्षस्य ह्येष धर्त्ता विष्टम्भनो दिशामधिपतिर्भुवनाना'मूर्म्मिर्द्रप्सो[3] ऽअपामसी'ति रसो वा ऽऊर्म्मि'र्व्विश्श्वकर्म्मा[4] त ऽऋषिरि'ति प्रजापतिर्व्वै विश्श्वकर्म्मा प्रजापतिस्त्वष्टासीत्येत'द्दश्विनाद्ध्वर्य्यू[5] सादयतामिह त्वे'त्यश्विनौ ह्यद्ध्वर्य्यू ऽउपाधत्ताम् ॥ १० ॥ यद्वेवैता ऽआश्विनीरुपदधाति । प्रजापतिं विस्रस्तं देवता ऽआदाय व्युदक्रामँस्तस्य यदूर्द्ध्वं प्रतिष्ठाया ऽअवाचीनं मद्ध्यात्तदस्याश्विनावादायोत्क्रम्यातिष्ठताम् ॥ ११ ॥ तावब्रवीत् । उप

(१) शु० य० सं० अ० १४ क० ४। (२) शु० य० सं० अ० १४ क० ५। (३) शु० य० सं० अ० १४ क० ५। (४) शु० य० सं० अ० १४ क० ५। (५) शु० य० सं० अ० १४ क० ५।

मेतं प्रति म ऽएतद्धत्तं श्येन मे स्रुवमुदक्रमिष्टमिति किं नौ ततो भविष्यतीति स्रुवद्देवत्यमेव म ऽएतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतदश्विनौ प्रत्यधत्ताम् ॥ १२ ॥ तद्या ऽएताः पञ्चाश्विन्यः। एतदस्य तदात्मनस्तद्यदेता ऽअत्रोपदधाति यदेवास्यैता ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेता ऽअत्रोपदधाति ॥ १३ ॥ 'ध्रुवासि[1] धरुणास्तृता विश्वकर्मणा सुकृता'ति। यद्वै स्थिरं यत्प्रतिष्ठितं तद् ध्रुवमथ वा ऽअस्यैतदस्थिरमिवाध्रुवमिवात्मन ऽआसीत्तदेवैतत्स्थिरं ध्रुवं कृत्वा प्रत्यधत्ताम् ॥ १४ ॥ 'कुलायिनी घृतवती पुरन्धिरि'[2]ति। कुलायमिव वा ऽअस्यैतदात्मनः 'स्योने सीद सदने पृथिव्या'[3]इत्यदक्षयतामेवास्यैतदात्मनः 'पृथिव्याः पुरीषमसी'[4]ति पुरीषसंहितमिव वा ऽअस्यैतदात्मनो रेतःसिचोर्वेलया पृष्टयो वै रेतःसिचौ पृष्टिसाचयमिव वा ऽअस्यैतदात्मनः सर्वत ऽउपदधाति सर्वतो ह्यस्यैतदश्विनावात्मनः प्रत्यधत्ताम् ॥ १५ ॥ अथर्त्तव्ये ऽउपदधाति *। ऋतव ऽएते यदृतव्ये ऽऋतूनेवैतदुपदधाति 'शुक्रश्च शुचिश्च ग्रैष्मावृतू'[5] ऽइति नामनी ऽएनयोरेते नामभ्यामेवैने ऽएतदुपदधाति द्वे ऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥१६॥ तद्यदेते ऽअत्रोपदधाति। संवत्सर ऽएषोऽग्नि-

(१) शु॰ य॰ सं॰ अ॰ १४ क॰ ५। (२) शु॰ य॰ सं॰ अ॰ १४ क॰ ५।
(३) शु॰ य॰ सं॰ अ॰ १४ क॰ ५। (४) शु॰ य॰ सं॰ अ॰ १४ क॰ ५।
* का॰ श्रौ॰ सू॰ १७. ८. १६।
(५) शु॰ य॰ सं॰ अ॰ १४ क॰ ६।

रिम ऽउ लोकाः संवत्सरस्तस्य यदूर्द्ध्वं पृथिव्या ऽअर्वाचीनमन्तरिक्षात्तदस्यैषा द्वितीया चितिस्तद्वस्य ग्रीष्म ऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ॥ १७ ॥ यद्वेवैते ऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर ऽउ प्रजापतिस्तस्य यदूर्द्ध्वं प्रतिष्ठाया ऽअवाचीनं मध्यात्तदस्यैषा द्वितीया चितिस्तद्वस्य ग्रीष्म ऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ॥ १८ ॥

[ अर्धप्रपाठकः ॥५७॥ ]

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥ (A)



[ द्वितीयस्यां चितौ वैश्वदेवीष्टकोपधानम् ]

अथ वैश्वदेवीरुपदधाति । एषा वै सा द्वितीया चितिर्य्यामेभ्यस्तदश्विना ऽउपाधत्तां तामुपधायेदꣳ सर्व्वमभवतां यदिदं किञ्च ॥ १ ॥ ते देवा ऽअब्रुवन् । अश्विनौ वा ऽइदꣳ सर्व्वमभूतामुप तज्जानीत यथा वयमिहाप्यसामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथा वयमिहाप्यसामेति ते चेतयमाना ऽएता ऽइष्टका ऽअपश्यन्वैश्वदेवीः ॥ २ ॥ तेऽब्रुवन् । अश्विनौ वा ऽइदꣳ सर्व्वमभूतामश्विभ्यामेवा-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. २. १; कठ० १७. १, १०; कपि० २५. १०, ९; मै० सं० ११. ८. १, १२; तै० सं० ४. ३. ४, १।

ऽश्विनोश्चितिमनूपदधामहा ऽइति तेऽश्विभ्यामेवाश्वि-
नोश्चितिमनूपादधत तस्मादेतामाश्विनी चितिरित्याचक्षते
तस्माद्यथैव पूर्वासामुदर्क ऽएवमेतासामश्विभ्याᳬं ह्येवा-
श्विनोश्चितिमनूपादधत ॥३॥ षडेव वैश्वदेवीरुपदधाति ।
षे वै ते विश्वे देवा ऽएतां द्वितीयां चितिमपश्यंस्ते त
ऽएतेन रसेनोपायँस्त ऽएते तानेवैतदुपदधाति ता ऽएताः
सर्वाः प्रजास्ता रेतःसिचोर्वेलयोपदधातीमे वै रेतः-
सिचावनयोस्तत्प्रजा दधाति तस्मादनयोः प्रजाः
सर्वत ऽउपदधाति सर्वतस्तत्प्रजा दधाति तस्मात्सर्वतः
प्रजा दिश्या ऽअनूपदधाति दिक्षु तत्प्रजा दधाति
तस्मात्सर्वासु दिक्षु प्रजाः ॥ ४ ॥ षडेव * वैश्वदेवीरु-
पदधाति । प्रजापतेर्विस्रस्तात्सर्वाः प्रजा मध्यत ऽउद-
क्रामन्नेतस्या ऽअधि योनेस्ता ऽएनमेतस्मिन्नात्मनः
प्रतिहिते प्रापद्यन्त ॥ ५ ॥ स यः स प्रजापतिर्व्यस्रं-
सत । अयमेव स योऽयमग्निश्चीयतेऽथ षा ऽअस्मात्ताः
प्रजा मध्यत ऽउदक्रामन्नेतास्ता वैश्वदेव्य ऽइष्टकास्त-
द्यदेता ऽउपदधाति षा ऽएवास्मात्ताः प्रजा मध्यत-
ऽउदक्रामँस्ता ऽअस्मिन्नेतत्प्रपादयति रेतःसिचोर्वेलया
पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यत ऽएवा-
स्मिन्नेताः प्रजाः प्रपादयति सर्वत ऽउपदधाति सर्वत-
ऽएवास्मिन्नेताः प्रजाः प्रपादयति ॥ ६ ॥ षडेव वैश्व-
देवीरुपदधाति । एतद्वै प्रजापतिरेतस्मिन्नात्मनः प्रति-

* का० श्रौ० सू० १७. ८. १८ ।

हितेऽकामयत प्प्रजाः सृजेय प्प्रजायेयेति स ऽऋतुभिरद्भिः प्प्राणैः संवत्सरेणाश्विभ्याथं सयुग्भूत्वैताः प्प्रजाः प्प्राजनयत्तथैवैतद्यजमान ऽएताभिर्देवताभिः सयुग्भूत्वैताः प्प्रजाः प्प्रजनयति तस्मादु सर्वास्वेव सजूः सजूरित्यनुवर्त्तते ॥ ७ ॥ 'सजूर्ऋतुभिरि'[1]ति । तदृतून्प्राजनयदृतुभिर्वै सयुग्भूत्वा प्प्राजनय'त्सजूर्विधाभिरि'[2]त्यापो वै विधा ऽअद्भिर्हीदं सर्वं विहितमद्भिर्वै सयुग्भूत्वा प्प्राजनय'त्सजूर्देवैरि'[3]ति तद्देवान्प्राजनयद्यद्देवा ऽइत्याचक्षते 'सजूर्देवैर्वयोनाधैरि'[4]ति प्प्राणा वै देवा वयोनाधाः प्प्राणैर्हीदं सर्वं वयुनं नद्धमथो च्छन्दाथंसि वै देवा वयोनाधाश्छन्दोभिर्हीदं सर्वं वयुनं नद्धं प्राणैर्वै सयुग्भूत्वा प्प्राजनय'दग्नये त्वा वैश्वानराये'[5]ति संवत्सरो वाऽअग्निर्वैश्वानरः संवत्सरेण वै सयुग्भूत्वा प्प्राजनय'दश्विनाध्वर्यू सादयतामिह त्वे'[6]त्यश्विभ्यां वै सयुग्भूत्वा प्प्राजनयत् ॥ ८ ॥ 'सजूर्वसुभिरिति'[7] । दक्षिणतः तद्वसून्प्राजनय'त्सजू रुद्रैरि'[8]ति पश्चात्तद्रुद्रान्प्राजनय'त्सजूरादित्यैरि'[9]त्युत्तरतस्तदादित्यान्प्राजनय'त्सजूर्विश्वैर्देवैरि'[10]त्युपरिष्टात्तद्विश्वान्देवान्प्राजनयत्ता वै समानप्प्रभृतयः समानोदर्का नाना मद्ध्यतस्ता यत्समानप्प्रभृतयः समा-

(१) शु० य० सं० अ० १४ क० ७। (२) शु० य० सं० अ० १४ क० ७। (३) शु० य० सं० अ० १४ क० ७। (४) शु० य० सं० अ० १४ क० ७। (५) शु० य० सं० अ० १४ क० ७। (६) शु० य० सं० अ० १४ क० ७। (७) शु० य० सं० अ० १४ क० ७। (८) शु० य० सं० अ० १४ क० ७। (९) शु० य० सं० अ० १४ क० ७। (१०) शु० य० सं० अ० १४ क० ७।

नोदक्रांः समानीभिर्हि देवताभिः पुरस्ताच्चोपरिष्टाच्च सयुग्भूत्वा प्राजनयदथ यन्नाना मध्यतोऽन्या ऽअन्या हि प्रजा मध्यतः प्राजनयत् ॥ ९ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ द्वितीयस्यां चितौ प्राणभृदपस्या-छन्दस्या-वयस्येष्टकोपधानम् ]

अथ * प्राणभृत ऽउपदधाति । एतद्वै देवा ऽअब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्ते चेतयमाना वायुमेव चितिमपश्यँस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १ ॥ प्राणभृत ऽउपदधाति । प्राणो वै वायुर्वायुमेवास्मिन्नेतद्दधाति रेतःसिचोर्वेलयेमे वै रेतःसिचावनयोस्तद्वायुं दधाति तस्मादनयोर्वायुः सर्वत ऽउपदधाति सर्वतस्तद्वायुं दधाति तस्मात्सर्वतो वायुः सर्वतः समीचीः सर्वतस्तत्सम्यञ्चं वायुं दधाति तस्मात्सर्वतः सम्यङ् भूत्वा सर्वाभ्यो दिग्भ्यो वाति दिश्या ऽअनूपदधाति दिक्षु तद्वायुं दधाति तस्मात्सर्वासु दिक्षु वायुः ॥ २ ॥ षड्ढेव प्राणभृत ऽउपदधाति । आस्वेवैतत्प्रजासु प्राणान्दधाति ता ऽअनन्तर्हिता वैश्वदेवीभ्य ऽउपदधात्यनन्तर्हितांस्तत्प्रजाभ्यः प्राणान्दधाति 'प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म्मे ऽउर्व्या विभाहि श्रोत्रं मे श्लोक-

( B ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का॰ श॰ १०. २. २; कठ॰ १७. १; कपि॰ २५. १; मै॰ सं॰ ११. ८. १; तै॰ सं॰ ४. ३. ४।

* का॰ श्रौ॰ सू॰ १७. ८. २०।

( १ ) शु॰ य॰ सं॰ अ॰ १४ क॰ ८।

ये'त्त्येतानेवास्वेतत्क्लृप्तान्प्राणान्दधाति ॥ ३ ॥ अथापस्या-ऽउपदधाति । एतद्वै देवा ऽअब्रुवँश्चेतयद्ध्वमिति चिति-मिच्छतेति वाव तदब्रुवँस्ते चेतयमाना व्वृष्टिमेव चितिमपश्यँस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ ४ ॥ अपस्या † ऽउपदधाति । आपो वै व्वृष्टिर्व्वृष्टिमेवा-स्मिन्नेतद्दधाति रेतःसिचोर्व्वेलयेमे वै रेतःसिचा-वनयोस्तद्वृष्टिं दधाति तस्मादनयोर्व्वर्षति सर्व्वत ऽउप-दधाति सर्व्वतस्तद्वृष्टिं दधाति तस्मात्सर्व्वतो व्वर्षति सर्व्वतः समीचीः सर्व्वतस्तत्समीचीं व्वृष्टिं दधाति तस्मात्सर्व्वतः सम्म्यङ् भूत्वा सर्व्वाभ्यो दिग्भ्यो व्वर्षति व्वायव्या ऽअनूपदधाति व्वायौ तद्वृष्टिं दधाति तस्माद्यां दिशं व्वायुरेति तां दिशं व्वृष्टिरन्न्वेति ॥ ५ ॥ यद्वेवापस्या-ऽउपदधाति । एष्वेवैतत्प्राणेष्वपो दधाति ता ऽअनन्त-र्हिताः प्प्राणभृद्भ्य ऽउपदधात्यनन्तर्हितास्तत्प्राणेभ्योऽपो दधात्यथो ऽअन्नं व्वा ऽआपोऽनन्तर्हितं तत्प्राणेभ्योऽन्नं दधा'त्त्यपः पिन्न्वौषधीर्ज्जिन्न्व द्विपादव चतुष्पात्पाहि दिवो व्वृष्टिमेरये'त्त्येता ऽएवैष्वेतत्क्लृप्ता ऽअपो दधाति ॥ ६ ॥ अथ छन्दस्या ऽउपदधाति । एतद्वै देवा ऽअब्रु-वँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्ते चेत-यमानाः पशूनेव चितिमपश्यँस्तामस्मिन्नदधुस्तथैवास्मि-न्नयमेतद्दधाति ॥ ७ ॥ ‡ छन्दस्या ऽउपदधाति । पशवो

† का० श्रौ० सू० १७. ८. २१ ।

(१) शु० य० सं० अ० १४ कं० ८ ।

‡ का० श्रौ० सू० १७. ८. २२ ।

वैं छन्दाᳪंसि पशूनेवास्मिन्नेतद्दधाति सर्वत ऽउपदधाति सर्वतस्तत्पशून्दधाति तस्मात्सर्वतः पशवोऽपस्या ऽअनूपदधात्यप्सु तत्पशून्प्रतिष्ठापयति तस्माद्यदा वर्षत्यथ पशवः प्रतितिष्ठन्ति ॥ ८ ॥ यद्वेव छन्दस्या ऽउपदधाति। प्रजापतेर्विस्रस्तात्पशव ऽउदक्रामँश्छन्दाᳪंसि भूत्वा तान्गायत्री च्छन्दो भूत्वा वयसाप्नोत्तद्यद्गायत्र्याप्नोदेतद्धि छन्द ऽआशिष्ठᳪं सा तद्भूत्वा प्रजापतिरेतान्पशून्वयसाप्नोत् ॥ ९ ॥ 'मूर्द्धा वय'[1] ऽइति। प्रजापतिर्वै मूर्द्धा स वयोऽभवत्प्रजापतिश्छन्द ऽइति प्रजापतिरेव च्छन्दोऽभवत् ॥ १० ॥ 'क्षत्रं वय'[2] ऽइति। प्रजापतिर्वै क्षत्रᳪं स वयोऽभव'न्मयंदं छन्द'[3] ऽइति यद्वा ऽअनिरुक्तं तन्मयन्दमनिरुक्तो वै प्रजापतिः प्रजापतिरेव छन्दोऽभवत् ॥ ११ ॥ 'विष्टम्भो वय'[4] ऽइति। प्रजापतिर्वै विष्टम्भः स वयोऽभव'दधिपतिश्छन्द'[5] ऽइति प्रजापतिर्वा ऽअधिपतिः प्रजापतिरेव छन्दोऽभवत् ॥ १२ ॥ 'विश्वकर्म्मा वय'[6] ऽइति। प्रजापतिर्वै विश्वकर्म्मा स वयोऽभव'त्परमेष्ठी च्छन्द'[7] ऽइत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी च्छन्दोऽभवत् ॥ १३ ॥ तानि वा ऽएतानि। चत्वारि वयाᳪंसि चत्वारि च्छन्दाᳪंसि तदष्टावष्टाक्षरा

(१) शु० य० सं० अ० १४ क० ९। (२) शु० य० सं० अ० १४ क० ९। (३) शु० य० सं० अ० १४ क० ९। (४) शु० य० सं० अ० १४ क० ९। (५) शु० य० सं० अ० १४ क० ९। (६) शु० य० सं० अ० १४ क० ९। (७) शु० य० सं० अ० १४ क० ९।

गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान्प-शून्वयसाप्नोत्तस्माज्जीर्णं पशुं वयसाप्त ऽइत्याचक्षते तस्मादु सर्वास्वेव वयो-वय ऽइत्यनुवर्त्ततेऽथ येऽस्मात्ते पशव ऽउदक्रामन्नेते ते पञ्चदशोत्तरे वज्रो वै पशवो वज्रः पञ्चदशस्तस्माद्यस्य पशवो भवन्त्यपैव स पाप्मानꣳ ह ते वज्रो हैव तस्य पाप्मानमपहन्ति तस्माद्यां काञ्च दिशं पशुमानेति वज्रविहताꣳ हैव तामन्वेति ॥ १४ ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

'बस्तो वय' ऽइति । बस्तं वयसाप्नोद्विवलं छन्द ऽइत्येकपदा वै विवलं छन्द ऽएकपदा ह भूत्वाजा ऽउच्चक्रमुः ॥ १ ॥ 'वृष्णिर्वय' ऽइति । वृष्णिं वयसाप्नो'द्विशालं छन्द' ऽइति द्विपदा वै विशालं छन्दो द्विपदा ह भूत्वा वय ऽउच्चक्रमुः ॥ २ ॥ 'पुरुषो वय' ऽइति । पुरुषं वयसाप्नो'त्तन्द्रं छन्द' ऽइति पङ्क्तिर्वै तन्द्रं छन्दः पङ्क्तिर्ह भूत्वा पुरुषा ऽउच्चक्रमुः ॥ ३ ॥ 'व्याघ्रो वय' ऽइति । व्याघ्रं वयसाप्नो'दनाधृष्टं छन्द' ऽइति विराड् वा ऽअनाधृष्टं छन्दोऽन्नं वै विराडन्नमना धृष्टं विराड्ढ भूत्वा व्याघ्रा ऽउच्चक्रमुः ॥ ४ ॥ 'सिꣳहो वय' ऽइति ।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. २. ३; कठ० १७. १, २; कपि० २५, १०. २९, १; मै० सं० ११. ८. २; तै० सं० ४. ३. ४।

(१) शु० य० सं० अ० १४ क० ९। (२) शु० य० सं० अ० १४ क० ९। (३) शु० य० सं० अ० १४ क० ९। (४) शु० य० सं० अ० १४ क० ९। (५) शु० य० सं० अ० १४ क० ९। (६) शु० य० सं० अ० १४ क० ९। (७) शु० य० सं० अ० १४ क० ९। (८) शु० य० सं० अ० १४ क० ९।

सिꣳहं वयसाप्नो'च्छदिश्छन्द' इत्यतिच्छन्दा वै छदिश्छन्दः सा हि सर्वाणि च्छन्दाꣳसि छादयत्यतिच्छन्दा ह भूत्वा सिꣳहा उच्चक्रमुरथातो निरुक्तानेव पशून्निरुक्तानि च्छन्दाꣳस्युपदधाति ॥ ५ ॥ 'पष्ठवाड् वय' इति । पष्ठवाहं वयसाप्नो'द्बृहतीच्छन्द' इति बृहती ह भूत्वा पष्ठवाह उच्चक्रमुः ॥ ६ ॥ 'उक्षा वय' इति । उक्षाणं वयसाप्नो'त्ककुप्छन्द' इति ककुब्भ भूत्वोक्षाण उच्चक्रमुः ॥ ७ ॥ 'ऋषभो वय' इति । ऋषभं वयसाप्नो'त्सतोबृहती च्छन्द' इति सतोबृहती ह भूत्वर्षभा उच्चक्रमुः ॥ ८ ॥ 'अनड्वान्वय' इति । अनड्वाहं वयसाप्नो'त्पङ्क्तिश्छन्द' इति पङ्क्तिर्ह भूत्वानड्वाह उच्चक्रमुः ॥ ९ ॥ 'धेनुर्वय' इति । धेनुं वयसाप्नो'ज्जगती च्छन्द' इति जगती ह भूत्वा धेनव उच्चक्रमुः ॥ १० ॥ 'त्र्यविर्वय' इति । त्र्यविं वयसाप्नो'त्त्रिष्टुप्छन्द' इति त्रिष्टुब्भ भूत्वा त्र्यवय उच्चक्रमुः ॥ ११ ॥ 'दित्यवाड् वय' इति । दित्यवाहं वयसाप्नो'द्विराट् छन्द' इति विराड्ढ भूत्वा दित्यवाह उच्चक्रमुः ॥ १२ ॥

(१) शु० य० सं० अ० १४ क० ९ । (२) शु० य० सं० अ० १४ क० ९ ।
(३) शु० य० सं० अ० १४ क० ९ । (४) शु० य० सं० अ० १४ क० ९ ।
(५) शु० य० सं० अ० १४ क० ९ । (६) शु० य० सं० अ० १४ क० ९ ।
(७) शु० य० सं० अ० १४ क० ९ । (८) शु० य० सं० अ० १४ क० १० ।
(९) शु० य० सं० अ० १४ क० १० । (१०) शु० य० सं० अ० १४ क० १० ।
(११) शु० य० सं० अ० १४ क० १० । (१२) शु० य० सं० अ० १४ क० १० ।
(१३) शु० य० सं० अ० १४ क० १० । (१४) शु० य० सं० अ० १४ क० १० ।
(१५) शु० य० सं० अ० १४ क० १० ।

'पञ्चाविर्व्वय' ऽइति । पञ्चाविं व्वयसाप्नो'द्गायत्री च्छन्द'-
ऽइति गायत्री ह भूत्वा पञ्चावय ऽउच्चक्रमुः ॥ १३ ॥
'त्रिवत्सो व्वय' ऽइति । त्रिवत्सं व्वयसाप्नो'दुष्णिक्छन्द'-
ऽइत्युष्णिग्घ भूत्वा त्रिवत्सा ऽउच्चक्रमुः ॥ १४ ॥ 'तुर्य्य-
वाड् वय' ऽइति । तुर्य्यवाहं व्वयसाप्नो'दनुष्टुप्छन्द'-
ऽइत्यनुष्टुब्भ भूत्वा तुर्य्यवाह ऽउच्चक्रमुः ॥ १५ ॥ एते
वै ते पशवः । याँस्तत्प्रजापतिर्व्वयसाप्नोत्स वै पशुं प्रथम-
माहाथ व्वयोऽथ छन्दो व्वयसा च ह्येनाँश्छन्दसा च
परिगृह्यात्मन्नधत्तात्मन्नकुरुत तथैवैनानयमेतद्व्वयसा चैव
छन्दसा च परिगृह्यात्मन्धत्त ऽआत्मन्कुरुते ॥ १६ ॥
स ऽएष पशुर्यदग्निः । सोऽत्रैव सर्व्वः कृत्स्नः संस्कृतस्त-
स्य याः पुरस्तादुपदधाति शिरोऽस्य ता ऽअथ या
दक्षिणतश्चोत्तरतश्च स ऽआत्माथ याः पश्चात्तत्पुच्छं
॥ १७ ॥ स वै पुरस्तादेवाग्र ऽउपदधाति । शिरो हि
प्रथमं जायमानस्य जायतेऽथ दक्षिणत ऽउपधायोत्तरत-
ऽउपदधाति सार्द्धमयमात्मा जायाता ऽइत्यथ पश्चा-
त्पुच्छं ह्यन्ततो जायमानस्य जायते ॥ १८ ॥ तद्यानि
वर्षिष्ठानि च्छन्दांसि । ये स्थविष्ठाः पशवस्तान्मध्य-
ऽउपदधाति मध्यं तत्प्रति पशुं वरिष्ठं करोति तस्मा-
न्मध्यं प्रति पशुर्व्वरिष्ठोऽथ ये वीर्य्यवत्तमाः पशवस्तान्द-
क्षिणत ऽउपदधाति दक्षिणं तदर्द्धं पशोर्व्वीर्य्यवत्तरं करोति

(१) शु० य० सं० अ० १४ क० १० । (२) शु० य० सं० अ० १४ क० १० ।
(३) शु० य० सं० अ० १४ क० १० । (४) शु० य० सं० अ० १४ क० १० ।
(५) शु० य० सं० अ० १४ क० १० । (६) शु० य० सं० अ० १४ क० १० ।

तस्माद्दक्षिणोऽर्द्धः पशोर्वीर्य्यवत्तरः ॥ १९ ॥ पूर्वार्द्धं च जघनार्द्धं चाणिष्ठौ करोति । यद्वा ह्यमूद्रश्चतस्त्र*स्तेनैता-ऽअणिष्ठा ऽअथ यदिह द्वसिष्ठान्पशूनुपदधाति तेनो-ऽएता ऽअणिष्ठाः पूर्वार्द्धं च तज्जघनार्द्धं च पशोरणिष्ठौ करोति तस्मात्पूर्वार्द्धश्च जघनार्द्धश्च पशोरणिष्ठौ तस्मात्पूर्वार्द्धेन च जघनार्द्धेन च पशुरुच्च तिष्ठति सञ्च विशत्यथ लोकम्पृणे ऽउपदधात्यस्यामक्त्तयां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः ॥ २० ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ तृतीयायां चितौ स्वयमातृण्णा-दिश्येष्टकोपधानम् ]

तृतीयां चितिमुपदधाति । एतद्वै देवा द्वितीयां चितिं चित्त्वा समारोहन्न्यदूर्ध्वं पृथिव्या ऽअर्वाचीन-मन्तरिक्षात्तदेव तत्संस्कृत्य समारोहन् ॥ १ ॥ तेऽब्रुवन् । चेतयद्ध्वमिति चितिमिच्छतेति वाव तद-ब्रुवन्नित ऽऊर्द्ध्वमिच्छतेति ते चेतयमाना ऽअन्तरिक्ष-मेव बृहतीं तृतीयां चितिमपश्यँस्तेभ्य ऽएष लोको†ऽच्छन्दयत् ॥ २ ॥ त ऽइन्द्राग्नी ऽअब्रुवन् । युवं

* 'स्तेनैना' इति 'ग' पुस्तके ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १०. १. १; कठ० सं० १६. १९; कपि० सं० २५. ९; मै० सं० ११. ७. १९; तै० सं० ४. ३. २ ।

† 'ऽच्छदयत्' इति 'क—ख' पुस्तकयोः ।

न ऽइमां तृतीयां चितिमुपधत्तमिति किं नौ ततो भविष्यतीति युवमेव नः श्रेष्ठौ भविष्यथ ऽइति तथेति तेऽभ्यऽएतामिन्द्राग्नी तृतीयां चितिमुपाधत्तां तस्मादाहुरिन्द्राग्नीऽएव देवानाथं श्रेष्ठाविति ॥ ३ ॥ स वा ऽइन्द्राग्निभ्यामुपदधाति । विश्वकर्म्मणा सादयतीन्द्राग्नी च वै विश्वकर्म्मा चैतां तृतीयां चितिमपश्यँस्तस्मादिन्द्राग्निभ्यामुपदधाति विश्वकर्म्मणा सादयति ॥ ४ ॥ यद्वेवेन्द्राग्निभ्यामुपदधाति । विश्वकर्म्मणा सादयति प्रजापतिं विस्रस्तं देवता ऽआदाय व्युदक्रामँस्तस्येन्द्राग्नी च विश्वकर्म्मा च मध्यमादायोत्क्रम्म्यातिष्ठन् ॥ ५ ॥ तानब्रवीत् । उप मेत प्प्रति म ऽएतद्धत्त येन मे यूयमुदक्रमिष्टेति किं नस्ततो भविष्यतीति युष्मद्देवत्यमेव म ऽएतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतदिन्द्राग्नी च विश्वकर्म्मा च प्रत्यदधुः ॥ ६ ॥ * तद्यैषा मध्यमा स्वयमातृण्णा । एतदस्य तदात्मनस्तद्यदेतामत्रोपदधाति । यद्वेवास्यैषात्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ॥ ७ ॥ 'इन्द्राग्नी ऽअव्यथमानाम् । इष्टकां दृꣳहतं युवमि'ति यथैव यजुस्तथा बन्धुः 'पृष्ठेन द्यावापृथिवीऽअन्तरिक्षं च विबाधस' ऽइति पृष्ठेन ह्येषा द्यावापृथिवीऽअन्तरिक्षं च विबाधते ॥ ८ ॥ † 'विश्वकर्म्मा त्वा साद-

* अत्र शतम् ४४०० ॥

(१) शु० य० सं० अ० १४ क० ११ । (२) शु० य० सं० अ० १४ क० ११ ।

† का० श्रौ० सू० १७. ९. १ ।

३ ) शु० य० सं० अ० १४ क० १२ ।

यन्त्वि'ति । विश्वकर्म्मा ह्येतां तृतीयां चितिमपश्यद्'दन्तरिक्षस्य पृष्ठे व्व्यचस्वतीं प्रथस्वतीमि'त्यन्तरिक्षस्य ह्येतत्पृष्ठं व्व्यचस्वत्प्रथस्व'दन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीरि'त्यात्मानं यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्येतत् ॥ ९ ॥ 'विश्वस्म्मै प्प्राणायापानाय। व्व्यानायोदानाये'ति प्प्राणो वै स्वयमातृण्णा सर्व्वस्म्मा-ऽउ वा ऽएतस्म्मै प्प्राणः 'प्प्रतिष्ठायै चरित्त्राये'तीमे वै लोकाः स्वयमातृण्णा ऽइम ऽउ लोकाः प्प्रतिष्ठा चरित्त्रं 'वायुष्ट्वाभिपात्वि'ति वायुष्ट्वाभिगोपायत्वित्येत'न्महॺा स्वस्त्ये'ति महत्या स्वस्त्येत्येत'च्छर्द्दिषा शन्तमेने'ति यच्छर्द्दिः शन्तमं तेनेत्येतत्सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुरथ साम गायति तस्योपरि बन्धुः ॥ १० ॥ अथ दिश्या ऽउपदधाति । दिशो वै दिश्या दिश ऽएवैतदुपदधाति तद्याभिरदो वायुर्द्दिग्भिरनन्तर्हिताभिरुपैत्ता ऽएतास्ता-ऽएवैतदुपदधाति ता ऽउ ऽएवामूः पुरस्ताद्दर्भस्तम्बं च लोगेष्टकाश्चोपदधात्यसौ वा ऽआदित्य ऽएता ऽअमुं तदादित्यं दिक्ष्वध्यूहति दिक्षु चिनोति ता यत्त्रैव स्युर्बहिर्द्धा तत्स्युर्बहिर्द्धो वा ऽएतद्योनेरग्निकर्म्म यत्पुरा पुष्करपर्णात्ता यदिहाहृत्योपदधाति तदेना योनौ पुष्करपर्ण्णे प्प्रतिष्ठापयति तथो हैता ऽअबहिर्द्धा भवन्ति ता ऽअनन्तर्हिताः स्वय-

(१) शु० य० सं० अ० १४ क० १२। (२) शु० य० सं० अ० १४ क० १२। (३) शु० य० सं० अ० १४ क० १२। (४) शु० य० सं० अ० १४ क० १२। (५) शु० य० सं० अ० १४ क० १२। (६) शु० य० सं० अ० १४ क० १२। (७) शु० य० सं० अ० १४ क० १२।

मातृण्णाया ऽउपदधात्यन्तरिक्षं व्वै मद्ध्यमा स्वयमातृण्णा-
नन्तर्हितास्तदन्तरिक्षाद्दिशो दधात्युत्तरा ऽउत्तरास्तदन्त-
रिक्षाद्दिशो दधाति रेतःसिचोर्व्वेलयेमे वै रेतःसिचा-
वनयोस्तद्दिशो दधाति तस्म्मादनयोर्द्दिशः सर्व्वत ऽउपदधाति
सर्व्वतस्तद्दिशो दधाति तस्म्मात्सर्व्वतो दिशः सर्व्वतः समीचीः
सर्व्वतस्तत्समीचीर्द्दिशो दधाति तस्म्मात्सर्व्वतः समीच्च्यो
दिशः ॥ ११ ॥ यद्वेव * दिश्श्या ऽउपदधाति। छन्दाᳬंसि
वै दिशो गायत्त्री वै प्प्राची दिक् त्रिष्टुब्दक्षिणा जगती
प्प्रतीच्च्यनुष्टुबुदीची पङ्क्तिरूर्द्ध्वा पशवो वै छन्दाᳬंस्य-
न्तरिक्षं मद्ध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्म्मादन्त-
रिक्षायतनाः पशवः ॥ १२ ॥ यद्वेव दिश्श्या ऽउपदधाति।
छन्दाᳬंसि वै दिशः पशवो वै छन्दाᳬंस्यन्नं पशवो
मद्ध्यं मद्ध्यमा चितिर्म्मद्ध्यतस्तदन्नं दधाति ता ऽअनन्त-
र्हिताः स्वयमातृण्णाया ऽउपदधाति प्प्राणो वै स्वयमातृ-
ण्णानन्तर्हितं तत्प्राणादन्नं दधात्युत्तरा ऽउत्तरं तत्प्राणा-
दन्नं दधाति रेतःसिचोर्व्वेलया पृष्ट्यो वै रेतःसिचौ
मद्ध्यमु पृष्ट्यो मद्ध्यत ऽएवास्मिन्नेतदन्नं दधाति सर्व्वत-
ऽउपदधाति सर्व्वत ऽएवास्मिन्नेतदन्नं दधाति ॥ १३ ॥
'राज्ञ्यसि प्प्राची दिक्। व्विराडसि दक्षिणा दिक्सम्म्राडसि
प्प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्न्यसि बृहती
दिगि'ति नामान्न्यासामेतानि नामग्राहमेवैना ऽएतदुप-

* का० श्रौ० सू० १७. ९. २। क०
(१) शु० य० सं० अ० १४ क० १३।

दधाति ता नानोपदधाति नाना सादयति नाना सूददोह-साधिवदति ता नाना हि दिशः ॥ १४ ॥ (A)

## तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ ११५ ॥



### [ तृतीयायां चितौ विश्वज्योतिर्ऋतव्येष्टकोपधानम् ]

अथ * विश्वज्योतिषमुपदधाति । वायुर्वै मध्यमा विश्वज्योतिर्वायुर्ह्येवान्तरिक्षलोके विश्वं ज्योतिर्वायुमेवैत-दुपदधाति तामनन्तर्हितां दिश्याऽभ्य ऽउपदधाति दिक्षु तद्वायुं दधाति तस्मात्सर्वासु दिक्षु वायुः ॥१॥ यद्वेव विश्व-ज्योतिषमुपदधाति । प्रजा वै विश्वज्योतिः प्रजा ह्येव विश्वं ज्योतिः प्रजननमेवैतदुपदधाति तामनन्तर्हितां दिश्याऽभ्य ऽउपदधाति दिक्षु तत्प्रजा दधाति तस्मा-त्सर्वासु दिक्षु प्रजाः ॥ २ ॥ 'विश्वकर्म्मा त्वा सादय-त्वि'ति । विश्वकर्म्मा ह्येतां तृतीयां चितिमपश्यद'न्त-रिक्षस्य पृष्ठे ज्योतिष्मतीमि'त्यन्तरिक्षस्य ह्ययं पृष्ठे ज्योतिष्मान्वायुः ॥ ३ ॥ 'विश्वस्मै प्राणायापानाय । व्यानाये'ति प्राणो वै विश्वज्योतिः सर्वस्मा ऽउ वा-ऽएतस्मै प्राणो 'विश्वं ज्योतिर्यच्छे'ति सर्वं ज्योतिर्य-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १० ३. १; कठ० सं० १७. ३; कपि० २६. २; मै० सं० ११. ८. ३; तै० सं ४. ३. ८।

* का० श्रौ० सू० १७. ९. २।

(१) शु० य० सं० अ० १४ क० १४। (२) शु० य० सं० अ० १४ क० १४। (३) शु० य० सं० अ० १४ क० १४। (४) शु० य० सं० अ० १४ क० १४।

च्छेत्त्येतु'द्वायुष्टेऽधिपतिरि'ति वायुमेवास्या ऽअधिपतिं करोति सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥४॥ * अथर्त्तव्ये ऽउपदधाति । ऋतव ऽएते यदृतव्या- ऽऋतूनेवैतदुपदधाति 'नभश्च नभस्यश्च वार्षिकावृतू' ऽइति नामनी ऽएनयोरेते नामभ्यामेवैने ऽएतदुपदधाति द्वे- ऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोत्यवकासूपदधात्यवकाभिः प्रच्छादयत्यापो वा ऽअ- वका ऽअपस्तदेतस्मिन्नृतौ दधाति तस्मादेतस्मिन्नृतौ भूयिष्ठं वर्षति ॥ ५ ॥ † अथोत्तरे । 'इषश्चोर्जश्च शारदावृतू' ऽइति नामनी ऽएनयोरेते नामभ्यामेवैने- ऽएतदुपदधाति द्वे ऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोत्यवकासूपदधात्यापो वा- ऽअवका ऽअपस्तदेतस्यर्त्तोः पुरस्ताद्दधाति तस्मादेतस्यर्त्तोः पुरस्ताद्वर्षति नोपरिष्टात्प्रच्छादयति तस्मान्न तथेवो- परिष्टाद्वर्षति ॥ ६ ॥ तद्यदेता ऽअत्रोपदधाति । संव- त्सर ऽएषोऽग्निरिम ऽउ लोकाः संवत्सरस्तस्यान्तरिक्ष- मेव मध्यमा चितिरन्तरिक्षमस्य वर्षाशरदावृतू तद्यदेता- ऽअत्रोपदधाति यदेवास्यैता ऽआत्मनस्तदस्मिन्नेतत्प्रति- दधाति तस्मादेता ऽअत्रोपदधाति ॥ ७ ॥ यद्वेवैता- ऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर ऽउ

---

* का० श्रौ० सू० १७. ९. ५ ।

(१) शु० य० सं० अ० १४ क० १५ ।

† का० श्रौ० सू० १७. ९. ७ ।

(२) शु० य० सं० अ० १४ क० १६ ।

प्रजापतिस्तस्य मद्ध्यमेव मद्ध्यमा चितिर्म्मद्ध्यमस्य वर्षाशरदावृतू तद्यदेता ऽअत्रोपदधाति यदेवास्यैता ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेता ऽअत्रोपदधाति ॥ ८ ॥ ता वा ऽएताः । चतस्र ऽऋतव्व्या मद्ध्यमायां चिता ऽउपदधाति द्वे-द्वे ऽइतरासु चितिषु चतुष्पादा वै पशवोऽन्तरिक्षं मद्ध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः ॥ ९ ॥ यद्वेव चतस्रः । चतुष्पादा वै पशवोऽन्नं पशवो मद्ध्यं मद्ध्यमा चितिर्म्मद्ध्यतस्तदन्नं दधाति ॥ १० ॥ यद्वेव चतस्रः । चतुरक्षरं वा ऽअन्तरिक्षं त्र्यक्षरा ऽइतराश्चितयस्तद्यावदन्तरिक्षं तावत्तत्कृत्वोपदधाति ॥ ११ ॥ यद्वेव चतस्रः । पशुरेष यदग्निर्म्मद्ध्यं तत्प्रति पशुं वरिष्ठं करोति तस्मान्मद्ध्यं प्रतिपशुर्व्वरिष्ठः ॥ १२ ॥ ता वा ऽएताः । चतस्र ऽऋतव्व्यास्तासां विश्वज्ज्योतिः पञ्चमी पञ्च दिश्यास्तद्दश—दशाक्षरा विराडन्नं विराण्मद्ध्यं मद्ध्यमा चितिर्म्मद्ध्यतस्तदन्नं दधाति ता ऽअनन्तर्हिताः स्वयमातृण्णाया ऽउपदधाति प्प्राणो वै स्वयमातृण्णानन्तर्हितं तत्प्राणादन्नं दधात्युत्तरा ऽउत्तरं तत्प्राणादन्नं दधाति ॥ १३ ॥ अथ प्राणभृत ऽउपदधाति । प्राणा वै प्प्राणभृतः प्प्राणानेवैतदुपदधाति ता दश भवन्ति दश वै प्प्राणाः पूर्वार्द्धे ऽउपदधाति पुरस्ताद्धीमे प्प्राणा 'ऽआयुर्म्मे पाहि ज्योतिर्म्मे यच्छे'ति प्प्राणो वै ज्योतिः प्प्राणं मे यच्छेत्येवैतदाह

(१) शु० य० सं० अ० १४ क० १७।

ता ऽअनन्तर्हिता ऽऋतव्याभ्य ऽउपदधाति प्प्राणो वै वायुर्ऋतुषु तद्वायुं प्रतिष्ठापयति ॥ १४ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ तृतीयायां चितौ छन्दस्येष्टकोपधानम् ]

अथ * छन्दस्या ऽउपदधाति । पशवो वै छन्दाᳪस्यन्तरिक्षं मद्ध्यमा चितिरन्तरिक्षे †तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः ॥ १ ॥ षड्ढेव छन्दस्या ऽउपदधाति । पशवो वै छन्दाᳪस्यन्नं पशवो मद्ध्यं मद्ध्यमा चितिर्म्मद्ध्यतस्तदन्नं दधाति ॥ २ ॥ ता द्वादश-द्वादशोपदधाति । द्वादशाक्षरा वै जगती पशवो वै जगत्यन्तरिक्षं मद्ध्यमा चितिरन्तरिक्षे तत्पशून्दधाति तस्मादन्तरिक्षायतनाः पशवः ॥ ३ ॥ षड्ढेव द्वादश–द्वादश । द्वादशाक्षरा वै जगती पशवो वै जगत्यन्नं पशवो मद्ध्यं मद्ध्यमा चितिर्म्मद्ध्यतस्तदन्नं दधाति ता ऽअनन्तर्हिताः प्प्राणभृद्भ्य ऽउपदधात्यनन्तर्हितं तत्प्राणेभ्योऽन्नं दधात्युत्तरा ऽउत्तरं तत्प्राणेभ्योऽन्नं दधाति ॥ ४ ॥ 'मा च्छन्द' ऽइति । अयं वै लोको मायः हि लोको मित ऽइव 'प्प्रमा च्छन्द' ऽइत्यन्तरिक्षलोको वै प्प्रमान्तरिक्षलोको ह्यस्म्मा-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ३. ३; कठ० १७. १०; कपि० २६. ९; मै० सं० ११. ८. १२, १२; तै० सं० ४. ४. ११ ।

* का० श्रौ० सू० १७. ९. ९ ।

† 'तत्पशुं' इति 'ग' पुस्तके ।

(१) शु० य० सं० अ० १४ क० १८ । (२) शु० य० सं० अ० १४ क० १८ ।

ल्लोकात्प्रमित ऽइव 'प्रातिमां च्छन्द' ऽइत्यसौ वै लोकः प्रातिमैष ह्यन्तरिक्षलोके प्रतिमित ऽइ'वास्त्रीवयश्छन्द'-ऽइत्यन्नमस्त्रीवयस्तद्यदेषु लोकेष्वन्नं तदस्त्रीवयोऽथो यदेभ्यो लोकेभ्योऽन्नꣳ स्रवति तदस्त्रीवयोऽथातो निरुक्तान्न्येव छन्दाꣳस्युपदधाति ॥ ५ ॥ 'पङ्क्तिश्छन्दः । उष्णिक्छन्दो बृहती च्छन्दोऽनुष्टुप्छन्दो विराट् छन्दो गायत्री च्छन्दस्त्रिष्टुप्छन्दो जगती च्छन्द' ऽइत्येतानि निरुक्तानि विराडष्टमानि च्छन्दाꣳस्युपदधाति 'पृथिवी च्छन्दोन्तरिक्षं छन्द' ऽइति यान्येतद्देवत्यानि च्छन्दाꣳसि तान्येवैतदुपदधा'त्यग्निर्देवता वातो देवते'त्ये'ता वै देवताश्छन्दाꣳसि तान्येवैतदुपदधाति ॥ ६ ॥ स वै निरुक्तानि चानिरुक्तानि चोपदधाति । स यत्सर्वाणि निरुक्तान्युपाधास्यदुन्तवद्धान्नमभविष्यदुक्षेष्यत ह्यथ यत्सर्वाण्यनिरुक्तानि परोऽक्षꣳ ह्यन्नमभविष्यन्न हैनदुद्रक्ष्यंश्चन निरुक्तानि चानिरुक्तानि चोपदधाति तस्मान्निरुक्तमन्नमद्यमानं न क्षीयते ॥ ७ ॥ तानि वा ऽएतानि । त्रीणि द्वादशान्युपदधाति तत्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा बृहत्येषा वै सा बृहती यां तद्देवा ऽअन्तरिक्षं बृहतीं तृतीयां चितिमपश्यꣳस्तस्या ऽएतस्यै देवा ऽउत्तमाः ॥ ७ ॥ यद्वेवैता-ऽइष्टका ऽउपदधाति । प्रजापतेर्विस्रस्तात्सर्वाणि भूतानि सर्वा दिशोऽनु व्युदक्रामन् ॥ ९ ॥ स यः स प्रजापति-

(१) शु० य० सं० अ० १४ क० १८ । (२) शु० य० सं० अ० १४ क० १८ । (३) शु० य० सं० अ० १४ क० १८ । (४) शु० य० सं० अ० १४ क० १८ । (५) शु० य० सं० अ० १४ क० १८ ।

ऽर्यंस्तक्ष्सत । अयमेव स योऽयमग्निश्चीयतेऽथ याऽन्यस्मात्तानि भूतानि व्युदक्रामन्नेतास्ता ऽइष्टकास्तद्यदेता ऽउपदधाति यान्न्येवास्मात्तानि भूतानि व्युदक्रामँस्तान्न्यस्मिन्नेतत्प्रतिदधाति ॥ १० ॥ तद्या दश प्रथमा ऽउपदधाति । स चन्द्रमास्ता दश भवन्ति दशाक्षरा विराडन्नं विराडन्नमु चन्द्रमा ऽअथ या ऽउत्तराः षट्त्रिंशदर्द्धमासाश्च ते मासाश्चचतुर्विंशतिरर्द्धमासा द्वादश मासाश्चन्द्रमा वै संवत्सरः सर्वाणि भूतानि ॥ ११ ॥ तं यत्र देवाः समस्कुर्वन् । तदस्मिन्नेतानि सर्वाणि भूतानि मध्यतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति ता ऽअनन्तर्हिता ऽऋतव्याभ्य ऽउपदधात्यृतुषु तत्सर्वाणि भूतानि प्रतिष्ठापयति ॥१२॥(C)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ तृतीयस्यां चितौ वालखिल्योपधानम् ]

अथ * वालखिल्या ऽउपदधाति । प्राणा वै वालखिल्याः प्राणानेवैतदुपदधाति ता यद्वालखिल्या नाम यद्वा ऽउर्वरयोरसम्भिन्नं भवति खिल ऽइति वै तदाचक्षते वालमात्रादु हेमे प्राणा ऽअसम्भिन्नास्ते यद्वालमात्रादसम्भिन्नास्तस्माद्वालखिल्याः ॥ १ ॥ स वै सप्त पुरस्ता-

( C ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ३. ३; कठ० सं० १७. ३; कपि० सं० २९, २; मै० सं० ११. ८. ३; तै० सं० ४. ३. ६ ।

* का० श्रौ० सू० १७. ३. ११, १४ ।

दुपदधाति । सप्त पश्चात्तद्याः सप्त पुरस्तादुपदधाति य-ऽएवेमे सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति ॥ २ ॥ अथ याः सप्त पश्चात् । एषा मेवैतत्प्राणानामेतान्प्राणान्प्रति प्रतीञ्करोति तस्माद्यदेभिरन्नमत्ति तदेतैरत्त्येति ॥ ३ ॥ यद्वेव सप्त पुरस्तादुपदधाति । सप्त वा ऽइमे पुरस्तात्प्राणाश्चत्वारि दोर्बाहवाणि शिरो ग्रीवा यदूर्द्धं नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राण ऽएते वै सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति ॥ ४ ॥ अथ याः सप्त पश्चात् । सप्त वा ऽइमे पश्चात्प्राणाश्चत्वार्य्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तममङ्गेऽङ्गे हि प्राण ऽएते वै सप्तपश्चात्प्राणास्तानस्मिन्नेतद्दधाति ॥ ५ ॥ 'मूर्द्धासि राट् । ध्रुवासि धरुणा धर्त्र्यसि धरणी । यन्त्री राडयन्त्र्यसि यमनी ध्रुवासि धरित्री'त्येतानेवास्मिन्नेतद् ध्रुवान्प्राणान्यच्छति ॥ ६ ॥ यद्वेव वालखिल्या ऽउपदधाति । एतद्वै देवा वालखिल्याभिरेवेमाँल्लोकान्त्समयुरितश्चोर्द्ध्वानमुतश्चार्वाच-स्तथैवैतद्यजमानो वालखिल्याभिरेवेमाँल्लोकान्त्संयातीत-श्चोर्द्ध्वानमुतश्चार्वाचः ॥ ७ ॥ मूर्द्धासि राडितीमं लोकमरोहन् । ध्रुवासि धरुणेत्यन्तरिक्षलोकं धर्त्र्यसि धरणीत्यमुं लोक'मायुषे त्वा वर्च्चसे त्वा कृष्यै त्वा क्षेमाय त्वे'ति चत्वारश्चतुष्पादाः पशवोऽन्नं पशवस्त-ऽएतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेनान्नेनामुष्मिँल्लोके प्रत्यतिष्ठँस्तथैवैतद्यजमान ऽएतैश्चतुर्भिश्चतुष्पादैः

(१) शु० य० सं० अ० १४ क० २१, २२ । (२) शु० य० सं० अ० १४ क० २१ ।

पशुभिरेतेनान्नेनामुष्मिँल्लोके प्प्रतितिष्ठति ॥ ८ ॥ स स पराङिव रोहः । इयमु वै प्प्रतिष्ठा ते देवा ऽइमां प्रतिष्ठामभिप्रत्यायँस्तथैवैतद्यजमान ऽइमां प्रतिष्ठामभिप्रत्यैति ॥ ९ ॥ यन्त्री राडित्यमुं लोकमरोहन् । यन्त्र्यसि यमनीत्यन्तरिक्षलोकं ध्रुवासि धरित्रीतीमं लोकं 'मिषे त्वोर्ज्जे त्वा रय्यै त्वा पोषायत्त्वे'ति चत्वारश्चचतुष्पादाः पशवोऽन्नं पशवस्त ऽएतैश्चचतुर्भिश्चचतुष्पादैः पशुभिरेतेनान्नेनास्मिँल्लोके प्प्रत्यतिष्ठँस्तथैवैतद्यजमान ऽएतैश्चचतुर्भिश्चचतुष्पादैः पशुभिरेतेनान्नेनास्मिँल्लोके प्प्रतितिष्ठति ॥ १० ॥ अथातः संस्कृतिरेव । या ऽअमूरेकादशेष्टका ऽउपदधाति योऽसौ प्प्रथमोऽनुवाकस्तदन्तरिक्षः स ऽआत्मा तद्यत्ता ऽएकादश भवन्त्येकादशाक्षरा वै त्रिष्टुप् त्रैष्टुभमन्तरिक्षमथ या ऽउत्तराः षष्टिः स वायुः स प्प्रजापतिः सोऽग्निः स यजमानः ॥ ११ ॥ तद्याः पुरस्तादुपदधाति । शिरोऽस्य तास्ता दश भवन्ति दश वै प्प्राणाः प्प्राणा ऽउ वै शिरः पूर्वार्द्ध ऽउपदधाति पुरस्ताद्धीदः शिरः ॥ १२ ॥ अथ या दक्षिणतः । यदूर्द्ध्वं मद्ध्यादवाचीनः शीर्ष्णस्तदस्य ता ऽअथ याः पश्चाद्यदूर्द्ध्वं प्रतिष्ठाया ऽअवाचीनं मद्ध्यात्तदस्य ताः प्प्रतिष्ठैवोत्तरतः ॥ १३ ॥ तद्याः सप्त पुरस्ताद्वालखिल्या ऽउपदधाति । य ऽएवेमे सप्त पुरस्तात्प्राणास्तानस्मिन्नेतद्दधाति ता ऽअनन्तर्हिता ऽएताभ्यो दशभ्य ऽउपदधात्यनन्तर्हितांस्तच्छीर्ष्णः

(३) शु० य० सं० अ० १४ क० २२ ।

प्प्राणान्दधाति ॥ १४ ॥ अथ या॒ः सप्त पश्चाच्चात् । य॒-ऽए॒वेमे॒ सप्त पश्च॒च्चा॒त्प्राणास्ता॒नस्मिन्नेत॒द्दधाति ता ऽअ॒न्त-र्हिता ऽए॒ता॒भ्यो द्वादश॒भ्य ऽउ॒पदधात्य॒नन्तर्हितास्त॒दा-त्म॒नः प्प्राणा॒न्दधाति स॒ ऽए॒ष॒ व्वायु॒ः प्प्रजापतिरस्मिँस्त्रै-ष्टुभेऽन्त॒रिक्षे समन्तं पु॒रुर्षवनस्तद्य॒त्तृती॒यां चि॒तिमुप-द॒धाति व्वायु॒ चैव त॒दन्त॒रिक्षं च संस्कृत्य॒ोऽपधत्ते॒ऽथ लोकम्पृणे ऽउ॒पदधात्यस्याᳬ स्रक्त्यां त॒योरुप॒रि ब॒न्धु॒ः पु॒रीषं नि॒वपति त॒स्योप॒रि ब॒न्धु॒ः ॥ १५ ॥ (D)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ चतुर्थ्यां चितौ स्तोमेष्टकोपधानम् ]

चतुर्त्थीं चि॒तिमु॒पदधाति । एतद्वै देवा॒स्तृत॒ीयां चि॒तिं चित्त्वा॒ सम॒ारोहन्नन्त॒रिक्षं व्वै॒ तृत॒ीया चि॒तिरन्त॒रिक्षमेव तत्संस्कृत्य सम॒ारोह॒न् ॥ १ ॥ तेऽब्रुवन् । चेत॒यद्ध्वमि॒ति चि॒तिमिच्छत॒ेति वाव त॒दब्रुवन्नित ऽऊर्द्ध्वमिच्छत॒ेति ते॒ चेत॒यमाना ऽए॒ता॒ं चतुर्त्थीं चि॒तिमपश्यन्न्य॒दूर्द्ध्वमन्त॒रिक्षा-दर्व्वा॒चीनं दिवस्ते॒षामेष॒ लोको॒ऽध्रुव ऽइवा॒प्प्रतिष्ठित ऽइव म॒नस्यासीत् ॥ २ ॥ ते ब्र॒ह्माब्रुवन् । त्वामिहो॒पदधामहा-ऽइति कि॒ं मे त॒तो भविष्यत॒ीति त्वमेव॒ नः श्रेष्ठं

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ३. ४; कठ० सं० १७. ३। कपि० सं० २९. २; मै० सं० ११. ८. ३; तै० सं० ४. ३. ६।

भविष्यसीति तथेति तेऽत्र ब्रह्मोपादधत तस्मादाहु-र्ब्रह्मैव देवानांᳫं श्रेष्ठमिति तदेतया वै चतुर्थ्या चित्येमे द्यावापृथिवी विष्टब्धे ब्रह्म वै चतुर्थी चितिस्तस्मादाहु-र्ब्रह्मणा द्यावापृथिवी विष्टब्धे ऽइति स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा ऽउ वै ब्रह्म ब्रह्मैवैतदुपदधाति ॥ ३ ॥ षड्ढेव स्तोमानुपदधाति । एतद्वै देवाः प्रजापति-मब्रुवँस्त्वामिहोपदधामहा ऽइति तथेति स वै नाब्रवीत्किं मे ततो भविष्यतीति यदु ह किञ्च प्रजापतिर्देवेष्वीषे किमस्माकं ततो भविष्यतीत्येवोचुस्तस्मादु हैतद्यत्पिता पुत्रेष्विच्छते किमस्माकं ततो भविष्यतीत्येवाहुरथ यत्पुत्राः पितरि तथेत्येवाहैवᳫं हि तदग्रे प्रजापतिश्च देवाश्च समवदन्त स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा-ऽउ वै प्रजापतिः प्रजापतिमेवैतदुपदधाति ॥ ४ ॥ षड्ढेव स्तोमानुपदधाति । ये वै ते प्राणा ऽऋषय ऽएतां चतुर्थीं चितिमपश्यन्ये त ऽएतेन रसेनोपायँस्त ऽएते तानेवैतदुपदधाति स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा ऽउ वा ऋषय ऽऋषीनेवैतदुपदधाति ॥ ५ ॥ षड्ढेव स्तोमानुपदधाति । प्रजापतिं विस्रस्तं देवता-ऽआदाय व्युदक्रामँस्तस्य यदूर्ध्वं मध्यादवाचीनᳫं शीर्ष्ण-स्तदस्य वायुरादायोत्क्रम्यातिष्ठद्देवताश्च भूत्वा संवत्सर-रूपाणि च ॥ ६ ॥ तमब्रवीत् । उप मेहि प्रति म ऽएत-द्धेहि येन मे त्वमुदक्रमीरिति किं मे ततो भविष्यतीति त्वद्देवत्यमेव म ऽएतदात्मनो भविष्यतीति तथेति तद-

स्मिन्नेतद्वायुं प्रत्यदधात् ॥ ७ ॥ तद्या एता अष्टादश प्रथमाः । एतदस्य तदात्मनस्तद्यदेता अत्रोपदधाति यद्वेवास्यैता आत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेता अत्रोपदधाति स्तोमानुपदधाति प्राणा वै स्तोमाः प्राणा उ वै वायुर्वायुमेवैतदुपदधाति ॥ ८ ॥

* स पुरस्तादुपदधाति । 'आशुस्त्रिवृदि[1]'ति य एव त्रिवृत्स्तोमस्तं तदुपदधाति तद्यत्तमाहाशुरित्येष हि स्तोमानामाशिष्ठोऽथो वायुर्वा आशुस्त्रिवृत्स एषु त्रिषु लोकेषु वर्त्तते तद्यत्तमाहाशुरित्येष हि सर्वेषां भूतानामाशिष्ठो वायुर्ह भूत्वा पुरस्तात्तस्थौ तदेव तद्रूपमुपदधाति ॥ ९ ॥ 'भान्तः प[2]ञ्चदश' इति । य एव पञ्चदश स्तोमस्तं तदुपदधाति तद्यत्तमाह भान्त इति वज्रो वै भान्तो वज्रः पञ्चदशोऽथो चन्द्रमा वै भान्तः पञ्चदशः †स पञ्चदशाहान्यापूर्य्यते पञ्चदशापक्षीयते तद्यत्तमाह भान्त इति भाति हि चन्द्रमाश्चन्द्रमा ह भूत्वा दक्षिणतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ १० ॥ 'व्योमा[3] सप्तदश' इति । य एव सप्तदश स्तोमस्तं तदुपदधाति तद्यत्तमाह व्योमेति प्रजापतिर्वै व्योमा प्रजापतिः सप्तदशोऽथो संवत्सरो वाव व्योमा सप्तदशस्तस्य द्वादश मासाः पञ्चर्त्तवस्तद्यत्तमाह व्योमेति व्योमा हि संव-

---

* का० श्रौ० सू० १७. १०. ६–१० ।

(१) शु० य० सं० अ० १४ क० २३ । (२) शु० य० सं० अ० १४ क० २३ ।

(३) शु० य० सं० अ० १४ क० २३ ।

† 'स च पुर' इति 'ग-ज' पुस्तकयोः ।

त्सरः संवत्सरो ह भूत्वोत्तरतस्तस्थौ तदेव तद्रूपमुपदधाति ॥ ११ ॥ 'धरुण ऽएकविꣳश' ऽइति । स ऽएवैकविꣳश स्तोमस्तं तदुपदधाति तद्यत्तमाह धरुण ऽइति प्प्रतिष्ठा वै धरुणः प्प्रतिष्ठैकविꣳशोऽथो ऽअसौ वाऽ आदित्यो धरुण ऽएकविꣳशस्तस्य द्वादश मासाः पञ्चर्त्तवस्त्रय-ऽइमे लोका ऽअसावेवादित्यो धरुण ऽएकविꣳशस्तद्यत्त-माह धरुण ऽइति यदा ह्येवैषोऽस्तमेत्यथेदꣳ सर्वं ध्रियत-ऽआदित्यो ह भूत्वा पश्चात्तस्थौ तदेव तद्रूपमुपदधात्यथ संवत्सररूपाण्युपदधाति ॥१२॥ [ अर्धप्रपाठकः ५३॥ ] 'प्रतू-र्त्तिरष्टादश' ऽइति । स ऽएवाष्टादश स्तोमस्तं तदुपधात्यथो संवत्सरो वाव प्रतूर्त्तिरष्टादशस्तस्य द्वादश मासाः पञ्चर्त्तवः संवत्सरऽएव प्प्रतूर्त्तिरष्टादशस्तद्यत्तमाह प्प्रतूर्त्तिरिति संव-त्सरो हि सर्वाणि भूतानि प्प्रतिरति तदेव तद्रूपमुपदधाति ॥ १३ ॥ 'तपो नवदश' ऽइति । स ऽएव नवदश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव तपो नवदशस्तस्य द्वादश मासाः षडृतवः संवत्सर ऽएव तपो नवदशस्तद्यत्तमाह तप ऽइति संवत्सरो हि सर्वाणि भूतानि तपति तदेव तद्रूपमुपदधाति ॥ १४ ॥ 'अभीवर्त्तः सविꣳश' ऽइति । स ऽएव सविꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वा-ऽअभीवर्त्तः सविꣳशस्तस्य द्वादशमासाः सप्तर्त्तवः संवत्सर-ऽएवाभीवर्त्तः सविꣳशस्तद्यत्तमाहाभीवर्त्त ऽइति संवत्सरो हि सर्वाणि भूतान्यभिवर्त्तते तदेव तद्रूपमुपदधाति ॥ १५ ॥

(१) शु० य० सं० अ० १४ क० २३ । (२) शु० य० सं० अ० १४ क० २३ । (३) शु० य० सं० अ० १४ क० २३ । (४) शु० य० सं० अ० १४ क० २३ ।

'वर्चो द्वाविꣳश' इति। य एव द्वाविꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव वर्चो द्वाविꣳशस्तस्य द्वादश मासाः सप्तर्त्तवो द्वे अहोरात्रे संवत्सर एव वर्चो द्वाविꣳशस्तद्यत्तमाह वर्च्च इति संवत्सरो हि सर्वेषां भूतानां वर्च्चस्वितमस्तदेव तद्रूपमुपदधाति ॥ १६ ॥ 'सम्भरणस्त्रयोविꣳश इति य एव त्रयोविꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव सम्भरणस्त्रयोविꣳशस्तस्य त्रयोदश मासाः सप्तर्त्तवो द्वे अहोरात्रे संवत्सर एव सम्भरणस्त्रयोविꣳशस्तद्यत्तमाह सम्भरण इति संवत्सरो हि सर्वाणि भूतानि सम्भृतस्तदेव तद्रूपमुपदधाति ॥१७॥ 'योनिश्चचतुर्विꣳश इति। य एव चतुर्विꣳश स्तोमस्तं तदुपधात्यथो संवत्सरो वाव योनिश्चचतुर्विꣳशस्तस्य चतुर्विꣳशतिरर्द्धमासास्तद्यत्तमाह योनिरिति संवत्सरो हि सर्वेषां भूतानां योनिस्तदेव तद्रूपमुपदधाति ॥ १८ ॥ 'गर्भाः पञ्चविꣳश' इति। य एव पञ्चविꣳश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव गर्भाः पञ्चविꣳशस्तस्य चतुर्विꣳशतिरर्द्धमासाः संवत्सर एव गर्भाः पञ्चविꣳशस्तद्यत्तमाह गर्भा इति संवत्सरो ह त्रयोदशो मासो गर्भो भूत्वर्त्तूꣳप्रविशति तदेव तद्रूपमुपदधाति ॥ १९ ॥ 'ओजस्त्रिणव' इति। य एव त्रिणव स्तोमस्तं तदुपदधाति तद्यत्तमाहौज इति वज्रो वा ओजो वज्र-

(१) शु० य० सं० अ० १४ क० २३। (२) शु० य० सं० अ० १४ क० २३। (३) शु० य० सं० अ० १४ क० २३। (४) शु० य० सं० अ० १४ क० २३। (५) शु० य० सं० अ० १४ क० २३।

स्त्रिणवोऽथो संवत्सरो वा ऽओजस्त्रिणवस्तस्य चतुर्विंᳲशतिरर्द्धमासा द्वे ऽअहोरात्रे संवत्सर ऽएवौजस्त्रिणवस्तद्यत्तमाहौज ऽइति संवत्सरो हि सर्वेषां भूतानामोजस्वितमस्तदेव तद्रूपमुपदधाति ॥ २० ॥ 'क्रतुरेकत्रिᳲंश'[1] ऽइति । स ऽएवैकत्रिᳲंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव क्रतुरेकत्रिᳲंशस्तस्य चतुर्विंᳲशतिरर्द्धमासाः षडृतवः संवत्सर ऽएव क्रतुरेकत्रिᳲंशस्तद्यत्तमाह क्रतुरिति संवत्सरो हि सर्वाणि भूतानि करोति तदेव तद्रूपमुपदधाति ॥ २१ ॥ 'प्रतिष्ठा[2] त्रयस्त्रिᳲंश' ऽइति । स ऽएव त्रयस्त्रिᳲंश स्तोमस्तं तदुपदधाति तद्यत्तमाह प्प्रतिष्ठेति प्प्रतिष्ठा हि त्रयस्त्रिᳲंशोऽथो संवत्सरो वाव प्प्रतिष्ठा त्रयस्त्रिᳲंशस्तस्य चतुर्विंᳲशतिरर्द्धमासाः षडृतवो द्वे ऽअहोरात्रे संवत्सर ऽएव प्प्रतिष्ठा त्रयस्त्रिᳲंशस्तद्यत्तमाह प्प्रतिष्ठेति संवत्सरो हि सर्वेषां भूतानां प्रतिष्ठा तदेव तद्रूपमुपदधाति ॥ २२ ॥ 'ब्रध्नस्य[3] विष्टपं चतुस्त्रिᳲंश' ऽइति । स * ऽएव चतुस्त्रिᳲंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव ब्रध्नस्य विष्टपं चतुस्त्रिᳲंशस्तस्य चतुर्विंᳲशतिरर्द्धमासाः सप्तर्त्तवो द्वेऽअहोरात्रे संवत्सर ऽएव ब्रध्नस्य विष्टपं चतुस्त्रिᳲंशस्तद्यत्तमाह ब्रध्नस्य विष्टपमिति स्वाराज्यं वै ब्रध्नस्य विष्टपᳲं स्वाराज्यं चतुस्त्रिᳲंशस्तदेव तद्रूपमुपदधाति ॥२३॥ 'नाकः[4] षट्त्रिᳲंश' ऽइति । स ऽएव षट्त्रिᳲंश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव नाकः षट्त्रिᳲंशस्तस्य चतु-

(१) शु० य० सं० अ० १४ क० २३। (२) शु० य० सं० अ० १४ क० २३।
* 'ऽएते' इति 'ग' पुस्तके।
(३) शु० य० सं० अ० १४ क० २३। (४) शु० य० सं० अ० १४ क० २३।

विंशतिरर्द्धमासा द्वादश मासास्तद्यत्तमाह नाक ऽइति न हि तत्र गताय कस्मै च नाकं भवत्यथो संवत्सरो वाव नाकः संवत्सरः स्वर्गो लोकस्तदेव तद्रूपमुपदधाति ॥२४॥ 'विवर्त्तोऽष्टाचत्वारिंशश' ऽइति । स ऽएवाष्टाचत्वारिंशश स्तोमस्तं तदुपदधात्यथो संवत्सरो वाव विवर्त्तोऽष्टाचत्वारिंशशस्तस्य षड्विंशतिरर्द्धमासास्त्रयोदश मासाः सप्तर्त्तवो द्वे ऽअहोरात्रे तद्यत्तमाह विवर्त्त ऽइति संवत्सराद्धि सर्वाणि भूतानि विवर्त्तन्ते तदेव तद्रूपमुपदधाति ॥ २५ ॥ 'धर्त्रं चतुष्टोम' ऽइति । स ऽएव चतुष्टोम स्तोमस्तं तदुपदधाति तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं प्रतिष्ठा चतुष्टोमोऽथो वायुर्वाव धर्त्रं चतुष्टोमः स ऽआभिश्चतसृभिर्दिग्भिः स्तुते तद्यत्तमाह धर्त्रमिति प्रतिष्ठा वै धर्त्रं वायुरु सर्वेषां भूतानां प्रतिष्ठा तदेव तद्रूपमुपदधाति स वै वायुमेव प्रथममुपदधाति वायुमुत्तमं वायुनैव तदेतानि सर्वाणि भूतान्युभयतः परिगृह्णाति ॥ २६ ॥ ता वा ऽएताः । अष्टादशेष्टका ऽउपदधाति । तौ द्वौ त्रिवृतौ प्राणो वै त्रिवृद्वायुरु प्राणो वायुरेषा चितिः ॥ २७ ॥ सद्वेवाष्टादश । अष्टादशो वै संवत्सरो द्वादश मासाः पञ्चर्त्तवः संवत्सर ऽएव प्रजापतिरष्टादशः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तत्कृत्वोपदधाति ॥ २८ ॥ (A)

## चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(१) शु० य० स० अ० १४ क० २३ । (२) शु० य० सं० अ० १४ क० २३ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ४. १; कठ० सं० १७. ४; कपि० सं २९. ३; मै० सं० ११. ८. ४; तै० सं० ४. ३. ।

[ चतुर्थ्यां चितौ स्पृतेष्टकोपधानम् ]

अथ स्पृत ऽउपदधाति । एतद्वै प्प्रजापतिरेतस्मिन्नात्मनः प्प्रतिहिते सर्व्वाणि भूतानि गर्ब्भ्यभवत्तान्यस्य गर्ब्भ ऽएव सन्ति पाप्प्मा मृत्त्युरगृह्णात् ॥ १ ॥ स देवानब्रवीत् । युष्माभिः सहेमानि सर्व्वाणि भूतानि पाप्प्मनो मृत्त्योः स्पृणवानीति किं नस्ततो भविष्यतीति व्वृणीद्ध्वमित्त्यब्रवीत्तं भागो नोऽस्त्वित्त्येकेऽब्रुवन्नाधिपत्त्यं नोऽस्त्वित्त्येके स भागमेकेब्भ्यः कृत्त्वाधिपत्त्यमेकेब्भ्यः सर्व्वाणि भूतानि पाप्प्मनो मृत्त्योरस्पृणोद्यदस्पृणोत्तस्मात्स्पृतस्तथैवैतद्यजमानो भागमेकेब्भ्यः कृत्त्वाधिपत्त्यमेकेब्भ्यः सर्व्वाणि भूतानि पाप्प्मनो मृत्त्योः स्पृणोति तस्मादु सर्व्वास्वेव स्पृतꣳ स्पृतमित्त्यनुवर्त्तते ॥ २ ॥ '[1]अग्नेर्ब्भागोऽसि * । दीक्षाया ऽआधिपत्त्यमि'ति व्वाग्वै दीक्षाग्नये भागं कृत्त्वा व्वाच ऽआधिपत्त्यमकरोद् '[2]ब्रह्म स्पृतं त्रिवृत्स्तोम' ऽइति ब्रह्म प्प्रजानां त्रिवृता स्तोमेन पाप्प्मनो मृत्त्योरस्पृणोत् ॥ ३ ॥ '[3]इन्द्रस्य भागोऽसि । व्विष्णोराधिपत्त्यमि'तीन्द्राय भागं कृत्त्वा व्विष्णव ऽआधिपत्त्यमकरो'त्क्षत्त्रꣳ [4]स्पृतं पञ्चदश स्तोम' ऽइति क्षत्त्रं प्रजानां पञ्चदशेन स्तोमेन पाप्प्मनो मृत्त्योरस्पृणोत् ॥ ४ ॥ '[5]नृचक्षसां भागोऽसि । धातुराधिपत्त्यमि'ति देवा वै नृचक्षसो देवेब्भ्यो भागं

* का० श्रौ० सू० १७, १०, ११–१५ ।

(१) शु० य० सं० अ० १४ क० २४ । (२) शु० य० सं० अ० १४ क० २४ । (३) शु० य० सं० अ० १४ क० २४ । (४) शु० य० सं० अ० १४ क० २४ । (५) शु० य० सं० अ० १४ क० २४ ।

कृत्वा धात्र ऽआधिपत्यमकरो'ज्जनित्रथं स्पृतꣳ सप्तदश स्तोम' ऽइति विड् वै जनित्रं विशं प्रजानाथं सप्तदशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥५॥ 'मित्रस्य भागोऽसि। वरुणस्याधिपत्यमि'ति प्राणो वै मित्रोऽपानो वरुणः प्राणाय भागं कृत्वापानायाधिपत्यमकरो'द्दिवो वृष्टिर्वात स्पृत ऽएकविꣳश स्तोम' ऽइति वृष्टिं च वातं च प्रजानामेकविꣳशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ६ ॥ † 'वसूनां भागोऽसि। रुद्राणामाधिपत्यमि'ति वसुभ्यो भागं कृत्वा रुद्रेभ्य ऽआधिपत्यमकरो'च्चतुष्पात्स्पृतं चतुर्विꣳश स्तोम' ऽइति चतुष्पात्प्रजानां चतुर्विꣳशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ७ ॥ 'आदित्यानां भागोऽसि। मरुतामाधिपत्यमि'त्यादित्येभ्यो भागं कृत्वा मरुद्भ्य ऽआधिपत्यमकरो'द्गर्भा स्पृताः पञ्चविꣳश स्तोम' ऽइति गर्भान्प्रजानां पञ्चविꣳशेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ८ ॥ 'अदित्यै भागोऽसि। पूष्ण ऽआधिपत्यमि'तीयं वा ऽअदितिरस्यै भागं कृत्वा पूष्ण ऽआधिपत्यमकरो'दोज स्पृतं त्रिणव स्तोम' ऽइत्योजः प्रजानां त्रिणवेन स्तोमेन पाप्मनो मृत्योरस्पृणोत् ॥ ९ ॥ 'देवस्य सवितुर्भागोऽसि। बृहस्पतेराधिपत्यमि'ति देवाय

(१) शु० य० सं० अ० १४ क० २४। (२) शु० य० सं० अ० १४ क० २४। (३) शु० य० सं० अ० १४ क० २५। (४) शु० य० सं० अ० १४ क० २५। (५) शु० य० सं० अ० १४ क० २५। (६) शु० य० सं० अ० १४ क० २५। (७) शु० य० सं० अ० १४ क० २५। (८) शु० य० सं० अ० १४ क० २५। (९) शु० य० सं० अ० १४ क० २५। (१०) शु० य० सं० अ० १४ क० २६।

सवित्रे भागं कृत्वा बृहस्पतय ऽआधिपत्यमकरो'त्स-
मीचीर्द्दिश [1]स्पृताश्चचतुष्टोम स्तोम' ऽइति सर्व्वा द्दिशः
प्प्रजानां चतुष्टोमेन स्तोमेन पाप्प्मनो मृत्योरस्पृणोत्॥१०॥
'[2]यवानां भागोऽसि। अयवानामाधिपत्यमि'ति पूर्व्वपक्षा वै
यवा ऽअपरपक्षा ऽअयवास्ते हीदꣳ सर्वं य्युवते चायुवते च
पूर्व्वपक्षेब्भ्यो भागं कृत्वापरपक्षेब्भ्य ऽआधिपत्यमकरो'त्प्रजा
[3]स्पृताश्चचतुश्चत्वारिꣳश स्तोम' ऽइति सर्व्वाः प्प्रजाश्चचतु-
श्चत्वारिꣳशेन स्तोमेन पाप्प्मनो मृत्योरस्पृणोत् ॥ ११ ॥
'ऋभूणां [4]भागोऽसि। विश्वेषां देवानामाधिपत्यमि'-
त्यृभुब्भ्यो भागं कृत्वा विश्वेब्भ्यो देवेब्भ्य ऽआधि-
पत्यमकरो'द्भूतꣳ [5]स्पृतं त्रयस्त्रिꣳश स्तोम' ऽइति सर्व्वाणि
भूतानि त्रयस्त्रिꣳशेन स्तोमेन पाप्प्मनो मृत्योरस्पृणो
त्तथैवैतद्यजमानः सर्व्वाणि भूतानि त्रयस्त्रिꣳशेन स्तोमेन
पाप्प्मनो मृत्यो स्पृणोति ॥ १२ ॥ ता वा ऽएताः। दशे-
ष्टका ऽउपदधाति दशाक्षरा विराड्विराडग्निर्द्दश द्दिशो
द्दिशोऽग्निर्द्दश प्प्राणाः प्प्राणा ऽअग्निर्य्यावानग्निर्य्यावत्यस्य
मात्रा तावतैव तदेतानि सर्व्वाणि भूतानि पाप्प्मनो मृत्यो
स्पृणोति ॥ १३ ॥ अथर्त्तव्ये ऽउपदधाति *। ऋतव-
ऽएते यदृतव्ये ऽऋतूनेवैतदुपदधाति '[6]सहश्च सहस्यश्च
हैमन्तिकावृतू ऽइति नामनी ऽएनयोरेते नामब्भ्यामेवैने-

(१) शु० य० सं० अ० १३ क० २६। (२) शु० य० सं० अ० १४ क० २६।
(३) शु० य० सं० अ० १४ क० २६। (४) शु० य० सं० अ० १४ क० २६।
(५) शु० य० सं० अ० १४ क० २७। (६) शु० य० सं० अ० १४ क० २७।
* का० श्रौ० सू० १७, १०, १६।

ऽएतदुपदधाति द्वे ऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥ १४ ॥ तद्यदेते ऽअत्रोपदधाति । संवत्सर ऽएषोऽग्निरिम ऽउ लोकाः संवत्सरस्तस्य यदूर्द्ध्वमन्तरिक्षादर्वाचीनं दिवस्तदस्यैषा चतुर्थी चितिस्तद्वस्य हेमन्त ऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतेऽअत्रोपदधाति ॥ १५ ॥ यद्वेवैते ऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर ऽउ प्रजापतिस्तस्य यदूर्द्ध्वं मध्यादर्वाचीनꣳ शीर्ष्णस्तदस्यैषा चतुर्थी चितिस्तद्वस्य हेमन्तऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ॥ १६ ॥ (B)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ चतुर्थ्यां चितौ सृष्टीष्टकोपधानम् ]

अथ † सृष्टीरुपदधाति । एतद्वै प्रजापतिः सर्वाणि भूतानि पाप्मनो मृत्योर्म्मुक्त्वा कामयत प्रजाः सृजेय प्रजायेयेति ॥ १ ॥ स प्राणानब्रवीत् । युष्माभिः सहेमाः प्रजाः प्रजनयानीति ते वै केन स्तोष्यामह ऽइति मया चैव युष्माभिश्चेति तथेति ते प्राणैश्चैव प्रजापतिना चास्तुवत यदु ह किञ्च देवाः कुर्वते स्तोमेनैव तत्कुर्वते

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ४. २; कठ० १७. ४; कपि० २६. ३; मै० सं० ११. ८. ५; तै० सं ४. ३. ९।

† का० श्रौ० सू० १७. १०. १७।

यज्ञो वै स्तोमो यज्ञेनैव तत्कुर्वते तस्मादु सर्वास्वेवास्तुवतास्तुवतेत्त्यनुवर्त्तते ॥ २ ॥ 'एकयास्तुवतेति'[1]। वाग्वाऽएका वाचैव तदस्तुवत 'प्रजा ऽअधीयन्ते'[2]ति प्रजाऽअत्राधीयन्त 'प्रजापतिरधिपतिरासीदि'[3]ति प्रजापतिरत्राधिपतिरासीत् ॥ ३ ॥ 'तिसृभिरस्तुवतेति'[4]। त्रयो वै प्राणाः प्राण ऽउदानो व्यानस्तैरेव तदस्तुवत 'ब्रह्मासृज्यते'[5]ति ब्रह्मात्रासृज्यत 'ब्रह्मणस्पतिरधिपतिरासीदि'[6]ति ब्रह्मणस्पतिरत्राधिपतिरासीत् ॥ ४ ॥ 'पञ्चभिरस्तुवते'[7]ति । य ऽएवेमे मनः पञ्चमाः प्राणास्तैरेव तदस्तुवत 'भूतान्यसृज्यन्ते'[8]ति भूतान्यत्रासृज्यन्त 'भूतानां[9] पतिरधिपतिरासीदि'ति भूतानां पतिरत्राधिपतिरासीत् ॥ ५ ॥ 'सप्तभिरस्तुवते'[10]ति । य ऽएवेमे सप्त शीर्षन्प्राणास्तैरेव तदस्तुवत 'सप्त ऽऋषयोऽसृज्यन्ते'[11]ति सप्तर्षयोऽत्रासृज्यन्त 'धाताधिपतिरासीदि'[12]ति धातात्राधिपतिरासीत् ॥ ६ ॥ 'नवभिरस्तुवते'[13]ति । नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तैरेव तदस्तुवत 'पितरोऽसृज्यन्ते'[14]ति पितरोऽत्रासृज्यन्तादितिरधिपत्न्यासीदि'[15]त्यदितिरत्राधिपत्न्यासीत् ॥७॥ *

(१) शु० य० सं० अ० १४ क० २८। (२) शु० य० सं० अ० १४ क० २८। (३) शु० य० सं० अ० १४ क० २८। (४) शु० य० सं० अ० १४ क० २८। (५) शु० य० सं० अ० १४ क० २८। (६) शु० य० सं० अ० १४ क० २८। (७) शु० य० सं० अ० १४ क० २८। (८) शु० य० सं० अ० १४ क० २८। (९) शु० य० सं० अ० १४ क० २८। (१०) शु० य० सं० अ० १४ क० २८। (११) शु० य० सं० अ० १४ क० २८। (१२) शु० य० सं० अ० १४ क० २९। (१३) शु० य० सं० अ० १४ क० २९। (१४) शु० य० सं० अ० १४ क० २९। (१५) शु० य० सं० अ० १४ क० २९।

* अत्र शतम् ७५०० ॥

'एकादशभिरस्तुवते'ति । दश प्राणा ऽआत्मैकादशस्तेनैव तदस्तुवत ऽऋतवोऽसृज्यन्ते'त्यृतवोऽत्रासृज्य'न्तार्त्तवा-ऽअधिपतय ऽआसन्नि'त्यार्त्तवा ऽअत्राधिपतय ऽआसन् ॥ ८ ॥ 'त्रयोदशभिरस्तुवते'ति । दश प्राणा द्वे प्रतिष्ठे ऽआत्मा त्रयोदशस्तेनैव तदस्तुवत 'मासा ऽअसृज्यन्ते'ति मासा ऽअत्रासृज्यन्त 'संवत्सरोऽधिपतिरासीदि'ति संव-त्सरोऽत्राधिपतिरासीत् ॥ ९ ॥ 'पञ्चदशभिरस्तुवते'ति । दश हस्त्या ऽअङ्गुलयश्चत्वारि दोर्बाहवाणि यदूर्ध्वं नाभे-स्तत्पञ्चदशं तेनैव तदस्तुवत 'क्षत्रमसृज्यते'ति क्षत्रमत्रा-सृज्य'तेन्द्रोऽधिपतिरासीदि'तीन्द्रोऽत्राधिपतिरासीत् ॥ १० ॥ 'सप्तदशभिरस्तुवते'ति । दश पाद्या ऽअङ्गुलयश्चत्वार्य्यू-र्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तदशं तेनैव ततस्तु-वत 'ग्राम्म्याः पशवोऽसृज्यन्ते'ति ग्राम्म्याः पशवोऽत्रासृ-ज्यन्त 'बृहस्प्पतिरधिपतिरासीदि'ति बृहस्प्पतिरत्राधिपति-रासीत् ॥ ११ ॥ 'नवदशभिरतुवते'ति । दश हस्त्या-ऽअङ्गुलयो नव प्राणास्तैरेव तदस्तुवत 'शूद्रार्य्यावसृज्येता-मि'ति शूद्रार्य्यावत्रासृज्येता'महोरात्रे ऽअधिपत्नी ऽआस्ता-

(१) शु० य० सं० अ० १४ क० २९। (२) शु० य० सं० अ० १४ क० २९। (३) शु० य० सं० अ० १४ क० २९। (४) शु० य० सं० अ० १४ क० २९। (५) शु० य० सं० अ० १४ क० २९। (६) शु० य० सं० अ० १४ क० २९। (७) शु० य० सं० अ० १४ क० २९। (८) शु० य० सं० अ० १४ क० २९। (९) शु० य० सं० अ० १४ क० २९। (१०) शु० य० सं० अ० १४ क० २९। (११) शु० य० सं० अ० १४ क० २९। (१२) शु० य० सं० अ० १४ क० २९। (१३) शु० य० सं० अ० १४ क० ३०। (१४) शु० य० सं० अ० १४ क० ३०। (१५) शु० य० सं० अ० १४ क० ३०।

मि'त्यहोरात्रे ऽअत्राधिपत्नी ऽआस्ताम् ॥ १२ ॥ 'एकविꣳशत्यास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशस्तेनैव तदस्तु'वतैकशफाः पशवोऽसृज्यन्ते'त्येकशफाः पशवोऽत्रासृज्यन्त 'वरुणोऽधिपतिरासीदि'ति वरुणोऽत्राधिपतिरासीत् ॥ १३ ॥ 'त्रयोविꣳशत्यास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्या द्वे प्रतिष्ठे ऽआत्मा त्रयोविꣳशस्तेनैव तदस्तुवत 'क्षुद्राः पशवोऽसृज्यन्ते'ति क्षुद्राः पशवोऽत्रासृज्यन्त 'पूषाधिपतिरासीदि'ति पूषात्राधिपतिरासीत् ॥ १४ ॥ 'पञ्चविꣳशत्यास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्याश्चत्वार्य्यङ्गान्यात्मा पञ्चविꣳशस्तेनैव त'दस्तुवतारण्याः पशवोऽसृज्यन्ते'त्यारण्याः पशवोऽत्रासृज्यन्त 'वायुरधिपतिरासीदि'ति वायुरत्राधिपतिरासीत् ॥ १५ ॥ 'सप्तविꣳशत्यास्तुवं-ते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्याश्चत्वार्य्यङ्गानि द्वे प्रतिष्ठे ऽआत्मा सप्तविꣳशस्तेनैव तदस्तुवत 'द्यावापृथिवी व्यैतामि'ति द्यावापृथिवी ऽअत्र व्यैतां वसवो रुद्रा ऽआदित्या ऽअनुव्यायन्नि'ति वसवो रुद्रा ऽआदित्या ऽअ'त्रानुव्यायꣳस्त ऽएवाधिपतय ऽआसन्नि'ति त ऽउ-

(१) शु० य० सं० अ० १४ क० ३० । (२) शु० य० सं० अ० १४ क० ३० । (३) शु० य० सं० अ० १४ क० ३० । (४) शु० य० सं० अ० १४ क० ३० । (५) शु० य० सं० अ० १४ क० ३० । (६) शु० य० सं० अ० १४ क० ३० । (७) शु० य० सं० अ० १४ क० ३० । (८) शु० य० सं० अ० १४ क० ३० । (९) शु० य० सं० अ० १४ क० ३० । (१०) शु० य० सं० अ० १४ क० ३० । (११) शु० य० सं० अ० १४ क० ३० (१२) शु० य० सं० अ० १४ क० ३० । (१३) शु० य० सं० अ० १४ क० ३० ।

ऽएवात्राधिपतय ऽआसन् ॥ १६ ॥ 'नवविꣳशत्यास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्या नव प्प्राणास्तैरेव तदस्तुवत 'व्वनस्प्पतयोऽसृज्ज्यन्ते'ति व्वनस्प्पतयोऽत्रासृज्ज्यन्त 'सोमोऽधिपतिरासीदि'ति सोमोऽत्राधिपतिरासीत् ॥ १७ ॥ 'एकत्रिꣳशतास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्या दश प्प्राणा ऽआत्मैकत्रिꣳशस्तेनैव तदस्तुवत 'प्प्रजा ऽअसृज्ज्यन्ते'ति प्प्रजा ऽअत्रासृज्ज्यन्त 'यवाश्चायवाश्चाधिपतय ऽआसन्नि'ति पूर्वपक्षापरपक्षा ऽएवात्राधिपतय ऽआसन् ॥ १८ ॥ 'त्रयस्त्रिꣳशतास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्या दश प्प्राणा द्वे प्प्रतिष्ठे ऽआत्मा त्रयस्त्रिꣳशस्तेनैव तदस्तुवत 'भूतान्यशाम्यन्निति' सर्वाणि भूतान्यत्राशाम्य'न्प्रजापतिः परमेष्ठ्यधिपतिरासीदि'ति प्प्रजापतिः परमेष्ठ्यत्राधिपतिरासीत् ॥ १९ ॥ ता वा ऽएताः । सप्तदशेष्टका ऽउपदधाति सप्तदशो वै संवत्सरः प्प्रजापतिः स प्प्रजनयिता तदेतेन वै सप्तदशेन संवत्सरेण प्प्रजापतिना प्प्रजनयित्रैताः प्प्रजाः प्प्राजनयद्यत्प्राजनयदसृजत तद्यदसृजत तस्मात्सृष्टयस्ताः सृष्ट्वात्मन्प्रापादयत तथैवैतद्यजमान ऽएतेन सप्तदशेन संवत्सरेण प्प्रजापतिना प्प्रजन-

(१) शु० य० सं० अ० १४ क० ३१। (२) शु० य० सं० अ० १४ क० ३१। (३) शु० य० सं० अ० १४ क० ३१। (४) शु० य० सं० अ० १३ क० ३१। (५) शु० य० सं० अ० १४ क० ३१। (६) शु० य० सं० अ० १४ क० ३१। (७) शु० य० सं० अ० १४ क० ३१। (८) शु० य० सं० अ० १४, क० ३१। (९) शु० य० सं० अ० १४ क० ३१।

यित्रैताः प्प्रजाः प्प्रजनयति ताः सृष्ट्वात्मन्प्रपादयते रेतः-सिचोर्वेलया पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मध्यत-ऽएवास्मिन्नेताः प्प्रजाः प्प्रपादयति सर्व्वत ऽउपदधाति सर्व्वत ऽएवास्मिन्नेताः प्प्रजाः प्प्रपादयति ॥ २० ॥ (C)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०५ ॥

—※—

[ स्तोमचित्यर्थवादः ]

अथातोऽन्न्वावृतम् । त्रिवृद्वतीं पुरस्तादुपदधात्त्येक-विंशवतीं पश्चात्पञ्चदशवतीं दक्षिणतः सप्तदशवती-मुत्तरतः ॥ १ ॥ एतद्वै प्प्रजापतिम् । त्रिवृद्वत्त्यामुपहितायां पञ्चदशवत्त्यां मृत्त्युरसीददिमामत ऽउपधास्यते तमत्र ग्रहीष्यामीति तं प्रापश्यत्तं प्रख्याय परिक्रम्म्यैकविंशवती मुपाधत्तैकविंशवतीं मृत्त्युरागच्छत्पञ्चदशवतीमुपाधत्त पञ्चदशवतीं मृत्त्युरागच्छत्सप्तदशवतीमुपाधत्त सोऽत्रैव मृत्त्युं न्न्यकरोदुत्रामोहयत्तथैवैतद्यजमानोऽत्रैव सर्व्वान्न्पा-प्प्मनो निकरोत्त्यत्र मोहयति ॥ २ ॥ अथोत्तराः । त्रिवृ-द्वत्त्यामेव त्रिवृद्वतीमनूपदधात्त्येकविंशवत्त्यामेकविंशवतीं पञ्चदशवत्त्याᳬ सप्तदशवतीᳬ सप्तदशवत्त्यां पञ्चदशवतीं

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०.४.३; कठ० सं० १७.५; कपि० सं० २६.४; मै० सं० ११.८.६; तै० सं० ४.३.१०।

ता यदेवं व्व्यतिहारमुपदधाति तस्माद्दक्षिणया स्तोमीयाऽअथो यदेते स्तोमा ऽअतोऽन्न्यथानुपूर्वं तस्माद्वेवाक्षिणयास्तोमीया ऽअथो ऽएवं देवा ऽउपादधतेतरथासुरास्ततो देवा ऽअभवन्न्परासुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्व्यो भवति य ऽएवं व्वेद ॥ ३ ॥ स ऽएष पशुर्य्यदग्निः । सोऽत्रैव सर्व्वः कृत्स्नः संस्कृतस्तस्य त्रिवृद्वत्यावेव शिरस्ते यत्त्रिवृद्वत्यौ भवतस्त्रिवृद्धि शिरो द्वे भवतो द्विकपालꣳ हि शिरः पूर्व्वार्द्ध ऽउपदधाति पुरस्ताद्धीदꣳ शिरः ॥ ४ ॥ प्रतिष्ठैकविꣳशवत्यौ । ते यदेकविꣳशवत्यौ भवतः प्प्रतिष्ठा ह्येकविꣳशो द्वे भवतो द्वन्द्वꣳ हि प्प्रतिष्ठा पश्चादुपदधाति पश्चाद्धीयं प्रतिष्ठा ॥ ५ ॥ बाहू पञ्चदशवत्यौ । ते यत्पञ्चदशवत्यौ भवतः पञ्चदशौ हि बाहू द्वे भवतो द्वौ हीमौ बाहू पार्श्वत ऽउपदधाति पार्श्वतो हीमौ बाहू ॥ ६ ॥ अन्नꣳ सप्तदशवत्यौ । ते यत्सप्तदशवत्यौ भवतः सप्तदशꣳ ह्यन्नं द्वे भवतो द्व्यक्षरꣳ ह्यन्नं ते ऽअनन्तर्हिते पञ्चदशवतीब्भ्यामुपदधात्यनन्तर्हितं तद्बाहुब्भ्यामन्नं दधाति बाह्ये पञ्चदशवत्यौ भवतोऽन्तरे सप्तदशवत्यौ बाहुब्भ्यां तदुभयतोऽन्नं परिगृह्णाति ॥ ७ ॥ अथ या मद्ध्यऽउपदधाति । स ऽआत्मा ता रेतःसिचोर्व्वेलयोपदधाति पृष्ट्यो वै रेतःसिचौ मद्ध्यमु पृष्ट्यो मद्ध्यतो ह्ययमात्मा सर्व्वत ऽउपदधाति सर्व्वतो ह्ययमात्माथ यदतोऽन्न्यदतिरिक्तं तद्यद्वै देवानामतिरिक्तं छन्दाꣳसि तानि तद्यानि तानि च्छन्दाꣳसि पशवस्ते तद्ये ते पशवः पुण्यास्ता

लक्ष्म्यस्तद्यास्ताः पुण्या लक्ष्म्योऽसौ स ऽआदित्यः स-ऽआसामेष दक्षिणतः ॥ ८ ॥ ता हैकेऽनन्तर्हिताः। त्रिवृद्वती-भ्यामुपदधति जिह्वा हनू ऽइति वदन्तो याश्चतुर्दश ते हनू याः षट् सा जिह्वेति न तथा कुर्य्यादिति ते रेचयन्ति यथा पूर्वयोर्हन्वोरपरे हनू ऽअनूपदध्याद्यथा पूर्वस्यां जिह्वा-यामपरां जिह्वामनूपदध्यात्तादृक्तद्यत्राहैव शिरस्तदेव हनू तज्जिह्वा ॥ ९ ॥ अस्मिन्नु हैकेऽवान्तरदेश ऽउपदधति। असौ वा ऽआदित्य ऽएता ऽअमुं तदादित्यमेतस्यां दिशि दध्म ऽइति न तथा कुर्य्यादन्यानि वाव तानि कर्म्माणि यैरेतमत्र दधाति ॥ १० ॥ दक्षिणत ऽउ हैक ऽउपदधति। तदेताः पुण्या लक्ष्मीर्दक्षिणतो दध्मह ऽइति तस्मा-द्यस्य दक्षिणतो लक्ष्म भवति तं पुण्यलक्ष्मीक ऽइत्या-चक्षत ऽउत्तरतस्त्रिया ऽउत्तरत ऽआयतना हि स्त्री तत्त-स्कृतमेव पुरस्तात्त्वेवैना ऽउपदध्याद्यत्राहैव शिरस्तदेव हनू तज्जिह्वाऽथैताः पुण्या लक्ष्मीर्म्मुखतो धत्ते तस्माद्यस्य मुखे लक्ष्म भवति तं पुण्यलक्ष्मीक ऽइत्याचक्षते ॥ ११ ॥ सैषा ब्रह्मचितिः। यद् ब्रह्मोपादधत तस्माद् ब्रह्मचितिः सा प्रजापतिचितिर्य्यत्प्रजापतिमुपादधत तस्मात्प्रजा-पतिचितिः सर्षिचितिर्य्यदृषीनुपादधत तस्मादृषिचितिः सा वायुचितिर्य्यद्वायुमुपादधत तस्माद्वायुचितिः सा स्तोमचितिर्य्यत्स्तोमानुपादधत तस्मात्स्तोमचितिः सा प्राणचितिर्य्यत्प्राणानुपादधत तस्मात्प्राणचितिरतो यतम-देव कतमच्च विद्यात्तेन हैवास्यैषार्षेयवती बन्धुमती चितिर्भ-

वत्यथ लोकम्पृणे ऽउपदधात्त्यस्याᳫं स्रक्त्यां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः ॥ १२ ॥ (D)

चतुर्थोध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ पञ्चम्यां चितावसपत्नेष्टकोपधानम् ]

पञ्चमीं चितिमुपदधाति । एतद्वै देवाश्चतुर्थीं चितिं चित्वा समारोहन्यदूर्द्ध्वमन्तरिक्षादर्वाचीनं दिवस्तदेव तत्संस्कृत्य समारोहन् ॥ १ ॥ तेऽब्रुवन् । चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवन्नित ऽऊर्द्ध्वमिच्छतेति ते चेतयमाना दिवमेव विराजं पञ्चमीं चितिमपश्यँस्तेभ्य-ऽएष लोको*ऽच्छदयत् ॥ २ ॥ तेऽकामयन्त । असपत्नमिमं लोकमनुपबाधं कुर्वीमहीति तेऽब्रुवन्नुप तज्जानीत यथेमं लोकमसपत्नमनुपबाधं करवामहा ऽइति तेऽब्रुवँश्चेतयद्ध्व-मिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथेमं लोक-मसपत्नमनुपबाधं करवामहा ऽइति ॥ ३ ॥ ते चेतयमानाः । एता ऽइष्टका ऽअपश्यन्नसपत्नास्ता ऽउपादधत ताभिरेतं लोकमसपत्नमनुपबाधमकुर्वत तद्यदेताभिरेतं लोकमस-पत्नमनुपबाधमकुर्वत तस्मादेता ऽअसपत्नास्तथैवैतद्य-जमानो यदेता ऽउपदधात्त्येतमेवैतल्लोकमसपत्नमनुपबाधं कुरुते सर्वत ऽउपदधाति सर्वत ऽएवैतदेतं लोकमसपत्न-

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ४. ४।

* 'ऽच्छन्दयत्' इति 'ग-ज' पुस्तकयोः ।

मनुपबाधं कुरुते परार्द्ध ऽउपदधाति सर्वमेवैतदेतं लोक-
मसपत्नमनुपबाधं कुरुते ॥ ४ ॥ अथ विराज ऽउप-
दधाति । एषा वै सा विराड्यां तद्देवा विराजं पञ्चमीं
चितिमपश्यँस्ता दश-दशोपदधाति दशाक्षरा विराड्वि-
राडेषा चितिः सर्वत ऽउपदधाति यो वा ऽएकस्यां
दिशि विराजति न वै स विराजति यो वाव सर्वासु
दिक्षु विराजति स ऽएव विराजति ॥ ५ ॥ यद्वे-
वैता * ऽअसपत्ना ऽउपदधाति । एतद्वै प्रजा-
पतिमेतस्मिन्नात्मनः प्रतिहिते सर्वतः पाप्मोपाय-
तत स ऽएता ऽइष्टका ऽअपश्यदसपत्नास्ता ऽउपाधत्त
ताभिस्तं पाप्मानमपाहत पाप्मा वै सपत्नस्तद्यदेता-
भिः पाप्मानꣳ सपत्नमपाहत तस्मादेता ऽअस-
पत्नाः ॥ ६ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदं
न्विमꣳ स पाप्मा नोपयतते यत्त्वेतत्करोति यद्देवा-
ऽअकुर्वंस्तत्करवाणीत्यथो य ऽएव पाप्मा यः सपत्नस्त-
मेताभिरपहते तद्यदेताभिः पाप्मानꣳ सपत्नमपहते
तस्मादेता ऽअसपत्नाः सर्वत ऽउपदधाति सर्वत ऽएवै-
तत्पाप्मानꣳ सपत्नमपहते परार्द्ध ऽउपदधाति सर्वस्मा-
देवैतदात्मनः पाप्मानꣳ सपत्नमपहते ॥ ७ ॥ स पुरस्ता-
दुपदधाति । '[1]अग्ने जातान्प्रणुदा नः सपत्नानि'ति यथैव
यजुस्तथा बन्धुरथ पश्चा'[2]त्सहसा जातान्प्रणुदा नः
सपत्नानि'ति यथैव यजुस्तथा बन्धुः ॥ ८ ॥ सा या

* का० श्रौ० सू० १७. ११. १-३।

(१) शु० य० सं० अ० १५ क० १। (२) शु० य० सं० अ० १५ क० २।

पुरस्तादग्निः सा। या पश्चादग्निः साग्निनैव तत्पुरस्ता-त्पाप्मानमपाहताग्निना पश्चात्तथैवैतद्यजमानोऽग्निनैव पुर-स्तात्पाप्मानमपहतेऽग्निना पश्चात् ॥ ९ ॥ अथ दक्षि-णतः। 'षोडशी[1] स्तोम ऽओजो द्रविणमि'त्येकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभमन्तरिक्षं चतस्रो दिश ऽएष ऽएव वज्रः पञ्चदशस्तस्यासावेवादित्यः षोडशी वज्रस्य भर्त्ता स ऽएतेन पञ्चदशेन वज्रेणैतया त्रिष्टुभा दक्षिणतः पाप्मानमपाहत तथैवैतद्यजमान ऽएतेन पञ्चदशेन वज्रे-णैतया त्रिष्टुभा दक्षिणतः पाप्मानमपहते ॥ १० ॥ अथोत्तरतः। 'चतुश्चत्वारिꣳश[2] स्तोमो वर्चो द्रविण-मि'ति चतुश्चत्वारिꣳशदक्षरा वै त्रिष्टुप्त्रैष्टुभो वज्रः स ऽएतेन चतुश्चत्वारिꣳशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपाहत तथैवैतद्यजमान ऽएतेन चतुश्चत्वारिꣳशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपहते ॥ ११ ॥ अथ मध्ये। 'अग्नेः[3] पुरीषमसी'ति ब्रह्म वै चतुर्थी चितिरग्निरु वै ब्रह्म तस्या ऽएतत्पुरीषमिव यत्पञ्च'प्स्युप्प्सो[4] नामे'ति तस्यो-क्तो बन्धुः ॥ १२ ॥ तां प्राचीं तिरश्चीमुपदधाति। एतद्वै-तया प्रजापतिः पाप्मानो मूलमवृश्चत्तथैवैनयायमेतत्पा-प्मनो मूलं वृश्चति दक्षिणतो दक्षिणत ऽउद्यामो हि वज्रोऽन्तरेण दक्षिणां दिश्यमुद्यामाय ह तमवकाशं करोति ॥ १३ ॥ सा या पुरस्तात्प्राणः सा। या पश्चादपानः

(१) शु० य० सं० अ० १५ कं० ३। (२) शु० य० सं० अ० १५ कं० ३।
(३) शु० य० सं० अ० १५ कं० ३। (४) शु० य० सं० अ० १५ कं० ३।

सा प्राणेनैव तत्पुरस्तात्पाप्मानमपाहतापानेन पश्चात्त-
थैवैतद्यजमानः प्राणेनैव पुरस्तात्पाप्मानमपहतेऽपानेन
पश्चात् ॥ १४ ॥ अथ ये ऽअभितः । तौ बाहू स योऽ-
स्याभितः पाप्मासीद् बाहुभ्यां तमपाहत तथैवैतद्यज-
मानो योऽस्याभितः पाप्मा भवति बाहुभ्यामेव तम-
पहते ॥ १५ ॥ अन्नं पुरीषवती । स योऽस्योपरिष्टात्पा-
प्मासीदन्नेन तमपाहत तथैवैतद्यजमानो योऽस्योपरिष्टा-
त्पाप्मा भवत्यन्नेनैव तमपहते ॥ १६ ॥ स यद्ध वा-
ऽएवंवित्प्राणिति । योऽस्य पुरस्तात्पाप्मा भवति तं तेना-
पहतेऽथ यदपानिति तेन तं यः पश्चादथ यद्बाहुभ्यां
कर्म्म कुरुते तेन तं योऽभितोऽथ यदन्नमत्ति तेन तं य-
ऽउपरिष्टात्सर्वदा ह वा ऽएवंवित्पाप्मानमपहतेऽपि
स्वपँस्तस्मादेवं विदुषः पापं न कीर्त्तयेन्नेदस्य पाप्मासा-
नीति ॥ १७ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



अथ छन्दस्या ऽउपदधाति । एतद्वै प्रजापतिः
पाप्मनो मृत्योर्म्मुक्त्वान्नमैच्छत्तस्मादु हैतदुपतापी
वसीयान्भूत्वान्नमिच्छति तस्मिन्नाशःसन्तेऽन्नमिच्छ-
ति जीविष्यतीति तस्मै देवा ऽएतदन्नं प्राय-
च्छन्नेताश्छन्दस्याः पशवो वै छन्दाꣳस्यन्नं पशवस्ता-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १०. ५. १; कठ० सं० १७. ६; कपिष्ठ० २६. ५; मै० सं० ११. ८. ७; तै० सं० ४. ३. १२।

ऽयस्मा ऽअच्छदयँस्तानि यदस्मा ऽअच्छदयँस्तस्माच्छन्दाꣳसि ॥ १ ॥ ता दश * दशोपदधाति । दशाक्षरा विराड् विराडु कृत्स्नमन्नꣳ सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति सर्वत ऽउपदधाति सर्वत ऽएवास्मिन्नेतत्कृत्स्नमन्नं दधाति ॥ २ ॥ 'एवश्छन्द' ऽइति । अयं वै लोक ऽएवश्छन्दो 'वरिवश्छन्द'[2] ऽइत्यन्तरिक्षं वै वरिवश्छन्दः 'शम्भूश्छन्द'[3] ऽइति द्यौर्वै शम्भूश्छन्दः 'परिभूश्छन्द'[4] ऽइति दिशो वै परिभूश्छन्द 'ऽआच्छच्छन्द'[5] ऽइत्यन्नं वा ऽआच्छच्छन्दो 'मनश्छन्द'[6] ऽइति प्रजापतिर्वै मनश्छन्दो 'व्यचश्छन्द' ऽइत्यसौ वा ऽआदित्यो व्यचश्छन्दः ॥ ३ ॥ 'सिन्धुश्छन्द' ऽइति । प्राणो वै सिन्धुश्छन्दः 'समुद्रश्छन्द' ऽइति मनो वै समुद्रश्छन्दः 'सरिरं छन्द'[10] ऽइति वाग्वै सरिरं छन्दः 'ककुप्छन्द'[11] ऽइति प्राणो वै ककुप्छन्दस्'त्रिककुप्छन्द'[12] ऽइत्युदानो वै त्रिककुप्छन्दः 'काव्यं छन्द'[13] ऽइति त्रयी वै विद्या काव्यं छन्दोऽङ्कुपं छन्द ऽइत्यापो वा ऽअङ्कुपं छन्दो'ऽक्षरपङ्क्तिश्छन्द'[14] ऽइत्यसौ वै लोकोऽक्षरपङ्क्तिश्छन्दः 'पदपङ्क्तिश्छन्द'[15] ऽइत्ययं वै लोकः

* का० श्रौ० सू० १७. ११. ५ ।

(१) शु० य० सं० अ० १५ क० ४ । (२) शु० य० सं० अ० १५ क० ४ । (३) शु० य० सं० अ० १५ क० ४ । (४) शु० य० सं० अ० १५ क० ४ । (५) शु० य० सं० अ० १५ क० ४ । (६) शु० य० सं० अ० १५ क० ४ । (७) शु० य० सं० अ० १५ क० ४ । (८) शु० य० सं० अ० १५ क० ४ । (९) शु० य० सं० अ० १५ क० ४ । (१०) शु० य० सं० अ० १५ क० ४ । (११) शु० य० सं० अ० १५ क० ४ । (१२) शु० य० सं० अ० १५ क० ४ । (१३) शु० य० सं० अ० १५ क० ४ । (१४) शु० य० सं० अ० १५ क० ४ । (१५) शु० य० सं० अ० १५ क० ४ ।

पदुपङ्क्तिश्छन्दो 'विष्टारपङ्क्तिश्छन्दः'[1] ऽइति दिशो वै विष्टारपङ्क्तिश्छन्दः 'क्षुरो भ्रजश्छन्द'[2] ऽइत्यसौ वाऽआदित्यः क्षुरो भ्रजश्छन्द 'ऽआच्छच्छन्दः[3] प्रच्छच्छन्द'ऽइत्यन्नं वा ऽआच्छच्छन्दोऽन्नं प्रच्छच्छन्दः ॥ ४ ॥ 'सँयच्छन्द'[4] ऽइति । रात्रिर्वै सँयच्छन्दो 'वियच्छन्द'[5]ऽइत्यहर्वै वियच्छन्दो 'बृहच्छन्द'[6] ऽइत्यसौ वै लोको बृहच्छन्दो 'रथन्तरं छन्द'[7] ऽइत्ययं वै लोको रथन्तरं छन्दो 'निकायश्छन्द'[8] ऽइति वायुर्वै निकायश्छन्दो 'विवधश्छन्द[9]ऽइत्यन्तरिक्षं वै विवधश्छन्दो 'गिरश्छन्द'[10] ऽइत्यन्नं वै गिरश्छन्दो 'भ्रजश्छन्द'[11] इत्यग्निर्वै भ्रजश्छन्दः 'सष्टुस्तुप्छन्दोऽनुष्टुप्छन्द'[12] ऽइति वागेव सष्टुस्तुप्छन्दो वागनुष्टुप्छन्द 'ऽएवश्छन्दो[13] वरिवश्छन्द' ऽइति तस्योक्तो बन्धुः ॥ ५ ॥ 'वयश्छन्द'[14] ऽइति । अन्नं वै वयश्छन्दो 'वयस्कृच्छन्द'[15] ऽइत्यग्निर्वै वयस्कृच्छन्दो 'विष्पर्धाश्छन्द'[16] ऽइत्यसौ वै लोको विष्पर्धाश्छन्दो 'विशालं छन्द'[17] ऽइत्ययं वै लोको विशालं छन्द'[18] छदिश्छन्द' ऽइत्यन्तरिक्षं वै छदिश्छन्दो

---

(१) शु० य० सं० अ० १५ क० ४। (२) शु० य० सं० अ० १५ क० ४। (३) शु० य० सं० अ० १५ क० ५। (४) शु० य० स० अ० १५ क० ५। (५) शु० य० सं० अ० १५ क० ५। (६) शु० य० सं० अ० १५ क० ५। (७) शु० य० सं० अ० १५ क० ५। (८) शु० य० सं० अ० १५ क० ५। (९) शु० य० सं० अ० १५ क० ५। (१०) शु० य० सं० अ० १५ क० ५। (११) शु० य० सं० अ० १५ क० ५। (१२) शु० य० सं० अ० १५ क० ५। (१३) शु० य० सं० अ० १५ क० ५। (१४) शु० य० सं० अ० १५ क० ५। (१५) शु० य० सं० अ० १५ क० ५। (१६) शु० य० सं० अ० १५ क० ५। (१७) शु० य० सं० अ० १५ क० ५। (१८) शु० य० सं० अ० १५ क० ५।

'दूरोहणं[1] छन्द' ऽइत्यसौ वा ऽआदित्यो दूरोहणं छन्द-
स्तन्द्रं[2] छन्द' ऽइति पङ्क्तिर्वै तन्द्रं छन्दो'ऽङ्काङ्कं[3] छन्द'
ऽइत्यापो वा ऽअङ्काङ्कं छन्दः ॥ ६ ॥ तद्याः पुरस्तादु-
पदधाति । प्राणस्तासां प्रथमा व्यानो द्वितीयोदानस्तृ-
तीयोदानश्चतुर्थी व्यानः पञ्चमी प्राणः षष्ठी प्राणः
सप्तमी व्यानोऽष्टम्युदानो नवमी यजमान ऽएवात्र
दशमी स ऽएष यजमान ऽएतस्यां विराज्यध्यूढः प्रति-
ष्ठितः प्राणमय्यामर्वाचीश्च पराचीश्चोपदधाति तस्मा-
दिमे प्राणा ऽअर्वाञ्चश्च पराञ्चश्च ॥ ७ ॥ अथ या
दक्षिणतः । अग्निस्तासां प्रथमा वायुर्द्वितीयादित्यस्तृतीया-
दित्यश्चतुर्थी वायुः पञ्चम्यग्निः षष्ठ्यग्निः सप्तमी
वायुरष्टम्यादित्यो नवमी यजमान ऽएवात्र दशमी स-
ऽएष यजमान ऽएतस्यां विराज्यध्यूढः प्रतिष्ठितो देवता-
मय्यामर्वाचीश्च पराचीश्चोपदधाति तस्मादेते देवा-
ऽअर्वाञ्चश्च पराञ्चश्च ॥ ८ ॥ अथ याः पश्चात् । अयं
लोकस्तासां प्रथमान्तरिक्षं द्वितीया द्यौस्तृतीया द्यौश्च-
तुर्थ्यन्तरिक्षं पञ्चम्ययं लोकः षष्ठ्ययं लोकः सप्तम्य-
न्तरिक्षमष्टमी द्यौर्नवमी यजमान ऽएवात्र दशमी स-
ऽएष यजमान ऽएतस्यां विराज्यध्यूढः प्रतिष्ठितो लोक-
मय्यामर्वाचीश्च पराचीश्चोपदधाति तस्मादिमे
लोका ऽअर्वाञ्चश्च पराञ्चश्च ॥ ९ ॥ अथ या ऽउत्तरतः ।

(१) शु० य० सं० अ० १५ क० ५। (२) शु० य० सं० अ० १५ क० ५।
(३) शु० य० सं० अ० १५ क० ५ ।

ग्रीष्मस्तासां प्रथमा वर्षा द्वितीया हेमन्तस्तृतीया हेमन्त-
श्चतुर्थी वर्षाः पञ्चमी ग्रीष्मः षष्ठी ग्रीष्मः सप्तमी
वर्षा ऽअष्टमी हेमन्तो नवमी यजमान ऽएवात्र दशमी स-
ऽएष यजमान ऽएतस्यां विराज्ज्यद्व्यूढः प्रतिष्ठित-
ऽऋतुमय्यामर्वाचीश्च पराचीश्चोपदधाति तस्मादेत-
ऽऋतवोऽर्वाञ्चश्च पराञ्चश्च ॥ १० ॥ अथ पुनरेव । याः
पुरस्तादुपदधाति प्राणास्ते ता दश भवन्ति दश वै प्राणाः
पूर्वार्द्ध ऽउपदधाति पुरस्ताद्धीमे प्राणाः ॥ ११ ॥ अथ या
दक्षिणतः । एतास्ता देवता ऽअग्निश्च पृथिवी च वायु-
श्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि
चान्नं चापश्च ॥ १२ ॥ अथ याः पश्चात् । दिशस्ता-
श्चतस्रो दिशश्चतस्रोऽवान्तरदिश ऽऊर्द्ध्वा चेयं च
॥ १३ ॥ अथ या ऽउत्तरतः । मासास्ते वासन्तिकौ द्वौ
ग्रैष्मौ द्वौ वार्षिकौ द्वौ शारदौ द्वौ हैमन्तिकौ द्वौ ॥ १४ ॥
अथ पुनरेव । या प्रथमा दशदयः स लोको या द्विती-
यान्तरिक्षं तद्या तृतीया द्यौः सेममेव लोकं प्रथमया
दशतारोहन्नन्तरिक्षं द्वितीयया दिवं तृतीयया तथैवैतद्य-
जमान ऽइममेव लोकं प्रथमया दशता रोहत्यन्तरिक्षं
द्वितीयया दिवं तृतीयया ॥ १५ ॥ स स पराङिव रोहः ।
इयमु वै प्रतिष्ठा ते देवा ऽइमां प्रतिष्ठामभिप्रत्यायँ-
स्तथैवैतद्यजमान ऽइमां प्रतिष्ठामभिप्रत्यैत्यथ योत्तमा

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० सं० १०. ५. २; कठ० सं० १७. ६; कपि० २६. ५; मै० सं० ११. ८. ७. तै० सं० ४. ३. १२ ।

दशशदयः स लोकस्तस्माद्यथैव प्रथमायै दशतः प्रभृतिरेवमुत्तमायै समानꣳ ह्येतद्यदेते दशतावयमेव लोकः ॥ १६ ॥ ता वा ऽएताः । चत्वारिꣳशदिष्टकाश्चत्वारिꣳशद्यजूꣳषि तदशीतिरन्नमशीतिस्तद्यदेतदाह तदस्माऽअन्नमशीतिं कृत्वा प्रयच्छति तेनैनं प्रीणाति ॥ १७ ॥ (B)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पञ्चम्यां चितौ स्तोमभागेष्टकोपधानम् ]

अथ स्तोमभागा ऽउपदधाति । एतद्वै प्रजापतेरेतदन्नमिन्द्रोऽभ्यध्यायत्सोऽस्मादुदचिक्रमिषत्तमब्रवीत्क्व नु मदुत्क्रामसि कथा मा जहासीति स वै मेऽस्यान्नस्य रसं प्रयच्छेति तेन वै मा सह प्रपद्यस्वेति तथेति तस्मा-ऽएतस्यान्नस्य रसं प्रायच्छत्तेनैनꣳ सह प्रापद्यत ॥ १ ॥ स यः स प्रजापतिः । अयमेव स योऽयमग्निश्चीयतेऽथ यत्तदन्नमेतास्ताश्छन्दस्या ऽअथ यः सोऽन्नस्य रस-ऽएतास्ता * स्तोमभागा अथ यः स ऽइन्द्रोऽसौ स-ऽआदित्यः स ऽएष ऽएव स्तोमो यद्धि किञ्च स्तुवत-ऽएतमेव तेन स्तुवन्ति तस्मा ऽएतस्मै स्तोमायैतं भागं प्रायच्छत्तद्यदेतस्मै स्तोमायैतं भागं प्रायच्छत्तस्मात्स्तोमभागाः ॥ २ ॥ 'रश्मिरसि क्षयाय त्वा क्षयं जिन्व'ति । एष वै रश्मिरन्नः रश्मिरेतं च तद्रसं च सन्धायात्म-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ५. २ ।

* का० श्रौ० सू० १७. ११. ९ ।

(१) शु० य० सं० अ० १५ क० ६ ।

न्नप्रपादयते 'प्प्रेतिना धर्म्मणा धर्म्मं जिन्वे'त्येष वै प्प्रेतिरन्नं प्प्रेतिरेतं च तद्रसं च सन्धायात्मन्नप्रपादयते 'ऽन्विरत्या दिवा दिवं जिन्वे'त्येष वा ऽअन्वितिरन्नमन्वितिरेतं च तद्रसं च सन्धायात्मन्नप्रपादयते तद्यद्यदेतदाह तच्च तद्रसं च सन्धायात्मन्नप्रपादयतेऽमुनादो जिन्वादोऽस्यमुष्मै 'त्वाधिपतिनोर्जोर्जं जिन्वे'ति त्रेधाविहितात्त्रेधाविहितꣳ ह्यन्नम् ॥ ३ ॥ षड्वेव स्तोमभागा ऽउपदधाति । एतद्वै देवा विराजं चितिं चित्वा समारोहँस्तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्ते चेतयमाना नाकमेव स्वर्ग्गं लोकमपश्यँस्तमुपादधत स यः स नाकः स्वर्ग्गो लोक ऽएतास्ता स्तोमभागास्तद्यदेता ऽउपदधाति नाकमेवैतत्स्वर्ग्गं लोकमुपधत्ते ॥ ४ ॥ तद्यास्तिस्रः प्प्रथमाः । अयꣳ स लोको या द्वितीया ऽन्तरिक्षं तद्यास्तृतीया द्यौः सा याश्चतुर्थ्यः प्प्राची सा दिग्याः पञ्चम्यो दक्षिणा सा याः षष्ठ्यः प्प्रतीची सा याः सप्तम्य ऽउदीची सा ॥ ५ ॥ ता वाऽएताः । एकविꣳशतिरिष्टका ऽइमे च लोका दिशश्चेमे च वै लोका दिशश्च प्प्रतिष्ठेमे च लोका दिशश्चैकविꣳशस्तस्मादाहुः प्प्रतिष्ठैकविꣳश ऽइति ॥ ६ ॥ अथ याऽअष्टाविष्टका ऽअतियन्ति । साष्टाक्षरा गायत्री ब्रह्म गायत्री तद्यत्तद् ब्रह्मैतत्तद्यदेतन्मण्डलं तपति तदेतस्मिन्नेकविꣳशे प्प्रतिष्ठायां प्रतिष्ठितं तपति तस्मान्नावप-

(१) शु० य० सं० अ० १५ कं० ६। (२) शु० य० सं० अ० १५ कं० ६। (३) शु० य० सं० अ० १५ कं० ७।

ध्यते ॥ ७ ॥ तद्धैके *। वेषश्श्रीः 'क्षत्राय क्षत्रं जिन्वे'ति त्रिंशत्तमीमुपदधति त्रिंशदक्षरा विराड्विराडेषा चितिरिति न तथा कुर्य्यादिति ते रेचयन्त्येकविंशसम्पदमथो गायत्रीसम्पदमथो ऽइन्द्र लोको हैष यैषाऽन्यूना विराडिन्द्राय ह त ऽइन्द्रलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्तीन्द्रमिन्द्रलोकान्नुदन्ते यजमानो वै स्वे यज्ञ ऽइन्द्रो यजमानाय ह ते यजमानलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्ति यजमानं ऽयजमानलोकान्नुदन्ते यं वाऽएतमग्निमाहरन्त्येष ऽएव यजमान ऽआयतनेनैष ऽउऽएवात्र त्रिंशत्तमी ॥ ८ [ अर्धप्रपाठकः ५४॥ ] (C)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

ता ऽअषाढायै वेलयोपदधाति । वाग्वा ऽअषाढा रस ऽएष वाचि तद्रसं दधाति तस्मात्सर्वेषामङ्गानां वाचैवान्नस्य रसं विजानाति ॥ १ ॥ यद्वेवाषाढायै । इयं वा ऽअषाढासावादित्य स्तोमभागा ऽअमुं तदादित्यमस्यां प्रतिष्ठायां प्रतिष्ठापयति ॥ २ ॥ यद्वेवाषाढायै । इयं वाऽअषाढा हृदयꣳ स्तोमभागा ऽअस्यां तद्धृदयं मनो दधाति तस्मादस्याꣳ हृदयेन मनसा चेतयते सर्वतऽउपदधाति सर्वतस्तद्धृदयं मनो दधाति तस्मादस्याꣳ सर्वतो हृदयेन मनसा चेतयतेऽथो पुण्या

---

* का० श्रौ० सू० १७. ११. ११।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा- का० श० १०. ५. ३, कठ० १७. ७; कपिष्ठ० २६, ६; मै० सं० ११. ०. ४; तै० सं० ४. ४. १।

हैता लक्ष्म्यस्ता ऽएतत्सर्व्वतो धत्ते तस्म्माद्यस्य सर्व्वतो लक्ष्म भवति तं पुण्यलक्ष्मीक ऽइत्याचक्षते ॥ ३ ॥ अथैनाः पुरीषेण प्प्रच्छादयति। अन्नं व्वै पुरीषꣳ रस-ऽएष तमेतत्तिरः करोति तस्म्मात्तिर ऽइवान्नस्य रसः ॥ ४ ॥ यद्वेव पुरीषेण। अन्नं व्वै पुरीषꣳ रस ऽएषोऽन्नं च तद्रसं च सन्तनोति सन्दधाति ॥ ५ ॥ यद्वेव पुरीषेण। हृदयं व्वै स्तोमभागाः पुरीतत्पुरीषꣳ हृदयं तत्पुरीतता प्प्रच्छादयति ॥६॥ यद्वेव पुरीषेण। संव्वत्सर ऽएषोऽग्निस्त-मेतच्चितिपुरीषैर्व्यावर्त्तयति तद्याश्चतस्रः प्प्रथमाश्चित-तयस्ते चत्वार ऽऋतवोऽथ स्तोमभागा ऽउपधाय पुरीषं निव-पति सा पञ्चमी चितिः स पञ्चम ऽऋतुः ॥७॥ तदाहुः। यल्लोकम्पृणान्ता ऽअन्न्याश्चितयो भवन्ति नात्र लोक-म्पृणामुपदधाति क्वात्र लोकम्पृणेत्यसौ वा ऽआदित्यो लोकम्पृणैष ऽउ ऽएषा चितिः सैषा स्वयं लोकम्पृणा चितिरथ यदुत ऽऊर्द्ध्वमा पुरीषात्सा षष्ठी चितिः स षष्ठ ऽऋतुः ॥ ८ ॥ अथ पुरीषं निवपति। तत्र व्विकर्ण्णीं च स्वयमातृण्णां चोपदधाति हिरण्मयशकलैः प्प्रोक्षत्यग्निम-भ्यादधाति सा सप्तमी चितिः स सप्तम ऽऋतुः ॥ ९ ॥ ता ऽउ वै षडेव। यद्धि व्विकर्ण्णी च स्वयमातृण्णा च षष्ठ्या ऽएव तच्चितेः ॥ १० ॥ ता ऽउ वै पञ्चैव। यजुषान्न्यासु पुरीषं निवपति तूष्णीमत्र तेनैषा न चितिरथो लोकम्पृणान्ता ऽअन्न्याश्चितयो भवन्ति नात्र लोकम्पृणामुपदधाति तेनो ऽएवैषा न चितिः ॥ ११ ॥ ता-

ऽउ वै तिस्र ऽएव। अयमेव लोकः प्प्रथमा चितिर्द्यौ-रुत्तमाथ या ऽएतास्तिस्रस्तदन्तरिक्षं तद्वा ऽइदमेक-मिवैवान्तरिक्षं ता ऽएवं तिस्र ऽएवं पञ्चैवः षडेवः सप्त ॥ १२ ॥ (D)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

[ नाकसत्पञ्चचूडेष्टकोपधानम् ]

नाकसद ऽउपदधाति । देवा वै नाकसदोऽत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र नाकः स्वर्ग्गो लोकस्त-स्मिन्देवा ऽअसीदँस्तद्यदेतस्मिन्नाके स्वर्ग्गे लोके देवा ऽअसीदँस्तस्माद्देवा नाकसदस्तथैवैतद्यजमानो यदेता ऽउपदधात्येतस्मिन्नेवैतन्नाके स्वर्ग्गे लोके सीदति ॥ १ ॥ यद्वेव नाकसद * ऽउपदधाति । एतद्वै देवा ऽएतं नाकँ स्वर्ग्गं लोकमपश्यन्नेता स्तोमभागास्तेऽब्रुवन्नुप तज्जानीत यथास्मिन्नाके स्वर्ग्गे लोके सीदामेति तेऽ-ब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथास्मिन्नाके स्वर्ग्गे लोके सीदामेति ॥ २ ॥ ते चेत-यमानाः । एता ऽइष्टका ऽअपश्यन्नाकसदस्ता ऽउपा-दधत ताभिरेतस्मिन्नाके स्वर्ग्गे लोकेऽसीदँस्तद्यदेताभि-रेतस्मिन्नाके स्वर्ग्गे लोकेऽसीदँस्तस्मादेता नाकसद-

( D ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ५. ४।

* का० श्रौ० सू० १७. १२. १।

स्तथैवैतद्यजमानो यदेता ऽउपदधात्येतस्मिन्नेवैतन्नाके स्वर्ग्गे लोके सीदति ॥ ३ ॥ दिक्षूपदधाति । दिशो वै स नाकः स्वर्ग्गो लोकः स्वर्ग्ग ऽएवैना ऽएतल्लोके सादयत्यृतव्व्यानां व्वेलया संव्वत्सरो व्वा ऽऋतव्व्याः संव्वत्सरः स्वर्ग्गो लोकः स्वर्ग्ग ऽएवैना ऽएतल्लोके सादयत्यन्तस्तोमभागमेष वै स नाकः स्वर्ग्गो लोकस्तस्मिन्नेवैना ऽएतत्प्रतिष्ठापयति ॥ ४ ॥ स पुरस्तादुपदधाति । 'राज्ञ्यसि प्प्राची दिगि'ति राज्ञी ह नामैषा प्प्राची 'दि[2]ग्व्वसवस्ते देवा ऽअधिपतय' ऽइति व्वसवो हैतस्यै दिशो देवा 'ऽअधि[3]पतयोऽग्निर्हेतीनां प्रतिधर्त्तेत्य'ग्निर्हि व्वात्र हेतीनां प्रतिधर्त्ता 'त्रिवृ[4]त्त्वा स्तोमः पृथिव्व्याᳪ श्रयत्वि'ति त्रिवृता हैषा स्तोमेन पृथिव्व्याᳪ श्रि'ता[5]ज्यमुक्थमव्व्यथायै स्तभ्नात्वि'त्याज्येन हैषोक्थेनाव्व्यथायै पृथिव्व्याᳪ स्तब्धा 'र[6]थन्तरᳪ साम प्प्रतिष्ठित्या ऽअन्तरिक्ष' ऽइति रथन्तरेण हैषा साम्म्ना प्प्रतिष्ठितान्तरिक्ष 'ऽऋ[7]षयस्त्वा प्प्रथमजा देवेष्वि'ति प्प्राणा व्वा ऽऋषयः प्प्रथमजास्तद्धि ब्रह्म प्प्रथमजं 'दिवो [8]मात्रया व्वरिम्म्णा प्प्रथन्त्वि'ति यावती द्यौस्तावतीं व्वरिम्म्णा प्प्रथन्त्वित्ये'तद्वि[9]धर्त्ता चायमधिपतिश्चे'ति व्वाक्च तौ मनश्च

(१) शु० य० सं० अ० १५ क० १० । (२) शु० य० सं० अ० १५ क० १० । (३) शु० य० सं० अ० १५ क० १० । (४) शु० य० सं० अ० १५ क० १० । (५) शु० य० सं० अ० १५ क० १० । (६) शु० य० सं० अ० १५ क० १० । (७) शु० य० सं० अ० १५ क० १० । (८) शु० य० सं० अ० १५ क० १० । (९) शु० य० सं० अ० १५ क० १० ।

तौ हीदꣳ सर्वं विधारयत[1]स्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्वि'ति यथैव यजुस्तथा बन्धुः ॥ ५ ॥ अथ दक्षिणतः । 'विराडसि[2] दक्षिणा दिगि'ति विराड्ढ नामैषा दक्षिणा दि'ग्रुद्रास्ते[3] देवा ऽअधिपतय' ऽइति रुद्रा हैतस्यै दिशो देवा 'ऽअधि-[4]पतय ऽइन्द्रो हेतीनां प्रतिधर्त्ते'तीन्द्रो[5] हैवात्र हेतीनां प्रतिधर्त्ता 'पञ्चदशस्त्वा[6] स्तोमः पृथिव्याꣳ श्रयत्वि'ति पञ्चदशेन हैषा स्तोमेन पृथिव्याꣳ श्रिता प्र ऽउग-[7]मुक्थमव्यथायै स्तभ्नात्वि'ति प्र ऽउगेण हैषोक्थेना-व्यथायै पृथिव्याꣳ स्तब्धा 'बृहत्साम[8] प्रतिष्ठित्या-ऽअन्तरिक्ष' ऽइति बृहता हैषा साम्ना प्रतिष्ठिता-न्तरिक्ष ऽऋषयस्त्वा[9] प्रथमजा देवेष्वि'ति तस्योक्तो बन्धुः ॥ ६ ॥ अथ पश्चात् । 'सम्राडसि[10] प्रतीची दिगि'ति सम्राड्ढ नामैषा प्रतीची दि'गादित्यास्ते[11] देवा ऽअधि-पतय' ऽइत्यादित्या हैतस्यै दिशो 'देवा ऽअधिपतयो वरुणो हेतीनां प्रतिधर्त्ते'ति वरुणो हैवात्र हेतीनां प्रति-धर्त्ता 'सप्तदशस्त्वा[12] स्तोमः पृथिव्याꣳ श्रयत्वि'ति सप्तदशेन हैषा स्तोमेन पृथिव्याꣳ श्रिता 'मरुत्वती-[13]

(१) शु० य० सं० अ० १५ क० १० । (२) शु० य० सं० अ० १५ क० ११ । (३) शु० य० सं० अ० १५ क० ११ । (४) शु० य० सं० अ० १५ क० ११ । (५) शु० य० सं० अ० १५ क० ११ । (६) शु० य० सं० अ० १५ क० ११ । (७) शु० य० सं० अ० १५ क० ११ । (८) शु० य० सं० अ० १५ क० ११ । (९) शु० य० सं० अ० १५ क० १२ । (१०) शु० य० सं० अ० १५ क० १२ । (११) शु० य० सं० अ० १५ क० १२ । (१२) शु० य० सं० अ० १५ क० १२ । (१३) शु० य० सं० अ० १५ क० १२ ।

यमुक्थमव्यथायै स्तभ्नात्वि'ति मरुत्वतीयेन हैषो-क्थेनाव्यथायै पृथिव्याᳫँ स्तब्धा 'वैरूपᳫँ साम प्र-तिष्ठित्या ऽअन्तरिक्ष' ऽइति वैरूपेण हैषा साम्ना प्रतिष्ठि'तान्तरिक्ष ऽऋषयस्त्वा प्रथमजा देवेष्वि'ति तस्योक्तो बन्धुः ॥ ७ ॥ अथोत्तरतः । 'स्वराडस्युदीची दिगि'ति स्वराड्ढ नामैषोदीची दिङ् 'मरुतस्ते देवा-ऽअधिपतय' ऽइति मरुतो हैतस्यै दिशो देवा ऽअधि-पतयः 'सोमो हेतीनां प्रतिधर्त्ते'ति सोमो हैवात्र हेतीनां प्रतिध'र्त्तैकविᳫँशस्त्वा स्तोमः पृथिव्याᳫँ श्रयत्वि'त्ये-कविᳫँशेन हैषा स्तोमेन पृथिव्याᳫँ श्रिता 'निष्केव-ल्यमुक्थमव्यथायै स्तभ्नात्वि'ति निष्केवल्येन हैषो-क्थेनाव्यथायै पृथिव्याᳫँ स्तब्धा 'वैराजᳫँ साम प्रतिष्ठित्या ऽअन्तरिक्ष' ऽइति वैराजेन हैषा साम्ना प्रतिष्ठि'तान्तरिक्षे ऽऋषयस्त्वा प्रथमजा देवेष्वि'ति तस्योक्तो बन्धुः ॥ ८ ॥ अथ मध्ये । 'अधिपत्न्यसि बृहती दिगि'त्यधिपत्नी ह नामैषा बृहती 'दिग्विश्वे ते देवा ऽअधिपतय' ऽइति विश्वे हैतस्यै दिशो देवा-ऽअधिपतयो 'बृहस्पतिर्हेतीनां प्रतिधर्त्ते'ति बृहस्पति-

(१) शु० य० सं० अ० १५ क० १२। (२) शु० य० सं० अ० १५ क० १२। (३) शु० य० सं० अ० १५ क० १३। (४) शु० य० सं० अ० १५ क० १३। (५) शु० य० सं० अ० १५ क० १३। (६) शु० य० सं० अ० १५ क० १३। (७) शु० य० सं० अ० १५ क० १३। (८) शु० य० सं० अ० १५ क० १३। (९) शु० य० सं० अ० १५ क० १३। (१०) शु० य० सं० अ० १५ क० १४। (११) शु० य० सं० अ० १५ क० १४। (१२) शु० य० सं० अ० १५ क० १४।

हैवात्र हेतीनां प्रतिधर्त्त्री 'त्रिणवत्त्रयस्त्रिᳫंशौ त्त्वा स्तोमौ पृथिव्व्याᳫं श्रयतामि'ति त्रिणवत्त्रयस्त्रिᳫंशाब्भ्याᳫं हैषा स्तोमाब्भ्यां पृथिव्व्याᳫं श्रिता 'वैश्वदेवाग्निमारुते ऽउक्थे ऽअव्व्यथायै स्तब्भ्नीतामि'ति वैश्वदेवाग्निमारुताब्भ्याᳫं हैषोक्थाब्भ्यामव्व्यथायै पृथिव्व्याᳫं स्तब्धा 'शाक्वररैवते सामनी प्प्रतिष्ठित्त्या ऽअन्तरिक्ष' ऽइति शाक्वररैवताब्भ्याᳫं हैषा सामब्भ्यां प्रतिष्ठितान्तरिक्ष-'ऽऋषयस्त्वा प्प्रथमजा देवेषु'ति तस्योक्तो बन्धुः ॥ ९ ॥ एतावान्वै सर्व्वो यज्ञः । यज्ञ ऽउ देवानामात्त्मा यज्ञमेव तद्देवा ऽआत्त्मानं कृत्त्वैतस्मिन्नाके स्वर्ग्गे लोकेऽसीदँस्तथै-वैतद्यजमानो यज्ञमेवात्त्मानं कृत्त्वैतस्मिन्नाके स्वर्ग्गे लोके सीदति ॥ १० ॥ अथ * पञ्चचूडा ऽउपदधाति । यज्ञो वै नाकसदो यज्ञ ऽउ ऽएव पञ्चचूडास्तद्य ऽइमे चत्त्वार-ऽऋत्त्विजो गृहपतिपञ्चमास्ते नाकसदो होत्राः पञ्चचूडा-ऽअतिरिक्तं वै तद्यद्धोत्रा यदु वा ऽअतिरिक्तं चूडः स तद्यत्पञ्चातिरिक्तास्तस्मात्पञ्चचूडाः ॥ ११ ॥ यद्वेव नाकसत्पञ्चचूडा ऽउपदधाति । आत्त्मा वै नाकसदो मिथुनं पञ्चचूडा ऽअर्द्धमु हैतदात्त्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्व्वोऽथ कृत्स्नः कृत्स्नतायै ॥ १२ ॥ यद्वेव नाकसत्पञ्चचूडा ऽउपदधाति । आत्त्मा वै नाकसदः प्प्रजा पञ्चचूडा ऽअतिरिक्तं वै तदात्त्मनो यत्प्रजा यदु

(१) शु० य० सं० अ० १५ क० १४। (२) शु० य० सं० अ० १५ क० १४। (३) शु० य० सं० अ० १५ क० १४। (४) शु० य० सं० अ० १५ क० १४।

* श्रा० श्रौ० सू० १७. १२. २१।

वा ऽअतिरिक्तं चूडः स तद्यत्पञ्चातिरिक्तास्तस्मात्पञ्च-चूडाः ॥ १३ ॥ यद्वेव नाकसत्पञ्चचूडा ऽउपदधाति । दिशो वै नाकसदो दिश ऽउ ऽएव पञ्चचूडास्तद्या ऽअमुष्मा-दादित्यादर्वाच्च्यः पञ्च दिशस्ता नाकसदो याः पराच्च्यस्ताः पञ्चचूडा ऽअतिरिक्ता वै ता दिशो या ऽअमुष्मादादि-त्यात्पराच्च्यो यद्व वा ऽअतिरिक्तं चूडः स तद्यत्पञ्चाति-रिक्तास्तस्मात्पञ्चचूडाः ॥ १४ ॥ यद्वेव पञ्चचूडा ऽउपद-धाति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइमाँल्लोकानुपरि-ष्टाद्रक्षाᳪसि नाष्ट्रा न हन्युरिति त ऽएतानेषां लोका-नामुपरिष्टाद्गोप्तॄनकुर्वत य ऽएते हेतयश्च प्रहेतयश्च तथैवैतद्यजमान ऽएतानेषां लोकानामुपरिष्टाद्गोप्तॄन्कुरुते य ऽएते हेतयश्च प्रहेतयश्च ॥ १५ ॥ स पुरस्तादुपद-धाति । 'अयं पुरो हरिकेश' ऽइत्यग्निर्वै पुरस्तद्यत्तमाह पुर ऽइति प्राञ्चᳪ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्धरिकेश ऽइत्याह हरिरिव ह्यग्निः 'सूर्यरश्मिरि'ति सूर्यस्येव ह्यग्ने रश्मय'स्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्या'विति वासन्तिकौ तावृतू 'पुञ्जिकस्थला च क्रतुस्थला चाप्सरसावि'ति दिक् चोपदिशा चेति ह स्माह माहित्थिः सेना च तु ते समितिश्च 'दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिरि'ति यद्वै सेनायां च

(१) शु० य० सं० अ० १५ क० १५। (२) शु० य० सं० अ० १५ क० १५। (३) शु० य० सं० अ० १५ क० १५। (४) शु० य० सं० अ० १५ क० १५। (५) शु० य० सं० अ० १५ क० १७।

समितौ चर्त्तीयन्ते ते 'दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्प्रहेतिरि'ति यदुङ्क्योऽन्यं घ्नन्ति स पौरुषेयो वधः प्प्रहेति'स्तेभ्यो नमो ऽअस्त्वि'ति तेभ्य ऽएव नमस्करोति 'ते नो मृडयन्त्वि'ति त ऽएवास्म्मै मृडयन्ति 'ते यं द्विष्मो यश्च्च नो द्वेष्ट्टि तमेषां जम्भे दध्म' ऽइति यमेव द्वेष्ट्टि यश्च्चैनं द्वेष्ट्टि तमेषां जम्भे दधात्त्यमुमेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्यात्ततोऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयं निर्द्दिष्ट्टो ह्येव स यमेवं विद्वेष्ट्टि ॥ १६ ॥ अथ दक्षिणतः । 'अयं दक्षिणा विश्श्वक-र्म्मेत्त्य'यं वै वायुर्विश्श्वकर्म्मा योऽयं पवत ऽएष हीदꣳ सर्वं करोति तद्यत्तमाह दक्षिणेति तस्म्मादेष दक्षिणैव भूयिष्ठं वाति 'तस्य रथस्वनश्च्च रथेचित्रश्च्च सेनानीग्ग्रा-मण्ण्यावि'ति ग्ग्रैष्मौ तावृतू 'मेनका च सहजन्न्या चाप्प्सर-सावि'ति दिक्चोपदिशा चेति ह स्म्माह माहित्थिरिमे तु ते द्यावापृथिवी 'यातुधाना हेती रक्षाꣳसि प्प्रहेतिरि'ति यातुधाना हैवात्र हेती रक्षाꣳसि प्प्रहेति'स्तेभ्यो नमो ऽअस्त्वि'ति तस्योक्तो बन्धुः ॥ १७ ॥ अथ पश्च्चात् । 'अयं पश्च्चाद्विश्श्वव्व्यचा' ऽइत्त्यसौ वा ऽआदित्त्यो विश्श्व-व्व्यचा यदा ह्येवैष ऽउदेत्त्यथेदꣳ सर्वं व्व्यचो भवति तद्य-

(१) शु० य० सं० अ० १५ क० १५। (२) शु० य० सं० अ० १५ क० १५। (३) शु० य० सं० अ० १५ क० १५। (४) शु० य० सं० अ० १५ क० १५। (५) शु० य० सं० अ० १५ क० १६। (६) शु० य० सं० अ० १५ क० १६। (७) शु० य० सं० अ० १५ क० १६। (८) शु० य० सं० अ० १५ क० १६। (९) शु० य० सं० अ० १५ क० १७। (१०) शु० य० सं० अ० १५ क० १८।

त्तमाह पश्चाद्दिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति 'तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यावि'ति वार्षिकौ तावृतू 'प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसा-वि'ति दिक्चोपदिशा चेति ह स्माह माहित्थिरहोरात्रे तु ते ते हि प्र च म्लोचतोऽनु च म्लोचतो 'व्याघ्रा हेतिः सर्प्पाः प्रहेतिरि'ति व्याघ्रा हैवात्र हेतिः सर्प्पाः प्रहेति'स्तेभ्यो नमो ऽअस्त्वि'ति तस्योक्तो बन्धुः ॥ १८ ॥ अथोत्तरतः । 'अयमुत्तरात्सँयद्वसुरि'ति यज्ञो वा-ऽउत्तरात्तद्यत्तमाहोत्तराद्दित्युत्तरत ऽउपचारो हि यज्ञोऽथ यत्सँयद्वसुरित्याह यज्ञः हि सँयन्तीतीदं वस्विति 'तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यावि'ति शारदा तावृतू 'विश्वाची च घृताची चाप्सरसावि'ति दिक्चोपदिशा चेति ह स्माह माहित्थिर्वेदिश्च तु ते स्रुक्च वेदिरेव विश्वाची स्रुग्घृता'च्याऽपो हेतिर्वातः प्रहेतिरि'त्यापो हैवात्र हेतिर्वातः प्रहेतिरतो ह्येवोष्णो वात्यतः शीत'स्तेभ्यो नमो ऽअस्त्वि'ति तस्योक्तो बन्धुः ॥ १९ ॥ अथ मध्ये । 'अयमुपर्य्यर्वाग्वसुरि'ति पर्ज्जन्यो वा ऽउपरि तद्यत्तमाहोपरीत्युपरि हि पर्ज्जन्योऽथ यद-र्वाग्वसुरित्याहातो ह्यर्वाग्वसु वृष्टिरन्नं प्रजाभ्यः प्रदीयते

(१) शु० य० सं० अ० १५ क० १७। (२) शु० य० सं० अ० १५ क० १७। (३) शु० य० सं० अ० १५ क० १६। (४) शु० य० सं० अ० १५ क० १७। (५) शु० य० सं० अ० १५ क० १८। (६) शु० य० सं० अ० १५ क० १८। (७) शु० य० सं० अ० १५ क० १८। (८) शु० य० सं० अ० १५ क० १८। (९) शु० य० सं० अ० १५ क० १८। (१०) शु० य० सं० अ० १५ क० १९।

'तस्यं सेनजिच्च सुषेणश्च सेनानीग्ग्रामण्ण्यावि'ति हैम-न्तिकौ तावृतू 'ऽउर्वशी च[2] पूर्वचित्तिश्चचाप्सरसावि'ति द्विक्चोपदिशा चेति ह स्म्माह भाहितिथिराहुतिश्चच तु ते दक्षिणा 'चावस्फूर्ज्जन्हेतिर्विद्युत्प्रहेतिरि'त्यवस्फूर्ज्जन्हैवात्र हेतिर्विद्युत्प्रहेति'स्तेभ्यो नमो ऽअस्त्वि'ति' तस्योक्तो बन्धुः ॥ २० ॥ एते वै ते हेतयश्च्च प्प्रहेतयश्च्च । यांस्त-द्देवा ऽएषां लोकानामुपरिष्टाद्गोप्तॄनकुर्वताथ यास्ताः प्प्रजा-ऽएते ते सेनानीग्ग्रामण्योऽथ यत्तन्मिथुनमेतास्ता-ऽअप्सरसः सर्व्व ऽएव तद्देवाः कृत्स्ना भूत्वा सह प्प्रजया सह मिथुनेनैतस्मिन्नाके स्वर्ग्गे लोकेऽसीदँस्तथैवै-तद्यजमानः सर्व्व ऽएव कृत्स्नो भूत्वा सह प्प्रजया सह मिथुनेनैतस्मिन्नाके स्वर्ग्गे लोके सीदति ॥ २१ ॥

* ता वा ऽएताः । दशेष्टका ऽउपदधाति दशाक्षरा विराड्विराडेषा चितिस्ता ऽउ वै पञ्चैव द्वे-द्वे ह्युपदधाति ता हैता ऽअग्नेराशिषस्ता ऽउत्तमायां चिता ऽउपदधात्यन्त-ऽएषोऽग्नेर्यदुत्तमा चितिरन्ततस्तदग्नेराशिषो निराह पञ्च भवन्ति पञ्च हि यज्ञ ऽआशिषोऽथैने ऽअन्तरा पुरीषं निवपत्यग्नी हैतौ यदेते ऽइष्टके नेदिमावग्नी सःशोचात-ऽइत्यथो ऽअन्नं वै पुरीषमन्नेनैवाभ्यामेतत्संज्ञां करोति ॥ २२ ॥ अथातोऽन्वावृतम् । पुरस्तादुपधाय दक्षिणतः पश्चादुत्तरतो मध्य ऽउपदधात्यथोत्तराः पुरस्तादेवाग्र-

(१) शु० य० सं० अ० १५ क० १९। (२) शु० य० सं० अ० १५ क० १९।
(३) शु० य० सं० अ० १५ क० १९। (४) शु० य० सं० अ० १५ क० १९।

* अत्र शतम् ४६०० ॥

ऽउपधाय दक्षिणत ऽउत्तरतो मद्ध्ये पश्चादुपदधात्यथवस्ता-त्प्रपद्नो ह स्वर्ग्गो लोक ऽएतद्वै देवा ऽइमाँल्लोकान्त्सर्व्वतः समपिधायावस्तात्स्वर्ग्गं लोकं प्रापद्यन्त तथैवैतद्यजमान-ऽइमाँल्लोकान्त्सर्वतः समपिधायावस्तात्स्वर्ग्गं लोकं प्रपद्यते ॥ २३ ॥ (A)

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

— ❀ —

[ छन्दस्येष्टकोपधानम् ]

छन्दस्या ऽउपदधाति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र श्रियमैच्छन्नो हैषोऽतः पुरा तस्स्मा-ऽअलमास यच्छ्रियमधारयिष्यत्तस्स्मादिदमप्प्येतर्ह्याहुर्न्न वा-ऽएषोऽलथं श्रियै धारणाय राज्याय वा ग्ग्रामणीत्थ्याय वेति तस्स्मै देवा ऽएताथं श्रियं प्रायच्छन्नेताश्छन्दस्याः पशवो वै छन्दाथंस्यन्नं पशवोऽन्नमु श्रीः ॥ १ ॥ त्रिचा-ण्युपदधाति । त्रिवृद्वै पशुः पिता माता पुत्रोऽथो गर्ब्भ-ऽउल्वं जरायुत्वथो त्रिवृद्वा ऽअन्नं कृषिर्व्वृष्टिर्बीजमेकै-वातिच्छन्दा भवत्येका ह्येव सा सर्व्वाणि च्छन्दाथंस्यति सा या सा श्रीर्म्महत्तदुक्थं तद्यत्तन्महदुक्थमेतास्ता-श्छन्दस्याः ॥ २ ॥ तस्य शिरो गायत्र्यः । आत्मा त्रिष्टुभोऽनूकं जगत्यः पक्षौ पङ्क्तयोऽथैतासां ककुभां चत्त्वारि-चत्त्वार्य्यक्षराण्यादायातिच्छन्दस्युपदधाति सा सा-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० श० ११. १. १; कठ० सं० १७. ८, ९; कपिष्ठ० २६. ७, ८; मै० सं० ११. ८. ९, १०; तै० सं० ४. ४. २, ३ ।

तिच्छन्दा ऽएव भवति गायत्र्य ऽइतराः सम्पद्यन्ते सैव गायत्र्यशीतिरुर्या बृहत्यः सा बार्हती या ऽउष्णिहः सौष्णिह्यथ यद्दशो यदर्द्धर्चौ यदैन्द्राग्नं रुयदावपनं तदतिच्छन्दा ऽअथ यन्नदो यत्सूददोहा यत्पदनुषङ्गा यत्किंचात्रानुष्टुप्कर्म्मीणं तदनुष्टुभः ॥ ३ ॥ प्रतिष्ठा द्विपदाः । एतावद्वै महदुक्थं महदुक्थथं श्रीः सर्वामेवास्मा ऽएतां देवाः श्रियं प्रायच्छँस्तथैवास्मा ऽअयमेताथं सर्वाथं श्रियं प्रयच्छति ॥ ४ ॥ यद्वेव छन्दस्या ऽउपदधाति । एतद्वै देवा ऽएतं नाकथं स्वर्ग्गं लोकमपश्यन्नेता स्तोमभागास्तस्मिन्नविशँस्तेषां विशतां प्रजापतिरुत्तमोऽविशत्स यः स प्प्रजापतिरेतास्ताश्छन्दस्याः ॥ ५ ॥ तस्य शिरो गायत्र्यः । ता यद्गायत्र्यो भवन्ति गायत्रः हि शिरस्तिस्रो भवन्ति त्रिवृद्धि शिरः पूर्वार्द्धे ऽउपदधाति पुरस्ताद्धीदः शिरः ॥ ६ ॥ उरस्त्रिष्टुभः । ता रेतःसिचोर्वेलयोपदधाति पृष्टयो वै रेतःसिचा ऽउरो वै प्प्रति पृष्ट्यः ॥ ७ ॥ श्रोणी जगत्यः । स यावति पुरस्तात्स्वयमातृण्णायै त्रिष्टुभ ऽउपदधाति तावति पश्चाज्जगतीरुर्यो वा ऽअयं मद्ध्ये प्प्राणस्तदेषा स्वयमातृण्णा यावत्यु वा ऽएतस्मात्प्राणात्पुरस्तादुरस्तावति पश्चाच्छ्रोणी ॥ ८ ॥ सक्थ्यावनुष्टुभः । ता ऽअनन्तर्हिता जगतीभ्य ऽउपदधात्यनन्तर्हिते तच्छ्रोणिभ्याथं सक्थ्यौ दधाति ॥ ९ ॥ पर्शवो बृहत्यः । कीकसाः ककुभः सोऽन्तरेण त्रिष्टुभश्च ककुभश्च बृहतीरुपदधाति तस्मादिमा ऽउभयत्र पर्शवो

बद्धाः कीकसासु च जत्रुषु च ॥ १० ॥ ग्रीवा उष्णिहः । ता अनन्तर्हिता गायत्रीभ्य उपदधात्यनन्तर्हितास्तच्छीर्ष्णो ग्रीवा दधाति ॥ ११ ॥ पक्षौ पङ्क्तयः । ता यत्पङ्क्तयो भवन्ति पाङ्क्तौ हि पक्षौ पार्श्वत उपदधाति पार्श्वतो हीमौ पक्षौ यद्वर्षीयश्छन्दस्तद्दक्षिणत उपदधाति दक्षिणं तदर्द्धं पक्षोर्वीर्य्यवत्तरं करोति तस्माद्दक्षिणोऽर्द्धः पक्षोर्वीर्य्यवत्तरः ॥ १२ ॥ उदरमतिच्छन्दाः । पशवो वै छन्दाᳪंस्यन्नं पशव उदरं वा अन्नमत्त्युदरᳪं हि वाऽन्नमत्ति तस्माद्यदोदरमन्नं प्राप्नोत्यथ तज्जग्धं रुषातयामरूपं भवति तद्यदेषा पशूँश्छन्दाᳪंस्यत्ति तस्मादत्तिच्छन्दा अत्तिच्छन्दा ह वै तामतिच्छन्दा इत्याचक्षते परोक्षं परोक्षकामा हि देवाः ॥ १३ ॥ योनिः पुरीषवती । ते सᳪंस्पृष्टे उपदधाति सᳪंस्पृष्टे ह्युदरं च योनिश्च पुरीषसᳪंहिते भवतो माᳪंसं वै पुरीषं माᳪंसेन वाऽउदरं च योनिश्च सᳪंहिते पूर्वातिच्छन्दा भवत्यपरा पुरीषवत्युत्तरᳪं ह्युदरमधरा योनिः ॥ १४ ॥ ते प्राच्याऽउपदधाति । प्राङ् ह्येषोऽग्निश्चीयतेऽथो प्राग्वै प्राचऽउदरं प्राची योनिर्बहि मभागः हृदयं वै स्तोमभागा हृदयमु वा उत्तममथोदरमथ योनिः ॥ १५ ॥ ते दक्षिणतः स्वयमातृण्णाया उपदधाति । अथ प्रथमायां चिताऽउत्तरतः स्वयमातृण्णाया उदरं च योनिं चोपदधाति यो वा अयं मध्ये प्राणस्तदेषा स्वयमातृण्णैतस्य तत्प्राणस्योभयत उदरं च योनिं च दधाति तस्मा-

देतस्य प्प्राणस्योभयत ऽउदुरं च योनिश्च ॥ १६ ॥ प्रतिष्ठा द्विपदाः । ता यद् द्विपदा भवन्ति द्वन्द्वꣳ हि प्प्रतिष्ठा तिस्रो भवन्ति त्रिवृद्धि प्प्रतिष्ठा पश्चादुपदधाति पश्चाद्धीयं प्रतिष्ठा ॥ १७ ॥ सोऽस्यैष सुकृत ऽआत्मा । तद्यस्य हैतमेवꣳ सुकृतमात्मानं कुर्वन्त्येतꣳ ह स सुकृतमात्मानमभिसम्भवत्यथ यस्य हैतमतोऽन्न्यथा कुर्व-न्ति दुष्कृतꣳ ह तस्यात्मानं कुर्वन्ति स ह स दुष्कृत-मेवात्मानमभिसम्भवति ॥ १८ ॥ तदेते सामनिधने-ऽअभ्युक्ते । अर्क्को देवानां परमे व्योमन्नर्क्कस्य देवाः परमे व्योमन्नित्येतद्वै देवानां विशतां प्रजापतिरुत्तमोऽ-विशत्तस्मादाहार्क्को देवानां परमे व्योमन्नित्यथ यदा-हार्क्कस्य देवाः परमे व्योमन्नित्ययं वा ऽअग्निरर्क्कस्तस्यै-तदुत्तमायां चितौ सर्वे देवा विष्टास्तस्मादाहार्क्कस्य देवाः परमे व्योमन्निति ॥ १९ ॥ (B)

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या १०८ ॥



[ गार्हपत्येष्टकोपधानम् ]

गार्हपत्यमुपदधाति । एतद्वै देवाः प्प्राप्य राद्धेवा-मन्न्यन्त तेऽब्रुवन्क्केनेदमराात्स्मेति गार्हपत्येनैवेत्यब्रुव-न्गार्हपत्यं वै चित्वा समारुह्य प्प्रथमां चितिमपश्याम

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. १. २ ।

प्प्रथमायै द्वितीयां द्वितीयायै तृतीयां तृतीयायै चतुर्त्थीं चतुर्त्थ्यै पञ्चमीं पञ्चम्म्या ऽइदमिति ॥ १ ॥ तेऽब्रुवन् । उप तज्जानीत यथेयमस्म्मास्वेव राद्धिरसदिति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथेयमस्म्मास्वेव राद्धिरसदिति ॥ २ ॥ ते चेतयमानाः । एतदपश्श्यन्निहेमसमाहृत्त्योपदधामहा ऽइति तमिहाहृत्त्योपादधत तस्म्मिन्न्व्यवदन्त वसवः पुरस्तादहेहा दक्षिणत ऽआदित्त्याः पश्चान्न्मरुत ऽउत्तरतो विश्श्वे देवा ऽउपरिष्ट्वादिहोपदधामेहोपदधामेति ॥ ३ ॥ तेऽब्रुवन् । मद्ध्य ऽएवोपदधामहै स नो मद्ध्य ऽउपहितः सर्वेषां भविष्यतीति तं मद्ध्य ऽउपादधत तदेताॅं राद्धिमात्त्मन्नदधत मद्ध्यतो मद्ध्यत ऽएवैतदेताॅं राद्धिमात्त्मन्नदधत तथैवैतद्यजमानो यद्गार्हपत्त्यमुपदधात्त्येतामेवैतद्राद्धिमात्त्मन्धत्ते मद्ध्यतो मद्ध्यत ऽएवैतदेताॅं राद्धिमात्त्मन्धत्ते ॥ ४ ॥ यद्द्वेव गार्हपत्त्यमुपदधाति । अन्नं वै गार्हपत्त्योऽत्तायमग्निश्चितोऽन्न ऽएवैतदन्नमपिदधाति मद्ध्यतो मद्ध्यतऽएवास्मिन्नेतदन्नं दधाति ॥ ५ ॥ यद्द्वेव गार्हपत्त्यमुपदधाति । वेदिर्वै देवलोकोऽथ वा ऽएष बहिर्वेदि चितो भवति तं यदिहाहृत्त्योपदधाति तदेनं वेदौ देवलोके प्प्रतिष्ठापयति ॥ ६ ॥ यद्द्वेव गार्हपत्त्यमुपदधाति । योनिर्वै पुष्करपर्ण्णमथ वा ऽएष बहिर्योनि चितो भवति बहिर्द्धो वाऽ ऽएतद्योनेरग्निकर्म्म यत्पुरा पुष्करपर्ण्णात्तँ यदिहाहृत्त्योपदधाति तदेनं योनौ पुष्करपर्ण्णे प्प्रतिष्ठापयति

तथो हैषोऽबहिर्द्धा भवत्यष्टाविष्टका ऽउपदधाति तस्योक्तो बन्धुस्तं वा ऽएतैरेव यजुर्भिरेतयावृता चिनोति यो ह्येवासौ स ऽएवायं तमेवैतदाहृत्येहोपदधाति ॥ ७ ॥ अथ पुनश्चितिमुपदधाति । एतद्वै देवा गार्हपत्यं चित्वा तस्मिन् राद्धिं नापश्यन्योनिर्वै गार्हपत्या चितिरेषो वै योने राद्धिर्यद्रेतः प्रजातिस्तस्यामेतस्यां योनौ रेतः प्रजातिं नापश्यन् ॥ ८ ॥ तेऽब्रुवन् । उप तज्जानीत यथास्यां योनौ रेतः प्रजातिं दधामेति तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथास्यां योनौ रेतः प्रजातिं दधामेति ॥ ९ ॥ ते चेतयमानाः । एतां पुनश्चितिमपश्यँस्तामुपादधत तदेतस्यां योनौ रेतः प्रजातिमदधुर्मध्यतो मध्यत ऽएवैतदेतस्यां योनौ रेतः प्रजातिमदधुस्तथैवैतद्यजमानो यत्पुनश्चितिमुपदधात्येतस्यामेवैतद्योनौ रेतः प्रजातिं दधाति मध्यतो मध्यत ऽएवैतदेतस्यां योनौ रेतः प्रजातिं दधाति ॥ १० ॥ ताᳬं हैके जघनार्द्धे ऽउपदधति । जघनार्द्धाद्वै रेतः सिच्यते पुच्छसन्धौ पुच्छाद्वै रेतः सिच्यत ऽइति न तथा कुर्याद्बहिर्द्धा ह ते योने रेतः प्रजातिं दधति ये तथा कुर्वन्ति मध्य ऽएवोपदध्यात्तत्सम्प्रति योनौ रेतः प्रजातिं दधाति ॥ ११ ॥ अष्टाविष्टका ऽउपदधाति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतᳬं सिञ्चति पञ्चकृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्या

वानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्धेतोभूतꣳ सिञ्चत्यष्टा-
विꣳष्टकाः पञ्चकृत्वः सादयति तत्त्रयोदश त्रयोदश
मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्या-
वत्यस्य मात्रा तावत्तद्भवति ॥ १२ ॥ यद्वेव * पुनश्चि-
तिमुपदधाति । एतद्वा ऽएतद्यथायथं करोति यदाहव-
नीयाद् गार्हपत्यमुत्तरं चिनोति तद्यत्पुनश्चितिमुपदधाति
य ऽएवायमग्निश्चितस्तमेवैतदाहृत्यास्योपरिष्टात्पुनश्चिच-
नोति तद्यच्चितꣳ सन्तं पुनश्चिनोति तस्मात्पुनश्चितिः
॥ १३ ॥ तद्धैके । जघनार्द्धे गार्हपत्यमुपदधति पूर्वार्द्धे
पुनश्चितिमाहवनीयश्च वा ऽएतौ गार्हपत्यश्चैवं वा-
ऽएतावग्नी ऽइति न तथा कुर्य्यादयं वै लोको गार्हपत्यो
द्यौराहवनीय ऽउत्तरो वा ऽअसावस्यै तस्मादेनामुत्तरा-
मेवोपदध्यात् ॥ १४ ॥ यद्वेव गार्हपत्यं च पुनश्चितिं
चोपदधाति । वेदिश्च हैते ऽअग्नेरुत्तरवेदिश्चाथ ये-
ऽअमू पूर्वे निवपत्यङ्गुरस्य ते ऽअथ हैते ऽअग्नेस्तद्यदेते-
ऽउपधायाग्निं निदधाति वेदौ चैवैनमेतदुत्तरवेदौ च
प्प्रतिष्ठापयति ॥ १५ ॥ यद्वेव पुनश्चितिमुपदधाति ।
पुनर्य्यज्ञो हैष ऽउत्तरा हैषा देवयज्या पुनर्य्यज्ञमेवैतदु-
पधत्त ऽउत्तरामेव देवयज्यामुप हैनं पुनर्य्यज्ञो नमति
॥ १६ ॥ यद्वेव पुनश्चितिमुपदधाति । यं वै तं प्प्राणा-
ऽऋषयोऽग्रेऽग्निꣳ समस्कुर्वन्त्स ऽएष तमेवैतत्पुनश्चिच-
नोति तद्यच्चितꣳ सन्तं पुनश्चिनोति तस्माद्वेव

* का० श्रौ० सू० १७. १२. १८।

पुनश्चिच्चतिः ॥ १७ ॥ 'येन ऽऋषयस्तपसा सत्रमायन्नि'ति। अमुनेतदृषीना'हेन्धाना ऽअग्निᳬ स्वराभरन्त' ऽइतीन्धाना ऽअग्निᳬ स्वर्ग्गं लोकमाहरन्त ऽइत्त्येत'त्तस्मिन्नहं निदधे नाके ऽअग्निमि'ति स्वर्ग्गो वै लोको नाको 'यमाहुर्म्मनव स्तीर्ण्णबर्हिषमि'ति ये विद्वाᳬसस्ते मनव स्तीर्ण्णबर्हिषमिति सर्व्वदा हैव स स्तीर्ण्णबर्हिः ॥ १८ ॥ 'तं पत्नीभिरनुगच्छेम देवाः। पुत्रैर्भ्रातृभिरुत वा हिरण्ण्यैरि'त्त्येतेनैनः सर्व्वेणानुगच्छेमेत्त्येत'न्नाकं गृब्भ्णानाः सुकृतस्य लोक ऽइति स्वर्ग्गो वै लोको नाकः स्वर्ग्गं लोकं गृह्णानाः सुकृतस्य लोक ऽइत्त्येत'त्तृतीये पृष्ठेऽअधि रोचने दिव' ऽइत्त्येतद्ध तृतीयं पृष्ठᳬ रोचनं दिवो यत्रैष ऽएतत्तपति ॥ १९ ॥ 'आ वाचो मद्ध्यमरुहद्भुरण्ण्युरि'ति। एतद्ध वाचो मद्ध्यं यत्रैष ऽएतच्चीयते भुरण्ण्युरिति भर्त्तेत्त्येत'दयमग्निः सत्पतिश्चेकिताम'ऽइत्त्ययमग्निः सतां पतिश्चेतयमान ऽइत्त्येत'त्पृष्ठे पृथिव्व्या निहितो दविद्युतदि'ति पृष्ठे पृथिव्व्या निहितो दीप्प्यमान ऽइत्त्येत'दधस्पदं कृणुतां ये पृतन्न्यव' ऽइत्त्यधस्पदं कुरुताᳬ सर्व्वान्पाप्मन ऽइत्त्येतत् ॥ २० ॥ 'अयमग्निर्व्वीरतमो वयोधा' ऽइति। अयमग्निर्व्वीर्य्यवत्तमो

(१) शु॰ य॰ सं॰ अ॰ १५ क॰ ४९। (२) शु॰ य॰ सं॰ अ॰ १५ क॰ ४९। (३) शु॰ य॰ सं॰ अ॰ १५ क॰ ४९। (४) शु॰ य॰ सं॰ अ॰ १५ क॰ ४९। (५) शु॰ य॰ सं॰ अ॰ १५ क॰ ५०। (६) शु॰ य॰ सं॰ अ॰ १५ क॰ ५०। (७) शु॰ य॰ सं॰ अ॰ १५ क॰ ५०। (८) शु॰ य॰ सं॰ अ॰ १५ क॰ ५१। (९) शु॰ य॰ सं॰ अ॰ १५ क॰ ५१। (१०) शु॰ य॰ सं॰ अ॰ १५ क॰ ५१। (११) शु॰ य॰ सं॰ अ॰ १५ क॰ ५१। (१२) शु॰ य॰ सं॰ अ॰ १५ क॰ ५२।

वयोधा ऽइत्येत[1]त्सहस्त्रियो द्योततामप्रयुच्छन्नि'ति सहस्त्रियो दीप्यतामप्रमत्त ऽइत्येत[2]द्विभ्राजमानः सरिरस्य मद्ध्य' ऽइतीमे वै लोकाः सरिरं दीप्यमान ऽएषु लोकेष्वित्येत[3]दुप प्रयाहि दिव्यानि धामे'त्युप प्रयाहि स्वर्ग्गं लोकमित्येतत् ॥ २१ ॥ '[4]सम्प्रच्यवद्ध्वमुप सम्प्रयाते'ति । अमूनेतदृषीनाह समेनं प्रच्यवद्ध्वमुप चैनꣳ सम्प्रयाते'त्यग्ने[5] पथो देवयानान्कृणुद्ध्वमि'ति यथैव यजुस्तथा बन्धुः '[6]पुनः कृण्वाना पितरा युवाने'ति वाक्च वै मनश्च पितरा युवाना वाक्च मनश्चैतावग्नी '[7]ऽअन्वाताꣳसीत्त्वयि तन्तुमेतमि'ति योऽसावृषिभिस्तन्तुस्ततस्तमेतदाह ॥ २२ ॥ '[8]उद्बुद्ध्यस्वाग्ने प्रतिजागृहि त्वमि'ति । इममेतदग्निमाहोच्चैनं बुद्ध्यस्व प्रति चैनं जागृही'ती[9]ष्टापूर्त्ते सꣳसृजेथामयं चे'ति यथैव यजुस्तथा बन्धु'[10]रस्मिन्त्सधस्थे ऽअद्ध्युत्तरस्मिन्नि'ति द्यौर्वा ऽउत्तरꣳ सधस्थं '[11]विश्वे देवा यजमानश्च सीदते'ति तद्विश्वैर्द्देवैः सह यजमानꣳ सादयति ॥ २३ ॥ '[12]येन वहसि सहस्रम् । येनाग्ने सर्ववेदसमि'त्येतद्धास्य प्रतिज्ञाततमं धाम येन सहस्रं वहति येन सर्ववेदसं '[13]तेनेमं यज्ञं नो नय स्वर्द्देवेषु

(१) शु० य० सं० अ० १५ क० ५२। (२) शु० य० सं० अ० १५ क० ५२। (३) शु० य० सं० अ० १५ क० ५२। (४) शु० य० सं० अ० १५ क० ५३। (५) शु० य० सं० अ० १५ क० ५३। (६) शु० य० सं० अ० १५ क० ५३। (७) शु० य० सं० अ० १५ क० ५३। (८) शु० य० सं० अ० १५ क० ५४। (९) शु० य० सं० अ० १५ क० ५४। (१०) शु० य० सं० अ० १५ क० ५४। (११) शु० य० सं० अ० १५ क० ५४। (१२) शु० य० सं० अ० १५ क० ५५। (१३) शु० य० सं० अ० १५ क० ५५।

गन्तव' ऽइति तेन न ऽइमं यज्ञं नय स्वर्ग्गं लोकं देवेषु गन्तव ऽइत्येतदयं ते योनिर्ऋत्विय ऽइति तस्योक्तो बन्धुरष्टाविष्टका ऽउपदधाति तस्यो ऽएवोक्तः ॥ २४ ॥ (C)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

[ ऋतव्या-स्वयमातृण्णा-विकर्ण्यर्थवादः ]

ऋतव्या ऽउपदधाति । ऋतव ऽएते यदृतव्या-ऽऋतूनेवैतदुपदधाति तदेतत्सर्वं यदृतव्याः संवत्सरो वा-ऽऋतव्याः संवत्सर ऽइदꣳ सर्वमिदमेवैतत्सर्वमुपदधात्यथो प्रजननमेतत्संवत्सरो वा ऽऋतव्याः संवत्सरः प्रजननं प्रजननमेवैतदुपदधाति ॥ १ ॥ यद्वेवर्त्तव्या-ऽउपदधाति । क्षत्रं वा ऽऋतव्या विश ऽइमा ऽइतरा-ऽइष्टकाः क्षत्रं तद्विश्यत्तारं दधाति ताः सर्वासु चितिषूपदधाति सर्वस्यां तद्विशि क्षत्रमत्तारं दधाति ॥ २ ॥ यद्वेवर्त्तव्या ऽउपदधाति । संवत्सर ऽएषोऽग्निः स-ऽऋतव्याभिः सꣳहितः संवत्सरमेवैतदृतुभिः सन्तनोति सन्दधाति ता वै नाना प्रभृतयः समानोदर्का ऽऋतवो वा ऽअसृज्यन्त ते सृष्टा नानैवासन् ॥ ३ ॥ तेऽब्रुवन् । न वा ऽइत्थꣳ सन्तः शक्ष्यामः प्रजनयितुꣳ रूपैः समायामेति त ऽएकैकमृतुꣳ रूपैः समायँस्तस्मादेकैकस्मिन्नृतौ सर्वेषामृतूनाꣳ रूपं ता यन्नाना प्रभृतयो नाना

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. २. ३ ।

ह्वसृज्यन्ताथ यत्समानोदर्क्को रूपैर्हि समायन् ॥ ४ ॥ स ऽउपदधाति । 'तपश्च तपस्यश्च शैशिरावृतू' ऽइति नामनी ऽएनयोरेते नामभ्यामेवैने ऽएतदुपदधात्यसौ वा ऽआदित्यस्तपस्तस्मादेतावृतू ऽअनन्तर्हितौ तद्यदेतस्मादेतावृतू ऽअनन्तर्हितौ तस्मादेतौ तपश्च तपस्यश्च ॥ ५ ॥ 'अग्नेरन्तः श्लेषोऽसी'ति । संवत्सरऽएषोऽग्निः स ऽऋतव्याभिः सꣳहितः संवत्सरमेवैतदृतुभिः सन्तनोति सन्दधाति 'कल्पेतां द्यावापृथिवी कल्पन्तामाप ऽओषधय' ऽइतीदमेवैतत्सर्वमृतुभिः कल्पयति 'कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रता' ऽइत्यग्नयो हैते पृथग्यदेता ऽइष्टकास्ते यथानयोर्ऋत्वोर्ज्यैष्ठ्याय कल्पेरन्नेवमेतदाह 'ये ऽअग्नयः समनसोऽन्तरा द्यावापृथिवी ऽइमे' ऽइति यथैव यजुस्तथा बन्धुः 'शैशिरावृतू ऽअभिकल्पमाना ऽइन्द्रमिव देवा ऽअभिसंविशन्त्वि'ति यथेन्द्रं देवा ऽअभिसंविष्टा ऽएवमिमावृतू ज्यैष्ठ्यायाभिसंविशन्त्वित्येतद् द्वे ऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥ ६ ॥ तद्यदेते ऽअत्रोपदधाति । संवत्सर ऽएषोऽग्निरिम ऽउ लोकाः संवत्सरस्तस्य द्यौरेव पञ्चमी चितिर्द्यौरस्य शिशिरऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते ऽआत्मनस्त-

(१) शु० य० सं० अ० १५ क० ५७। (२) शु० य० सं० अ० १५ क० ५७। (३) शु० य० सं० अ० १५ क० ५७। (४) शु० य० सं० अ० १५ क० ५७। (५) शु० य० सं० अ० १५ क० ५७। (६) शु० य० सं० अ० १५ क० ५७।

दस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ॥ ७ ॥ यद्वेवैते ऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर-ऽउ प्प्रजापतिस्तस्य शिर ऽएव पञ्चमी चितिः शिरोऽस्य शिशिर ऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते-ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ॥ ८ ॥ स पुरस्तात्स्वयमातृण्णायै च विश्वज्योतिषश्चर्त्तव्ये ऽउपदधाति । द्यौर्वा ऽउत्तमा स्वयमातृण्णादित्य ऽउत्तमा विश्वज्योतिरर्वाचीनं तद्दिवश्चादित्याच्चर्त्तून्दधाति तस्मादर्वाचीनमेवात ऽऋतवोऽथो प्प्रजननमेतदर्वाचीनं तद्दिवश्चादित्याच्च प्रजननं दधाति तस्मादर्वाचीनमेवातः प्प्रजायते स्थितः हैवातः पराक्प्रजननं यावन्तो ह्येव सनाग्रे देवास्तावन्तो देवाः ॥ ९ ॥ अथ प्प्रथमायै स्वयमातृण्णायै । प्रथमायै च विश्वज्योतिष-ऽउपरिष्टादृतव्ये ऽउपदधातीयं वै प्प्रथमा स्वयमातृण्णाग्निः प्प्रथमा विश्वज्योति*रितस्तदूर्द्ध्वानृतून्दधाति तस्मादित ऽऊर्द्ध्वा ऽऋतवोऽथो प्प्रजननमेतदितस्तदूर्द्ध्वं प्रजननं दधाति तस्मादित ऽऊर्द्ध्वमेव प्प्रजायते ॥ १० ॥ ता न व्यूहेत् । नेदृतून्व्यूहानीति यो वै म्म्रियत-ऽऋतवो ह तस्मै व्युह्यन्ते तस्माद्यत्रैव प्प्रथमे ऽउपदधाति तत्सर्वा ऽउपदध्यात् ॥ ११ ॥ अथो ऽइमे वै लोका ऽऋतव्याः । इमाँस्तल्लोकानूर्द्ध्वाँश्चितिभिश्चिनोत्यथो क्षत्रं वा ऽऋतव्याः क्षत्रं तदूर्द्ध्वं चितिभिश्चिनो-

* 'रितस्तदूर्ध्वा' इति 'क-घ'। 'स्तदूर्ध्वा' इति 'ग-ज' पुस्तकयोः।

त्त्यथो संवत्सरो वा ऽऋतव्व्याः संवत्सरं तदूर्द्ध्वं चितिभिश्चिनोति ता नान्न्यया यजुष्मत्त्येष्टकयोपरिष्ट्टादभ्भ्युपदद्ध्यान्नेत्क्षत्रं विशाऽभ्भ्युपदधानीति ॥ १२ ॥ ता हैता ऽएव सँख्यान्न्यः । एतद्वै देवा ऽऋतव्व्याभिरेवेमाँल्लोकान्त्समयुरितश्चोर्द्ध्वानमुतश्चार्व्वाचस्तथैवैतद्यजमान ऽऋतव्व्याभिरेवेमाँल्लोकान्त्सँख्यातीतश्चोर्द्ध्वानमुतश्चार्व्वाचः ॥१३॥ तदु ह चरकाद्ध्वर्य्यवः । अन्न्या ऽएव सँख्यानीरित्त्युपदधति न तथा कुर्य्यादत्त्यहैव रेचयन्त्येता ऽउ ऽएव सँख्यान्न्यः ॥ १४ ॥ अथ विश्श्वज्ज्योतिषमुपदधाति । आदित्त्यो वा ऽउत्तमा विश्श्वज्ज्योतिरादित्त्यो ह्येवामुष्मिँल्लोके विश्श्वज्ज्योतिरादित्त्यमेवैतदुपदधाति ॥ १५ ॥ यद्वेव विश्श्वज्ज्योतिषमुपदधाति । प्रजा वै विश्श्वज्ज्योतिः प्प्रजा ह्येव विश्श्वज्ज्योतिः प्प्रजननमेवैतदुपदधाति ॥ १६ ॥ स पुरस्तात्त्स्वयमातृण्णायै * विश्श्वज्ज्योतिषमुपदधाति । द्यौर्वा ऽउत्तमा स्वयमातृण्णादित्त्य ऽउत्तमा विश्श्वज्ज्योतिरर्व्वाचीनं तद्दिव ऽआदित्त्यं दधाति तस्म्माद्देषोऽर्व्वाचीनमेवातस्तपत्त्यथो प्प्रजननमेतदर्व्वाचीनं तद्दिवः प्प्रजननं दधाति तस्म्मादर्व्वाचीनमेवातः प्प्रजायते ॥ १७ ॥ अथ प्प्रथमायै स्वयमातृण्णायै । उपरिष्ट्टाद्विश्श्वज्ज्योतिषमुपदधातीयं वै प्प्रथमा स्वयमातृण्णाग्निः प्प्रथमा विश्श्वज्ज्योतिरितस्तदूर्द्ध्वमग्निं दधाति तस्म्मादित ऽऊर्द्ध्वोऽग्निर्दीप्प्यतेऽथो प्प्रजननमेतदितस्तदूर्द्ध्वं प्रजननं

* का० श्रौ० सू० १७. १२. २३ ।

दधाति तस्म्मादित ऽऊर्द्ध्वमेव प्प्रजायते ॥ १८ ॥ अथ मद्ध्यमायै स्वयमातृण्णायै । उपरिष्टाद्विश्श्वज्ज्योतिषमुपदधात्त्यन्तरिक्षं व्वै मद्ध्यमा स्वयमातृण्णा व्वायुर्म्मद्ध्यमा व्विश्श्वज्ज्योतिरन्तरिक्षे तद्वायुं दधाति तस्म्मादयमन्तरिक्षे व्वायुः ॥ १९ ॥ ताह्न्येतानि ज्ज्योतीꣳषि । तद्यदेता ऽएवमुपदधात्त्येतान्न्येवैतज्ज्योतीꣳषि सम्म्यञ्चि दधाति तस्म्मादित ऽऊर्द्ध्वोऽग्निर्द्दीप्प्यतेऽर्व्वाङसावादित्त्यस्तपत्त्यन्तरिक्षेऽयं तिर्य्यङ् वायुः पवते ॥ २० ॥ 'परमेष्ठ्ठी त्वा सादयत्त्वि'ति । परमेष्ठ्ठी ह्येतां पञ्चमीं चितिमपश्श्य'द्दिवस्पृष्ठे ज्योतिष्मतीमि'ति दिवो ह्यसौ पृष्ठे ज्योतिष्मानादित्त्यः॥ २१ ॥ 'व्विश्श्वस्स्मै प्प्राणायापानाय । व्व्यानाये'ति प्प्राणो वै व्विश्श्वज्ज्योतिः सर्व्वस्म्मा ऽउ वाऽएतस्म्मै प्प्राणो 'व्विश्श्वज्ज्योतिर्य्यच्छे'ति सर्व्वं ज्योतिर्य्यच्छेत्त्येत'त्त्सूर्य्यस्तेऽधिपतिरि'ति सूर्य्यमेवास्या ऽअधिपतिं करोति सादयित्त्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २२ ॥ ता हैता ऽएव सँय्यान्यः । एतद्वै देवा व्विश्श्वज्ज्योतिर्ब्भिरेवेमाँल्लोकान्त्समयुरितश्चोर्द्ध्वानमुतश्चार्व्वाचस्तथैवैतद्यजमानो व्विश्श्वज्ज्योतिर्ब्भिरेवेमाँल्लोकान्त्सँय्यातीतश्च्चोर्द्ध्वानमुतश्च्चार्व्वाचः ॥ २३ ॥ तदु ह चरकाद्ध्वर्य्यवः ।

---

(१) शु० य० सं० अ० १५ क० ५८। (२) शु० य० सं० अ० १५ क० ५८। (३) शु० य० सं० अ० १५ क० ५८। (४) शु० य० सं० अ० १५ क० ५८। (५) शु० य० सं० अ० १५ क० ५८।

अन्न्या ऽएव सँख्यानीरित्युपदधाति न तथा कुर्य्याद्त्यहैव रेचयन्त्येता ऽउ ऽएव सँख्यान्न्यः ॥ २४ ॥ (A)

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ लोकम्पृणेष्टकोपधानम्, इष्टकाप्रमाणं च ]

अथ लोकम्पृणामुपदधाति । असौ वा ऽआदित्यो लोकम्पृणैष हीमाँल्लोकान्न्पूरयत्त्यमुमेवैतदादित्यमुपदधाति ताँ सर्वासु चितिषूपदधातीमे वै लोका ऽएताश्चितयोऽमुं तदादित्यमेषु लोकेषु दधाति तस्मादेष सर्वेभ्य ऽएवैभ्यो लोकेभ्यस्तपति ॥ १ ॥ यद्वेव * लोकम्पृणामुपदधाति । क्षत्रं वै लोकम्पृणा विश ऽइमा ऽइतरा ऽइष्टकाः क्षत्रं तद्विश्यत्तारं दधाति ताँ सर्वासु चितिषूपदधाति सर्वस्यां तद्विशि क्षत्रमत्तारं दधाति ॥ २ ॥ सैषैकैव भवति । एकस्त्थं तत्क्षत्रमेकस्त्थाँ श्रियं करोत्त्यथ या द्वितीया मिथुनं तदर्द्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नताया ऽएकेन यजुषा बह्वीरिष्टका ऽउपदधाति क्षत्रं तद्वीर्य्येणात्त्यादधाति क्षत्रं विशो वीर्य्यवत्तरं करोत्त्यथेतराः पृथङ् नाना यजुर्भिरुपदधाति विशं तत्क्षत्रादवीर्य्यतरां करोति पृथग्वादिनीं नाना चेतसम् ॥ ३ ॥ स वा ऽअस्याँ स्रक्त्त्यां प्रथमे ऽउपदधाति ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० श० ११. २. १; कठ० १७. १०; कपिष्ठ० २६. ९; मै० सं० ११. ८. १२; तै० सं० ४. ४. ११।

* का० श्रौ० सू० १७. १२. २४।

अमुं तदादित्त्यमेतस्यां दिशि दधात्त्यथेतस्तस्म्मादुतोऽनुपरुर्यैत्त्यथेतस्तस्म्मादुतोऽनुपरुर्यैत्त्यथेतस्तस्म्मादुतोऽनुपरुर्यैत्त्यथातस्तस्म्मादुतोऽनुपरुर्यैति ॥ ४ ॥ स यद्यत्रैव प्प्रथमेऽउपदधाति । तदुत्तमेऽअनूपदद्ध्यात्सकृद्धैवासावादित्त्यऽइमाँल्लोकान्न्परुर्यैत्त्यनातिप्प्रच्च्यवेतातिहृत्त्य पूर्वेऽउत्तमेऽअनूपदधात्त्यमुं तदादित्त्यमिमाँल्लोकानतिप्प्रच्च्यावयति तस्म्मादसावादित्त्यऽइमाँल्लोकानसठ्ठंस्त्थितो दक्षिणावृत्पुनः-पुनरनुपरुर्यैति ॥ ५ ॥ 'लोकं पृण च्छिद्रं पृणे'ति । लोकं च पूरय च्छिद्रं च पूरयेत्त्येत'दुथो[१] सीद ध्रुवा त्त्वमित्त्यथो सीद स्त्थिरा त्त्वं प्रतिष्ठिते'त्त्येतदि[२]न्द्राग्नी त्त्वा बृहस्प्पतिरस्मिन्न्योनावसीषद[३]न्नि'तीन्द्राग्नी च त्त्वा बृहस्प्पतिश्च्चास्मिन्न्योनौ प्प्रत्त्यतिष्ठिपन्नित्त्येतदनुष्टुभा व्वाग्वाऽअनुष्टुब्वाग्विन्द्र *ऽइन्द्रो लोकम्पृणा न सादयत्त्यसन्नो ह्येष सूददोहसाधिवदति प्प्राणो वै सूददोहाः प्प्राणेनैवैनमेतत्सन्तनोति सन्दधाति ॥ ६ ॥ तदाहुः । कथमेषा लोकम्पृणायातयाम्म्नी भवतीत्त्यसौ वाऽआदित्त्यो लोकम्पृणायातयामा वाऽएषोऽथो व्वाग्वै लोकम्पृणायातयाम्म्न्यु वै व्वाक् ॥ ७ ॥ [अर्धप्रपाठकः ५५॥] स वै यजुष्मतीरुपधाय । लोकम्पृणया प्प्रच्छादयत्त्यन्नं व्वै यजुष्मत्त्यऽइष्टकाऽआत्त्मा लोकम्पृणान्नं तदात्त्मना परिदधाति तस्म्मादन्नमात्त्मना परिहितमात्त्मैव भवति ॥ ८ ॥ स

(१) शु० य० सं० अ० १५ क० ५९। (२) शु० य० सं० अ० १५ क० ५९। (३) शु० य० सं० अ० १५ क० ५९।

* 'व्वागिन्द्र' इति 'ग-ज' पुस्तकयोः।

वा ऽआत्मन्नेव । यजुष्मतीरुपदधाति न पक्षपुच्छेष्वात्मँस्त-दन्नं दधाति यदु वा ऽआत्मन्नन्नं धीयते तदात्मान-मवति तत्पक्षपुच्छान्यथ यत्पक्षपुच्छेषु नैव तदात्मा-नमवति न पक्षपुच्छानि ॥ ९ ॥ उभयीर्यजुष्मतीश्च लोकम्पृणाश्चात्मन्नुपदधाति । तस्मादयमात्मा द्वि-गुणो बहुलतर ऽइव लोकम्पृणा ऽएव पक्षपुच्छेषु तस्मात्पक्षपुच्छानि तनीयाᳫँसीवानूचीश्च तिरश्ची-श्चात्मन्नुपदधात्यस्थीनि वा ऽइष्टकास्तस्मादिमान्य-न्वञ्चि च तिर्यञ्चि चात्मन्नस्थीनि पराचीरेव पक्षपुच्छेषु न हि किञ्चन पक्षपुच्छेषु तिर्यगस्त्यस्ति तद्धैतदेव चितस्य चाचितस्य च विज्ञानमेवमेव चित ऽइतरथा चितः ॥ १० ॥ स वै स्वयमातृण्णां लोकम्पृणया प्रच्छादयति । प्राणो वै स्वयमातृण्णादित्यो लोकम्पृणा प्राणं तदादित्येन समिन्धे तस्मादयमुष्णः प्राणस्तया सर्वमात्मानं प्रच्छा-दयति सर्वं तदात्मानमादित्येन समिन्धे तस्मादयᳫँ सर्व ऽएवात्मोष्णस्तद्धैतदेव जीविष्यतश्च मरिष्यतश्च विज्ञानमुष्ण ऽएव जीविष्यञ्छीतो मरिष्यन् ॥ ११ ॥ स यस्याᳫँ स्रक्त्यां प्रथमे ऽउपदधाति । ततो दशभि-र्दशभिः सञ्छादयन्नेत्या स्वयमातृण्णायै स तेनैव दक्षिणा-वृज्जघनेन स्वयमातृण्णाᳫँ सञ्छादयन्नेत्यानूक्याया ऽअथ पुनरेत्य तमवधिᳫँ सञ्छादयति ॥ १२ ॥ आत्मानमग्रे सञ्छादयति । आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्राथो-

ऽएवं व्वा ऽअसावादित्य ऽइमाँल्लोकान्दक्षिणावृदनुपर्य्यैति ॥ १३ ॥ स ऽएष प्प्राण ऽएव यल्लोकम्पृणा । तया सर्व्वमात्त्मानं प्प्रच्छादयति सर्व्वस्मिँस्तदात्त्मन्नप्राणं दधाति तद्यद्धास्यैषाङ्गं नाभिप्प्राप्नुयात्प्राणो हास्य तदङ्गं नाभिप्प्राप्नुयाद्यद्वु वै प्प्राणोऽङ्गं नाभिप्प्राप्नोति शुष्यति वा वै तन्म्लायति वा तस्मादेनꣳ सर्व्वमेवैतया प्प्रच्छादयेत् ॥ १४ ॥ स वा ऽआत्त्मन ऽएवाधि पक्षपुच्छानि चिनोति । आत्त्मनो ह्येवाद्ध्यङ्गानि प्प्ररोहन्त्यथ * यत्परस्तादर्व्वाचीरुपदद्ध्याद्यथान्न्यत ऽआहृत्त्याङ्गं प्रतिदद्ध्यात्तादृक्तत् ॥ १५ ॥ न भिन्नां न कृष्णामुपदद्ध्यात् । आर्च्छति वा ऽएषा या भिद्यत ऽआर्त्तम्वेतद्द्रूपं यत्कृष्णं नेदार्त्तमात्त्मानमभिसंस्करवा ऽइति नाभिन्नां परास्येन्नेदनार्त्तमात्त्मनो बहिर्द्धा करवाणीति धिष्णेभ्यꣳ प्प्रतिसंख्याय या व्विराजमतिरिच्च्येरन्नोत्तरामुद्भवेयुस्तद्वै खलु ताऽआर्च्छन्ति ता भित्त्वोत्कर ऽउत्किरेदुत्करो वा ऽअतिरिक्तस्य प्प्रतिष्ठा तद्यत्रातिरिक्तस्य प्प्रतिष्ठा तदेवैनाऽएतत्प्रतिष्ठापयति ॥ १६ ॥ अथात ऽइष्टकामात्राणामेव । पादमात्रीꣳ प्प्रथमायाश्चोत्तमायाश्च चित्त्योरुपदद्ध्यात्प्रतिष्ठा वै पादो यो वै पादꣳ स हस्त ऊर्व्वस्त्थमात्र्यो व्वर्षिष्ठाꣳ स्युर्न्न ह्यूर्व्वस्त्थात्किञ्चन व्वर्षीयोऽस्त्थ्यस्ति त्र्यालिखितवत्त्यस्तिस्रश्चितयꣳ स्युस्त्रिवृतो हीमे लोका ऽअपरिमितालिखिते द्वे रसो हैते चिती ऽअपरिमित ऽउ वै रसꣳ

* 'यत्पुरस्ता' इति 'ग-ज' पुस्तकयोः ।

सर्व्वास्त्वेव ब्रूयालिखितवत्त्यः स्युः सर्व्वे ह्येवेमे लोकास्त्रिवृतः ॥ १७ ॥ अथात ऽइष्टकानामेवावपनस्य । यां कांश्च यजुष्मतीमिष्टकां विद्यात्तां मद्ध्यमायां चिता ऽउपदद्ध्यादन्तरिक्षं व्वै मद्ध्यमा चितिरन्तरिक्षमु वै सर्व्वेषां भूतानामावपनमथो ऽअन्नं वै यजुष्मत्य ऽइष्टका ऽउदरं मद्ध्यमा चितिरुदरे तदन्नं दधाति ॥ १८ ॥ तदाहुः । नोपदद्ध्यान्नेदतिरेचयानीति स वा ऽउपैव दद्ध्यात्कामेभ्यो वा ऽएता ऽइष्टका ऽउपधीयन्ते न वै कामानामतिरिक्तमस्ति स वै नैवोपदद्ध्यादेतावद्वा ऽएतद्देवा ऽअकुर्व्वन् ॥ १९ ॥ (B)

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ इष्टकासु पुरीषनिवापः, स्वयमातृण्णा-विकर्ण्युपधानं च ]

अथ पुरीषं निवपति । माꣳसं वै पुरीषं माꣳसेनैवैनमेतत्प्रच्छादयतीष्टका ऽउपाधायास्त्थीष्टका ऽअस्त्थि तन्माꣳसैः सञ्छादयति ॥ १ ॥ स वै स्वयमातृण्णायामावपति । प्राणो वै स्वयमातृण्णान्नं पुरीषं प्राणे तदन्नं दधाति तेन सर्व्वमात्मानं प्रच्छादयति तस्माद्यत्प्राणेऽन्नं धीयते * तत्सर्व्वमात्मानमवति सर्व्वमात्मानमनुव्व्येति ॥ २ ॥ न स्वयमातृण्णायामावपेदित्यु हैक ऽआहुः । प्राणः स्वयमातृण्णा नेत्प्राणानपिदधानीति स वा ऽऐव व्वपेदन्नेन वै प्प्राणा व्विष्टब्धा यो वा ऽअन्नं नात्ति सं वै तस्य प्प्राणा

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. २. २।

* 'तत्सर्व्वम्' इति 'क-घ'। 'सर्व्वम्' इति 'ग-ज' पुस्तकयोः।

रोहन्ति तद्यस्य ह तथा कुर्व्वन्ति यथा शुष्का सूर्म्मी सुषिरैवꣳ ह सोऽमुष्मिँल्लोके सम्भवति तस्मात्स्वयमातृण्णायामेव वपेत् ॥ ३ ॥ स्वयमातृण्णायामोप्प्य । अनूक्यया सञ्छादयन्नेत्त्या परिश्रिद्भ्यः स तेनैव दक्षिणावृज्जघनेन स्वयमातृण्णाꣳ सञ्छादयन्नेत्त्या पुनरनूक्यायै ॥ ४ ॥ आत्मानमग्ग्रे सञ्छादयति । आत्मा ह्येवाग्ग्रे सम्भवतः सम्भवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा ॥ ५ ॥ स ऽएष प्प्राण ऽएव यत्पुरीषम् । तेन सर्व्वमात्मानं प्रच्छादयति सर्व्वस्मिँस्तदात्मन्प्राणं दधाति तद्यद्धास्यैतदङ्गं नाभिप्प्राप्प्नुयात्प्राणो हास्य तदङ्गं नाभिप्प्राप्प्नुयाद्यदु वै प्प्राणोऽङ्गं नाभिप्प्राप्प्नोति शुष्यति वा वै तन्म्लायति वा तस्मादेनꣳ सर्व्वमेवैतेन प्प्रच्छादयेत् ॥ ६ ॥ 'इन्द्रं विश्वा ऽअवीवृधन्नि'ति । इन्द्रꣳ हि सर्व्वाणि भूतानि वर्द्धयन्ति 'समुद्रव्व्यचसं गिर' ऽइति महिमानमस्यैतदाह 'रथीतमꣳ रथीनामि'ति रथितमो ह्येष रथिनां 'व्वाजानाꣳ सत्पतिं पतिमि'त्यन्नं वै व्वाजा ऽअन्नानाꣳ सत्पतिं पतिमित्येतदैन्द्र्यानुष्टुभा निवपत्यैन्द्रꣳ हि पुरीषं तदेतदर्द्धमग्नेर्यत्पुरीषमर्द्धमैष्टकम् ॥ ७ ॥ तदाहुः । यत्सर्वैश्छन्दोभिः सर्व्वाभिर्देवताभिरिष्टका ऽउपदधात्यथैतदेकयैकदेवत्त्यया निवपति कथमेतदर्द्धमग्नेरितीन्द्रो वै सर्व्वान्देवा-

(१) शु० य० सं० अ० १५ क० ६१। (२) शु० य० सं० अ० १५ क० ६१। (३) शु० य० सं० अ० १५ क० ६१। (४) शु० य० सं० अ० १५ क० ६१।

क्प्रतिप्रतिस्तद्यदैन्द्रया निर्वपति तेनैतदर्द्धमग्नेरथ यदनुष्टुभा वाग्वा ऽअनुष्टुब्वागु सर्वाणि च्छन्दाᳬसि तेनो ऽएवार्द्धम् ॥ ८ ॥ अथ * विकर्णीं च स्वयमातृण्णां चोपदधाति । वायुर्वै विकर्णी द्यौरुत्तमा स्वयमातृण्णा वायुं च तद् दिवं चोपदधात्युत्तमे ऽउपदधात्युत्तमे हि वायुश्च द्यौश्च सᳬस्पृष्टे सᳬस्पृष्टे हि वायुश्च द्यौश्च पूर्वां विकर्णीमुपदधात्यर्वाचीनं तद्दिवो वायुं दधाति तस्मादेषोऽर्वाचीन†मेवातः पवते ॥ ९ ॥ यद्देव विकर्णीमुपदधाति । यत्र वा ऽअदोऽश्वं चितिमवघ्रापयन्ति तदसावादित्य ऽइमाँल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रं वायुः स स यः स वायुरेषा सा विकर्णी तद्यदेतामुपदधात्यसावेव तदादित्य ऽइमाँल्लोकान्त्सूत्रे समावयते ॥ १० ॥ यद्देव विकर्णीं च स्वयमातृण्णां चोपदधाति । आयुर्वै विकर्णी प्राणः स्वयमातृण्णायुश्च तत्प्राणं चोपदधात्युत्तमे ऽउपदधात्युत्तमे ह्यायुश्च प्राणश्च सᳬस्पृष्टे सᳬस्पृष्टे ह्यायुश्च प्राणश्च पूर्वामुत्तरां विकर्णीमुपदधात्यायुषा तत्प्राणमुभयतः परिगृह्णाति ॥ ११ ॥ '[1]प्रोथदश्वो न यवसे । अविष्यन्यदा महः संवरणाद्व्यस्थात् । आदस्य वातो ऽअनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्ती'ति यदा वा ऽएतस्य वातोऽनुवाति शोचिरथैतस्य

* "प्रच्छाद्य पुरीषेण विकर्णीस्वयमातृण्णे शर्करे संस्पृष्टे छिद्रे 'प्रोथदश्व' इत्युत्तरां विकर्णीमायोष्ट्वेति स्वयमातृण्णाम्" ( का० श्रौ० सू० १७. १२. २५ ) ।

† 'मेवातः' इति 'क-घ' । मेव वातः' इति 'ग-ज' पुस्तकयोः ।

(१) शु० य० सं० अ० १५ क० ६२ ।

व्व्रजनं कृष्णं भवति त्रिष्टुभोपदधाति त्रैष्टुभो हि वायुराग्ने-
य्यामिकर्म्म ह्यनिरुक्तयानिरुक्तो हि वायुरथ यद्वात ऽइत्याह
वातो हि वायुः ॥ १२ ॥ * अथ स्वयमातृण्णामुपदधाति ।
'आयोष्ट्वा सदने सादयामी'त्येष वा ऽआयुस्तस्यैतत्सदन-
'मवेत' ऽइत्येष हीदꣳ सर्वमवति छायायामित्येतस्य हीदꣳ
सर्वं 'छायायाꣳ समुद्रस्य हृदय' ऽइति समुद्रस्य ह्येतद्धृ-
दयꣳ 'रश्मीवतीं भास्वतीमि'ति रश्मिवती हि द्यौर्भा-
स्व'त्या या द्यां भास्या पृथिवीमोर्वन्तरिक्षमि'त्येवꣳ ह्येष
ऽइमाँल्लोकानाभाति ॥ १३ ॥ 'परमेष्ठी त्वा सादयत्वि'ति ।
परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यत् ॥ १४ ॥ यद्वेव परमे-
ष्ठिनोपदधाति । प्रजापतिं विस्त्रस्तं देवता ऽआदाय
व्व्युदक्रामँस्तस्य परमेष्ठी शिर ऽआदायोत्क्रम्यातिष्ठत्
॥ १५ ॥ तमब्रवीत् । उप मेहि प्प्रति म ऽएतद्धेहि येन
मे त्वमुदक्रमीरिति किं मे ततो भविष्यतीति त्वद्देवत्यमेव
म ऽएतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतत्परमेष्ठी
प्प्रत्यदधात् ॥ १६ ॥ तद्यैषोत्तमा स्वयमातृण्णा । एतदस्य
तदात्मनस्तद्यदेतामत्रोपदधाति यदेवास्यैषात्मनस्तदस्मि-
न्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ॥ १७ ॥ 'दिवं-

---

* अत्र शतम् ४७०० ॥

(१) शु० य० सं० अ० १५ क० ६३ । (२) शु० य० सं० अ० १५ क० ६३ ।
(३) शु० य० सं० अ० १५ क० ६३ । (४) शु० य० सं० अ० १५ क० ६३ ।
(५) शु० य० सं० अ० १५ क० ६३ । (६) शु० य० सं० अ० १५ क० ६४ ।
(७) शु० य० सं० अ० १५ क० ६४ ।

स्पृष्ठे व्व्यचस्वतीम्प्रथस्वतीमि'ति । दिवो ह्येतत्पृष्ठं व्व्यचस्वत्प्रथस्वद्दिवँ 'य्यच्छ दिवं दृꣳह दिवं मा हिꣳसीरि'त्यात्मानं य्यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्येतत् ॥१८॥

व्विश्श्वस्म्मै प्प्राणायापानाय । व्व्यानायोदानाये'ति प्प्राणो वै स्वयमातृण्णा सर्व्वस्म्मा ऽउ वा ऽएतस्म्मै प्प्राणः 'प्प्रतिष्ठायै चरित्त्रायेे'तीमे वै लोकाः स्वयमातृण्णा ऽइम ऽउ लोकाः प्प्रतिष्ठा चरित्त्रꣳ 'सूर्य्यस्त्वाभिपात्त्वि'ति सूर्य्यस्त्वाभिगोपायत्त्वित्त्येत'न्नमह्या स्वस्त्त्ये'ति महत्त्या स्वस्त्त्येत्त्येत'च्छर्द्दिषा शन्तमेने'ति यच्छर्द्दिः शन्तमं तेनेत्त्येतत् ॥१९॥

नानोपदधाति । नाना हि वायुश्च द्यौश्च सकृत्सादयति समानं तत्करोति समानꣳ ह्यायुश्च प्प्राणश्च ते वा ऽउभे ऽएव शर्क्करे भवत ऽउभे स्वयमातृण्णे समानꣳ ह्येवायुश्च प्प्राणश्चाथैने सूददोहसाधिवदति प्प्राणो वै सूददोहाः प्प्राणेनैवैने ऽएतत्सन्तनोति सन्दधाति ॥ २० ॥

'ताँ ऽअस्य सूददोहस' ऽइति । आपो वै सूदोऽन्नं दोहः 'सोमꣳ श्रीणन्ति पृश्नय' ऽइत्त्यन्नं वै पृश्नि 'जन्मन्देवाना-मि'ति संवत्सरो वै देवानां जन्म 'व्विशं' ऽइति यज्ञो वै विशो यज्ञे हि सर्व्वाणि भूतानि विष्टानि 'त्रिष्ष्वा रोचने

(१) शु० य० सं० अ० १५ क० ६४। (२) शु० य० सं० अ० १५ क० ६४। (३) शु० य० सं० अ० १५ क० ६४। (४) शु० य० सं० अ० १५ क० ६४। (५) शु० य० सं० अ० १५ क० ६४। (६) शु० य० सं० अ० १५ क० ६४। (७) शु० य० सं० अ० १५ क० ६४। (८) शु० य० सं० अ० १५ क० ६४। (९) शु० य० सं० अ० १५ क० ६४। (१०) शु० य० सं० अ० १५ क० ६४। (११) शु० य० सं० अ० १५ क० ६४।

दिव’ ऽइति सवनानि वै त्रीणि रोचनानि सवनान्येतदाहा-नुष्टुभा वाग्वा ऽअनुष्टुब्वागु सर्व्वे प्प्राणा वाचा चैवैने-ऽएतत्प्राणेन च सन्तनोति सन्दधाति सा वा ऽएषैका सती सूददोहाः सर्व्वा ऽइष्टका ऽअनुसञ्चरति प्प्राणो वै सूददोहास्तस्मादयमेक ऽएव प्प्राणः सन्त्सर्व्वाण्यङ्गानि सर्व्वमात्मानमनुसञ्चरति ॥ २१ ॥ (C)

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ पञ्चम्याश्रितः सुवर्णशकलसहस्रेण प्रोक्षणम्, पुरीषेणाच्छादनं च ]

अथ स्वयमातृण्णासु सामानि गायति । इमे वै लोकाः स्वयमातृण्णास्ता ऽएताः शर्क्करास्ता देवा ऽउपधा-यैतादृशीरेवापश्श्यन्नथैताः शुष्काः शर्क्कराः ॥ १ ॥ तेऽब्रु-वन् । उप तज्जानीत यथैषु लोकेषु रसमुपजीवनं दधामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्त-दिच्छत यथैषु लोकेषु रसमुपजीवनं दधामेति ॥ २ ॥ ते चेतयमानाः । एतानि सामान्यपश्श्यँस्तान्यगायँस्तैरेषु लोकेषु रसमुपजीवनमदधुस्तथैवैतद्यजमानो यदेतानि सामानि गायत्येष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ३ ॥ स्वयमातृण्णासु गायति । इमे वै लोकाः स्वयमातृण्णा-ऽएष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ४ ॥ स वै

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. १२. ३; कठ० १७. १०; कपिष्ठ० २६. ९; मै० सं० ११. ८. १, १४; तै० सं० ४. ४. ५ ।

'भूर्भुवः स्वरि'ति । एतासु व्याहृतिषु गायति भूरिति वा ऽअयं लोको भुव ऽइत्यन्तरिक्षलोकः स्वरित्यसौ लोक ऽएष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ५ ॥ तानि वै नाना प्रस्तावानि । समाननिधनानि तानि यन्नाना प्रस्तावानि नाना ह्यपश्यन्नथ यत्समाननिधनान्येका ह्येव यज्ञस्य प्रतिष्ठैकं निधनं स्वर्ग्ग ऽएव लोकस्तस्मात्स्वर्ज्योतिर्निधनानि ॥ ६ ॥ अथैनं हिरण्यशकलैः प्रोक्षति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतदमृतं रूपमुत्तममदधुस्तथैवास्मिन्नयमेतदमृतं * रूपमुत्तमं दधाति ॥ ७ ॥ यद्वेवैनं हिरण्यशकलैः † प्रोक्षति । एतद्वा ऽअस्मिन्नदोऽमूं पुरस्ताद्रुक्म्यां तनूं मध्यतो दधाति रुक्मं च पुरुषं चाथैनमेतत्सर्वमेवोपरिष्टाद्रुक्म्यया तन्वा प्रच्छादयति ॥ ८ ॥ द्वाभ्यां—द्वाभ्याᳪं शताभ्याम् । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतं रूपमुत्तमं दधाति पञ्चकृत्वः पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतं रूपमुत्तमं दधाति सहस्रेण सर्वं वै सहस्रं सर्वेणैवास्मिन्नेतदमृतं रूपमुत्तमं दधाति ॥ ९ ॥ पश्चादग्ने प्राङ् तिष्ठन् । अथोत्तरतो दक्षिणाथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य

---

* 'रूपमुपतम्रम्' इति 'क' पुस्तके ।

† "पुरुषाभिहोमवत्तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे-द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रं सहस्रस्येति प्रतिमन्त्रम्" ( का० श्रौ० सू० १७. १२. २६ ) ।

दक्षिणत ऽउदङ् तिष्ठँस्तद्दक्षिणावृत्तद्धि देवत्राथानुपरीत्य पश्चात्प्राङ् तिष्ठँस्तथो हास्यैतत्प्रागेव कर्म्म कृतं भवति ॥ १० ॥ 'सहस्रस्य प्रमासि । सहस्रस्य प्रतिमासि सहस्रस्योन्मासि साहस्रोऽसि सहस्राय त्वे'ति सर्वं वै सहस्रꣳ सर्वमसि सर्वस्मै त्वेत्येतत् ॥ ११ ॥ अथातश्चित्य-तिपुरीषाणामेव मीमाꣳसा । अयमेव लोकः प्रथमा चितिः पशवः पुरीषं स्यत्प्रथमां चितिं पुरीषेण प्रच्छादयतीमं तल्लोकं पशुभिः प्रच्छादयति ॥ १२ ॥ अन्तरिक्षमेव द्वितीया चितिः । वयाꣳसि पुरीषं स्यद् द्वितीयां चितिं पुरीषेण प्रच्छादयत्यन्तरिक्षं तद्वयोभिः प्रच्छादयति ॥ १३ ॥ द्यौरेव तृतीया चितिः । नक्षत्राणि पुरीषं स्यत्तृतीयां चितिं पुरीषेण प्रच्छादयति दिवं तन्नक्षत्रैः प्रच्छादयति ॥ १४ ॥ यज्ञ ऽएव चतुर्थी चितिः । दक्षिणाः पुरीषं स्यच्चतुर्थीं चितिं पुरीषेण प्रच्छादयति यज्ञं तद्दक्षिणाभिः प्रच्छादयति ॥ १५ ॥ यजमान ऽएव पञ्चमी चितिः । प्रजा पुरीषं स्यत्पञ्चमीं चितिं पुरीषेण प्रच्छादयति यजमानं तत्प्रजया प्रच्छादयति ॥ १६ ॥ स्वर्ग ऽएव लोकः षष्ठी चितिः । देवाः पुरीषं स्यत्षष्ठीं चितिं पुरीषेण प्रच्छादयति स्वर्गं तल्लोकं देवैः प्रच्छादयति ॥ १७ ॥ अमृतमेव सप्तमी चितिः । तामुत्तमामुपदधात्यमृतं तदस्य सर्वस्यो-त्तमं दधाति तस्मादस्य सर्वस्यामृतमुत्तमं तस्माद्देवा-

(१) शु० य० सं० अ० १४ क० १७ ।

ऽअनन्तर्हितास्तस्मादु तेऽमृता ऽइत्यधिदेवतम् ॥ १८ ॥ अथाध्यात्मम् । यैवेयं प्रतिष्ठा यश्चायमवाङ् प्राणस्तत्प्रथमा चितिर्म्मांᳩसं पुरीषं स यत्प्रथमां चितिं पुरीषेण प्प्रच्छादयत्येतदस्य तदात्मनो माᳩसैः सञ्छादयतीष्टका ऽउपधायास्थीष्टका ऽअस्थि तन्माᳩसैः सञ्छादयति नाधस्तात्सञ्छादयति तस्मादिमे प्प्राणा ऽअधस्तादसञ्छन्ना ऽउपरिष्टात्तु प्प्रच्छादयत्येतदस्य तदात्मन ऽउपरिष्टान्माᳩसैः सञ्छादयति तस्मादस्यैतदात्मन ऽउपरिष्टान्माᳩसैः सञ्छन्नं नावकाशते ॥ १९ ॥ यदूर्ध्वं प्रतिष्ठाया ऽअवाचीनं मध्यात् । तद् द्वितीया चितिर्म्मांᳩसं पुरीषं स यद् द्वितीयां चितिं पुरीषेण प्प्रच्छादयत्येतदस्य तदात्मनो माᳩसैः सञ्छादयतीष्टका ऽउपधायास्थीष्टका ऽअस्थि तन्माᳩसैः सञ्छादयति पुरीष ऽउपदधाति पुरीषेण प्प्रच्छादयत्येतदस्य तदात्मन ऽउभयतो माᳩसैः सञ्छादयति तस्मादस्यैतदात्मन ऽउभयतो माᳩसैः सञ्छन्नं नावकाशते ॥ २० ॥ मध्यमेव तृतीया चितिः । यदूर्ध्वं मध्यादवाचीनं ग्रीवाभ्यस्तच्चतुर्थी चितिर्ग्रीवा ऽएव पञ्चमी चितिः शिर ऽएव षष्ठी चितिः प्प्राणा ऽएव सप्तमी चितिस्तामुत्तमामुपदधाति प्प्राणाँस्तदस्य सर्वस्योत्तमान्दधाति तस्मादस्य सर्वस्य प्प्राणा ऽउत्तमाः पुरीष ऽउपदधाति माᳩसं वै पुरीषं * माᳩसे तत्प्राणा-

* 'मा ट्-स्रेन' इति 'ग-ज' पुस्तकयोः ।

न्प्रतिष्ठापयति नोपरिष्टात्प्रच्छादयति तस्मादिमे प्प्राणा ऽउपरिष्टादुसञ्छन्नाः ॥ २१ ॥ (D)

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥ कण्डिकासंख्या १०९ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

* चितिनामाष्टमं काण्डं समाप्तम् ॥ ८ ॥



(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. २. ४।

* अस्मिन्काण्डे कण्डिकासंख्या ४३७।

# अथ साञ्चितिनाम नवमं काण्डम्

अस्मिन् काण्डे प्रतिपाद्या विषयाः— शतरुद्रियहोमविधानम्, चित्यपरिषेकः, वसोर्धाराहोमः, वाजप्रसवीयहोमः राष्ट्रभृद्धोमादि, धिष्ण्यचयनम्, पुनश्चितिः, चित्युपस्थानं चेति ।

[ शतरुद्रियहोमः ]

ॐ ॥ अथातः शतरुद्रियं * जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र रुद्रो देवता तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुः स ऽएषोऽत्र दीप्यमानोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा ऽअबिभयुर्यद्वै नोऽयं न हिꣳस्यादिति ॥ १ ॥ तेऽब्रुवन् । अन्नमस्मै सम्भराम तेनैनꣳ शमयामेति तस्मा ऽएतदन्नꣳ समभरञ्छान्तदेवत्यं तेनैनमशमयँस्तद्यदेतं देवमेतेनाशमयँस्तस्माच्छान्तदेवत्यꣳ शान्तदेवत्यꣳ ह वै तच्छतरुद्रियमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्मिन्नयमेतदमृतꣳ रूपमुत्तमं दधाति स ऽएषोऽत्र दीप्यमानस्तिष्ठत्यन्नमिच्छमानस्तस्मा ऽएतदन्नꣳ सम्भरति शान्तदेवत्यं तेनैनꣳ शमयति ॥ २ ॥ जर्त्तिलैर्जुहोति । जायत ऽएष ऽएतद्य-

* शतरुद्रियहोम उत्तरपक्षस्याऽपरस्याꣳ स्रक्त्यां परिश्रित्स्वर्कपर्णेनाऽर्ककाष्ठेन शातयन् सन्ततं जर्तिलमिश्रान् गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ् 'नमस्त' इत्यध्यायेन ( का० श्रौ० सू० १८. १. १ )।

चीयते स ऽएष सर्व्वस्म्मा ऽअन्नाय जायत ऽउभयम्वेतदन्नं
स्यज्जर्त्तिला यच्च ग्ग्राम्म्यं यच्चारण्ण्यं स्यदुह तिलास्तेन
ग्ग्राम्म्यं स्यदुक्कृष्टे पच्च्यन्ते तेनारण्ण्यमुभयेनैवैनमेतदन्नेन
प्प्रीणाति ग्ग्राम्म्येण चारण्ण्येन च ॥३॥ अर्क्कपर्ण्णेन जुहोति।
अन्नमर्क्कोऽन्नेनैवैनमेतत्प्प्रीणाति ॥ ४ ॥ परिश्रित्सु जुहोति ।
अग्नय ऽएते यत्परिश्रितस्तथो हास्यैता ऽअग्निमत्त्येवाहु-
तयो हुता भवन्ति ॥ ५ ॥ यद्वेवैतच्छतरुद्रियं जुहोति ।
प्रजापतेर्व्विस्रस्ताद्देवता ऽउदक्रामँस्तमेक ऽएव देवो नाज-
हान्म्मन्न्युरेव सोऽस्मिन्नन्तार्व्विततोऽतिष्ठत्सोऽरोदीत्तस्य
यान्न्यश्रूणि प्प्रास्कन्दँस्तान्न्यस्मिन्न्मन्न्यौ प्प्रत्यतिष्ठन्त्स-
ऽएव शतशीर्षा रुद्रः समभवत्सहस्राक्षः शतेषुधिरथ या-
ऽअन्न्या विप्प्रुषोऽपतँस्ता ऽअसङ्ख्याता सहस्राणीमाँल्लोकान-
नुप्प्राविशँस्तद्यद्रुदितात्समभवँस्तस्म्माद्रुद्राः सोऽयꣳ शत-
शीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्ज्यधन्न्वा प्प्रतिहितायी
भीषयमाणोऽतिष्ठदन्नमिच्छमानस्तस्म्माद्देवा ऽअबिभयुः
॥ ६ ॥ ते प्प्रजापतिमब्रुवन् । अस्म्माद्वै बिभीमो यद्वै
नोऽयं न हिꣳस्यादिति ' सोऽब्रवीदन्नमस्म्मै सम्भरत
तेनैनꣳ शमयतेति तस्म्मा ऽएतदन्नꣳ समभरञ्छतरुद्रियं
तेनैनमशमयँस्तद्यदेतꣳ शतशीर्षाणꣳ रुद्रमेतेनाशमयँस्त-
स्म्माच्छतशीर्षरुद्रशमनीयꣳ शतशीर्षरुद्रशमनीयꣳ ह वै
तच्छतरुद्रियमित्त्याचक्षते परोक्षं परोक्षकामा हि देवा-
स्तथैवास्म्मा ऽअयमेतदन्नꣳ सम्भरति शतरुद्रियं तेनैनꣳ

# अथ सञ्चितिनाम नवमं काण्डम्

अस्मिन् काण्डे प्रतिपाद्या विषयाः— शतरुद्रियहोमविधानम्, चित्यपरिषेकः, वसोर्धाराहोमः, वाजप्रसवीयहोमः राष्ट्रभृद्धोमादि, धिष्ण्यचयनम्, पुनश्चितिः, चित्युपस्थानं चेति ।

[ शतरुद्रियहोमः ]

ॐ ॥ अथातः शतरुद्रियं * जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र रुद्रो देवता तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुः स ऽएषोऽत्र दीप्यमानोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा ऽअबिभयुर्यद्वै नोऽयं न हिꣳस्यादिति ॥ १ ॥ तेऽब्रुवन् । अन्नमस्मै सम्भराम तेनैनꣳ शमयामेति तस्मा ऽएतदन्नꣳ समभरञ्छान्तदेवत्यं तेनैनमशमयँस्तद्यदेतं देवमेतेनाशमयँस्तस्माच्छान्तदेवत्यꣳ शान्तदेवत्यꣳ ह वै तच्छतरुद्रियमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्मिन्नयमेतदमृतꣳ रूपमुत्तमं दधाति स ऽएषोऽत्र दीप्यमानस्तिष्ठत्यन्नमिच्छमानस्तस्मा ऽएतदन्नꣳ सम्भरति शान्तदेवत्यं तेनैनꣳ शमयति ॥ २ ॥ जर्त्तिलैर्जुहोति । जायत ऽएष ऽएतद्य-

---

* शतरुद्रियहोम उत्तरपक्षस्याऽपरस्याꣳ स्रक्त्यां परिश्रितस्वर्कपर्णेनाऽर्ककाष्ठेन शातयन् सन्ततं जर्तिलमिश्रान् गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ् 'नमस्त' इत्यध्यायेन ( का० श्रौ० सू० १८. १. १ )।

क्षीयते स ऽएष सर्व्वस्म्मा ऽअन्नाय जायत ऽउभयम्वेतदन्नं यज्जर्त्तिला यच्च ग्ग्राम्म्यं यच्चारण्ण्यं यदह तिलास्तेन ग्ग्राम्म्यं यदकृष्टे पच्च्यन्ते तेनारण्ण्यमुभयेनैवैनमेतदन्नेन प्प्रीणाति ग्ग्राम्म्येण चारण्ण्येन च ॥३॥ अर्क्कपर्ण्णेन जुहोति। अन्नमर्क्कोऽन्नेनैवैनमेतत्प्प्रीणाति ॥ ४ ॥ परिश्श्रित्सु जुहोति । अग्नय ऽएते यत्परिश्श्रितस्तथो हास्यैता ऽअग्निमत्त्येवाहुतयो हुता भवन्ति ॥ ५ ॥ यद्वेवैतच्छतरुद्रियं जुहोति । प्रजापतेर्व्विस्रस्ताद्देवता ऽउदक्क्रामँस्तमेक ऽएव देवो नाजहान्मन्न्युरेव सोऽस्मिन्नन्तर्व्विततोऽतिष्ठत्सोऽरोदीत्तस्य यान्न्यश्रूणि प्प्रास्कन्दँस्तान्न्यस्मिन्मन्न्यौ प्प्रत्यतिष्ठन्त्स ऽएव शतशीर्षा रुद्रः समभवत्सहस्राक्षः शतेषुधिरथ या ऽअन्न्या व्विप्प्रुषोऽपतँस्ता ऽअसङ्ख्याता सहस्राणीमाँल्लोकाननुप्प्राविशँस्तद्यद्रुदितात्समभवँस्तस्म्माद्रुद्राः सोऽयः शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्ज्यधन्न्वा प्प्रतिहितायी भीषयमाणोऽतिष्ठदन्नमिच्छमानस्तस्म्माद्देवा ऽअबिभयुः ॥ ६ ॥ ते प्प्रजापतिमब्रुवन् । अस्म्माद्वै बिभीमो यद्वै नोऽयं न हिंस्यादिति ' सोऽब्रवीदन्नमस्म्मै सम्भरत तेनैनः शमयतेति तस्म्मा ऽएतदन्नः समभरञ्छतरुद्रियं तेनैनमशमयँस्तद्यदेतः शतशीर्षाणः रुद्रमेतेनाशमयँस्तस्म्माच्छतशीर्षरुद्रशमनीयः शतशीर्षरुद्रशमनीयः ह वै तच्छतरुद्रियमित्त्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्म्मा ऽअयमेतदन्नः सम्भरति शतरुद्रियं तेनैनः

शमयति ॥ ७ ॥ गवेधुकासक्तुभिर्जुहोति । यत्र वै सा देवता विस्रस्ताशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्प्रीणाति ॥ ८ ॥ अर्क्कपर्ण्णेन जुहोति । एतस्य वै देवस्याशयादर्क्कः समभवत्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्प्रीणाति ॥ ९ ॥ परिश्श्रित्सु जुहोति । लोमानि वै परिश्श्रितो न वै लोमसु विषं न किञ्चन हिनस्त्युत्तरार्द्धेऽग्नेरुदङ् तिष्ठञ्जुहोत्येतस्यार्ठं ह दिश्येतस्य देवस्य गृहाः स्वायामेवैनमेतद्दिशि तत्प्रीणाति स्वायां दिश्यवयजते ॥ १० ॥ स वै जानुदघ्ने प्प्रथमर्ठं स्वाहाकरोति । अध ऽइव वै तद्यज्जानुदघ्नमध ऽइव तद्यदयं लोकस्तद्य ऽइमं लोकर्ठं रुद्राः प्प्राविशँस्ताँस्तत्प्रीणाति ॥ ११ ॥ अथ नाभिदघ्ने । मद्ध्यमिव वै तद्यन्नाभिदघ्नं मद्ध्यमिवान्तरिक्षलोकस्तद्येऽन्तरिक्षलोकर्ठं रुद्राः प्प्राविशँस्ताँस्तत्प्रीणाति ॥ १२ ॥ अथ * मुखदघ्ने । उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्यदसौ लोकस्तद्येऽमुं लोकर्ठं रुद्राः प्प्राविशँस्ताँस्तत्प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारोऽन्नेनैवैनानेतत्प्रीणाति ॥ १३ ॥ '[१]नमस्ते रुद्र मन्यव' ऽइति । य ऽएवास्मिन्त्सोऽन्तर्म्मन्न्युर्वितत्तोऽतिष्ठत्तस्मा ऽएतन्नमस्करोत्युतो त ऽइषवे [२]नमो बाहुब्भ्यामुत ते नम' ऽइतीष्वा च हि बाहुब्भ्यां च भीषयमाणोऽतिष्ठत् ॥ १४ ॥ स ऽएष क्षत्रं देवः । यः स शतशीर्षा समभवद्विश-

* 'मुखदघ्न । ऽउ' इति 'ग-ज' पु० । 'मुखदघ्ने । उ' इति 'क-घ' पुस्तकयोः ।
(१) शु० य० सं० अ० १६ क० १ । (२) शु० य० सं० अ० १६ क० १

ऽइम ऽइतरे ये विप्रुड्भ्यः समभवँस्तस्मा ऽएतस्मै क्षत्रायैता विश ऽएतं पुरस्तादुद्धारमुदहरन्न्य ऽएष प्रथमोऽनुवाकस्तेनैनमप्रीणँस्तथैवास्मा ऽअयमेतं पुरस्तादुद्धारमुद्धरति तेनैनं प्रीणाति तस्मादेष ऽएकदेवत्यो भवति रौद्र ऽएतᳬँ ह्येतेन प्रीणाति ॥ १५ ॥ चतुर्दशैतानि यजूᳬंषि भवन्ति त्रयोदश मासाः संवत्सरः प्रजापतिश्चतुर्दशः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति नमो नम ऽइति यज्ञो वै नमो यज्ञेनैवैनमेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽइति यथा हैनं ब्रूयाद्यज्ञस्त ऽइति तादृक्तत् ॥ १६ ॥ अथ द्वन्द्विभ्यो जुहोति। नमोऽमुष्मै चामुष्मै चेति तद्यथा वै ब्रूयादसौ त्वं च न ऽएष च मा हिᳬंसिष्टमित्येवमेतदाह नतराᳬं हि विदितऽआमन्त्रितो हिनस्ति ॥ १७ ॥ '[1]नमो हिरण्यबाहवे। सेनान्ये दिशां च पतये नम' ऽइत्येष ऽएव हिरण्यबाहुः सेनानीरेष दिशां पतिस्तद्यत्किञ्चात्रैकदेवत्यमेतमेव तेन प्रीणाति क्षत्रमेव तद्विश्यपि भागं करोति तस्माद्यद्विशस्तस्मिन्क्षत्रियोऽपि भागोऽथ या ऽअसङ्ख्याता सहस्राणीमाँल्लोकाननुप्राविशन्नेतास्ता देवता याभ्य ऽएतज्जुहोति ॥१८॥ अथ जातेभ्यो जुहोति। एतानि ह जातान्येते रुद्राऽअनुप्रविविशुर्यत्र-यत्रैते तदेवैनानेतत्प्रीणात्यथो ऽएवᳬं हैतानि रुद्राणां जातानि देवानां वै विधामनु मनुष्यास्त-

(१) शु० य० सं० अ० १६ क० १७।

स्तस्मादु हैतानि मनुष्याणां जातानि यथाजातमेवैनानेतत्प्रीणाति ॥१९॥ तेषां वा ऽउभयतो नमस्कारा *ऽअन्न्ये । अन्न्यतरतो नमस्कारा ऽअन्न्ये ते ह ते घोरतरा ऽअशान्ततरा य ऽउभयतो नमस्कारा ऽउभयत ऽएवैनानेतद्यज्ञेन नमस्कारेण शमयति ॥ २० ॥ स वा ऽअशीत्त्यां च स्वाहाकरोति । प्रथमे चानुवाकेऽथाशीत्त्यामथाशीत्त्यां च यानि चोर्द्ध्वानि यजूꣳष्यावतानेब्भ्योऽन्नमशीतयोऽन्नेनैवैनानेतत्प्रीणाति ॥ २१ ॥ अथैतानि यजूꣳषि जपति । 'नमो वः किरिकेब्भ्य' ऽइत्त्येतद्धास्य प्प्रतिज्ञाततमं धाम यथा प्प्रियो वा पुत्त्रो हृदयं वा तस्म्माद्यत्रैतस्म्माद्देवाच्छङ्केत तदेताभिर्व्याहृतिभिर्जुहुयादुप हैवैतस्य देवस्य प्प्रियं धाम गच्छति तथो हैनमेष देवो न हिनस्ति ॥ २२ ॥ 'नमो वः किरिकेब्भ्य' ऽइति । एते हीदꣳ सर्वं कुर्व्वन्ति 'देवानाꣳ हृदयेब्भ्य' ऽइत्त्यग्निर्वायुरादित्त्य ऽएतानि ह तानि देवानाꣳ हृदयानि 'नमो विचिन्न्वत्केब्भ्य' ऽइत्त्येते हीदꣳ सर्वं विचिन्न्वन्ति 'नमो विक्षिणत्केब्भ्य' ऽइत्त्येते वै तं विक्षिणन्ति यं विचिक्षीषन्ति 'नम ऽआनिर्हतेब्भ्य' ऽइत्त्येते ह्येब्भ्यो लोकेब्भ्योऽनिर्हताः ॥ २३ ॥ अथोत्तराणि जपति । 'द्रापे ऽअन्धसस्पत' ऽइत्त्येष वै द्रापिरेष वै तं द्रापयति यं दिद्रापयिषत्त्यन्धसस्पत ऽइति सोमस्य पत-

* 'ऽअन्न्ये । ऽन्न्य' इति 'ग–ज' पु० । 'ऽअन्न्ये । अन्न्य' इति 'क–घ' पुस्तकयोः ।
(१) शु० य० सं० अ० १६ क० ४६ । (२) शु० य० सं० अ० १६ क० ४६ । (३) शु० य० सं० अ० १६ क० ४६ । (४) शु० य० सं० अ० १६ क० ४६ । (५) शु० य० सं० अ० १६ क० ४६ । (६) शु० य० सं० अ० १६ क० ४७ ।

ऽइत्त्येत 'द्रद्रि नीलँल्लोहिते'ति नामानि चास्यैतानि रूपाणि च नामग्ग्राहमेवैनमेतत्प्रीणा'त्यासां प्रजानामेषां पशूनां मा भेर्म्मा रोङ्मो च नः किञ्चनाममदि्'ति यथैव यजुस्तथा बन्धुः ॥ २४ ॥ स ऽएष क्षत्त्रं देवः । तस्म्मा ऽएतस्म्मै क्षत्त्रायैता व्विशोऽमुं पुरस्तादुद्धारमुदहरन्न्योऽसौ प्प्रथमोऽनुवाकोऽथास्म्मा ऽएतमुपरिष्ट्टादुद्धारमुदहरँस्तेनैनमप्प्रीणँस्तथैवास्म्मा ऽअयमेतमुपरिष्ट्टादुद्धारमुद्धरति तेनैनं प्रीणाति तस्म्मादुप्प्येष ऽएकदेवत्त्यो भवति रौद्र ऽएवैतद्ध ह्येवैतेन प्प्रीणाति ॥२५॥ सप्तैतानि यजूंषि भवन्ति । सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्त्सरः संवत्त्सरोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्रीणाति तान्न्युभयान्न्येकविंशतिः सम्पद्यन्ते द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्त्य ऽएकविंश ऽएतामभिसम्पदम् ॥ २६ ॥ अथावतानाञ्जुहोति । एतद्वा ऽएनान्देवा ऽएतेनान्नेन प्प्रीत्वाथैषामेतैरवतानैर्द्धनूंष्ष्यवातन्वँस्तथैवैनानयमेतदेतेनान्नेन प्प्रीत्वाथैषामेतैरवतानैर्द्धनूंष्ष्यवतनोति न ह्यवततेन धनुषा कश्चन हिनस्ति ॥ २७ ॥ तद्वै सहस्रयोजन ऽइति । एतद्ध परमं दूरं यद्यत्सहस्रयोजनं तद्यदेव परमं दूरं तदेवैषामेतद्धनूंष्ष्यवतनोति ॥ २८ ॥ यद्वेवाह सहस्रयोजन ऽइति । अयमग्निः सहस्रयोजनं न ह्येतस्म्मादिति नेत्त्यन्न्यत्परमस्ति तद्यदग्नौ जुहोति तदेवैषाथं सहस्रयोजने धनूंष्ष्यवतनोति ॥ २९ ॥ 'असंख्याता

(१) शु० य० सं० अ० १६ क० ४७। (२) शु० य० सं० अ० १६ क० ४७। (३) शु० य० सं० अ० १६ क० ५४,५५।

सहस्राणि । अस्मिन्न्महत्त्यर्ण्णव' ऽइति यत्र-यत्रै ते तदेवैषामेतद्धनूꣳष्यवतनोति ॥ ३० ॥ दशैतानवताना-ञ्जुहोति । दशाक्षरा विराड्विराडग्निर्दश दिशो-दिशोऽग्निर्दश प्प्राणाः प्प्राणा ऽअग्निर्यावानग्निर्यावत्त्यस्य मात्रा तावतैवैषा-मेतद्धनूꣳष्यवतनोति ॥ ३१ ॥ अथ * प्प्रत्त्यवरोहाञ्जुहोति । एतद्वा ऽएतदिमाँल्लोकानित ऽऊर्द्ध्वो रोहति स स पराङिव रोह ऽइयमु वै प्प्रतिष्ठा ते देवा ऽइमां प्रतिष्ठामभिप्प्रत्त्या-यँस्तथैवैतद्यजमान ऽइमां प्रतिष्ठामभिप्प्रत्त्यैति ॥ ३२ ॥ यद्वेव प्प्रत्त्यवरोहति । एतद्वा ऽएनानेतत्प्रीणन्नन्न्वेवैति तत ऽएवैतदात्त्मानमपोद्धरते जीवात्त्वै तथो हानेनात्त्मना सर्वमायुरेति ॥ ३३ ॥ यद्वेव प्प्रत्त्यवरोहति । एतद्वा ऽएत-देतान्रुद्रानित ऽऊर्द्ध्वान्न्प्रीणाति तान्न्पुनरमुतोऽर्वाचः ॥ ३४ ॥ 'नमोऽस्तु रुद्रेभ्यो ये दिवी'ति । तद्येऽमुष्मिँल्लोके रुद्रास्तेभ्य ऽएतन्नमस्करोति 'येषां वर्षमिषव' ऽइति वर्षꣳ ह तेषामिषवो वर्षेण ह ते हिꣳसन्ति यं जिहिꣳ-सिषन्ति ॥ ३५ ॥ 'नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्ष' ऽइति । तद्येऽन्तरिक्षलोके रुद्रास्तेभ्य ऽएतन्नमस्करोति 'येषां वात ऽइषव' ऽइति वातो ह तेषामिषवो वातेन ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३६ ॥ 'नमोऽस्तु रुद्रेभ्यो

* प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम् ( का० श्रौ० सू० १८ . १. ५।

(१) शु० य० सं० अ० १६ क० ६४। (२) शु० य० सं० अ० १६ क० ६४। (३) शु० य० सं० अ० १६ क० ६५। (४) शु० य० सं० अ० १६ क० ६५। (५) शु० य० सं० अ० १६ क० ६६।

ये पृथिव्व्यामि'ति । तद्येऽस्मिँल्लोके रुद्रास्तेभ्य ऽएतन्न-मस्करोति 'येषामन्नमिषव' ऽइत्यन्नꣳ ह तेषामिषवोऽन्नेन ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३७ ॥ 'तेभ्यो[1] दश प्प्राचीः । दश दक्षिणा दश प्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वा' ऽइति * दश-दशेति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्प्राणाः प्प्राणा ऽअग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्प्रीणाति ॥ ३८ ॥ यद्वेवाह दश-दशेति । दश वा ऽअञ्जलेरङ्गुलयो दिशि-दिश्येवैभ्य-ऽएतदञ्जलिं करोति तस्मादु हैतद्भीतोऽञ्जलिं करोति 'तेभ्यो[2] नमो ऽअस्त्वि'ति तेभ्य ऽएव नमस्करोति 'ते[3] नो मृडयन्त्वि'ति त ऽएवास्म्मै मृडयन्ति 'ते[4] यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म' ऽइति यमेव द्वेष्टि यश्चैनं द्वेष्टि तमेषां जम्भे दधात्यमुमेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्यात्ततोऽह तस्मिन्नन्न पुनरस्त्यपि तन्नाद्रियेत स्वयं निर्द्दिष्टो ह्येव स यमेवं विद्वेष्टि ॥ ३९ ॥ त्रिष्कृत्वः प्प्रत्यवरोहति । त्रिवृदग्निर्य्यावान-ग्निर्य्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारोऽन्नेनैवैनानेतत्प्रीणाति त्रिरिति ऽऊर्द्ध्वो रोहति तत्षट् तस्योक्तो बन्धुः ॥ ४० ॥ यद्वेव त्रिष्कृत्वः प्प्रत्यवरोहति । त्रिर्हि कृत्व ऽऊर्द्ध्वो रोहति

* 'दश दशेति' पाठोऽयं 'ग–ज' पुस्तकयोर्नास्ति ।

(१) शु० य० सं० अ० १६ क० ६६ । (२) शु० य० सं० अ० १६ क० ६६ । (३) शु० य० सं० अ० १६ क० ६६ । (४) शु० य० सं० अ० १६ क० ६६ । (५) शु० य० सं० अ० १६ क० ६६ ।

तद्यावत्कृत्व ऽऊर्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति ॥४१॥
अथ तदर्कपर्णं * चात्वाले प्रास्यति । एतद्वा ऽएनेनैतद्घोरं कर्म्म करोति तदेतदशान्तं तदेतत्तिरः करोति नेदिदमशान्तं कश्चिदभितिष्ठात्तं नेद्धिनसदिति तस्माच्चात्वाले यद्वेव चात्वालेऽग्निरेष यच्चात्वालस्तथो हैनदेषोऽग्निः सन्दहत्यथातः सम्पदेव ॥ ४२ ॥ तदाहुः । कथमस्यैतच्छतरुद्रियꣳ संवत्सरमग्निमाप्नोति कथꣳ संवत्सरेणाग्निना सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियमथ त्रिꣳशदथ पञ्चत्रिꣳशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सरस्याहानि तत्संवत्सरस्याहान्याप्नोत्यथ यानि त्रिꣳशत्त्रिꣳशन्मासस्य रात्रयस्तन्मासस्य रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिꣳशत्स त्रयोदशो मासः सऽआत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर ऽएव पञ्चत्रिꣳशमेतावान्वै संवत्सर ऽएवमु हास्यैतच्छतरुद्रियꣳ संवत्सरमग्निमाप्नोत्येवꣳ संवत्सरेणाग्निना सम्पद्यत ऽएतावन्त्य ऽउ वै † शाण्डिलेऽग्नौ मध्यतो यजुष्मत्य ऽइष्टकाऽउपधीयन्तेऽग्नयो हैते पृथग्यदेता ऽइष्टका ऽएवमु हास्यैतेऽग्नयः पृथक् शतरुद्रियेणाभिहुता भवन्ति ॥ ४३ ॥ तदाहुः । कथमस्यैतच्छतरुद्रियं महदुक्थमाप्नोति

* "उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते" (का० श्रौ० सू० १८. १. ६)।

† शाण्डिलेऽग्नौ = शाण्डिलदृष्टेऽग्नौ मध्यवेद्यां षष्ट्युत्तरशतत्रयसङ्ख्या यजुष्मत्य इष्टका उपधीयन्त इत्यर्थः ।

कथं महतोक्थेन सम्पद्यत ऽइति यान्यमूनि पञ्चविꣳशतिर्यजूꣳष्यभितोऽशीतीः स पञ्चविꣳश ऽआत्मा यत्र वाऽ आत्मा तदेव शिरस्तत्पक्षपुच्छान्यथ या ऽअशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्ध्वमशीतिभ्यो यदेवादो महत ऽउक्थस्योर्ध्वमशीतिभ्य-ऽएतदस्य तदेवमु हास्यैतच्छतरुद्रियं महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते ॥ ४४ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ चित्याग्नेः परिषेकादि-विधिः ]

अथैनमतः * परिषिञ्चति । एतद्वा ऽएनं देवाः शतरुद्रियेण शमयित्वाथैनमेतद्भूय ऽएवाशमयँस्तथैवैन[†]मयमेतच्छतरुद्रियेण शमयित्वाथैनमेतद्भूय ऽएव शमयति ॥ १ ॥ अद्भिः परिषिञ्चति । शान्तिर्वा ऽआपः शमयत्येवैनमेतत्सर्वतः परिषिञ्चति सर्वत ऽएवैनमेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतच्छमयति ॥ २ ॥ यद्वेवैनं परिषिञ्चति । इमे वै लोका ऽएषोऽग्निरिमाँस्तल्लोकानद्भिः परितनोति समुद्रेण

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ३. १; कठ० १७. ११, १२, १६ कपिष्ठ० २७. १, २, ६; मै० सं० १०. ९. २, ३, ९; तै० सं० ४. ५. १, २, ९ ।

* अग्नीत् दक्षिणपक्षस्याऽपरसन्धिसमीपवर्तिन्यात्मभागेऽद्रिं निधाय, तत आरभ्य 'अश्मन्नूर्ज्जम्' इति मन्त्रेणाऽग्निं प्रदक्षिणं सपक्षपुच्छं जलधारया परितः सिञ्चतीति ( का० श्रौ० सू० १८. २. १ ) ।

† 'मेवमेत' इति 'ग-ज' पुस्तकयोः ।

हैनाँस्तत्परितनोति सर्व्वतस्तस्मादिमाँल्लोकान्त्सर्व्वतः समुद्रः पर्य्येति दक्षिणावृत्तस्मादिमाँल्लोकान्दक्षिणावृत्समुद्रः पर्य्येति ॥ ३ ॥ अग्नीत्परिषिञ्चति । अग्निरेष यदाग्नीध्रो नो वाऽआत्मात्मानः हिनस्त्यहिंसाया ऽअश्मनोऽध्यश्मनो ह्यापः प्रभवन्ति निकक्षान्निकक्षाद्ध्यापः प्रभवन्ति दक्षिणान्निकक्षाद्दक्षिणाद्धि निकक्षादापः प्रभवन्ति ॥ ४ ॥ 'अश्मन्नूर्ज्जं पर्व्वते शिश्रियाणाम्'ति । अश्मनि वा ऽएषोर्क्पर्व्वतेषु श्रिता यदापो'ऽद्भ्य ऽओषधीभ्यो वनस्पतिभ्योऽअधि सम्भृतं पय' ऽइत्येतस्माद्ध्येतत्सर्व्वस्मादधि सम्भृतं पय'स्तान्नै ऽइषमूर्ज्जं धत्त मरुतः सꣳरराणा' ऽइति मरुतो वै वर्षस्येशते'ऽश्मँस्ते क्षुँदि'ति निदधाति * तदश्मनि क्षुधं दधाति तस्मादश्मानाद्योऽथो स्थिरो वाऽअश्मा स्थिरा क्षुत्स्थिर ऽएव तत्स्थिरं दधाति 'मयि तें ऽऊर्ग्गि'त्यपादत्ते तदात्मन्नूर्ज्जं धत्ते तथा द्वितीयं तथा तृतीयम् ॥ ५ ॥ निधायोदहरणं त्रिर्व्विपल्ययते । एतद्वाऽएनमेतल्लघूयतीव यदेनꣳ समन्तं पर्य्येति तस्मा ऽएवैतन्निह्नुतेऽहिꣳसायै ॥ ६ ॥ यद्वेव विपल्ययते । एतद्वाऽएनमेतदन्ववैति तत ऽएवैतदात्मानमपोद्धरते जीवात्वै तथो ह्यानेनात्मना सर्व्वमायुरेति ॥ ७ ॥ † त्रिर्व्विपल्ययते ।

(१) शु० य० सं० अ० १७ क० १। (२) शु० य० सं० अ० १७ क० १।
(३) शु० य० सं० अ० १७ क० १। (४) शु० य० सं० अ० १७ क० १।
* का० श्रौ० सू० १८. २. २।
(५) शु० य० सं० अ० १७ क० १।
† का० श्रौ० सू० १८. २. ३।

त्रिर्हि कृत्वः पर्य्येति तद्यावत्कृत्वः पर्य्येति तावत्कृत्वो विपल्ययते ॥ ८ ॥ अथ तमश्मानमुदहरणेऽवधाय । एतां दिशः हरन्त्येषा वै नैर्ऋती दिङ् नैर्ऋत्यामेव तद्दिशि शुचं दधाति ॥ ९ ॥ एतद्वा ऽएनं देवाः । शतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचं पाप्मानमपाघ्नँस्तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचं पाप्मानमपहन्ति ॥१०॥ बाह्येनाग्निः हरति । इमे वै लोका-ऽएषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्द्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद् बहिर्द्धा शुचं दधाति ॥११॥ [अर्धप्रपाठकः ५५॥]

स * वेदेर्दक्षिणायाः श्रोणौ । प्राङ् तिष्ठन्दक्षिणा निरस्यति 'यं द्विष्मस्तं ते शुगृच्छत्वि'ति यमेव द्वेष्टि तमस्य शुगृच्छत्यमुं ते शुगृच्छत्विति ह ब्रूयाद्यं द्विष्यात्ततो ह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयं निर्दिष्टो ह्येव स यमेवं विद्वेष्टि यदि न भिद्येत भेत्तवै ब्रूयाद्यदा ह्येव † स भिद्यतेऽथ तः शुगृच्छति यं द्वेष्ट्यप्रतीक्षमायन्त्यप्रतीक्षमेव तच्छुचं पाप्मानं जहति ॥ १२ ॥ प्रत्येत्येष्टका धेनूः कुरुते । एतद्वा ऽएनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य प्रत्येत्येष्टका धेनूरकुर्वत तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्य [1]प्रत्येत्येष्टका धेनूः कुरुते ॥१३॥ आसीनः

* कुम्भेऽश्मं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणाऽस्यति 'यं द्विष्म' इति (का० श्रौ० सू० १८. २. ४)।

(१) शु० य० सं० अ० १७ क० १ ।

† 'सम्भिद्यते' इति 'क' पुस्तके ।

कुर्वीतेत्यु हैक ऽआहुः। आसीनो वै धेनुं दोग्धीति तिष्ठँ-स्त्वेव कुर्वीतेमे वै लोका ऽएषोऽग्निस्तिष्ठन्तीव वा ऽइमे लोका-ऽअथो तिष्ठन्वै वीर्य्यवत्तरः ॥१४॥ उदङ् प्राङ् * तिष्ठन्। पुरस्ताद्वा ऽएषा प्प्रतीची यजमानं धेनुरुपतिष्ठते दक्षिणतो वै प्प्रतीचीं धेनुं तिष्ठन्तीमुपसीदन्ति ॥ १५ ॥ स यत्राभ्याप्नोति। तदभिमृश्यैतद्यजुर्ज्जपती[1]'मा मे ऽअग्न-ऽइष्टका धेनवः सन्त्वि'त्यग्निर्हैतासां धेनुकरणस्येष्टे तस्मा-देतावतीनां देवतानामग्निमेवामन्त्रयत '[2]ऽएका च दश चा'न्तश्च परार्द्धश्चे'त्येष ह्यावरार्द्ध्यो भूमा यदेका च दश चाथ हैष परार्द्ध्यो भूमा यदन्तश्च परार्द्धश्चावरार्द्धतश्चैवैना-ऽएतत्परार्द्धतश्च परिगृह्य देवा धेनूरकुर्वत तथैवैना ऽअय-मेतदवरार्द्धतश्चैव परार्द्धतश्च परिगृह्य धेनूः कुरुते तस्मा-दपि नाद्रियेत बह्वीः कर्त्तुममुत्र वा ऽएष ऽएता ब्रह्मणा यजुषा बह्वीः कुरुतेऽथ यत्सन्तनोति कामानेव तत्सन्तनोति ॥ १६ ॥ यद्वेवेष्टका धेनूः कुरुते। वाग्वा ऽअयमग्निर्वाचा हि चितः स यदाहैका च दश चान्तश्च परार्द्धश्चेति वाग्वा ऽएका वाग्दश वागन्तो वाक्परार्द्धो वाचमेव तद्देवा धेनुमकुर्वत तथैवैतद्यजमानो वाचमेव धेनुं कुरुतेऽथ यत्सन्तनोति वाचमेव तत्सन्तनो'त्येता '[3]मे ऽअग्न ऽइष्टका धेनवः सन्त्वमुत्रामुष्मिँल्लोक ऽइत्येतद्वा ऽएना ऽअस्मिँल्लोके धेनूः कुरुतेऽथैना ऽएतदमुष्मिँल्लोके धेनूः कुरुते तथो

* का० श्रौ० सू० १८. २. ९।

(१) शु० य० सं० अ० १७ क० २। (२) शु० य० सं० अ० १७ क० २। (३) शु० य० सं० अ० १७ क० २।

हैनमेता ऽउभयोर्ल्लोकयोर्ब्भुञ्जन्त्यस्मिँश्चामुष्मिँश्च ॥ १७ ॥ 'ऋतव स्स्थे'ति । ऋतवो ह्येता 'ऽऋतावृध' ऽइति स-त्त्यवृध ऽइत्त्येत'दृतुष्ष्ठा स्स्थ ऽऋतावृध' ऽइत्यहोरात्राणि वा ऽइष्टका ऽऋतुषु वा ऽअहोरात्राणि तिष्ठन्ति 'घृतश्च्युतो मधुश्च्युत' ऽइति तदेना घृतश्च्युतश्च मधुश्च्युतश्च कुरुते ॥ १८ ॥ 'विराजो नामे'ति । एतद्वै देवा ऽएता इष्टका नामभिरुपाह्वयन्त यथा-यथैना ऽएतदाचक्षते ता ऽएनान-भ्युपावर्त्तन्ताथ लोकम्पृणा ऽएव पराच्च्यस्तस्थुरहित-नाम्न्यो निमिमिहत्त्यस्ता विराजो नामाकुर्वत ता ऽएनान-भ्युपावर्त्तन्त तस्माद्दश-दशेष्टका ऽउपधाय लोकम्पृण-याभिमन्त्रयते तदेना विराजः कुरुते दशाक्षरा हि विराड् 'कामदुघा ऽअक्षीयमाणा' ऽइति तदेनाः कामदुघा ऽअक्षी-यमाणाः कुरुते ॥ १९ ॥ अथैनं विकर्षति । मण्डूकेनावकया वेतसशाखयैतद्वा ऽएनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्त्वा शुचमस्य पाप्मानमपहत्त्याथैनमेतद्भूय ऽएवा-शमयँस्तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्त्वा शुचमस्य पाप्मानमपहत्त्याथैनमेतद्भूय ऽएव शमयति सर्व्वतो विकर्षति सर्व्वत ऽएवैनमेतच्छमयति ॥ २० ॥ यद्वेवैनं विकर्षति । एतद्वै यत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निः समस्कुर्वंस्तमद्भिरवोक्षँस्ता ऽआपः समस्कन्दँस्ते मण्डूका-

(१) शु० य० सं० अ० १७ क० ३। (२) शु० य० सं० अ० १७ क० ३। (३) शु० य० सं० अ० १७ क० ३। (४) शु० य० सं० अ० १७ क० ३। (५) शु० य० सं० अ० १७ क० ३। (६) शु० य० सं० अ० १७ क० ३।

ऽअभवन् ॥ २१ ॥ ताः प्प्रजापतिमब्रुवन् । यद्वै नः कम-भूद्वाक्कदगादिति सोऽब्रवीदेष व ऽएतस्य व्वनस्प्पतिर्वे-त्त्विति व्वेत्तु संव्वेत्तु सोऽह वै तं व्वेतस ऽइत्त्याचक्षते परोक्षं परोक्षकामा हि देवा ऽअथ यदब्रुवन्नवाङ् नः कमगादिति ता ऽअवाक्का ऽअभवन्नवाक्का ह वै ता ऽअवका ऽइत्त्याचक्षते परोक्षं परोक्षकामा हि देवास्ता हैताश्च्रय्य ऽआपो यन्न्म-ण्डूकोऽवका व्वेतसशाखैताभिरेवैनमेतत्त्रयीभिरद्भिः शम-यति ॥ २२ ॥ यद्वेवैनं व्विकर्षति । जायत ऽएष ऽएत-द्यच्चीयते स ऽएष सर्व्वस्म्मा ऽअन्नाय जायते सर्व्वम्वेतदन्नं यन्न्मण्डूकोऽवका व्वेतसशाखा पशवश्च्च ह्येता ऽआपश्च्च व्वनस्प्पतयश्च्च सर्व्वेणैवैनमेतदन्नेन प्प्रीणाति ॥२३॥ * मण्डू-केन पशूनाम् । तस्म्मान्न्मण्डूकः पशूनामनुपजीवनीयतमो यातयामा हि सोऽवकाभिरपां तस्म्मादवका ऽअपामनुप-जीवनीयतमा यातयाम्न्न्यो हि ता व्वेतसेन व्वनस्प्पतीनां तस्म्माद्वेतसो व्वनस्प्पतीनामनुपजीवनीयतमो यातयामा हि सः ॥ २४ ॥ तानि व्वःशे प्प्रबद्ध्य । दक्षिणार्द्धेनाग्ने-रन्तरेण परिश्श्रितः प्प्रागग्ग्रे व्विकर्षति 'समुद्रस्य[1] त्त्वावक-याग्ने परिव्व्ययामसि । पावको ऽअस्म्मभ्यः शिवो भवे'ति समुद्रियाभिस्त्वाद्भिः शमयाम ऽइत्त्येतत् ॥ २५ ॥ अथ जघनार्द्धेनोदक् । 'हिमस्य[2] त्त्वा जरायुणाग्ने परिव्व्यया-मसि । पावको ऽअस्म्मभ्यः शिवो भवे'ति यद्वै शीतस्य

---

* "मण्डूकावकावेतसशाखा वेणौ बद्ध्वाऽवकर्षति मन्त्रकृष्टवत्समुद्रस्य त्वेति प्रत्यृचम्" का० श्रौ० सू० १८. २. १०।

(१) शु० य० सं० अ० १७ क० ४। (२) शु० य० सं० अ० १७ क० ५।

प्प्रशीतं तद्धिमस्य जरायु शीतस्य त्वा प्प्रशीतेन शमयामऽइत्त्येतत् ॥ २६ ॥ अथोत्तरार्द्धेन प्प्राक् । ‘उप ज्मन्नुपवेतसेऽवतर नदीष्वा । अग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेमन्नो यज्ञं पावकवर्णंᳬ शिवङ्कृधी’ति यथैव यजुस्तथा बन्धुः ॥ २७ ॥ * अथ पूर्वार्द्धेन दक्षिणा । ‘अपामिदन्न्ययनᳬ समुद्रस्य निवेशनम् । अन्न्याँस्तेऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्भ्यᳬ शिवो भवे’ति यथैव यजुस्तथा बन्धुरित्त्यग्ग्रे व्विकर्षत्त्यथेति । अथेत्त्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥ २८ ॥ आत्मानमग्ग्रे व्विकर्षति । आत्मा ह्यग्ग्रे सम्भवतः सम्भवत्त्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा ॥ २९ ॥ अब्भ्यात्मं † पक्षपुच्छानि व्विकर्षति । अब्भ्यात्ममेव तच्छान्तिं धत्ते परस्तादर्व्वाक्परस्तादेव तदर्व्वाचीᳬ शान्तिं धत्ते‘ऽग्ने पावक रोचिषे’ति दक्षिणं पक्षᳬ ‘स नः पावक दीदिव’ ऽइति पुच्छं ‘पावकया यश्चितयन्त्या कृपे’त्युत्तरं पावकं पावकमिति यद्वै शिवᳬ शान्तं तत्पावकᳬ शमयत्त्येवैनमेतत् ॥३०॥ सप्तभिर्व्विकर्षति । सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनमेतद्विकर्षति तं वᳬशमुत्करे न्न्यस्य ॥३१॥ अथैनᳬ सामभिः परि-

(१) शु० य० सं० अ० १७ क० ६ ।

* अत्र शतम् ४८०० ॥

(२) शु० य० सं० अ० १७ क० ७ ।

† का० श्रौ० सू० १८. २. ११ ।

(३) शु० य० सं० अ० १७ क० ८ । (४) शु० य० सं० अ० १७ क० ९ ।

(५) शु० य० सं० अ० १७ क० १० ।

गायति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुस्तथैवास्मिन्नयमेतदमृतꣳ रूपमुत्तमं दधाति सामानि भवन्ति प्राणा वै सामान्यमृतमु वै प्राणा-ऽअमृतमेवास्मिन्नेतद्रूपमुत्तमं दधाति सर्वतः परिगायति सर्वत ऽएवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति ॥३२॥ यद्वे-वैनꣳ सामभिः परिगायति । एतद्वै देवा ऽअकामयन्ता-नस्थिकमिममृतमात्मानं कुर्वीमहीति तेऽब्रुवन्नुप तज्जा-नीत यथेममात्मानमनस्थिकममृतं करवामहा ऽइति तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्त-दिच्छत यथेममात्मानमनस्थिकममृतं करवामहा ऽइति ॥ ३३ ॥ ते चेतयमानाः । एतानि सामान्यपश्यँस्तैरेनं पर्यगायँस्तैरेतमात्मानमनस्थिकममृतमकुर्वत तथैवैतद्यज-मानो यदेनꣳ सामभिः परिगायत्येतमेवैतदात्मानमन-स्थिकममृतं कुरुते सर्वतः परिगायति सर्वत ऽएवैतदेतमा-त्मानमनस्थिकममृतं कुरुते तिष्ठन्गायति तिष्ठन्तीव वा ऽइमे लोका ऽअथो तिष्ठद्वै वीर्य्यवत्तरो हिङ्कृत्य गायति तत्र हि सर्वं कृत्स्नꣳ साम भवति ॥ ३४ ॥ * गायत्रं पुरस्ता-द्गायति । अग्निर्वै गायत्रमग्निमेवास्यैतच्छिरः करोत्यथो शिर ऽएवास्यैतदनस्थिकममृतं करोति ॥ ३५ ॥ रथन्तरं † दक्षिणे पक्षे । इयं वै रथन्तरमियमु वा ऽएषां लोका-नाꣳ रसतमोऽस्याꣳ हीमे सर्वे रसा रसन्तमꣳ ह वै

* का० श्रौ० सू० १८. ३. १।
† का० श्रौ० सू० १८. ३. २।

तद्रथन्तरमित्याचक्षते परोक्षं परोक्षकामा हि देवा-ऽइमामेवास्यैतद्दक्षिणं पक्षं करोत्यथो दक्षिणमेवास्यैतत्पक्षमनस्थिकममृतं करोति ॥ ३६ ॥ बृहदुत्तरे पक्षे । द्यौर्वै बृहद् द्यौर्हि बर्हिष्ठा दिवमेवास्यैतदुत्तरं पक्षं करोत्यथो ऽउत्तरमेवास्यैतत्पक्षमनस्थिकममृतं करोति ॥ ३७ ॥ वामदेव्यमात्मन् । प्राणो वै वामदेव्यं वायुरु प्राणः सर्वेषामु हैष देवानामात्मा यद्वायुर्वायुमेवास्यै-तदात्मानं करोत्यथो ऽआत्मानमेवास्यैतदनस्थिकममृतं करोति ॥ ३८ ॥ यज्ञायज्ञियं * पुच्छे । चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः सन्तिष्ठत ऽएत-मेव तस्याहुतीनाꣳ रसोऽप्येति तद्यदेतं यज्ञो—यज्ञोऽ-प्येति तस्माच्चन्द्रमा यज्ञायज्ञियं चन्द्रमसमेवास्यैतत्पुच्छं करोत्यथो पुच्छमेवास्यैतदनस्थिकममृतं करोति ॥ ३९ ॥ अथ प्रजापतेर्हृदयं गायति । असौ वा ऽआदित्यो हृदयꣳ श्लक्ष्ण ऽएष श्लक्ष्णꣳ हृदयं परिमण्डल ऽएष परिमण्डलꣳ हृदयमात्मन्गायत्यात्मन्हि हृदयं निकक्षे निकक्षे हि हृदयं दक्षिणे निकक्षेऽतो हि हृदयं नेदीय-ऽआदित्यमेवास्यैतद्धृदयं करोत्यथो हृदयमेवास्यैतदन-स्थिकममृतं करोति ॥ ४० ॥ प्रजासु च प्रजापतौ च गायति । तद्यत्प्रजासु गायति तत्प्रजासु हृदयं दधात्यथ यत्प्रजापतौ गायति तदग्नौ हृदयं दधाति ॥ ४१ ॥ यद्वेव प्रजासु च प्रजापतौ च गायति । अयं वा ऽअग्निः

* 'पुच्छम्' इति 'ग-ज' पुस्तकयोः ।

प्रजाश्च प्रजापतिश्च तद्यदग्नौ गायति तदेव प्रजासु च प्रजापतौ च हृदयं दधाति ॥ ४२ ॥ ता हैता ऽअमृतेष्टकाः । ता ऽउत्तमा ऽउपदधात्यमृतं तदस्य सर्वस्योत्तमं दधाति तस्मादस्य सर्वस्यामृतमुत्तमं नान्योऽन्ध्वर्युर्गायेदिष्टका वा ऽएता विचितो ह स्याद्यदन्योऽध्वर्युर्गायेत् ॥ ४३ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ चित्यारोहणम्, तत्र होमादि-विधिः, प्रवर्ग्योत्सादनं च ]

* उपवसथीयेऽहन्प्रातरुदित ऽआदित्ये । वाचं विसृजते वाचं विसृज्य पञ्चगृहीतमाज्यं गृह्णीते तत्र पञ्च हिरण्यशकलान्प्रास्यत्यथैतत्त्रयं समासिक्तं भवति दधि मधु घृतं पात्र्यां वा स्थाल्यां वोरुबिल्यां तदुपरिष्टाद्दर्भमुष्टिं निदधाति ॥ १ ॥ † अथाग्निमारोहति । '[1]नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे' इत्यत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र तस्मा ऽअलं यद्धिंस्याद्यं जिहिंसिषेद्यमु वा ऽएष हिनस्ति हरसा वैनं शोचिषा वार्चिषा वा हिनस्ति तथो हैनमेष ऽएतैर्न हिन'[2]स्त्यन्न्याँस्तेऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यं शिवो भवे'ति

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ३. ३; कठ० १०. १७, कपिष्ठ० २८. १, मै० सं० ११. १०. १; तै० सं० ४. ६, १।

* का० श्रौ० सू० १८. ३. ३।

† का० श्रौ० सू० १८. ३. ४।

(१) शु० य० सं० अ० १८ क० ११। (२) शु० य० सं० अ० १८ क० ११।

यथैव यजुस्तथा बन्धुः ॥ २ ॥ आरुह्याग्निꣳ स्वयमातृण्णां व्व्याघारयति । आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ३ ॥ स्वयमातृण्णां व्व्याघारयति । प्राणः स्वयमातृण्णा प्प्राणे तदन्नं दधाति ॥ ४ ॥ यद्वेव स्वयमातृण्णां * व्व्याघारयति । उत्तरवेदिर्हैषाग्नेरथ यामम्मूं पूर्वां व्व्याघारयत्त्यद्धरस्य साथ हैषाग्नेस्तामेतद् व्याघारयति ॥ ५ ॥ पश्यँस्तत्र हिरण्यं व्व्याघारयति । प्रत्त्यक्षं वै तद्यत्पश्यति प्प्रत्त्यक्षꣳ सोत्तरवेदिः प्प्रास्ता ऽएवेह भवन्ति परोक्षं वै तद्यत्प्रास्ताः परोक्षमियमुत्तरवेदिः ॥ ६ ॥ स्वाहाकारेण तां व्व्याघारयति । प्रत्त्यक्षं वै तद्यत्स्वाहाकारः प्प्रत्त्यक्षꣳ सोत्तरवेदिर्वैट्कारेणेमां परोक्षं वै तद्यद्वेट्कारः परोक्षमियमुत्तरवेदिराज्येनाज्येन ह्युत्तरवेदिं व्व्याघारयन्ति पञ्चगृहीतेन पञ्चगृहीतेन ह्युत्तरवेदिं व्व्याघारयन्ति व्व्यतिहारं व्व्यतिहारꣳ ह्युत्तरवेदिं व्व्याघारयन्ति ॥ ७ ॥ 'नृषदे व्वेडि'ति । प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्प्राणोऽग्निस्तमेतत्प्रीणा'त्त्यप्सुषदे व्वेडि'ति योऽप्स्वग्निस्तमेतत्प्रीणाति 'बर्हिषदे व्वेडि'ति य ऽओषधिष्वग्निस्तमेतत्प्रीणाति 'व्वनसदे व्वेडि'ति यो व्वनस्प्पतिष्वग्निस्तमेतत्प्रीणाति 'स्वर्व्विदे व्वेडि'त्त्ययमग्निः स्वर्व्विदिममेवैतदग्निं प्रीणाति ॥ ८ ॥ यद्वेवाह । नृषदे व्वेडप्सुषदे व्वेडित्त्यस्यै

* का० श्रौ० सू० १८. ३. ५ ।

( १ ) शु० य० सं० अ० १७ क० १२ । ( २ ) शु० य० सं० अ० १७ क० १२ । ( ३ ) शु० य० सं० अ० १७ क० २ । ( ४ ) शु० य० सं० अ० १७ क० १२ । ( ५ ) शु० य० सं० अ० १७ क० १२ ।

वैतान्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो ऽएतानेवैतदग्नीनस्मिन्नग्नौ नामग्ग्राहं दधाति ॥ ९ ॥ पञ्चैता ऽआहुतीर्ज्जुहोति । पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्रीणाति ॥ १० ॥ अथैनꣳ * समुक्षति । दध्ना मधुना घृतेन जायत ऽएषऽएतद्यच्चीयते स ऽएष सर्व्वस्म्मा ऽअन्नाय जायते सर्व्वम्वेतदन्नं य्यद्दधि मधु घृतꣳ सर्व्वेणैवैनमेतदन्नेन प्प्रीणाति सर्व्वतः समुक्षति सर्व्वत ऽएवैनमेतत्सर्व्वेणान्नेन प्प्रीणाति ॥ ११ ॥ यद्द्वेवैनꣳ समुक्षति । अत्रैष सर्व्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमं दधात्यन्नं वै रूपमेतदु परममन्नं य्यद्दधि मधु घृतं तद्यदेव परमꣳ रूपं तदस्मिन्नेतदुत्तमं दधाति सर्व्वतः समुक्षत्यपि बाह्येन परिश्रितः सर्व्वतऽएवास्मिन्नेतद्रूपमुत्तमं दधाति दर्ब्भैस्ते हि शुद्धा मेध्या ऽअग्ग्रैरग्ग्रꣳ हि देवानाम् ॥ १२ ॥ यद्द्वेवैनꣳ समुक्षति । एतद्वै यत्रैतं प्राणा ऽऋषयोऽग्ग्रेऽग्निꣳ समस्कुर्व्वस्तदस्मिन्नदोऽमुं पुरस्ताद्भागमकुर्व्वतादः सजूरब्दीयमथास्मिन्नेतꣳ सञ्चित ऽउपरिष्टाद्भागमकुर्व्वत तद्यत्समुक्षति य ऽएवास्मिँस्ते प्प्राणा ऽऋषयः सञ्चित ऽउपरिष्टाद्भागमकुर्व्वत तानेवैतत्प्रीणाति दध्ना मधुना घृतेन

* का० श्रौ० सू० १८. ३. ६ ।

तस्योक्तो बन्धुः ॥ १३ ॥ 'ये देवा देवानाम्। यज्ञिया यज्ञियानामि'ति देवा ह्येते देवानां यज्ञिया ऽउ यज्ञियानाᳬ 'संवत्सरीणमुप भागमासत' ऽइति संवत्सरीणᳬ ह्येत ऽएतं भागमुपासते'ऽहुतादो हविषो यज्ञे ऽअस्मिन्नि'त्यहुतादो हि प्राणाः 'स्वयं पिबन्तु मधुनो घृतस्ये'ति स्वयमस्य पिबन्तु मधुनश्च घृतस्य चेत्येतत् ॥ १४ ॥ 'ये देवा देवेषु। अधि देवत्वमायन्नि'ति देवा ह्येते देवेष्वधि देवत्वमाय'न्ये ब्रह्मणः पुर ऽएतारोऽअस्ये'त्ययमग्निर्ब्रह्म तस्यैते पुर ऽएतारो 'येभ्यो नऽऋते पवते धाम किञ्चने'ति न हि प्राणेभ्य ऽऋते पवते धाम किञ्चन 'न ते दिवो न पृथिव्या ऽअधि स्नुष्वि'ति नैव ते दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिँस्त ऽइत्येतत् ॥ १५ ॥ द्वाभ्याᳬ समुक्षति। द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समुक्षति ॥ १६ ॥ अथ * प्रत्यवरोहति। 'प्राणदा ऽअपानदा' ऽइति सर्वे ह्येते प्राणा योऽयमग्निश्चितः स यदेतामत्रात्मनः परिदां न वदेतात्र हैवास्यैष प्राणान्वृञ्जीताथ यदेतामत्रात्मनः परिदां वदते तथो हास्यैष प्राणान्न वृङ्क्ते 'प्राणदा ऽअपानदा

(१) शु० य० सं० अ० १७ क० १३। (२) शु० य० सं० अ० १७ क० १३।
(३) शु० य० सं० अ० १७ क० १३। (४) शु० य० सं० अ० १७ क० १३।
(५) शु० य० सं० अ० १७ क० १४। (६) शु० य० सं० अ० १७ क० १४।
(७) शु० य० सं० अ० १७ क० १४। (८) शु० य० सं० अ० १७ क० १४।
* का० श्रौ० सू० १८. ३. ७।
(९) शु० य० सं० अ० १७ क० १५। (१०) शु० य० सं० अ० १७ क० १५।

ऽव्यानदा वर्चोदा वरिवोदा' ऽइत्त्येतद्दा मेऽसीत्त्येवैतदा-
'हान्न्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यᳫं शिवो
भवे'ति यथैव यजुस्तथा बन्धुः ॥ १७ ॥ प्रत्येत्त्य प्प्रव-
र्ग्योपसद्भ्यां प्रचरति । प्रवर्ग्योपसद्भ्यां प्रचर्याथास्मै
व्रतं वार्द्धव्रतं वा प्प्रयच्छत्त्यथ प्प्रवर्ग्योपसद्भ्यामथ प्प्रव-
र्ग्यमुत्त्सादयत्त्याप्त्वा तं कामं यस्मै कामायैनं प्रवृणक्ति
॥ १८ ॥ तं वै परिष्यन्द ऽउत्त्सादयेत् । तप्तो वा ऽएष
शुशुचानो भवति तं यदस्यामुत्त्सादयेदिमामस्य शुगृ-
च्छेद्यदप्प्सूत्त्सादयेदपोऽस्य शुगृच्छेदथ यत्परिष्यन्द-
ऽउत्त्सादयति तथो ह नैवापो हिनस्ति नेमां यदहाप्प्सु
न प्प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति
शान्तिर्वा ऽआपस्तेनो ऽइमां न हिनस्ति तस्मात्परिष्यन्द-
ऽउत्त्सादयेत् ॥ १९ ॥ अग्नौ त्वेवोत्त्सादयेत् । इमे वै
लोका ऽएषोग्निरापः परिश्रितस्तं यदग्ना ऽउत्त्सादयति
तदेवैनं परिष्यन्द ऽउत्त्सादयति ॥ २० ॥ यद्वेवाग्ना ऽउत्त्सा-
दयति इमे वै लोका ऽएषोऽग्निरग्निर्वायुरादित्त्यस्तदेते
प्प्रवर्ग्याः स यदन्यत्राग्नेरुत्त्सादयेदेताँस्तद्देवान्बहिर्द्धेभ्यो
लोकेभ्यो दध्यादथ यदग्ना ऽउत्त्सादयत्त्येतानेवैतद्देवानेषु
लोकेषु दधाति ॥ २१ ॥ यद्वेवाग्ना ऽउत्त्सादयति । शिर
ऽएतद्यज्ञस्य यत्प्रवर्ग्य ऽआत्मायमग्निश्चितः स यद-
न्यत्राग्नेरुत्त्सादयेद्बहिर्द्धास्माच्छिरो दध्यादथ यदग्ना-
ऽउत्त्सादयत्त्यात्मानमेवास्यैतत्संस्कृत्त्य शिरः प्प्रतिदधाति

(१) शु० य० सं० अ० १७ कं० १५।

॥ २२ ॥ स्वयमातृण्णया सꣳस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति । प्राणः स्वयमातृण्णा शिरः प्रवर्ग्य ऽआत्मायमग्निश्चितः शिरश्च तदात्मानं च प्राणेन सन्तनोति सन्दधात्युत्साद्य प्रवर्ग्यं रुपथा तस्योत्सादनम् ॥२३॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ ११० ॥



[ प्रवर्ग्योत्सादनविधिः ]

प्रत्येत्याग्निं प्रहरिष्यन् । आहुतीश्च जुहोति समिधश्चादधात्येतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णीते तस्योक्तो बन्धुः ॥ १ ॥ अथ षोडशगृहीतं गृह्णीते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितेनैवैनमेतदन्नेन प्रीणाति यदु वा ऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति समान्याꣳ स्रुचि गृह्णीते समानो हि स यमेतत्प्रीणाति वैश्वकर्म्मणाभ्यां जुहोति विश्वकर्म्मायमग्निस्तमेवैतत्प्रीणाति तिस्र ऽआहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ २ ॥ अथ

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ४. १; कठ० १७. १७; कपिष्ठ० २८. १; मै० सं० ११. १०. १; तै० सं० ४. ६. १ ।

समिध ऽआदधाति । यथा तर्प्पयित्वा परिवेविष्यात्तादृक्त-दौदुम्बर्य्यो भवन्त्यूर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन प्प्रीणात्यार्द्रा भवन्त्येतद्वै वनस्प्पतीनामनार्त्तं जीवं रुपंदार्द्रं तद्यदेव वनस्प्पतीनामनार्त्तं जीवं तेनैनमेतत्प्रीणाति घृते न्युत्ता भवन्त्याग्नेयं वै घृतꣳ स्वेनैवैनमेतद् भागेन स्वेन रसेन प्प्रीणाति सर्व्वाꣳ रात्रिं वसन्ति तत्र हि ता रसेन सम्पद्यन्ते तिस्रः समिध ऽआदधाति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्प्रीणाति ॥३॥ षड्ढैवैता ऽआहुती-र्ज्जुहोति । एतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेन सम-स्कुर्वन्नेताभिराहुतिभिस्तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन संस्करोत्येताभिराहुतिभिः ॥ ४ ॥ स वै पञ्चगृहीतं गृह्णीते । पञ्चधाविहितो वा ऽअयꣳ शीर्षन्प्राणो मनो वाक् प्राण-श्चक्षुः श्रोत्रमेतमेवास्मिन्नेतत्पञ्चधाविहितꣳ शीर्षन्प्राणं दधा'त्यग्निस्तिग्मेन शोचिषे'ति तिग्मवत्या शिर ऽएवास्यै-तया सꣳश्यति तिग्मतायै ॥ ५ ॥ अथ षोडशगृहीतं गृह्णीते । अष्टौ प्प्राणा ऽअष्टावङ्गान्न्येतामभि सम्पदꣳ समान्याꣳ स्रुचि गृह्णीते समाने ह्येवात्मन्नङ्गानि च प्प्राणाश्च भवन्ति नाना जुहोत्यङ्गेभ्यश्च तत्प्राणेभ्यश्च विधृतिं करोति वैश्वकर्म्मणाभ्यां जुहोति विश्वकर्म्मा-यमग्निस्तमेवैतत्संस्करोति तिस्र ऽआहुतीर्ज्जुहोति त्रिवृ-दग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन संस्क-रोति सप्तदशभिर्ऋग्भिः सप्तदशः प्प्रजापतिः प्प्रजापति-

( १ ) शु० य० सं० अ० १५ क० १६ ।

रग्निरुर्ष्यांवानग्निरुर्ष्यावत्यस्य मात्रा तावतैवैनमेतत्संस्करोत्येकविᳫशतिगृहीतेन द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य एकविᳫश ऽएतामभिसम्पदम् ॥ ६ ॥ यद्वेवैताः समिध ऽआदधाति । एतद्वा ऽएनं देवाः सर्वं कृत्स्नᳫ संस्कृत्याथैनमेतेनान्नेनाप्रीणन्नेताभिः समिद्भिस्तथैवैनमयमेतत्सर्वं कृत्स्नᳫ संस्कृत्याथैनमेतेनान्नेन प्रीणात्येताभिः समिद्भिरौदुम्बर्यो भवन्त्यार्द्रा घृते न्युत्ताः सर्वांᳫ रात्रिं वसन्ति तस्योक्तो बन्धु'रुदेनमुत्तरां नयेन्द्रेमं प्रतरान्नय, यस्य कुम्भो गृहे हविरि'ति * यथैव यजुस्तथा बन्धुस्तिस्रः समिध ऽआदधाति त्रिवृदग्निरुर्ष्यावानग्निरुर्ष्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्र ऽआहुतीर्जुहोति तत्सद् तस्योक्तो बन्धुः ॥ ७ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ अप्रतिरथजपादि ]

अथातः सम्प्रेष्यति । उद्यच्छेध्ममुपयच्छोपयमनीरग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूदेहि ब्रह्मन्नप्रतिरथं जपेति ॥ १ ॥ एतद्वै देवानुपप्रैष्यतः । एतं यज्ञं तᳫस्यमानान्दक्षिणतोऽसुरा रक्षाᳫसि नाष्ट्रा ऽअजिघाᳫसन्न यक्ष्यद्ध्वे न यज्ञं तᳫस्यद्ध्व ऽइति ॥ २ ॥ ते देवा ऽइन्द्रमब्रुवन् । त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यव-

---

( १ ) शु० य० सं० अ० १५ क० ५०–५२ ।

* 'यथा यजुः' इति 'ग-ज' पुस्तकयोः ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ४. १ ।

त्तमोऽसि त्वमिमानि रक्षाᳬंसि प्प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीयमस्त्वित्विति तथेति तस्मै वै बृहस्प्पतिं द्वितीयमकुर्वन्न्ब्रह्म वै बृहस्प्पतिस्त ऽइन्द्रेण चैव बृहस्प्पतिना च दक्षिणतोऽसुरान्न्रक्षाᳬंसि नाष्ट्रा ऽअपहत्त्याभयेऽनाष्ट्र ऽएतं स्वज्ञमतन्न्वत ॥ ३ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदन्नु तानि रक्षाᳬंसि देवैरेवापहतानि यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्त्यथो ऽइन्द्रेण चैवैतद् बृहस्प्पतिना च दक्षिणतोऽसुरान्न्रक्षाᳬंसि नाष्ट्राऽअपहत्त्याभयेऽनाष्ट्र ऽएतं स्वज्ञं तनुते ॥ ४ ॥ स यः सऽइन्द्रः । एष सोऽप्रतिरथोऽथ * यः स बृहस्प्पतिरेष स ब्रह्मा तद्यद् ब्रह्माप्प्रतिरथं जपतीन्द्रेण चैवैतद् बृहस्प्पतिना च दक्षिणतोऽसुरान्न्रक्षाᳬंसि नाष्ट्रा ऽअपहत्त्याभयेऽनाष्ट्र ऽएतं स्वज्ञं तनुते तस्माद् ब्रह्माप्प्रतिरथं जपति ॥ ५ ॥ 'आशुः शिशानो व्वृषभो न भीम' † ऽइति । ऐन्द्र्योऽभिरूपा द्वादश भवन्ति द्वादश मासाः संव्वत्सरः संव्वत्सरोऽग्निर्व्यावानग्निर्व्यावत्यस्य मात्रा तावतैवैतद्दक्षिणतोऽसुरान्न्रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति त्रिष्टुब्भिर्व्वज्रो वै त्रिष्टुब्व्वज्रेणैवैतद्दक्षिणतोऽसुरान्न्रक्षाᳬंसि नाष्ट्रा ऽअपहन्ति ता द्वाविᳬंशतिर्गायत्र्यः सम्पद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म्म हि ॥ ६ ॥ ‡ अथैनमुद्यच्छति । 'उदु

* का॰ श्रौ॰ सू॰ १८. ३. १७।

(१) शु॰ य॰ सं॰ अ॰ १७ क॰ ३३।

† 'क' पुस्तके 'इत्यैन्द्र्यो' इति पाठो लभ्यते।

‡ का॰ श्रौ॰ सू॰ सं॰ अ॰ १८. ३. १८।

त्वा विश्वे देवा ऽअग्ने भरन्तु चित्तिभिरि'ति तस्योक्तो बन्धुः ॥ ७ ॥ अथाभिप्रयन्ति । 'पञ्च[1] दिशो दैवीर्यज्ञ-मवन्तु देवीरि'ति देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्द्धन्त ते देवा ऽअसुराणां दिशोऽवृञ्जत तथैवै-तद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते दैवीरिति तदेना दैवीः कुरुते यज्ञमवन्तु देवीरिति यज्ञमिममवन्तु देवीरित्येत'दपामतिं दुर्म्मतिं बाधमाना' ऽइत्यशनाया वा-ऽअमतिरशनायामपबाधमाना ऽइत्येत'द्रायस्पोषे यज्ञ-पतिमाभजन्ती'रिति रय्यां च पोषे च यज्ञपतिमाभजन्ती-रित्येत'द्रायस्पोषे ऽअधि यज्ञो ऽअस्थादि'ति रय्यां च पोषे चाधि यज्ञोऽस्थादित्येतत् ॥ ८ ॥ 'समिद्धे ऽअग्ना-वधि मामहान' ऽइति । यजमानो वै मामहान 'ऽउक्थ-पत्र' ऽइत्युक्थानि ह्येतस्य पत्रा'णीड्य' ऽइति यज्ञिय-ऽइत्ये'तद्गृभीत' इति धारित ऽइत्येत'त्तप्तं घर्म्मं परि-गृह्यायजन्ते'ति तप्तꣳ ह्येतं घर्म्मं परिगृह्यायजन्तो'र्ज्जा यद्यज्ञमयजन्त देवा' ऽइत्यूर्ज्जा ह्येतं यज्ञमयजन्त देवाः ॥ ९ ॥ 'दैव्याय धर्त्रे जोष्ट्रे' ऽइति । दैवो ह्येष धर्त्ता जोषयितृतमो 'देवश्रीः श्रीमनाः शतपया' ऽइति

(१) शु० य० सं० अ० १६ क० ५३। (२) शु० य० सं० अ० १६ क० ५४। (३) शु० य० सं० अ० १७ क० ५४। (४) शु० य० सं० अ० १७ क० ५४। (५) शु० य० सं० अ० १७ क० ५५। (६) शु० य० सं० अ० १७ क० ५५। (७) शु० य० सं० अ० १७ क० ५५। (८) शु० य० सं० अ० १७ क० ५५। (९) शु० य० सं० अ० १७ क० ५५। (१०) शु० य० सं० अ० १७ क० ५५। (११) शु० य० सं० अ० १७ क० ५६। (१२) शु० य० सं० अ० १७ क० ५६। (१३) शु० य० सं० अ० १६ क० ५६।

देवश्रीर्ह्येष श्रीमनाः शतपयाः 'परिगृह्य देवा यज्ञमायन्नि'ति परिगृह्य ह्येतं देवा यज्ञमाय'न्देवा देवेभ्यो-ऽअध्वर्य्यन्तो ऽअस्थुरि'त्यध्वरो वै यज्ञो देवा देवेभ्यो यज्ञियन्तोऽस्थुरित्येतत् ॥ १० ॥ 'वीतꣳ हविः शमितꣳ शमिता यजध्या' ऽइति । इष्टꣳ स्विष्टमित्येत'त्तुरीयो यज्ञो यत्र हव्यमेती'त्यध्वर्य्युः पुरस्ताद्यजूꣳषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष-ऽएव तुरीयो यज्ञ'स्ततो वाका ऽआशिषो नो जुषन्तामि'ति ततो नो वाकाश्चाशिषश्च जुषन्तामित्येतत् ॥ ११ ॥ 'सूर्य्यरश्मिर्हरिकेशः पुरस्तात् । सविता ज्योतिरुदयाँ२-ऽअजस्रमि'त्यसौ वा ऽआदित्य ऽएषोऽग्निः स ऽएष सूर्य्यरश्मिर्हरिकेशः पुरस्तात्सवितैतज्ज्योतिरुद्यच्छत्यजस्रं-'तस्यं पूषा प्रसवे याति विद्वानि'ति पशवो वै पूषा त-ऽएतस्य प्रसवे प्रेरते 'सम्पश्यन्विश्वा भुवनानि गोपा' ऽइत्येष वा ऽइदꣳ सर्वꣳ सम्पश्यत्येष ऽउ ऽएवास्य सर्वस्य भुवनस्य गोप्ता ॥ १२ ॥ तद्या ऽअमुष्मादादित्यादर्वाच्यः पञ्चदिशः । ता ऽएतद्देवा ऽअसुराणाम-वृञ्जताथो ता ऽएवैतत्समारोहँस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा ऽआतः सम्प्राप्नुवँस्त-

(१) शु० य० सं० अ० १७ क० ५६। (२) शु० य० सं० अ० १७ क० ५६। (३) शु० य० सं० अ० १७ क० ५६। (४) शु० य० सं० अ० १७ क० ५७। (५) शु० य० सं० अ० १७ क० ५७। (६) शु० य० सं० अ० १७ क० ५८। (७) शु० य० सं० अ० १७ क० ५८। (८) शु० य० सं० अ० १७ क० ५८।

थैवाभिरयमेतद्वातः सम्प्राप्नोति ॥ १३ ॥ अथाश्मानं * पृश्निमुपदधाति । असौ वा ऽआदित्योऽश्मा पृश्नि-रमुमेवैतदादित्यमुपदधाति पृश्निर्भवति रश्मिभिर्हि मण्डलं पृश्नि तमन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय ऽएतं तदिमौ लोकावन्तरेण दधाति तस्मादेष ऽइमौ लोकावन्तरेण तपति ॥ १४ ॥ आग्नीध्रवे-लायाम् । अन्तरिक्षं वा ऽआग्नीध्रमेतं तदन्तरिक्षे दधाति तस्मादेषोऽन्तरिक्षायतनो व्यद्धे-व्यद्धे ह्येष ऽइतः ॥ १५ ॥ स ऽएष प्राणः । प्राणमेवैतदात्मन्धत्ते तदे-तदायुरायुरेवैतदात्मन्धत्ते तदेतदन्नमायुर्ह्येतदन्नमु वा-ऽआयुरश्मा भवति स्थिरो वा ऽअश्मा स्थिरं तदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्नः ॥ १६ ॥ स ऽउप-दधाति । 'विमान ऽएष दिवो मध्य ऽआस्त' ऽइति विमानो ह्येष दिवो मध्य ऽआस्त 'ऽआपप्रिवान्रोदसी-ऽअन्तरिक्षमि'त्युद्यन्वा ऽएष ऽइमाँल्लोकानापूरयति 'स विश्वाचीरभिचष्टे घृताचीरि'ति स्रुचश्चैतद्वेदीश्चा'हा-न्तरा पूर्वमपरं च केतुमि'त्यन्तरेमं च लोकममुं चेत्ये-तदथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयतेति ॥ १७ ॥ 'उक्षा समुद्रो ऽअरुणः सुपर्ण' ऽइति । उक्षा ह्येष समुद्रोऽ-रुणः सुपर्णः 'पूर्वस्य योनिं पितुराविवेशे'ति पूर्वस्य

---

* का० श्रौ० सू० १८. ३. २० ।

( १ ) शु० य० सं० अ० १७ क० ५९ । ( २ ) शु० य० सं० अ० १७ क० ५९ । ( ३ ) शु० य० सं० अ० १७ क० ५९ । ( ४ ) शु० य० सं० अ० १७ क० ५९ । ( ५ ) शु० य० सं० अ० १७ क० ६० । ( ६ ) शु० य० सं० अ० १७ क० ६० ।

ह्येष ऽएतं स्वांयोनिं पितुराविशति '[1]मध्ये दिवो निहितः पृश्निरश्मे'ति मध्ये ह्येष दिवो निहितः पृश्निरश्मा 'विचक्रमे रजसस्पात्वन्ता'विति विक्रममाणो वा ऽएष-ऽएषां लोकानामन्तान्न्याति ॥ १८ ॥ द्वाभ्यामुपदधाति *। द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुभ्भ्यां त्रैष्टुभो ह्येष न सादयत्यसन्नो ह्येष न सूददोहसाधिवदति प्राणो वै सूददोहाः प्राण ऽएष किं प्राणे प्राणं दध्यामिति तं निधाय यथा न नश्येत् ॥ १९ ॥ † अथोपातियन्ति । 'इन्द्रं विश्वा ऽअवीवृधन्नि'ति तस्योक्तो 'बन्धु'र्देवहूर्यज्ञ ऽआ च वक्षत्सुम्नहूर्यज्ञ ऽआ च वक्षदि'ति देवहूश्चैव यज्ञः सुम्नहूश्च 'यक्षदग्निर्देवो देवाँ२ ऽआ च वक्षदि'ति यक्षच्चैवाग्निर्देवो देवाना च वहत्वित्येतत् ॥ २१ ॥ 'वाजं-स्यमा प्रसवः । उद्ग्राभेणोदग्रभीत् । अधा सपत्ना-निन्द्रो मे निग्राभेणाधराँ२ ऽअकरि'ति यथैव यजुस्तथा बन्धुः ॥ २१ ॥ 'उद्ग्राभं च निग्राभं च ब्रह्म देवा-ऽअवीवृधन् । अधा सपत्नानिन्द्राग्नी मे विषूची ना-न्व्यस्यतामि'ति यथैव यजुस्तथा बन्धुः ॥ २२ ॥ तद्या-ऽअमुष्मादादित्याद्र्ध्वाश्चतस्रो दिशः । ता ऽएतद्देवा-

(१) शु० य० सं० अ० १७ क० ६०। (२) शु० य० सं० अ० १७ क० ६०।
* का० श्रौ० सू० १८. ३. २२।
† 'अथोपायन्ति' इति 'गञ्ज' पुस्तकयोर्दृश्यते।
(३) शु० य० सं० अ० १७ क० ६१। (४) शु० य० सं० अ० १७ क० ६२।
(५) शु० य० सं० अ० १७ क० ६२। (६) शु० य० सं० अ० १७ क० ६३।
(७) शु० य० सं० अ० १७ क० ६४।

ऽअसुराणामवृञ्जताथो ता ऽएवैतत्त्समारोहँस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्त्समारोहत्यथो ऽएतद्वा ऽएताभिर्द्देवा ऽआतः सम्प्राप्नुवँस्तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ २३ ॥ अथाग्निमारोहन्ति * । 'क्रमद्ध्वमग्निना नाकमि'ति स्वर्ग्गो वै लोको नाकः क्रमद्ध्वमनेनाग्निनैतꣳ स्वर्ग्गं लोकमित्त्येतद्'दुख्यꣳ हस्तेषु बिभ्रत' ऽइत्त्युख्यꣳ ह्येत ऽएतꣳ हस्तेषु बिभ्रति 'दिवस्पृष्ठꣳ स्वर्ग्गत्वा मिश्रा देवेभिराद्ध्वमि'ति दिवस्पृष्ठꣳ स्वर्ग्गं लोकं गत्त्वा मिश्रा देवेभिराद्ध्वमित्त्येतत् ॥ २४ ॥ 'प्राचीमनु प्प्रदिशं प्रेहि विद्वानि'ति । प्राची वै दिगग्नेः स्वामनु प्प्रदिशं प्रेहि विद्वानित्त्येत'दग्नेरग्ने पुरो ऽअग्निर्भवेहे'त्त्यस्य त्त्वमग्नेरग्ने पुरोऽग्निर्भवेहेत्त्येतद्'विश्वा ऽआशा दीद्यानो विभाही'ति सर्व्वा ऽआशा दीप्प्यमानो विभाहीत्त्येत'दूर्ज्जं नो धेहि द्विपदे चतुष्पद' ऽइत्त्याशिषमाशास्ते ॥ २५ ॥ 'पृथिव्व्या ऽअहम् । उदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहमि'ति गार्हपत्त्याद्ध्याग्नीद्ध्रीयमागच्छन्त्याग्नीद्ध्रीयादाहवनीयं 'दिवो नाकस्य पृष्ठात्स्वज्र्योतिरगामहमि'ति दिवो नाकस्य पृष्ठात्स्वर्ग्गं लोकमगामहमित्त्येतत् ॥ २६ ॥ 'स्वर्य्यन्तो नापेक्षन्ते । आ द्याꣳ

---

* का० श्रौ० सू० १८. ४. १ ।

(१) शु० य० सं० अ० १७ क० ६५ । (२) शु० य० सं० अ० १७ क० ६५ । (३) शु० य० सं० अ० १७ क० ६५ । (४) शु० य० सं० अ० १७ क० ६६ । (५) शु० य० सं० अ० १७ क० ६६ । (६) शु० य० सं० अ० १७ क० ६६ । (७) शु० य० सं० अ० १७ क० ६७ । (८) शु० य० सं० अ० १७ क० ६७ । (९) शु० य० सं० अ० १७ क० ६८ । (१०) शु० य० सं० अ० १७ क० ६८ ।

रोहन्ति रोदसी' ऽइति न हैव तेऽपेक्षन्ते ये स्वर्ग्गं लोकं रुयन्ति 'यज्ञं रुये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिर' ऽइत्येष ऽएव यज्ञो विश्वतोधार ऽएत ऽउ ऽएव सुविद्वाꣳसो य ऽएतं वितन्वते ॥ २७ ॥ 'अग्ने प्रेहि प्रथमो देवयतामि'ति। इममेतदग्निमाह त्वमेषां प्रेहि प्रथमो देवयतामिति 'चक्षुर्देवानामुत मर्त्यानामि'त्युभयेषाꣳ हैतद्देवमनुष्याणां चक्षु'रियक्षमाणा भृगुभिः सजोषा' इति यजमाना भृगुभिः सजोषा ऽइत्येत'त्स्वर्यन्तु यजमानाः स्वस्ती'ति स्वर्ग्गं लोकं रुयन्तु यजमानाः स्वस्तीत्येतत् ॥२८॥ तद्या ऽअमुष्मिँल्लोके पञ्च दिशः । ता ऽएतद्देवा ऽअसुराणामवृञ्जताथो ता ऽएवैतत्समारोहँस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा ऽआतः सम्प्राप्नुवँस्तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ २९ ॥ अथैनमभिजुहोति । एतद्वा ऽएनं देवा ऽईयिवाꣳसमुपरिष्टादन्नेनाप्रीणन्नेतयाहुत्या तथैवैनमयमेतदीयिवाꣳसमुपरिष्टादन्नेन प्रीणात्येतयाहुत्या कृष्णायै शुक्लवत्सायै पयसा रात्रिर्वै कृष्णा शुक्लवत्सा तस्या ऽअसावादित्यो वत्सः स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणात्युपरि धार्यमाण ऽउपरि हि स यमेतत्प्रीणाति दोहनेन दोहनेन हि पयः प्रदीयते ॥ ३० ॥ यद्वेवैनमभिजुहोति ।

(१) शु० य० सं० अ० १७ क० ६९। (२) शु० य० सं० अ० १७ क० ६९। (३) शु० य० सं० अ० १७ क० ६९। (४) शु० य० सं० अ० १७ क० ६९ (५) शु० य० सं० अ० १७ क० ६९।

शिर ऽएतद्यज्ञस्य यदग्निः प्राणः पयः शीर्षस्तत्प्राणं दधाति यथा * स्वयमातृण्णामभिप्रक्षरेदेवमभिजुहुयात्प्राणः स्वयमातृण्णा रस ऽएष शिरश्च तत्प्राणं च रसेन सन्तनोति सन्दधाति 'नक्तोषासा[1] समनसा विरूपे' ऽइति तस्योक्तो बन्धुः ॥ ३१ ॥ 'अग्ने[2] सहस्राक्ष'ेति । हिरण्यशकलैर्वा ऽएष सहस्राक्षः 'शतमूर्द्धन्नि[3]'ति यद्वै शतशीर्षा रुद्रोऽसृज्यत 'शतं ते प्राणाः[4] सहस्रं व्याना' ऽइति शतꣳ हैव तस्य प्राणाः सहस्रं व्याना यः शतशीर्षा 'त्वꣳ साहस्रस्य राय ऽईशिष' ऽइति त्वꣳ सर्वस्यै रय्या ऽईशिष ऽइत्येत'त्तस्मै ते विधेम[5] वाजाय स्वाहे'त्येष वै वाजस्तमेतत्प्रीणाति ॥ ३२ ॥ द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदभिजुहोति ॥३३॥ अथैनं † निदधाति । 'सुपर्णो[6]ऽसि गरुत्मानि'त्येतद्वा ऽएनमदो विकृत्या सुपर्णं गरुत्मन्तं विकरोति तꣳ सुपर्णं गरुत्मन्तं चिनोति तꣳ सुपर्णं गरुत्मन्तं कृत्वान्ततो निदधाति 'पृष्ठे[7] पृथिव्याः सीद । भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान तेजसा दिश ऽउद्दृꣳहे'त्येवꣳ ह्येष ऽएतत्सर्वं

---

* का० श्रौ० सू० १८. ४. २।

(१) शु० य० सं० अ० १७ क० ७०। (२) शु० य० सं० अ० १७ क० ७१। (३) शु० य० सं० अ० १७ क० ७१। (४) शु० य० सं० अ० १७ क० ७१। (५) शु० य० सं० अ० १७ क० ७१। (६) शु० य० सं० अ० १७ क० ७१।

† का० श्रौ० सू० १८. ४. ४।

(७) शु० य० सं० अ० १७ क० ७२। (८) शु० य० सं० अ० १७ क० ७२।

करोति ॥ ३४ ॥ 'आजुह्वानः सुप्रतीकः पुरस्तादि'ति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येत'दग्ने स्वं योनि-[2]मासीद साधुये'त्येष वा ऽअस्य स्वो योनिस्तद्ः साद्धा-सीदेत्येत'दस्मिन्त्सधस्थे ऽअद्ध्युत्तरस्मिन्नि'[3]ति द्यौर्वा ऽउत्तरः सधस्थं 'विश्वे देवा[4] यजमानश्च सीदते'ति तद्विश्वैर्देवैः सह यजमानः सादयति द्वाभ्यां निदधाति तस्योक्तो बन्धुर्वषट्कारेण तस्योपरि बन्धुः ॥ ३५ ॥ अथास्मिन्त्स-मिध ऽआदधाति । एतद्वा ऽएनं देवा ऽईयिवाꣳसमुपरि-ष्टादन्नेनाप्रीणन्त्समिद्भिश्चाहुतिभिश्च तथैवैनमयमेत-दीयिवाꣳसमुपरिष्टादन्नेन प्रीणाति समिद्भिश्चाहुति-भिश्च ॥ ३६ ॥ स वै * शमीमयीं प्रथमामादधाति । एतद्वा ऽएष ऽएतस्यामाहुत्याꣳ हुतायां प्रादीप्यतोदज्व-लत्तस्माद्देवा ऽअबिभयुर्यद्वै नोऽयं न हिꣳस्यादिति त-ऽएताꣳ शमीमपश्यꣳस्तयैनमशमयꣳस्त[†] द्यदेनꣳ शम्म्या-शमयꣳस्तस्माच्छमी तथैवैनमयमेतच्छम्म्या शमयति शान्त्या-ऽएव न जग्ध्यै ॥ ३७ ॥ 'ताꣳ सवितुर्व्वरेण्यस्य । चित्रा-माहं व्वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो ऽअदु-हत्प्रपीनाꣳ सहस्रधारां पयसा महीं गामि'[5]ति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्व्वान्कामान्दुदुहे तथैवैत-द्यजमानाय सहस्रधारा सर्व्वान्कामान्दुहे ॥ ३८ ॥ अथ

(१) शु॰ य॰ सं॰ अ॰ १७ क॰ ७३ । (२) शु॰ य॰ सं॰ अ॰ १७ क॰ ७३ ।
(३) शु॰ य॰ सं॰ अ॰ १७ क॰ ७३ । (४) शु॰ य॰ सं॰ अ॰ १७ क॰ ७३ ।
* का॰ श्रौ॰ सू॰ १८. ४. ६ ।
† 'यदेतꣳ' इति 'ग' पुस्तके ।
(५) शु॰ य॰ सं॰ अ॰ १७ क॰ ७४ ।

वैकङ्कतीमादधाति । तस्या ऽउक्तो बन्धु'र्विधेम ते परमे जन्मन्नग्न' ऽइति द्यौर्वा ऽअस्य परमं जन्म 'विधेम स्तोमै-रवरे सधस्त्थ' ऽइत्यन्तरिक्षं वा ऽअवरꣳ सधस्त्थं 'यस्माद्योनेरुदारिथा यजे तमि'त्येष वा ऽअस्य स्वो योनिस्तं यज ऽइत्येत'त्प्र त्वे हवीꣳषि जुहुरे समिद्ध' ऽइति यदा वा ऽएष समिध्यतेऽथैतस्मिन्न्हवीꣳषि प्रजुह्वति ॥ ३९ ॥ अथौदुम्बरीमादधाति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेत-द्रसेन प्रीणाति कर्ण्णकवती भवति पशवो वै कर्ण्णकाः पशुभिरेवैनमेतदन्नेन प्रीणाति यदि कर्ण्णकवतीं न विन्दे-दपिद्रप्प्समुपहत्यादध्यात्तद्यदपिद्रप्प्स ऽउपतिष्ठते तदेव पशुरूपं 'प्रेद्धो ऽअग्ने दीदिहि पुरो न' ऽइति विराजा दधा-त्यन्नं विराडन्नेनैवैनमेतत्प्रीणाति तिस्रः समिध ऽआदधाति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥४०॥ [अर्धप्रपाठकः४७॥] अथाहुतीर्ज्जुहोति * । यथा परिविष्यानुपाययेत्तादृक्तत्स्रुवेण पूर्वे स्रुचोत्तरा'मग्ने तम-द्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ऽओहैरि'ति यस्ते हृदिस्पृक्स्तोमस्तं त ऽऋध्यासमि-त्येतत्पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ४१ ॥ अथ वैश्वकर्म्मणीं

(१) शु० य० सं० अ० १७ क० ७५। (२) शु० य० सं० अ० १७ क० ७५। (३) शु० य० सं० अ० १७ क० ७५। (४) शु० य० सं० अ० १७ क० ७६।

* का० श्रौ० सू० १८. ४. ८।

(५) शु० य० सं० अ० १७ क० ७६। (६) शु० य० सं० अ० १७ क० ७७।

करोति ॥ ३४ ॥ 'आजुह्वानः सुप्रतीकः पुरस्तादि'ति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येत'दुग्ने स्वं योनि-[2]मासीद साधुये'त्येष वा ऽअस्य स्वो योनिस्तः साद्धा-सीदेत्येत'दस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्नि[3]'ति द्यौर्वा ऽउत्तरः सधस्थं 'विश्वे देवा यजमानश्च सीदते'ति तद्विश्वैर्देवैः सह यजमानः सादयति द्वाभ्यां निदधाति तस्योक्तो बन्धुर्वषट्कारेण तस्योपरि बन्धुः ॥ ३५ ॥ अथास्मिन्त्स-मिध ऽआदधाति । एतद्वा ऽएनं देवा ऽईयिवाᳬसमुपरि-ष्टादन्नेनाप्रीणन्त्समिद्भिश्चाहुतिभिश्च तथैवैनमयमेत-दीयिवाᳬसमुपरिष्टादन्नेन प्रीणाति समिद्भिश्चाहुति-भिश्च ॥ ३६ ॥ स वै * शमीमयीं प्रथमामादधाति । एतद्वा ऽएष ऽएतस्यामाहुत्याᳬ हुतायां प्रादीप्यतोदज्व-लत्तस्माद्देवा ऽअबिभयुर्यद्वै नोऽयं न हिᳬस्यादिति त-ऽएताᳬ शमीमपश्यᳬस्तयैनमशमयᳬस्त†यदेनᳬ शम्या-शमयᳬस्तस्माच्छमी तथैवैनमयमेतच्छम्या शमयति शान्त्या-ऽएव न जग्ध्यै ॥ ३७ ॥ 'ताᳬ सवितुर्वरेण्यस्य । चित्रा-माहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो ऽअदु-हत्प्रपीनाᳬ सहस्रधारां पयसा महीं गामि'ति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्वान्कामान्दुदुहे तथैवैत-द्यजमानाय सहस्रधारा सर्वान्कामान्दुहे ॥ ३८ ॥ अथ

(१) शु० य० सं० अ० १७ क० ७३ । (२) शु० य० सं० अ० १७ क० ७३ । (३) शु० य० सं० अ० १७ क० ७३ । (४) शु० य० सं० अ० १७ क० ७३ ।
* का० श्रौ० सू० १८. ४. ६ ।
† 'यदेतᳬ' इति 'ग' पुस्तके ।
(५) शु० य० सं० अ० १७ क० ७४ ।

वैकङ्कतीमादधाति । तस्या ऽउक्तो बन्धु'र्विधेम ते परमे जन्मन्नग्न' ऽइति द्यौर्वा ऽअस्य परमं जन्म 'विधेम स्तोमै-रवरे सधस्थ' ऽइत्यन्तरिक्षं वा ऽअवरꣳ सधस्थं 'यस्माद्-योनेरुदारिथा यजे तमि'त्येष वा ऽअस्य स्वो योनिस्तं यज ऽइत्येत'त्प्र त्वे हवीꣳषि जुहुरे समिद्ध' ऽइति यदा वा ऽएष समिध्यतेऽथैतस्मिन्न्हवीꣳषि प्रजुह्वति ॥ ३९ ॥ अथौदुम्बरीमादधाति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जैवैनमेत-द्रसेन प्रीणाति कर्ण्णकवती भवति पशवो वै कर्ण्णकाः पशुभिरेवैनमेतदन्नेन प्रीणाति यदि कर्ण्णकवतीं न विन्दे-द्दधिद्रप्समुपहत्यादध्यात्तद्यद्दधिद्रप्स ऽउपतिष्ठते तदेव पशुरूपं 'प्रेद्धो ऽअग्ने दीदिहि पुरो न' ऽइति विराजा दधा-त्यन्नं विराडन्नेनैवैनमेतत्प्रीणाति तिस्रः समिध ऽआदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥४०॥ [अर्धप्रपाठकः४७॥] अथाहुतीर्जुहोति * । यथा परिविष्यानुपाययेत्तादृक्तत्स्रुवेण पूर्वे स्रुचोत्तरा'मग्ने तम-द्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ऽओहैरि'ति यस्ते हृदिस्पृक्स्तोमस्तं त ऽऋध्यासमि-त्येतत्पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ४१ ॥ अथ वैश्वकर्म्मणीं

(१) शु० य० सं० अ० १७ क० ७५। (२) शु० य० सं० अ० १७ क० ७५।
(३) शु० य० सं० अ० १७ क० ७५। (४) शु० य० सं० अ० १७ क० ७६।
* का० श्रौ० सू० १८. ४. ८।
(५) शु० य० सं० अ० १७ क० ७६। (६) शु० य० सं० अ० १७ क० ७७।

जुहोति। विश्वकर्म्मायमग्निस्तमेवैतत्प्रीणाति 'चित्तिं जुहोमि[1] मनसा घृतेने'ति चित्तमेषां जुहोमि मनसा च घृतेन चेत्त्येत-'द्यथा[2] देवा ऽइहागमन्नि'ति यथा देवा ऽइहागच्छानित्त्येत'द्वीतिहोत्रा[3] ऽऋतावृध' ऽइति सत्त्यवृध ऽइत्त्येत'त्पत्त्ये[4] विश्वस्य भूमनो जुहोमि विश्वकर्म्मण' ऽइति यो ऽस्य सर्वस्य भूतस्य पतिस्तस्मै जुहोमि विश्वकर्म्मण-ऽइत्त्येत'द्विश्वाहादाभ्यꣳ[5] हविरि'ति सर्वदैवाक्षितꣳ हविरित्त्येतत् ॥ ४२ ॥ अथ † पूर्णाहुतिं जुहोति । सर्वमेतद्यत्पूर्णꣳ सर्वेणैवैनमेतत्प्रीणाति ॥ ४३ ॥ 'सप्त ते-ऽअग्ने[6] समिध' ऽइति । प्राणा वै समिधः प्राणा ह्येतꣳ समिन्धते 'सप्त[7] जिह्वा' ऽइति यानमून्त्सप्त पुरुषानेकं पुरुषमकुर्वंस्तेषामेतदाह 'सप्त[8] ऽऋषय' ऽइति सप्त हि त-ऽऋषय ऽआस'न्त्सप्त[9] धाम प्प्रियाणी'ति छन्दाꣳस्येतदाह छन्दाꣳसि वा ऽअस्य सप्त धाम प्प्रियाणि 'सप्त[10] होत्राः सप्तधा त्वा यजन्ती'ति सप्त ह्येतꣳ होत्राः सप्तधा यजन्ति 'सप्त[11] योनीरि'ति चितीरेतदा'हापृणस्वे'[12]त्या प्प्रजायस्वेत्त्येतद् 'घृतेने'[13]ति रेतो वै घृतꣳ रेत ऽएवैतदेषु लोकेषु दधाति 'स्वाहे'[14]ति यज्ञो वै स्वाहाकारो यज्ञियमे-

---

(१) शु० य० सं० अ० १७ क० ७८। (२) शु० य० सं० अ० १७ क० ७८। (३) शु० य० सं० अ० १७ क० ७८। (४) शु० य० सं० अ० १७ क० ७८। (५) शु० य० सं० अ० १७ क० ७८।

† "पूर्णाहुतिं जुहोति सप्तत इति" का० श्रौ० सू० १८.४.९।

(६) शु० य० सं० अ० १७ क० ७९। (७) शु० य० सं० अ० १७ क० ७९। (८) शु० य० सं० अ० १७ क० ७९। (९) शु० य० सं० अ० १७ क० ७९। (१०) शु० य० सं० अ० १७ क० ७९। (११) शु० य० सं० अ० १७ क० ७९। (१२) शु० य० सं० अ० १७ क० ७९। (१३) शु० य० सं० अ० १७ क० ७९। (१४) शु० य० सं० अ० १७ क० ७९।

वैतदिदुᳪ सकृत्सर्वं करोति ॥ ४४ ॥ सप्त सप्तेति। सप्तचितिकोऽग्निᳪ सप्तर्त्तवᳪ संवत्सरᳪ संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रीणाति तिस्र ऽआहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्रᳪ समिध ऽआदधाति तत्षट् तस्योक्तो बन्धुᳪ ॥ ४५ ॥ तिष्ठन्त्समिध ऽआदधाति। अस्थीनि वै समिधस्तिष्ठन्तीव वा ऽअस्थीन्यासीनऽआहुतीर्जुहोति माᳪसानि वा ऽआहुतय ऽआसत ऽइव वै माᳪसान्यन्तराᳪ समिधो भवन्ति बाह्या ऽआहुतयोऽन्तराणि ह्यस्थीनि बाह्यानि माᳪसानि ॥ ४६ ॥ अथातᳪ सम्पदेव। षट् पुरस्ताज्जुहोति षडुपरिष्टात्षड्भिराश्मनᳪ पृश्नेरुर्षन्ति द्वाभ्यामश्मानं पृश्निमुपदधाति चतुर्भिराग्नेरुर्षन्ति पञ्चभिरग्निमारोहन्ति तदेकां न त्रिᳪशदाहुतिरेव त्रिᳪशत्तमी द्वाभ्यामग्निं निदधाति तद् द्वात्रिᳪशद् द्वात्रिᳪशदक्षरानुष्टुप्प्सैषानुष्टुप् ॥ ४७ ॥ तद्या ऽअमूस्तिस्रोऽनुष्टुभᳪ। गार्हपत्ये सम्पादयन्ति तासामेतामत्रैकामाहरन्ति तद्यदेतामत्राहरन्त्यत्रैष सर्वोऽग्निᳪ संस्कृतᳪ स ऽएषोऽत्र तस्मै नालमासीद्यदन्नमात्स्यत् ॥ ४८ ॥ सोऽग्निमब्रवीत्। त्वयान्नमदानीति तथेति तस्माद्यद्दैवैतमत्राहरन्त्यथैषोऽलमन्नायालमाहुतिभ्यो भवति ॥ ४९ ॥ अथो ऽआहुᳪ। प्रजापतिरेवैतं प्रियं पुत्रमुरस्याधत्त ऽइति स यो हैतदेवं वेद हैवं प्रियं पुत्रमुरसि धत्ते ॥ ५० ॥ यद्वेवैतमत्राहरन्ति। याव्वै तान्त्सप्त

पुरुषानेकं पुरुषमकुर्वन्नयमेव स योऽयमग्निश्चीयतेऽथ यामेषां तामूर्द्ध्वाᳬं श्रियᳬ रसᳬ समुदौहन्नेष स यमेतमत्राग्निमाहरन्ति तद्यदेतमत्राहरन्ति यैवैतेषाᳬं सप्तानां पुरुषाणाᳬं श्रीरूर्ध्वो रसस्तमेतदूर्द्ध्वᳬ समुदूहन्ति तदस्यैतच्छिर ऽआत्मायमग्निश्चित ऽआत्मामेवास्यैतत्संस्कृत्य शिरᳬ प्रतिदधाति ॥ ५१ ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ वैश्वानरमारुतयोर्होमविध्यादि ]

अथातो * वैश्वानरं जुहोति । अत्रैष सर्वोऽग्निᳬ संस्कृतᳬ स ऽएषोऽत्र वैश्वानरो देवता तस्मा ऽएतद्धविर्जुहोति तदेनᳬ हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते द्वादशकपालो द्वादश मासाᳬ संवत्सरᳬ संवत्सरो वैश्वानरᳬ ॥ १ ॥ यद्वेवैतं वैश्वानरं जुहोति । वैश्वानरं वा ऽएतमग्निं जनयिष्यन्भवति तमदᳬ पुरस्ताद्दीक्षणीयायाᳬं रेतो भूतᳬ सिञ्चति यादृग्वै योनौ रेतᳬ सिच्यते तादृग्जायते तद्यत्तत्र वैश्वानरᳬ रेतो भूतᳬ सिञ्चति तस्मादयमिह वैश्वानरो जायत ऽउपाᳬशु तत्र भवति रेतो वै तत्र यज्ञ-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ४. २; काठ० सं० १८. ३. ५; १८. ४; कपिष्ठ० २८. ३. ५; २८. ४; मै० सं० ११. १०. ४, ६; तै० सं० ४. ६. ३, ५।

* का० श्रौ० सू० १६. ४. १६–१९।

ऽउपाꣳशु वै रेतꣳ सिच्यते निरुक्त ऽइह निरुक्तꣳ हि रेतो जातं भवति ॥ २ ॥ * स यꣳ स वैश्वानरꣳ। इमे स लोका ऽइयमेव पृथिवी विश्वमग्निर्नरोऽन्तरिक्षमेव विश्वं वायुर्नरो द्यौरेव विश्वमादित्यो नरꣳ ॥ ३ ॥ ते षे तु ऽइमे लोकाꣳ। इदं तच्छिर ऽइदमेव पृथिव्यो-षधयꣳ श्मश्रूणि तदेतद्विश्वं वागेवाग्निꣳ स नरꣳ सोपरिष्टादस्य भवत्युपरिष्टाद्ध्यस्या ऽअग्निꣳ ॥ ४ ॥ इद-मेवान्तरिक्षम्। तस्मादेतदलोमकमलोमकमिव ह्यन्तरिक्षं तदेतद्विश्वं प्राण ऽएव वायुꣳ स नरꣳ स मध्येनास्य भवति मध्येन ह्यन्तरिक्षस्य वायुꣳ ॥ ५ ॥ शिर ऽएव द्यौꣳ। नक्षत्राणि केशास्तदेतद्विश्वं चक्षुरेवादित्यꣳ स नरस्तदवस्ताच्छीर्ष्णो भवत्यवस्ताद्धि दिव ऽआदित्य-स्तदस्यैतच्छिरो वैश्वानर ऽआत्मायमग्निश्चित ऽआत्मा-नमेवास्यैतत्संस्कृत्य शिरꣳ प्रतिदधाति ॥ ६ ॥ अथ मारुताञ्जुहोति। प्राणा वै मारुताꣳ प्राणानेवास्मिन्नेत-द्दधाति वैश्वानरꣳ हुत्वा शिरो वै वैश्वानरꣳ शीर्षस्तत्प्रा-णान्दधाति ॥ ७ ॥ एक ऽएष भवति। एकमिव हि शिरꣳ सप्तेतरे सप्तकपाला षदु वा ऽअपि बहुकृत्वꣳ सप्त—सप्त सप्तैव तच्छीर्षण्येव तत्सप्त प्राणान्दधाति ॥ ८ ॥ निरुक्त ऽएष भवति। निरुक्तमिव हि शिरोऽनिरुक्ता ऽइतरेऽ-निरुक्ता ऽइव हि प्राणास्तिष्ठन्नेतं जुहोति तिष्ठतीव हि शिर ऽआसीन ऽइतरानासत ऽइव हि प्राणाꣳ ॥ ९ ॥ तद्यो

* शतम् ४९०० ॥

प्रथमौ मारुतौ जुहोति। इमौ तौ प्राणौ तौ मध्ये वैश्वानरस्य जुहोति मध्ये हीमौ शीर्ष्णः प्राणौ ॥ १० ॥ अथ यौ द्वितीयौ। इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्राणौ ॥ ११ ॥ अथ यौ तृतीयौ। इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्राणौ वागेवारण्येऽनूच्यः सोऽरण्येऽनूच्यो भवति बहु हि वाचा घोरं निगच्छति ॥ १२ ॥ यद्वेव वैश्वानरमारुताञ्जुहोति। क्षत्रं वै वैश्वानरो विण्मारुताः क्षत्रं च तद्विशं च करोति वैश्वानरं पूर्वं जुहोति क्षत्रं तत्कृत्वा विशं करोति ॥ १३ ॥ एक ऽएष भवति। एकस्थं तत्क्षत्रमेकस्थाᳪं श्रियं करोति बहव ऽइतरे विशि तद्भूमानं दधाति ॥ १४ ॥ निरुक्त ऽएष भवति। निरुक्तमिव हि क्षत्रमनिरुक्ता ऽइतरेऽनिरुक्तेव हि विट् तिष्ठन्नेतं जुहोति तिष्ठतीव हि क्षत्रमासीन ऽइतरानास्त ऽइव हि विट् ॥ १५ ॥ तं वा ऽएतम्। पुरोऽनुवाक्यवन्तं याज्यवन्तं वषट्कृते स्रुचा जुहोति हस्तेनैवेतरानासीनः स्वाहाकारेण क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति ॥ १६ ॥ तदाहुः। कथमस्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्तीत्येतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि सा त्रिपदा गायत्री पुरोऽनुवाक्याथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब्याज्येदमेव * कपुत्सलमयं दण्डः स्वाहाकारो

* 'कपुच्छलमयम्' इति 'ग-ज' पुस्तकयोः।

वषट्कार ऽएवमु हास्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्ति ॥ १७ ॥ तद्यं प्रथमं दक्षिणतो मारुतं जुहोति । याः सप्त प्प्राच्च्यः स्रवन्ति ताः स स सप्तकपालो भवति सप्त हि ता याः प्प्राच्च्यः स्रवन्ति ॥ १८ ॥ अथ यं प्रथममुत्तरतो जुहोति । ऋतवः स स सप्तकपालो भवति सप्त ह्यृतवः ॥ १९ ॥ अथ यं द्वितीयं दक्षिणतो जुहोति । पशवः स स सप्तकपालो भवति सप्त हि ग्ग्राम्म्याः पशवस्तमन्तर्हितं पूर्वस्म्माज्जुहोत्त्यप्सु तत्पशून्न्प्रतिष्ठापयति ॥ २० ॥ अथ यं द्वितीयमुत्तरतो जुहोति । सप्त ऽऋषयः स स सप्तकपालो भवति सप्त हि सप्तर्षयस्तमनन्तर्हितं पूर्वस्म्माज्जुहोत्त्यृतुषु तदृषीन्प्रतिष्ठापयति ॥ २१ ॥ अथ यं तृतीयं दक्षिणतो जुहोति । प्राणाः स स सप्तकपालो भवति सप्त हि शीर्षन्न्प्राणास्तमनन्तर्हितं पूर्वस्म्माज्जुहोत्त्यनन्तर्हिताँस्तच्छीर्ष्णः प्प्राणान्दधाति ॥ २२ ॥ अथ यं तृतीयमुत्तरतो जुहोति । छन्दाᳬंसि स स सप्तकपालो भवति सप्त हि चतुरुत्तराणि च्छन्दाᳬंसि तमनन्तर्हितं पूर्वस्म्माज्जुहोत्त्यनन्तर्हितानि तदृषिब्भ्यश्छन्दाᳬंसि दधाति ॥ २३ ॥ अथ याः सप्त प्प्रतीच्च्यः स्रवन्ति । सोऽरण्ण्येऽनूच्च्यः स सप्तकपालो भवति सप्त हि ता याः प्प्रतीच्च्यः स्रवन्ति सोऽस्यैषोऽवाङ् प्राण ऽएतस्य प्प्रजापतेः सोऽरण्ण्येऽनूच्च्यो भवति तिर *ऽइव वै तद्यदरण्ण्यं तिर ऽइव तद्यदवाङ् प्राणस्तस्मा-

* 'ऽइव तद्य' इति 'ग' पुस्तके ।

ह्य ऽएतासां नदीनां पिबन्ति रिप्रतरा शपनतरा ऽआहनस्य-वादितरा भवन्ति तद्यद्यदेतद्वाहेदं मारुता ऽइति तदस्मा-ऽअन्नं कृत्वापिदधाति तेनैनं प्रीणाति ॥ २४ ॥ स यः स वैश्वानरः । असौ स ऽआदित्योऽथ ये ते मारुता रश्मयस्ते ते सप्त सप्तकपाला भवन्ति सप्त-सप्त हि मारुता गणाः ॥ २५ ॥ स * जुहोति । 'शुक्रज्ज्योतिश्च चित्रज्ज्योतिश्च सत्यज्ज्योतिश्च ज्योतिष्माँश्चे'ति नामान्न्येषामेतानि मण्डलमेवैतत्संस्कृत्याथास्मिन्नेतान् रश्मीन्नामग्ग्राहं प्रतिदधाति ॥ २६ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ वसोर्धाराहोमः ]

अथातो † वसोर्द्धारां जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र वसुस्तस्मै देवा ऽएतां धारां प्रागृह्णँस्तयैनमप्रीणँस्तद्यदेतस्मै वसव ऽएतां धारां प्रागृह्णँस्तस्मादेनां वसोर्द्धारेत्याचक्षते तथैवास्मा ऽअयमेतां धारां प्रगृह्णाति तयैनं प्रीणाति ॥ १ ॥ षड्ढैवैतां वसोर्द्धारां

* का० श्रौ० सू० १८. ४. २२ ।

(१) शु० य० सं० अ० १७ क० ८० ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ५ १; कसं० १८. ६; कपिष्ठ० २८. ६; मै० सं० ११. ११. १; तै० सं० ४. ६, ५ ।

† यजमान आज्यं संस्कृत्यार्थपरिमाणया महत्यौदुम्बर्या स्रुचा महता स्रुवेण पञ्चवारं गृहीतमाज्यमरण्येऽनूच्ये पुरोडाशेऽधिकरणे तदुरि सन्ततमविच्छिन्नधारं यथा भवति तथा वसोर्धाराख्यामाहुतिं जुहोति । घृतेऽग्निप्राप्ते सति 'वाजश्च' (१८. १–२९) इत्यादिहोममन्त्रारम्भः कार्योऽष्टाभिरनुवाकैर्वाजश्चेत्यादि-वेदस्वाहान्तैरेकोनत्रिंशत्कण्डिकात्मकैः (म. भा.) ।

जुहोति । अभिषेक ऽएवास्यैष ऽएतद्वा ऽएनं देवाः सर्वं कृत्स्नꣳ संस्कृत्याथैनमेतैः कामैरभ्यषिञ्चन्नेतया वसोर्धारया तथैवैनमयमेतत्सर्वं कृत्स्नꣳ संस्कृत्याथैनमेतैः कामैरभिषिञ्चत्येतया वसोर्धारयाज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचा तस्योक्तो बन्धुः ॥ २ ॥ वैश्वानरꣳ हुत्वा । शिरो वै वैश्वानरः शीर्ष्णो वा ऽअन्नमद्यतेऽथो शीर्षतो वा-ऽअभिषिच्यमानोऽभिषिच्यते मारुतान्हुत्वा प्राणा वै मारुताः प्राणैरु वा ऽअन्नमद्यतेऽथो प्राणेषु वा ऽअभि-षिच्यमानोऽभिषिच्यते ॥ ३ ॥ तद्वा ऽअरण्येऽनूच्ये । वाग्वा ऽअरण्येऽनूच्यो वाचो वा ऽअन्नमद्यतेऽथो वाचा वा ऽअभिषिच्यमानोऽभिषिच्यते तदेतत्सर्वं वसु सर्वे ह्येते कामाः सैषा वसुमयी धारा यथा क्षीरस्य वा सर्पिषो वैवमारम्भायैवेयमाज्याहुतिर्हूयते तद्यदेषा वसुमयी धारा तस्मादेनां वसोर्धारेत्याचक्षते ॥ ४ ॥ स ऽआह । * इदं च म ऽइदं च म ऽइत्यनेन च त्वा प्रीणाम्यनेन चानेन च त्वाभिषिञ्चाम्यनेन चेत्येतदथो ऽइदं च मे देहीदं च म ऽइति सा यदैवैषा धाराग्निं प्राप्नुयादथैतद्यजुः प्रति-पद्येत ॥ ५ ॥ एतद्वा ऽएनं देवाः । एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतान्कामानयाचन्त तेभ्य ऽइष्टः प्रीतोऽभिषिक्त ऽएतान्कामान्प्रायच्छत्तथै-वैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धा-रयाथैनमेतान्कामान्याचते तस्मा ऽइष्टः प्रीतोऽभिषिक्त-

---

* 'इदं च म इदं च म' इत्यनेन 'वाजश्च मे प्रसवश्च म' इत्यादि–मान्त्राणां निर्देश इत्यर्थः ।

ऽएतान्कामान्प्रयच्छति द्वौ-द्वौ कामौ सँꣳधुनक्त्यव्य-वच्छेदाय यथा * व्योकसौ सँꣳधुञ्ज्यादेवं यज्ञेन कल्प-न्तामिति ॥ ६ ॥ एतद्वै देवा ऽअब्रुवन् । केनेमान्कामा-न्प्रतिग्रहीष्याम ऽइत्यात्मनैवेत्यब्रुवन्यज्ञो वै देवानामात्मा यज्ञ ऽउ ऽएव यजमानस्य स यदाह यज्ञेन कल्पन्तामित्या-त्मना मे कल्पन्तामित्येवैतदाह ॥७॥ [ काण्डस्यार्धम् २०१ ॥ ] द्वादशसु कल्पयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणात्यथो तावतैवैनमेतदन्नेनाभिषिञ्चति चतुर्दशसु कल्पयत्यष्टासु कल्पयति दशसु कल्पयति त्रयोदशसु कल्पयति ॥ ८ ॥ अथार्द्धेन्द्राणि जुहोति । सर्वमेतद्यदर्द्धेन्द्राणि सर्वेणैवैन-मेतत्प्रीणात्यथो सर्वेणैवैनमेतदभिषिञ्चति ॥ ९ ॥ अथ ग्रहा-ञ्जुहोति । यज्ञो वै ग्रहा यज्ञेनैवैनमेतदन्नेन प्रीणात्यथो यज्ञेनैवैनमेतदन्नेनाभिषिञ्चति ॥ १० ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ ९४ ॥

[ वसोर्धाराहोमस्यार्थवादः ]

अथैतान्यज्ञक्रतूञ्जुहोति । 'अग्निश्च मे घर्म्मश्च म' ऽइत्येतैरेवैनमेतद्यज्ञक्रतुभिः प्रीणात्यथो ऽएतैरेवैन-

* व्योकसौ विभिन्नदेशस्थावाचार्यावित्यर्थः ।
(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ५. २ ।
( १ ) शु० य० सं० अ० १८ क० २२ ।

मेतज्जघन्यकतुभिरभिषिञ्चति ॥ १ ॥ अथायुज *स्तोमाञ्जुहोति । एतद्वै देवाः सर्वान्कामानाप्त्वायुग्भि स्तोमैः स्वर्गं लोकमायँस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वायुग्भि स्तोमैः स्वर्गं लोकमेति ॥ २ ॥ तद्वै त्रयस्त्रिᳬशाद्भिति । अन्तो वै त्रयस्त्रिᳬशोऽयुजाᳬ स्तोमानामन्तत ऽएव तद्देवाः स्वर्गं लोकमायँस्तथैवैतद्यजमानोऽन्तत ऽएव स्वर्गं लोकमेति ॥ ३ ॥ अथ † युग्मतो जुहोति । एतद्वै छन्दाᳬस्यब्रुवन्न्यातयामा वा ऽअयुज स्तोमा युग्मभिर्वयᳬ स्तोमैः स्वर्गं लोकमयामेति तानि युग्मभि स्तोमैः स्वर्गं लोकमायँस्तथैवैतद्यजमानो युग्मभि स्तोमैः स्वर्गं लोकमेति ॥ ४ ॥ तद्वा ऽअष्टाचत्त्वारिᳬशाद्भिति । अन्तो वा ऽअष्टाचत्त्वारिᳬशो युग्मताᳬ स्तोमानामन्तत ऽएव तच्छन्दाᳬसि स्वर्गं लोकमायँस्तथैवैतद्यजमानोऽन्तत ऽएव स्वर्गं लोकमेति ॥ ५ ॥ स ऽआह । 'एका च मे तिस्रश्च मे, चतस्रश्च मेऽष्टौ च म' ऽइति यथा वृक्षᳬ रोहन्नुत्तरामुत्तराᳬ शाखाᳬ समालम्भᳬ रोहेत्तादृक्तद्यद्वेव स्तोमाञ्जुहोत्यन्नं वै स्तोमा ऽअन्नेनैवैनमेतदभिषिञ्चति ॥ ६ ॥ अथ ‡ वयाᳬसि जुहोति । पशवो वै वयाᳬसि

* एकामादाय द्वितीयां विहाय तृतीयामादाय चतुर्थीं विहाय परित्यक्तसमसंख्याकेनात्तविषमसंख्याकेन 'एका च मे' इत्यादि-मन्त्रेणायुग्मस्तोमाञ्जुहुयात् । अयुग्मस्तोमहोमैः सर्वकामावाप्तिरिति भावः ।

† 'चतस्रश्च मे' इत्यनया कण्डिकया युग्मस्तोमाञ्जुहोति । तद्यथा—प्रथमं चतस्र इत्येतां संख्यामादाय चतुरुत्तरत्वेन स्थितान् युग्मान् स्तोमान् अष्टाचत्वारिंशत्पर्यन्ताञ्जुहुयात् । युग्मस्तोमहोमैः स्वर्गप्राप्तिरित्यर्थः ।

( १ ) शु० य० सं० अ० १८ क० २४, २५ ।

‡ "त्र्यविश्च, पष्ठवाट् च' आभ्यां कण्डिकाभ्यां विहितो होमो वयोहोम इत्युच्यते" ।

पशुभिरेवैनमेतदन्नेन प्प्रीणात्यथो पशुभिरेवैनमेतदन्नेनाभिषिञ्चति ॥ ७ ॥ अथ * नामग्ग्राहं जुहोति । एतद्वै देवाः सर्वान्न्कामानाप्प्त्वाथैतमेव प्प्रत्यक्षमप्प्रीणँस्तथैवैतद्यजमानः सर्वान्न्कामानाप्प्त्वाथैतमेव प्प्रत्यक्षं प्रीणाति 'व्वाजाय स्वाहा प्प्रसवाय स्वाहे'ति नामान्न्यस्यैतानि नामग्ग्राहमेवैनमेतत्प्रीणाति ॥ ८ ॥ त्रयोदशैतानि नामानि भवन्ति । त्रयोदश मासाः संव्वत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतत्प्रीणाति यद्वेव नामग्ग्राहं जुहोति नामग्ग्राहमेवैनमेतदभिषिञ्चति ॥९॥ अथाह । 'इयं ते राण्णिमत्त्राय यन्तासि यमन ऽऊर्ज्जे त्वा व्वृष्ट्यै त्वा प्प्रजानां त्वाधिपत्यायेʼत्यन्नं वा ऽऊर्ग्गन्नं व्वृष्टिरन्नेनैवैनमेतत्प्रीणाति ॥ १० ॥ यद्वेवाह । 'इयं ते राण्णिमत्त्राय यन्तासि यमन ऽऊर्ज्जे त्वा व्वृष्ट्यै त्वा प्प्रजानां त्वाधिपत्याये'तीदं ते राज्यमभिषिक्तोऽसीत्येतन्मित्त्रस्य त्वं यन्तासि यमन ऽऊर्ज्जे च नोऽसि व्वृष्ट्यै च नोऽसि प्प्रजानां च न ऽआधिपत्यायासीत्युपब्रुवत ऽएवैनमेतदेतस्म्मै नः सर्वस्म्मा ऽअस्येतस्म्मै त्वा सर्वस्म्मा ऽअभ्यषिचामहीति तस्म्मादु हेदं मानुषः राजानमभिषिक्तमुपब्रुवते ॥ ११ ॥ अथ † कल्पाञ्जुहोति । प्राणा वै कल्पाः प्प्राणानेवास्मिन्नेतद्दधा'त्यायुर्यज्ञेनᵌ कल्पतां प्राणो यज्ञेन

* "वाजाय स्वाहा" इत्यनेन विहितो होमो नामग्राह इत्युच्यते"।

† 'आयुर्यज्ञेन' इति मन्त्रे कल्पतामिति लिङ्गात् मन्त्रोऽयं कल्पहोमे विनियुज्यते।

(१) शु० य० सं० अ० १८, क० २८। (२) शु० य० सं० अ० १८ क० २८। (३) शु० य० सं० अ० १८ क० २९।

कल्पतामि'त्येतानेवास्मिन्नेतत् क्लृप्प्तान्प्राणान्दधाति ॥१२॥ द्वादश कल्पाञ्जुहोति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतत् क्लृप्प्तान्प्राणान्दधाति षड्वेव कल्पाञ्जुहोति प्प्राणा वै कल्पा ऽअमृतमु वै प्प्राणा ऽअमृतेनैवैनमेतदभिषिञ्चति ॥ १३ ॥ अथाह । 'स्तोमश्च[1] यजुश्च ऽऋक्च साम च बृहच्च रथन्तरञ्चे'ति त्रयी हैषा विद्यान्नं वै त्रयी विद्यान्नेनैवैनमेतत्प्रीणात्यथो ऽअन्नेनैवैनमेतदभिषिञ्चति 'स्वर्देवा ऽअगन्मामृता[2] ऽअभूमे'ति स्वर्हि गच्छत्यमृतो हि भवति 'प्प्रजापतेः[3] प्प्रजा ऽअभूमे'ति प्प्रजापतेर्हि प्प्रजा भवति 'वेट्[4] स्वाहे'ति वषट्कारो हैष परोक्षं यद्वेट्कारो वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते तदेनमेताभ्यामुभाभ्यां प्रीणाति वषट्कारेण च स्वाहाकारेण चाथो ऽएताभ्यामेवैनमेतदुभाभ्यामभिषिञ्चत्यत्र ताᳪं स्रुचमनुप्प्रास्यति यदत्राज्यलिप्तं तन्नेद्बहिर्द्धाग्नेरसदिति ॥ १४ ॥ तस्यै वा ऽएतस्यै वसोर्द्धारायै । द्यौरेवात्माभ्रमूधो विद्युत्स्तनो धारैव धारा दिवोऽधि गामागच्छति ॥ १५ ॥ तस्यै गौरेवात्मा । ऊध ऽएवोध स्तन स्तनो धारैव धारा गोरधि यजमानम् ॥ १६ ॥ तस्यै यजमान ऽएवात्मा । बाहुरूधः स्रुक्स्तनो धारैव धारा यजमानादधि देवान्देवेभ्योऽधि गां गोरधि यजमानं तदेतदनन्तमक्षय्यं देवाना-

---

(१) शु० य० सं० अ० १८ क० २९ । (२) शु० य० सं० अ० १८ क० २९ । (३) शु० य० सं० अ० १८ क० २९ । (४) शु० य० सं० अ० १८ क० २९ ।

मन्नं परिप्लवते स यो हैतदेवं वेदैवꣳ हैवास्यैतदनन्तमक्षय्यमन्नं भवत्यथातः सम्पदेव ॥ १७ ॥ तदाहुः । कथमस्यैषा वसोर्धारा संवत्सरमग्निमाप्नोति कथꣳ संवत्सरेणाग्निना सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येषा वसोर्धाराथ षडथ पञ्चत्रिꣳशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सरस्याहानि तत्संवत्सरस्याहान्याप्नोत्यथ यानि षट् षड् वा ऽऋतवस्तदृतूनाꣳ रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिꣳशत्स त्रयोदशो मासः स ऽआत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर ऽएवं पञ्चत्रिꣳशमेतावान्वै संवत्सर ऽएवमु हास्यैषा वसोर्धारा संवत्सरमग्निमाप्नोत्येवꣳ संवत्सरेणाग्निना सम्पद्यत ऽएतावत्य ऽउ वै शाण्डिलेऽग्नौ मध्यतो यजुष्मत्य ऽइष्टका ऽउपधीयन्तेऽग्नयो हैते पृथग्यदेता ऽइष्टका ऽएवमु हास्यैतेऽग्नयः पृथग्वसोर्धारयाभिहुता भवन्ति ॥ १८ ॥ तदाहुः । कथमस्यैषा वसोर्धारा महदुक्थमाप्नोति कथं महतोक्थेन सम्पद्यत ऽइत्येतस्या ऽएव वसोर्धारायै यानि नव प्रथमानि यजूꣳषि तत् त्रिवृच्छिरोऽथ याव्यष्टाचत्वारिꣳशत्तौ चतुर्विꣳशौ पक्षावथ यानि पञ्चविꣳशतिः स पञ्चविꣳश ऽआत्माथ यान्येकविꣳशतिस्तदेकविꣳशं पुच्छमथ यानि त्रयस्त्रिꣳशत्स वशोऽथ या ऽअशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्ध्वमशीतिभ्यो यदेवादो महत ऽउक्थस्योर्ध्वमशीतिभ्य ऽएतदस्य तदेवमु हास्यैषा

व्वसोर्द्धारा महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते ॥ १९ ॥ (C)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ वाजप्रसवीयहोमः, पार्थहोमः, यजमानाभिषेकश्च ]

अथातो * व्वाजप्रसवीयं जुहोति । अन्नं वै व्वाजोऽन्नप्प्रसवीयꣳ हास्यैतदन्नमेवास्म्मा ऽएतेन प्प्रसौति ॥ १ ॥ एतद्वा ऽएनं देवाः। एतेनान्नेन प्प्रीत्त्वैतैः कामैरभिषिच्च्यैतया व्वसोर्द्धारयाथैनमेतद्भूय ऽएवाप्प्रीणँस्तथैवैनमयमेतदेतेनान्नेन प्प्रीत्त्वैतैः कामैरभिषिच्च्यैतया व्वसोर्द्धारयाथैनमेतद्भूयऽएव प्प्रीणाति ॥ २ ॥ यद्वेवैतद्वाजप्प्रसवीयं जुहोति । अभिषेक ऽएवास्यैष ऽएतद्वा ऽएनं देवा ऽएतेनान्नेन प्प्रीत्त्वैतैः कामैरभिषिच्च्यैतया व्वसोर्द्धारयाथैनमेतद्भूयऽएवाब्भ्यषिञ्चँस्तथैवैनमयमेतदेतेनान्नेन प्प्रीत्त्वैतैः कामैरभिषिच्च्यैतया व्वसोर्द्धारयाथैनमेतद्भूय ऽएवाभिषिञ्चति ॥ ३ ॥ सर्व्वौषधं भवति । सर्व्वमेतदन्नं यत्त्सर्व्वौषधꣳ सर्व्वेणैवैनमेतदन्नेन प्प्रीणात्त्यथो सर्व्वेणैवैनमेतदन्नेनाभिषिञ्चति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेनौदुम्बरेण स्रुवेण तयोरुक्तो बन्धुश्चतुःस्रक्ती भवत-

---

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ५. २; कठ० १८. ११, १२; कपिष्ठ० २८. ११; २९. १; मै० सं० ११. १२. ६; तै० सं० ४. ७. ६, ९–११ ।

* 'वाजस्यनु' इत्यारभ्य 'पयः पृथिव्याम्' ( शु० य० सं० अ० १८. क० ३०-३६ ) इत्यन्तैर्मन्त्रैः प्रतिमन्त्रम्विहितो होमो वाजप्रसवीय इत्युच्यते ।

श्चतस्रो वै दिशः सर्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेन प्रीणा-
त्यथो सर्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेनाभिषिञ्चति ॥ ४ ॥
यद्वेवैतद्वाजप्रसवीयं जुहोति। एता ह देवताः सुता-
ऽएतेन सवेन येनैतत्सोष्यमाणो भवति ता ऽएवैतत्प्रीणाति
ता ऽअस्मा ऽइष्टाः प्रीता ऽएतꣳ सवमनुमन्यन्ते
ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स
राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निम-
भिषिञ्चत्यथ यदेताभ्यो देवताभ्यो जुहोति तदु तान्दे-
वान्प्रीणाति य ऽएतस्य सवस्येशते ॥ ५ ॥ अथ वा-
ऽएतत्पार्थान्यपि * जुहोति। एतद्वै देवा ऽअकामयन्ता-
त्रैव सर्वैः सवैः सूयेमहीति तेऽत्रैव सर्वैः सवैरसूयन्त
तथैवैतद्यजमानोऽत्रैव सर्वैः सवैः सूयते ॥ ६ ॥ तद्यानि
पार्थानि। तानि राजसूयस्य वाजप्रसवीयं तद्यत्तानि
जुहोति तद्राजसूयेन सूयतेऽथ यानि चतुर्दशोत्तराणि ततो
यानि सप्त पूर्वाणि तानि वाजपेयस्य वाजप्रसवीयं तद्यत्तानि
जुहोति तद्वाजपेयेन सूयतेऽथ यानि सप्तोत्तराणि तान्य-
ग्नेस्तद्यत्तानि जुहोति तदग्निसवेन † स्तूयते ॥ ७ ॥ स वै
राजसूयस्य पूर्वाणि जुहोति। अथ वाजपेयस्य राजा वै
राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन राज्यमु वा ऽअग्रेऽथ
साम्राज्यं तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेत प्रत्य-
वरोहः स यथा सम्राट् सन्राजा स्यात्तादृक्तत् ॥ ८ ॥
अग्नेरुत्तमानि जुहोति। सर्वे हैते स वा यदग्निसवः सर्वꣳ

* का० श्रौ० सू० १८. ५. १५।
† 'सूयते' इति 'ग' पुस्तके ।

हैतदग्निसवेन सुतो भवति राजा च सम्म्राट् च तस्म्मा-
दग्नेरुत्तमानि जुहोति ॥ ९ ॥ अथैनं कृष्णाजिनेऽभिषि-
ञ्चति। यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतदभिषिञ्चति
लोमतश्छन्दाᳬंसि वै लोमानि च्छन्दः स्वेवैनमेतदभिषि-
ञ्चत्युत्तरतस्तस्योपरि बन्धुः प्प्राचीनग्ग्रीवे तद्धि देवत्रा
॥ १० ॥ तद्ध हैके दक्षिणतोऽग्नेरभिषिञ्चन्ति। दक्षिणतो
वा ऽअन्नस्योपचारस्तदेनमन्नस्यार्द्धादभिषिञ्चाम ऽइति न
तथा कुर्य्यादेषा वै दिक्पितॄणां क्षिप्प्रे हैतां दिशं प्रैति यं
तथाभिषिञ्चन्ति ॥ ११ ॥ आहवनीय ऽउ हैकेऽभिषि-
ञ्चन्ति। स्वर्ग्गो वै लोक ऽआहवनीयस्तदेनᳬं स्वर्ग्गे
लोकेऽभिषिञ्चाम ऽइति न तथा कुर्य्याद्दैवो वा ऽअस्यैष
ऽआत्त्मा मानुषोऽयमनेन हास्य ते मर्त्येनात्त्मनैतं दैवमा-
त्त्मानमनुप्प्रसजन्ति यं तथाभिषिञ्चन्ति ॥ १२ ॥ उत्तरत-
ऽएवैनमभिषिञ्चेत्। एषा ह्योभयेषां देवमनुष्याणां दिग्यदु-
दीची प्प्राची स्वायामेवैनमेतद्दिश्यायत्ते प्रतिष्ठितमभि-
षिञ्चति न वै स्व ऽआयतने प्प्रतिष्ठितो रिष्यति ॥ १३ ॥
आसीनं भूतमभिषिञ्चेत्। आस्त ऽइव वै भूतस्तिष्ठन्तं
बुभूषन्तं तिष्ठतीव वै बुभूषन्वस्ताजिने पुष्टिकाममभिषि-
ञ्चेत्कृष्णाजिने ब्रह्मवर्च्चसकाममुभयोरुभयकामं तदुत्तरतः
पुच्छस्योत्तरलोम प्प्राचीनग्ग्रीवमुपस्तृणाति ॥ १४ ॥
आस्पृष्टं * परिश्रितः। तद्यत्कृष्णाजिनमास्पृष्टं परिश्रितो
भवति तथो हास्यैष दैव ऽआत्त्मा कृष्णाजिनेऽभिषिक्तो

* का० श्रौ० सू० १८. ५. ६।

भवत्यथ यदेनमन्वारब्धमाग्निं तिष्ठन्तमभिषिञ्चति तथो हैतस्माद्दैवादभिषेकान्न व्यवच्छिद्यते ॥ १४ ॥ अग्नौ † हुत्वाथैनमभिषिञ्चति। दैवो वा ऽअस्यैष ऽआत्मा मानुषोऽयं देवा ऽउ वा ऽअग्नेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथैनं तस्यैव परिशिष्टेनाभिषिञ्चत्यत्र तꣳ स्रुवमनुप्रास्यति ॥ १६ ॥ अथैनं दक्षिणं बाहुमनुपर्यावृत्याभिषिञ्चति। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामी'ति वाग्वै सरस्वती तस्या ऽइदꣳ सर्वं यन्त्रꣳ सवितृप्रसूत ऽएवैनमेतदनेन सर्वेण सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चत्यत्र तं चमसमनुप्रास्यति यदत्र विलिप्तं तन्नेद्बहिर्धाग्नेरसदिति ॥ १७ ॥ तं वै मध्ये पार्थानामभिषिञ्चति। संवत्सरो वै पार्थानि संवत्सरस्यैवैनमेतन्मध्यत ऽआदधाति षट् पुरस्ताज्जुहोति षडुपरिष्टात्षड्वा ऽऋतव ऽऋतुभिरेवैनमेतत्सुषुवाणमुभयतः परिगृह्णाति बृहस्पतिः पूर्वेषामुत्तमो भवतीन्द्र ऽउत्तरेषां प्रथमो ब्रह्म वै बृहस्पतिः क्षत्रमिन्द्रो ब्रह्मणा चैवैनमेतत्क्षत्रेण च सुषुवाणमुभयतः परिगृह्णाति ॥ १८ ॥ (D)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

† का० श्रौ० सू० १८. ५. ९।

(१) शु० य० सं० अ० १८ क० ३७।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ५ ३; कठ० सं० १८. १२; कपिष्ठ० २९. २; मै० सं० १२. १. १; तै० सं० ४. ७. १२।

[ राष्ट्रभृद्धोमः ]

अथातो राष्ट्रभृतो जुहोति । राजानो वै राष्ट्रभृतस्ते हि राष्ट्राणि बिभ्रत्येता ह देवताः सुता ऽएतेन सवेन येनैतत्सोष्यमाणो भवति ता ऽएवैतत्प्रीणाति ता ऽअस्मा-ऽइष्टाः प्रीता ऽएतꣳ सवमनुमन्यन्ते ताभिरनुमतः *स्तूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यद्राजानो राष्ट्राणि बिभ्रति राजान-ऽउ ऽएते देवास्तस्मादेता राष्ट्रभृतः ॥ १ ॥ यद्वेवैता † राष्ट्रभृतो जुहोति । प्रजापतेर्विस्रस्तान्मिथुनान्युदक्राम-न्गन्धर्वाप्सरसो भूत्वा तानि रथो भूत्वा पर्य्यगच्छत्तानि परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगत्या-त्मन्धत्त ऽआत्मन्कुरुते ॥ २ ॥ स यः स प्रजापतिर्व्यस्रꣳ सत । अयमेव स योऽयमग्निश्चीयतेऽथ यान्यस्मात्तानि मिथुनान्युदक्रामन्नेतास्ता देवता याभ्य ऽएतज्जुहोति ॥ ३ ॥ गन्धर्वाप्सरोभ्यो जुहोति । गन्धर्वाप्सरसो हि भूत्वोदक्रामन्नथो गन्धेन च वै रूपेण च गन्धर्वाप्सरस-श्चरन्ति तस्माद्यः कश्च मिथुनमुपप्रैति गन्धं चैव स रूपं च कामयते ॥ ४ ॥ मिथुनानि जुहोति । मिथुनाद्वा-ऽअधि प्रजातिर्यो वै प्रजायते स राष्ट्रं भवत्यराष्ट्रं वै स भवति यो न प्रजायते तद्यन्मिथुनानि राष्ट्रं बिभ्रति मिथुना ऽउ ऽएते देवास्तस्मादेता राष्ट्रभृत ऽआज्येन द्वादशगृहीतेन ता ऽउ द्वादशैवाहुतयो भवन्ति तस्योक्तो

* 'सूयते' इति 'ग-ज' पुस्तकयोः ।
† का० श्रौ० सू० १८. ५. १६ ।

बन्धुः ॥ ५ ॥ पुꣳसे पूर्वस्मै जुहोति। अथ स्त्रीभ्यः पुमाꣳसं तद्वीर्य्येणात्त्याद्दधात्त्येकस्मा ऽइव पुꣳसे जुहोति बह्वीभ्य ऽइव स्त्रीभ्यस्तस्मादप्प्येकस्य पुꣳसो बह्व्यो जाया भवन्त्युभाभ्यां वषट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः पुमाꣳसमेव तद्वीर्य्येणात्त्याद्दधाति ॥ ६ ॥ 'ऋताषाडृतधामे'[1]ति। * सत्त्यसात्त्सत्त्यधामेत्त्येत'दग्निर्गन्धर्वस्तस्यौषधयोऽप्प्सरस'[2] ऽइत्त्यग्निर्हि गन्धर्व ऽओषधिभिरप्प्सरोभिर्म्मिथुनेन सहोच्चक्राम 'मुदो[3] नामे'त्त्योषधयो वै मुद ऽओषधिभिर्हीदꣳ सर्वं मोदते 'स[4] न ऽइदं ब्रह्म क्षत्त्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहे'ति तस्योक्तो बन्धुः ॥ ७ ॥ 'सꣳहित'[5] ऽइति। असौ वाऽआदित्त्यः सꣳहित ऽएष ह्यहोरात्त्रे सन्दधाति 'विश्वसामे'[6]त्त्येष ह्येव सर्वꣳ साम 'सूर्य्यो गन्धर्वस्तस्य मरीचयोऽप्प्सरस'[7] ऽइति सूर्य्यो ह गन्धर्वो मरीचिभिरप्प्सरोभिर्म्मिथुनेन सहोच्चक्रा'मायुवो[8] नामे'त्त्यायुवाना ऽइव हि मरीचयः प्प्लवन्ते 'स[9] न ऽइदं ब्रह्म क्षत्त्रं पात्त्वि'ति तस्योक्तो बन्धुः ॥ ८ ॥ 'सुषुम्ण'[10] ऽइति। सुयज्ञिय ऽइत्त्येत'त्सूर्य्यरश्मि[11]रि'ति सूर्य्यस्येव हि चन्द्रमसो रश्मय'श्चन्द्रमा[12] गन्धर्वस्तस्य

(१) शु॰ य॰ सं॰ अ॰ १८ क॰ ३८।

* 'सत्त्यसाद्' इति 'ग' पुस्तके।

(२) शु॰ य॰ सं॰ अ॰ १८ क॰ ३८। (३) शु॰ य॰ सं॰ अ॰ १८ क॰ ३८।
(४) शु॰ य॰ सं॰ अ॰ १८ क॰ ३८। (५) शु॰ य॰ सं॰ अ॰ १८ क॰ ३९।
(६) शु॰ य॰ सं॰ अ॰ १८ क॰ ३९। (७) शु॰ य॰ सं॰ अ॰ १८ क॰ ३९।
(८) शु॰ य॰ सं॰ अ॰ १८ क॰ ३९। (९) शु॰ य॰ सं॰ अ॰ १८ क॰ ३९।
(१०) शु॰ य॰ सं॰ अ॰ १८ क॰ ४०। (११) शु॰ य॰ सं॰ अ॰ १८ क॰ ४०।
(१२) शु॰ य॰ सं॰ अ॰ १८ क॰ ४०।

नक्षत्राण्यप्सरस' ऽइति चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्म्मिथुनेन सहोच्चक्राम 'भेकुरयो नामे'ति भाकुरयो ह नामैते भाथं हि नक्षत्राणि कुर्वन्ति 'स[2] न ऽइदं ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥ ९ ॥ 'इषिर[3]' ऽइति । क्षिप्रऽइत्येत'द्विश्वव्व्यचा' ऽइत्येष हीदꣳ सर्वं व्व्यचः करोति 'व्वातो गन्धर्वस्तस्यापो ऽअप्सरस' ऽइति व्वातो ह गन्धर्वोऽद्भिरप्सरोभिर्म्मिथुनेन सहोच्चक्रा'मोर्ज्जो नामे'त्यापो वा ऽऊर्ज्जोऽद्भ्यो ह्यूर्ग्जायते 'स न ऽइदं ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥ १० ॥ 'भुज्युः सुपर्ण' ऽइति । यज्ञो वै भुज्युर्यज्ञो हि सर्वाणि भूतानि भुनक्ति 'यज्ञो गन्धर्वस्तस्य दक्षिणा ऽअप्सरस' ऽइति यज्ञो ह गन्धर्वो दक्षिणाभिरप्सरोभिर्म्मिथुनेन सहोच्चक्राम 'स्तावा नामे'ति दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञ स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयत ऽएव स 'स न[11] ऽइदं ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥११॥ [अर्धप्रपाठकः ४८॥]

'प्रजापतिर्विश्वकर्म्मे[12]'ति । प्रजापतिर्वै विश्वकर्म्मा स हीदꣳ सर्वमकरो'न्मनो गन्धर्वस्तस्य[13] ऽऋक्सामान्यप्सरस' ऽइति मनो ह गन्धर्व ऽऋक्सामैरप्सरोभिर्म्मिथुनेन सहोच्चक्रा-

(१) शु॰ य॰ सं॰ अ॰ १८ क॰ ४०। (२) शु॰ य॰ सं॰ अ॰ १८ क॰ ४०। (३) शु॰ य॰ सं॰ अ॰ १८ क॰ ४१। (४) शु॰ य॰ सं॰ अ॰ १८ क॰ ४१। (५) शु॰ य॰ सं॰ अ॰ १८ क॰ ४१। (६) शु॰ य॰ सं॰ अ॰ १८ क॰ ४१। (७) शु॰ य॰ सं॰ अ॰ १८ क॰ ४१। (८) शु॰ य॰ सं॰ अ॰ १८ क॰ ४२। (९) शु॰ य॰ सं॰ अ॰ १८ क॰ ४२। (१०) शु॰ य॰ सं॰ अ॰ १८ क॰ ४२। (११) शु॰ य॰ सं॰ अ॰ १८ क॰ ४२। (१२) शु॰ य॰ सं॰ अ॰ १८ क॰ ४३। (१३) शु॰ य॰ सं॰ अ॰ १८ क॰ ४३।

'मेष्टयो नाम'[1] इत्यृक्सामानि वा ऽएष्टय ऋक्सामैर्ह्याशासत- ऽइति नोऽस्त्वित्यर्थं नोऽस्त्विति 'स न ऽइदं ब्रह्म[2] क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥ १२ ॥ अथ रथशीर्षे जुहोति। एष वै स सव ऽएतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्न्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्न्यन्ते स राजा भवति न स यस्मै नाज्येन पञ्चगृहीतेन ता ऽउ * पञ्चैवाहुतयो हुता भवन्ति तस्योक्तो बन्धुः ॥१३॥ शीर्षतः। शीर्षतो वा ऽअभिषिच्च्यमानोऽभिषि- च्च्यत ऽउपरि धार्य्यमाण ऽउपरि हि स यमेतदभिषिञ्चति समानेन मन्त्रेण समानो हि स यमेतदभिषिञ्चति सर्वतः परिहारः सर्वत ऽएवैनमेतदभिषिञ्चति ॥ १४ ॥ यद्वेव रथशीर्षे † जुहोति । असौ वा ऽआदित्य ऽएष रथ- ऽएतद्वै तद्रूपं कृत्वा प्रजापतिरेतानि मिथुनानि परि- गृह्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगृह्यात्म- न्धत्त ऽआत्मन्कुरुत ऽउपरि धार्य्यमाण ऽउपरि हि स य ऽएतानि मिथुनानि परिगृह्यात्मन्नधत्ता- त्मन्नकुरुत समानेन मन्त्रेण समानो हि स य ऽएतानि मिथुनानि परिगृह्यात्मन्नधत्तात्मन्नकुरुत सर्वतः परिहारः सर्वतो हि स य ऽएतानि मिथुनानि परिगृह्यात्मन्नधत्ता- त्मन्नकुरुत ॥ १५ ॥ 'स[3] नो भुवनस्य पते प्रजापत' ऽइति। भुवनस्य ह्येष पतिः प्रजापतिर्यस्य त 'ऽउपरि[4] गृहा यस्य

(१) शु० य० सं० अ० १८ क० ४३। (२) शु० य० स० अ० १७ क० ४३।
* 'क' पुस्तके 'पञ्चैवाहुतयो भवन्ति' इत्येव लभ्यते।
† का० श्रौ० सू० १८. ५. १७।
(३) शु० य० सं० अ० १८ क० ४४। (४) शु० य० सं० अ० १८ क० ४४।

वेहे'त्युपरि च ह्येतस्य गृहा ऽइह चा'स्मै ब्रह्मणेऽस्मै क्षत्राये'त्ययं वा ऽअग्निर्ब्रह्म च क्षत्रं च 'महि शर्म्म यच्छ स्वाहे'ति महच्छर्म्म यच्छ स्वाहेत्त्येतत् ॥ १६ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ वातहोमादि ]

अथ † वातहोमाञ्जुहोति । इमे वै लोका ऽएषोऽग्निर्वायुर्वातहोमा ऽएषु तल्लोकेषु वायुं दधाति तस्मादयमेषु लोकेषु वायुः ॥ १ ॥ बाह्येनाग्निमाहरति । आप्तो वा ऽअस्य स वायुरूर्ध्व ऽएषु लोकेष्वथ य ऽइमाँल्लोकान्परेण वायुस्तमस्मिन्नेतद्दधाति ॥ २ ॥ बहिर्वेदेरियं वै वेदिः । आप्तो वा ऽअस्य स वायुरुर्वोऽस्यामथ य ऽइमां परेण वायुस्तमस्मिन्नेतद्दधाति ॥ ३ ॥ अञ्जलिना । न ह्येतस्येतीवाभिपत्तिरस्ति स्वाहाकारेण जुहोति ह्यधोऽधो धुरमसौ वा ऽआदित्य ऽएष रथोऽर्वाचीनं तदादित्याद्वायुं दधाति तस्मादेषोऽर्वाचीनमेवातः पवते ॥ ४ ॥ 'समुद्रोऽसि नभस्वानि'ति । असौ वै लोकः समुद्रो नभस्वान्'नार्द्रदानुरि'त्येष ह्यार्द्रं ददाति तद्योऽमुष्मिँल्लोके वायुस्तमस्मिन्नेतद्दधाति 'शम्भूर्म्मयोभूरभि मा वाहि स्वाहे'ति

( १ ) शु० य० सं० अ० १८ क० ४४ । ( २ ) शु० य० सं० अ० १८ क० ४४ ।

( A ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ६ १; कठ० १८. ४; कपिष्ठ० २९. ३; मै० सं० ११. १२. २; तै० सं० ३. ४, ७ ।

† का० श्रौ० सू० १८. ६. १ ।

( ३ ) शु० य० सं० अ० १८ क० ४५ । ( ४ ) शु० य० सं० अ० १८ क० ४५ ।
( ५ ) शु० य० सं० अ० १८ क० ४५ ।

शिवः स्योनोऽभि मा वाहीत्त्येतत् ॥ ५ ॥ 'मारुतोऽसि मरुतां गण' इति । अन्तरिक्षलोको वै मारुतो मरुतां गणस्तद्योऽन्तरिक्षलोके वायुस्तमस्मिमन्नेतद्दधाति 'शम्भूर्म्मयोभूरभि मा वाहि स्वाहे'ति शिवः स्योनोऽभि मा वाहीत्त्येतत् ॥ ६ ॥ 'अवस्यूरसि दुवस्वानि'ति । अयं वै लोकोऽवस्यूर्दुवस्वाँस्तद्योऽस्मिँल्लोके वायुस्तमस्मिमन्नेतद्दधाति 'शम्भूर्म्मयोभूरभि मा वाहि स्वाहे'ति शिवः स्योनोऽभि मा वाहीत्त्येतत् ॥ ७ ॥ त्रिभिर्ज्जुहोति । त्रय इमे लोका अथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैव तदेषु लोकेषु वायुं दधाति ॥ ८ ॥ यद्वेव वातहोमाञ्जुहोति । एतमेवैतद्रथं युनक्त्येतद्वै देवा एतं रथं सर्व्वेभ्यः कामेभ्योऽयुञ्जत युक्तेन समश्नवामहा इति तेन युक्तेन सर्वाङ्कामान्त्समाश्नुवत तथैवैतद्यजमान एतं रथं सर्वेभ्यः कामेभ्यो युङ्क्ते युक्तेन समश्नवा इति तेन युक्तेन सर्वाङ्कामान्त्समश्नुते ॥ ९ ॥ वातहोमैर्य्युनक्ति । प्राणा वै वातहोमाः प्राणैरेवैनमेतद्युनक्ति त्रिभिर्य्युनक्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तैरेवैनमेतद्युनक्त्यधोऽधो धुरमधोऽधो हि धुरं योग्यं युञ्जन्ति हस्ताभ्याँ हस्ताभ्याँ हि योग्यं युञ्जन्ति विपरिक्रामं विपरिक्रामं हि योग्यं युञ्जन्ति ॥ १० ॥ स दक्षिणायुग्यमेवाग्रे युनक्ति । अथ सव्यायुग्यमथ दक्षिणाप्रष्टिमेवं देवत्रेतरथा मानुषे तं नाभियुञ्ज्या-

(१) शु० य० सं० अ० १८ क० ४५। (२) शु० य० सं० अ० १८ क० ४५। (३) शु० य० सं० अ० १८ क० ४५। (४) शु० य० सं० अ० १८ क० ४५।

न्नेद्युक्तमभियुनजानीति व्वाहनं तु दद्याद्युक्तेन भुनजाऽइति तमुपरुर्ष्येव हरन्त्याद्ध्वरुर्योरावसथादुपरि ह्येष तमद्ध्वरुर्य्यवे ददाति स हि तेन करोति तं तु दक्षिणानां कालेऽनुदिशेत् ॥ ११ ॥ अथ रुङ्मतीर्ज्जुहोति *। अत्रैष सर्व्वोऽग्निः संस्कृतः स ऽएषोऽत्र रुचमैच्छत्तस्मिन्देवा ऽएताभी रुङ्मतीभी रुचमदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १२ ॥ यद्वेव रुङ्मतीर्ज्जुहोति। प्रजापतेर्व्विस्रस्ताद्रुगुदक्रामत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेताभी रुङ्मतीभी रुचमदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १३ ॥ 'याऽस्ते ऽअग्ने सूर्य्ये रुचः। या वो देवाः सूर्य्ये रुचो, रुचं नो धेहि ब्राह्मणेष्वि'ति रुचः रुचमित्यमृतत्त्वं व्वै रुगमृतत्त्वमेवास्मिन्नेतद्दधाति तिस्र ऽआहुतीर्ज्जुहोति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रुचं दधाति ॥ १४ ॥ अथ व्वारुणीं जुहोति। अत्रैष सर्व्वोऽग्निः संस्कृतः स ऽएषोऽत्र व्वरुणो देवता तस्मा ऽएतद्धविर्ज्जुहोति तदेनः हविषा देवतां करोति यस्यै वै देवतायै हविर्ग्गृह्यते सा देवता न सा यस्यै न गृह्यते व्वारुण्यर्चा स्वेनैवैनमेतदात्मना स्वया देवतया प्प्रीणाति ॥ १५ ॥ यद्वेव व्वारुणीं जुहोति। प्रजापतेर्व्विस्रस्ता-† द्वीर्य्यमुदक्रामत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेतया व्वीर्य्यमदधुस्तथैवास्मिन्नयमेतद्दधाति व्वारुण्यर्चा क्षत्रं वै व्वरुणो व्वीर्य्यं व्वै क्षत्रं व्वीर्य्येणैवास्मिन्नेतद्वीर्य्यं दधाति ॥१६॥ 'तत्त्वा

* अत्र शतम् ५१०० ॥

(१) शु० य० सं० अ० १८ क० ४६-४८। (२) शु० य० सं० अ० १८ क० ४९।

† "व्वीर्यमु" इति क' पुस्तके।

षामि ब्रह्मणा वन्दमान' ऽइति। तत्त्वा यामि ब्रह्मणा वन्दमान-ऽइत्येत'त्तदाशास्ते यजमानो हविर्भिरि'ति तदयमाशास्ते यजमानो हविर्भिरित्त्येत'दहेडमानो वरुणेह बोधी'त्त्य-क्रुध्यन्नो वरुणेह बोधीत्येत'दुरुशꣳस मा न ऽआयुः प्प्रमोषीरि'त्त्यात्मनः परिदां वदते ॥ १७ ॥ अथार्क्काश्वमे-धयोः सन्ततीर्जुहोति । अयं वा ऽअग्निरर्क्कोऽसावादित्त्योऽ-श्वमेधस्तौ सृष्टौ नानैवास्तां तौ देवा ऽएताभिराहु तिभिः समतन्न्वन्त्समदधुस्तथैवैनावयमेतदेताभिराहुतिभिः सन्तनोति सन्दधाति ॥ १८ ॥ 'स्वर्ण्ण घर्म्मः स्वाहे'ति । असौ वा ऽआदित्त्यो घर्म्मोऽमुं तदादित्त्यमस्मिन्नग्नौ प्प्रति-ष्ठापयति ॥ १९ ॥ 'स्वर्ण्णार्क्कः स्वाहे'ति । अयमग्निरर्क्क ऽइमं तदग्निममुष्मिन्नादित्त्ये प्प्रतिष्ठापयति ॥ २० ॥ 'स्वर्ण्ण शुक्रः स्वाहे'ति । असौ वा ऽआदित्त्यः शुक्रस्तं पुनरमुत्र दधाति ॥ २१ ॥ 'स्वर्ण्ण ज्ज्योतिः स्वाहे'ति । अयमग्नि-र्ज्ज्योतिस्तं पुनरिह दधाति ॥२२॥ 'स्वर्ण्ण सूर्य्यः स्वाहे'ति । असौ वा ऽआदित्त्यः सूर्य्योऽमुं तदादित्त्यमस्य सर्व्वस्योत्तमं दधाति तस्म्मादेषोऽस्य सर्व्वस्योत्तमः ॥ २३ ॥ पञ्चैता-ऽआहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्त्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवैनावेतत्स-न्तनोति सन्दधाति ॥ २४ ॥ यद्वेवाह । 'स्वर्ण्ण घर्म्मः स्वाहा

(१) शु० य० सं० अ० १८ क० ४९ । (२) शु० य० सं० अ० १८ क० ४९ । (३) शु० य० सं० अ० १८ क० ४९ । (४) शु० य० सं० अ० १८ क० ५० । (५) शु० य० सं० अ० १८ क० ५० । (६) शु० य० सं० अ० १८ क० ५० । (७) शु० य० सं० अ० १८ क० ५० । (८) शु० य० सं० अ० १८ क० ५० ।

स्वर्णार्कः स्वाहे'त्यस्यैवैतान्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो ऽएतानेवैतदग्नीन-स्मिँल्लोके नामग्राहं दधाति ॥ २५ ॥ पञ्चैता ऽआहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ २६ ॥ अथाऽत ऽआहुतीनामेवावपनस्य । यां काञ्च ब्राह्मणवतीमाहुतिं विद्यात्तामेतस्मिन्काले जुहुयात्कामेभ्यो वा ऽएतः रथं रुयुङ्क्ते तद्यां काञ्चाम्राहुतिं जुहोत्यासां ताः सतीञ्जुहोति ॥ २७ ॥ तदाहुः । न जुहुयान्नेदतिरेचयानीति स वै जुहुयादेव कामेभ्यो वा ऽएता ऽआहुतयो हूयन्ते न वै कामानामतिरिक्तमस्ति ॥ २८ ॥ (B)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ धिष्ण्यनिवापः ]

अथ प्रत्येत्य * धिष्ण्यानां काले धिष्ण्यान्निवपति । अग्नय ऽएते यद्धिष्ण्या ऽअग्नीनेवैतच्चिनोति ता ऽएता विशः क्षत्रमयमग्निश्चितः क्षत्रं च तद्विशं च करोत्यमुं पूर्वं चिनोत्यथेमान् क्षत्रं तत्कृत्वा विशं करोति ॥ १ ॥ एक ऽएष भवति । एकस्थं तत्क्षत्रमेकस्थाꣳ श्रियं

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११, ६. २; कठ० १८. १४, १५, १८; कपिष्ठ० २९. ३, ४; मै० सं० ११. १२. ३; तै० सं० ४. ७. १२, १३।

* का० श्रौ० सू० १८. ६. ७।

करोति बहुव ऽइतरे विशि तद्भूमानं दधाति ॥ २ ॥ पञ्चचितिक ऽएष भवति । एकचितिका ऽइतरे क्षत्रं तद्वीर्य्येणात्यादधाति क्षत्रं विशो वीर्य्यवत्तरं करोत्यूर्द्ध्वमेतं चिनोति क्षत्रं तदूर्द्ध्वं चितिभिश्चिनोति तिरश्च ऽइतरान्क्षत्राय तद्विशमधस्तादुप*निखादिनीं करोति ॥ ३ ॥ ऽउभाभ्यां यजुष्मत्या च लोकम्पृणया चैतं चिनोति । लोकम्पृणयैवेमाङ्क्षत्रमेव तद्वीर्य्येणात्यादधाति क्षत्रं विशो वीर्य्यवत्तरं करोति विशं क्षत्रादवीर्य्यतराम् ॥ ४ ॥ स यदिमाँल्लोकम्पृणयैव चिनोति क्षत्रं । वै लोकम्पृणा क्षत्रं तद्विश्यत्तारं दधात्युभयाँश्चिनोत्यङ्गरस्य चाग्नेश्चाङ्गरस्य पूर्वानथाग्नेस्तस्योक्तो बन्धुर्य्य—थमेवाङ्गरधिष्ण्यं निवपति तं—तं चिनोत्याग्नीध्रीयं प्रथमं चिनोति तꣳ हि प्प्रथमं निवपति दक्षिणत ऽउदङ्ङासीनस्तस्योक्तो बन्धुः ॥ ५ ॥ तस्मिन्नष्टाविष्टका ऽउपदधाति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति तासामश्मा पृश्निर्नवमो नव वै प्प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति यश्चितेऽग्निर्न्निधीयते स दशमो दश वै प्प्राणा मध्यमाग्नीध्रं मध्यतस्तत्प्राणान्दधाति मध्ये ह वा ऽएतत्प्राणाः सन्त ऽइति चेति चात्मानमनुव्युच्चरन्ति ॥ ६ ॥ एकविꣳशतिꣳ होत्रीय ऽउपदधाति । एकविꣳशतिर्वैव परिश्रितस्तस्योक्तो बन्धुरेकादश ब्राह्मणाच्छꣳसिय ऽएकादशाक्षरा वै

* 'निषादिनीं' इति 'ग' पुस्तके ।

त्रिष्टुप्त्रैष्टुभ ऽइन्द्र ऽऐन्द्रो ब्राह्मणाच्छꣳस्यष्टावष्टा-वितरेषु तस्योक्तो बन्धुः ॥७॥ षण्णमार्जालीये। षड्वा ऽऋतव-ऽऋतवः पितरस्तद्धै तमृतवः पितरो दक्षिणतः पर्य्यूहिरे स ऽएषामेष दक्षिणतः स वा ऽइतीमसुपदधातीती-मानित्त्यसुं विशं तत्क्षत्रमभिसम्मुखां करोति ॥ ८ ॥ अथैनान्परिश्रिद्भिः परिश्रयति। आपो वै परिश्रितोऽ-द्भिरेवैनाँस्तत्परितनोति स वै पर्य्येव निदधाति क्षत्रꣳ हैता ऽअपां याः खातेन यन्त्यथ हैता विशो यानीमानि वृथोदकानि स यदमुं खातेन परिश्रयति क्षत्रे तत्क्षत्रं दधाति क्षत्रं क्षत्रेण परिश्रयत्यथ यदिमान्पर्य्येव निदधाति विशि तद्विशं दधाति विशा विशं परिश्रयति तेषां वै यावत्य ऽएव यजुष्मत्त्यस्तावत्यः परिश्रितो यावत्यो ह्येवामुष्य यजुष्मत्त्यस्तावत्यः परिश्रितः क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति ॥ ९ ॥ अथैषु पुरीषं निवपति। तस्योक्तो बन्धुस्तूष्णीमनिरुक्ता हि विडथा-ग्नीषोमीयस्य पशुपुरोडाशमनुदिशामवेष्टीर्न्निर्वपति दिश-ऽएषोऽग्निस्ताभ्य ऽएतानि हवीꣳषि निर्वपति तदेना हविषा देवतां करोति यस्यै वै देवतायै हविर्ग्गृह्यते सा देवता न सा यस्यै न गृह्यते पञ्च भवन्ति पञ्च हि दिशः ॥ १० ॥ तदाहुः। दशहविषमेवैतामिष्टिं निर्वपेत्सा सर्वस्तोमा सर्वपृष्ठा सर्वाणि च्छन्दाꣳसि सर्वा दिशः सर्वे ऽऋतवः सर्वम्वेतदयमग्निस्तदेनꣳ हविषा देवतां करोति यस्यै वै देवतायै हविर्ग्गृह्यते सा देवता न सा

यस्यै न गृह्यते दश भवन्ति दशाक्षरा विराड्विराडग्निर्दश दिशो-दिशोऽग्निर्दश प्राणाः प्राणा ऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ११ ॥ तत् वै देवस्वामेव । एतानि हवीᳬषि निर्वपेदेता ह देवताः सुता ऽएतेन सवेन यैनैतत्सोष्यमाणो भवति ता ऽएवैतत्प्रीणाति ता ऽअस्मा ऽइष्टाः प्रीता ऽएतᳬ सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदेता देवताः सुता ऽएतेन सवेन यद्वैनमेता देवता ऽएतस्मै सवाय सुवते तस्मादेता देवस्वः ॥ १२ ॥ ता वै द्विनाम्न्यो भवन्ति । द्विनामा वै सवेन सुतो भवति यस्मै वै सवाय सूयते येन वा सवेन सूयते तदस्य द्वितीयं नाम ॥ १३ ॥ अष्टौ भवन्ति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ १४ ॥ तदाहुः । नैतानि हवीᳬषि निर्वपेन्नेदतिरेचयानीति तानि वै निर्वपेदेव कामेभ्यो वा ऽएतानि हवीᳬषि निरुप्यन्ते न वै कामानामतिरिक्तमस्ति यद्वै किञ्च पशुपुरोडाशमनु हविर्निरुप्यते पशावेव स मध्यतो मेधो धीयत ऽउभयानि निर्वपत्यग्नेरस्य चाग्नेश्चाग्नेरस्य पूर्वमथाग्नेस्तस्योक्तो बन्धुरुच्चैः पशुपुरोडाशो भवत्युपाᳬश्वेतानीष्टिर्ह्यनुब्रूहि प्रेष्येति पशुपुरोडाशस्याहानुब्रूहि यजेत्येतेषामिष्टिर्हि समानः स्विष्टकृत्समानीडेष्टा दे-

(१) शु० य० सं० अ० ९ क० ३९-४०।

वृता भवन्त्यसमवहितथ्ठं स्विष्टकृते ॥ १५ ॥ अथैनं पूर्वाभिषेकेणाभिमृशति । 'सविता त्वा सवानाथ्ठं सुवता-मेष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाथ्ठं राजे'ति ब्राह्मणानेवापोद्धरत्यनाद्यान्करोति ॥ १६ ॥ (C)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
काण्डिकासंख्या ॥ ९७ ॥

[ अग्नियोजनं कर्म, अग्निविमोचनश्च ]

अथ प्प्रातः * प्प्रातरनुवाकमुपाकरिष्यन् । अग्निं र्युनक्ति युक्तेन समश्नवा ऽइति तेन युक्तेन सर्वान्कामा-न्त्समश्नुते तं वै पुरस्तात्सर्वस्य कर्म्मणो युनक्ति तद्य-त्किञ्चात ऽऊर्द्ध्वं क्रियते युक्ते तत्सर्वथ्ठं समाधीयते ॥ १ ॥ परिधिषु युनक्ति । अग्नय ऽएते यत्परिधयोऽग्निभिरेव तदग्निं र्युनक्ति ॥ २ ॥ स मद्ध्यमं परिधिमुपस्पृश्य । एतद्यजुर्ज्जप'त्यग्निं र्युनज्मि शवसा घृतेने'ति बलं वै शवोऽग्निं र्युनज्मि बलेन च घृतेन चेत्येत'द्दिव्यथ्ठं सुपर्ण्णं व्वयसा बृहन्तमि'ति दिव्यो वा ऽएष सुपर्ण्णो व्वयसो बृहन्धूमेन 'तेन व्वयं गमेम ब्रध्नस्य विष्टपथ्ठं स्वो रुहाणा ऽअधि नाकमुत्तममि'ति स्वर्ग्गो वै लोको

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा-- का० श० ११. ६. ३ ।

* का० श्रौ० सू० १८. ६. १६ ।

(१) शु० य० सं० अ० १८ क० ५१ । (२) शु० य० सं० अ० १८ क ५१ ।
(३) शु० य० सं० अ० १८ क० ५१ ।

नाकस्तेन वयं गमेम ब्रध्नस्य विष्टपꣳ स्वर्गं लोकꣳ रोहन्तोऽधिनाकमुत्तममित्येतत् ॥ ३ ॥ अथ दक्षिणे । 'इमौ ते[1] पक्षावजरौ पतत्रिणौ याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्ने । ताभ्यां पतेम सुकृतामु लोकं यत्र ऽऋषयो जग्मुः प्रथमजाः पुराणा' ऽइत्यमूनेतदृषीनाह ॥ ४ ॥ अथोत्तरे । 'इन्दुर्दक्षः[2] श्येन ऽऋतावा हिरण्यपक्षः शकुनो भुरण्युरि'त्यमृतं वै हिरण्यममृतपक्षः शकुनो भर्त्तेत्येत'न्महान्त्सधस्थे[3] ध्रुव ऽआ निषत्तो नमस्तेऽअस्तु मा मा हिꣳसी'रित्यात्मनः परिदां वदते ॥ ५ ॥ तद्यन्मध्यमं यजुः । स ऽआत्माथ ये ऽअभितस्तौ पक्षौ तस्मात्ते पक्षवती भवतः पक्षौ हि तौ ॥ ६ ॥ त्रिभिर्युनक्ति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्युनक्ति ॥ ७ ॥ अथ राजानमभिषुत्याग्नौ जुहोति । एष वै स सव ऽएतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निमभिषिञ्चति सोऽस्यैष दैव ऽआत्मा सोमाभिषिक्तो भवत्यमृताभिषिक्तोऽथ भक्षयति तदात्मानमभिषिञ्चति सोऽस्यायमात्मा सोमाभिषिक्तो भवत्यमृताभिषिक्तः ॥ ८ ॥ अग्नौ हुत्वाथ भक्षयति । दैवो वा ऽअस्यैष ऽआत्मा मानुषोऽयं देवा ऽउ वा-

(१) शु० य० सं० अ० १८ क० ५२। (२) शु० य० सं० अ० १८ क० ५३। (३) शु० य० सं० अ० १८ क० ५३।

ऽअग्नेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथ भक्षयति ॥ ९ ॥ अथैनं विमुञ्चति । आप्त्वा तं कामं यस्मै कामायैनं युङ्क्ते यज्ञायज्ञियᳪ स्तोत्रमुपाकरिष्यन्त्स्वर्गो वै लोको यज्ञायज्ञियमेतस्य वै गत्या ऽएनं युङ्क्ते तदाप्त्वा तं कामं यस्मै कामायैनं युङ्क्ते ॥१०॥ तं वै पुरस्तात्स्तोत्रस्य विमुञ्चति । स यदुपरिष्टात्स्तोत्रस्य विमुञ्चेत्पराङ् हैतᳬ स्वर्गं लोकमतिप्रणश्येदथ यत्पुरस्तात्स्तोत्रस्य विमुञ्चति तत्सम्प्रति स्वर्गं लोकमाप्त्वा विमुञ्चति ॥ ११ ॥ परिधिषु विमुञ्चति । परिधिषु ह्येनं युनक्ति यत्र वाव योग्यं युञ्जन्ति तदेव तद्विमुञ्चन्ति ॥१२॥ स सन्ध्योरुपस्पृश्य । *एते यजुषी जपति तथा द्वे यजुषी त्रीन्परिधीननुविभवतो 'दिवो[1] मूर्द्धासि पृथिव्या नाभिरि'ति दक्षिणे 'विश्वस्य[2] मूर्द्धन्नधि तिष्ठसि श्रित' ऽइत्युत्तरे मूर्द्धवतीभ्यां मूर्द्धा ह्यस्यैषोऽप्सुमतीभ्यामन्नेरेतद्वैश्वानरस्य स्तोत्रं यज्ञायज्ञियᳬ शान्तिर्वा ऽआपस्तस्मादप्सुमतीभ्याम् ॥ १३ ॥ द्वाभ्यां विमुञ्चति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्विमुञ्चति त्रिभिर्युनक्ति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १४ ॥ तᳬ हैके । प्रायणीय ऽएवातिरात्रे युञ्जन्त्युदयनीये विमुञ्चन्ति सथᳪस्त्थारूपं वा ऽएतद्यद्विमोचनं किं पुरा

---

* 'एने यजुषी' इति 'ग–ज' पुस्तकयोः ।

(१) शु० य० सं० अ० १८ कं० ५४ । (२) शु० य० सं० अ० १८ कं० ५५ ।

सꣳस्थायै सꣳस्थारूपं कुर्व्वामेति न तथा कुर्य्यादुहरहर्व्वा-ऽएष यज्ञस्तायतेऽहरहः सन्तिष्ठतेऽहरहरेनꣳ स्वर्ग्गस्य लोकस्य गत्यै युङ्क्तेऽहरहरेनेन स्वर्ग्गं लोकं गच्छति तस्मादुहरहरेव युञ्ज्यादुहरहर्व्विमुञ्चेत् ॥ १५ ॥ अथो यथा प्प्रायणीयेऽतिरात्रे । सामिधेनीरनूच्य ब्रूयादुदयनीय-ऽएवातोऽनुवक्तास्मीति तादृक्तत्तस्मादुहरहरेव युञ्ज्यादुहर-हर्व्विमुञ्चेत् ॥ १६ ॥ तद्धैतच्छाण्डिल्यः । कङ्कतीयेभ्योऽ-हरहः कर्म्म प्प्रदिश्श्य प्प्रवव्राजाहरहरेव वो युनजान्-हरहर्व्विमुञ्चानिति तस्मादुहरहरेव युञ्ज्यादुहरहर्व्वि-मुञ्चेत् ॥ १७ ॥ (D)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

[ पयोव्रतादिमीमांसा ]

अथातः पयोव्रततायै । पयोव्रतो दीक्षितः स्याद्दे-वेभ्यो ह वा ऽअमृतमपचक्राम ॥ १ ॥ ते होचुः । श्रमेण तपसेदमन्विच्छामेति तच्छ्रमेण तपसान्वैच्छꣳस्ते दीक्षित्त्वा पयोव्रता ऽअभवन्नेतद्वै तपो यो दीक्षित्त्वा पयोव्रतोऽसत्तस्य घोषमाशुश्श्रुवुः ॥ २ ॥ ते होचुः । नेदीयो वै भवति भूयस्तप ऽउपायामेति ते त्रीन्स्त-नानुपेयुस्तत्परादद्दृशुः ॥ ३ ॥ ते होचुः । नेदीयो

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ६. ४; कठ० १८. १४, १५, १८; कपिष्ठ० २९. ३. ४; मै० सं० ११. १२. ३; तै० सं० ४. ७. १२, १३ ।

वै भवति भूयस्तप ऽउपायामेति ते द्वौ स्तना ऽउपेयुस्त-न्नेदीयसः परादद‍ृशुः ॥ ४ ॥ ते होचुः । नेदीयो वै भवति भूयस्तप ऽउपायामेति त ऽएकꣳ स्तनमुपेयुस्तदु-धिजगाम न त्वभिपत्तुꣳ शेकुः ॥ ५ ॥ ते होचुः । अधि वा ऽअगन्न त्वभिपत्तुꣳ शक्नुमः सर्वं तप ऽउपायामेति त ऽउपवसथेऽनाशकमुपेयुरेतद्वै सर्वं तपो यदनाशक-स्तस्मादुपवसथे नाश्नीयात् ॥ ६ ॥ तत्प्रातरभिपद्य । अभिषुत्याग्नावजुहवुस्तदग्नावमृतमदधुः सर्वेषामु हैष देवा-नामात्मा यदग्निस्तद्यदग्नावमृतमदधुस्तदात्मन्नमृतमदधत त-तो देवा ऽअमृता ऽअभवन् ॥ ७ ॥ तद्यत्तदमृतꣳ सोमः सः । तदद्यापि यजमानः श्रमेण तपसान्विच्छति स दीक्षित्वा पयोव्रतो भवत्येतद्वै तपो यो दीक्षित्वा पयो-व्रतोऽसत्तस्य घोषमाशृणोतीत्यहे क्रय ऽइति ॥ ८ ॥ स त्रीन्स्तनानुपैति । तत्परापश्यति स द्वौ स्तना ऽउपैति तन्नेदीयसः परापश्यति स ऽएकꣳ स्तनमुपैति तदधि-गच्छति न त्वभिपत्तुꣳ शक्नोति स ऽउपवसथेऽनाश-कमुपैत्येतद्वै सर्वं तपो यदनाशकस्तस्मादुपवसथे नाश्नी-यात् ॥ ९ ॥ तत्प्रातरभिपद्य । अभिषुत्याग्नौ जुहोति तदग्नावमृतं दधात्यथ भक्षयति तदात्मन्नमृतं धत्ते सोऽ-मृतो भवत्येतद्वै मनुष्यस्यामृतत्वं यत्सर्वमायुरेति तथो हानेनात्मना सर्वमायुरेति ॥ १० ॥ अग्नौ हुत्वाथ भक्ष-यति । दैवो वा ऽअस्यैष ऽआत्मा मानुषोऽयं देवा ऽउ वा ऽअग्नेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथ भक्षयति

॥ ११ ॥ अथातः समिष्टयजुषामेव मीमाᳫंसा । देवा-श्चासुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपे-युर्वाचमेव सत्यानृते सत्यं चैवानृतं च त ऽउभय ऽएव सत्यमवदन्नुभयेऽनृतं ते ह सदृशं वदन्तः सदृशा ऽएवासुः ॥ १२ ॥ ते देवा ऽउत्सृ*ज्यानृतᳫं । सत्यमन्वालेभिरेऽसुरा ऽउ होत्सृज्य सत्यमनृतमन्वालेभिरे ॥ १३ ॥ तद्धेदᳫं सत्यमीक्षाञ्चक्रे । यदसुरेष्वास देवा वा ऽउत्सृज्यानृतᳫं सत्यमन्वालप्सत हन्त तदयानीति तद्देवानाजगाम ॥ १४ ॥ अनृतमु हेक्षाञ्चक्रे । यद्देवेष्वासासुरा वा-ऽउत्सृज्य सत्यमनृतमन्वालप्सत हन्त तदयानीति तदसुरानाजगाम ॥ १५ ॥ ते देवाः । सर्वᳫं सत्यमव-दन्त्सर्वमसुरा ऽअनृतं ते देवा ऽआसक्ति सत्यं वदन्त-ऽऐषावीरतरा ऽइवासुरनाढ्यतरा ऽइव तस्मादु हैतद्य-ऽआसक्ति सत्यं वदत्यैषावीरतर ऽइवैव भवत्यनाढ्यतर-ऽइव स ह त्वेवान्ततो भवति देवा ह्येवान्ततो भवन् ॥ १६ ॥ अथ हासुराः । आसक्त्यनृतं वदन्त ऽऊष-ऽइव पिपिसुराढ्या ऽइवासुस्तस्मादु हैतद्य ऽआसक्त्यनृतं वदत्यूष ऽइवैव पिस्यत्याढ्य ऽइव भवति परा ह त्वेवा-न्ततो भवति परा ह्यसुरा ऽअभवन् ॥ १७ ॥ तद्यत्तत्स-त्यम् । त्रयी सा विद्या ते देवा ऽअब्रुवन्यज्ञं कृत्वेदᳫं सत्यं तनवामहा ऽइति ॥ १८ ॥ ते दीक्षणीयान्निरवपन् । तदु हासुरा ऽअनुबुबुधिरे यज्ञं वै कृत्वा तद्देवाः सत्यं

* 'ज्यानृतम्' इति 'ग' पुस्तके लभ्यते ।

तन्वते प्प्रेत तदाहरिष्यामो यदस्स्माकं तत्रेति तस्य समिष्टयजुरहुतमासाथाजग्मुस्तस्स्मात्तस्य यज्ञस्य समिष्टयजुर्न्न जुह्वति ते देवा ऽअसुरान्प्रतिदृश्श्य समुल्लुप्प्य यज्ञमन्न्यत्कर्त्तुं दध्रिरेऽन्न्यद्वै कुर्वन्तीति पुनः प्प्रेयुः ॥ १९ ॥ तेषु प्प्रेतेषु । प्रायणीयं निरवपँस्तदु हासुरा ऽअन्न्वेव बुबुधिरे तस्य * शंय्योरुक्तमासाथाजग्मुस्तस्स्मात्स यज्ञः शंय्य्वन्तस्ते देवा ऽअसुरान्न्प्रतिदृश्श्य समुल्लुप्प्य यज्ञमन्न्यदेव कर्त्तुं दध्रिरेऽन्न्यद्वै कुर्वन्तीति पुनरेव प्प्रेयुः ॥ २० ॥ तेषु प्प्रेतेषु । राजानं क्रीत्त्वा पर्य्युह्याथास्स्माऽआतिथ्थ्यꣳ हविर्न्निरवपँस्तदु हासुरा ऽअन्न्वेव बुबुधिरे तस्येडोपहूतासाथाजग्मुस्तस्स्मात्स यज्ञ ऽइडान्तस्ते देवाऽअसुरान्प्रतिदृश्श्य समुल्लुप्प्य यज्ञमन्न्यदेव कर्त्तुं दध्रिरेऽन्न्यद्वै कुर्वन्तीति पुनरेव प्प्रेयुः ॥ २१ ॥ तेषु प्प्रेतेषु । उपसदोऽतन्न्वत ते तिस्र ऽएव सामिधेनीरनूच्च्य देवता ऽएवायजन्न प्प्रयाजान्नानुयाजानुभयतो यज्ञस्योत्सादयन्न्भूयिष्ठꣳ हि तत्रात्त्वरन्त तस्स्मादुपसत्सु तिस्रऽएव सामिधेनीरनूच्च्य देवता ऽएव यजति न प्प्रयाजान्नानुयाजानुभयतो यज्ञस्योत्त्सादयति ॥ २२ ॥ त ऽउपवसथेऽग्नीषोमीयं पशुमालेभिरे । तदु हासुरा ऽअन्न्वेव बुबुधिरे तस्य समिष्टयजूꣳष्यहुतान्न्यासुरथाजग्मुस्तस्स्मात्तस्य पशोः समिष्टयजूꣳषि न जुह्वति ते देवाऽअसुरान्न्प्रतिदृश्श्य समुल्लुप्प्य यज्ञमन्न्यदेव कर्त्तुं दध्रिरेऽ-

* 'शम्म्योरुक्तम्' इति 'ग-ज' पुस्तकयोर्दृश्यते ।

न्न्यद्वै कुर्वन्तीति पुनरेव प्प्रेयुः ॥ २३ ॥ तेषु प्प्रेतेषु । प्रातः-प्प्रातः सवनमतन्न्वत तदु हासुरा ऽअन्न्वेव बुबुधिरे तस्यैतावत्कृतमास यावत्प्रातःसवनमथाजग्मुस्ते देवा-ऽअसुरान्प्रति दृश्श्य समुल्लुप्प्य यज्ञमन्न्यदेव कर्त्तुं दध्रिरेऽन्न्यद्वै कुर्वन्तीति पुनरेव प्प्रेयुः ॥ २४ ॥ तेषु प्प्रेतेषु । माध्यन्दिनः सवनमतन्न्वत तदु हासुरा ऽअन्न्वेव बुबुधिरे तस्यैतावत्कृतमास यावन्माध्यन्दिनमथाजग्मुस्ते देवा ऽअसुरान्प्रतिदृश्श्य समुल्लुप्प्य यज्ञमन्न्यदेव कर्त्तुं दध्रिरेऽन्न्यद्वै कुर्वन्तीति पुनरेव प्प्रेयुः ॥ २५ ॥ तेषु प्प्रेतेषु । सवनीयेन पशुनाचरँस्तदु हासुरा ऽअन्न्वेव बुबुधिरे तस्यैतावत्कृतमास यावदेतस्य पशोः क्रियतेऽथाजग्मुस्ते देवा ऽअसुरान्प्रतिदृश्श्य समुल्लुप्प्य यज्ञमन्न्यदेव कर्त्तुं दध्रिरेऽन्न्यद्वै कुर्वन्तीति पुनरेव प्प्रेयुः ॥ २६ ॥ तेषु प्प्रेतेषु । तृतीयसवनमतन्न्वत तत्समस्त्था*पयन्न्युत्समस्त्थापयँस्तत्सर्वः सत्त्यमाप्नुवँस्ततोऽसुरा ऽअपपुप्लुविरे ततो देवा ऽअभवन्परासुरा भवत्त्यात्मना परास्य द्विषन्भ्रातृव्व्यो भवति य ऽएवं वेद ॥ २७ ॥ ते देवा-ऽअब्रुवन् । ये न ऽइमे यज्ञाः सामि सꣳस्त्थिता यानिमान्विजहतोऽगामोप तज्जानीत यथेमान्त्सꣳस्त्थापयामेति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथेमान्न्यज्ञान्त्सꣳस्त्थापयामेति ॥ २८ ॥ ते चेतयमानाः । एतानि समिष्टयजूꣳष्य्यपश्श्यँस्तान्न्यजुहवुस्तैरेता-

* 'पयन्युत्समस्था' पाठोऽयं 'क' पुस्तके नास्ति ।

न्न्यज्ञान्त्समस्त्थापयन्न्यत्समस्त्थापयँस्तस्मात्सछंस्थितयजूछंष्यथ यत्समयजँस्तस्मात्समिष्टयजूछंषि ॥ २९ ॥ ते वा ऽएते नव यज्ञाः । नवैतानि समिष्टयजूछंषि तद्यदेतानि जुहोत्येतान्नेवैतद्यज्ञान्त्सछंस्थापयत्युभयानि जुहोत्यद्धुरस्य चाग्नेश्चाद्ध्वरस्य पूर्वाण्यथाग्नेस्तस्योक्तो बन्धुः ॥ ३० ॥ द्वे * ऽअग्नेर्ज्जुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्यज्ञः सछंस्थापय'तीष्टो यज्ञो भृगुभिरिष्टो ऽअग्निराहुतः पिपर्त्तु न' ऽइति ॥३१॥ तान्न्युभयान्न्येकादश सम्पद्यन्ते । एकादशाक्षरा त्रिष्टुब्वीर्य्यं त्रिष्टुब्वीर्य्यमेवैतद्यज्ञमभिसम्पादयति ॥ ३२ ॥ यद्वेवैकादश । एकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभऽइन्द्र ऽइन्द्रो यज्ञस्यात्मेन्द्रो देवता तद्य ऽएव यज्ञस्यात्मा या देवता तस्मिन्नेवैतद्यज्ञमन्ततः प्प्रतिष्ठापयति ॥ ३३ ॥ [ अर्धप्रपाठकः ५० ॥ ] समिष्टयजूछंषि हुत्वावभृथं यन्ति । अवभृथादुदेत्योदयनीयेन चरित्वानूबन्ध्यस्य पशुपुरोडाशमनु देविकानाछं हवीछंषि निर्व्वपति ॥ ३४ ॥ एतद्वै प्प्रजापतिः । प्राप्प्य राद्धेवामन्न्यत स दिक्षु प्प्रतिष्ठायेदः सर्व्वं दुधद्विदुधदुतिष्ठद्यद्दुधद्विदुधदुतिष्ठत्तस्माद्धाता तथैवैतद्यजमानो दिक्षु प्प्रतिष्ठायेदः सर्व्वं दुधद्विदुधत्तिष्ठति ॥ ३५ ॥ यद्वेवैतानि हवीछंषि निर्व्वपति । दिश ऽएषोऽग्निस्ता ऽउ ऽएवामूः पुरस्ताद्दर्भस्तम्बं च लोगेष्टका-

* का॰ श्रौ॰ सू॰ १६. ६. १९ ।

( १ ) शु॰ य॰ सं॰ अ॰ १८ क॰ ५६, ५७ ।

श्चोपदधाति ताः प्राणभृतः प्रथमायां चितौ सर्व्वैव द्वितीया सर्वा तृतीया सर्वा चतुर्थ्यथ पञ्चम्यै चितेर-सपत्ना नाकसदः पञ्चचूडास्ता ऽऊर्द्ध्वा ऽउत्क्रामन्त्य-ऽआयँस्ताभ्यः प्रजापतिरबिभेत्सर्वं वा ऽइदमिमाः परा-च्च्यो ऽत्येष्यन्तीति ता धाता भूत्वा पर्य्यगच्छत्तास्तु प्रत्यतिष्ठत् ॥ ३६ ॥ स यः स धातासौ स ऽआदित्यः । अथ यत्तद्दिशां परमं क्रान्तमेतत्तद्यस्मिन्नेष ऽएतत्प्र-तिष्ठितस्तपति ॥ ३७ ॥ स यः स धातायमेव स धात्रः । द्वादशकपालः पुरोडाशो द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्द्धाताथ यत्त-द्दिशां परमं क्रान्तमेतानि तानि पूर्वाणि हवीꣳष्यनुमत्यै चरू राकायै चरुः सिनीवाल्यै चरुः कुह्वै चरुस्तद्य-देतानि निर्वपति यदेव तद्दिशां परमं क्रान्तं तस्मिन्ने-वैनमेतत्प्रतिष्ठापयति तः सर्वं जुहोत्येतस्यैव कृत्स्नतायै ॥ ३८ ॥ ता वा ऽएता देव्यः । दिशो ह्येताश्छन्दाꣳसि वै दिशश्छन्दाꣳसि देव्यो ऽथैष कः प्रजापतिस्तद्यद्दे-व्यश्च कश्च तस्माद्देविकाः पञ्च भवन्ति पञ्च हि दिशः ॥ ३९ ॥ तदाहुः । नैतानि हवीꣳषि निर्वपेन्नेद-तिरेचयानीति तानि वै निर्वपेदेव कामेभ्यो वा ऽएतानि हवीꣳषि निरुप्यन्ते न वै कामानामतिरिक्तमस्ति यद्वै किञ्च पशुपुरोडाशमनु हविर्न्निरुप्यते पशावेव स मद्ध्यतो मेधो धीयत ऽउभयानि निर्व्वपत्यद्धरस्य चाग्नेश्चाद्धरस्य पूर्वमथाग्नेस्तस्योक्तो बन्धुरुच्चैः पशुपुरोडाशो भवत्युपाꣳ-

इडैवेतानीष्टिर्हानुब्रूहि प्रेष्येति पशुपुरोडाशस्याहानुब्रूहि यजेत्येतेषामिष्टिर्हि समानः स्विष्टकृत्समानीडा ॥ ४० ॥ तस्य वा ऽएतस्य पशोः। जुह्वति समिष्टयजूᳪंष्यवभ्य- वयन्ति हृदयशूलेनावभृथᳪं सᳪंस्था ह्येष पशुर्हृदय- शूलेन चरित्वा ॥ ४१ ॥ प्रत्येत्य वैश्वकर्म्मणानि जुहोति । विश्वानि कर्म्माण्ययमग्निस्तान्यस्यात्र सर्वाणि कर्म्माणि कृतानि भवन्ति तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो विश्वकर्म्मायमग्नि- स्तमेवैतत्प्रीणाति ॥४२॥ यद्वेव * वैश्वकर्म्मणानि जुहोति। प्रायणं च ह्यग्नेरुदयनं च सावित्राणि प्रायणं वैश्व- कर्म्मणान्युदयनᳪं स यत्सावित्राण्येव जुहुयान्न वैश्वकर्म्म- णानि यथा प्रायणमेव कुर्य्यान्नोदयनं तादृक्तद्यथ यद्वैश्व- कर्म्मणान्येव जुहुयान्न सावित्राणि यथोदयनमेव कुर्य्यान्न प्रायणं तादृक्तदुभयानि जुहोति प्रायणं च तदुदयनं च करोति ॥ ४३ ॥ अष्टावमूनि भवन्ति । एवमिमानि तद्यथा प्रायणं तथोदयनं करोति स्वाहाकारोऽमीषां नवमो भवत्येवमेषां तद्यथा प्रायणं तथोदयनं करोत्या- हुतिरमीषां दशमी भवत्येवमेषां तद्यथा प्रायणं तथोदयनं करोति सन्ततां तत्राहुतिं जुहोति रेतो वै तत्र यज्ञो रेतसोऽविच्छेदाय स्रुवेणेह स्वाहाकारं निरुक्तᳪं हि रेतो जातं भवति ॥ ४४ ॥ '(१)यदाकूतात्। समसुस्रोद्धृदो वा

* का० श्रौ० सू० १८. ६. २२।
(१) शु० य० सं० अ० १८ क० ५८।

मनसो वा सम्भृतं चक्षुषो वेत्य्येतस्म्माद्ध्येतत्सर्व्वस्म्मादग्ग्रे कर्म्मे समभव'त्तदनु प्प्रेतं सुकृतामु लोकं यत्र ऽऋषयो जग्मुः प्प्रथमजाः पुराणा' ऽइत्त्यमूनेतदृषीनाह ॥ ४५ ॥ 'एतछ् सधस्स्थम्। परि ते ददामी'ति स्वर्ग्गो वै लोकः सधस्त्थस्तदेनथ्ठ स्वर्ग्गाय लोकाय परिददाति 'यमावहाच्छेवधिं जातवेदाः। अन्न्वागन्ता यज्ञपतिर्वो ऽअत्र तथ्ठ स्म जानीत परमे व्व्योमन्नि'ति यथैव यजुस्तथा बन्धुः ॥ ४६ ॥ 'एतं जानार्थ। परमे व्व्योमन्देवाः सधस्त्था विद रूपमस्य। यदा गच्छात्पथिभिर्द्देवयानैरिष्टापूर्त्ते कृणवाथाविरस्म्मा' ऽइति यथैव यजुस्तथा बन्धु'रुद्बुद्ध्यस्वाग्ने, येन वहसी'ति तयोरुक्तो बन्धुः ॥४७॥ 'प्रस्तरेण परिधिना। स्रुचा व्वेद्या च बर्हिषा। ऋचेमं यज्ञं नो नय स्वर्द्देवेषु गन्तव' ऽइत्त्येतैर्न्नो यज्ञस्य रूपैः स्वर्ग्गं लोकं गमयेत्त्येतत् ॥ ४८ ॥ 'यद्दत्तं यत्परादानम्। यत्पूर्त्तं याश्च दक्षिणाः। तदग्निर्वैश्श्वकर्म्मणः स्वर्द्देवेषु नो दधदि'ति यच्चैव सम्प्रति दद्मो यच्चासम्प्रति तन्नोऽयमग्निर्वैश्श्वकर्म्मणः स्वर्ग्गे लोके दधात्त्वित्त्येतत् ॥ ४९ ॥ 'यत्र धारा ऽअनपेताः। मधोर्ग्घृतस्य च याः। तदग्निर्वैश्श्वकर्म्मणः स्वर्द्देवेषु नो दधदि'ति यथैव यजुस्तथा बन्धुः ॥ ५० ॥ अष्टौ वैश्श्वकर्म्मणानि जुहोति। अष्टाक्षरा गायत्त्री गायत्रोऽग्निर्यावानग्निर्यावत्त्यस्य

(१) शु० य० सं० अ० १८ क० ५८। (२) शु० य० सं० अ० १८ क० ५९। (३) शु० य० सं० अ० १८ क० ५१। (४) शु० य० सं० अ० १८ क० ६१, ६०। (५) शु० य० सं० अ० १८ क० ६२। (६) शु० य० सं० अ० १८ क० ६३। (७) शु० य० सं० अ० १८ क० ६४। (८) शु० य० सं० अ० १८ क० ६५।

मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ५१ ॥ वैश्वकर्म्मणानि हुत्वा नाम करोति । यदा वै सर्वः कृत्स्नो जातो भवत्यथ नाम कुर्वन्त्यत्र वा ऽएष सर्वः कृत्स्नो जातो भवति ॥ ५२ ॥ नाम कृत्वाथैनमुपतिष्ठते । सर्वेण वा ऽएष ऽएतमात्मना चिनोति स यदेतामत्रात्मनः परिदां न वदेतात्र हैवास्यैष ऽआत्मानं वृञ्जीताथ यदेतामत्रात्मनः परिदां वदते तथो हास्यैष ऽआत्मानं न वृङ्क्ते 'ये ऽअग्नयः पाञ्चजन्या ऽअस्यां पृथिव्यामधि । तेषामसि त्वमुत्तमः प्र नो जीवातवे सुवे'ति ये के चाग्नयः पञ्चचितिका ऽअस्यां पृथिव्यामधि तेषामसि त्वꣳ सत्तमः प्रो ऽअस्मान् जीवनाय सुवेत्येतदनुष्टुभा वाग्वा ऽअनुष्टुब्वागु सर्वाणि च्छन्दाꣳसि सर्वैरेवास्मा ऽएतच्छन्दोभिर्न्निह्नुत ऽउपस्थायाग्निः समारोह्य निर्म्मथ्योदवसानीयया यजते ॥ ५३ ॥ * अथ मैत्रावरुण्या पयस्यया यजते । देवत्रा वा ऽएष भवति य ऽएतत्कर्म्म करोति दैवम्वेतन्मिथुनं यन्मित्रावरुणौ स यदेतयानिष्ट्वा मानुष्यां चरेत्प्रत्यवरोहः स यथा दैवः सन्मानुषः स्यात्तादृक्तदथ यदेतया मैत्रावरुण्या पयस्यया यजते दैवमेवैतन्मिथुनमुपैत्यथैतयेष्ट्वा कामं यथा प्रतिरूपं चरेत् ॥ ५४ ॥ यद्वेवैतया मैत्रावरुण्या पयस्यया यजते । प्रजापतेर्व्विस्रस्ताद्रेतः परापतत्तं यत्र देवाः समस्कुर्वस्तदस्मिन्नेतया मैत्रा-

(१) शु० य० सं० अ० १८ क० ६७ ।

* अत्र शतम् ५१०० ॥

वरुण्या पयस्यया रेतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति ॥५५॥ स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ यदस्मात्तद्रेतः परापतदेषा सा पयस्या मैत्रावरुणी भवति प्राणोदानौ वै मित्रावरुणौ प्राणोदाना उ वै रेतः सिक्तं विकुरुतः पयस्या भवति पयो हि रेतो यज्ञो भवति यज्ञो ह्येव यज्ञस्य रेत ऽउपांशु भवत्युपांशु हि रेतः सिच्यतेऽन्ततो भवत्यन्ततो हि रेतो धीयते ॥५६॥ तस्यै वाजिनेन चरन्ति । तस्मिन्दक्षिणां ददाति तूपरौ मिथुनौ दद्यादित्य*भ्याम्नायेनैव मन्य ऽइति ह स्माह माहित्थिः सुवत्यु हैषाग्निचित ऽआहुतिः सोमाहुतिर्यामनिष्टके जुहोति ॥ ५७ ॥ स स्वयमातृण्णा ऽएवोपदधीत । इमे वै लोकाः स्वयमातृण्णा ऽइम ऽउ लोका ऽएषोऽग्निश्चितः ॥ ५८ ॥ ऋतव्या ऽएवोपदधीत । संवत्सरो वा ऽऋतव्याः संवत्सर ऽएषोऽग्निश्चितः ॥ ५९ ॥ विश्वज्योतिष ऽएवोपदधीत । एता वै देवता विश्वज्योतिष ऽएता ऽउ देवता ऽएषोऽग्निश्चितः ॥ ६० ॥ पुनश्चितिमेवोपदधीत । पुनर्यज्ञो हैष ऽउत्तरा हैषा देवयज्या पुनर्यज्ञमेवैतदुपधत्त ऽउत्तरामेव देवयज्यामुप हैनं पुनर्यज्ञो नमतीति न तथा कुर्याद्यो वाव चितेऽग्निर्निधीयते तामेवेष्टकामेष सर्वोऽग्निरभिसम्पद्यते तद्यदग्नौ जुहोति तदेवास्य यथा सर्वस्मिञ्छाण्डिलेऽग्नौ सञ्चिते पक्षपुच्छवत्याहुतयो हुताः स्युरेवमस्यैता-

* 'क' पुस्तके 'भ्याम्नायेनैव' इत्येव लभ्यते ।

ऽआहुतयो हुता भवन्ति ॥ ६१ ॥ सर्व्वाणि वा ऽएष भूतानि । सर्व्वान्देवान्गर्ब्भी भवति योऽग्निं बिभर्त्ति स योऽसंवत्सरभृतं चिनुत ऽएतानि ह स सर्व्वाणि भूतानि गर्ब्भं भूतं निर्हते यो न्वेव मानुषं गर्ब्भं निर्हन्ति तन्न्वेव परिचक्षतेऽथ किं य ऽएतं देवो ह्येष नासंवत्सरभृतस्यर्त्विजा भवितव्यमिति ह स्माह वात्स्यो नेदस्य देवरेतसस्य निर्हण्यमानस्य मेव्यसानीति ॥ ६२ ॥ षण्मास्यमन्तमं चिन्वीतेत्याहुः । षण्मास्या वा ऽअन्तमा गर्ब्भा जाता जीवन्तीति स यद्यसंवत्सरभृते महदुक्थꣳ शꣳसेद्गशीतीः शꣳसेद्सर्वं वै तद्यदसंवत्सरभृतोऽसर्वं तद्यद्गशीतयो विक्रुष्टं त्वेनꣳ स भूयो विकर्षेद्यदि चैव संवत्सरभृतः स्याद्यदि चासंवत्सरभृतः सर्व्वमेव, महदुक्थꣳ शꣳसेत् ॥ ६३ ॥ अथ ह शाण्डिल्यायनः प्राच्च्यां जगाम । तꣳ ह दैयाम्पातिरुवाच शाण्डिल्यायन कथमग्निश्चेतव्यो ग्लायामोऽह संवत्सरभृतायाग्निमु चिकीषामह ऽइति ॥ ६४ ॥ स होवाच । * कामन्न्वा ऽएनꣳ स चिन्वीत येन पुरा संवत्सरं भृतः स्यात्तꣳ ह्येव तं भृतꣳ सन्तञ्चिनुत ऽइति ॥ ६५ ॥ कामम्वेवैनꣳ स चिन्वीत । यः संवत्सरमभिषविष्यन्त्स्यादेष वा ऽएनं प्रत्यक्षमन्नेन बिभर्त्यैताभिराहुतिभिः ॥ ६६ ॥ कामम्वेवैनꣳ स चिन्वीत । यः संवत्सरमग्निहोत्रं जुहुयाद्बिभर्त्ति वा ऽएनमेष योऽग्निहोत्रं जुहोति ॥ ६७ ॥

* 'कामं न्वा' इति 'ग—ज' पुस्तकयोः ।

कामम्वेवैनꣳ स चिन्न्वीत । यꣳ संवत्सरं जातꣳ स्या-त्प्राणो वा ऽअग्निस्तमेतद्विभर्त्यथ ह वै रेतꣳ सिक्तं प्राणोऽन्न्ववरोहति तद्विन्दते तद्यज्जातं-जातं विन्दते तस्म्माज्जातवेदास्तस्म्मादुप्प्येवंवित्कामꣳ सद्योभूतं चि-न्न्वीत यदु ह वा ऽएवंवित्पिबति वा पाययति वा तदेवास्य यथा सर्व्वस्मिञ्छाण्डिलेऽग्नौ सञ्चिते पक्ष-पुच्छवत्याहुतयो हुताꣳ स्युरेवमस्यैता ऽआहुतयो हुता भवन्ति ॥ ६८ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

———*———

## [ चित्युपस्थानम् ]

इन्द्र ऽएतत्सप्तर्च्चमपश्श्यत् । न्यूनस्याप्त्या ऽअति-रिक्तस्यानतिरिक्तयै ऽव्यृद्धस्य समृद्ध्या ऽअथ ह वा ऽईश्श्व-रोऽग्निं चित्त्वा किञ्चिद्दौरितमापत्तोर्व्वि वा ह्वलितोरुर्ध्वद्वा यद्वा ह वा ऽएतच्छ्रयापर्ण्णꣳ सायकायनꣳ शुश्श्रावाथ हैतत्कर्म्मो-पदधर्ष ॥ १ ॥ सैषा त्रयस्य समृद्धिꣳ । अग्नेꣳ समृद्धिर्य्योऽ-ग्निं चिनुते तस्य समृद्धिर्य्योऽग्निं चिनोति तस्य समृद्धिꣳ ॥ २ ॥ * तद्यदेतेनोपतिष्ठते । यदेवास्यात्र विद्वान्न्वा-विद्वान्न्वाति वा रेचयति न वाऽभ्यापयति तदेवास्यैतेन

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ७ १; कठ० १८. १४, १५. १८; कपिष्ठ० २९. ३, ४; मै० सं० ११. १२. ३; तै० सं० ७. १२, १३।
* का० श्रौ० सू० १७. ७. १,२।

सर्वमाप्तं भवति यदस्य किञ्चानाप्तं य उ तस्यामनुष्टुब्भ्यृचि कामोऽत्रैव तमाप्नोत्यथो ऽएतस्माद्वैतत्कर्म्मणो रक्षाᳬसि नाष्ट्रा ऽअपहन्ति नो हैनमनुव्याहारिणस्तृण्वते तस्माद्वप्येवंविरकामं परस्मा ऽअग्निं चिनुयादीश्वरो ह श्रेयान्भवितोः ॥ ३ ॥ 'वार्त्रहत्याय शवसे। सहदानुं पुरुहूत क्षियन्तमि'ति वार्त्रघ्नीभ्यां प्रथमाभ्यामुपतिष्ठत ऽएतद्वै देवा वृत्रं पाप्मानᳬ हत्वापहतपाप्मान ऽएतत्कर्म्माकुर्वत तथैवैतद्यजमानो वृत्रं पाप्मानᳬ हत्वापहतपाप्मैतत्कर्म्म कुरुते ॥ ४ ॥ 'वि नऽइन्द्र मृधो जहि। मृगो न भीमः कुचरो गिरिष्ठा' ऽइति वैमृधीभ्यां द्वितीयाभ्यामेतद्वै देवा मृधः पाप्मानᳬ हत्वापहतपाप्मान ऽएतत्कर्म्माकुर्वत तथैवैतद्यजमानो मृधः पाप्मानᳬ हत्वापहतपाप्मैतत्कर्म्म कुरुते ॥ ५ ॥ 'वैश्वानरो न ऽऊतये। पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यामि'ति वैश्वानरीभ्यां तृतीयाभ्यामेतद्वै देवा वैश्वानरेण पाप्मानं दग्ध्वापहतपाप्मान ऽएतत्कर्म्माकुर्वत तथैवैतद्यजमानो वैश्वानरेण पाप्मानं दग्ध्वापहतपाप्मैतत्कर्म्म कुरुते ॥ ६ ॥ 'अश्याम तं काममग्ने तवोती'ति। एकया कामवत्यैतद्वै देवाः षड्चेन पाप्मानमपहत्यैकया कामवत्यैकधान्ततः सर्वान्कामाना-

(१) शु० य० सं० अ० १८ क० ६८, ६९। (२) शु० य० सं० अ० १८ क० ७०। (३) शु० य० सं० अ० १८ क० ७२, ७३। (४) शु० य० सं० अ० १८ क० ७४।

स्मिन्नकुर्वत तथैवैतद्यजमानः षड्‌चेन पाप्मानमपहत्त्यै- कया कामवत्यैकधान्ततः सर्वान्कामानात्मन्कुरुते ॥ ७ ॥ सप्तर्च्चं भवति । सप्तचितिकोऽग्निः सप्तर्त्तवः सप्त दिशः सप्त देवलोकाः सप्त स्तोमाः सप्त पृष्ठानि सप्त च्छन्दाᳬसि सप्त ग्राम्याः पशवः सप्तारण्याः सप्त शीर्षन्प्राणा यत्किञ्च सप्तविधमधिदेवतमध्यात्मं तदेनेन सर्वमाप्नोति ता ऽअनुष्टुभमभिसम्पद्यन्ते वाग्वा- ऽअनुष्टुब्वाचैवास्य तदाप्नोति यदस्य किञ्चानाप्तम् ॥ ८ ॥ अष्टर्चेनोपतिष्ठेतेत्यु हैक ऽआहुः । वयं ते ऽअद्य ररिमा हि काममिति द्वितीयया कामवत्या सप्तपूर्वास्तदष्टा- वष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किञ्चानाप्तमथो ऽएवङ्‌ सम्‌ देवते भजेते ऽइति न तथा कुर्यादेता वाव सप्ता- ष्टावनुष्टुभो भवन्ति स योऽष्टर्चे कामोऽत्रैव तमाप्नोति ॥ ९ ॥ ऐन्द्राग्नीभिरुपतिष्ठते । ऐन्द्राग्नोऽग्निर्यावानग्नि- र्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किञ्चा- नाप्तमिन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्नि- र्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किञ्चा- नाप्तम् ॥१०॥ तद्धैके । कर्मणः कर्मण ऽएवैतां प्रतिपदं कुर्वतेऽपहतपाप्मान ऽएतत्कर्म्म करवामहा ऽइति पुरीषवतीं चितिं कृत्वोपतिष्ठेतेत्यु हैक ऽआहुस्तत्र हि सा सर्वा कृत्स्ना भवतीति स यथा कामयेत तथा कुर्यादिति नु चयनस्याथातोऽचयनस्य ॥ ११ ॥ त्रयो ह वै समुद्राः ।

अग्निरृषंजुषां महाव्रतꣳ साम्नां महदुक्थमृचाꣳ स य एतानि परस्मै करोत्येतान्ह स समुद्वाञ्छोषयते ताञ्छुष्यतोऽन्वस्य छन्दाꣳसि शुष्यन्ति छन्दाꣳस्यनुलोको लोकमन्वात्मात्मानमनु प्रजा पशवः स ह श्वः-श्वः एव पापीयान्भवति य एतानि परस्मै करोति ॥ १२ ॥

अथ य एतान्यकृत्वा । परस्मा अपि सर्वैरन्यैर्ऋषिक्रतुभिर्याजयेदेतेभ्यो हैवास्य समुद्रेभ्यश्छन्दाꣳसि पुनराप्यायन्ते छन्दाꣳस्यनु लोको लोकमन्वात्मात्मानमनु प्रजा पशवः स ह श्वः—श्व एव श्रेयान्भवति य एतानि परस्मै न करोत्यथैष ह वा अस्य दैवोऽमृत आत्मा स य एतानि परस्मै करोत्येतꣳ ह स हैवमात्मानं परस्मै प्रयच्छत्यथ शुष्क एव स्थाणुः परिशिष्यते ॥ १३ ॥ तद्धैके । कृत्वा कुर्वते वा प्रति वा कारयन्त एषा प्रायश्चित्तिरिति न तथा कुर्याद्यथा शुष्कꣳ स्थाणुमुदकेनाभिषिञ्चेत्तादृक्तत्पूयेद्वा वै स व्रि वा म्रियेतैतस्य प्रायश्चित्तिरस्तीत्येव विद्यात् ॥ १४ ॥

अथ ह स्माह शाण्डिल्यः । तुरो ह कावषेयः कारोत्यां देवेभ्योऽग्निं चिकाय तꣳ ह देवाः पप्रच्छुर्मुने यदलोक्यामग्निचित्यामाहुरथ कस्माद्चैषीरिति ॥ १५ ॥ स होवाच । किं नु लोक्यं किमलोक्यमात्मा वै यज्ञस्य यजमानोऽङ्गान्यृत्विजो यत्र वा आत्मा तदङ्गानि यत्रो अङ्गानि तदात्मा यदि वा ऋत्विजोऽलोका भवन्त्यलोक उ तर्हि यजमान उ भये हि समानलोका

भवन्ति दुक्षिणासु त्वेव न संवदितव्यध्ठ संवादेनैव र्त्विजो ऽलोका ऽइति ॥ १६ ॥ (B)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१०७॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

† सञ्चितिनाम नवमं काण्डं समाप्तम् ॥ ९ ॥



(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा–का० श० ११. ७. २; मै० सं० ११. १३. ११ ।

† अस्मिन् काण्डे कण्डिकासंख्या ॥ ४०२ ॥

# अथाऽग्निरहस्यं *नाम दशमं काण्डम्



अस्मिन्काण्डे प्रतिपाद्या विषयाः— चितिसम्पत्तयः, चयनस्य सर्वयज्ञात्मना स्तुतिः, चित्यस्य पक्षपुच्छविचारः, सप्तविधाद्येकशतविधाग्नेर्वेदिमानादि, चयनकालादेर्विचारः, चित्याग्नेश्छन्दोभिः सहावयवसम्पत्तिः, संवत्सरादिमुहूर्तपर्यन्तं चयनसम्पत्तिः, यजुष्मतीलोकम्पृणानां सङ्ख्या, उपनिषद्रूपेणाग्न्युपासना, मनःसृष्टिविषयकविचारादि, अग्नेः सर्वतोमुखत्वम् , सम्प्रदायप्रवर्तकर्षिवंशकथनं, चेति ।



[ चित्याग्नेः सम्वत्सररूपत्वम् , तस्य प्राजापत्यात्मना स्तुतिः, स्तोत्रशस्त्रस्तुतिश्च ]

ॐ ॥ अग्निरेष पुरस्ताच्चीयते । संवत्सर ऽउपरिष्टान्महदुक्थꣳ शस्यते प्प्रजापतेर्व्विस्रस्तस्याग्रꣳ रसोऽगच्छत् ॥ १ ॥ स यꣳ स प्प्रजापतिर्व्व्यस्रꣳसत । संवत्सरꣳ सोऽथ यान्यस्य तानि पर्व्वाणि व्व्यस्रꣳसन्ताहोरात्राणि तानि ॥ २ ॥ स यꣳ स संवत्सरꣳ प्प्रजापतिर्व्व्यस्रꣳसत । अयमेव स योऽयमग्निश्चीयतेऽथ यान्यस्य तान्यहोरात्राणि पर्व्वाणि व्व्यस्रꣳसन्तेष्टका ऽएव तास्तद्यदेता-

---

* षष्ठादि-काण्डचतुष्टयेन प्रतिपादितकर्मणो भावनोपयोगितया अनुष्ठानाङ्गोपयुक्तकर्मप्रतिपादकतया च सर्वशेषत्वादस्य काण्डस्याऽग्निरहस्यमिति संज्ञा । रहसि भवं रहस्यम्, अग्निविषयं रहस्यज्ञानमित्यर्थः । तत्र अग्निशब्देन आहवनीयाधिकरणं सप्तपुरुषाद्येकशतपुरुषपरिमितं चितं क्षेत्रमभिधीयते 'इष्टकाभिरग्निं चिनोतीति श्रुतेः' तथाऽग्निमारोहति अग्निं प्रोक्षतीति च आरोहणप्रोक्षणे स्थलस्यैवोच्येते, तस्य चित्याग्नेरुपरि निधीयमान आहवनीयोऽग्निस्तत्कर्म च अग्निशब्देनोच्यते । तद्विषयं पूर्वमनुक्तमग्निमानादिकं तद्रहस्यं च ध्यानभागोऽस्मिन् काण्डे वक्ष्यत इति अग्निरहस्यमिति नामधेयं युक्तम् । ( सा० भा० )

ऽउपदधाति यान्येवास्य तान्यहोरात्राणि पूर्वाणि व्यस्रꣳसन्त तान्यस्मिन्नेतत्प्रतिदधाति तदेतदत्रैव यजुश्चितमन्नाप्तम् ॥ ३ ॥ अथ योऽस्य सोऽग्रꣳ रसोऽगच्छत् । महत्तदुक्थं तमस्य तꣳ रसमृक्सामाभ्यामनु यन्ति तद्यत्तत्र यजुः पुरस्तादेत्यभिनेतैव तदेति यथादो मेऽमुत्रैकं तदाहरिष्यामीत्येवं तद्यजुः पुरस्तादेति तꣳ संवत्सर ऽआप्नुवन्ति ॥ ४ ॥ तमध्वर्युर्ग्रहेण गृह्णाति । यद् गृह्णाति तस्माद् ग्रहस्तस्मिन्नुद्गाता महाव्रतेन रसन्दधाति सर्वाणि हैतानि सामानि यन्महाव्रतं तदस्मिन्त्सर्वैः सामभी रसन्दधाति तस्मिन्होता महतोक्थेन रसन्दधाति सर्वा हैता ऽऋचो यन्महदुक्थं तदस्मिन्त्सर्वाभिर्ऋग्भी रसन्दधाति ॥ ५ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं वषट्कृते जुहोति तदेनमेष रसोऽप्येति न वै महाव्रतमिदꣳ स्तुतꣳ शेत ऽइति पश्यन्ति नो महदिदमुक्थमित्यग्निमेव पश्यन्त्यात्मा ह्यग्निस्तदेनमेते ऽउभे रसो भूत्वापीत ऽऋक्च साम च तदुभे ऽऋक्सामे यजुरपीतः ॥ ६ ॥ स ऽएष मिथुनोऽग्निः । प्रथमा च चितिर्द्वितीया च तृतीया च चतुर्थी चाथ पञ्चम्यै चितेरूर्ध्वश्चितेऽग्निर्न्निधीयते तन्मिथुनं मिथुन ऽउ ऽएवायमात्मा ॥ ७ ॥ अङ्गुष्ठा- ऽइति पुमाꣳसः । अङ्गुलय ऽइति स्त्रियः कर्णाविति पुमाꣳसौ भ्रुवाविति स्त्रिया ऽओष्ठाविति पुमाꣳसौ नासिके ऽइति स्त्रियौ दन्ता ऽइति पुमाꣳसो जिह्वेति स्त्री सर्वे ऽएव मिथुनः सोऽनेन मिथुनेनात्मनैतं मिथुन-

मग्निमप्प्येति ॥ ८ ॥ एषाऽत्रापीतिः । अप्प्युहैवम्मिथुन-ऽइत्थ्रः ह त्त्वेवापि मिथुनो व्वागेवेयँ स्योऽयमग्निश्चितो व्वाचा हि चीयतेऽथ यश्चितेऽग्निर्न्निधीयते स प्प्राणः प्प्राणो वै व्वाचो व्वृषा प्प्राणो मिथुनं व्वाग्घ्वेवायमात्माथ य ऽआत्मन्प्प्राणस्तन्मिथुनः सोऽनेन मिथुनेनात्मनैत-न्मिथुनमग्निमप्प्येति ॥ ९ ॥ एषो ऽअत्रापीतिः । न ह वा ऽअस्यापुत्रतायै का चन शङ्का भवति य ऽएवमेतौ मिथुनावात्मानञ्चाग्निञ्च व्वेदात्मा ह त्त्वेवायमात्मा-द्दक्षिणान्नँ व्वनुते यो न ऽआत्मेति ह्यप्प्यृषिणाऽभ्युक्तम् ॥ १० ॥ तदिदमन्नमग्ग्धन्द्वेधा भवति । यदस्यामृतमूर्द्ध्वं तन्नाभेरूर्द्ध्वः प्प्राणैरुच्चरति तद्द्वायुमप्प्येत्यथ यन्मर्त्त्यं-म्पराक् तन्नाभिमत्त्येति तद्द्वयस्म्भूत्वेमामप्प्येति मूत्रञ्च पुरीषञ्च तद्यदिमामप्प्येति योऽयमग्निश्चितस्तन्तदुप्प्ये-त्यथ यद्द्वायुमप्प्येति यश्चितेऽग्निर्न्निधीयते तन्तदुप्प्येत्येषो ऽएवात्रापीतिः ॥ ११ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ चितिसम्पत्तयः ]

प्प्रजापतिरिमाँल्लोकानैप्प्सत् । स ऽएतँ व्वयोविध-मात्मानमपश्यदग्निन्तँ व्व्यधत्त तेनेमँल्लोकमाप्प्नोत्स द्द्वितीयं व्वयोविधमात्मानमपश्यन्महाव्रतन्तद्व्यधत्त ते-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२, १..२ । ·

नान्तरिक्षमाप्नोत्स तृतीयं त्रयोविधमात्मानमपश्यन्महदुक्थं तद्व्यधत्त तेन दिवमाप्नोत् ॥ १ ॥ अयं वाव लोक ऽएषोऽग्निश्चितः । अन्तरिक्षम्महाव्रतं द्यौर्म्महदुक्थं तस्मादेतानि सर्वाणि सहोपेयादग्निम्महाव्रतम्महदुक्थꣳ सह हीमे लोका ऽअसृज्यन्त तद्यदग्निः प्प्रथमश्चीयतेऽयꣳ ह्येषाँल्लोकानाम्प्रथमोऽसृज्यतेत्यधिदेवतम् ॥ २ ॥ अथाध्यात्मम् । मन ऽएवाग्निः प्प्राणो महाव्रतं वाङ्ङ्महदुक्थन्तस्मादेतानि सर्वाणि सहोपेयात्सह हि मनः प्प्राणो वाक्तद्यदग्निः प्प्रथमश्चीयते मनो हि प्प्रथमम्प्राणानाम् ॥ ३ ॥ आत्मैवाग्निः । प्प्राणो महाव्रतं वाङ्महदुक्थन्तस्मादेतानि सर्वाणि सहोपेयात्सह ह्यात्मा प्प्राणो वाक्तद्यदग्निः प्प्रथमश्चीयत ऽआत्मा हि प्प्रथमः सम्भवतः सम्भवति ॥ ४ ॥ शिर ऽएवाग्निः । प्प्राणो महाव्रतमात्मा महदुक्थन्तस्मादेतानि सर्वाणि सहोपेयात्सह हि शिरः प्प्राण ऽआत्मा तद्यदग्निः प्प्रथमश्चीयते शिरो हि प्प्रथमञ्जायमानस्य जायते तस्माद्यत्रैतानि सर्वाणि सह क्क्रियन्ते महद्देवोक्थमातमांस्यायत ऽआत्मा हि महदुक्थम् ॥ ५ ॥ तदाहुः । यदेतानि सर्वाणि सह दुरुपापानि कैतेषामुपाप्तिरिति ज्ज्योतिष्टोम ऽएवाग्निष्टोमे ज्ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥ ६ ॥ तस्य वा ऽएतस्य ज्ज्योतिष्टोमस्याग्निष्टोमस्य । त्रिवृद्बहिष्प्पवमानं तद् व्रतस्य शिरः पञ्चदशसप्तदशा ऽउत्तरौ पवमानौ तौ पक्षौ पञ्चदशः होतु-

राज्यꣳ सप्तदशं पृष्ठमेकविꣳशꣳ स्यज्ञायज्ञियं तत्पुच्छम् ॥ ७ ॥ तयोर्वा ऽएतयोः । पञ्चदशसप्तदशयोर्द्वात्रिꣳशत्स्तोत्रियास्ततो याः पञ्चविꣳशतिः स पञ्चविꣳश ऽआत्माथ याः सप्तातियन्ति ताः परिमादः पशवो हैताः पशवः परिमाद ऽएतावद्वै महाव्रतन्तदेतदत्रैव महाव्रतमाप्नोति ॥ ८ ॥ अथ होता सप्त छन्दाꣳसि शꣳसति । चतुरुत्तराण्येकर्चानि विराडष्टमानि तेषां तिस्रश्चाशीतयोऽक्षराणि पञ्च चत्वारिꣳशच्च ततो या ऽअशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यानि पञ्चचत्वारिꣳशत्ततो यानि पञ्चविꣳशतिः स पञ्चविꣳश ऽआत्मा यत्र वा ऽआत्मा तदेव शिरस्तत्पक्षपुच्छान्यथ यानि विꣳशतिस्तदावपनमेतावद्वै महदुक्थन्तदेतदत्रैव महदुक्थमाप्नोति तानि वा ऽएतानि सर्वाणि ज्योतिष्टोम ऽएवाग्निष्टोम ऽआप्यन्ते तस्मादु ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥ ९ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ प्रजापतेर्मर्त्यामृतादि-कृत्स्नशरीरसम्पादकत्वेन स्तुतिः ]

प्रजापतिः प्रजा ऽअसृजत । स ऽऊर्द्ध्वेभ्य ऽएव प्राणेभ्यो देवानसृजत येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजा ऽअथोर्द्ध्वमेव मृत्युम्प्रजाभ्योऽत्तारमसृजत ॥ १ ॥

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. १२ ।

तस्य ह प्रजापतेः । अर्द्धमेव मर्त्यमासीदर्द्धममृतन्तद्यदस्य मर्त्यमासीत्तेन मृत्योरबिभेत्स बिभ्यदिमाम्प्राविशद्द्वयम्भूत्वा मृच्चापश्च ॥ २ ॥ स मृत्युर्देवानब्रवीत् । क्व नु सोऽभूद्यो नोऽसृष्टेति त्वद्बिभ्यदिमाम्प्राविक्षदिति सोऽब्रवीत्तँ वा ऽअन्विच्छाम तꣳ सम्भराम न वा ऽअहं तꣳ हिꣳसिष्यामीति तन्देवा ऽअस्याऽअधि समभरन्यदस्याप्स्वासीत्ता ऽअपः समभरन्नथ यदस्यान्ताम्मृदं तदुभयꣳ सम्भृत्य मृदश्चापश्चेष्टकामकुर्वँस्तस्मादेतदुभयमिष्टका भवति मृच्चापश्च ॥ ३ ॥ तदेता वा ऽअस्य ताः । पञ्च मर्त्यास्तन्व ऽआसँल्लोम त्वङ्माꣳसमस्थि मज्जाथैता ऽअमृता मनो वाक्प्राणश्चक्षुः श्रोत्रम् ॥ ४ ॥ स यः स प्रजापतिः । अयमेव स योऽयमग्निश्चीयतेऽथ या ऽअस्य ताः पञ्च मर्त्यास्तन्व ऽआसन्नेतास्ताः पुरीषचितयोऽथ या ऽअमृता ऽएतास्ता ऽइष्टकाचितयः ॥ ५ ॥ ते देवा ऽअब्रुवन् । अमृतमिमं करवामेति तस्यैताभ्याममृताभ्यान्तनूभ्यामेताम्मर्त्यान्तनूम्परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्याम्पुरीषचितिन्तथा द्वितीयान्तथा तृतीयान्तथा चतुर्थीम् ॥६॥ अथ पञ्चमीञ्चितिमुपधाय । पुरीषन्निवपति तत्र विकर्णीञ्च स्वयमातृण्णाञ्चोपदधाति हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति सा सप्तमी चितिस्तदमृतमेवमस्यैताभ्याममृताभ्यान्तनूभ्यामेताम्मर्त्यान्तनूम्परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्याम्पुरीषचितिं ततो वै प्रजापतिरमृतोऽभवत्तथैवैतद्यजमान ऽएतममृतमात्मानङ्कृत्वा सोऽमृतो भवति ॥७॥

ते वै देवास्तन्नाविदुः । यद्येनꣳ सर्वं वाकुर्वन्न वा सर्वं ꣳयद्यति वारेचयन्न वाऽभ्यापयँस्त ऽएतामृचमपश्य'न्न्धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः।सचेतसो विश्वेदेवा यज्ञम्प्रावन्तु नः शुभ' ऽइति ॥ ८ ॥ तस्या ऽअस्त्येवाग्नेयम् । अस्त्यैन्द्रमस्ति वैश्वदेवन्तद्यदस्या ऽआग्नेयं ꣳयदेवैतस्याग्नेराग्नेयन्तदस्य तेन समस्कुर्वन्यदैन्द्रं तदैन्द्रेण यद्वैश्वदेवन्तद्वैश्वदेवेन तमन्नैव सर्वङ्कृत्स्नꣳ समस्कुर्वन् ॥ ९ ॥ * तद्यदेतयोपतिष्ठते । यदेवास्यात्र विद्वान्वाविद्वान्वाति वा रेचयति न वाऽभ्यापयति तदेवास्यैतया सर्वमाप्नोति यदस्य किञ्चानाप्तमनुष्टुब्धामच्छन्दवति वाग्वा ऽअनुष्टुब्वाग्धामच्छद्वाचैवास्य तदाप्नोति यदस्य किञ्चानाप्तम्पुरीषवतीञ्चितिङ्कृत्वोपतिष्ठेतेत्यु हैक ऽआहुस्तत्र हि सा सर्वा कृत्स्ना भवतीति ॥ १० ॥ तदु वा ऽआहुः । यविष्ठवत्यैवोपतिष्ठेतैतद्धास्य प्रियन्धाम यद्यविष्ठ ऽइति तद्यदस्य प्रियन्धाम तेनास्य तदाप्नोति यदस्य किञ्चानाप्तमाग्नेय्याग्निकर्म्म हि गायत्र्या गायत्रोऽग्निꣳर्वावानग्निꣳर्वावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किञ्चानाप्तमनिरुक्तया सर्वं वा ऽअनिरुक्तꣳ सर्वेणैवास्य तदाप्नोति यदस्य किञ्चानाप्तं 'त्वं ꣳयविष्ठ दाशुष' ऽइति तस्योक्तो बन्धुः

(१) शु० य० सं० अ० १८ क० ७६।

* "एतस्य च त्वं यविष्ठेति चित्योपस्थानम्" (का० श्रौ० सू० १७. ६. १)।

(२) शु० य० सं० अ० १८ क० ७७।

पुरीषवतीञ्चितिङ्कृत्वोपतिष्ठेत तत्र हि सा सर्वा कृत्स्ना भवति ॥ ११ ॥ (C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ प्रजापतेर्मरणधर्मकस्थूलशरीरगतमज्जादिरूपत्वेन हिरण्यरूपत्वेन देवानामन्नरूपत्वेन च स्तुतिः, पक्षिभक्षणवर्जनं व्रतञ्च ]

उभयꣳ हैतदग्ग्रे प्प्रजापतिरास । मर्त्यञ्चैवामृतञ्च तस्य प्प्राणा ऽएवामृता ऽआसुः शरीरम्मर्त्त्यꣳ स ऽएतेन कर्म्मणैतयावृतैकधाजरममृतमात्मानमकुरुत तथैवैतद्यजमान ऽउभयमेव भवति मर्त्यञ्चैवामृतञ्च तस्य प्प्राणा ऽएवामृता भवन्ति शरीरम्मर्त्त्यꣳ स ऽएतेन कर्म्मणैतया वृतैकधाजरममृतमात्मानङ्कुरुते ॥ १ ॥ स प्प्रथमाञ्चितिञ्चिनोति । सा हास्यैषा प्प्राण ऽएव तद्द्वै तदमृतममृतꣳ हि प्प्राणः सैषामृतचितिरथ पुरीषन्निवपति तद्धास्यैतन्मज्जैव तद्द्वै तन्मर्त्यम्मर्त्यो हि मज्जा तदेतस्मिन्नमृते प्प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ २ ॥ द्वितीयाञ्चितिञ्चिनोति । सा हास्यैषापान ऽएव तद्द्वै तदमृतममृतꣳ ह्यपानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्भवत्यथ पुरीषन्निवपति तद्धास्यैतदस्थ्येव तद्द्वै तन्मर्त्यम्मर्त्यꣳ ह्यस्थि तदेतस्मिन्नमृते प्प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ ३ ॥ तृतीयाञ्चितिञ्चिनोति । सा हास्यैषा व्व्यान ऽएव तद्द्वै

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. १. ३; मै० सं० ११. १२. ११; तै० सं० १. ५. ११,१; ऋ० सं० ६८. २ ।

तदमृतममृतꣳ हि व्यानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्भवत्यथ पुरीषन्निवपति तद्धास्यैतत्स्नावैव तद्वै तन्मर्त्यम्मर्त्यꣳ हि स्नाव तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ ४ ॥ चतुर्थीञ्चितिञ्चिनोति । सा हास्यैषोदान एव तद्वै तदमृतममृतꣳ ह्युदानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्भवत्यथ पुरीषन्निवपति तद्धास्यैतन्माꣳसमेव तद्वै तन्मर्त्यम्मर्त्यꣳ हि माꣳसं तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ ५ ॥ पञ्चमीञ्चितिञ्चिनोति । सा हास्यैषा समान एव तद्वै तदमृतममृतꣳ हि समानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्भवत्यथ पुरीषन्निवपति तद्धास्यैतन्मेद एव तद्वै तन्मर्त्यम्मर्त्यꣳ हि मेदस्तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ ६ ॥ षष्ठीञ्चितिञ्चिनोति । सा हास्यैषा वागेव तद्वै तदमृतममृतꣳ हि वाक्सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्भवत्यथ पुरीषन्निवपति तद्धास्यैतदसृगेव त्वगेव तद्वै तन्मर्त्यम्मर्त्यꣳ ह्यसृङ्मर्त्या त्वक्तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ ७ ॥ ता वा एताः । षडिष्टकाचितयः षट् पुरीषचितयस्तद् द्वादश द्वादश मासाः सँवत्सरः सँवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्प्रजापतिरेक-

धाजरममृतमात्मानमकुरुत तथैवैतद्यजमान ऽएकधाजरममृतमात्मानङ्कुरुते ॥ ८ ॥ अथ विकर्णीञ्च स्वयमातृण्णाञ्चोपधाय । हिरण्यशकलैः प्प्रोक्षत्यग्निमभ्यादधाति रूपमेव तत्प्रजापतिर्हिरण्मयमन्तत ऽआत्मनोऽकुरुत तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपन्तस्मादाहुर्हिरण्मयः प्प्रजापतिरिति तथैवैतद्यजमानो रूपमेव हिरण्मयमन्तत ऽआत्मनः कुरुते तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपं तस्माद्ये चैतद्विदुर्ये च न हिरण्मयोऽग्निचिदमुष्मिँल्लोके सम्भवतीत्येवाहुः ॥ ९ ॥ तद्धैतच्छाण्डिल्यश्च साप्तरथवाहणिश्च । आचार्य्यान्तेवासिनौ व्व्यूदाते रूपमेवास्यैतदिति ह स्माह शाण्डिल्यो लोमानीति साप्तरथवाहणिः ॥ १० ॥ स होवाच शाण्डिल्यः । रूपं व्वाव लोमवद्रूपमलोमकः रूपमेवास्यैतदिति तद्वै तत्तथा यथा तच्छाण्डिल्य ऽउवाच सञ्चितेऽग्निः प्प्रणीयते प्प्रणीताद्र्ध्वः समिध ऽआहुतय ऽइति हूयन्ते ॥ ११ ॥ प्प्राणेन वै देवा ऽअन्नमदन्ति । अग्निरु देवानाम्प्राणस्तस्मात्प्राग्देवेभ्यो जुह्वति प्प्राणेन हि देवा ऽअन्नमदन्त्यपानेन मनुष्या ऽअन्नमदन्ति तस्मात्प्रत्यङ्ङ्मनुष्येष्वन्नन्धीयतेऽपानेन हि मनुष्या ऽअन्नमदन्ति ॥ १२ ॥ तदाहुः । न वयसोऽग्निचिदश्नीयाद्वयो वा ऽएष रूपम्भवति योऽग्निञ्चिनुत ऽईश्वर ऽआर्त्तिमार्त्तोस्तस्मान्न वयसोऽग्निचिदश्नीयादिति तद्वै कामसेवैवंविदश्नीयादग्नेर्वा ऽएष रूपम्भवति योऽग्निञ्चिनुते सर्वं वा ऽइदमग्नेरन्नः सर्वं स

ऽइदमन्नमित्येवैवँविद्विद्यादिति ॥ १३ ॥ तदाहुः । किन्तदग्नौ क्रियते येन यजमानः पुनर्म्मृत्युमपजयतीत्यग्निर्वा ऽएष देवता भवति योऽग्निश्चिनुतेऽमृतमु वा ऽअग्निः श्रीर्हैवाः श्रियङ्गच्छति यशो देवा यशो ह भवति य ऽएवँवेद ॥ १४ ॥ (D)

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ अग्निचयनस्य अग्न्याधेयादिसर्वयज्ञात्मकत्वम् ]

सर्वे हैते यज्ञा योऽयमग्निश्चितः । स यत्पशुमालभते तदग्न्याधेयमथ यदुखाथं सम्भरति तान्ययग्न्याधेयहवीथंष्यथ यद्दीक्षते तदग्निहोत्रमथ यद्दीक्षितः समिधावादधाति ते ऽअग्निहोत्राहुती ॥ १ ॥ ते वै सायम्प्रातरादधाति । सायम्प्रातर्ह्यग्निहोत्राहुती जुह्वति समानेन मन्त्रेण समानेन हि मन्त्रेणाग्निहोत्राहुती जुह्वत्यथ यद्द्वनीवाहनञ्च भस्मनश्चाभ्यवहरणन्तौ दर्शपूर्णमासावथ यद्गार्हपत्यञ्चिनोति तानि चातुर्म्मास्यान्यथ यदूर्द्ध्वङ्गार्हपत्यादा सर्वौषधात्ता ऽइष्टयोऽथ यदूर्द्ध्वथं सर्वौषधात्प्राचीनञ्चितिभ्यस्ते पशुबन्धा य ऽएवैतेषु यज्ञेषु विष्णुक्रमास्ते विष्णुक्रमा यज्ञप्प्यन्तद्वात्सप्रम् ॥ २ ॥ सौम्योऽध्वरः प्रथमा चितिः । यत्प्राचीनः सर्वेभ्यो राजसूयो द्वितीया वाजपेयस्तृतीयाश्वमेधश्चतुर्थ्यग्निसवः पञ्चमी यैश्चितः

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. १. ४।

सामभिः परिगायति तन्महाव्रतमथ यत्तत्रोद्गातुः पुरस्ता-ज्जप्यन्तच्छतरुद्रियं वसोर्द्धारा महदुक्थमथ यदूर्द्ध्वः सामभ्यः प्राचीनं वसोर्द्धारायै यदेव तत्र होतुः पुरस्ता-ज्जप्यन्तत्तदुथ यदूर्द्ध्वं वसोर्द्धारायै ते गृहमेधा ऽएतावन्तो वै सर्वे यज्ञास्तानग्निनाप्नोति ॥ ३ ॥ अथातो यज्ञवीर्य्या-णामेव । सायम्प्रातर्ह वा ऽअमुष्मिँल्लोकेऽग्निहोत्रहुदश्नाति तावती ह तस्मिन्नयज्ञ ऽऊर्ग्गर्द्धमासेऽर्द्धमासे दर्शपूर्णमा-सयाजी चतुर्षु-चतुर्षु मासेषु चातुर्म्मास्ययाजी षट्सु षट्सु पशुबन्धयाजी सँवत्सरे सँवत्सरे सोमयाजी शते-शते सँवत्सरेष्वग्निचित्कामम्श्नाति कामन्न तद्धै-तद्यावच्छतः सँवत्सरास्तावदमृतमनन्तमपर्य्यन्तः स यो हैतदेवं वेदैवः हैवास्यैतदमृतमनन्तमपर्य्यन्तम्भवति तस्य यदुपीषीकयेवोपहन्यात्तदेवास्यामृतमनन्तमपर्य्यन्त-म्भवति ॥ ४ ॥ (E)

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

[ चित्याग्नेः पक्षिरूपत्वम्, तत्पक्षपुच्छयोः प्रमाणं च ]

प्रजापतिः स्वर्ग्गँल्लोकमजिगाथंसत् । सर्वे वै पशवः प्रजापतिः पुरुषोऽश्वो गौरविरजः स ऽएतै रूपैर्न्ना-शक्नोत्स ऽएतं वयोविधमात्मानमपश्यदग्निन्तं व्यधत्त

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. १. ५।

सोऽनुपसमुह्यानुपाधायोदपिपतिषत्स नाशक्नोत्स ऽउपसमुह्योपाधायोदपतत्तस्मादुप्येतर्हि व्वयाᳬसि यदैव पक्षा ऽउपसमूहन्ते यदा पत्राणि विसृजन्तेऽथोत्पतितुᳬ शक्नुवन्ति ॥ १ ॥ तँव्वा ऽअङ्गुलिभिर्म्मिमीते। पुरुषो वै यज्ञस्तेनेदᳬ सर्व्वम्मितन्तस्यैषावमा मात्रा यदङ्गुलयस्तयास्यावमा मात्रा तामस्य तदाप्नोति तयैनन्तन्मिमीते ॥ २ ॥ चतुर्व्विᳬशत्याङ्गुलिभिर्म्मिमीते । चतुर्व्विᳬशत्यक्षरा वै गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनन्तन्मिमीते ॥ ३ ॥ स चतुरङ्गुलमेवोभयतोऽन्तरत ऽउपसमूहति । चतुरङ्गुलमुभयतो बाह्यतो व्युदूहति तद्यावदेवोपसमूहति तावद्व्युदूहति तन्नाहैवातिरेचयति नो कनीयᳬ करोति तथा पुच्छस्य तथोत्तरस्य पक्षस्य ॥ ४ ॥ अथ निर्ण्णामौ पक्षयोᳬ करोति । निर्ण्णामौ हि व्वयसᳬ पक्षयोर्ब्भवतो वितृतीये वितृतीये हि व्वयसᳬ पक्षयोर्न्निर्ण्णामौ भवतोऽन्तरे वितृतीयेऽन्तरे हि वितृतीये व्वयसᳬ पक्षयोर्न्निर्ण्णामौ भवतᳬ स चतुरङ्गुलमेव पुरस्तादुदूहति चतुरङ्गुलम्पश्चादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति नो कनीयᳬ करोति ॥ ५ ॥ स तस्मिन्निर्ण्णामे । एकामिष्टकामुपदधाति तद्येयं व्वयसᳬ पततो निर्ण्णामादेका नाड्युपशेते तान्तत्करोत्यथो ऽइदम् ॥ ६ ॥ अथ वक्रौ पक्षौ करोति । वक्रौ हि व्वयसᳬ पक्षौ भवतᳬ स चतुरङ्गुलमेव पश्चादुदूहति चतुरङ्गुलम्पुरस्तादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति

नो कनीयः करोति ॥ ७ ॥ अथ रूपमुत्तमङ्करोति । अत्रैष सर्वोऽग्निः सँस्कृतस्तस्मिन्देवा ऽएतद्रूपमुत्तमम-दधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमन्दधाति स सहस्र-मृज्ज्वालिखिता ऽइष्टकाः करोति सहस्रमित्त्यालिखिताः सहस्रमित्त्यलिखिताः ॥ ८ ॥ अथ पञ्चमीश्चितिमुपधाय । त्रेधाग्निं विमिमीते स मद्ध्यमे वितृतीये सहस्रमृज्ज्वालिखिता ऽइष्टका ऽउपदधाति तद्यानीमानि व्वयसः प्प्रत्यञ्चि शीर्ष्णं ऽआपुच्छादृजूनि लोमानि तानि तत्करोति ॥९॥ अथ सहस्र-मित्त्यालिखिता दक्षिणत ऽउपदधाति । तद्यानीमानि व्वयसो दक्षिणतो व्वक्क्राणि लोमानि तानि तत्करोति ॥ १० ॥ अथ सहस्रमित्त्यालिखिता ऽउत्तरत ऽउपदधाति । तद्या-नीमानि व्वयस ऽउत्तरतो व्वक्क्राणि लोमानि तानि तत्करोति सहस्रेण सर्वं वै सहस्रꣳ सर्व्वेणैवास्मिन्नेतद्रूपमुत्तमन्द-धाति त्रिभिः सहस्रैस्त्रिवृदग्निर्य्यावानग्निर्य्यावत्त्यस्य मात्रा तावतैवास्मिन्नेतद्रूपमुत्तमन्दधाति ॥ ११ ॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[चित्याग्नेः सप्तपुरुषप्रमाणत्वम्, पक्षपुच्छयोश्चारत्नि-वितस्तिप्रमाणत्वम् ]

यान्वै तान्त्सप्त पुरुषान् । एकम्पुरुषमकुर्वंस्स प्प्रजापतिरभवत्स प्प्रजा ऽअसृजत स प्प्रजाः सृष्ट्वोर्द्ध्व ऽउदक्क्रामत्स ऽएतँल्लोकमगच्छद्यत्रैष ऽएतत्तपति नो ह तर्ह्यन्न्य ऽएतस्म्मादत्र यज्ञिय ऽआस तन्देवा यज्ञेनैव

(A) एतद्ब्राह्मणस्थाविषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. १।

यज्ञमक्रियन्त ॥ १ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । 'यज्ञेन[1] यज्ञमयजन्त देवा, ऽइति यज्ञेन हि तँय्यज्ञमयजन्त 'देवास्तानि[2] धर्म्माणि प्रथमान्न्यासन्नि'ति ते हि धर्म्माः प्रथमेऽक्रियन्त 'ते ह[3] नाकम्महिमानः सचन्ते'ति स्वर्गो वै लोको नाको देवा महिमानस्ते देवाः स्वर्गँल्लोकꣳ सचन्त ये तँय्यज्ञमयजन्नित्येतत् ॥ २ ॥ 'यत्र[4] पूर्वे साद्ध्याः सन्ति देवा' ऽइति । प्राणा वै साद्ध्या देवास्त ऽएतमग्र ऽएवमसाधयन्नेतदेव बुभूषन्तस्त ऽउ ऽएवाप्येतर्हि साधयन्ति पश्चेदमन्न्यदभवद्यजत्रममर्त्यस्य भुवनस्य भूनेति पश्चचाहैवेदमन्न्यद्यज्ञियमास यत्किञ्चामृतम् ॥ ३ ॥ ॥ ३ ॥ सुपर्णो ऽअङ्ग सवितुर्ग्गरुत्मान् । पूर्वो जातः स ऽउ ऽअस्यानु धर्म्मेति प्रजापतिर्वै सुपर्णो गरुत्मानेष सवितैतस्य प्रजापतिरनु धर्म्ममित्येतत् ॥ ४ ॥ स वै सप्तपुरुषो भवति । सप्तपुरुषो ह्ययम्पुरुषो यच्चत्वार ऽआत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छानि ॥ ५ ॥ तँवा ऽउद्बाहुना पुरुषेण मिमीते । पुरुषो वै यज्ञस्तेनेदꣳ सर्वम्मितन्तस्यैषा परमा मात्रा यदुद्बाहुस्तद्यास्य परमा मात्रा तामस्य तदाप्नोति तयैनन्तन्मिमीते तत्रोप यत्प्रपदेनाऽभ्युच्छ्रितो भवति तत्परिश्रिद्भिराप्नोति तस्मादु बाह्येनैव लेखाम्परिश्रिद्भ्यः खनेत् ॥ ६ ॥ अथ पक्षयोररत्नी ऽउपादधाति ।

(१) शु० य० सं० अ० ३१ क० १६। (२) शु० य० सं० अ० ३१ क० १६।
(३) शु० य० सं० अ० ३१ क० १६। (४) शु० य० सं० अ० ३१-क० १६।

पक्षयोस्तद्द्वीर्य्यन्दधाति बाहू वै पक्षौ बाहुभ्यामु वा ऽअन्न-मद्यतेऽन्नायैव तमवकाशङ्करोति तद्यत्पक्षयोररत्नी ऽउपा-दधात्यरत्निमात्राद्ध्यन्नमद्यते ॥ ७ ॥ अथ पुच्छे वितस्ति-मुपादधाति । प्प्रतिष्ठायान्तद्वीर्य्यन्दधाति प्प्रतिष्ठा वै पुच्छᳬ हस्तो वितस्तिर्हस्तेन वा ऽअन्नमद्यतेऽन्नायैव तमवकाशङ्करोति तद्यत्पुच्छे वितस्तिमुपादधात्यन्न ऽएवैन-न्तत्प्रतिष्ठापयति तद्यत्तत्र कनीय ऽउपादधात्यन्ने ह्येवैन-न्तत्प्रतिष्ठापयत्यथो ऽएतावद्द्वा ऽइदम्मितम्भवत्येतावदिद-न्तद्यदेवम्मिमीत ऽएतस्यैवाप्त्यै ॥ ८ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ प्राकृतस्य सप्तविधाग्नेर्वैकृतस्यैकशतविधाग्नेश्च वेदिमानम् ]

सा वा ऽइयँव्वेदिः सप्तविधस्य । एषा व्वेदेम्मात्रा स देवयजनमद्ध्यवसाय पूर्व्वया द्द्वारा पत्नीशालम्प्रपद्य गार्हपत्यायोद्धत्यावोक्षति गार्हपत्यस्योद्धतात्सप्त प्प्राचः प्प्रक्रमान्प्रक्रामति ततः प्प्राञ्चं व्व्यामं व्विमिमीते तस्य मद्ध्य ऽआहवनीयायोद्धत्यावोक्षति पूर्वार्द्धाद्व्व्यामस्य त्रीन्प्राचः प्प्रक्रमान्प्रक्रामति स व्वेद्यन्तः ॥ १ ॥ *
ते वा ऽएते । व्व्यामैकादशाः प्प्रक्रमा ऽअन्तरा व्वेद्यन्तञ्च गार्हपत्यञ्चैकादशाक्षरा त्रिष्टुब्व्रज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्व्वज्रे-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २, २; ऋ० सं० २. ३. २२ ॥

* अक्षरसंख्या ५२०० ।

णैवैतद्वीर्य्येण यजमानः पुरस्ताद्यज्ञमुखाद्रक्षाᳪंसि नाष्ट्रा ऽअपहन्ति ॥ २ ॥ सैषा वेदेर्य्योनिः । एतस्यै वै योनेर्देवा वेदिम्प्राजनयन्नथ य ऽएष व्यामः सा गार्हपत्यस्य योनिरेतस्यै वै योनेर्देवा गार्हपत्यम्प्राजनयन्गार्हपत्यादाहवनीयम् ॥ ३ ॥ स वेद्यन्तात् । षट्त्रिᳪंशत्प्रक्रमाम्प्राचीं वेदिं विमिमीते त्रिᳪंशतम्पश्चात्तिरश्चीश्चतुर्विᳪंशतिम्पुरस्तात्तन्नवतिः सैषा नवतिप्प्रक्रमा वेदिस्तस्याᳪं सप्तविधमग्निं विदधाति ॥ ४ ॥ तदाहुः । कथमेष सप्तविध ऽएतया वेद्या सम्पद्यत ऽइति दश वा ऽइमे पुरुषे प्प्राणाश्चत्वार्य्यङ्गान्यात्मा पञ्चदश ऽएवन्द्वितीय ऽएवन्तृतीये षट्सु पुरुषेषु नवतिरथैकः पुरुषोऽस्येति पाङ्क्तो वै पुरुषो लोम त्वङ्माᳪंसमस्थि मज्जा पाङ्क्तो ऽइयं वेदिश्चतस्रो दिश ऽआत्मा पञ्चम्य्येवमेष सप्तविध ऽएतया वेद्या सम्पद्यते ॥ ५ ॥ तद्धैके । उत्तरा विधा विधास्यन्त ऽएताँश्च प्प्रक्रमानेतञ्च व्याममनुवर्द्धयन्ति योनिमनुवर्द्धयाम ऽइति न तथा कुर्य्यान्न वै जातङ्गर्भं य्योनिरनुवर्द्धते यावद्वाव योनावन्तर्ग्गर्भो भवति तावदेव योनिर्विर्द्धत ऽएतावत्यु वा ऽअत्र गर्भस्य व्वृद्धिः ॥ ६ ॥ ते ये ह तथा कुर्वन्ति । एतᳪं ह ते पितरम्प्रजापतिᳪं सम्पदश्च्यावयन्ति त ऽइष्ट्वा पापीयाᳪंसो भवन्ति पितरᳪं हि प्प्रजापतिᳪं सम्पदश्च्यावयन्ति सा यावत्येषा सप्तविधस्य वेदिस्तावतीश्चतुर्द्दश कृत्व ऽएकशतविधस्य वेदिं विमिमीते ॥ ७ ॥ अथ षट्त्रिᳪंशत्प्रक्रमाᳪं रज्जुम्मिमीते ।

ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्प्राच ऽउपदधाति निःसृजति चतुरः ॥ ८ ॥ अथ त्रिꣳशत्प्रक्रमाम्मिमीते। ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्पश्चादुपदधाति निःसृजति चतुरः ॥ ९ ॥ अथ चतुर्विꣳशतिप्रक्रमाम्मिमीते। ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्पुरस्तादुपदधाति निःसृजति चतुरँ ऽइति नु वेदिविमानम् ॥ १० ॥ अथाग्नेर्विधाः। अष्टाविꣳशतिः प्राश्चः पुरुषा ऽअष्टाविꣳशतिस्तिर्यञ्चः स ऽआत्मा चतुर्दश पुरुषा दक्षिणः पक्षश्चतुर्दशोत्तरश्चतुर्दश पुच्छश्चतुर्दशारत्नीन्दक्षिणे पक्ष ऽउपदधाति चतुर्दशोत्तरे चतुर्दश वितस्तीः पुच्छ ऽइति न्वष्टानवतेः पुरुषाणाम्मात्रा साधिमानानाम् ॥ ११ ॥ अथ त्रिपुरुषाꣳ रज्जुम्मिमीते। ताꣳ सप्तधा समस्यति तस्यै चतुरो भागानात्मन्नुपदधाति त्रीन्पक्षपुच्छेषु ॥ १२ ॥ अथारत्निमात्रीम्मिमीते। ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्दक्षिणे पक्ष ऽउपदधाति त्रीनेवोत्तरे निःसृजति चतुरः ॥ १३ ॥ अथ वितस्तिमात्रीम्मिमीते। ताꣳ सप्तधा समस्यति तस्यै त्रीन्भागान्पुच्छ ऽउपदधाति निःसृजति चतुर ऽएवमेष ऽएकशतविध ऽएतया वेद्या सम्पद्यते ॥ १४ ॥ तदाहुः। यत्त्रयोदश पुरुषा ऽअतियन्ति कथमेते सम्पदो न च्यवन्त ऽइति या वा ऽएतस्य सप्तमस्य पुरुषस्य सम्पत्सैवैतेषाꣳ सर्वेषाꣳ सम्पत् ॥ १५ ॥ अथो ऽआहुः। प्रजापतिरेवात्मानं विधाय तस्य यत्र-यत्र न्यूनमासीत्तदेतैः समा-

पूरयत तेनो ऽएवापि सम्पन्न ऽइति ॥ १६ ॥ तद्धैके । एक-
विधम्प्रथमं विदधत्यथैकोत्तरमापरिमितविधान्न तथा
कुर्य्यात् ॥ १७ ॥ सप्तविधो वा ऽअग्रे प्रजापतिरसृज्यत ।
स ऽआत्मानं विदधान ऽऐत्स ऽएकशतविधेऽतिष्ठत स
योऽर्वाचीनꣳ सप्तविधाद्विधत्त ऽएतꣳ ह स पितरम्प्रजा-
पतिं विच्छिनत्ति स ऽइष्ट्वा पापीयान्भवति यथा श्रेयाꣳसꣳ
हिꣳसित्वाथ य ऽएकशतविधमतिविधत्तेऽस्मात्स सर्व-
स्माद्बहिर्द्धा निष्पद्यते सर्वम्मु हीदम्प्रजापतिस्तस्मादु
सप्तविधमेव प्रथमं विदधीताथैकोत्तरमैकशतविधादेकशत-
विधन्तु नातिविदधीत नाहैतम्पितरम्प्रजापतिं विच्छिनत्ति
नो ऽअस्मात्सर्वस्माद्बहिर्द्धा निष्पद्यते ॥ १८ ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ एकशतविधस्याग्नेरादित्यात्मना स्तुतिः, तस्य प्राकृताग्नि-
सङ्ख्यया सम्पत्तिप्रकारादिश्च ]

सँवत्सरो वै प्रजापतिः । अग्निरु सर्वे कामाः
सोऽयꣳ सँवत्सरः प्रजापतिरकामयताग्निꣳ सर्वान्कामा-
नात्मानमभिसञ्चिन्वीयेति स ऽएकशतधात्मानं व्यधत्त
स ऽएकशतधात्मानं विधायाग्निꣳ सर्वान्कामानात्मानम-
भिसमचिनुत स सर्वे कामा ऽअभवत्तस्मान्न कश्चन
बहिर्द्धा कामोऽभवत्तस्मादाहुः सँवत्सरः सर्वे कामा
ऽइति न ह सँवत्सरात्कश्चन बहिर्द्धा कामोऽस्ति ॥ १ ॥

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा - का० श० १२, २. ३ ।

तथैवैतद्यजमानः । एकशतधात्मानं विधायाग्निः सर्वा-न्कामानात्मानमभिसञ्चिनुते स सर्वे कामा भवति तस्मान्न कश्चन बहिर्द्धा कामो भवति ॥ २ ॥ स यः स संवत्सरोऽसौ स ऽआदित्यः । स ऽएष ऽएकशत-विधस्तस्य रश्मयः शतं विधा ऽएष ऽएवैकशततमो य ऽएष तपत्यस्मिन्त्सर्वस्मिन्प्रतिष्ठितस्तथैवैतद्यजमान ऽएकशतधात्मानं विधायास्मिन्त्सर्वस्मिन्प्रतितिष्ठति ॥ ३ ॥ अथ वा ऽएकशतविधः । सप्तविधमभिसम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्तसु देवलोकेषु प्रतिष्ठितः सप्त वै देवलोकाश्चतस्रो दिशस्त्रय ऽइमे लोका ऽएते वै सप्त देवलोकास्तेष्वेष प्रतिष्ठितस्तथैवैतद्य-जमान ऽएकशतधात्मानं विधाय सप्तसु देवलोकेषु प्रतितिष्ठति ॥ ४ ॥ यद्वेवैकशतविधः । सप्तविधमभि-सम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्तस्वृ-तुषु सप्तसु स्तोमेषु सप्तसु पृष्ठेषु सप्तसु छन्दःसु सप्तसु प्राणेषु सप्तसु दिक्षु प्रतिष्ठितस्तथैवैतद्य-जमान ऽएकशतधात्मानं विधायैतस्मिन्त्सर्वस्मिन्प्रतिति-ष्ठति ॥ ५ ॥ यद्वेवैकशतविधः । सप्तविधमभिसम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्ताक्षरे ब्रह्म-न्प्रतिष्ठितः सप्ताक्षरं वै ब्रह्मर्गित्येकमक्षरं यजुरिति द्वे सामेति द्वे ऽअथ यदतोऽन्यद्ब्रह्मैव तद्द्व्यक्षरं वै ब्रह्म तदेतत्सर्वः सप्ताक्षरम्ब्रह्म तस्मिन्नेष प्रतिष्ठित-स्तथैवैतद्यजमान ऽएकशतधात्मानं विधाय सप्ताक्षरे

ब्ब्रह्मन्न्प्रतितिष्ट्ठति ॥ ६ ॥ तुस्म्मादु सप्प्तुभिः सप्प्तुभिः पुरिश्श्रयन्ति । तुस्म्मादेुकशतविधः सप्प्तुविधमभिसुम्प-द्यतेुऽथ वैु सप्प्तुविध ऽएुकशतविधमभिसुम्पद्यते ॥ ७ ॥
सप्प्तुविधो व्वा ऽअुग्ग्रे प्प्रजुापतिरस्सृज्यत । सु ऽएुतमेक-शतुधात्त्मुानं व्विुहितमपश्श्यत्प्राणभृत्सु पञ्चाशदिुष्टकाः पञ्चा-शद्युजूᳬंषि तुच्छतᳬ सुादनञ्च सूुद्दोहाश्चैकशततमे त्तस्मानुᳬ सादयित्त्वा हि सूुद्दोहसाधिवुदति सु ऽएुते-नैुकशतविधेनात्त्मुनेमाक्षितिमुजयदिमुां व्व्यष्टिं व्व्याश्नुत तुथैवैतद्युजमान ऽएुतेनैुकशतविधेनात्त्मुनेमाक्षितिञ्जयतीमुां व्व्यष्टिं व्व्यश्नुत ऽएुवमु सप्प्तुविध ऽएुकशतविधमभि-सुम्पद्यते स य ऽएुवैुकशतविधः सु सप्प्तुविधो यः सप्प्तु-विधः स ऽएुकशतविध ऽइुति नु विुधानाम् ॥ ८ ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥१॥
कण्डिकासंख्या ॥ ९४ ॥

[ चित्याग्नेः कालविध्यादि ]

अथुातश्श्चयनस्यैव । अन्तुरोपसदौ चिनोत्त्येतद्वैु देवुा ऽअबिभयुर्य्यद्वैु न ऽइमुमिह रुक्षाᳬंसि नाष्ट्रा नु हन्न्यु-रिुति तु ऽएताः पुरोऽपश्श्यन्नुपसुद ऽइमुानेवु लोकुानिमे वैु लोकाः पुरस्ताः प्रापद्यन्त ताः प्प्रपद्याभयेऽनाष्ट्रेऽए-तमात्त्मुानᳬ सुमस्कुर्वत तुथैवैतद्युजमान ऽएताः पुरः प्रपद्या-

(D) एतद्ब्राह्मणस्था विधा अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १६. २. ४।

भयेऽनाष्ट्र ऽएतमात्मानꣳ संस्कुरुते ॥ १ ॥ यद्वेवान्तरोपसदौ चिनोति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति त ऽएतान्वज्रानपश्यन्नुपसदो वज्रा वा ऽउपसदस्तान्प्रापद्यन्त तान्प्रपद्याभयेऽनाष्ट्र ऽएतमात्मानꣳ समस्कुर्वत तथैवैतद्यजमान ऽएतान्वज्रान्प्रपद्याभयेऽनाष्ट्रऽएतमात्मानꣳ संस्कुरुते ॥ २ ॥ एतदु ह यज्ञे तपꣳ । यदुपसदस्तपो वा ऽउपसदस्तद्यत्तपसि चीयते तस्मात्तापश्चितस्तद्वै यावद्देवोपसद्भिश्चरन्ति तावत्प्रवर्ग्येण सँवत्सरमेवोपसद्भिश्चरन्ति सँवत्सरम्प्रवर्ग्येण ॥ ३ ॥ अहोरात्राणि वा ऽउपसदꣳ । आदित्यꣳ प्रवर्ग्योऽमुन्तदादित्यमहोरात्रेषु प्रतिष्ठापयति तस्मादेषोऽहोरात्रेषु प्रतिष्ठितꣳ ॥ ४ ॥ अथ यदि चतुर्विꣳशतिꣳ । चतुर्विꣳशतिर्वा ऽअर्द्धमासा ऽअर्द्धमासा ऽउपसद ऽआदित्यꣳ प्रवर्ग्योऽमुन्तदादित्यमर्द्धमासेषु प्रतिष्ठापयति तस्मादेषोऽर्द्धमासेषु प्रतिष्ठितꣳ ॥ ५ ॥ अथ यदि द्वादश । द्वादश वै मासा मासा ऽउपसद ऽआदित्यꣳ प्रवर्ग्योऽमुन्तदादित्यम्मासेषु प्रतिष्ठापयति तस्मादेष मासेषु प्रतिष्ठितꣳ ॥ ६ ॥ अथ यदि षट् । षड्वा ऽऋतव ऽऋतव ऽउपसद ऽआदित्यꣳ प्रवर्ग्योऽमुन्तदादित्यमृतुषु प्रतिष्ठापयति तस्मादेष ऽऋतुषु प्रतिष्ठितꣳ ॥ ७ ॥ अथ यदि तिस्रꣳ । त्रयो वा ऽइमे लोका ऽइमे लोका ऽउपसद ऽआदित्यꣳ प्रवर्ग्योऽमुन्तदादित्यमेषु लोकेषु प्रतिष्ठापयति तस्मादेष ऽएषु लोकेषु

प्रतिष्ठितः ॥ ८ ॥ अथातश्चितिपुरीषाणामेव मीमाᳫंसा । मासम्प्रथमा चितिम्मासम्पुरीषमेतावान्वै वासन्तिक ऽऋतौ कामस्तद्यावान्वै वासन्तिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ ९ ॥ मासन्द्वितीया । मासम्पुरीषमेतावान्ग्रैष्म ऽऋतौ कामस्तद्यावान्ग्रैष्म ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १० ॥ मासन्तृतीया । मासम्पुरीषमेतावान्वै वार्षिक ऽऋतौ कामस्तद्यावान्वै वार्षिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ ११ ॥ मासञ्चतुर्थी । मासम्पुरीषमेतावाञ्छारद ऽऋतौ कामस्तद्यावाञ्छारद ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥१२॥ अथ पञ्चम्यै चितेः । असपत्ना विराजश्च प्रथमाहमुपदधाति स्तोमभागा ऽएकैकामन्वहन्ताः सकृत्सादयति सकृत्सूददोहसाधिवदति तूष्णीम्मासᳫं स्तोमभागापुरीषमभिहरन्त्येतावान्हैमन्तिक ऽऋतौ कामस्तद्यावान्हैमन्तिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १३ ॥ मासः षष्ठी । मासम्पुरीषमेतावाञ्छैशिर ऽऋतौ कामस्तद्यावाञ्छैशिर ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुत ऽएतावान्वै द्वादशसु मासेषु कामः षट्स्वृतुषु तद्यावान्द्वादशसु मासेषु कामः षट्स्वृतुषु तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १४ ॥ अथ त्रीण्यहान्युपातियन्ति । षडहः शतरुद्रियञ्जुहोति षडहरुपवसथो षडहः प्रसुतस्तद्यत्तेष्वहःसूपसदा चरन्ति तानि तस्य मासस्याहोरात्राण्यथ यत्प्रवर्ग्येण तद् तस्मिन्नृतावादित्यम्प्रतिष्ठापयत्येतावान्वै

त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तद्यावाँस्त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १५ ॥ स सँवत्सरम्प्रसुतः स्यात् । सर्वं वै सँवत्सरः सर्वमेकशतविधः सर्वेणैव तत्सर्वमाप्नोति यदि सँवत्सरन्न शक्नुयाद्विश्वजिता सर्वपृष्ठेनातिरात्रेण यजेत तस्मिन्त्सर्ववेदसन्दद्यात्सर्वं वै विश्वजित्सर्वपृष्ठोऽतिरात्रः सर्वं सर्ववेदसꣳ सर्वमेकशतविधः सर्वेणैव तत्सर्वमाप्नोति ॥ १६ ॥ (E)

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रजापतेः प्रकारान्तरेणैकशतसंख्याकत्वादिविधानम् ]

सँवत्सरो वै प्रजापतिरेकशतविधः । तस्याहोरात्राण्यर्द्धमासा मासा ऽऋतवः षष्टिर्म्मासस्याहोरात्राणि मासि वै सँवत्सरस्याहोरात्राण्याप्यन्ते चतुर्विꣳशतिरर्द्धमासास्त्रयोदश मासास्त्रय ऽऋतवस्ताः शतं विधाः सँवत्सर ऽएवैकशततमी विधा ॥ १ ॥ स ऽऋतुभिरेव सप्तविधः । षडृतवः सँवत्सर ऽएव सप्तमी विधा तस्यैतस्य सँवत्सरस्यैतत्तेजो य ऽएष तपति तस्य रश्मयः शतं विधा मण्डलमेवैकशततमी विधा ॥ २ ॥ स दिग्भिरेव सप्तविधः । ये प्राच्यान्दिशि रश्मयः सैका विधा ये दक्षिणायाꣳ सैका ये प्रतीच्याꣳ सैका य ऽउदीच्याꣳ सैका य ऽऊर्द्ध्वायाꣳ

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा--का० श० १२. २. ४ ।

सैका येऽवाच्चयाथ्ठं सैका मण्डलमेव सप्तमी विधा ॥ ३ ॥ तस्यैतस्य परस्तात्कामप्रो लोकः । अमृतं वै कामप्रममृतमेवास्य तत्परस्तात्तद्यत्तदमृतमेतत्तद्यदेतदर्च्चिर्दीप्यते ॥ ४ ॥ तदेतद्वसुचित्रꣳ राधः । तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजत्यप्योषधिभ्योऽपि वनस्पतिभ्यो भूय ऽइव ह त्वेकाभ्यः प्रयच्छति कनीय ऽइवैकाभ्यस्तद्याभ्यो भूयः प्रयच्छति ता ज्ज्योक्तमाञ्जीवन्ति याभ्यः कनीयः कनीयस्ताः ॥ ५ ॥ तदेतदृचाभ्युक्तम् । 'विभक्तारꣳ हवामहे वसोश्चित्रस्य राधसः । सवितारन्नृचक्षसमि'ति तदेतत्सर्वमायुर्दीर्घमनन्तꣳ हि तद्यदिदमाहुर्दीर्घन्त ऽआयुरस्तु सर्वमायुरिहीत्येष ते लोक ऽएतत्तेऽस्त्विति हैवैतत् ॥ ६ ॥ पश्यन्ती वाग्वदति । तदेतदेकशतविधेन वैवाप्तव्यꣳ शतायुतया वा य ऽएवैकशतविधं विधत्ते यो वा शतं वर्षाणि जीवति स हैवैतदमृतमाप्नोति तस्माद्ये चैतद्विदुर्ये च न लोक्या शतायुतेत्येवाहुस्तस्मादु ह न पुरायुषः स्वकामी प्रेयादलोक्यꣳ हैत ऽउ वाव लोका यदहोरात्राण्यर्द्धमासा मासा ऽऋतवः संवत्सरः ॥ ७ ॥ तद्येऽर्वाग्विꣳशेषु वर्षेषु प्रयन्ति । अहोरात्रेषु ते लोकेषु सज्ज्यन्तेऽथ ये परोविꣳशꣳ्ष्वर्वाक्चत्वारिꣳशꣳ्ष्वर्द्धमासेषु तेऽथ ये परश्चत्वारिꣳशꣳ्ष्वर्वाक्षष्टेषु मासेषु तेऽथ ये परः षष्टेष्वर्वागशीतेष्वृतुषु तेऽथ ये परोऽशीतेष्वर्वाक्शतेषु सँवत्सरे तेऽथ य ऽएव शतं वर्षाणि यो वा

(१) शु० य० सं० अ० ३० क० ४।

भूयाᳬंसि जीवति स हैवैतदमृतमाप्नोति ॥ ८ ॥ बहुभिर्ह वै यज्ञैः । एकमहरेका रात्रिर्म्मिता स य ऽएवैकशतविधं विधत्ते यो वा शतं वर्षाणि जीवति स हैवैनदद्धातमामाप्नोत्येष वा ऽएकशतविधं विधत्ते य ऽएनᳬं सँव्वत्सरं बिभर्त्ति तस्मादेनᳬं सँव्वत्सरभृतमेव चिन्न्वीतेत्त्यधिदेवतम् ॥ ९ ॥ अथाधियज्ञम् । यानमूनेकशतमुद्द्बाहून्पुरुषान्मिमीते स विधैकशतविधः स चितिभिरेव सप्तविधᳬं षट्कृत्व्यवरत्यग्निश्चितयोऽग्निरेव सप्तमी विधा ॥ १० ॥ स ऽउ वा ऽइष्टकैकशतविधः । याः पञ्चाशत्प्रथमा ऽइष्टका याश्चोत्तमास्ताः शतं विधा ऽअथ या ऽएतदन्तरेणेष्टका ऽउपधीयन्ते सैवैकशततमी विधा ॥ ११ ॥ स ऽउ ऽएव यजुस्तेजाः । यजुरेकशतविधो यानि पञ्चाशत्प्रथमानि यजूᳬंषि यानि चोत्तमानि ताः शतं विधा ऽअथ यान्येतदन्तरेण यजूᳬंषि क्रियन्ते सैवैकशततमी विधैवमु सप्तविध ऽएकशतविधो भवति स यः शतायुतायाङ्कामो य ऽएकशतविधे सप्तविधेन हैव तमेवंविदाप्नोति ॥ १२ ॥ एवं वाव सर्वे यज्ञाः । एकशतविधा ऽअग्निहोत्राहत्ग्भिरुर्यजुर्भिः पदैरक्षरैः कर्म्मभिः सामभिः स यः शतायुतायाङ्कामो य ऽएकशतविधे यः सप्तविधे यज्ञेन-यज्ञेन हैव तमेवंविदाप्नोतीत्यु ऽएवाधियज्ञम् ॥ १३ ॥ अथाध्यात्मम् । पञ्चेमाश्चतुर्विधा ऽअङ्गुलयो द्वे कल्कुषी दोरᳬसफलकञ्चाक्षश्च तत्पञ्चविᳬशतिरेवमिमानीतराण्यङ्गानि ताः शतं विधा ऽआत्मैवैकशततमी

विधोक्तः सप्तविधतायै ॥ १४ ॥ स उ एव प्राणतेजाः । प्राणैकशतविधोऽन्वङ्गमङ्गेऽङ्गे हि प्राणः स यः शतायुताथाङ्कामो य एकशतविधे यः सप्तविधे यः सर्वेषु यज्ञेषु विद्यया हैव तमेवंविदाप्नोति सर्वैर्हि यज्ञैरात्मानः सम्पन्नं विदे ॥१५॥ त्रीणि वा इमानि पञ्चविधानि। सँवत्सरोऽग्निः पुरुषस्तेषाम्पञ्चविधा अन्नम्पानꣳ श्रीज्ज्योतिरमृतं यदेव सँवत्सरेऽन्नन्तदन्नं या आपस्तत्पानः रात्रिरेव श्रीः श्रियाꣳ हैतद्रात्र्याꣳ सर्वाणि भूतानि सँवसन्त्यहज्ज्योतिरादित्योऽमृतमित्यधिदेवतम् ॥ १६ ॥ अथाधियज्ञम् । यदेवाग्नावन्नमुपधीयते तदन्नं या आपस्तत्पानम्परिश्रित एव श्रीस्तद्धि रात्रीणाꣳ रूपं यजुष्मत्यो ज्योतिस्तद्ध्यह्नाꣳ रूपमग्निरमृतन्तद्ध्यादित्यस्य रूपमित्यु एवाधियज्ञम् ॥ १७ ॥ अथाध्यात्मम् । यदेव पुरुषेऽन्नन्तदन्नं या आपस्तत्पानमस्थीन्येव श्रीस्तद्धि परिश्रिताꣳ रूपम्मज्जानो ज्योतिस्तद्धि यजुष्मतीनाꣳ रूपम्प्राणोऽमृतन्तद्ध्यग्ने रूपम्प्राणोऽग्निः प्राणोऽमृतमित्यु वा आहुः ॥ १८ ॥ अन्नाद्वा अशनाया निवर्त्तते । पानात्पिपासा श्रियै पाप्मा ज्योतिषस्तमोऽमृतान्मृत्युर्नि ह वा अस्मादेतानि सर्वाणि वर्त्तन्तेऽप पुनर्मृत्युञ्जयति सर्वमायुरेति य एवं वेद तदेतदमृतमित्येवामुत्रोपासीतायुरितीह प्राण इति हैक उपासते प्राणोऽग्निः प्राणोऽमृतमिति वदन्तो न तथा विद्याद्ध्रुवं वै तद्यत्प्राण'स्तन्ते विष्यास्म्यायुषो न मध्यादि'ति-

(१) शु० य० सं० अ० १२ क० ६५ ।

ह्यपि यजुषाऽभ्युक्तन्तस्मादेनदमृतमित्येवामुत्रोपासीतायुरितीह तथो ह स सर्वमायुरेति ॥ १९ ॥ (F)

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ गायत्र्यादि-सप्तच्छन्दसां वीर्यरूपत्वेन स्तुतिः ]

प्प्राणो गायत्री । चक्षुरुष्णिग्ग्वागनुष्टुम्मनो बृहतीऽश्श्रोत्रम्पङ्क्तिर्य्य ऽएवायम्प्रजननः प्प्राण ऽएष त्रिष्टुबथ यो ऽयमवाङ् प्प्राण ऽएष जगती तानि वा ऽएतानि सप्प्त च्छन्दाᳯसि चतुरुत्तराण्यग्ग्नौ क्क्रियन्ते ॥ १ ॥ प्प्राणो गायत्रीति । तद्य ऽएव प्प्राणस्य महिमा यद्द्वीर्य्यन्तदेतत्सहस्रम्प्राणस्यैवैतद्द्वीर्य्यँय्यद्ध्यस्य चिन्न्वतः प्प्राण ऽउत्क्रामेत्तत ऽएवैषोऽग्ग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष गायत्रीः सञ्चितो भवति ॥ २ ॥ चक्षुरुष्णिगिति । तद्य ऽएव चक्षुषो महिमा यद्द्वीर्य्यन्तदेतत्सहस्रञ्चक्षुष ऽएवैतद्द्वीर्य्यँय्यद्ध्यस्य चिन्न्वतश्चक्षुरुत्क्रामेत्तत ऽएवैषोऽग्ग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष ऽउष्णिहः सञ्चितो भवति ॥ ३ ॥ व्वागनुष्टुबिति । तद्य ऽएव व्वाचो महिमा यद्द्वीर्य्यन्तदेतत्सहस्रं व्वाच ऽएवैतद्द्वीर्य्यँय्यद्ध्यस्य चिन्न्वतो व्वागुत्क्रामेत्तत ऽएवैषोऽग्ग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेषोऽनुष्टुभः सञ्चितो

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. २. ५ ।

भवति ॥४॥ मनो बृहतीति । तद्य ऽएव मनसो महिमा यद्वद्वीरुर्षन्तदेतत्सहस्रम्मनस ऽएवैतद्वद्वीर्यँय्यद्ध्यस्य चिन्न्वतो मन ऽउत्क्रामेत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष बृहतीः सञ्चितो भवति ॥५॥ श्रोत्रम्पङ्क्तिरिति। तद्य ऽएव श्रोत्रस्य महिमा यद्वद्वीरुर्षन्तदेतत्सहस्रᳬं श्रोत्रस्यैवैतद्वद्वीरुर्षं य्यद्ध्यस्य चिन्न्वतः श्रोत्रमुत्क्रामेत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष पङ्क्तीः सञ्चितो भवति ॥ ६ ॥ यऽएवायम्प्रजननः प्प्राणः । एष त्रिष्टुबिति तद्य ऽएवैतस्य प्प्राणस्य महिमा यद्वद्वीरुर्षन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य व्वीरुर्षं य्यद्ध्यस्य चिन्न्वत ऽएष प्प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः सञ्चितो भवति ॥ ७ ॥ अथ योऽयमवाङ् प्प्राणः । एष जगतीति तद्य ऽएवैतस्य प्प्राणस्य महिमा यद्वद्वीरुर्षन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य व्वीरुर्षं य्यद्ध्यस्य चिन्न्वत ऽएष प्प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निनर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष जगतीः सञ्चितो भवति ॥ ८ ॥ तानि वा ऽएतानि । सप्त च्छन्दाᳬंसि चतुरुत्तराण्ण्यन्न्योऽन्न्यस्स्मिन्न्प्रतिष्ठितानि सप्तेमे पुरुषे प्प्राणा ऽअन्न्योऽन्न्यस्स्मिन्न्प्रतिष्ठितास्तद्यावन्तमेवँव्विच्छन्दसाङ्गण-मन्न्वाह च्छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो वोपहितो वा ॥ ९ ॥ (E)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. १।

[ वेदवादिप्रश्नोत्तराभ्यां शिरोग्रीवादीनां छन्दोमयत्वनिरूपणम् ]

तदाहुः । किञ्छन्दः का देवताग्नेः शिर इति गायत्री च्छन्दोऽग्निर्देवता शिरः ॥ १ ॥ किञ्छन्दः । का देवता ग्रीवा इत्युष्णिक्छन्दः सविता देवता ग्रीवाः ॥ २ ॥ किञ्छन्दः । का देवतानूकमिति बृहती च्छन्दो बृहस्पतिर्देवतानूकम् * ॥ ३ ॥ किञ्छन्दः । का देवता पक्षाविति बृहद्रथन्तरे च्छन्दो द्यावापृथिवी देवते पक्षौ ॥४॥ किञ्छन्दः का देवता मध्यमिति त्रिष्टुप्छन्द इन्द्रो देवता मध्यम् ॥ ५ ॥ किञ्छन्दः । का देवता श्रोणी इति जगती च्छन्द आदित्यो देवता श्रोणी ॥ ६ ॥ किञ्छन्दः । का देवता यस्मादिदम्प्राणाद्रेतः सिच्यत इत्यतिच्छन्दाश्छन्दः प्रजापतिर्देवता ॥ ७ ॥ किञ्छन्दः । का देवता योऽयमवाङ् प्राण इति यज्ञायज्ञियञ्छन्दो वैश्वानरो देवता ॥ ८ ॥ किञ्छन्दः । का देवतोरू इत्यनुष्टुप्छन्दो विश्वे देवा देवतोरू ॥ ९ ॥ किञ्छन्दः । का देवताष्ठीवन्ताविति पङ्क्तिश्छन्दो मरुतो देवताष्ठीवन्तौ (A) ॥ १० ॥ किञ्छन्दः । का देवता प्रतिष्ठे इति द्विपदा च्छन्दो विष्णुर्देवता प्रतिष्ठे ॥ ११ ॥ किञ्छन्दः । का देवता प्राणा इति विच्छन्दाश्छन्दो वायुर्देवता प्राणाः ॥ १२ ॥ किञ्छन्दः । का देवतोनातिरिक्तानीति न्यूनाक्षरा च्छन्द आपो देवतोनातिरिक्तानि सैषात्म-

* अनूकशब्दस्य पक्षयोर्मध्यदेहस्य सन्धिः ।
पुच्छमध्ययोश्च सन्धिरित्यर्थः ॥

( A ) ष्ठीवन्तौ जानुप्रदेशावित्यर्थः । सा० भा० ॥

विद्ययैवैतन्मयो हैवैता देवता ऽएतमात्मानमभिसम्भवति न हात्रान्या लोक्यताया ऽआशीरस्ति ॥ १३ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ धीरमहाशालनाम्नोर्महर्ष्योः प्रश्नप्रतिवचनाभ्यामग्नेः सर्वदेवतासमष्टिरूपप्राणवाग्व्यात्मकत्वप्रतिपादनम् ]

धीरो ह शातपर्णेयः । महाशालञ्जाबालमुपोत्ससाद तꣳ होवाच किम्मा विद्वानुपोदसद ऽइत्यग्निं वेदेति * कमग्निं वेत्थेति वाचमिति यस्तमग्निं वेद किꣳ स भवतीति वाग्मी भवतीति होवाच नैनं वाग्जहातीति ॥ १ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति चक्षुरिति यस्तमग्निं वेद किꣳ स भवतीति चक्षुष्मान्भवतीति होवाच नैनञ्चक्षुर्जहातीति ॥ २ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति मन ऽइति यस्तमग्निं वेद किꣳ स भवतीति मनस्वी भवतीति होवाच नैनम्मनो जहातीति ॥ ३ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति श्रोत्रमिति यस्तमग्निं वेद किꣳ स भवतीति श्रोत्रवान्भवतीति होवाच नैनꣳ श्रोत्रञ्जहातीति ॥४॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वानुपोदसद

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. २ ।

* सर्वत्र प्रश्नप्रतिवचनसमाप्तिद्योतका इतिशब्दाः ।

ऽइत्यग्निं वेदेति कमग्निं वेत्थेति य ऽएतत्सर्वमग्निस्तं वेदेति तस्मिन्न्होक्त ऽउपावरुरोहाधीहि भोस्तमग्निमिति ॥ ५ ॥ स होवाच । प्राणो वाव सोऽग्निर्यदा वै पुरुषः स्वपिति प्राणन्तर्हि वागप्येति प्राणञ्चक्षुः प्राणम्मनः प्राणꣳ श्रोत्रं यदा प्रबुध्यते प्राणादेवाधि पुनर्ज्जायन्त-ऽइत्यध्यात्मम् ॥ ६ ॥ अथाधिदेवतम् । या वै सा वागग्निरेव स यत्तच्चक्षुरसौ स ऽआदित्यो यत्तन्मन ऽएष स चन्द्रमा यत्तच्छ्रोत्रन्दिश ऽएव तदुथ यः स प्राणोऽयमेव स वायुर्योऽयम्पवते ॥ ७ ॥ यदा वा ऽअग्निरनुगच्छति । वायुन्तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुꣳ ह्यनूद्वाति यदादित्योऽस्तमेति वायुन्तर्हि प्रविशति वायुञ्चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्ज्जायन्ते स यदेवं विदस्माल्लोकात्प्रैति वाचैवाग्निमप्येति चक्षुषादित्यम्मनसा चन्द्रꣳ श्रोत्रेण दिशः प्राणेन वायुꣳ स ऽएतन्मय ऽएव भूत्वैतासान्देवतानां यांयाङ्कामयते सा भूत्वेलयति ॥ ८ ॥ (M)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अनेकैः प्रश्नप्रतिवचनैः पुरुषस्यार्करूपत्वेन स्तुतिः ]

श्वेतकेतुर्हारुणेयः । यक्ष्यमाण ऽआस तꣳ ह पितोवाच कानृत्विजोऽवृथा ऽइति स होवाचायन्न्वेव मे वैश्वा-

(१) "अग्निर्व्वाग्भूत्वा मुखं प्राविशद्" इति श्रुतेः । ऐ० उ० २ । ४ ।
(२) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२, ३, ३ ।

वसव्यो होतेति तꣳ ह पप्रच्छ वेत्थ ब्राह्मण वैश्श्वावसव्य ॥ १ ॥ चत्त्वारि महान्ती३ ऽइति। वेद भो३ ऽइति होवाच वेत्थ चत्त्वारि महताम्महान्ती३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्वारि व्रतानी३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्त्वारि व्रतानां व्रतानी३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्त्वारि क्क्यानी३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्त्वारि क्क्यानाङ्क्क्यानी३ इति वेद भो३ इति होवाच वेत्थ चतुरोऽर्क्कां३निति वेद भो३ ऽइति होवाच वेत्थ चतुरोऽर्क्काणामर्क्कां३निति-वेद भो३ ऽइति होवाच ॥ २ ॥ वेत्थार्क्कमिति। अथ वै नो भवान्न्वक्ष्यतीति वेत्थार्क्कपर्ण्णे ऽइत्त्यथ वै नो भवान्न्वक्ष्यतीति वेत्थार्क्कपुष्प्पे ऽइत्त्यथ वै नो भवान्न्वक्ष्यतीति वेत्थार्क्ककोश्श्यावित्त्यथ वै नो भवान्न्वक्ष्यतीति वेत्थार्क्कसमुद्गावित्त्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्कधाना ऽइत्त्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्काष्ठीलामित्त्यथ वै नो भवान्न्वक्ष्यतीति वेत्थार्क्कमूलमित्त्यथ वै नो भवान्न्वक्ष्यतीति ॥ ३ ॥ स ह वै यत्तदुवाच। वेत्थ चत्त्वारि महान्ति वेत्थ चत्त्वारि महताम्महान्तीत्त्यग्निर्म्महाँस्तस्य महतो महदोषधयश्श्च वनस्पतयश्श्च तद्ध्यस्यान्नं वायुर्म्महाँस्तस्य महतो महदापस्तद्ध्यस्यान्नमादित्त्यो महाँस्तस्य महतो महच्चन्द्रमास्तद्ध्यस्यान्नम्पुरुषो महाँस्तस्य महतो महत्पशवस्तद्ध्यस्यान्नमेतान्येव चत्त्वारि महान्त्येतानि चत्त्वारि

(१) कः प्रजापतिः, तस्मै हितानि क्यानि।

महताम्महान्त्येव चत्वारि व्रतान्न्येतानि चत्वारि व्रतानां व्रतान्न्येतान्न्येव चत्वारि वयान्न्येतानि चत्वारि वयानां वयान्न्येतऽएव चत्वारोऽर्क्का ऽएते चत्वारोऽर्क्काणामर्क्काः ॥ ४ ॥ अथ ह वै यत्तदुवाच व्वेत्थार्क्कमिति पुरुषꣳ हैव तदुवाच । व्वेत्थार्क्कपर्णे ऽइति कर्णौ हैव तदुवाच व्वेत्थार्क्कपुष्पे इत्यक्षिणी हैव तदुवाच व्वेत्थार्क्ककोश्यावितिनासिके हैव तदुवाच व्वेत्थार्क्कसमुद्गाविक्त्योष्ठौ हैव तदुवाच व्वेत्थार्क्कधाना ऽइति दन्तान्हैव तदुवाच व्वेत्थार्क्काष्ठीलामिति जिह्वाꣳ हैव तदुवाच व्वेत्थार्क्कमूलमित्यन्नꣳ हैव तदुवाच स ऽएषोऽग्निरर्क्को यत्पुरुषः स यो हैतमेवमग्निमर्क्कम्पुरुषमुपास्तेऽयमहमग्निरर्क्कोऽस्मीति व्विद्यया हैवास्यैषऽआत्मन्नग्निरर्क्कश्चितो भवति ॥ ५ ॥ (A)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ यजुषो विधायकब्राह्मणयोर्निर्वचनम् ]

( तत्राधिदैवाध्यात्मभेदेनार्थप्रतिपादनम्, उपनिषदः स्तुतिः, तत्स्वरूपनिर्वचनादि, उपांश्वनुष्ठानप्रतिपादनं च )

अयं व्वाव यजुर्योऽयम्पवते । एष हि यन्नेवेदꣳ सर्व्वञ्जनयत्येतं यन्तमिदमनु प्प्रजायते तस्माद्वायुरेव यजुः ॥ १ ॥ अयमेवाकाशो जूः । यदिदमन्तरिक्षमेतꣳ ह्याकाशमनु जवते तदेतद्यजुर्व्वायुश्चान्तरिक्षञ्च यच्च जूश्च तस्माद्यजुरेष ऽएव यदेष ह्येति तदेतद्यजुर्ऋक्सामयोः

---

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ४. ४ ।

प्प्रतिष्ठितमृक्क्सामे वहतस्तस्म्मात्समानैरेवाद्ध्वर्युर्ग्ग्रहैः कर्म्म करोत्यन्न्यान्न्यन्न्यानि स्तुतशस्त्राणि भवन्ति यथा पूर्व्वाभ्याᳬं स्यत्त्वापराभ्यान्धावयेत्तादृक्तत् ॥ २ ॥ अग्निरेव पुरः । अग्निः हि पुरस्कृत्येमाः प्रजा उपासत आदित्य एव चरणं यदा ह्येवैष उदेत्यथेदः सर्व्वञ्चरति तदेतद्यजुः सपुरश्चरणमधिदेवतम् ॥ ३ ॥ अथाद्ध्यात्मम् । प्प्राण एव यजुः प्प्राणो हि यन्नेवेदः सर्व्वञ्जनयति प्प्राणं यन्तमिदमनु प्प्रजायते तस्म्मात्प्राण एव यजुः ॥ ४ ॥ अयमेवाकाशो जूः । योऽयमन्तरात्मन्नाकाश एतᳬं ह्याकाशमनु जवते तदेतद्यजुः प्प्राणश्चाकाशश्च यच्च जूश्च तस्म्माद्यजुः प्प्राण एव यत्प्राणो ह्येति ॥ ५ ॥* अन्नमेव यजुः । अन्नेन हि जायतेऽन्नेन जवते तदेतद्यजुरन्ने प्प्रतिष्ठितमन्नँ वहति तस्म्मात्समान एव प्प्राणेऽन्न्यदन्न्यदन्नन्धीयते ॥ ६ ॥ मन एव पुरः । मनो हि प्प्रथमम्प्प्राणानाञ्चक्षुरेव चरणञ्चक्षुषा ह्ययमात्मा चरति तदेतद्यजुः सपुरश्चरणमधिदेवतञ्चाद्ध्यात्मञ्च प्प्रतिष्ठितः स यो हैतदेवं यजुः सपुरश्चरणमधिदेवतञ्चाद्ध्यात्मञ्च प्प्रतिष्ठितं वेद ॥ ७ ॥ अरिष्टो हैवानार्त्तः । स्वस्ति यज्ञस्योदृचमश्नुतेऽथो[२] स्वानाᳬं श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद ॥ ८ ॥ य उ हैवँविदᳬं स्वेषु प्प्रतिप्प्रति-

(१) 'ज' पुस्तके 'स्यत्वा' इत्यत्र 'स्यन्त्वा' इति पाठो दृश्यते । स तु न समीचीनः, 'स्यन्दू' प्रस्रवणे इत्यस्मात्, क्त्वा प्रत्यये, उदित्वादिडभावपक्षे 'क्त्वि स्कन्दिस्यन्दोः' (पा० ६।४।३१) इति नकारलोपात् ।

* अत्र शतम् ५३०० ।

(२) 'ज' पुस्तके 'ऽथो' नास्ति ।

र्व्बुभूषति न हैवालम्भार्य्येभ्यो भवत्यथ य ऽएवैतमनुभवति यो वै तमनु भार्य्यान्बुभूर्षति स हैवालम्भार्य्येभ्यो भवति ॥ ९ ॥ तदेतज्ज्येष्ठम्ब्रह्म । न ह्येतस्मात्किञ्चन ज्यायोऽस्ति ज्येष्ठो ह वै श्रेष्ठः स्वानाम्भवति य ऽएवं वेद ॥ १० ॥ तदेतद्ब्रह्मापूर्वमपरवत् । स यो हैतदेवम्ब्रह्मापूर्वमपरवद्वेद न हास्मात्कश्चन श्रेयान्त्समानेषु भवति श्रेयाᳬंसः श्रेयाᳬंसो हैवास्मादपरपुरुषा जायन्ते तस्माद्योऽस्माज्ज्यायान्त्स्याद्दिशोऽस्मात्पूर्वा ऽइत्युपासीत तथो हैनन्न हिनस्ति ॥ ११ ॥ तस्य वा ऽएतस्य यजुषः । रस ऽएवोपनिषत्तस्माद्यावन्मात्रेण यजुषाद्ध्वर्य्युर्ग्ग्रहङ्गृह्णाति स ऽउभे स्तुतशस्त्रे ऽअनुविभवत्युभे स्तुतशस्त्रे ऽअनुव्व्यश्नुते तस्माद्यावन्मात्रऽइवान्नस्य रसः सर्वमन्नमवति सर्वमन्नमनुव्व्येति ॥ १२ ॥ तृप्तिरेवास्य गतिः । तस्माद्यदान्नस्य तृप्यत्यथ स गत ऽइव मन्यत ऽआनन्द ऽएवास्य विज्ञानमात्मानन्दात्मानो हैव सर्वे देवाः सा हैषैव देवानामद्धाविद्या स ह स न मनुष्यो य ऽएवंविद्देवानाᳬं हैव स एकः ॥ १३ ॥ एतद्ध स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन ऽआह । वायुं वान्तमानन्दस्त ऽआत्मेतो वा वाहीतो वेति स ह स्म तथैव वाति तस्माद्यान्देवेष्वाशिषमिच्छेदेतेनैवोपतिष्ठेतानन्दो व ऽआत्मासौ मे कामः स मे समृद्ध्यतामिति सᳬं हैवास्मै स काम ऽऋद्ध्यते यत्कामो भवत्येताᳬं ह वै तृप्तिमेताङ्गतिमेतमानन्दमेतमात्मानमभिसम्भवति य ऽएवं वेद

॥ १४ ॥ तदेतद्यजुरुपाᳫँशुनिरुक्तम् । प्प्राणो वै यजुरुपाᳫँश्वायतनो वै प्प्राणस्तद्य ऽएनन्निर्ब्रुवन्तम्ब्रूयादनिरुक्तान्देवतान्निरवोचत्प्राण ऽएनᳫँ हास्यतीति तथा हैव स्यात् ॥ १५ ॥ तस्य ह यो निरुक्तमाविर्भावं वेद । आविर्भवति कीर्त्या यशसोपाᳫँशु यजुषाद्ग्रहङ्गृह्णाति गृहीतᳫँ सन्न ऽआविर्भवत्युपाᳫँशु यजुषाग्निञ्चिनोति चितᳫँ सञ्चित ऽआविर्भवत्युपाᳫँशु यजुषा हविर्निर्वपति शृतन्निष्ठितमाविर्भूत्येवं स्यात्क्रियोपाᳫँशु करोति कृतन्निष्ठितमाविर्भवति तस्य ह य ऽएतमेवन्निरुक्तमाविर्भावं वेदाविर्भवति कीर्त्या यशसा ब्रह्मवर्चसेन क्षिप्प्र ऽउ हैवाविदङ्गच्छति स ह यजुरेव भवति यजुषैनमाचक्षते ॥१६॥(B)

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ प्रजापतेर्भोक्तृत्वमाहवनीयरूपत्वम्, रुक्मपुरुषयोरिन्द्राग्न्यात्मना स्तुत्यादिकञ्च ]

प्प्रजापतिं विस्रस्तम् । यत्र देवाᳫँ समस्कुर्वँस्तमुखायां य्योनौ रेतो भूतमसिञ्चन्योनिर्वा ऽउखा तस्मा ऽएतᳫँ संवत्सरे ऽन्नᳫँ समस्कुर्वन्योऽयमग्निश्चितस्तदात्मना पर्य्यदधुस्तदात्मना परिहितमात्मैवाभवत्तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ १ ॥ तथैवैतद्यजमानᳫँ । आत्मा-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ३. ५।

नमुखायां ह्योनौ रेतो भूतᳪ सिञ्चति योनिर्वा ऽउखा तस्मा ऽएतत्संवत्सरेऽन्नᳪ संस्करोति योऽयमग्निश्चित-स्तदात्मना परिदधाति तदात्मना परिहितमात्मैव भवति तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ २ ॥ तन्नि-दधाति । वौषडिति वौगिति वा ऽएष षडितीदᳪ षट्चिति-कमन्नङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं ह्यद्‌ वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ ३ ॥ स ऽएष ऽएवार्कः । यमे-तमत्राग्निमाहरन्ति तस्यैतदन्नङ्क्यं यो ऽयमग्निश्चित-स्तदुक्थ्यं यजुष्टु ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्म-हाव्रतᳪ सामत ऽएष ऽउ ऽएवोक्थस्यैतदन्नन्थन्तदुक्थ-मृक्कस्तदेतदेकᳪ स त्रेधा ख्यायते ॥ ४ ॥ अथेन्द्राग्नी वा ऽअसृज्येताम् । ब्रह्म च क्षत्रञ्चाग्निरेव ब्रह्मेन्द्रᳪ क्षत्रन्तौ सृष्टौ नानैवास्तान्तावब्रूतान्न वा ऽइत्थᳪ सन्तौ शक्ष्यावः प्रजाः प्रजनयितुमेकᳪ रूपमुभावसावेति तावेकᳪ रूपमुभावभवताम् ॥ ५ ॥ तौ यौ ताविन्द्राग्नी । एतौ तौ रुक्मश्च पुरुषश्च रुक्म ऽएवेन्द्रः पुरुषोऽग्निस्तौ हिरण्मयौ भवतो ज्योतिर्वै हिरण्यञ्ज्योतिरिन्द्राग्नी ऽअमृतᳪ हिरण्यममृतमिन्द्राग्नी ॥ ६ ॥ तावेताविन्द्राग्नी ऽएव चिन्वन्ति । यद्धि किञ्चेष्टकमग्निरेव तत्तस्मात्त-दग्निना पचन्ति यद्धि किञ्चाग्निना पचन्त्यग्निरेव तदथ यत्पुरीषᳪ स ऽइन्द्रस्तस्मात्तदग्निना न पचन्ति नेदग्नि-रेवासन्नेन्द्र ऽइति तस्मादेताविन्द्राग्नी ऽएव चितौ ॥ ७ ॥

अथ यश्चितेऽग्निर्निधीयते । तदेकꣳ रूपमुभौ भवतस्त-स्मात्तावेतेनैव रूपेणेमाः प्रजाः प्रजनयतः सैषैकैवेष्ट-काग्निरेव तामेष सर्वोऽग्निरभिसम्पद्यते सैवेष्टकासम्पत्त-देतदेकमेवाक्षरं वौगिति तदेष सर्वोऽग्निरभिसम्पद्यते सैवाक्षरसम्पत् ॥ ८ ॥ तद्धैतत्पश्यन्नृषिरभ्यनूवाद । भूत-म्भविष्यत्प्रस्तौमि महद्ब्रह्मैकमक्षरम्बहु ब्रह्मैकमक्षरमित्त्ये-तद्ध्येवाक्षरꣳ सर्वे देवाः सर्वाणि भूतान्न्यभिसम्पद्यन्ते तदेतद्ब्रह्म च क्षत्रञ्चाग्निरेव ब्रह्मेन्द्रः क्षत्रमिन्द्राग्नी वै विश्वे देवा विडु विश्वे देवास्तदेतद्ब्रह्म क्षत्रं विट् ॥ ९ ॥ एतद्ध स्म वै तद्विद्वाञ्छ्यापर्णः सायका-यन ऽआह । यद्वै मऽइदङ्कर्म्म समाप्स्यत ममैव प्रजा सल्वानाꣳ राजानोऽभविष्यन्मम ब्राह्मणा मम वैश्या यत्तु मऽएतावत्कर्म्मणः समापि तेन मऽउभयथा सल्वान्प्रजातिरेक्ष्यतऽइति स ऽएष ऽएव श्रीरेष यश ऽएषोऽन्नादः ॥ १० ॥ एतद्ध वै तच्छा-ण्डिल्यः । वामकक्षायणाय प्रोच्योवाच श्रीमान्यशस्व्य-न्नादो भविष्यसीति श्रीमान्ह वै यशस्व्यन्नादो भवति य ऽएवं वेद ॥ ११ ॥ स ऽएषोऽग्निः प्रजापतिरेव । ते देवा ऽएतमग्निम्प्रजापतिꣳ सꣳस्कृत्याथास्मा ऽएतत्संव-त्सरेऽन्नꣳसमस्कुर्वꣳस्य ऽएष महाव्रतीयो ग्रहः B ॥ १२ ॥ तमद्भ्यश्चतुर्ग्रहेण गृह्णाति । यद्गृह्णाति तस्माद् ग्रहस्त-

B कात्यायनमहर्षिणापि महाव्रतैकनियतग्रहणं सूत्रितम्, 'महाव्रतमग्निष्टोमः' 'प्राजापत्य उपालम्भ्यः' 'ग्रहं गृह्णाति "विन ऽइन्द्र" वाचस्पतिं विश्वकर्मन्निति" वा', का० श्रौ० सू० अ० १३ । कं० २ सू० २१, २२, २३ ।

स्मिन्नुद्गाता महाव्रतेन रसन्दधाति सर्वाणि हैतानि सामानि यन्महाव्रतन्तदस्मिन्त्सर्वैः सामभी रसन्दधाति तस्मिन्होता महतोक्थेन रसन्दधाति सर्वा हैता ऽऋचो यन्महदुक्थन्तदस्मिन्त्सर्वाभिर्ऋग्भी रसन्दधाति ॥ १३ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं व्वषट्कृते जुहोति व्वौगिति वा ऽएष षडितीदꣳ षड्विधमन्नङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं यद्वु वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १४ ॥ स ऽएष ऽएवार्क्कः । योऽयमग्निश्चितस्तस्यैतदन्नङ्क्यमेष महाव्रतीयो ग्रहस्तदुक्थं यजुष्ट ऽएष ऽएव महाꣳस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्थस्यैतदन्नं* थन्तदुक्थमृक्तस्तदेतदेकꣳ स त्रेधा ख्यायते ॥ १५ ॥ स ऽएष संवत्सरः प्रजापतिरग्निः । तस्यार्द्धमेव साविस्त्राण्यर्द्धं वैश्वकर्म्मणान्यष्टावेवास्य कलाः साविस्त्राण्यष्टौ वैश्वकर्म्मणान्यथ यदेतदन्तरेण कर्म्म क्रियते स ऽएव सप्तदशः प्रजापतिर्यो वै कला मनुष्याणामक्षरन्तद्देवानाम् ॥ १६ ॥ तद्वै लोमेति द्वे ऽअक्षरे । त्वगिति द्वे ऽअसृगिति द्वे मेद ऽइति द्वे माꣳसमिति द्वे स्नावेति द्वे ऽअस्थीति द्वे मज्जेति द्वे ताः षोडश कला ऽअथ य ऽएतदन्तरेण प्राणः सञ्चरति स ऽएव सप्तदशः प्रजापतिः ॥ १७ ॥ तस्मा ऽएतस्मै प्राणाय । एताः षोडश कला ऽअन्नमभिह-

* 'ग-ज' पुस्तकयोः 'एवोक्तदन्नं' इति पाठः समुपलभ्यते ।

रन्ति ता यदानभिहर्तुन्म्रियन्तेऽथैता ऽएव जग्ध्वोत्क्रामति तस्माद्ध हैतदशिशिषतस्तृप्रमिव भवति प्राणैरद्यमानस्य तस्माद्ध हैतदुपतापी कृश ऽइव भवति प्राणैर्हि जग्धो भवति ॥ १८ ॥ तस्मा ऽएतस्मै सप्तदशाय प्रजापतये । एतत्सप्तदशमन्नꣳ समस्कुर्वन्य ऽएष सौम्योऽध्वरोऽथ या ऽअस्य ताः षोडश कला ऽएते ते षोडशर्त्विजस्तस्मान्न सप्तदशमृत्विजङ्कुर्वीत नेदतिरेचयानीत्यथ य ऽएवात्र रसो या ऽआहुतयो हूयन्ते तदेव सप्तदशमन्नम् ॥ १९ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं वषट्कृते जुहोति वौगिति वा ऽएष षडितीदꣳ षड्विधमन्नङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं यद्वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ २० ॥ स ऽएष ऽएवार्कः । योऽयमग्निश्चितस्तस्यैतदन्नङ्क्यमेष सौम्योऽध्वरस्तदुक्क्यꣳ यजुष्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्थस्यैतदन्नन्थन्तदुक्थमृक्तस्तदेतदेकꣳ स त्रेधा ख्यायते स ऽएतेनान्नेन सहोर्द्ध्व ऽउदक्रामत्स यः स ऽउदक्रामदसौ स ऽआदित्योऽथ येन तेनान्नेन सहोदक्रामदेष स चन्द्रमाः ॥ २१ ॥ स ऽएष ऽएवार्को य ऽएष तपति । तस्यैतदन्नङ्क्यमेष चन्द्रमास्तदुक्क्यꣳ यजुष्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष

(१) "षोडशर्त्विजो ब्रह्मोद्गातृ-होत्रध्वर्यु-ब्राह्मणाच्छꣳसि-प्रस्तोतृ-मैत्रावरुण-प्रतिप्रस्थातृ-पोतृ-प्रतिहर्त्रच्छावाक-नेष्ट्रग्नीत्-सुब्रह्मण्य-ग्रावस्तदुन्नेतॄन् वृणीते" का० श्रौ० सू० ७. १. ७।

ऽउ ऽएवोक्क्तस्यैतदुन्नन्थन्तदुक्क्थमृक्कस्तदेतदेकꣳ स त्रेधा ख्यायत ऽइत्यधिदेवतम् ॥ २२ ॥ अथाद्ध्यात्मम् । प्प्राणो वा ऽअर्क्कस्तस्यान्नमेव क्कयन्तदुक्क्यँ रुषज्जुष्टꣳ प्प्राण ऽएव महाँस्तस्यान्नमेव व्रतन्तन्महाव्रतꣳ सामतꣳ प्प्राण ऽउ ऽएवोक्क्तस्यान्नमेव थन्तदुक्क्थमृक्कस्तदेतदेकꣳ स त्रेधा ख्यायते स ऽएष ऽएवैषोऽधिदेवतमयमद्ध्यात्मम् ॥ २३ ॥ (B)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०९ ॥



सँवत्त्सरो वै प्प्रजापतिरग्निꣳ । सोमो राजा चन्द्रमाꣳ स ह स्वयमेवात्मानम्प्रोचे यज्ञवचसे राजस्तम्बायनाय यावन्ति वाव मे ज्योतीꣳषि तावत्त्यो मऽइष्टका इति ॥ १ ॥ तस्य वा ऽएतस्य सँवत्सरस्य प्प्रजापतेꣳ । सप्त च शतानि विꣳशतिश्चाहोरात्राणि ज्योतीꣳषि ता ऽइष्टकाꣳ षष्टिश्च त्रीणि च शतानि परिश्रितꣳ षष्टिश्च त्रीणि च शतानि यजुष्मत्यꣳ सोऽयꣳ सँवत्त्सरꣳ प्प्रजापतिꣳ सर्वाणि भूतानि ससृजे यच्च प्प्राणि यच्चाप्प्राणमुभयान्देवमनुष्यान्त्स सर्वाणि भूतानि सृष्ट्वा रिरिचान ऽइव मेने स मृत्योर्बिभयाञ्चकार ॥ २ ॥ स हेक्षाञ्चक्रे । कथ-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० ब्रा० १२. ४. १।

न्न्वहमिमानि सर्वाणि भूतानि पुनरात्मन्नावपेय पुनरात्मन्दधीय कथन्न्वहमेवैषाथं सर्वेषाम्भूतानाम्पुनरात्मा स्यामिति ॥ ३ ॥ स द्वेधात्मानं व्व्यौहत् । षष्टिश्च त्रीणि च शतान्न्यन्न्यतरस्येष्टका ऽअभवन्नेवमन्न्यतरस्य स न व्व्याप्नोत् ॥ ४ ॥ त्रीनात्मनोऽकुरुत । तिस्रस्तिस्रोऽशीतय ऽएकैकस्येष्टका ऽअभवन्त्स नैव व्व्याप्नोत् ॥ ५ ॥ चतुर ऽआत्मनोऽकुरुत । अशीतिशतेष्टकान्त्स नैव व्व्याप्नोत् ॥ ६ ॥ पञ्चात्मनोऽकुरुत । चतुश्चत्वारिꣳशꣳशतमेकैकस्येष्टका ऽअभवन्त्स नैव व्व्याप्नोत् ॥ ७ ॥ षडात्मनोऽकुरुत । विꣳशतिशतेष्टकान्त्स नैव व्व्याप्नोन्न सप्तधा व्व्यभवत् ॥ ८ ॥ अष्टावात्मनोऽकुरुत । नवतीष्टकान्त्स नैव व्व्याप्नोत् ॥ ९ ॥ नवात्मनोऽकुरुत । अशीतीष्टकान्त्स नैव व्व्याप्नोत् ॥ १० ॥ दशात्मनोऽकुरुत । द्वासप्ततीष्टकान्त्स नैव व्व्याप्नोन्नैकादशधा व्व्यभवत् ॥ ११ ॥ द्वादशात्मनोऽकुरुत । षष्टीष्टकान्त्स नैव व्व्याप्नोन्न त्रयोदशधा व्व्यभवन्न चतुर्द्दशधा ॥ १२ ॥ पञ्चदशात्मनोऽकुरुत । अष्टाचत्वारिꣳशदिष्टकान्त्स नैव व्व्याप्नोत् ॥ १३ ॥ षोडशात्मनोऽकुरुत । पञ्चचत्वारिꣳशदिष्टकान्त्स नैव व्व्याप्नोन्न सप्तदशधा व्व्यभवत् ॥ १४ ॥ अष्टादशात्मनोऽकुरुत । चत्वारिꣳशदिष्टकान्त्स नैव व्व्याप्नोन्नैकान्नविꣳशतिधा व्व्यभवत् ॥ १५ ॥ विꣳशतिमात्मनोऽकुरुत । षट्त्रिꣳशदिष्टकान्त्स नैव व्व्याप्नोन्नैक-

विꣳशतिधा व्यभवन्न द्वाविꣳशतिधा न त्रयोविꣳशतिधा ॥ १६ ॥ चतुर्विꣳशतिमात्मनोऽकुरुत । त्रिꣳशदिष्टकान्त्सोऽत्रातिष्ठत पञ्चदशे व्यूहे तद्यत्पञ्चदशे व्यूहेऽतिष्ठत तस्मात्पञ्चदशापूर्य्यमाणस्य रूपाणि पञ्चदशापक्षीयमाणस्य ॥ १७ ॥ अथ यच्चतुर्विꣳशतिमात्मनोऽकुरुत । तस्माच्चतुर्विꣳशत्यर्द्धमासः सँवत्सरः स एतैश्चतुर्विꣳशत्या त्रिꣳशदिष्टकैरात्मभिर्न व्यभवत्स पञ्चदशाह्नो रूपाण्यपश्यदात्मनस्तन्वो मुहूर्त्ताँल्लोकम्पृणाः पञ्चदशैव रात्रेस्तद्यन्मुहु त्रायन्ते तस्मान्मुहूर्त्ता अथ यत्क्षुद्राः सन्त इमाँल्लोकानापूरयन्ति तस्माल्लोकम्पृणाः ॥ १८ ॥ एष वा इदꣳ सर्वम्पचति । अहोरात्रैरर्द्धमासैर्म्मासैर्ऋतुभिः सँवत्सरेण तदमुना पक्वमयम्पचति पक्वस्य पक्तेति ह स्माह भारद्वाजोऽग्निममुना हि पक्वमयम्पचतीति ॥ १९ ॥ तानि सँवत्सरे । दश च सहस्राण्यष्टौ च शतानि समपद्यन्त सोऽत्रातिष्ठत दशसु च सहस्रेष्वष्टासु च शतेषु ॥ २० ॥ अथ सर्वाणि भूतानि पर्य्यैक्षत् । स त्रय्यामेव विद्यायाꣳ सर्वाणि भूतान्यपश्यदत्र हि सर्वेषाञ्छन्दसामात्मा सर्वेषाꣳ स्तोमानाꣳ सर्वेषाम्प्राणानाꣳ सर्वेषान्देवानामेतद्वा अस्त्येतद्ध्यमृतं यद्ध्यमृतन्तद्ध्यस्त्येतदु तद्यन्मर्त्यम् ॥ २१ ॥ स ऐक्षत प्रजापतिः । त्रय्यां वाव विद्यायाꣳ सर्वाणि भूतानि हन्त त्रयीमेव विद्यामात्मानमभिसंस्करवा इति ॥ २२ ॥ स ऋचो व्यौहत् । द्वादश बृहतीसहस्राण्येतावत्यो हर्चो

याः प्प्रजापतिसृष्टास्तास्त्रिꣳशत्तमे व्व्यूहे पङ्क्तिष्ष्वतिष्ठन्त ता यस्त्रिꣳशत्तमे व्व्यूहेऽतिष्ठन्त तस्मात्रिꣳशन्मासस्य रात्र्योऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः* प्रजापतिस्ता ऽअष्टाशतꣳ शतानि पङ्क्तयोऽभवन् ॥ २३ ॥ अथेतरौ व्वेदौ व्व्यौहत् । द्वादशैव बृहतीसहस्राण्ण्यष्टौ यजुषाञ्चत्वारि साम्न्नामेतावद्धैतयोर्व्वेदयोर्य्यत्प्रजापतिसृष्टन्तौ त्रिꣳशत्तमे व्व्यूहे पङ्क्तिष्ष्वतिष्ठेतान्तौ यस्त्रिꣳशत्तमे व्व्यूहेऽतिष्ठेतान्तस्मात्रिꣳशन्मासस्य रात्र्योऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः प्रजापतिस्ता ऽअष्टाशतमेव शतानि पङ्क्तयोऽभवन् ॥ २४ ॥ ते सर्व्वे त्रयो व्वेदाः । दश च सहस्राण्ण्यष्टौ च शतान्न्यशीतीनामभवन्त्स मुहूर्त्तेन-मुहूर्त्तेनैवाशीतिमाप्प्नोन्न्मुहूर्त्तेन-मुहूर्त्तेनाशीतिः समपद्यत ॥ २५ ॥ स ऽएषु त्रिषु लोकेषूखायाम् । योनौ रेतो भूतमात्मानमसिञ्चच्छन्दोमयꣳ स्तोममयम्प्राणमयन्देवतामयन्तस्यार्द्धमासे प्प्रथम ऽआत्मा समस्क्रियत दुवीयसि परो दुवीयसि परः सँवत्सर ऽएव सर्व्वः कृत्स्न्नः समस्क्रियत ॥ २६ ॥ तद्यत्परिश्रिश्रितमुपाधत्त । तद्रात्रिमुपाधत्त तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्ताननु पञ्चदशाशीतीरथ यद्यजुष्मतीमुपाधत्त तदहरुपाधत्त तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्ताननु पञ्चदशाशीतीरेवमेतान्त्रयीं विद्यामात्मन्नावपतात्मन्नकुरुत सोऽत्रैव सर्व्वेषाम्भूतानामात्माभवच्छन्दोमय स्तोममयः प्राणमयो देवतामयः स ऽएतन्मय ऽएव

* पाङ्क्तत्वं नाम पञ्चसंख्यावत्वम्, पञ्चपदा पङ्क्तिरिति संख्यासाम्यात्' प्रजापतेर्लोमत्वङ्मांसास्थिमज्जात्मानः पञ्चचितय इति षष्ठ प्रतिपादितम् । (१) 'ग' 'ज' पुस्तकयोः 'नाशी॰'

भूत्वोर्द्ध्व ऽउदक्क्रामत्स यः स ऽउदक्क्रामदेष स चन्द्रमाः ॥ २७ ॥ तस्यैषा प्रतिष्ठा । य ऽएष तपत्येतस्मा-देवाध्यचीयतैतस्मिन्नध्यचीयतात्मन ऽएवैनन्तन्निरमि-मीतात्मनः प्राजनयत् ॥ २८ ॥ स यदग्निञ्चेष्यमाणो दीक्षते । यथैव तत्प्रजापतिरेषु त्रिषु लोकेषूखायां योनौ रेतो भूतमात्मानमसिञ्चदेवमेवैष ऽएतदात्मानमुखायां योनौ रेतो भूतꣳ सिञ्चति च्छन्दोमयꣳ स्तोममयम्प्राण-मयन्देवतामयन्तस्यार्द्धमासे प्रथम ऽआत्मा संस्क्रियते दवी-यसि परो दवीयसि परः सँवत्सर ऽएव सर्वः कृत्स्नः संस्क्रि-यते ॥ २९ ॥ तद्यत्परिश्रितमुपधत्ते । तद्रात्रिमुपधत्ते तदनु पञ्चदश मुहूर्त्तान्मूहूर्त्तानु पञ्चदशाशीतीरथ यद्यजुष्मती-मुपधत्ते तदहरुपधत्ते तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्तानु पञ्च-दशाशीतीरेवमेतान्त्रयीं विद्यामात्मन्नावपत ऽआत्मन्कुरुते सोऽत्रैव सर्वेषाम्भूतानामात्मा भवति च्छन्दोमय स्तोम-मयः प्राणमयो देवतामयः स ऽएतन्मय ऽएव भूत्वोर्द्ध्व ऽउत्क्रामति ॥ ३० ॥ तस्यैषा प्रतिष्ठा । य ऽएष तपत्ये-तस्मादेवाधिचीयत ऽएतस्मिन्नधिचीयत ऽआत्मन ऽएवै-नन्तन्निर्मिमीत ऽआत्मनः प्रजनयति स यदेवंविदस्माल्लो-कात्प्रैत्यथैतमेवात्मानमभिसम्भवति च्छन्दोमयꣳ स्तोमम-यम्प्राणमयन्देवतामयꣳ स ऽएतन्मय ऽएव भूत्वोर्द्ध्व ऽउत्क्रा-मति य ऽएवं विद्वानेतत्कर्म्म कुरुते यो वैतदेवं वेद ॥३१॥(E)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. ४. २ ।

[ संवत्सररूपप्रजापतेर्मृत्य्वन्तरूपत्वम्, तद्रूपोपासनस्य फलम्, अग्निचयनस्यामृतलक्षणं फलं, परिश्रिद्यजुष्मती-लोकम्पृणेष्टकानां संख्या च ]

एष वै मृत्युर्यत्सँवत्सरः। एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोत्यथ म्रियन्ते तस्मादेष एव मृत्युः स यो हैतम्मृत्युꣳ सँवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुः क्षिणोति सर्वꣳ हैवायुरेति ॥ १ ॥ एष उ एवान्तकः। एष हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तङ्गच्छत्यथ म्रियन्ते तस्मादेष एवान्तकः स यो हैतमन्तकम्मृत्युꣳ सँवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुषोऽन्तङ्गच्छति सर्वꣳ हैवायुरेति ॥ २ ॥ ते देवाः। एतस्मादन्तकान्मृत्योः सँवत्सरात्प्रजापतेर्बिभयाञ्चक्रुर्यद्वै नोऽयमहोरात्राभ्यामायुषोन्तन्न गच्छेदिति ॥ ३ ॥ त एतान्यज्ञक्रतूँस्तेनिरे। अग्निहोत्रन्दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धꣳ सौम्यमध्वरन्त एतैर्यज्ञक्रतुभिर्यजमानानामृतत्त्वमानशिरे ४ ते हाप्यग्निञ्चिक्यिरे। तेऽपरिमिता एव परिश्रित उपदधुरपरिमिता यजुष्मतीरपरिमिता लोकम्पृणा यथेदमप्येतर्ह्येक उपदधतीति देवा अकुर्वन्निति ते ह नैवामृतत्त्वमानशिरे ॥ ५ ॥ तेऽर्चन्तः श्राम्यन्तश्चेरुः। अमृतत्त्वमवरुरुत्समाना[1]स्तान्ह प्रजापतिरुवाच न वै मे सर्वाणि रूपाण्युपधत्ते[2]ति वैव रेचयथ न वाभ्यापयथ तस्मान्नामृता भवथेति ॥ ६ ॥ ते होचुः। तेभ्यो वै

(१) अवरोद्धुकामाः। (२) 'ग' 'ज' पुस्तकयोः 'धत्था' इति पाठः समुपलभ्यते।

नस्त्वमेव तद् ब्रूहि यथा ते सर्वाणि रूपाण्युपदधामेति ॥७॥
स होवाच । षष्टिश्च त्रीणि च शतानि परिश्रित उप-
पधत्त षष्टिश्च त्रीणि च शतानि यजुष्मतीरधि षट्त्रिंश-
शतमथ लोकम्पृणा दश च सहस्राण्यष्टौ च शतान्युप-
धत्ताथ मे सर्वाणि रूपाण्युपधास्यथाथामृता भविष्य-
थेति ते ह तथा देवा उपदधुस्ततो देवा अमृता आसुः
॥ ८ ॥ स मृत्युर्देवानब्रवीत् । इत्थमेव सर्वे मनुष्या
अमृता भविष्यन्त्यथ को मह्यम्भागो भविष्यतीति ते
होचुर्नातोऽपरः कश्चन सह शरीरेणामृतोऽसद्यदैव त्वमेत-
म्भागः हरासा अथ व्यावृत्य शरीरेणामृतोऽसद्योऽमृतो-
ऽसद्विद्यया वा कर्म्मणा वेति यद्वै तदब्रुवन्विद्यया वा
कर्म्मणा वेत्येषा हैव सा विद्या यदग्निरेतदु हैव तत्कर्म्म
यदग्निः ॥ ९ ॥ ते य एवमेतद्विदुः । ये वैतत्कर्म्म
कुर्वते मृत्वा पुनः सम्भवन्ति ते सम्भवन्त एवामृतत्व-
मभिसम्भवन्त्यथ य एवन्न विदुर्ये वैतत्कर्म्म न कुर्वते
मृत्वा पुनः सम्भवन्ति त एतस्यैवान्नम्पुनः पुनर्भवन्ति
॥ १० ॥ स यदग्निञ्चिनुते । एतमेव तदन्तकम्मृत्युः
सँवत्सरम्प्रजापतिमग्निमाप्नोति यन्देवा आप्नुवन्नेत-
मुपधत्ते यथैवैनमदो देवा उपादधत ॥ ११ ॥ परिश्रि-
द्भिरेवास्य रात्रीराप्नोति । यजुष्मतीभिरहान्यर्द्धमासान्मा-
सानृतूँल्लोकम्पृणाभिर्मुहूर्त्तान् ॥ १२ ॥ तद्याः परिश्रितः ।
रात्रिलोकास्ता रात्रीणामेव साप्तिः क्रियते रात्रीणाम्प्रतिमा
ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै

त्रीणि च शतानि सँव्वत्सरस्य रात्रयस्तासामेकविꣳशतिङ्गार्हपत्ये परिश्रयति द्वाभ्यान्नाशीतिन्धिष्ण्येषु द्वे ऽएकषष्टे शते ऽआहवनीये ॥ १३ ॥ अथ यजुष्मत्यो दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णꣳ रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतः सिचौ विश्वज्योतिर्ऋतव्ये ऽअषाढा कूर्म्म ऽउलूखलमुसले ऽउखा पञ्च पशुशीर्षाणि पञ्चदशापस्याः पञ्च छन्दस्याः पञ्चाशत्प्राणभृतस्ता द्वाभ्यान्न शतम्प्रथमा चितिः ॥ १४ ॥ [अर्धप्रपाठः ४५] अथ द्वितीया । पञ्चाश्विन्न्यो द्वे ऽऋतव्ये पञ्च वैश्वदेव्यः पञ्च प्राणभृतः पञ्चापस्या ऽएकया न विꣳशतिर्वयस्यास्ता ऽएकचत्त्वारिꣳशद्द्वितीया चितिः ॥ १५ ॥ अथ तृतीया । स्वयमातृण्णा पञ्च दिश्या विश्वज्योतिश्चतस्र ऽऋतव्या दश प्राणभृतः षट्त्रिꣳशच्छन्दस्याश्चतुर्दश वालखिल्ल्यास्ता ऽएकसप्ततिस्तृतीया चितिः ॥ १६ ॥ अथ चतुर्थी । अष्टादश प्रथमा ऽअथ द्वादशाऽथ सप्तदश ताः सप्तचत्त्वारिꣳशच्चतुर्थी चितिः ॥ १७ ॥ अथ पञ्चमी । पञ्चासपत्नाश्चत्त्वारिꣳशद्विराज ऽएकया न त्रिꣳशत्स्तोमभागाः पञ्च नाकसदः पञ्च पञ्चचूडा ऽएकत्रिꣳशच्छन्दस्या ऽअष्टौ गार्हपत्त्या चितिरष्टौ पुनश्चितिर्ऋतव्ये विश्वज्योतिर्विमण्णी च स्वयमातृण्णा चाश्मा पृश्निर्यश्चिचतेऽग्निर्न्निधीयते ता ऽअष्टात्रिꣳशꣳ शतम्पञ्चमी चितिः ॥ १८ ॥ ताः सर्वाः पञ्चभिर्न्न चत्त्वारि शतानि । ततो याः षष्टिश्च त्रीणि च शतान्न्यहल्लोकास्ता

ऽअह्नामेव साप्तिः क्रियतेऽह्नाम्प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि सँवत्सरस्याहान्यथ याः षट्त्रिंशत्पुरीषन्तासाथं षट्त्रिंशी ततो याश्चतुर्विंशतिरर्द्धमासलोकास्ता ऽअर्द्धमासानामेव साप्तिः क्रियतेऽर्द्धमासानाम्प्रतिमाथ या द्वादश मासलोकास्ता मासानामेव साप्तिः क्रियते मासानाम्प्रतिमा ता ऽउ द्वे-द्वे सहर्त्तुलोका ऽऋतूनामशून्यतायै ॥ १९ ॥ अथ या लोकम्पृणाः । मुहूर्त्तलोकास्ता मुहूर्त्तानामेव साप्तिः क्रियते मुहूर्त्तानाम्प्रतिमा ता दश च सहस्राण्यष्टौ च शतानि भवन्त्येतावन्तो हि सँवत्सरस्य मुहूर्त्तास्तासामेकविंशतिङ्गार्हपत्य ऽउपदधाति द्वाभ्यान्नाशीतिन्धिष्ण्येष्वाहवनीय ऽइतरा ऽएतावन्ति वै सँवत्सरस्य रूपाणि तान्यस्यात्राप्तान्युपहितानि भवन्ति ॥ २० ॥ तद्धैके । आहवनीय ऽएवैताः सम्पदमापिपयिषन्त्यन्ये वा ऽएतेऽग्नयश्चिताः किमन्यत्रोपहिता ऽइह सम्पश्येमेति न तथा कुर्य्याद्दश वा ऽएतानग्नीश्चिनुतेऽष्टौधिष्ण्यानाहवनीयञ्च गार्हपत्यञ्च तस्मादाहुर्विराडग्निरिति दशाक्षरा हि विराट् तानु सर्वानेकमिवैवाचक्षतेऽग्निरित्येतस्य ह्येवैतानि सर्वाणि रूपाणि यथा सँवत्सरस्याहोरात्राण्यर्द्धमासा मासा ऽऋतव ऽएवमस्यैतानि सर्वाणि रूपाणि ॥ २१ ॥ ते ये ह तथा कुर्वन्ति एतानि हास्य ते रूपाणि बहिर्द्धा कुर्वन्त्यथो पापवस्यसङ्कुर्वन्ति क्षत्राय विशम्प्रतिप्रतिनीम्प्रत्युद्यामिनीमाग्नी-

द्वीये वा ऽअश्मानम्पृश्निमुपदधात्यथ तꣳ सम्पश्यति किमु तꣳ सम्पश्यन्नितरा न सम्पश्येद्येनैव निर्ऋतिम्पाप्मानमपहते स ऽएकादशः ॥ २२ ॥ तदाहुः । कथमु ता ऽअत्र न सम्पश्यतीति न ह्येना ऽअभिजुहोत्याहुत्या वा ऽइष्टका सर्वा कृत्स्ना भवतीति ॥ २३ ॥ तदाहुः । कथमस्यैता ऽअनतिरिक्ता ऽउपहिता भवन्तीति वीर्य्यं वा ऽअस्यैता ऽअनतिरिक्तं वै पुरुषं वीर्य्यꣳ स ह वा ऽएतꣳ सर्वङ्कृत्स्नम्प्रजापतिꣳ संस्करोति य ऽएवं विद्वानेतत्कर्म्म कुरुते यो वैतदेवं वेद ॥ २४ ॥ (A)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ संवत्सररूपाग्नेः, तदवयवानाञ्च सहस्ररूपत्वेनोपासनम्, तत्फलञ्च ]

प्रजापतिं वै प्रजाः सृजमानम् । पाप्मा मृत्युरभिपरिजघान स तपोऽतप्यत सहस्रꣳ सँवत्सरान्पाप्मानं विजिहासन् ॥१॥ तस्य तपस्तेपानस्य । एभ्यो लोमगर्त्तेभ्य ऽऊर्द्ध्वानि ज्योतीꣳष्यायँस्तद्यानि तानि ज्योतीꣳष्येतानि तानि नक्षत्राणि यावन्त्येतानि नक्षत्राणि तावन्तो लोमगर्त्ता यावन्तो लोमगर्त्तास्तावन्तः सहस्रसँवत्सरस्य मुहूर्त्ताः ॥ २ ॥ स सहस्रतमे सँवत्सरे । सर्वोऽत्यपवत स यः सोऽत्यपवतायमेव स वायुर्योऽयम्पवतेऽथ यन्तम्पाप्मानमत्यपवतेदन्तच्छरीरङ्क ऽउ तस्मै मनुष्यो यः सहस्रसँवत्सरमवरुन्धीत विद्यया ह वा ऽएवंवित्सहस्रसँवत्सर-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ४. १ ।

मवरुन्द्धे ॥ ३ ॥ सर्व्वा ऽएवैता ऽइष्टकाः साहस्रीरुपासीत। रात्रिसहस्रेण रात्रिसहस्रेणैकैकाम्परिश्रितᳬ सम्पन्नामुपासीताहःसहस्रेणाहःसहस्रेणैकैकामहर्भाजमर्द्धमाससहस्रेणार्द्धमाससहस्रेणैकैकामर्द्धमासभाजम्माससहस्रेण माससहस्रेणैकैकाम्मासभाजमृतुसहस्रेण ऽर्त्तुसहस्रेणैकैकामृतुभाजम्मुहूर्त्तसहस्रेण मुहूर्त्तसहस्रेणैकैकाम्मुहूर्त्तभाजᳬ सँवत्सरसहस्रेण सँवत्सरन्ते य ऽएतमेवमग्निᳬ सँवत्सरेण सम्पन्नं विदुः सहस्रतमीᳬ हास्य ते कलां विदुरथ य ऽएनमेवन्न विदुर्न्न हास्य ते सहस्रतमीञ्चन कलां विदुरथ य ऽएवैवं वेद यो वैतत्कर्म्म कुरुते स हैवैतᳬ सर्व्वङ्कृत्स्नम्प्राजापत्यमग्निमाप्नोति यम्प्रजापतिराप्नोत्तस्मादेवंवित्तप ऽएव तप्प्येत यदु ह वा ऽएवंवित्तपस्तप्प्यत ऽआमैथुनात्सर्व्वᳬ हास्य तत्स्वर्ग्गँल्लोकमभिसम्भवति ॥ ४ ॥ तदेतदृचाभ्युक्तम् । 'न मृषाश्रान्तं यदवन्ति देवा' ऽइति न हैवैवं विदुषः किञ्चन मृषाश्रान्तम्भवति तथो हास्यैतत्सर्व्वन्देवा ऽअवन्ति ॥ ५ ॥ (B)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ व्यष्टिरूपाग्निविषयोपासना ]

अथादेशा ऽउपनिषदाम् । वायुरग्निरिति ह शाकायनिन ऽउपासत ऽआदित्योऽग्निरित्यु हैक ऽआहुरथ ह स्माह श्रौमत्यो वा हालिङ्गवो वा वायुरेवाग्निस्तस्माद्य-

(१) ऋ० सं० अ० २, अ० ४ व० १२।

(B) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ४. ४।

देवाद्धरुर्ष्युरुत्तमङ्कर्म्म करोत्त्यथैतमेवाप्प्येतीति ॥ १ ॥ शाट्यायनिरु ह स्माह । सँवत्त्सर ऽएवाग्निस्तस्य वसन्तः शिरो ग्ग्रीष्म्मो दक्षिणः पक्षो वर्षा ऽउत्तरः शरद्दृतुर्म्मध्यमात्मा हेमन्तशिशिरावृतू पुच्छम्प्रतिष्ठा वागग्निः प्प्राणो वायुश्चक्षुरादित्त्यो मनश्चन्द्रमाः श्रोत्रन्दिश ऽआपो मिथुनन्तपः प्रतिष्ठा मासाः पर्व्वाण्ण्यर्द्धमासा नाड्ड्योऽहोरात्त्राणि रजतसुवर्ण्णानि पत्त्राणि स ऽएवन्देवानप्प्येतीति सँवत्त्सरोऽग्निरित्यु हैव विद्यादेतन्मयो भवतीति त्वेव विद्यात् ॥ २ ॥ चेलक ऽउ ह स्माह शाण्डिल्यायनः । इम ऽएव लोकास्तिस्रः स्वयमातृण्णवत्त्यश्चितयो यजमानश्चतुर्त्थी सर्वे कामाः पञ्चमीमाँश्च लोकान्त्संस्कुर्व ऽआत्मानञ्च सर्वाँश्च कामानित्त्येव विद्यादिति ॥ ३ ॥ (C)

चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

[ त्रयीमयादित्येऽग्न्युपासना ]

तस्य वा ऽएतस्याग्नेः । वागेवोपनिषद्वाचा हि चीयत ऽऋचा यजुषा साम्म्नेति नु दैव्व्याऽथ यन्मानुष्ष्या वाचाहेतीदङ्कुरुतेतीदङ्कुरुतेति तदु ह तया चीयते ॥ १ ॥ सा वा ऽएषा वाक्त्त्रेधाविहिता । ऋचो यजूंषि सामानि तेनाग्निस्त्रेधाविहित ऽएतेन हि त्रयेण चीयतेऽप्प्यहैव-

(C) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ४. ५ ।

न्त्रेधाविहित ऽइत्थꣳ ह त्वेवापि त्रेधाविहितो यदस्मिँ-
न्त्रेधाविहित ऽइत्थꣳ ह त्वेवापि त्रेधाविहितो यदस्मिँस्त्रेधाविहिता ऽइष्टका ऽउपधीयन्ते पुन्नाम्न्य स्त्रीनाम्न्यो नपुꣳसकनाम्न्यस्त्रेधाविहिताद्ध्यु ऽएवेमानि पुरुषस्याङ्गानि पुन्नामानि स्त्रीनामानि नपुꣳसकनामानि ॥ २ ॥ * सोऽयमात्मा त्रेधाविहित एव । सोऽनेन त्रेधाविहितेनात्मनैतन्त्रेधाविहितन्दैवममृतमाप्नोति ता ऽउ सर्वा ऽइष्टका ऽइत्त्येवाचक्षते नेष्टक ऽइति नेष्टकमिति वाचो रूपेण वाग्घ्येवैतत्सर्वं यत्स्त्री पुमान्नपुꣳसकं वाचा ह्येवैतत्सर्वमाप्तन्तस्मादेना 'ऽअङ्गिरस्वद्ध्रुवा सीद'त्येव सर्वाः सादयति नाङ्गिरस्वद्ध्रुवः सीदेति नाङ्गिरस्वद्ध्रुवꣳ सीदेति वाचꣳ ह्येवैताꣳ संस्कुरुते ॥ ३ ॥ सा या सा वागसौ स ऽआदित्यः । स ऽएष मृत्युस्तद्यत्किञ्चार्वाचीनमादित्यात्सर्वन्तन्मृत्युनाप्तः स यो हैनमतोऽर्वाचीनञ्चिनुते मृत्युना हैनः स ऽआप्तञ्चिनुते मृत्यवे ह स ऽआत्मानमपिदधात्त्यथ य ऽएनमत ऽऊर्द्ध्वञ्चिनुते स पुनर्म्मृत्युमपजयति विद्यया ह वा ऽअस्यैषोऽत ऽऊर्द्ध्वञ्चितो भवति ॥ ४ ॥ सा वा ऽएषा वाक्त्रेधाविहिता । ऋचो यजूꣳषि सामानि मण्डलमेवर्चोऽर्च्चिः सामानि पुरुषो यजूꣳष्यथैतदमृतं यदेतदर्च्चिर्द्दीप्यत ऽइदन्तत्पुष्करपर्णन्तद्यत्पुष्करपर्णमुपधायाग्निञ्चिनोत्येतस्मिन्नेवैतदमृत ऽऋक्-

* अत्र शतम् ५४०० ।

( 1 ) शु॰ य॰ सं॰ अ॰ 12 कं॰ 53 ।

मयं ऽऋग्यजुर्म्मयछ सामम्मयमात्मानछ संस्कुरुते सोऽमृतो भवति ॥ ५ ॥ (D)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ सूर्यमण्डलार्चिःपुरुषत्रयस्याधिदैवाधियज्ञाध्यात्मपरत्वेनार्थप्रतिपादनम् ]

यदेतन्मण्डलन्तपति । तन्महदुक्थन्ता ऽऋचः स ऽऋचाँल्लोकोऽथ यदेतदर्चिर्दीप्प्यते तन्महाव्रतन्तानि सामानि स साम्नाँल्लोकोऽथ य ऽएष ऽएतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूछंषि स यजुषाँल्लोकः ॥ १ ॥ सैषा त्रय्येव विद्या तपति । तद्धैतदप्प्यविद्वाछंस ऽआहुस्त्रयी वा ऽएषा विद्या तपतीति वाग्घैव तत्पश्यन्ती वदति ॥ २ ॥ स ऽएष ऽएव मृत्युः । य ऽएष ऽएतस्मिन्मण्डले पुरुषोऽथैतदमृतं ऽयदेतदर्चिर्दीप्प्यते तस्मान्मृत्युर्न म्रियतेऽमृते ह्यन्तस्तस्मादु न दृश्यतेऽमृते ह्यन्तः ॥ ३ ॥ तदेष श्लोको * भवति । अन्तरम्मृत्योरमृतमित्यवरछं ह्येतन्मृत्योरमृतम्मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुष ऽएतन्मण्डलम्प्रतिष्ठितन्तपति मृत्युर्विवस्वन्तं वस्त ऽइत्यसौ वा ऽआदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्व्वतो ह्यनेन परिवृतो मृत्योरात्मा विवस्वतीत्येतस्मिन्हि मण्डल ऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥ तयोर्वा ऽएतयोः । उभयोरेतस्य चार्चिष ऽएतस्य च

(D) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ५. १ ।

* श्लोकः—मन्त्रः पादबद्धत्वसाम्यात् ।

"अर्द्धो वा एष आत्मनो यत्पत्नी" ति तैत्तिरीयश्रुतेः ॥

पुरुषस्यैतन्मण्डलम्प्रतिष्ठा तस्मान्नमहदुक्थम्परस्मै न शꣳसेन्नेदेताम्प्रतिष्ठाञ्छिनदा ऽइत्येताꣳ ह स प्रतिष्ठाञ्छिन्ते यो महदुक्थम्परस्मै शꣳसति तस्मादुक्थशस्म्भूयिष्ठम्परिचक्षते प्रतिष्ठाच्छिन्नो हि भवतीत्यधिदेवतम् ॥ ५ ॥ अथाधियज्ञम् । यदेतन्मण्डलन्तपत्ययꣳ स रुक्मोऽथ यदेतदर्चिर्दीप्यत ऽइदन्तत्पुष्करपर्णमापो ह्येताः आपः पुष्करपर्णमथ य ऽएष ऽएतस्मिन्मण्डले पुरुषोऽयमेव स योऽयꣳ हिरण्मयः पुरुषस्तदेतद्वैतत्त्रयꣳ सꣳस्कृत्येहोपधत्ते तद्यज्ञस्यैवानु सꣳस्थामूर्ध्वमुत्क्रामति तदेतमप्येति य ऽएष तपति तस्मादग्निचिन्नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीत्यु ऽएवाधियज्ञम् ॥ ६ ॥ अथाध्यात्मम् । यदेतन्मण्डलन्तपति यश्चैष रुक्म ऽइदन्तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते यच्चैतत्पुष्करपर्णमिदन्तत्कृष्णमक्षन्नथ य ऽएष ऽएतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेव स योऽयन्दक्षिणेऽक्षन्पुरुषः ॥ ७ ॥ स ऽएष ऽएव लोकम्पृणा । तामेष सर्वोऽग्निरभिसम्पद्यते तस्यैतन्मिथुनं यासोऽयꣳ सव्येऽक्षन्पुरुषोऽर्धमु हैतदात्मनो यन्मिथुनं यावदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै तद्यत्ते द्वे भवतो द्वन्द्वꣳ हि मिथुनम्प्रजननन्तस्माद्द्वे-द्वे लोकम्पृणे ऽउपधीयेते तस्माद् द्वाभ्यान्द्वाभ्याश्चितिम्प्रणयन्ति ॥ ८ ॥ स ऽएष ऽएवेन्द्रः । योऽयन्दक्षिणेऽक्षन्पुरुषोऽथेयमिन्द्राणी ताभ्यां देवा ऽएतां विधृतिमकुर्वन्नासिकान्तस्माजायाया

ऽअन्ते नाश्नीयाद्वीर्य्यवान्हास्माज्जायते वीर्य्यवन्तमु ह सा जनयति यस्या ऽअन्ते नाश्नाति ॥ ९॥ तदेतद्देवव्रतꣳ राजन्न्यबन्धवो मनुष्ष्याणामनुतमाङ्गोपायन्ति तस्स्माद्दु तेषु वीर्य्यवान्जायतेऽमृतवाका व्वयसाꣳ साक्षिप्प्रश्श्येनञ्ज-नयति ॥ १० ॥ तौ हृदयस्याकाशम्प्रत्यवेत्य । मिथुनी-भवतस्तौ यदा मिथुनस्यान्तङ्गच्छतोऽथ हैतत्पुरुषः स्वपिति तद्यथा हैवेदम्मानुषस्य मिथुनस्यान्तङ्गत्वासंविद-ऽइव भवत्त्येवꣳ हैवैतदसंविद ऽइव भवति दैवꣳ ह्येतन्मिथुनम्परमो ह्येष ऽआनन्दः ॥ ११ ॥ तस्स्मादेवंवित्स्वप्प्यात् । लोक्क्यꣳ हैते ऽएव तद्देवते मिथुनेन प्प्रियेण धाम्म्ना समर्द्धयति तस्स्माद्दु ह स्वपन्तन्धुरेव न बोधयेन्नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति तस्स्माद्दु हैतत्सुषुप्पुषꣳ श्लेष्ष्मणमिव मुखम्भवत्त्येते ऽएव तद्देवते रेतः सिञ्चत-स्तस्स्माद्रेतस ऽइदꣳ सर्वꣳ सम्भवति यदिदङ्किञ्च ॥ १२॥ स ऽएष ऽएव मृत्युः । य ऽएष ऽएतस्स्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेऽक्षन्पुरुषस्तस्य हैतस्य हृदये पादावतिहितौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्त्यथ हैतत्पुरुषो म्म्रियते तस्स्माद्दु हैतत्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥ एष ऽउ ऽएव प्प्राणः । एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्प्राणाः स्वाः स यदा स्वपित्त्यथैनमेते प्प्राणाः स्वा ऽअपियन्ति तस्स्मात्स्वाप्प्ययः स्वाप्प्ययो ह वै तꣳ स्वप्प्न ऽइत्त्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवाः ॥१४॥ स ऽएतैः सुप्प्तः । न कस्य चन वेद न मनसा सङ्कल्प-

यति* न वाचान्नस्य रसं विजानाति न प्राणेन गन्धं विजानाति न चक्षुषा पश्यति न श्रोत्रेण शृणोत्येतᳪं ह्येते तदापीता भवन्ति स ऽएष ऽएकः सन्प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकम्पृणा सर्वमस्मिन्नमनुविभवत्यथ यदेक ऽएव तस्मादेका ॥ १५ ॥ तदाहुः । एको मृत्युर्बहवा ३ इत्येकश्च बहवश्चेति ह ब्रूयाद्यदहासावमुत्र तेनैकोऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥ तदाहुः । अन्तिके मृत्युर्दूरा३ऽइत्यन्तिके च दूरे चेति ह ब्रूयाद्यदहायमिहाध्यात्मन्तेनान्तिकेऽथ यदसावमुत्र तेनो दूरे ॥ १७ ॥ तदेष श्लोको भवति । अन्ने भात्यपश्रितो रसानाᳪं संक्षरेऽमृत ऽइति यदेतन्मण्डलन्तपति तदन्नमथ य ऽएष ऽएतस्मिन्मण्डले पुरुषः सोऽत्ता स ऽएतस्मिन्नन्नेऽपश्रितो भातीत्यधिदेवतम् ॥ १८ ॥ अथाध्यात्मम् । इदमेव शरीरमन्नमथ योऽयन्दक्षिणेऽक्षन्पुरुषः सोऽत्ता स ऽएतस्मिन्नन्नेऽपश्रितो भाति ॥ १९ ॥ तमेतमग्निरित्यध्वर्यव ऽउपासते । यजुरित्येष हीदᳪं सर्वं युनक्ति सामेति च्छन्दोगा ऽएतस्मिन्हीदᳪं सर्वᳪं समानमुक्थमिति बह्वृचा† ऽएष हीदᳪं सर्वमुत्थापयति यातुरिति यातुविद ऽएतेन हीदᳪं सर्वं यतं विषमिति सर्पाः सर्प ऽइति सर्पविद ऽऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन ऽइति देवजनविदो रूपमिति गन्धर्वा

* सङ्कल्पोऽध्यवसायः ।

† बहव ऋचो येषां ते बह्वृचा ऋग्वेदिनः ।

गन्ध ऽइत्यप्सरसस्तं यथा यथोपासते तदेव भवति तद्धैनान्भूत्वावति तस्मादेनमेवंवित्सर्वैरेवैतैरुपासीत सर्वं ह हैतद्भवति सर्वं ह हैनमेतद्भूत्वावति ॥ २० ॥ स ऽएष त्रीष्टकोऽग्निः । ऋगेका यजुरेका सामैका तद्याङ्कामत्रऽर्चोपदधाति रुक्मम् ऽएव तस्या ऽआयतनमथ यां यजुषा पुरुष ऽएव तस्या ऽआयतनमथ याछं साम्ना पुष्करपर्णमेव तस्या ऽआयतनमेवन्त्रीष्टकः ॥ २१ ॥ ते वा ऽएते । उभे ऽएष च रुक्मम् ऽएतच्च पुष्करपर्णमेतम्पुरुषमपीत ऽउभे ह्यृक्सामे यजुरपीत ऽएवम्वेकेष्टकः ॥ २२ ॥ स ऽएष ऽएव मृत्युः । य ऽएष ऽएतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेऽक्षन्पुरुषः स ऽएष ऽएवंविद ऽआत्मा भवति स यदैवंविदस्माल्लोका-त्प्रैत्यथैतमेवात्मानमभिसम्भवति सोऽमृतो भवति मृत्यु-र्ह्यस्यात्मा भवति ॥ २३ ॥ (A)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ९१ ॥

[ सकलपुरुषवर्तिमनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निवृत्तिसम्पाद्य-चित्याग्निविषयोपासनाकथनम् ]

नेव वा ऽइदमग्रेऽसदासीन्नेव सदासीत् । आसीदिव वा ऽइदमग्रे नेवासीत्तद्ध तन्मन ऽएवास ॥ १ ॥ तस्मा-

(A) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२, ५. २ ।

देतदृषिणाऽभ्यनूक्तम् । नासदासीन्नो सदासीत्तदानी-मिति नेव हि सन्मनो नेवासत् ॥ २ ॥ तदिदम्मनः सृष्टमाविरबुभूषत् । निरुक्ततरम्मूर्त्ततरन्तदात्मानमन्वै-च्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिंशतꣳ सहस्राण्यप-श्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितस्ते मनसैवा-धीयन्त मनसाचीयन्त मनसैषु ग्रहा ऽअगृह्यन्त मनसा-स्तुवत मनसा शꣳसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनो-मयमक्रियत तद्यत्किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहा-न्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै मनसो विभूतिरेतावती विसृष्टिरेतावन्मनः षट्त्रिꣳशत्सहस्रा-ण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ३ ॥ तन्मनो वाचमसृजत । सेयं वाक्सृष्टाविर-बुभूषन्निरुक्ततरा मूर्त्ततरा सात्मानमन्वैच्छत्सा तपोऽ-तप्यत सा प्रामूर्च्छत्सा षट्त्रिꣳशतꣳ सहस्राण्यपश्य-दात्मनोऽग्नीनर्कान्वाङ्मयान्वाक्चितस्ते वाचैवाधीयन्त वाचाचीयन्त वाचैषु ग्रहा ऽअगृह्यन्त वाचास्तुवत वाचाशꣳ-सन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म वाचैव तेषु तद्वाङ्मयेषु वाक्चित्सु वाङ्मयमक्रियत तद्य-त्किञ्चेमानि भूतानि वाचा वदन्ति तेषामेव सा कृति-स्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै वाचो विभूतिरेतावती

विसृष्टिरेतावती वाक्षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्क्कास्ते-
षामेकैक ऽएव तावान्यावानसौ पूर्व्वः ॥ ४ ॥ सा वाक्प्रा-
णमसृजत । सोऽयम्प्राणः सृष्ट ऽआविरबुभूषन्निरुक्ततरो
मूर्त्ततरः स ऽआत्मानमन्वैच्छत्स तपोऽतप्यत स प्रामू-
र्च्छत्स षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्क्का-
न्प्राणमयान्प्राणचितस्ते प्राणेनैवाधीयन्त प्राणेना-
चीयन्त प्राणेनैषु ग्रहा ऽअगृह्णन्त प्राणेनास्तुवत प्राणे-
नाशꣳसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म
प्राणेनैव तेषु तत्प्राणमयेषु प्राणचित्सु प्राणमयमक्रियत
तद्यत्किञ्चेमानि भूतानि प्राणेन प्राणन्ति तेषामेव सा
कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु
स्तुवते तेषु शꣳसन्त्येतावती वै प्राणस्य विभूतिरेतावती
विसृष्टिरेतावान्प्राणः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्क्कास्तेषा-
मेकैक ऽएव तावान्यावानसौ पूर्व्वः ॥ ५ ॥ स प्राणश्च-
क्षुरसृजत । तदिदञ्चक्षुः सृष्टमाविरबुभूषन्निरुक्ततरम्मूर्त्त-
तरन्तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्-
त्रिꣳशतꣳसहस्राण्यपश्यदात्मनोऽग्नीनर्क्काँश्चक्षुर्म्मयाँश्च-
क्षुश्चितस्ते चक्षुषैवाधीयन्त चक्षुषाचीयन्त चक्षुषैषु ग्रहा
ऽअगृह्णन्त चक्षुषास्तुवत चक्षुषाशꣳसन्यत्किञ्च यज्ञे कर्म्म
क्रियते यत्किञ्च यज्ञियङ्कर्म्म चक्षुषैव तेषु तच्चक्षुर्म्मयेषु
चक्षुश्चित्सु चक्षुर्म्मयमक्रियत तद्यत्किञ्चेमानि भूतानि
चक्षुषा पश्यन्ति तेषामेव सा कृतिस्तानेवादधति ताँश्चि-
न्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येता-

वती वै चक्षुषो विभूतिरेतावती विसृष्टिरेतावच्चक्षुः षट्-त्रिंशत्सहस्राण्यग्नयोऽर्क्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ६ ॥ तच्चक्षुः श्रोत्रमसृजत । तदिदं श्रोत्रं सृष्टमाविरबुभूषन्निरुक्ततरम्मूर्त्ततरन्तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्क्काञ्छ्रोत्रमयाञ्छ्रोत्रचितस्ते श्रोत्रेणैवाधीयन्त श्रोत्रेणाचीयन्त श्रोत्रेणैषु ग्रहा ऽअगृह्यन्त श्रोत्रेणास्तुवत श्रोत्रेणाशंसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म श्रोत्रेणैव तेषु तच्छ्रोत्रमयेषु श्रोत्रचित्सु श्रोत्रमयमक्रियत तद्यत्किञ्चेमानि भूतानि श्रोत्रेण शृण्वन्ति तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वै श्रोत्रस्य विभूतिरेतावती विसृष्टिरेतावच्छ्रोत्रं षट्त्रिंशत्सहस्राण्यग्नयोऽर्क्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ७ ॥ तच्छ्रोत्रङ्कर्म्मासृजत । तत्प्राणानभिसममूर्च्छदिमं सन्देहमन्नसन्देहमकृत्स्नं वै कर्म्मर्त्ते प्राणेभ्योऽकृत्स्ना ऽउ वै प्राणा ऽऋते कर्म्मणः ॥ ८ ॥ तदिदङ्कर्म्म सृष्टमाविरबुभूषत् । निरुक्ततरम्मूर्त्ततरन्तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्क्कान्कर्म्ममयान्कर्म्मचितस्ते कर्म्मणैवाधीयन्त कर्म्मणाचीयन्त कर्म्मणैषु ग्रहा ऽअगृह्यन्त कर्म्मणास्तुवत कर्म्मणाशंसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म कर्म्मणैव तेषु

तत्कर्म्ममयेषु कर्म्मचित्सु कर्म्ममयमक्रियत तद्यत्किञ्चेमानि भूतानि कर्म्म कुर्वते तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्ग्रहान्गृह्णन्ति तेषु शꣳसन्त्येतावती वै कर्म्मणो विभूतिरेतावती विसृष्टिरेतावत्कर्म्म षट्त्रिꣳशत्सहस्राण्यग्ग्यर्थोऽर्क्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ९ ॥ तत्कर्म्माग्निमसृजत। आविस्तरां वा ऽअग्निः कर्म्मणः कर्म्मणा ह्येनञ्जनयन्ति कर्म्मणेन्धते ॥ १० ॥ सोऽयमग्निः सृष्ट ऽआविरबुभूषत्। निरुक्ततरो मूर्त्ततरः स ऽआत्मानमन्वैच्छत्स तपोऽतप्यत स प्रामूर्च्छत्स षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्क्कानग्निमयानग्निचितस्तेऽग्निनैवाधीयन्ताग्निनाचीयन्ताग्निनैषु ग्रहा ऽअगृह्यन्ताग्निनास्तुवताग्निनाशꣳसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्माग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत तद्यत्किञ्चेमानि भूतान्यग्निमिन्धते तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वा ऽअग्नेर्व्विभूतिरेतावती विसृष्टिरेतावानग्निः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्क्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ११ ॥ ते हैते विद्याचित ऽएव। तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते विद्यया हैवैत ऽएवंविदश्चिता भवन्ति ॥ १२ ॥ (A)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३॥

(A) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यंत मुण्ड-का० अ० १२, ५. ३।

[ भूम्यादिलोकत्रयादित्यनक्षत्रछन्दःसंवत्सरात्माचित्याग्निविषयोपासनाप्रतिपादनम् ]

अयं व्वाव लोक ऽएषोऽग्निश्चितः । तस्याप ऽएव परिश्रितो मनुष्या यजुष्मत्य ऽइष्टकाः पशवः सूददोहा ऽओषधयश्च व्वनस्पतयश्च पुरीषमाहुतयः समिधोऽग्निर्लोकम्पृणा तद्वा ऽएतत्सर्व्वमग्निमेवाभिसम्पद्यते तत्सर्व्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं व्वेद लोकम्पृणामेनम्भूतमेतत्सर्व्वमभिसम्पद्यते ॥ १ ॥ अन्तरिक्षः हत्त्वेवैषोग्निश्चितः । तस्य द्यावापृथिव्व्योरेव सन्धिः परिश्रितः परेण हान्तरिक्षन्द्यावापृथिवी सन्धत्तस्ताः परिश्रितो व्वयाꣳसि यजुष्मत्य ऽइष्टका वर्षः सूददोहा मरीचयः पुरीषमाहुतयः समिधो व्वायुर्ल्लोकम्पृणा तद्द्वा ऽएतत्सर्व्वं व्वायुमेवाभिसम्पद्यते तत्सर्व्वोऽग्निर्ल्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं व्वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ २ ॥ द्यौर्हु त्त्वेवैषोऽग्निश्चितः । तस्याप ऽएव परिश्रितो यथा ह वा ऽइदङ्कोशः समुब्जित ऽएवमिमे लोका ऽअप्स्वन्तस्तद्या ऽइमाँल्लोकान्परेणापस्ताः परिश्रितो देवा यजुष्मत्य ऽइष्टका यदेवैतस्मिँल्लोकेऽन्नन्तत्सूददोहा नक्षत्राणि पुरीषमाहुतयः समिध ऽआदित्यो लोकम्पृणा तद्द्वा ऽएतत्सर्वमादित्यमेवाभिसम्पद्यते तत्सर्वोऽग्निर्ल्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं व्वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ ३ ॥ आदित्यो ह त्त्वेवैषोऽग्निश्चितः । तस्य दिश ऽएव परिश्रितस्ताः

षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यन्दिशः समन्तम्परियन्ति रश्मयो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयस्तद्यत्परिश्रित्सु यजुष्मतीः प्रत्यर्प्पयति रश्मीँस्तद्दिक्षु प्रत्यर्प्पयत्यथ यदन्तरा दिशश्च रश्मीँश्च तत्सूददोहा अथ यद्दिक्षु च रश्मिषु चान्नन्तत्पुरीषन्ता आहुतयस्ताः समिधोऽथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणा तद्वा एतत्सर्वन्दिश इति चैव रश्मय इति चाख्यायते तत्सर्वोऽग्निर्ल्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ ४ ॥ नक्षत्राणि ह त्वेवैषोऽग्निश्चितः । तानि वा एतानि सप्तविꣳशतिर्न्नक्षत्राणि सप्तविꣳशतिः सप्तविꣳशतिर्होपनक्षत्राण्येकैकन्नक्षत्रमनु पतिष्ठन्ते तानि सप्त च शतानि विꣳशतिश्चाधि षट्त्रिꣳशत्ततो यानि सप्त च शतानि विꣳशतिश्चेष्टका एव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिꣳशत्स त्रयोदशो मासः स आत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव षट्त्रिꣳश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरꣳ हि शिरोऽथ यदन्तरा नक्षत्रे तत्सूददोहा अथ यन्नक्षत्रेष्वन्नन्तत्पुरीषन्ता आहुतयस्ताः समिधोऽथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा तद्वा

ऽएतत्सर्वन्नक्षत्राणीत्येवाख्यायते तत्सर्वोऽग्निर्ल्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ ५ ॥ ता वा ऽएताः । एकविंशतिर्ब्बृहत्य ऽएकविंशो वै स्वर्ग्गो लोको बृहती स्वर्ग्गो लोकस्तदेष स्वर्ग्गँल्लोकमभिसम्पद्यत ऽएकविंशश्च स्तोमं बृहतीञ्च च्छन्दः ॥ ६ ॥ छन्दाᳪंसि ह त्वेवैषोऽग्निश्चितः तानि वा ऽएतानि सप्त च्छन्दाᳪंसि चतुरुत्तराणि त्रिचानि तेषाᳪं सप्त च शतानि विंशतिश्चाक्षराण्यधि षट्त्रिंशत्ततो यानि सप्त च शतानि विᳪंतिश्चेष्टका ऽएव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिᳪंशत्स त्रयोदशो मासः स ऽआत्मा त्रिंशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर ऽएव षट्त्रिᳪंश्यौ तद्यत्ते द्वे भवतो द्व्यक्षरᳪं हि शिरः ॥ ७ ॥ तस्यै वा ऽएतस्यै षट्त्रिंशदक्षरायै बृहत्यै यानि दश प्रथमान्यक्षराणि सा दशाक्षरैकपदाऽथ यानि विंशतिः सा विंशत्यक्षरा द्विपदाऽथ यानि त्रिंशत्सा त्रिंशदक्षरा विराडथ यानि त्रयस्त्रिंशत्सा त्रयस्त्रिंशदक्षराथ यानि चतुस्त्रिंशत्सा चतुस्त्रिंशदक्षरा स्वराडथ यत्सर्वैश्छन्दोभिरयमग्निश्चितस्तदतिच्छन्दास्ता ऽउ सर्वा ऽइष्टका ऽएवेष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्री तेनैष गायत्रोऽग्निर्म्मृदाप ऽइति त्रीण्यक्षराणि त्रिपदा गायत्री तेनो ऽएवैष गायत्रोऽथ यदन्तरा च्छन्दसी तत्सूददोहा ऽअथ

यच्छन्दः स्वन्नन्तरपुरीषन्ता ऽआहुतयस्ताः समिधोऽथ यच्छन्दाꣳसीत्याख्यायते तल्लोकम्पृणा। तद्वा ऽएतत्सर्वꣳ छन्दाꣳसीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ ८ ॥ ता वा ऽएताः। एकविꣳशतिर्बृहत्य ऽएकविꣳशो वै स्वर्ग्गो लोको बृहती स्वर्ग्गो लोकस्तदेष स्वर्ग्गँल्लोकमभिसम्पद्यत ऽएकविꣳशश्च स्तोमम्बृहतीश्च च्छन्दः ॥ ९ ॥ सँवत्सरो ह त्वेवैषोऽग्निश्चितः। तस्य रात्रय ऽएव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि सँवत्सरस्य रात्रयोऽहानि यजुष्मत्य ऽइष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि सँवत्सरस्याहान्यथ या ऽअमूः षट्त्रिꣳशदिष्टका ऽअतियन्ति यः स त्रयोदशो मास ऽआत्मार्द्धमासाश्च ते मासाश्च चतुर्विꣳशतिरर्द्धमासा द्वादश मासा ऽअथ यदन्तराहोरात्रे तत्सूददोहा ऽअथ यदहोरात्रेष्वन्नन्तत्पुरीषन्ता ऽआहुतयस्ताः समिधोऽथ यदहोरात्राणीत्याख्यायते तल्लोकम्पृणा तद्वा ऽएतत्सर्वमहोरात्राणीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ १० ॥ ता वा ऽएताः। एकविꣳशतिर्बृहत्य ऽएकविꣳशो वै स्वर्ग्गो लोको बृहती स्वर्ग्गो लोकस्तदेष स्वर्ग्गँल्लोकमभिसम्पद्यत ऽएकविꣳशश्च स्तोमम्बृहतीश्च च्छन्दः ॥ ११ ॥ आत्मा ह

त्वेवैषोऽग्निश्चितः । तस्यास्त्थीन्येव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्त्थीनि मज्जानो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानोऽथ या ऽअमूः षट्त्रिंशदिष्टका ऽअतियन्ति यः स त्रयोदशो मास ऽआत्मा प्राणः स तस्य त्रिंशदात्मन्विधाः प्रतिष्ठायान्द्वे प्राणेषु द्वे शीर्षन्द्वे तद्यत्ते द्वे भवतो द्विकपालं हि शिरोऽथ येनेमानि पर्वाणि सन्ततानि तत्सूददोहा ऽअथैतत्त्रयं येनायमात्मा प्रच्छन्नो लोमत्वङ्मांसमिति तत्पुरीषं यत्पिबति ता ऽआहुतयो यदश्नाति ताः समिधोऽथ यदात्मेत्याख्यायते तल्लोकम्पृणा तद्वा ऽएतत्सर्वमात्मेत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ १२ ॥ ता वा ऽएताः । एकविंशतिर्बृहत्य ऽएकविंशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गँल्लोकमभिसम्पद्यत ऽएकविंशश्च स्तोमम्बृहतीश्च च्छन्दः ॥ १३ ॥ सर्वाणि ह त्वेव भूतानि । सर्वे देवा ऽएषोऽग्निश्चिचत ऽआपो वै सर्वे देवाः सर्वाणि भूतानि ता हैता ऽआप ऽएवैषोऽग्निश्चितस्तस्य नाड्या ऽएव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यन्नाड्याः समन्तम्परियन्ति नाड्या ऽउ ऽएव यजुष्मत्य ऽइष्टकास्ताः

षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यन्नाड्या ऽअभिक्षरन्त्यथ यदन्तरा नाड्ये तत्सूददोहा ऽअथ या ऽअमूः षट्त्रिंशदिष्टका ऽअतियन्ति यः स त्रयोदशो मास ऽआत्मायमेव स योऽयं हिरण्मयः पुरुषः ॥ १४ ॥ तस्यैते प्रतिष्ठे। रुक्मश्च पुष्कर-पर्णञ्चापश्चादित्यमण्डलञ्च स्रुचौ बाहू ताविन्द्राग्नी द्वे स्वयमातृण्णे ऽइयञ्चान्तरिक्षञ्च तिस्रो विश्वज्योतिष ऽएता देवता ऽअग्निर्वायुरादित्य ऽएता ह्येव देवता विश्वज्योतिद्द्वादशर्त्तव्याः स सँवत्सरः स ऽआत्मा पञ्च नाकसदः पञ्च पञ्चचूडाः स यज्ञस्ते देवा ऽअथ यद्विकर्णी च स्वयमातृण्णा चाश्मा पृश्नि-र्यश्चितेऽग्निर्निधीयते सा पञ्चत्रिंशी लोकम्पृणायै यजुः षट्त्रिंशी सोऽस्यैष सर्वस्यान्तमेवात्मा स ऽएष सर्वासामपाम्मध्ये स ऽएष सर्वैः कामैः सम्पन्न ऽआपो वै सर्वे कामाः स ऽएषोऽकामः सर्वकामो न ह्येतङ्कस्य चन कामः ॥ १५ ॥ तदेष श्लोको भवति। विद्यया तदा-रोहन्ति यत्र कामाः परागताः ॥ न तत्र दक्षिणा यन्ति नाविद्वाᳬसस्तपस्विन ऽइति न हैव तँल्लोकन्दक्षिणाभिर्न्न तपसानेवंविदश्नुत ऽएवंविदाᳬ हैव स लोकः ॥ १६ ॥ अब्भ्रम्पुरीषम्। चन्द्रमा ऽआहुतयो नक्षत्राणि समिधो यच्चन्द्रमा नक्षत्रे वसत्याहुतिस्तत्समिधि वसत्येतदु वा ऽआहुतेरन्नमेषा प्रतिष्ठा तस्मादाहुतिर्न्न क्षीयत ऽएत-द्ध्यस्या ऽअन्नमेषा प्रतिष्ठाथ यद्देवा ऽइत्याख्यायते

तल्लोकम्पृणा तदृष्ट्वा ऽएतत्सर्वन्देवा ऽइत्त्येवाख्यायते ॥ १७ ॥ तदेतदृचाभ्युक्तम् । विश्वे देवा ऽअनु तत्ते यजुर्ग्गुरिति सर्वाणि ह्यत्र भूतानि सर्वे देवा यजुरेव भवन्ति तत्सर्वो-ऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोक-म्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥१८॥ ता वा ऽएताः । एकविंशतिर्ब्बृहत्य ऽएकविंशो वै स्वर्ग्गो लोको बृहती स्वर्ग्गो लोकस्तदेष स्वर्ग्गँल्लोकमभिसम्पद्यत ऽएकविंशञ्च स्तोमम्बृहतीञ्च च्छन्दः ॥ १९ ॥ (E)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ चित्याग्नेः सर्वदिगभिमुखत्वम्, पृथक् शिरसो निरूहणाभावश्च ]

कुश्रिर्ह वाजश्रवसोऽग्निञ्चिक्क्ये । तꣳ होवाच सुश्रवाः कौष्ष्यो गौतम यदग्निमचैषीः प्राञ्चमेनमचैषीः प्रत्यञ्चमेनमचैषीन्न्यञ्चमेनमचैषीरुत्तानमेनमचैषीः ॥ १ ॥ यद्यह्येनम्प्राञ्चमचैषीः । यथा पराच ऽआसीनाय पृष्ठतो-ऽन्नाद्यमुपाहरेत्तादृक्तन्न ते हविः प्प्रतिग्ग्रहीष्ष्यति ॥ २ ॥ यद्यु वा ऽएनम्प्रत्यञ्चमचैषीः कस्मादस्य तर्हि पश्चा-त्पुच्छमकार्षीः ॥ ३ ॥ यद्यु वा ऽएनन्न्यञ्चमचैषीः । यथा नीचः शयानस्य पृष्ठेऽन्नाद्यम्प्रतिष्ठापयेत्तादृक्तन्नैव ते हविः प्प्रतिग्ग्रहीष्ष्यति ॥ ४ ॥ यद्यु वा ऽएनमुत्तानम-चैषीः । न वा ऽउत्तानं वयः स्वर्ग्गँल्लोकमभिवहति न त्वा

(E) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ५. ४ ।

स्वर्ग्गँल्लोकमभिवक्षत्त्यस्वर्ग्ग्यं ऽउ ते भविष्यतीति ॥ ५ ॥ स होवाच प्प्राञ्चमेनमचैषम्प्रत्यञ्चमेनमचैषन्न्यञ्चमेनमचैषमुत्तानमेनमचैषꣳ सर्व्वा ऽअनुदिश ऽएनमचैषमिति ॥ ६ ॥ स यत्प्राञ्चम्पुरुषमुपदधाति । प्प्राच्च्यौ स्रुचौ तत्प्राङ् चीयतेऽथ यत्प्रत्यञ्चङ्कूर्म्ममुपदधाति प्प्रत्त्यञ्चि पशुशीर्षाणि तत्प्रत्यङ् चीयतेऽथ यन्न्यञ्चङ्कूर्म्ममुपदधाति न्न्यञ्चि पशुशीर्षाणि नीचीरिष्टकास्तन्न्यङ् चीयतेऽथ यदुत्तानम्पुरुषमुपदधात्युत्ताने स्रुचा ऽउत्तानमुलूखलमुत्तानामुखान्तदुत्तानश्चीयतेऽथ यत्सर्व्वा ऽअनुदिशः परिसर्प्पमिष्टका ऽउपदधाति तत्सर्व्वतश्चीयते ॥ ७ ॥

[ अर्धप्रपाठकः ३८ ] अथ ह कोषा धावयन्तः । निरूढशिरसमग्निमुपाधावयाञ्चक्रुस्तेषाꣳ हैक ऽउवाच श्रीर्व्वै शिरः श्रियमस्य निरौहीत्सर्व्वज्ज्यानिञ्ज्यास्यत ऽइति स ह तथैवास ॥ ८ ॥ अथ हैक ऽउवाच । प्प्राणा वै शिरः प्प्राणानस्य निरौहीत्क्षिप्प्रेऽमुँल्लोकमेष्ष्यतीति स ऽउ ह तथैवास ॥ ९ ॥ ऊर्द्ध्वो वा ऽएष ऽएतच्चीयते । यद्दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णꣳ रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्व्वेष्टका द्वियजू रेतःसिचौ विश्वज्ज्योतिर्ऋतव्व्ये ऽअषाढा कूर्म्मोऽथ हास्यैतदेव प्रत्त्यक्षतमाꣳ शिरो यच्चिचतेऽग्निर्न्निधीयते तस्मान्न निरूहेत् ॥ १० ॥ (F)

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

---

(F) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ५. ५।

[ वैश्वानरविद्या ]

अथ हैतेऽरुणे । औपवेशौ समाजग्मुः सत्ययज्ञः पौलुषिर्म्महाशालो जाबालो बुडिल ऽआश्वतराश्विर-रिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यस्ते ह वैश्वानरे समासत तेषाᳬं ह वैश्वानरे न समियाय ॥ १ ॥ ते होचुः । अश्वपतिर्वा ऽअयङ्कैकेयः सम्प्रति वैश्वानरं वेद तङ्गच्छामेति ते हाश्वपतिङ्कैकेयमाजग्मुस्तेभ्यो ह पृथगावसथान्पृथगपचितीः पृथक्सहस्रान्त्सोमान्प्रोवाच ते ह प्रातरसंविदाना ऽएव समित्पाणयः प्रतिचक्रमिर ऽउप त्वायामेति ॥ २ ॥ स होवाच । यन्नु भगवन्तो-ऽनूचाना ऽअनूचानपुत्राः किमिदमिति ते होचुर्वैश्वानरᳬं ह भगवान्त्सम्प्रति वेद तन्नो ब्रूहीति स होवाच सम्प्रति खलु त्वा ऽअहं वैश्वानरं वेदाभ्याधत्त समिध ऽउपेता स्थेति ॥ ३ ॥ स होवाचारुणमौपवेशिम् । गौतम कन्त्वं वैश्वानरं वेत्थेति पृथिवीमेव राजन्निति होवाचोमिति होवाचैष वै प्रतिष्ठा वैश्वानर ऽएतᳬं हि वै त्वम्प्रतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वम्प्रतिष्ठितः प्रजया पशुभिरसि यो वा ऽएतम्प्रतिष्ठां वैश्वानरं वेदाप पुनर्म्मृत्युञ्जयति सर्वमायुरेति पादौ त्वा ऽएतौ वैश्वानरस्य पादौ तेऽम्ला-स्यतां यद्दि ह नागमिष्य ऽइति पादौ तेऽविदितावभवि-ष्यतां यद्दि ह नागमिष्य ऽइति वा ॥ ४ ॥ अथ होवाच सत्ययज्ञम्पौलुषिम् । प्राचीनयोग्य कन्त्वं वैश्वानरं वेत्थेत्यप ऽएव राजन्निति होवाचोमिति होवाचैष वै

रयिर्वैश्वानर ऽएतꣳ हि वै त्वꣳ रयिं वैश्वानरं वेत्थ तस्मात्त्वꣳ रयिमान्पुष्टिमानसि यो वा ऽएतꣳ रयिं वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायुरेति वस्तिस्त्वा ऽएष वैश्वानरस्य वस्तिस्त्वाहास्यद्यदि ह नागमिष्य ऽइति वस्तिस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा ॥ ५ ॥ अथ होवाच महाशालञ्जाबालम् । औपमन्यव कन्त्वं वैश्वानरं वेत्थेत्याकाशमेव राजन्निति होवाचोमिति होवाचैष वै बहुलो वैश्वानर ऽएतꣳ हि वै त्वम्बहुलं वैश्वानरं वेत्थ तस्मात्त्वम्बहुः प्रजया पशुभिरसि यो वा ऽएतम्बहुलं वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायु-रेत्यात्मा त्वा ऽएष वैश्वानरस्यात्मा त्वाहास्यद्यदि ह नागमिष्य ऽइत्यात्मा तेऽविदितोऽभविष्यद्यदि ह नाग-मिष्य ऽइति वा ॥ ६ ॥ अथ होवाच बुडिलमाश्वत-राश्विम् । वैयाघ्रपद्य कन्त्वं वैश्वानरं वेत्थेति वायुमेव राजन्निति होवाचोमिति होवाचैष वै पृथग्वर्त्मा वैश्वानर ऽएतꣳ हि वै त्वम्पृथग्वर्त्मानं वैश्वानरं वेत्थ तस्मा-त्त्वाम्पृथग्रथश्रेणयोऽनुयान्ति यो वा ऽएतम्पृथग्वर्त्मानं वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायुरेति प्राणस्त्वा ऽएष वैश्वानरस्य प्राणस्त्वाहास्यद्यदि ह नागमिष्य ऽइति प्राणस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य ऽइति वा ॥ ७ ॥ अथ होवाचेन्द्रद्युम्नम्भाल्लवेयम् । वैयाघ्रपद्य कन्त्वं वैश्वानरं वेत्थेत्यादित्यमेव राजन्निति होवाचोमिति होवाचैष वै सुततेजा वैश्वानर ऽएतꣳ हि वै त्वꣳ सुत-

तेजसं वैश्वानरं वेत्थ तस्मात्तवैष सुतोऽसुतोऽग्न्यमानः पच्यमानोऽक्षीयमाणो गृहेषु तिष्ठति यो वा ऽएतᳬ सुततेजसं वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायुरेति चक्षुस्त्वा ऽएतद्वैश्वानरस्य चक्षुस्त्वाहास्यद्यदि ह नागमिष्य इति चक्षुस्तेऽविदितमभविष्यद्यदि ह नागमिष्य इति वा ॥८॥

अथ होवाच जनᳬ शार्क्कराक्ष्यम्। सायवस कन्त्वं वैश्वानरं वेत्थेति दिवमेव राजन्निति होवाचोमिति होवाचैष वा ऽअतिष्ठा वैश्वानर ऽएतᳬ हि वै त्वमतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वᳬ समानानतितिष्ठसि यो वा ऽएतमतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायुरेति मूर्द्धा त्वा ऽएष वैश्वानरस्य मूर्द्धा त्वाहास्यद्यदि ह नागमिष्य इति मूर्द्धा तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा ॥ ९ ॥

तान्होवाच। एते वै यूयम्पृथग्वैश्वानरान्विद्वाᳬसः पृथगन्नमघस्त प्रादेशमात्रमिव ह वै देवाᳬ सुविदिता ऽअभिसम्पन्नास्तथा तु व ऽएनान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति ॥ १० ॥

स होवाच। मूर्द्धानमुपदिशन्नेष वा ऽअतिष्ठा वैश्वानर ऽइति चक्षुषी ऽउपदिशन्नुवाचैष वै सुततेजा वैश्वानर ऽइति नासिके ऽउपदिशन्नुवाचैष वै पृथग्वर्त्मा वैश्वानर ऽइति मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर ऽइति मुख्या ऽअप ऽउपदिशन्नुवाचैष वै रयिर्वैश्वानर ऽइति चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर ऽइति स ऽएषोऽग्निर्वैश्वानरो यत्पुरुषᳬ स यो हैतमेवमग्निं वैश्वा-

नरम्पुरुषविधम्पुरुषेऽन्तः प्प्रतिष्ठितं व्वेदाप पुनर्म्मृत्युञ्जयति सर्व्वमायुरेति न हास्य ब्ब्रुवाणश्चन व्वैश्श्वानरो हिनस्ति ॥११॥(A)

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पुरुषस्याग्निविधार्कविधोक्थविधत्वनिरूपणम् ]

इयं व्वा ऽइदमत्ता चैवाद्यञ्च । तद्यदोभयः समागच्छत्यत्त्वैवाख्यायते नाद्यम् ॥ १ ॥ स वै षः सोऽत्ताग्निरेव सः । तस्मिमन्न्यत्किञ्चाभ्यादधत्याहितय ऽएवास्य ता ऽआहितयो ह वै ता ऽआहुतय ऽइत्त्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवाः ॥ २ ॥ आदित्त्यो व्वा ऽअत्ता । तस्य चन्द्रमा ऽएवाहितयश्चन्द्रमसᳬं ह्यादित्य ऽआदधतीत्त्यधिदेवतम् ॥ ३ ॥ अथाद्ध्यात्मम् । प्प्राणो व्वा ऽअत्ता तस्यान्नमेवाहितयोऽन्नः हि प्प्राण ऽआदधतीति न्वग्नेः ॥ ४ ॥ अथार्कस्य । अग्निर्व्वा ऽअर्कस्तस्याहुतय ऽएव कमाहुतयो ह्यग्नये कम् ॥ ५ ॥ आदित्त्यो व्वा ऽअर्कः । तस्य चन्द्रमा ऽएव कञ्चन्द्रमा ह्यादित्याय कमित्त्यधिदेवतम् ॥ ६ ॥ अथाद्ध्यात्मम् । प्राणो व्वा ऽअर्कस्तस्यान्नमेव कमन्नः हि प्प्राणाय कमिति न्न्वेवार्कस्य ॥ ७ ॥ अथोक्कथस्य । अग्निर्व्वा ऽउक्कतस्याहुतय ऽएव थमाहुतिभिर्ह्यग्निरुत्तिष्ठति ॥ ८ ॥ आदित्त्यो वा ऽउक् । तस्य चन्द्रमा ऽएव थश्चन्द्रमसा ह्यादित्य ऽउत्तिष्ठतीत्य-

(A) अदोब्राह्मणस्था विषया अन्यत्रापि दृश्यन्ते यथा—का० श० १२. ६. १ ।

धिदेवतम् ॥ ९ ॥ अथाध्यात्मम् । प्राणो वा ऽउक्तस्यान्नमेव थमन्नेन हि प्राण ऽउत्तिष्ठतीति न्वेवोक्थस्य स ऽएषोऽग्निविधोऽर्कविध ऽउक्थविधो यत्पुरुषः स यो हैतमेवमग्निविधमर्कविधमुक्थविधम्पुरुषमुपास्ते विदुषो हैवास्यैवम्भ्रातृव्यो म्लायति ॥ १० ॥ प्राणेन वा ऽअग्निर्दीप्यते । अग्निना वायुर्वायुनादित्य ऽआदित्येन चन्द्रमाश्चन्द्रमसा नक्षत्राणि नक्षत्रैर्विद्युदेतावती वै दीप्तिरस्मिँश्च लोकेऽमुष्मिँश्च सर्वा्ँ हैतान्दीप्तिन्दीप्यतेऽस्मिँश्च लोकेऽमुष्मिँश्च य ऽएवं वेद ॥ ११ ॥ (B)

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ शाण्डिल्यविद्याप्रतिपादनम् ]

सत्यम्ब्रह्मेत्युपासीत । अथ खलु क्रतुमयोऽयम्पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैत्येवङ्क्रतुर्हामुँल्लोकम्प्रेत्याभिसम्भवति ॥ १ ॥ स ऽआत्मानमुपासीत । मनोमयम्प्राणशरीरम्भारूपमाकाशात्मानङ्कामरूपिणम्मनोजवसः सत्यसङ्कल्पः सत्यधृतिः सर्वगन्धः सर्वरसः सर्वा ऽअनु दिशः प्रभूतः सर्वमिदमभ्याप्तमवाक्कमनादरं यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयो यथा ज्योतिरधूममेवञ्ज्यायान्दिवो ज्यायानाकाशाज्ज्यायानस्यै पृथिव्यै ज्यायान्सर्वेभ्यो भूतेभ्यः स प्राणस्यात्मैष म ऽआत्मैतमित ऽआत्मानम्प्रे-

(B) अदोब्राह्मणस्था विषया अन्यत्रापि दृश्यन्ते यथा—१२. ६. २।

त्याभिसम्भविष्यामीति यस्य स्यादद्धा न विचिकित्सा-स्तीति ह स्माह शाण्डिल्य ऽएवमेतदिति ॥ २ ॥ (E)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अश्वस्योपासनम् ]

उषा वा ऽअश्वस्य मेध्यस्य शिरः। सूर्यश्चक्षु-र्वातः प्राणो व्यात्तमग्निर्वैश्वानरः सँवत्सर ऽआत्मा-श्वस्य मेध्यस्य द्यौष्पृष्ठमन्तरिक्षमुदरम्पृथिवी पाजस्य-न्दिशः पार्श्वे ऽअवान्तरदिशः पर्शव ऽऋतवोऽङ्गानि मासाश्चार्द्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्रा-ण्यस्थीनि नभो माᳬसान्यूवध्यᳬ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ऽओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्द्धो निम्लोचञ्जघनार्द्धो यद्विजृम्भते तद्वि-द्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वा ऽअश्वम्पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनम्पश्चान्महिमान्वजायत तस्या-परे समुद्रे योनिरेतौ वा ऽअश्वम्महिमानावभितः सम्बभूवतुर्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरा-नश्वो मनुष्यान्त्समुद्र ऽएवास्य बन्धुः समुद्रो योनिः ॥ १ ॥

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२. ६. ३।

[ अर्काश्वमेधोपासना, विद्यासंप्रदायप्रवर्तकमुनिवंशकथनञ्च ]

नैवेह किञ्चनाग्र ऽआसीत् । मृत्युनैवेदमावृतमासीदशनाययाशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति सोऽर्चन्नचरत्तस्यार्चत ऽआपोऽजायन्तार्चते वै मे कमभूदिति तदेवाक्यर्यस्यार्कत्त्वङ्कꣳ ह वा अस्मै भवति य ऽएवमेतदर्क्यस्यार्कत्त्वं वेद ॥ १ ॥ आपो वा ऽअर्कः । तद्यदपाꣳ शर ऽआसीत्तत्समहन्न्यत सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्त्तताग्निः ॥ २ ॥ स त्रेधात्मानं व्यकुरुत । आदित्यन्तृतीयं वायुन्तृतीयꣳ स ऽएष प्राणस्त्रेधाविहितस्तस्य प्राची दिक्छिरोऽसौ चासौ चेर्म्माविथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौःपृष्ठमन्तरिक्षमुदरमियमुरः स ऽएषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्त्येवं विद्वान् ॥ ३ ॥ सोऽकामयत । द्वितीयो म ऽआत्मा जायेतेति स मनसा वाचम्मिथुनꣳ समभवदशनायाम्मृत्युस्तद्यद्रेत ऽआसीत्स सँवत्सरोऽभवन्न ह पुरा ततः सँवत्सर ऽआस तमेतावन्तङ्कालमबिभर्य्यावान्त्सँवत्सरस्तमेतावतः कालस्य परस्तादसृजत तञ्जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ॥ ४ ॥ स ऽऐक्षत । यदि वा ऽइममभिमꣳस्ये कनीयोऽन्नङ्करिष्य ऽइति स तया वाचा तेनात्मनेदꣳ सर्वमसृजत यदिदङ्किञ्चर्चो यजूꣳषि सामानि च्छन्दाꣳसि यज्ञान्प्रजाम्पशून्त्स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा

ऽअत्तीति तद्दुदितेरदितित्त्वꣳ सर्व्वस्यात्ता भवति सर्व्वमस्यान्नम्भवति य ऽएवमेतददुदितेरदितित्त्वं व्वेद ॥५॥ सोऽकामयत। भूयसा यज्ञेन भूयो यजेयेति सोऽश्श्राम्म्यत्स तपोऽतप्प्यत तस्य श्श्रान्तस्य तप्तस्य यशो व्वीर्य्यमुदक्क्रामत्प्राणा वै यशो व्वीर्य्यन्तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमद्ध्रियत तस्य शरीर ऽएव मन ऽआसीत् ॥ ६ ॥ सोऽकामयत। मेद्ध्यम्म ऽइदꣳ स्यादात्त्मन्व्यनेन स्यामिति ततोऽश्श्वः समभवद्यदश्श्वत्तन्मेद्ध्यमभूदिति तदेवाश्श्वमेधस्याश्श्वमेधत्त्वमेष ह व्वा ऽअश्श्वमेधं व्वेद य ऽएनमेवं व्वेद ॥ ७ ॥ तमनवरुद्ध्येवामन्न्यत। तꣳ सँव्वत्सरस्य परस्तादात्त्मन ऽआलभत पशून्देवताब्भ्यः प्रत्यौहत्तस्म्मात्सर्व्वदेवत्त्यम्प्रोक्षितम्प्राजापत्त्यमालभन्त ऽएष व्वा ऽअश्श्वमेधो य ऽएष तपति तस्य सँव्वत्सर ऽआत्त्मायमग्ग्निरर्क्कस्तस्येमे लोका ऽआत्त्मानस्तावेतावर्क्काश्श्वमेधौ सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्म्मृत्युञ्जयति नैनम्मृत्युराप्नोति मृत्युरस्यात्त्मा भवति सर्व्वमायुरेत्येतासान्देवतानामेको भवति य ऽएवं व्वेद ॥ ८ ॥*

अथ व्वꣳशः। समानमा साञ्जीवीपुत्त्रात्साञ्जीवीपुत्त्रो माण्डूकायनेर्म्माण्डूकायनिर्म्माण्डव्व्यान्माण्डव्व्यः कौत्सात्कौत्सो माहित्थेर्म्माहित्थिर्व्वामकक्षायणाद्द्वामकक्षायणो व्वात्स्याद्द्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कुश्श्रेः कुश्श्रिर्य्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः

---

* अत्र क्षतम् ५५००।

का॒वषेय॑ः प्र॒जाप॑तेः प्र॒जाप॑ति॒र्ब्रह्म॑णो ब्र॒ह्म स्व॒यम्भु ब्र॒ह्म॒णे॒ नमः॑ ॥ ९ ॥

षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥७५॥

इति षष्ठोऽध्यायः ॥ ६ ॥

† अग्निरहस्यं नाम दशमं काण्डं समाप्तम् ॥ १० ॥



† अस्मिन्काण्डे कण्डिकासंख्या २६९ ।

# अथाष्टाध्यायीनामैकादशङ्काण्डम्

अस्मिन्काण्डे प्रतिपादनीया विषयाः—अग्न्याधानकालः, दर्शपूर्णमास-दाक्षायणयज्ञयोरनुष्ठानावधिः, दाक्षायणयज्ञः, पथिकृदिष्टिः, अभ्युदय-इष्टेष्टिः, दर्शपूर्णमासार्थवादः, प्रयाजानुयाजानुमन्त्रणम्, इडा-स्विष्टकृत्-सूक्तवाक-शंयुवाक-पत्नीसंयाज-वेद्यालम्भ-समिष्ट-यजुः-प्रधानयागादिविषयोऽर्थवादः, अग्निहोत्रार्थवादः, ब्रह्मचारिकर्तव्यम्, मित्रविन्देष्टिः, हविषः समृद्धिः, चातुर्मास्यार्थवादः, पञ्च महायज्ञाः, स्वाध्यायप्रशंसा, प्रायश्चित्तम्, अंश्वदाभ्यग्रहौ, आध्यात्मिकविद्या, पशुबन्धप्रशंसा, हविर्यज्ञविधसवविधयोर्लक्षणम्, षड्ढोतारहोमः



[ यज्ञादीनां संवत्सराद्यात्मना निरूपणम् ]

॥ ॐ ॥ सँव्वत्सरो * वै यज्ञः प्रजापतिः † । तस्यैतद्द्वारं यदमावास्या ‡ चन्द्रमा ऽएव द्वारपिधानः ॥ १ ॥

---

* संवत्सरात्मकस्तत्साध्यत्वात् । संवत्सरस्यापि 'द्वादशमासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन तावत्संवत्सरः प्रजापतिः' इति सप्तदशावयवत्वसाम्यात् प्रजापतेस्तस्य च तादात्म्यं यथा—'आदित्यो यूपः' इत्यत्र तेजःसारूप्याद् यूपस्यादित्यात्मना स्तुतिरेवमत्रापि संख्यासारूप्यात् स्तुतिरेव मन्तव्या ।

† आ श्रावयेत्यादि सप्तदशाक्षरसाध्यत्वाद्यज्ञस्य प्रजापतित्वम् । तथा च तैत्तिरीयसंहितायाम्—"आ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः" ( तै० सं० का० १ प्र० ६ अनु० ११ )

‡ अमेत्ययं शब्दः सहशब्दार्थे वर्तते, प्रतिपदादितिथिषु मध्ये यस्यां तिथौ अमा सूर्येण सह चन्द्रो वसति सामावास्या । अमापूर्वाद्वसेः 'ऋहलोर्ण्यत्' इति ण्यत् ।

यद्वा—वसुशब्दाभिधेय इन्द्रः साम्नाय्यपानार्थं देवैः सह यस्यां तिथौ वसतीत्यमावास्या । तथा च तैत्तिरीयसंहिताम्—

"अमा वै नोऽद्य वसु वसतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्वम्"

स यो ऽमावास्यायामग्नी ऽआधत्ते । यथा विवृतायान्द्वारि
द्वारा पुरम्प्रपद्येत स तत ऽएव स्वर्गँ[1]ल्लोक[2]मियादेवन्तद्यो ऽ-
मावास्यायामाधत्ते ॥ २ ॥ अथ यो नक्षत्र ऽआधत्ते ।
यथापिहितायान्द्वार्य्यद्वारा पुरम्प्रपित्त्सेत्स जिह्मः पुरः स्या-
देवन्तद्यो नक्षत्र ऽआधत्ते तस्मान्न नक्षत्र ऽआदधीत ॥३॥
यदुहरेवैषः । न पुरस्तान्न पश्चाद्ददृश्येत तदुहरुपवसे-
त्तर्हि ह्येष ऽइमँल्लोकमागच्छति तस्मिन्निह वसति ॥ ४ ॥
सर्वे देवा वसन्ति । सर्वाणि भूतानि सर्वा देवताः सर्व
ऽऋतवः सर्वे स्तोमाः सर्वाणि पृष्ठानि सर्वाणि
च्छन्दाꣳसि ॥ ५ ॥ सर्वेषु ह वा ऽअस्य देवेषु । सर्वेषु भू-
तेषु सर्वासु देवतासु सर्वेष्वृतुषु सर्वेषु स्तोमेषु सर्वेषु
पृष्ठेषु सर्वेषु च्छन्दःस्वग्नी ऽआहितौ भवतो यो ऽमा-
वास्यायामाधत्ते तस्मादमावास्यायामेवाग्नी ऽआदधीत
॥ ६ ॥ या ऽसौ वैशाख[3]स्यामावास्या तस्यामादधीत सा
रोहिण्या सम्पद्यत ऽआत्मा वै प्रजा पशवो रोहिण्या-
त्मन्न्येवैतत्प्रजायाम्पशुषु प्रतितिष्ठत्यमावास्या वा ऽअ-
ग्न्याधेयरूपन्तस्मादमावास्यायामेवाग्नी ऽआदधीत पौर्ण-
मास्यामन्वारभेतामावास्यायान्दीक्षेत ॥ ७ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) सुष्ठु अर्ज्यते शोभनेनार्जनेन गम्यत इति वा स्वर्गः—सर्वजनाभिलषणीयं दुःखा-सम्भिन्नं कर्मफलमित्यर्थः । तथा चाहुः—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥ ( तन्त्रवा० )

(२) लोक्यत इति लोकः ।

(३) विशाखानक्षत्रयुक्ता पौर्णमासी यस्मिन्मासि स वैशाखः ।

[ दर्शपूर्णमासाहुतिसंख्याविशेषकथनम् ]

घ्नन्ति वा ऽएतद्यज्ञम् । यदेनन्तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तङ्घ्नन्ति यत्पशुꣳ संज्ञपयन्ति विशासति तत्तङ्घ्नन्त्युलूखलमुसलाभ्यान्दृषदुपलाभ्याꣳ हविर्यज्ञङ्घ्नन्ति ॥ १ ॥ तꣳ हत्वा यज्ञम् । अग्नावेव योनौ रेतो भूतꣳ सिञ्चत्यग्निर्वै योनिर्यज्ञस्य स ततः प्रजायते तद्दश ता ऽआहुतीः सम्पादयेद्याभ्यो वषट् क्रियते ॥ २ ॥ अयं वै यज्ञो योऽयम्पवते । सोऽयमेक ऽइवैव पवते सोऽयम्पुरुषेऽन्तः प्रविष्टो दशधाविहितः स ऽएवङ्क्लृप्तैः प्राणैरग्नेर्योनेरधिजायते सैषा दशाक्षरा विराट् सैषा सम्पत्स यज्ञः ॥ ३ ॥ अथो ऽअपि नव स्युः । तन्न्यूनां विराजङ्करोति प्रजननाय न्न्यूनाद्वा ऽइमाः प्रजाः प्रजायन्ते सैषा सम्पत्स यज्ञः ॥ ४ ॥ अथो ऽअप्येकातिरिक्ता स्यात् । सा प्रजापतिमभ्यतिरिच्यते सैषा सम्पत्स यज्ञः ॥ ५ ॥ अथो ऽअपि द्वे ऽअतिरिक्ते स्याताम् । द्वन्द्वं वै मिथुनम्प्रजननम्मिथुनमेवैतत्प्रजननङ् क्रियते सैषा सम्पत्स यज्ञः ॥ ६ ॥ अथो ऽअपि तिस्रोऽतिरिक्ताः स्युः । द्वन्द्वमह मिथुनम्प्रजननमथ यज्जायते तत्तृतीयꣳ सैषा सम्पत्स यज्ञः ॥ ७ ॥ अथो ऽअपि चतस्रोऽतिरिक्ताः स्युः । तद्यथैवैवञ्चतस्रस्त्रयो वा ऽइमे लोकास्तदिमानेव लोकाँस्तिसृभिराप्नोति प्रजापतिर्वा ऽअतीमाँल्लोकाँश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याप्नोति सैषा सम्पत्स यज्ञः ॥ ८ ॥ स यद्वाभ्यामूनन्तदूनम् । सोऽयज्ञो

यत्पञ्चभिरतिरिक्तन्तदतिरिक्तᳪ सोऽयज्ञᳪ सैषैव दशत्यधि सम्पदेषा विᳪशत्यामेषा सहस्रात् ॥ ९ ॥ आजिं वा ऽएते धावन्ति। ये दर्शपूर्णमासाभ्यां यजन्ते स वै पञ्चदश वर्षाणि यजेत तेषाम्पञ्चदशानां वर्षाणान्त्रीणि च शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च सँवत्सरस्य रात्रयस्तद्द्रात्रीराप्नोति ॥ १० ॥ अथापराणि पञ्चदशैव वर्षाणि यजेत। तेषाम्पञ्चदशानां वर्षाणान्त्रीणि चैव शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च सँवत्सरस्याहानि तदहान्याप्नोति तद्वेव सँवत्सरमाप्नोति ॥ ११ ॥ मर्त्या ह वा ऽअग्रे देवा ऽआसुः। स यदैव ते सँवत्सरमापुरथामृता ऽआसुः सर्वं वै सँवत्सरः सर्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यᳪ सुकृतम्भवत्यक्षय्यो लोकः ॥ १२ ॥ स ऽआजिसृतामेकः। य ऽएवं विद्वाँस्त्रिᳪशतं वर्षाणि यजते तस्मादु त्रिᳪशत-मेव वर्षाणि यजेत यद्यु दाक्षायणयज्ञी स्यादथो ऽअपि पञ्चदशैव वर्षाणि यजेतात्र ह्येव सा सम्पत्सम्पद्यते द्वे हि पौर्णमास्यौ यजते द्वे ऽअमावास्ये ऽअत्रो ऽएव खलु सा सम्पद्भवति ॥ १३ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ पौर्णमासयागे दर्शयागे च हविषो विधानम् ]

पौर्णमासेनेष्ट्वा। इन्द्राय विमृधेऽनुनिर्वपति तेन यथेष्टैवं यजत ऽआमावास्येनेष्ट्वादित्यै चरुमनुनिर्वपति

तेन यथेष्ट्यैवं यजते ॥ १ ॥ स यत्पौर्णमासेनेष्ट्वा । इन्द्राय विमृधेऽनुनिर्वपतीन्द्रो वै यज्ञस्य देवतैतदग्नीषोमीयम्पौर्णमासꣳ हविर्भवति तत्र नेन्द्राय त्वेति किञ्चन क्रियत ऽएतेनो हास्यैतत्सेन्द्रꣳ हविर्भवत्येतेन सेन्द्रो यज्ञोऽथ यद्विमृधे त्वेति सर्वा ऽउ हि मृधो नाष्ट्राः पौर्णमासेन हन्ति ॥ २ ॥ अथ यदामावास्येनेष्ट्वा । अदित्यै चरुमनुनिर्वपत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष ऽएताꣳ रात्रिन्न पुरस्तान्न पश्चाद्दृशे तेनैतदुनद्धेव हविर्भवति तेनाप्रतिष्ठितमियं वै पृथिव्यदितिः सेयमद्धा सेयम्प्रतिष्ठितैतेनो हास्यैतदुद्धेव हविर्भवत्येतेन प्रतिष्ठितमेतन्नु तद्यस्मादनुनिर्वपत्यथ यस्मान्नानुनिर्वपेत् ॥ ३ ॥ स यत्पौर्णमासेनेष्ट्वा । इन्द्राय विमृधेऽनुनिर्वपति सेन्द्रो मे यज्ञोऽसदिति सर्वो वै यज्ञ ऽइन्द्रस्यैव स यत्सर्वो यज्ञ ऽइन्द्रस्यैवैतेनो हास्यैतत्सेन्द्रꣳ हविर्भवत्येतेन सेन्द्रो यज्ञः ॥ ४ ॥ अथ यदामावास्येनेष्ट्वा । अदित्यै चरुमनुनिर्वपत्यामावास्यं वा ऽअनुनिर्वाप्यम्पौर्णमासेन वा ऽइन्द्रो वृत्रमहँस्तस्मा ऽएतद्वृत्रञ्जघ्नुषे देवा ऽएतद्धविरनुनिरवपन्यदामावास्यङ्किमनुनिर्वाप्येऽनुनिर्वपेदिति तस्मान्नानुनिर्वपेत् ॥ ५ ॥ स यत्पौर्णमासेनेष्ट्वा । अथान्यद्धविरनुनिर्वपत्यामावास्येनेष्ट्वाथान्यद्धविरनुनिर्वपति द्विषन्तꣳ ह स भ्रातृव्यम्प्रत्युच्छ्रयतेऽथ यः पौर्णमासेनैव पौर्णमासीं यजत ऽआमावास्येनामावास्यामसपत्ना हैवास्यानुपबाधा

श्रीर्भवति ॥ ६ ॥ पौर्णमासेन वै देवाः । पौर्णमासीं ऽयजमाना ऽआमावास्येनामावास्यां क्षिप्र ऽएव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त स यो हैवं विद्वान्पौर्णमासेनैव पौर्णमासीं यजत ऽआमावास्येनामावास्यां क्षिप्र ऽएव पाप्मानमपहते क्षिप्रे प्रजायते स यद्यनुनिर्वपेद्द्याद्दक्षिणान्नादक्षिणं हविः स्यादिति ह्याहुर्दर्शपूर्णमासयोर्ह्येवैषा दक्षिणा यदन्वाहार्य्य * ऽइति त्वनुनिर्वाप्यस्याथाभ्युदितस्य ॥ ७ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ दर्शयागे पुरस्ताच्चन्द्रदर्शनप्रायश्चित्तेष्टिः ]

तद्धैके दृष्ट्वोपवसन्ति । श्वो नोदेतेत्यभ्रस्य वा हेतोरनिर्ज्ञाय वाथोतोपवसन्त्यथैनमुताभ्युदेति स यद्यगृहीतः हविरभ्युदियात्प्रज्ञातमेव तदुपैव व्रतचर्य्या यत्पूर्वेद्युर्दुग्धन्दधि हविरातञ्चनन्तत्कुर्वन्ति प्रति प्रमुञ्चन्ति वत्साँस्तान्पुनरपाकुर्वन्ति ॥ १ ॥ तानपराह्णे पर्णशाखयापाकरोति । तद्यथैवादः प्रज्ञातमामावास्यꣳ हविरेवमेव तद्यदु व्रतचर्य्यां वा नोदाशङ्केत गृहीतं वा हविरभ्युदियादितरथो तर्हि कुर्य्यादेतानेव तण्डुलान्सुफलीकृतान्कृत्वा स येऽणीयाꣳसस्तानग्नये † दात्रेऽष्टाकपालम्पुरोडाशꣳ

* अन्वाहरति—यज्ञसम्बन्धिदोषजातं परिहरति—अनेनेति अन्वाहार्यो नाम ऋत्विग्भोजनीय ओदनः सा० भा० ।

† 'निरुप्ते व्रताशक्तौ वा त्रेधं तण्डुलान्विभज्य मध्यमानग्नये दात्रे, स्थविष्ठानिन्द्राय प्रदात्रे दधनि चरुमणिष्ठान्विष्णवे शिपिविष्टाय शृते चरुम्" ( का० श्रौ० सू० २५. ४. ३८ )

श्रपयति ॥ २ ॥ अथ यत्पूर्वेद्युः । दुग्धन्दधि तदिन्द्राय प्रददात्र्येऽथ तदानीन्दुग्धे विष्णवे शिपिविष्टायैतांस्तण्डुला-न्छृते चरुं श्रपयति चरुरुह्येव स यत्र क्व च तण्डु-लानावपन्ति ॥ ३ ॥ तद्यदेवम्भवति । एष वै सोमो राजा देवानामन्नं यच्चन्द्रमास्तमेतदुपैत्सीत्तमपारात्सीत्त-मस्मा ऽअग्निर्दाता ददातीन्द्रः प्रदाता प्रयच्छति तम-स्मा इन्द्राग्नी यज्ञन्दत्तस्तेनेन्द्राग्निभ्यान्दत्तेन यज्ञेन यजतेऽथ यद्विष्णवे शिपिविष्टायेति यज्ञो वै विष्णु-रथ यच्छिपिविष्टायेति यमुपैत्सीत्तमपारात्सीत्तच्छिपितमिव यज्ञस्य भवति तस्माच्छिपिविष्टायेति तन्नो यच्छक्नुया-त्तद्द्याज्ज्यादक्षिणं हविः स्यादिति ह्याहुरथ यदेव नोदि-यादथोपवसेत् ॥ ४ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ पश्चाच्चन्द्रदर्शने नैमित्तिकेष्टिः ]

अद्यामावास्येति मन्यमान ऽउपवसति । अथैष पश्चाद्ददृशे सहैष दिव्यः श्वा स यजमानस्य पशून-भ्यवेक्षते तदपशव्यं स्यादुप्रायश्चित्तिकृत ऽएत-स्मादु हैतद्भीषावचन्द्रमसादिति ॥ १ ॥ छायामुपसर्पन्ति । एतेनो हैतदुपतपदाचक्षते श्वलुचितमित्येतमु हैवैतदा-चक्षते ॥ २ ॥ शशश्चान्द्रमस ऽइति । चन्द्रमा वै सोमो देवानामन्नन्तम्पौर्णमास्यामभिषुण्वन्ति सोऽपरपक्षेऽप ऽओषधीः प्रविशति पशवो वा ऽअप ऽओषधीरदन्ति

तदेनमेताᳬं रात्रिम्पशुभ्यः सन्नयति ॥ ३ ॥ सोऽथामावास्येति । मन्यमान ऽउपवसत्यथैष पश्चाद्ददृशे तद्यजमानो यज्ञपथादेति तदाहुः कथङ्कुर्य्यादित्त्वा यज्ञपथाद्यजेता३ न यजेता३ ऽइति यजेत हैव न ह्यन्यदपक्रमणम्भवति श्वः श्व ऽएवैष ज्यायानुदेति स ऽआमावास्यविधेनैवेष्ट्वाथेष्टिमनुनिर्वपति तदुहैवैव श्वो वा * ॥ ४ ॥ तस्यै त्रीणि हवीᳬंषि भवन्ति । अग्नये पथिकृतेऽष्टाकपालम्पुरोडाशमिन्द्राय व्वृत्रघ्न ऽएकादशकपालमग्नये वैश्वानराय द्वादशकपालम्पुरोडाशम् ॥ ५ ॥ स यदग्नये पथिकृते निर्वपति । अग्निर्वै पथः कर्त्ता स यस्मादेवादो यजमानो यज्ञपथादेति तमेनमग्निः पन्थानमापादयति ॥६॥ अथ यदिन्द्राय व्वृत्रघ्ने । पाप्मा वै व्वृत्रो यो भूतेर्वारयित्त्वा तिष्ठति कल्याणात्कर्म्मणः साधोस्तमेतदिन्द्रेणैव व्वृत्रघ्ना पाप्मानं व्वृत्रᳬं हन्ति तस्मादिन्द्राय व्वृत्रघ्ने ॥ ७ ॥ अथ यदग्नये वैश्वानराय । द्वादशकपालम्पुरोडाशन्निर्वपति यत्र वा ऽइन्द्रो व्वृत्रमहँस्तमग्निना वैश्वानरेण समदहत्तदस्य सर्व्वम्पाप्मानᳬं समदहत्तथो ऽएवैष ऽएतदिन्द्रेणैव व्वृत्रघ्ना पाप्मानं व्वृत्रᳬं हत्त्वा तमग्निना वैश्वानरेण सन्दहति तदस्य सर्व्वम्पाप्मानᳬं सन्दहति स यो हैवं विद्वानेतयेष्ट्या यजते न हास्याल्पश्चन पाप्मा परिशिष्यते ॥ ८ ॥ तस्यै सप्तदश सामिधेन्न्यो भवन्ति ।

* "पश्चादभ्युद्दृष्ट आमावास्येनेष्ट्वा तदहर्वैव श्वो वाग्नये पथिकृत इन्द्राय वृत्रघ्न एकादशकपालो वैश्वानरश्च" का० श्रौ० सू० २५. ४. ४४.

उपाᳪंशु देवता यजति यां कामयते ता याज्ज्यानुवाक्क्याः करोत्त्येवमाज्ज्यभागावेवᳪं सᳪंयाज्ये ॥ ९ ॥ तिस्रधन्न्व-न्दक्षिणान्ददाति । धन्न्वना वै इश्वानम्बाधन्ते तदेतमेवै-तद्वाधते यत्तिस्रधन्न्वन्दक्षिणान्ददाति ॥ १० ॥ दण्डन्द-क्षिणान्ददाति । दण्डेन वै इश्वानम्बाधन्ते तदेतमेवैतद्वाधते यद्दण्डन्दक्षिणान्ददात्त्येषा न्न्वादिष्टा दक्षिणा दद्यात्त्वेवास्या-मप्प्यन्न्यद्या ऽउत्तरा दक्षिणास्तासां रूयत्त्सम्पद्येत सा हैषा पशव्व्येष्टिस्तयाप्प्यनभ्युदृष्टो यजेतैव ॥ ११ ॥

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ आख्यायिकया सृष्टिप्रतिपादनम् ]

आपो ह वा ऽइदमग्ग्रे सलिलमेवास । ता ऽअकामयन्त कथन्नु प्प्रजायेमहीति ता ऽअश्श्राम्म्यँस्ता-स्तपो ऽतप्प्यन्त तासु तपस्तप्प्यमानासु हिरण्णमयमाण्डᳪं सम्बभूवाजातो ह तर्हि सँव्वत्त्सर ऽआस तदिदᳪं हि-रण्णमयमाण्डं यावत्त्सँव्वत्त्सरस्य व्वेला तावत्पर्य्यप्प्लवत ॥ १ ॥ ततः सँव्वत्त्सरे पुरुषः समभवत् । स प्प्रजापति-स्तस्म्मादु सँव्वत्त्सर ऽएव स्त्री वा गौर्वा व्वडबा वा व्विजा-यते सँव्वत्त्सरे हि प्प्रजापतिरजायत स ऽइदᳪं हिरण्णमय-माण्डं व्व्यरुजन्नाह तर्हि का चन प्प्रतिष्ठास तदेन-मिदमेव हिरण्णमयमाण्डं यावत्त्सँव्वत्त्सरस्य व्वेलासीत्ता-वद्बिभ्रत्पर्य्यप्प्लवत ॥ २ ॥ स सँव्वत्त्सरे व्व्याजिहीर्षत् । स भूरिति व्व्याहरत्त्सेयम्पृथिव्व्यभवद्भुव ऽइति तदिदमन्त-

रिक्षमभवत्स्वरिति साऽसौ द्यौरभवत्तस्मादु सँवत्सर ऽएव कुमारो व्याजिहीर्षति सँवत्सरे हि प्रजापतिर्व्याहरत् ॥३॥ स वा ऽएकाक्षरद्व्यक्षराण्येव। प्रथमं वदन्प्रजापतिरवदत्तस्मादेकाक्षरद्व्यक्षराण्येव प्रथमं वदन्कुमारो वदति ॥ ४ ॥ तानि वा ऽएतानि। पञ्चाक्षराणि तान्पञ्चऽर्तूनकुरुत त ऽइमे पञ्चऽर्त्तवः स ऽएवमिमाँल्लोकान्जातान्त्सँवत्सरे प्रजापतिरभ्युदतिष्ठत्तस्मादु सँवत्सर ऽएव कुमार ऽउत्तिष्ठासति सँवत्सरे हि प्रजापतिरुदतिष्ठत् ॥ ५ ॥ स सहस्रायुर्जज्ञे। स यथा नद्यै पारम्परापश्येदेवꣳ स्वस्यायुषः पारम्पराचख्यौ ॥ ६ ॥ सोऽर्चञ्छ्राम्यँश्चचार प्रजाकामः। स ऽआत्मन्न्येव प्रजातिमधत्त स ऽआस्येनैव देवानसृजत ते देवा दिवमभिपद्यासृज्यन्त तद्देवानान्देवत्वं यद्दिवमभिपद्यासृज्यन्त तस्मै ससृजानाय दिवेवास तद्वेव देवानान्देवत्वं यदस्मै ससृजानाय दिवेवास ॥ ७ ॥ अथ योऽयमवाङ् प्राणः। तेनासुरानसृजत त ऽइमामेव पृथिवीमभिपद्यासृज्यन्त तस्मै ससृजानाय तम ऽइवास ॥ ८ ॥ सोऽवेत्। पाप्मानं वाऽअसृक्षि यस्मै मे ससृजानाय तम ऽइवाभूदिति ताँस्तत ऽएव पाप्मनाविध्यत्ते तत ऽएव पराभवँस्तस्मादाहुर्नैतदस्ति यद्दैवासुरं यदिदमन्वाख्याने त्वदुद्यत ऽइति हासे त्वत्ततो ह्येव तान्प्रजापतिः पाप्मनाविध्यत्ते तत ऽएव पराभवन्निति ॥ ९ ॥ तस्मादेतदृषिणाभ्यनूक्तम्। न त्वं युयुत्से कतमच्चनाहर्न्न तेऽमित्रो मघवन्कश्चनास्ति

मायेत्त्सा ते यानि युद्धान्न्याहुर्न्नाद्य शत्रुन्न नु पुरा युयुत्स ऽइति ॥ १० ॥ स यदस्मै देवान्त्ससृजानाय । दिवेवास तदहरकुरुताथ यदस्मा ऽअसुरान्त्ससृजानाय तम ऽइवास ताथ्ठं रात्रिमकुरुत ते ऽअहोरात्रे ॥ ११ ॥ स ऽऐक्षत प्प्रजापतिः । सर्वं वा ऽअत्त्सारिषं य ऽइमा देवता ऽअसृक्षीति स सर्वत्त्सरोऽभवत्त्सर्वत्त्सरो ह वै नामैतद्यत्त्सँवत्त्सर ऽइति स यो हैवमेतत्त्सँवत्त्सरस्य सर्वत्त्सरत्त्वं वेद यो हैनम्पाप्प्मा मायया त्त्सरति न हैनꣳ सोऽभिभवत्त्यथ यमभिचरत्त्यभि हैवैनम्भवति य ऽएवमेतत्त्सँवत्त्सरस्य सर्वत्त्सरत्त्वं वेद ॥ १२ ॥ स ऽऐक्षत प्प्रजापतिः । इमं वा ऽआत्मनः प्रतिमामसृक्षि यत्त्सँवत्त्सरमिति तस्म्मादाहुः प्प्रजापतिः सँवत्त्सर ऽइत्त्यात्मनो ह्येतम्प्रतिमामसृजत यद्वेव चतुरक्षरः सँवत्त्सरश्श्चतुरक्षरः प्प्रजापतिस्तेनो हैवास्यैष प्प्रतिमा ॥ १३ ॥ ता वा ऽएताः प्प्रजापतेरधि देवता ऽअसृज्ज्यन्ताग्ग्निरिन्द्रः सोमः परमेष्ट्ठी प्प्राजापत्त्यः ॥ १४ ॥ ताः सहस्त्रायुषो जज्ञिरे । ता यथा नद्यै पारम्परापश्श्येदेवथ्ठं स्वस्यायुषः पारम्पराचक्ख्युः ॥ १५ ॥ ता ऽअर्च्चन्त्यः श्राम्म्यन्तश्श्चेरुः । तत ऽएतम्परमेष्ट्ठी प्प्राजापत्त्यो यज्ञमपश्श्यद्यद्दर्शपूर्ण्णमासौ ताभ्यामयजत ताभ्यामिष्ट्वाकामयताहमेवेदꣳ सर्वथ्ठं स्यामिति स ऽआपोऽभवदापो वा ऽइदꣳ सर्वन्ता यत्परमे स्त्थाने तिष्ट्ठन्ति यो हीहाभिखनेदप ऽएवाभिविन्देत्परमाद्वा ऽएतत्त्स्थानाद्वर्षति यद्दिवस्तस्म्मात्परमेष्ट्ठी नाम ॥ १६ ॥ स परमेष्ट्ठी प्प्रजापति-

म्पितरमब्रवीत् । कामप्रं वा ऽअहं यज्ञमदर्शन्तेन त्वा याजयानीति तथेति तमयाजयत्स ऽइष्ट्वाकामयताहमेवेदꣳ सर्वꣳ स्यामिति स प्राणोऽभवत्प्राणो वा ऽइदꣳ सर्वमयं वै प्राणो योऽयम्पवते स प्रजापतिस्तस्य दृष्टिर्यदेव वेदेत्थाद्वातीति यद्वै किञ्च प्राणि स प्रजापतिः स यो हैवमेताम्प्रजापतेर्दृष्टिं वेदाविरिव हैव भवति ॥ १७ ॥

स प्रजापतिरिन्द्रम्पुत्रमब्रवीत् । अनेन त्वा कामप्रेण यज्ञेन याजयानि येन मामिदम्परमेष्ठ्ययीयजद्दिति तथेति तमयाजयत्स ऽइष्ट्वाकामयताहमेवेदꣳ सर्वꣳ स्यामिति स वागभवद्वाग्वा ऽइदꣳ सर्वन्तस्मादाहुरिन्द्रो वागिति ॥ १८ ॥ [ अर्धप्रपाठकः ] स ऽइन्द्रोऽग्नीषोमौ भ्रातरावब्रवीत् । अनेन वाङ्कामप्रेण यज्ञेन याजयानि येन मामिदम्पिता प्रजापतिरयीयजद्दिति तथेति तावयाजयत्ताविष्ट्वाकामयेतामावमेवेदꣳ सर्वꣳ स्यावेति तयोरन्नाद ऽएवान्यतरोऽभवदन्नमन्यतरोऽन्नाद ऽएवाग्निरभवदन्नꣳ सोमोऽन्नादश्च वा ऽइदꣳ सर्वमन्नञ्च ॥ १९ ॥ ता वा ऽएताः । पञ्च देवता ऽएतेन कामप्रेण यज्ञेनायजन्त ता यत्कामा ऽअयजन्त स ऽआभ्यः कामः समार्ध्यत यत्कामो ह वा ऽएतेन यज्ञेन यजते सोऽस्मै कामः समृध्यते ॥ २० ॥ त ऽइष्ट्वा प्राचीन्दिशमपश्यन् । ताम्प्राचीमेवाकुर्वत सेयम्प्राच्च्येव दिक्तस्मादिमाः प्रजाः प्राच्च्यः सर्प्पन्ति प्राचीꣳ ह्येतामकुर्वतोपैनामितः कुर्वीमहीति तामूर्जमकुर्वतेमाञ्जलूर्जम्पश्येमेति सासौ द्यौरभवत्

॥ २१ ॥ अथ दक्षिणान्दिशमपश्यन् । तान्दक्षिणामेवा-कुर्वत सेयन्दक्षिणैव दिक्तस्माद्दु दक्षिणत ऽएव दक्षिणा ऽउपतिष्ठन्ते दक्षिणतोऽभ्यवाजन्ति दक्षिणार्थं ह्येतामकुर्वतो-पैनामितः कुर्वीमहीति तँल्लोकमकुर्वतेमङ्खलु लोकम्पश्येमे-ति तदिदमन्तरिक्षमभवदेष वै लोकः सा यथा हैवेयम्प्रति-ष्ठाविरस्मिँल्लोके पृथिव्येवमु हैवैषा प्रतिष्ठाविरमु-ष्मिँल्लोक ऽइदमन्तरिक्षः स यदिह सन्नमुँल्लोकन्न पश्यति तस्मादाहुः परोऽक्षमसौ लोक ऽइति ॥ २२ ॥ अथ प्रतीचीन्दिशमपश्यन् । तामाशामकुर्वत तस्माद्यः प्राङ् सृत्वा विन्दत ऽएतामेव तेन दिशमेत्याशार्थं ह्येतामकुर्व-तोपैनामितः कुर्वीमहीति तार्थं श्रियमकुर्वतेमाङ्खलु श्रिय-म्पश्येमेति सेयम्पृथिव्यभवच्छ्रीर्वा ऽइयन्तस्माद्योऽस्यै भूयिष्ठं विन्दते स ऽएव श्रेष्ठो भवति ॥ २३ ॥ अथो-दीचीन्दिशमपश्यन् । तामपोऽकुर्वतोपैनामितः कुर्वीमहीति तन्धर्म्ममकुर्वत धर्म्मो वा ऽआपस्तस्माद्यदेमँल्लोकमाप ऽआगच्छन्ति सर्व्वमेवेदं यथा धर्म्मम्भवत्यथ यदा वृष्टि-र्भवति बलीयानेव तर्ह्यबलीयस ऽआदत्ते धर्म्मो ह्यापः ॥ २४ ॥ ता वा ऽएताः । एकादश देवताः पञ्च प्रयाजा द्वावाज्यभागौ स्विष्टकृत्त्रयोऽनुयाजाः ॥ २५ ॥ ता ऽएका-दशाहुतयः । एताभिर्वा ऽआहुतिभिर्देवा ऽइमाँल्लोका-न्जयन्नेता दिशस्तथो ऽएवैष ऽएताभिराहुतिभिरिमाँल्लो-काञ्जयत्येता दिशः ॥ २६ ॥ चतस्रोऽवान्तरदिशः । त ऽएव चत्वारः पत्नीसंयाजा ऽअवान्तरदिशो वै

देवाश्चतुर्भिः पत्नीसंयाजैरजयन्नवान्तरदिश ऽउ ऽएवैष एतैर्जयति ॥ २७ ॥ अथेडा । अन्नाद्यमेवैतया देवा ऽअजयँस्तथो ऽएवैष ऽएतयान्नाद्यमेव जयत्येषा नु देवत्रा दर्शपूर्णमासयोः सम्पत् ॥ २८ ॥ अथाध्यात्मम् । पञ्चेमे पुरुषे प्राणा ऽऋते चक्षुर्भ्यान्त ऽएव पञ्च प्रयाजा चक्षुषी ऽआज्यभागौ ॥ २९ ॥ अयमेवावाङ् प्राणः स्विष्टकृत् । स यत्तमभ्यर्द्ध ऽइवेतराभ्य ऽआहुतिभ्यो जुहोति तस्मादेतस्मात्प्राणात्सर्वे प्राणा बीभत्सन्तेऽथ यत्स्विष्टकृते सर्वेषाᳬं हविषाᳬं समवद्यति तस्माद्यत्किञ्चे-मान्प्राणानापद्यत ऽएतमेव तत्सर्वᳬं समवैति ॥३०॥ त्रीणि शिश्नानि । त ऽएव त्रयोऽनुयाजाः स योऽयं वर्षिष्ठो-ऽनुयाजस्तदिदं वर्षिष्ठमिव शिश्नन्तं वा ऽअनवानन्यजे-दित्याहुस्तथो हास्यैतदमृद्धम्भवतीति ॥ ३१ ॥ स वै सकृद-वान्यात् । एकᳬं ह्येतस्य पर्वाथ यदपर्वकᳬं स्यात्प्रतृण्णं वैव तिष्ठेल्लम्बेत वा तस्मादेतदुच्च तिष्ठति पद्यते च तस्मात्सकृदवान्यात् ॥ ३२ ॥ द्वौ बाहू द्वा ऽऊरू । त ऽएव चत्वारः पत्नीसंयाजाः प्रतिष्ठायमेव प्राण ऽइडा यत्तान्नाग्नौ जुहोति यत्सा प्रदग्धेव तस्मादयमनवतृण्णः प्राणः ॥ ३३ ॥ अस्थ्येव याज्यानुवाक्याः । माᳬंसᳬं हविस्तन्मितञ्छन्दो यद्याज्यानुवाक्यास्तस्मादु समावन्त्ये-वास्थीनि मेद्यतश्च कृश्यतश्च भवन्त्यथ यद्भूय ऽइव च हविर्गृह्णाति कनीय ऽइव च तस्मादु माᳬंसान्येव मेद्यतो मेद्यन्ति माᳬंसानि कृश्यतः कृश्यन्ति तेनैतेन

यज्ञेन याङ्कामयते देवतान्तां ऽसृजति यस्यै हविर्भवति ॥ ३४ ॥ ता वा ऽएताः । अनपोद्धार्य्या ऽआहुतयो भवन्ति स यद्धैतासामपोद्धरेद्यथैकमङ्गं श्रृणीयात्प्राणं वा निर्हण्यादेवन्तदन्न्यान्येव हवीꣳष्युप चाह्रियन्तेऽप च ह्रियन्ते ॥ ३५ ॥ ता वा ऽएताः । षोडशाहुतयो भवन्ति षोडशकलो वै पुरुषः पुरुषो यज्ञस्तस्मात्षोडशाहुतयो भवन्ति ॥ ३६ ॥

प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

[ व्रतोपायनमीमांसा ]

तद्वा ऽअतो व्रतोपायन ऽउच्यते । यदि नाश्नाति पितृदेवत्यो भवति यद्यु ऽअश्नाति देवानत्त्यश्नातीति तदारण्यमश्नीयादिति तत्र स्त्थापयन्ति ॥ १ ॥ स यदि ग्राम्या ऽओषधीरश्नाति । पुरोडाशस्य मेधमश्नाति यद्यारण्या ऽओषधीरश्नाति बर्हिषो मेधमश्नाति यदि वानस्पत्त्यमश्नातीध्मस्य मेधमश्नाति यदि पयः पिबति सान्नाय्यस्य चाज्ज्यस्य च मेधमश्नाति यद्यपः पिबति प्प्रणीतानाम्मेधमश्नाति यदि नाश्नाति पितृदेवत्यो भवति ॥ २ ॥ तदाहुः । किमयनमिति स्वयꣳ हैवैते रात्री ऽअग्निहोत्रञ्जुहुयात्स यद्धुत्त्वा प्प्राश्नाति तेनापितृदेवत्त्यो भवत्त्याहुतिर्व्वा ऽएषा स यदेवैतामात्त्मन्नाहुतिञ्जुहोति तेनो ऽएतेषाम्मेधानान्नाश्नाति ॥ ३ ॥ एते ह वै रात्री । सर्व्वा रात्रयः समवयन्ति या ऽआपूर्य्यमाणपक्षस्य रात्रयस्ताः सर्व्वाः पौर्ण्णमासीꣳ समवयन्ति या ऽअपक्षीयमाणपक्षस्य

रात्रयस्ताः सर्वा ऽअमावास्याᳫं समवयन्ति स यो हैवं विद्वान्त्स्वयमुपवसथे जुहोति सर्वदा हैवास्य स्वयᳫं हुतम्भवति ॥ ४ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

[ आख्यायिकया यज्ञोत्पत्तिकथनम् ]

देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयञ्जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः ॥ १ ॥ अथ देवाः । अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानम्प्रददौ यज्ञो हैषा मास यज्ञो हि देवानामन्नम् ॥ २ ॥ स देवेभ्य ऽआत्मानम्प्रदाय । अथैतमात्मनः प्रतिमामसृजत यद्यज्ञन्तस्मादाहुः प्रजापतिर्यज्ञ ऽइत्यात्मनो ह्येतम्प्रतिमामसृजत ॥ ३ ॥ स ऽएतेन यज्ञेन । देवेभ्य ऽआत्मानन्निरक्रीणीत स यद्व्रतमुपैति यथैव तत्प्रजापतिर्देवेभ्य ऽआत्मानम्प्रायच्छदेवमेवैष ऽएतद्देवेभ्य ऽआत्मानम्प्रयच्छति तस्मादु संस्थत ऽएवैताᳫं रात्रिञ्चिचरिषेद्यथा हविषा चरेदेवᳫं हविर्ह्येष देवानाम्भवति ॥ ४ ॥ अथ यद्यज्ञन्तनुते । यज्ञेनैवैतद्देवेभ्य ऽआत्मानन्निष्क्रीणीते यथैव तत्प्रजापतिर्निरक्रीणीतैवमथ यद्धविर्निर्वपति हविषैवैतद्यज्ञन्निष्क्रीणाति हविरनुवाक्यया-

* व्रीहिपिष्टैर्यवपिष्टैर्वा निर्मितः पक्वः पिण्डविशेषः पुरोडाशः ।

यानुवाक्क्यामवदानेनावदानं य्याज्ज्यया य्याज्ज्यां व्वषट्कारेण व्वषट्कारमाहुत्या तस्याहुतिरेवानिष्क्रीता भवति ॥ ५ ॥ स यथाग्ग्रप्प्रशीर्ण्णो व्वृक्षः । एवमस्यैष यज्ञो भवत्याहुतिमेवान्न्वाहार्य्येण निष्क्रीणाति तद्यदेतद्धीनं य्यज्ञस्यान्न्वाहरति तस्मादन्न्वाहार्य्यो नामैवमु ह्यस्यैष सर्व्व ऽएव यज्ञो निष्क्रीतो भवत्येष ह वै य्यजमानस्यामुष्मिँल्लोक ऽआत्मा भवति यद्यज्ञ स ह सर्व्वतनूरेव य्यजमानोऽमुष्मिँल्लोके सम्भवति य ऽएवं विद्वान्निष्क्रीत्या यजते ॥ ६ ॥

प्रथमाध्याये अष्टमं ब्राह्मणम् ॥ ८ ॥

इति प्रथमोऽध्यायः ॥१॥



[ पुरुषजन्मत्रयप्रतिपादनम्, सामिधेनीप्रशंसाच ]

त्रिर्ह वै पुरुषो जायते । एतन्न्वेव मातुश्चाधि पितुश्चाग्ग्रे जायतेऽथ यं य्यज्ञ ऽउपनमति स यद्यजते तद्द्वितीयञ्जायतेऽथ यत्र म्म्रियते यत्रैनमग्ग्नावब्भ्यादधति स यत्ततः सम्भवति तत्तृतीयञ्जायते तस्मात्त्रिः पुरुषो जायत ऽइत्याहुः ॥ १ ॥ ता वा ऽएताः । एकादश सामिधेनीरन्न्वाह दश वा ऽइमे पुरुषे प्प्राणा ऽआत्मैकादशो यस्म्मिन्नेते प्प्राणाः प्प्रतिष्ठिता ऽएतावान्वै पुरुषस्तदेनङ्कृत्स्नञ्जनयत्यथ यदूर्द्ध्वं सामिधेनीभ्यः सा प्प्रतिष्ठा तदेनञ्जनयित्वा प्प्रतिष्ठापयति ॥ २ ॥ नव प्प्रसवस्य

( १ ) सम्यगिध्यते ज्वाल्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्यः 'प्र वो वाजा अभिद्यव, ( तै० ब्रा० ३।५।२।१ ) इत्याद्या एकादश ।

ऽव्याहृतयः । नवेमे पुरुषे प्राणास्तदेनन्द्वितीयञ्जनय-
त्या३श्रावणम्प्रत्या३श्रावणः सा प्रतिष्ठाथ यद्देवादः
सृष्टौ जन्मोद्यते तदेनन्तृतीयञ्जनयति पत्नीसंयाजा
ऽएव तत्र प्रतिष्ठा ॥ ३ ॥ त्रिर्हि वै पुरुषो जायते ।
एवमेवैनमेतद्यज्ञात्त्रिर्जनयति तासामेकादशानान्त्रिः प्रथमा-
मन्वाह त्रिरुत्तमाम् ॥ ४ ॥ ताः पञ्चदश सामिधेन्यः ।
द्वावाघारौ[1] पञ्च प्रयाजा[2] ऽइडा त्रयोऽनुयाजाः सूक्त-
वाकश्च शंय्योर्वाकश्च तास्त्रयोदशाहुतयोऽथ यद्देवादः
पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ ५ ॥ ताः
पञ्चदशाहुतयः । तासाम्पञ्चदशानामाहुतीनामेता ऽअनु-
वाक्या ऽएताः पञ्चदश सामिधेन्य ऽएतासामनुवाक्या-
नामेता याज्या[3] य ऽएवात्र मन्त्रो यो निगदस्तद्याज्यारूप-
मेतेनो हास्यैता ऽआहुतयोऽनुवाक्यवत्यो भवन्त्येताभिः
सामिधेनीभिरेताभिराहुतिभिरेता ऽअनुवाक्या[4] याज्यवत्य-
श्चाहुतिमत्यश्च[5] भवन्ति ॥ ६ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) वह्नेः कश्चिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकमाज्यधारया आहरणमाघारः ।

(२) प्रकर्षेण इज्यन्ते देवता एभिस्ते प्रयाजाः "समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहा यजति" ( तै० सं० २।६।१ ) इति प्रयाजाः ।

(३) इज्यते अनयेति व्युत्पत्त्या 'ये यजामहे' इति पूर्विका वषट्कारान्ता हविःप्रदानार्था ऋक् याज्याशब्देनोच्यते ।

(४) पुरः यागात्पूर्वं देवतामनुकलयितुं या ऋक् अनूच्यते सा पुरोऽनुवाक्या अनुवाक्या इति चोच्यते ।

(५) 'वत्य०' इति 'ज' पुस्तके ।

[ याज्यानुवाक्ययोश्छन्दोविशेषत्वविधानपूर्वकं स्तवनम् ]

गायत्रीमनुवाक्क्यामन्न्वाह । त्रिपदा वै गायत्री त्रय ऽइमे लोका ऽइमानेवैतल्लोकान्देवाः प्प्रत्त्यष्टापयन् ॥ १ ॥ अथ त्रिष्टुभा यजति । चतुष्प्पदा वै त्रिष्टुप्प्चतुष्प्पादाः पशवस्तत्पशूनेवैतदेषु लोकेषु प्प्रतिष्ठितेषु देवाः प्प्रत्यष्ठापयन् ॥ २ ॥ द्व्यक्षरो वषट्कारः । द्विपाद्वै पुरुषस्तत्पुरुषमेवैतद्द्विपादमेषु पशुषु प्प्रतिष्ठितेषु देवाः प्प्रत्त्यष्ठापयन् ॥३॥ सोऽयन्द्विपात्पुरुषः । पशुषु प्प्रतिष्ठित ऽएवमेवैष ऽएतल्लोकान्प्रतिष्ठापयति लोकेषु प्प्रतिष्ठितेषु पशून्प्रतिष्ठापयति पशुषु प्प्रतिष्ठितेष्ष्वात्मानम्प्रतिष्ठापयत्त्येवमेष पुरुषः पशुषु प्प्रतिष्ठितो य ऽएवं विद्वान्न्यजते ॥ ४ ॥ अथ यद्वषट्कृते जुहोति । एष वै वषट्कारो य ऽएष तपति स ऽएष मृत्त्युस्तदेनमुपरिष्टान्न्मृत्त्योः संस्करोति तदेनमतो जनयति स ऽएतम्म्मृत्त्युमतिमुच्च्यते यज्ञो वा ऽअस्यात्मा भवति तद्यज्ञ ऽएव भूत्त्वैतन्न्मृत्त्युमतिमुच्च्यत ऽएतेनो हास्य सर्व्वे यज्ञक्कृतव ऽएतम्म्मृत्त्युमतिमुक्ताः ॥ ५ ॥ * अथ यामेतामाहुतिञ्जुहोति । एषा ह वा ऽअस्याहुतिरमुष्मिँल्लोक ऽआत्मा भवति स यदेवंविदस्म्माल्लोकात्प्रैत्त्यथैनमेषाहुतिरेतस्य पृष्ठे सत्त्याह्वयत्त्येह्यहं वै त ऽइहात्मास्म्मीति तद्य दाह्वयति तस्म्मादाहुतिर्न्नाम ॥ ६ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



* शतम् ५६०० ।

[ आघारौ स्तोतुमाख्यायिकया तत्सृष्टिप्रतिपादनम् ]

ब्रह्म वा ऽइदमग्र ऽआसीत् । तद्देवानसृजत तद्देवान्त्सृष्ट्वेषु लोकेषु व्व्यारोहयदस्मिन्नेव लोकेऽग्निं वायुमन्तरिक्षे दिव्येव सूर्य्यम् ॥ १ ॥ अथ येऽत ऽऊर्द्ध्वा लोकाः । तद्या ऽअत ऽऊर्द्ध्वा देवतास्तेषु ता देवता व्व्यारोहयत्स यथा हैवेम ऽआविर्ल्लोका ऽइमाश्च देवता ऽएवमु हैव त ऽआविर्ल्लोकास्ताश्च देवता येषु ता देवता व्व्यारोहयत् ॥ २ ॥ अथ ब्रह्मैव परार्द्धमगच्छत् । तत्परार्द्धङ्गत्वैक्षत कथन्न्विमाँल्लोकान्प्रत्यवेयामिति तद्द्वाभ्यामेव प्प्रत्यवैद्रूपेण चैव नाम्ना च स यस्य कस्य च नामास्ति तन्नाम यस्यो ऽअपि नाम नास्ति यद्वेद रूपेणेदꣳ रूपमिति तद्रूपमेतावद्वा ऽइदं यावद्रूपञ्चैव नाम च ॥ ३ ॥ ते हैते ब्रह्मणो महती ऽअब्भ्वे । स यो हैते ब्रह्मणो महती ऽअब्भ्वे वेद महद्धैवाब्भ्वम्भवति ॥ ४ ॥ ते हैते ब्रह्मणो महती यक्षे । स यो हैते ब्रह्मणो महती यक्षे वेद महद्धैव यक्षम्भवति तयोरन्न्यतरज्ज्यायो रूपमेव यद्ध्यपि नाम रूपमेव तत्स यो हैतयोर्ज्यायो वेद ज्यायान्ह तस्माद्भवति यस्माज्ज्यायान्बुभूषति ॥ ५ ॥ मर्त्या ह वा ऽअग्रे देवा ऽआसुः । स यदैव ते ब्रह्मणापुरथामृता ऽआसुः स यम्मनस ऽआघारयति मनो वै रूपम्मनसा हि वेदेदꣳ रूपमिति तेन रूपमाप्नोत्यथ यं वाच ऽआघारयति वाग्वै नाम वाचा हि नाम गृह्णाति तेनो नामाप्नोत्येतावद्वा ऽइदꣳ सर्वं यावद्रूपञ्चैव

नाम च तत्सर्वमाप्नोति सर्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतम्भवत्यक्षय्यो लोकः ॥ ६ ॥ तद्वा ऽअदु ऽआग्नेय्यामिष्ट्वा ऽउच्यते । यथा तदृषिभ्यो यज्ञः प्रारोचत तं यथातन्न्वत तद्यजन्तन्न्वानानृषीन्गन्धर्वा ऽउपनिषेदुस्ते ह स्म सन्निदधतीदं वा ऽअत्यरीरिचन्निदमूनमक्रन्निति स यदेषां यज्ञः सन्तस्थेऽथैनाँस्तद्दर्शयाञ्चक्रुरिदं वा ऽअत्यरीरिचतेदमूनमकर्त्तेति ॥ ७ ॥ स यदतिरेचयाञ्चक्रुः । यथा गिरिरेवन्तदासाथ यदूनञ्चक्रुर्यथा श्वभ्राः प्रदरा एवन्तदास ॥ ८ ॥ स यत्र शंय्योराह । तदभिमृशति 'यज्ञ नमश्च त ऽउप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्वे'ति स यदतिरेचयति तन्नमस्कारेण शमयत्यथ यदूनङ्करोत्युप चेति तेन तदुन्न्यूनम्भवति यज्ञस्य शिवे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्न्यूनातिरिक्तन्तच्छिवन्तेन तदुभयꣳ शमयति स्विष्टे मे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्न्यूनातिरिक्तन्तत्स्विष्टन्तेनो तदुभयꣳ शमयत्येवमु हास्यैतेन यज्ञेनान्न्यूनातिरिक्तेनैवेष्टम्भवति य ऽएवं विद्वानेवमभिमृशति तस्मादेवमेवाभिमृशेत्ते ह ते गन्धर्वा ऽआसुः शूर्पं यवमान्कृषिरुद्दालवान्धानान्तर्वान् ॥ ९ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



(१) शु० य० सं० अ० २ क० १९

[ दर्शपूर्णमासनामात्मना आघारस्तुतिः, अधिदैवमध्यात्मभेदेन दर्शपूर्णमासप्रतिपादनश्च ]

एष वै पूर्ण्णमाः । य ऽएष तपत्यहरहर्ह्येवैष पूर्ण्णोऽथैष ऽएव दर्शो यच्चन्द्रमा ददृश ऽइव ह्येषः ॥ १ ॥ अथो ऽइतरथाहुः । एष ऽएव पूर्ण्णमा यच्चन्द्रमा ऽएतस्य ह्यनु पूरणम्पौर्ण्णमासीत्याचक्षतेऽथैष ऽएव दर्शो य एष तपति ददृश ऽइव ह्येषः ॥ २ ॥ इयमेव पूर्ण्णमाः । पूर्ण्णेव हीयमसावेव द्यौर्दर्शो ददृश ऽइव ह्यसौ द्यौः ॥ ३ ॥ रात्रिरेव पूर्ण्णमाः । पूर्ण्णेव हीयꣳ रात्रिरहरेव दर्शो ददृश ऽइव हीदमहरेषा नु देवत्रा दर्शपूर्ण्णमासयोर्म्मीमाꣳसा ॥ ४ ॥ अथाध्यात्मम् । उदान ऽएव पूर्ण्णमा ऽउदानेन ह्ययम्पुरुषः पूर्य्यत ऽइव प्राण ऽएव दर्शो ददृश ऽइव ह्ययम्प्राणस्तदेतावन्नादश्चान्नप्रदश्च दर्शपूर्ण्णमासौ ॥ ५ ॥ प्राण ऽएवान्नादः । प्राणेन हीदमन्नमद्यत ऽउदान ऽएवान्नप्रद ऽउदानेन हीदमन्नम्प्रदीयते स यो हैतावन्नादश्चान्नप्रदश्च दर्शपूर्ण्णमासौ वेदान्नादो हैव भवति प्र हास्मा ऽअन्नाद्यन्दीयते ॥ ६ ॥ मन ऽएव पूर्ण्णमाः । पूर्ण्णमिव हीदम्मनो वागेव दर्शो ददृश ऽइव हीयं वाक्तदेतावध्यात्मम्प्रत्यक्षन्दर्शपूर्ण्णमासौ स यदुपवसथे व्रतोपायनीयमश्नाति तेनैतावध्यात्मम्प्रत्यक्षन्दर्शपूर्ण्णमासौ प्रीणाति यज्ञेन प्रातर्द्देवौ ॥७॥ तदाहुः । यन्न पूर्ण्णमासायेति हविर्ग्गृह्यते न दर्शायेति हविर्ग्गृह्यते न पूर्ण्णमासायानुब्रूहि न दर्शायानुब्रूहि न पूर्ण्णमासं यज न दर्श

ऽसृजेत्यथ केनास्य दर्शपूर्णमासाविष्टौ भवत ऽइति स यम्मनस ऽआघारयति मनो वै पूर्णमासस्तेन पूर्णमासं ऽसृजत्यथ यं वाच ऽआघारयति वाग्वै दर्शस्तेनो दर्शं ऽसृजत्येतेनो हास्य दर्शपूर्णमासाविष्टौ भवतः ॥ ८ ॥ तद्धैके । चरू निर्वपन्ति पौर्णमास्याथं सरस्वतेऽमावास्या-याथं सरस्वत्या ऽएतत्प्रत्यक्षन्दर्शपूर्णमासौ यजामह ऽइति वदन्तस्तदु तथा न कुर्य्यान्मनो वै सरस्वान्वाक्सरस्वती स यदेवैतावाघारावाघारयति तदेवास्य दर्शपूर्णमासाविष्टौ भवतस्तस्मादेतौ चरू न निर्वपेत् ॥ ९ ॥ तदाहुः । आगूर्त्ती वा ऽएष भवति यो दर्शपूर्णमासाभ्यां यजते पौर्णमासेन हीष्ट्वा वेदामावास्येन यक्ष्य ऽइत्यामावास्ये-नेष्ट्वा वेद पुनः पौर्णमासेन यक्ष्य ऽइति स ऽआगूर्त्येवा-मुँल्लोकमेति यदामुँल्लोकमेति कथमनागूर्त्ती भवतीति स यदेवैता ऽउभयत्राघारावाघारयति तदेवास्य दर्शपूर्णमासौ सन्तिष्ठेते स सथंस्थितयोरेव दर्शपूर्णमासयोरथामुँल्लो-कमेति तथानागूर्त्ती भवति ॥ १० ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ ११९ ॥

[ दर्शपूर्णमासयोरश्वमेधात्मना स्तुतिः ]

अपि ह वा ऽएतर्हि । देवेभ्योऽश्वमेधमालभन्ते तदाहुः प्राकृतोऽश्वमेध ऽइतीतर ऽइन्नूनः स तद्वा ऽएष

ऽएवाश्वमेधो यच्चन्द्रमाः ॥ १ ॥ तदाहुः । पदे पदेऽश्वस्य मेध्यस्याहुतिञ्जुहतीति स यत्सायम्प्रातरग्निहोत्रञ्जुहोति द्वे सायमाहुती जुहोति द्वे प्रातस्ताश्चतस्र ऽआहुतयश्चतुष्पाद्वा ऽअश्वस्तदस्य पदे पद ऽएवाहुतिर्हुता भवति ॥ २ ॥ तदाहुः । विवृत्तेऽश्वस्येष्टिन्निर्वपतीत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष ऽएताᳬ रात्रिन्न पुरस्तान्न पश्चाद्ददृशे तदिमँल्लोकमागच्छति सोऽस्मिँल्लोके विवर्त्तते ॥ ३ ॥ स यदामावास्येन यजते । विवृत्त ऽएवास्यैतदिष्टिन्निर्वपत्यथ यत्पौर्ण्णमासेन यजतेऽश्वमेधमेवैतद्वालभते तमालभ्य देवेभ्यः प्रयच्छति सँवत्सरे वा ऽहुतरमश्वमेधमालभन्त ऽएष वै मासः परिप्लवमानः सँवत्सरङ्करोति तदस्य सँवत्सरे सँवत्सर ऽएवाश्वमेध ऽआलब्धो भवति ॥ ४ ॥ तं वा ऽएतम् । मासि मास्येवाश्वमेधमालभन्ते स यो हैवं विद्वानग्निहोत्रञ्च जुहोति दर्शपूर्ण्णमासाभ्याञ्च यजते मासि मासि हैवास्याश्वमेधेनेष्टम्भवत्येतदु हास्याग्निहोत्रञ्च दर्शपूर्ण्णमासौ चाश्वमेधमभिसम्पद्येते ॥ ५ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रणीतादीनां यज्ञशरीरावयवत्वेन सम्पत्तिकथनम् ]

शिरो ह वा ऽएतद्यज्ञस्य यत्प्रणीताः । स यत्प्रणीताः प्रणयति शिर ऽएवैतद्यज्ञस्य संस्करोति स

विद्याच्छिर ऽएव म ऽएतत्संस्क्रियत ऽइति ॥ १ ॥ प्राण ऽएवास्येध्मः । प्राणेन हीदꣳ सर्वमिद्धं यत्प्राणभृन्निमिषद्यदेजति स विद्यादहमेवैष ऽइध्म ऽइति ॥ २ ॥ अनूकमेवास्य सामिधेन्यः । तस्मात्ता ब्रूयात्सन्ततन्त्वन्विव मेऽनुब्रूहीति सन्ततमिव हीदमनूकम्मनश्चैवास्य वाक्चाघारौ सरस्वाँश्च सरस्वती च स विद्यान्मनश्चैव मे वाक्चाघारौ सरस्वाँश्च सरस्वती चेति ॥ ३ ॥ पञ्च प्रयाजाः । इम ऽएवास्य ते शीर्षण्याः पञ्च प्राणा मुखमेवास्य प्रथमः प्रयाजो दक्षिणा नासिका द्वितीयः सव्या नासिका तृतीयो दक्षिणः कर्णश्चतुर्थः सव्यः कर्णः पञ्चमोऽथ यच्चतुर्थे प्रयाजे समानयति तस्मादिदꣳ श्रोत्रमन्तरतः सन्तृण्णञ्चक्षुषी ऽआज्यभागौ स विद्याच्चक्षुषी ऽएव म ऽएताविति ॥ ४ ॥ अथ य ऽआग्नेयः पुरोडाशः । अयमेवास्य स दक्षिणोऽर्द्धो हृदयमेवास्योपाꣳशुयाजः स यत्तेनोपाꣳशु चरन्ति तस्मादिदङ्गुहेव हृदयम् ॥ ५ ॥ अथ योऽग्नीषोमीयः पुरोडाशः । अयमेवास्य स ऽउत्तरोऽर्द्ध ऽऐन्द्रं वा सान्नाय्यमन्तराꣳ समेवास्य स्विष्टकृद्विषप्राशित्रम् ॥ ६ ॥ स यत्प्राशित्रमवद्यति । यथैव तत्प्रजापतेराविद्धन्निरकृन्तन्नेवमेवैतस्यैतद्यद्वेष्टितं यद्ग्रथितं यद्रुण्णयन्तन्निष्कृन्तन्ति स विद्याद्यथैव तत्प्रजापतेराविद्धन्निरकृन्तन्नेवमेव म ऽइदं यद्वेष्टितं यद्ग्रथितं यद्रुण्णयन्तन्निष्कृन्तन्तीति ॥ ७ ॥ उदरमेवास्येडा ।

तद्यथैवाद ऽइडायाᳬं समवद्यन्त्येवमेवेदं विश्वरूपमन्न-
मुदरे समवधीयते ॥ ८ ॥ त्रयोऽनुयाजाः । इम ऽएवास्य
तेऽवाञ्चस्त्रयः प्प्राणा बाहू ऽएवास्य सूक्तवाकश्च शंय्योर्वा-
कश्च चत्वारः पत्नीसंय्याजाश्चतस्रो वै प्प्रतिष्ठा ऽऊरू
द्वावष्ठीवन्तौ द्वौ पादावेवास्य समिष्टयजुः ॥ ९ ॥ ता
ऽएकविᳬंशतिराहुतयः । द्वावाघारौ पञ्च प्प्रयाजा द्वावा-
ज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषोमीय ऽउपांᳬ-
शुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयो-
ऽनुयाजाः सूक्तवाकश्च शंय्योर्वाकश्चाथ यदेवादः पत्नी-
संय्याजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ १० ॥ ता
ऽएकविᳬंशतिराहुतयः । द्वादश वै मासाः सँवत्सरस्य
पञ्चर्त्तवस्त्रयो लोकास्तद्विᳬंशतिरेष ऽएवैकविᳬंशो य
ऽएष तपति सैषा गतिरेषा प्प्रतिष्ठा तदेताङ्गतिमेताम्प्रति-
ष्ठाङ्गच्छति ॥ ११ ॥ तद्ध स्म्मैतदारुणिराह । अर्द्धमासशो
वा ऽअहममुनादित्येन स लोको भवामि तामहन्दर्श-
पूर्णमासयोः सम्पदं वेदेति ॥ ११ ॥ तदाहुः । आत्म-
याजी श्रेयाँ३न्देवयाजी३ इत्यात्मयाजीति ह ब्रूयात्स
ह वा ऽआत्मयाजी यो वेदेदम्मेऽनेनाङ्गᳬं संस्क्रियत
ऽइदम्मेऽनेनाङ्गमुपधीयत ऽइति स यथाहिस्त्वचो नि-
र्म्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्म्मुच्यते
स ऽऋङ्मयो यजुर्म्मयः साममय ऽआहुतिमयः स्वर्ग्गँल्लो-
कमभिसम्भवति ॥ १३ ॥ अथ ह स देवयाजी यो वेद ।
देवानेवाहमिदं यजे देवान्त्सपर्य्यामीति स यथा श्रेयसे

पापीयान्बलिꣳ हरेद्वैश्यो वा राज्ञे बलिꣳ हरेदेवꣳ स स ह न तावन्तँल्लोकञ्जयति यावन्तमितरः ॥ १४ ॥

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



[ दर्शपूर्णमासयागस्य विशिष्टफलसाधनताप्रतिपादनम् ]

सँवत्सरो यज्ञः । स यो ह वै सँवत्सरो यज्ञ ऽइति वेदान्ते हैवास्य सँवत्सरस्येष्टम्भवत्यथो यत्किञ्च सँवत्सरे क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ १ ॥ ऋतव ऽऋत्विजः । स यो ह वा ऽऋतव ऽऋत्विज ऽइति वेदान्ते हैवास्यऽर्तूनामिष्टम्भवत्यथो यत्किञ्चऽर्तुषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ २ ॥ मासा हवीꣳषि । स यो ह वै मासा हवीꣳषीति वेदान्ते हैवास्य मासानामिष्टम्भवत्यथो यत्किञ्च मासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ३ ॥ अर्द्धमासा हविष्पात्राणि । स यो ह वा ऽअर्द्धमासा हविष्पात्राणीति वेदान्ते हैवास्यार्द्धमासानामिष्टम्भवत्यथो यत्किञ्चार्द्धमासेषु क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ४ ॥ अहोरात्रे परिवेष्ट्री । स यो ह वा ऽअहोरात्रे परिवेष्ट्री ऽइति वेदान्ते हैवास्याहोरात्रयोरिष्टम्भवत्यथो यत्किञ्चाहोरात्रयोः क्रियते सर्वꣳ हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ५ ॥ इयमेव प्रथमा सामिधेनी । अग्निर्द्वितीया वायु-

स्तृतीयान्तरिक्षञ्चतुर्थी द्यौष्पञ्चम्यादित्यः षष्ठी चन्द्रमाः सप्तमी मनोऽष्टमी वाङ्नवमी तपो दशमी ब्रह्मैकादश्येता हि वा ऽइदꣳ सर्वꣳ समिन्धत ऽएताभिरिदꣳ सर्वꣳ समिद्धन्तस्मात्सामिधेन्यो नाम ॥ ६ ॥ स वै त्रिः प्रथमामन्वाह । स यत्प्रथममन्वाह प्राचीन्तेन दिशञ्जयति यद्द्वितीयन्दक्षिणान्तेन दिशञ्जयति यत्तृतीयमूर्ध्वामेव तेन दिशञ्जयति ॥ ७ ॥ त्रिर्वेवोत्तमामन्वाह । स यत्प्रथममन्वाह प्रतीचीन्तेन दिशञ्जयति यद्द्वितीयमुदीचीन्तेन दिशञ्जयति यत्तृतीयमिमामेव तेन प्रतिष्ठाञ्जयत्येवमु हाभिरिमाँल्लोकाञ्जयत्येता दिशः ॥ ८ ॥ ऋतमेव पूर्व ऽआघारः । सत्यमुत्तरोऽव ह वा ऽऋतसत्ये रुन्द्धेथो यत्किञ्चऽर्त्तसत्याभ्याञ्जय्यꣳ सर्वꣳ हैव तज्जयति ॥ ९ ॥ त्विषिरेव प्रथमः प्रयाजः । अपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसञ्चतुर्थोऽन्नाद्यम्पञ्चमः ॥ १० ॥ स प्रथमम्प्रयाजमनुमन्त्रयेत । त्विषिमान्भूयासमित्यपचितिमान्भूयासमिति द्वितीयं यशस्वी भूयासमिति तृतीयम्ब्रह्मवर्चसी भूयासमिति चतुर्थमन्नादो भूयासमिति पञ्चमन्त्विषिमान्ह वा ऽअपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नादो भवति य ऽएवमेतद्वेद ॥ ११ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः कꣳ स्विदेवापरीषु महनागमिवाभिसꣳसारन्दिदृक्षितारो य ऽएवमेतत्प्रयाजानां यशो वेदितेति ॥ १२ ॥ भूतमेव पूर्व ऽआज्यभागः । भविष्यदुत्तरोऽव ह वै भूतञ्च भविष्यच्च

रुन्द्धेऽथो यत्किञ्च भूतेन च भविष्यता च जय्यꣳ सर्व्वꣳ हैव तज्जयति ॥ १३ ॥ ब्रह्माग्नेयः पुरोडाशः । स यो ह वै ब्रह्माग्नेयः पुरोडाश इति वेदाव ह ब्रह्म रुन्द्धेऽथो यत्किञ्च ब्रह्मणा जय्यꣳ सर्व्वꣳ हैव तज्जयति ॥ १४ ॥ क्षत्रमुपाꣳशुयाजः । स यो ह वै क्षत्रमुपाꣳशुयाज इति वेदाव ह क्षत्रꣳ रुन्द्धेऽथो यत्किञ्च क्षत्रेण जय्यꣳ सर्व्वꣳ हैव तज्जयति तद्यदुपाꣳशुयाजङ्कुर्वन्त्येके नैके तस्मादुच्चैश्चोपाꣳशु च क्षत्रायाचक्षते ॥ १५ ॥ विडुत्तरः पुरोडाशः । स यो ह वै विडुत्तरः पुरोडाश इति वेदाव ह विशꣳ रुन्द्धेऽथो यत्किञ्च विशा जय्यꣳ सर्व्वꣳ हैव तज्जयति तद्यदाग्नेयश्च पुरोडाश उपाꣳशुयाजश्च पूर्व्वौ भवतस्तस्मादुभे ब्रह्म च क्षत्रञ्च विशि प्रतिष्ठिते ॥ १६ ॥ राष्ट्रꣳ सान्नाय्यम् । स यो ह वै राष्ट्रꣳ सान्नाय्यमिति वेदाव ह राष्ट्रꣳ रुन्द्धेऽथो यत्किञ्च राष्ट्रेण जय्यꣳ सर्व्वꣳ हैव तज्जयति तद्यत्सन्नयन्त्येके नैके तस्माद्राष्ट्रꣳ सञ्चैति वि च ॥ १७ ॥ तपः स्विष्टकृत् । स यो ह वै तपः स्विष्टकृदिति वेदाव ह तपो रुन्द्धेऽथो यत्किञ्च तपसा जय्यꣳ सर्व्वꣳ हैव तज्जयति ॥ १८ ॥ लोकः प्राशित्रम् । स यो ह वै लोकः प्राशित्रमिति वेदाव ह लोकꣳ रुन्द्धेऽथो यत्किञ्च लोकेन जय्यꣳ सर्व्वꣳ हैव तज्जयति नो ह लवेन लोकाद्व्यथते लवेन ह वा अमुष्मिँल्लोके लोकाद्व्यथन्तेऽथ य एवं वेद न ह बहु चन पापङ्कृत्वा लोकाद्व्यथते ॥ १९ ॥ श्रद्धेडा ।

स यो ह वै श्रद्धेडेति वेदाव ह श्रद्धाꣳ रुन्द्धेऽथो यत्किञ्च श्रद्धया जय्यꣳ सर्वꣳ हैव तज्जयति ॥ २० ॥ अशनिरेव प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीय ऽउल्कुषी तृतीयः ॥२१॥ स प्रथममनुयाजमनुमन्त्रयेत । अशन्यमुञ्जहीति यन्द्विष्याद्ध्रादुन्यमुञ्जहीति द्वितीयमुल्कुष्यमुञ्जहीति तृतीयम् ॥ २२ ॥ स य ऽएष क्षिप्रम्म्रियते । अशनिर्हं तमनुयाजो हन्त्यथ यो विस्रवन्निमञ्श्र ऽइव ह्रादुनिर्हं तमनुयाजो हन्त्यथ योऽभ्युष्टमिश्र ऽइवोल्कुषी ह तमनुयाजो हन्ति ॥ २३ ॥ सैषा यज्ञमेनिह । एतया वै मेन्न्या देवा ऽअसुरान्पराभावयाञ्चक्रुस्तथो ऽएवैवंविद्यजमानः पाप्मानन्द्विषन्तम्भ्रातृव्यम्पराभावयति ॥ २४ ॥ स यदनुयाजान्तो यज्ञः स्यात् । अशन्न्यन्तः स्याद्ध्रादुन्न्यन्त ऽउल्कुष्यन्तस्तस्माद्वै देवानां य्यज्ञ ऽइडान्तो वैव शंय्य्वन्तो वा ॥२५॥ प्रयाजैर्वै देवाः । स्वर्गँल्लोकमायँस्तानसुरा ऽअन्वाजिगाꣳसँस्ताननुयाजैः प्रत्यौहँस्तद्यदनुयाजा ऽइज्यन्ते पाप्मानमेव तद्द्विषन्तम्भ्रातृव्यं य्यजमानः प्रत्यूहति ॥ २६ ॥ प्राणा वै प्रयाजाः । अपाना ऽअनुयाजास्तस्मात्प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपम्प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजास्तस्मात्त ऽउपसद्रूपेण प्रत्यञ्चो हूयन्ते ॥ २७ ॥ सꣳस्था सूक्तवाकः । स यो ह वै सꣳस्था सूक्तवाक ऽइति वेदाव ह सꣳस्थाꣳ रुन्द्धेऽथो यत्किञ्च सꣳस्थया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति व्वयसः सꣳस्थाम् ॥ २८ ॥

प्रतिष्ठा शँय्वोर्वाकः । स यो ह वै प्रतिष्ठा शँय्वोर्वाक ऽइति वेदाव ह प्रतिष्ठाꣳ रुन्धेऽथो यत्किञ्च प्रतिष्ठया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति प्रतिष्ठाम् ॥ २९ ॥ ते देवाः । एतान्पत्नीसँय्याजान्पश्चात्पर्य्यौहन्त मिथुनमेवैतदुपरिष्टाद्दधत प्रजात्यै तद्यत्पत्नीसंय्याजा ऽइज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्रजात्यै देवानाꣳ ह वै प्रजातिमनु प्रजायते मिथुनेन मिथुनेन ह प्रजायते य ऽएवमेतद्वेद ॥ ३० ॥ अन्नꣳ समिष्टयजुः । स यो ह वा ऽअन्नꣳ समिष्टयजुरिति वेदाव हान्नꣳ रुन्धेऽथो यत्किञ्चान्नेन जय्यꣳ सर्वꣳ हैव तज्जयति ॥ ३१ ॥ सँवत्सरो यजमानः । तमृतवो याजयन्ति वसन्त ऽआग्नीध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपङ्ग्रीष्मोऽध्वर्युस्तप्त ऽइव वै ग्रीष्मस्तप्तमिवाध्वर्युर्निष्क्रामति वर्षा ऽउद्गाता तस्माद्यदा बलवद्वर्षति साम्न ऽइवोपब्दिः क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यम्पच्यते ब्रह्मण्वत्यः प्रजा ऽइत्याहुर्हेमन्तो होता तस्माद्धेमन्वषट्कृताः पशवः सीदन्त्येता ह वा ऽएनन्देवता याजयन्ति स यद्येनमेषावीरा याजयेयुरेता ऽएव देवता मनसा ध्यायेदेता हैवैनन्देवता याजयन्ति ॥ ३२ ॥ अथ हैषैव तुला । यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत तुलायाꣳ ह वा ऽअमुष्मिँल्लोक ऽआदधति यतरद्यꣳस्यति तदुन्वेष्यति यदि साधु वासाधु वेत्यथ य ऽएवं वेदास्मिन्हैव लोके

तुलामारोहत्त्यत्त्यमुष्मिँल्लोके तुलाधानम्मुच्यते साधुकृत्त्या हैवास्य यच्छति न पापकृत्त्या ॥ ३३ ॥ [ अर्धं प्रपाठकः ५२ ]

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अग्निहोत्रावयवोपासनाप्रकारः ]

व्वाग्घ वा ऽएतस्याग्निहोत्रस्याग्निहोत्री * । मन ऽएव व्वत्सस्तदिदम्मनश्च व्वाक्च समानमेव सन्नानेव तस्म्मात्समान्न्या रज्ज्वा व्वत्सञ्च मातरञ्चाभिदधति तेज ऽएव श्रद्धा सत्यमाज्ज्यम् ॥ १ ॥ तद्धैतज्जनको व्वैदेहः । याज्ञवल्क्यम्पप्रच्छ व्वेत्थाग्निहोत्रं ग्याज्ञवल्क्या३ ऽइति व्वेद सम्म्राडिति किमिति पय ऽएवेति ॥ २ ॥ यत्पयो न स्यात् । केन जुहुया ऽइति व्रीहियवाब्भ्यामिति यद्व्रीहियवौ न स्याताङ्केन जुहुया ऽइति या ऽअन्न्या ऽओषधय ऽइति यदन्न्या ऽओषधयो न स्युः केन जुहुया ऽइति या ऽआरण्ण्या ऽओषधय ऽइति यदारण्ण्या ऽओषधयो न स्युः केन जुहुया ऽइति व्वानस्पत्त्येनेति यद्वानस्पत्त्यन्न स्यात्केन जुहुया ऽइत्त्यद्भिरिति यदापो न स्युः केन जुहुया ऽइति ॥ ३ ॥ स होवाच । न वा ऽइह तर्हि किञ्चनासीदथैतदहूयतैव सत्त्यꣳ श्रद्धायामिति व्वेत्थाग्निहोत्रं ग्याज्ञवल्क्य धेनुशतन्ददामीति होवाच ॥ ४ ॥ तदप्प्येते श्श्लोकाः । किꣳ

* अग्निहोत्रमिति कर्मनामधेयम् । अग्नये होत्रं होमोऽस्मिन्निति तद्व्युत्पत्तिः । उपचारात् तदर्थं पयोऽप्यग्निहोत्रम्, तस्य दोग्ध्री धेनुरप्यग्निहोत्रीत्युच्यते ।

स्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः॥ कथꣳ स्विदस्य काव्यङ्कथꣳ सन्ततो ऽअग्निभिरिति कथꣳ स्विदस्यानपप्प्रोषितम्भवतीत्त्येवैतदाह ॥ ५ ॥ यो जविष्ठो भुवनेषु। स विद्वान्प्रवसन्विदे॥ तथा तदस्य काव्यन्तथा सन्ततो ऽअग्निभिरिति मन ऽएवैतदाह मनसैवास्यानपप्प्रोषितम्भवतीति ॥ ६ ॥ यत्स दूरम्परेत्त्य। अथ तत्र प्प्रमाद्यति॥ कस्मिन्त्सास्य हुताहुतिर्ग्गृहे यामस्य जुह्वतीति यत्स दूरम्परेत्त्याथ तत्र प्प्रमाद्यति कस्मिन्नस्य साहुतिर्हुता भवतीत्त्येवैतदाह ॥ ७ ॥ यो जागार भुवनेषु। विश्श्वा जातानि योऽबिभः॥ तस्मिन्त्सास्य हुताहुतिर्ग्गृहे यामस्य जुह्वतीति प्प्राणमेवैतदाह तस्म्मादाहुः प्प्राण ऽएवाग्निहोत्रमिति ॥ ८ ॥

## तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



### [ अग्निहोत्रे मिथुनत्वदर्शनम् ]

यो ह वा ऽअग्निहोत्रे। षण्मिथुनानि वेद मिथुनेन मिथुनेन ह प्प्रजायते सर्वाभिः प्प्रजातिभिर्य्यजमानश्च पत्नी च तदेकम्मिथुनन्तस्म्मादस्य पत्नीवदग्निहोत्रꣳ स्यादेतन्मिथुनमुपाप्नवानीति वत्सश्चाग्निहोत्री च तदेकम्मिथुनन्तस्म्मादस्य पुंवत्साग्निहोत्री स्यादेतन्मिथुनमुपाप्नवानीति स्थाली चाङ्गाराश्च तदेकम्मिथुनꣳ स्रुक्च स्रुवश्च तदेकम्मिथुनमाहवनीयश्च समिच्च तदेकम्मिथुनमाहुतिश्च स्वाहाकारश्च तदेकम्मिथुनमेतानि ह वा

ऽअग्निहोत्रे षण्मिथुनानि तानि य ऽएवं वेद मिथुनेन मिथुनेन ह प्प्रजायते सर्व्वाभिः प्प्रजातिभिः ॥ ११ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ प्रसङ्गतः आख्यायिकया ब्रह्मचारिधर्मप्रतिपादनम् ]

ब्रह्म वै मृत्यवे प्प्रजाः प्प्रायच्छत् । तस्मै ब्ब्रह्मचारिणमेव न प्प्रायच्छत्सोऽब्ब्रवीदस्तु मह्यमप्प्येतस्मिन्भाग ऽइति यामेव रात्रिꣳ समिधन्नाहराता ऽइति तस्माद्याꣳ रात्रिम्ब्रह्मचारी समिधन्नाहरत्त्यायुष ऽएव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय व्वसानीति ॥ १ ॥ दीर्ग्घसत्रं व्वा ऽएष ऽउपैति । यो ब्ब्रह्मचर्य्यमुपैति स यामुपयन्त्समिधमादधाति सा प्प्रायणीया याꣳ स्नास्यन्त्सोदयनीयाथ या ऽअन्तरेण सत्र्या ऽएवास्य ता ब्ब्राह्मणो ब्ब्रह्मचर्य्यमुपयन् ॥ २ ॥ चतुर्द्धा भूतानि प्प्रविशति । अग्निम्पदा मृत्युम्पदाचार्य्यम्पदात्मन्न्येवास्य चतुर्त्थः पादः परिशिष्यते ॥ ३ ॥ स यदग्नये समिधमाहरति । य ऽएवास्याग्नौ पादस्तमेव तेन परिक्क्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ४ ॥ अथ यदात्मानन्दरिद्रीकृत्येव । अह्रीर्भूत्वा भिक्षते य ऽएवास्य मृत्यौ पादस्तमेव तेन परिक्क्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ५ ॥ अथ यदाचार्य्यवचसङ्करोति । यदाचार्य्याय कर्म्म करोति य ऽएवास्याचार्य्ये पादस्तमेव तेन परिक्क्रीणाति तꣳ संस्कृत्यात्मन्धत्ते

स ऽएनमाविशति ॥ ६ ॥ न ह वै स्नात्वा भिक्षेत। अप ह वै स्नात्वा भिक्षाञ्जयत्यप ज्ञातीनामशनायामप पितॄणाᳬं स ऽएवं विद्वान्यस्या ऽएव भूयिष्ठᳬं श्लाघेत तान्भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्यान्भिक्षितव्यान्न विन्देदपि स्वामेवाचार्य्यजायाम्भिक्षेताथो स्वाम्मातरन्नैनᳫं सप्तम्यभिक्षितातीयात्तमेवं विद्वाᳬंसमेवञ्चरन्तᳫं सर्वे वेदा ऽआविशन्ति यथा ह वा ऽअग्निᳫं समिद्धो रोचत ऽएवᳫं ह वै स स्नात्वा रोचते य ऽएवं विद्वान्ब्रह्मचर्य्यञ्चरति ॥ ७ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ आख्यायिकया दर्शपूर्णमासयोः सर्वोत्पत्तिहेतुत्वकथनम् ]

उद्दालको हारुणिᳫं। उदीच्यान्वृतो धावयाञ्चकार तस्य निष्क ऽउपाहित ऽआसैतद्ध स्म वै तत्पूर्वेषां वृतानान्धावयतामेकधनमुपाहितम्भवत्युपवल्हाय बिभ्यतान्ताᳫंहोदीच्यानाम्ब्राह्मणान्भीर्विवेद ॥ १ ॥ कौरुपाञ्चालो वा ऽअयम्ब्रह्मा ब्रह्मपुत्रᳫं। यद्वै नोऽयमर्द्धन्न पर्य्यादुदीत हन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति केन वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायन ऽआस ॥ २ ॥ ते होचुᳫं। स्वैदायन त्वया वीरेणेमम्प्रतिसंयतामहा ऽइति स होवाचोपात्र खलु रमताहुन्न्वेनं वेदानीति तᳫं हाभिप्रपेदे तᳫं हाभिप्रपन्नमभ्युवाद स्वैदायना३ ऽइति हो३ गौतमस्य पुत्रे-

तीतरः प्रतिशुश्राव तꣳह तत ऽएव प्रष्टुमन्दध्रे ॥ ३ ॥
स वै गौतमस्य पुत्र ऽवृतो जनन्धावयेत् । सो दर्शपूर्णमासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मध्यतो हविर्भागान्षट् प्राजापत्यानष्टा ऽउपरिष्टादाज्यभागान् ॥ ४ ॥
स वै गौतमस्य पुत्र ऽवृतो जनन्धावयेत् । यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मादिमाः प्रजा ऽअदन्तका जायन्ते यस्मादासाञ्जायन्ते यस्मादासाम्प्रभिद्यन्ते यस्मादासाꣳ सन्तिष्ठन्ते यस्मादासाम्पुनरुत्तमे वयसि सर्व्व ऽएव प्रभिद्यन्ते यस्मादधर ऽएवाग्रे जायन्तेऽथोत्तरे यस्मादणीयाꣳस ऽएवाधरे प्रथीयाꣳस ऽउत्तरे यस्माद्दꣳष्ट्रा वर्षीयाꣳसो यस्मात्समा ऽएव जम्भ्याः ॥ ५ ॥ स वै गौतमस्य पुत्र ऽवृतो जनन्धावयेत् । यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मादिमाः प्रजा लोमशा जायन्ते यस्मादासाम्पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्व्वीरिणानि जायन्ते यस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ पुनरुत्तमे वयसि सर्व्व ऽएव पलितो भवति ॥ ६ ॥ स वै गौतमस्य पुत्र ऽवृतो जनन्धावयेत् । यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मात्कुमारस्य रेतः सिक्तन्न सम्भवति यस्मादस्य मध्यमे वयसि सम्भवति यस्मादस्य पुनरुत्तमे वयसि न सम्भवति ॥ ७ ॥ सो गायत्रीꣳ हरिणीम् । ज्योतिष्पक्षां यजमानꣳ स्वर्ग्गँल्लोकमभिवहन्तीं विद्यादिति तस्मै ह निष्कम्प्रददावनूचानः स्वैदायनासि सुवर्ण्णं वाव सुवर्ण्णविदे ददतीति तꣳह होपगुह्य निश्चक्राम तꣳह पप्रच्छुः

किमिवैष गौतमस्य पुत्रोऽभूदिति ॥ ८ ॥ स होवाच । यथा ब्रह्मा ब्रह्मपुत्रो मूर्द्धास्य विपतेद्य एनमुपवल्हेतेति ते ह तत एव विप्रेयुस्तꣳ ह तत एव समित्पाणिः प्रतिचक्रम उप त्वायानीति किमध्येष्यमाण इति यानेव मा प्रश्नानप्राक्षीस्तानेव मे विब्रूहीति स होवाचानुपेतायैव त एनान्ब्रवाणीति ॥ ९ ॥ तस्मा उ हैतदुवाच । द्वावाघारौ पञ्च प्रयाजा आग्नेय आज्यभागोऽष्टम एतेऽष्टौ पुरस्तादाज्यभागाः सौम्य आज्यभागो हविर्भागाणाम्प्रथमो हविर्हि सोम आग्नेयः पुरोडाशोऽग्नीषोमीय उपाꣳशुयाजो[1]ऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदेते पञ्च मध्यतो हविर्भागाः ॥१०॥ प्राशित्रं[2] इडा च । यच्चाग्नीध आदधाति ब्रह्मभागो यजमानभागोऽन्वाहार्य्य एते षट् प्राजापत्यास्त्रयोऽनुयाजाश्चत्वारः पत्नीसँयाजाः[†] समिष्टयजुरष्टममेतेऽष्टा उपरिष्टादाज्यभागाः ॥ ११ ॥ अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति । तस्मादिमाः प्रजा अदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवीꣳषि भवन्ति तस्मादासाञ्जायन्तेऽथ यदपुरोऽनुवाक्यका अनुयाजा भवन्ति तस्मादासाम्प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसँयाजा भवन्ति तस्मादासाꣳ सन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्यकः

(१) उपांशु इज्यते इति उपांशुयाजः । एवमुपांशुजपश्च "जिह्वोष्ठौ चालयेत् किञ्चिद् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशु स जपः स्मृतः ॥" इति स्मृत्युक्तः

(२) प्राशित्रं ब्रह्मणो भागः ।

† पत्नीदेवताका दर्शपूर्णमासाङ्गभूताश्चत्वारो यागविशेषाः पत्नीसंयाजाः ।

समिष्टयजुर्भवति तस्मादासाम्पुनरुत्तमे वयसि सर्व्वं ऽएव प्प्रभिद्यन्ते ॥ १२ ॥ * अथ यदनुवाक्क्यामनूच्य । याज्ज्यया यजति तस्मादुधर ऽएवाग्ग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयाꣳस ऽएवाधरे प्प्रथीयाꣳस ऽउत्तरेऽथ यत्प्राञ्चावाघारावाघारयति तस्माद्दꣳष्ट्रा वर्षीयाꣳसोऽथ यत्समच्छन्दसावेव संयाज्ज्ये भवतस्तस्मात्समा ऽएव जम्भ्याः ॥ १३ ॥ अथ यद्बर्हिस्तृणाति । तस्मादिमाः प्प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्प्रस्तरꣳ[A] स्तृणाति तस्मादासाम्पुनरिव श्मश्रूण्यौपपक्क्ष्याणि दुर्व्वीरिणानि जायन्तेऽथ यत्केवलमेवाग्ग्रे प्प्रस्तरमनुप्प्रहरति तस्माच्छीर्षण्ण्येवाग्ग्रे पलितो भवत्त्यथ यत्सर्व्वमेव बर्हिरनुप्प्रहरति तस्मात्पुनरुत्तमे वयसि सर्व्व ऽएव पलितो भवति ॥ १४ ॥ अथ यदाज्ज्यहविषः प्प्रयाजा भवन्ति । तस्मात्कुमारस्य रेतः सिक्तन्न सम्भवत्त्युदकमिवैव भवत्त्युदकमिव ह्याज्ज्यमथ यन्मद्ध्ये यज्ञस्य दद्ध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मद्ध्यमे वयसि सम्भवति द्रप्प्सीवैव भवति द्रप्प्सीव हि रेतोऽथ यदाज्ज्यहविष ऽएवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे वयसि न सम्भवत्त्युदकमिवैव भवत्त्युदकमिव ह्याज्ज्यम् ॥ १५ ॥ वेदिरेव गायत्री । तस्यै येऽष्टौ पुरस्तादाज्ज्यभागाः स दक्षिणः पक्षो येऽष्टा ऽउपरिष्टादाज्ज्यभागाः स

* शतम् ५७०० ।

(A) प्रस्तरः कुशमुष्टिः ।

ऽउत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानꣳ स्वर्गँल्लोकमभिवहति य ऽएवमेतद्वेद ॥ १६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्रुगादानप्रकारः ]

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतन्न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्रतिप्रतिन्न्वा ऽअयमध्वर्युर्यजमानस्य द्विषन्तम्भ्रातृव्यमकः प्रत्युद्यामिनमितीश्वरो ह तथैव स्यात् ॥ १ ॥ इत्थमेव कुर्य्यात् । उभाभ्यामेव पाणिभ्याञ्जुहूम्परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्यमायुष्यन्ते ऽअसꣳशिञ्जयन्नाददीत ते * यत्सꣳशिञ्जयेद्योगक्षेमो यजमानमृच्छेत्तस्मादसꣳशिञ्जयन्नाददीत ॥ २ ॥ अथातोऽतिक्रमणस्य । वज्रेण ह वा ऽअन्योऽध्वर्युर्यजमानस्य पशून्विधमति वज्रेण हास्मा ऽअन्य ऽउपसमूहत्येष ह वा ऽअध्वर्युर्वज्रेण यजमानस्य पशून्विधमति य ऽआश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा ऽएष ऽउपसमूहति य ऽआश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेनाश्राव्यैष हास्मा ऽउपसमूहति ॥ ३ ॥ अथातो धारणस्य । तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयाच्छूलौ न्न्वा ऽअयमध्व-

* 'ग' 'ज' पुस्तकयोः 'ते' इति नास्ति ।

र्व्वाहू ऽअकृत शूलबाहुर्भविष्यतीतीश्वरो ह तथैव स्यादथ हैष मध्यमः प्राणस्तस्मादु तमुपन्न्यच्येवैव धारयेत् * ॥ ४ ॥ अथात ऽआश्रावणस्य। षड्ढ वा ऽआश्रावितानि न्यक्तिर्यग्गूर्द्ध्वङ्कृपणम्बहिःश्रयन्तःश्रि ॥ ५ ॥ एतद्ध वै न्यक्। योऽयमुच्चैरादाय शनैर्न्निदधाति स यमिच्छेत्पापीयान्त्स्यादिति तस्योच्चैरादाय शनैर्न्निदध्यात्तेन स पापीयान्भवति ॥ ६ ॥ अथ हैतत्तिर्यक्। योऽयं यावतैवादत्ते तावता निदधाति स यमिच्छेन्नैव श्रेयान्त्स्यान्न पापीयानिति तस्य यावतैवादुदीत तावता निदध्यात्तेन स नैव श्रेयान्न पापीयान्भवति ॥ ७ ॥ अथ हैतदूर्द्ध्वम्। योऽयꣳ शनैरादायोच्चैर्न्निदधाति स यमिच्छेच्छ्रेयान्त्स्यादिति तस्य शनैरादायोच्चैर्न्निदध्यात्तेन स श्रेयान्भवति ॥ ८ ॥ अथ हैतत्कृपणम्। योऽयमणु दीर्घमस्वरमाश्रावयति यो हैनन्तत्र ब्रूयात्कृपणन्वा ऽअयमद्ध्वर्य्युर्यजमानमकद्द्विषतो भ्रातृव्यस्योपावसायिनमितीश्वरो ह तथैव स्यात् ॥ ९ ॥ अथ हैतद्बहिःश्रि। योऽयमपव्याददायौष्ठा ऽउच्चैरस्वरमाश्रावयति श्रीर्वै स्वरो बाह्यत ऽएव तच्छ्रियन्धत्तेऽशनायुको भवति ॥ १० ॥ अथ हैतदन्तःश्रि। योऽयꣳ सन्धायौष्ठा ऽउच्चैः स्वरवदाश्रावयति श्रीर्वै स्वरोऽन्तरत ऽएव तच्छ्रियन्धत्तेऽन्नादो भवति ॥ ११ ॥ स वै मन्द्रमिवोरसि। परास्तभ्योभयतो बार्हतमुच्चैरन्ततो निदध्यात्तस्य नोपमीमाꣳ-

* तथा चोक्तं सूत्रकृता "नाभिदेशे धारणम्" (का० श्रौ० सू० ३. २. १)।

सास्ति तत्पशव्यमायुष्यम् ॥ १२ ॥ अथातो होमस्य । तद्धैतदेके कुशला मन्यमानाः प्राचीꣳ स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयादनुयुवन्वा ऽअयमध्वर्युर्यजमानमकद्दिवतो भ्रातृव्यस्यान्ववसायिनमितीश्वरो ह तथैव स्यात् ॥ १३ ॥ पार्श्वत ऽउ हैके । स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयादुतीर्थेन न्वा ऽअयमध्वर्युराहुतीः प्रारौत्सीरसं वा शरिष्यते घुणिर्वा भविष्यतीतीश्वरो ह तथैव स्यात् ॥ १४ ॥ इत्थमेव कुर्य्यात् । प्राचीमेव स्रुचमुपावहृत्य हुत्वा तेनैवाधिहृत्योपभृत्यधिनिदध्यात्तस्य नोपमीमाꣳसास्ति तत्पशव्यमायुष्यम् ॥ १५ ॥ प्रदग्धाहुतिर्ह वा ऽअन्योऽध्वर्युः । आहुतीर्हान्यः सन्तर्प्पयत्येष ह वै प्रदग्धाहुतिरध्वर्युर्योऽयमाज्यꣳ हुत्वावदानानि जुहोत्येतꣳ ह वै तदुदृश्यमाना वागभ्युवाद प्रदग्धाहुतिर्न्वा ऽअयमध्वर्युरित्यथ हैना ऽएष सन्तर्प्पयति योऽयमाज्यꣳ हुत्वावदानानि जुहोत्यथ पुनरन्तत ऽआज्येनाभिजुहोत्येष हैनाः सन्तर्प्पयति तासाꣳ सन्तृप्तानान्देवा हिरण्मयाँश्चमसान्पूरयन्ते ॥ १६ ॥ तदु होवाच याज्ञवल्क्यः । यद्वा ऽउपस्तीर्य्यावदायाभिघारयति तदेवैनाः सन्तर्प्पयति तासाꣳ सन्तृप्तानान्देवा हिरण्मयाँश्चमसान्पूरयन्तेऽयस्थूणगृहपतीनाꣳ ह वै शौल्बायनोऽध्वर्युरास ॥ १७ ॥ स

(१) "नां वै" इति 'ग' 'ज' पुस्तकयोः पाठः ।

होवाच । इदमहेदꣳ सत्रङ्कुशपञ्श्वल्प्याज्यमथायङ्गृह-पतिरस्मीति मन्न्यत ऽइति ॥ १८ ॥ स होवाच । अद्ध्वर्य्यवा वै नोऽक्कुक्ष ऽएते वै ते स्रुचौ ये त्वꣳ सँव्वत्स-रन्नाशक ऽआदातुं यद्वै त्वाहमेतयोरनुशिष्ष्याम्प्र प्प्रजया पशुभिर्ज्जायेथा ऽअभि स्वर्ग्गँल्लोकं व्वहेरिति ॥ १९ ॥ स होवाच । उप त्वयानीति स होवाचात्र वाव खल्ल्वर्हꣳसि यो नः सँव्वत्सरेऽद्ध्वर्य्युरभूरनुपेतायैव त ऽएनं ब्रवाणीति तस्म्मा ऽउ हैतदेव स्रुचोरादानमुवाच यदेतद्व्याख्याम तस्म्मादेवंव्विदमेवाद्ध्वर्य्युङ्कुर्वीत नानेवंव्विदम् ॥ २० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणं ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या १०४ ॥



[ मित्रविन्देष्टिः ]

प्रजापतिर्व्वै प्प्रजाः सृजमानोऽतप्प्यत । तस्म्माच्छ्रा-न्तात्तेपानाच्छ्रीरुदक्क्रामत्सा दीप्प्यमाना भ्भ्राजमाना लेलायन्त्यतिष्ठत्तान्दीप्प्यमानाम्भ्राजमानाँल्लेलायन्तीन्देवा ऽअभ्भ्यद्ध्यायन् ॥ १ ॥ ते प्प्रजापतिमब्ब्रुवन् । हनामेमा-मेदमस्या ददामहा ऽइति स होवाच स्त्री वा ऽएषा यच्छ्रीर्न्न वै स्त्रियङ्घ्नन्त्युत त्वा ऽअस्या जीवन्त्या ऽएवा-ददत ऽइति ॥ २ ॥ तस्या ऽअग्निरन्नाद्यमादत्त । सोमो राज्यं व्वरुणः साम्म्राज्यम्मित्रः क्षत्रमिन्द्रो बलम्बृहस्पति-

(१) 'ग' 'ज' पुस्तकयोः 'एतद्ध॰' इति पाठ उपलभ्यते ।

ब्रह्मवर्चसꣳ सविता राष्ट्रम्पूषा भग सरस्वती पुष्टिन्त्वष्टा रूपाणि ॥ ३ ॥ सा प्रजापतिमब्रवीत् । आ वै म इदमदिषतेति स होवाच यज्ञेनैनान्पुनर्य्याचस्वेति ॥ ४ ॥ सैतान्दशहविषमिष्टिमपश्यत् । आग्नेयमष्टाकपालम्पुरोडाश सौम्यञ्चरुं वारुणन्दशकपालम्पुरोडाशम्मैत्रञ्चरुमैन्द्रमेकादशकपालम्पुरोडाशम्बार्हस्पत्यञ्चरुꣳ सावित्रन्द्वादशकपालं वाष्टाकपालं वा पुरोडाशम्पौष्णञ्चरुꣳ सारस्वतञ्चरुन्त्वाष्ट्रन्दशकपालम्पुरोडाशम् * ॥ ५ ॥ तानेतयानुवाक्यया न्ववदत् । अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री ॥ पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ते प्रत्युपातिष्ठन्त ॥ ६ ॥ तानेतया याज्यया । परस्तात्प्रतिलोमम्प्रत्यैत्त्वष्टा रूपाणि ददती सरस्वती पूषा भग सविता मे ददातु ॥ बृहस्पतिर्ददिन्द्रो बलम्मे मित्रः क्षत्रं वरुणः सोमो अग्निरिति ते पुनर्दानायाद्रियन्त ॥ ७ ॥ सैतानुपहोमानपश्यत् । अग्निरन्नादो ऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायाग्निरुदक्रामत्पुनरस्या अन्नाद्यमददात् ॥ ८ ॥ सोमो राजा राजपतिः । राज्यमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सोम उदक्रामत्पुनरस्यै राज्यमददात् ॥ ९ ॥ वरुणः सम्राट् सम्राट्पतिः साम्राज्यमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय वरुण उदक्रामत्पुनरस्यै साम्रा-

* का० श्रौ० सु० अ० ५ कं० १२ सु० १।

ज्ज्यमददात् ॥ १० ॥ मित्रः क्षत्रं क्षत्रपतिः । क्षत्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय मित्र ऽउदक्क्रामत्पुनरस्यै क्षत्रमददात् ॥ ११ ॥ इन्द्रो बलम्बलपतिः । बलमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादायेन्द्र ऽउदक्क्रामत्पुनरस्यै बलमददात् ॥ १२ ॥ बृहस्पतिर्ब्रह्म ब्रह्मपति । ब्रह्मवर्चसमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय बृहस्पतिरुदक्क्रामत्पुनरस्यै ब्रह्मवर्चसमददात् ॥ १३ ॥ सविता राष्ट्रं राष्ट्रपति । राष्ट्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सवितोदक्क्रामत्पुनरस्यै राष्ट्रमददात् ॥ १४ ॥ पूषा भगम्भगपति । भगमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय पूषोदक्क्रामत्पुनरस्यै भगमददात् ॥ १५ ॥ सरस्वती पुष्टिम्पुष्टिपतिः । पुष्टिमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय सरस्वत्त्युदक्क्रामत्पुनरस्यै पुष्टिमददात् ॥ १६ ॥ त्वष्टा रूपाणाꣳ रूपकृद्रूपपतिः । रूपेण पशूनस्मिन्न्यज्ञे मयि दधातु स्वाहेत्त्याहुतिमेवादाय त्वष्टोदक्क्रामत्पुनरस्यै रूपेण पशूनददात् ॥ १७ ॥ ता वा ऽएताः । दश देवता दश हवीꣳषि दशाहुतयो दश दक्षिणा दशन्दशिनी विराट् श्रीर्विराट् श्रियाꣳ हैतद्विराज्ज्यन्नाद्ये प्रतितिष्ठति ॥ १८ ॥ तस्यै पञ्चदश सामिधेन्न्यो भवन्ति । उपाꣳशु देवता यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा ऽएकः समि-

(१) का० श्रौ० सू० ५. १२. १। (२) का० श्रौ० सू० ५. १३. १। (३) का० श्रौ० सू० ५. १३. ४।

ष्टयजुः। * पुष्टिमन्तावाज्यभागा'वग्निना रयिमश्नवत्पो-षमेव दिवे दिवे। यशसं वीरवत्तमम्' ॥ 'गयस्फानो अमीवहा वसुवित्पुष्टिवर्द्धन । सुमित्र सोम नो भवे'ति सहस्र-वत्यौ सँयाज्ये 'नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम्' ॥ 'उत नो ब्रह्म-न्नविष ऽउक्थेषु देवहूतम । शन्न शोचा मरुद्वृधोऽग्ने सहस्रसातम' इति ॥ १९ ॥ ताथं हैताङ्गोतमो राहू-गणः । विदाञ्चकार सा ह जनकं वैदेहम्प्रत्युत्ससाद ता हाङ्गजिद्ब्राह्मणेष्वन्विष्येष तामु ह याज्ञवल्क्ये विवेद स होवाच सहस्रम्भो याज्ञवल्क्य दद्मो यस्मिन्नवयन्त्वयि मित्रविन्दामन्वविदामेति विन्दते मित्र_ राष्ट्रमस्य भव-त्यप पुनर्मृत्युञ्जयति सर्वमायुरेति य एवं विद्वानेतयेष्ट्या यजते यो वै तदेवं वेद ॥ २० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ हविषः समृद्धिः ]

अथातो हविषः समृद्धिः । षड्ढ वै ब्रह्मणो द्वारोऽ-ग्निर्वायुरापश्चन्द्रमा विद्युदादित्यः ॥ १ ॥ स य ऽउपदग्धेन हविषा यजते । अग्निना ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽग्निना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यं सलोकताञ्जयति ॥ २ ॥ अथ यो

* प्रधानयागादौ सम्यग् इष्टा देवता इज्यन्ते अनेन स होमः मन्त्रश्च समिष्टयजुः ।

(१) ऋ० सं० १. १. ११ (२) ऋ० सं० १. ६. २१ । (३) ऋ० सं० ३. १. १३ । (४) ऋ० सं० ३. १. १३ ।

विपतितेन हविषा यजते । वायुना ह स ब्रह्मणो द्वारेण प्रतिपद्यते स वायुना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ३ ॥ अथ योऽशृतेन हविषा यजते । अद्भिर्ह स ब्रह्मणो द्वारेण प्रतिपद्यते सोऽद्भिर्ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ४ ॥ अथ य ऽउपरक्तेन हविषा यजते । चन्द्रमसा ह स ब्रह्मणो द्वारेण प्रतिपद्यते स चन्द्रमसा ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ५ ॥ अथ यो लोहितेन हविषा यजते । विद्युता ह स ब्रह्मणो द्वारेण प्रतिपद्यते स विद्युता ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति ॥ ६ ॥ अथ यः सुशृतेन हविषा यजते । आदित्येन ह स ब्रह्मणो द्वारेण प्रतिपद्यते स ऽआदित्येन ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति सैषा हविषः समृद्धिः स यो हैवमेताꣳ हविषः समृद्धिं वेद सर्वसमृद्धेन हैवास्य हविषेष्टम्भवति ॥ ७ ॥ अथातो यज्ञस्य समृद्धिः । यद्वै यज्ञस्य न्यूनम्प्रजननमस्य तदथ यदतिरिक्तम्पशव्यमस्य तदथ यत्सङ्कसुकꣳ श्रिया ऽअस्य तदथ यत्सम्पन्नꣳ स्वर्ग्यमस्य तत् ॥ ८ ॥ स यदि मन्येत । न्यूनम्मे यज्ञेऽभूदिति प्रजननम्म ऽएतत्प्रजनिष्य ऽइत्येव तदुपासीत ॥ ९ ॥ अथ यदि मन्येत । अतिरिक्तम्मे यज्ञेऽभूदिति पशव्यम्म ऽएतत्पशुमान्भविष्यामीत्येव तदुपासीत ॥१०॥ अथ यदि मन्येत । सङ्कसुकम्मे यज्ञेऽ-

भूदिति श्रियै स ऽएतद्वा मा श्रीस्तेजसा यशसा ब्रह्म-वर्च्चसेन परिवृता गमिष्यतीत्त्येव तदुपासीत ॥ ११ ॥ अथ यदि मन्न्येत । सम्पन्नम्मे यज्ञेऽभूदिति स्वर्ग्ग्यम्म ऽएतत्स्वर्ग्गंल्लोको भविष्यामीत्त्येव तदुपासीत सैषा यज्ञस्य समृद्धिः स यो हैवमेतां यज्ञस्य समृद्धिं वेद सर्व्वसमृद्धेन हैवास्य यज्ञेनेष्टम्भवति ॥ १२ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

---

[ अरण्योरश्वत्थविकृतित्वविधानमाख्यायिकया ]

उर्व्वशी हाप्सराः । पुरूरवसमैडञ्चकमे तꣳ ह विन्दु-मानोवाच त्रिः स्म मान्हो वैतसेन * दण्डेन हतादकामाꣳ स्म मा निपद्यासै मो स्म त्त्वा नग्नन्दर्शमेष वै न स्त्रीणामुपचार ऽइति ॥ १ ॥ सा हास्मिञ्ज्योग्गुवास । अपि हास्माद्गर्ब्भिण्यास तावज्ज्योग्घास्मिन्नुवास ततो ह गन्धर्व्वाः समूदिरे ज्योग्वा ऽइयमुर्व्वशी मनुष्येष्ववात्सीदुपजानीत यथेयम्पुनरागच्छेदिति तस्यै हावि-र्द्ध्युरणा शयन ऽउपबद्धास ततो ह गन्धर्व्वा ऽअन्न्यतर-मुरणम्प्रमेथुः ॥ २ ॥ सा होवाच । अवीर ऽइव बत मेऽजन ऽइव पुत्रꣳ हरन्तीति द्वितीयम्प्रमेथुः सा ह तथैवोवाच ॥ ३ ॥ अथ हायमीक्षाञ्चक्रे । कथन्नु तद-

---

* वैतस इति पुंस्प्रजननस्य नाम। तथाहि "शेपो वैतस इति पुंस्प्रजननस्य" वैतसो वितस्तं भवति, ( निरु० अ० ३ पा० ४ ख० २१ )।

वीरङ्कृथमजनॐ स्याद्यत्राहॐ स्यामिति स नग्न ऽएवानूत्पपात चिरन्तन्मेने यद्वासः पर्य्यधास्यत ततो ह गन्धर्वा विद्युतञ्जनयाञ्चक्रुस्तं यथा दिवैवन्नग्नन्ददर्श ततो हैवेयन्तिरोबभूव पुनरैमीत्त्येत्तिरोभूताॐ स ऽआद्ध्या जल्पन्कुरुक्षेत्रᳪ समया चचारान्न्यतः प्लक्षेति बिसवती तस्यै हाद्ध्यन्तेन वव्राज तद्ध ता ऽअप्सरस ऽआतयो भूत्वा परिपुप्लुविरे ॥ ४ ॥ तᳪ हेयं ज्ञात्वोवाच । अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा ऽआविरसामेति तथेति तस्मै हाविरासुः ॥ ५ ॥ ताॐ हायं ज्ञात्वाभिपरोवाद । 'हये जाये मनसा तिष्ठ घोरे वचाॐसि मिश्रा कृणवावहै नु ॥ न नौ मन्त्रा ऽअनुदितास ऽएते मयस्करन्परतरे चनाहन्नि'त्युप नु रम सन्नु वदावहा ऽइति हैवैनान्तदुवाच ॥ ६ ॥ तᳪ हेतरा प्रत्युवाच । 'किमेता वाचा कृणवा तवाहम्प्राक्रमिषमुषसामग्रियेव ॥ पुरूरवः पुनरस्तम्परेहि दुरापना वात ऽइवाहमस्मी'ति न वै त्वन्तदकरोर्य्यदहमब्रवन्दुरापा वा ऽअहन्त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनन्तदुवाच ॥ ७ ॥ अथ हायम्परिद्यून ऽउवाच । 'सुदेवो ऽअद्य प्रपतेदनावृत्परावतम्परमाङ्गन्तवा ऽउ ॥ अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो ऽअद्यु'रिति सुदेवोऽद्योद्वा बद्ध्नीत प्रवा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाच ॥ ८ ॥ सᳪ हेतरा प्रत्युवाच । 'पुरूरवो

(१) ऋ० सं० अष्ट० ८ अ० ५ व० १। (२) ऋ० सं० अष्ट० ८ अ० ५ व० १। (३) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३। (४) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ३।

मा मृथा मा प्प्रपप्तो मा त्वा व्वृकासो ऽअशिवास ऽउक्षन् ॥ न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणाथं हृदयान्न्येते'ति मैतदादृथा न वै स्त्रैणꣳ सख्यमस्ति पुनर्ग्गृहानिहीति हैवैनन्तदुवाच ॥ ९ ॥ '[1]यद्विरूपाचरम् । मर्त्त्येष्ववसꣳ रात्रीः शरदश्चतस्रः ॥ घृतस्य स्तोकꣳ सकृदह्न ऽआश्नान्तादेवेदन्तातृपाणा चरामी'ति तदेतदुक्तप्प्रत्युक्तम्पञ्चदशर्चं बह्वृचाः प्प्राहुस्तस्यै ह हृदयमाव्व्ययाञ्चकार ॥ १० ॥ सा होवाच । सँव्वत्सरतमीथं रात्रिमागच्छतात्तन्न्म ऽएकाथं रात्रिमन्ते शयितासे जात ऽउ तेऽयन्तर्हि पुत्त्रो भवितेति स ह सँव्वत्सरतमीथं रात्रिमाजगामेद्धिरण्ण्यविमितानि ततो हैनमेकमूचुरेतत्प्प्रपद्यस्वेति तद्धास्मै तामुपप्प्रजिग्घ्युः ॥ ११ ॥ सा होवाच । गन्धर्वा वै ते प्प्रातर्व्वरन्दातारस्तं व्वृणासा ऽइति तं व्वै मे त्वमेव व्वृणीष्ष्वेति युष्ष्माकमेवैकोऽसानीति ब्रूतादिति तस्स्मै ह प्प्रातर्ग्गन्धर्वा व्वरन्ददुः स होवाच युष्ष्माकमेवैकोऽसानीति ॥ १२ ॥ ते होचुः । न वै सा मनुष्ष्येष्ष्वग्ग्नेर्यज्ञिया तनूरस्ति ययेष्ट्वास्स्माकमेकः स्यादिति तस्स्मै ह स्स्थाल्ल्यामोप्प्याग्निम्प्रददुरनेनेष्ट्वास्स्माकमेको भविष्ष्यसीति तञ्च ह कुमारञ्चादायावव्राज सोऽरण्ण्य ऽएवाग्निन्निधाय कुमारेणैव ग्ग्राममेयाय पुनरैमीत्त्येत्तिरोभूतं यश्चोऽग्निरश्वत्थन्तं यश्चा स्स्थाली शमीन्ताथं स ह पुनर्ग्गन्धर्वानेयाय ॥ १३ ॥ ते होचुः । सँव्वत्सरञ्चातुष्प्राश्यं

(१) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ४ ।

मोदनुम्पच स एतस्यैवाश्वत्थस्य तिस्रस्तिस्रः समिधो घृतेनाभ्यज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १४ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्व शमीमयीमधरारणिं स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १५ ॥ ते होचुः । परोऽक्षमिव वा ऽएतदाश्वत्थीमेवोत्तरारणिङ्कुरुष्वाश्वत्थीमधरारणिं स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥१६॥ स ऽआश्वत्थीमेवोत्तरारणिञ्चक्रे । आश्वत्थीमधरारणिं स यस्ततोऽग्निर्जज्ञे स ऽएव स ऽआस तेनेष्ट्वा गन्धर्वाणामेक ऽआस तस्मादाश्वत्थीमेवोत्तरारणिङ्कुर्वीताश्वत्थीमधरारणिं स यस्ततोऽग्निर्जायते स ऽएव स भवति तेनेष्ट्वा गन्धर्वाणामेको भवति ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ चातुर्मास्ययाजिनो द्वैविध्यं दर्शयितुं तत्रत्यैर्यागैः शरीरावयवकल्पनम् ]

प्रजापतिर्ह चातुर्म्मास्यैरात्मानं विदधे । स ऽइममेव दक्षिणम्बाहुं वैश्वदेवं हविरकुरुत तस्यायमेवाङ्गुष्ठ ऽआग्नेयं हविरिदं सौम्यमिदं सावित्रम् ॥ १ ॥ स वै वर्षिष्ठः पुरोडाशो भवति । तस्मादियमासां वर्षिष्ठेदं सारस्वतमिदम्पौष्णमथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तन्मारुतमिदं वैश्वदेवन्द्यावापृथिवीयन्तद्वा

"अश्वत्थशमीगर्भारणी प्रयच्छति" ( का० श्रौ० सू० ४. ७. २० )

ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ २ ॥ अयमेव दक्षिण ऽऊरुर्वरुणप्रघासाः । तस्य यानि पञ्च हवीꣳषि समायीनि * ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नꣳ हविस्तद्धि द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदं वारुणमिदम्मारुतमनूकङ्कायस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ३ ॥ मुखमेवास्यानीकवतीष्टिः । मुखꣳ हि प्राणानामनीकमुरः सान्तपनीयोरसा हि समिव तप्यत ऽउदरङ्गृहमेधीया प्रतिष्ठा वा ऽउदरम्प्रतिष्ठित्या ऽएव शिश्नान्येवास्य क्रैडिनꣳ हविः शिश्नैर्हि क्रीडतीवायमेवावाङ् प्राण ऽआदित्येष्टिः ॥ ४ ॥ अयमेवोत्तर ऽऊरुर्महाहविः । तस्य यानि पञ्च हवीꣳषि समायीनि ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नꣳ हविस्तद्धि द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदम्माहेन्द्रमिदं वैश्वकर्म्मणन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तमथ यदिदमन्तरुदरे तत्पितृयज्ञस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ५ ॥ अयमेवोत्तरो बाहुः शुनासीरीयम् । तस्य यानि पञ्च हवीꣳषि समायीनि ता ऽइमाः पञ्चाङ्गुलयोऽथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तच्छुनासीरीयमिदं वायव्यन्दोः सौर्य्यन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ६ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि † त्रिषन्धीनि ‡ द्विसमस्तानि तस्मादि-

* पर्वचतुष्टयसञ्चारीणि ।

† चतुर्षु चतुर्षु मासेषु क्रियमाणानि चातुर्मास्यानि वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयाख्यानि चत्वारि पर्वाणि ।

‡ त्रयः सन्धयोऽन्तरालकालाश्चत्वारो मासा येषु तानि त्रिषन्धीनि ।

१०२

मानि पुरुषस्याङ्गानि त्रिषन्धीनि द्विसमस्तानि तेषां वै चतुर्णान्द्वयोस्त्रीणि त्रीणि हवीꣳष्यनिरुक्तानि भवन्ति द्वे द्वे द्वयोः ॥७॥ [अर्धः प्रपाठकः ॥५६॥] तेषां वै चतुर्ष्वग्निम्मन्थन्ति। तस्माच्चतुर्भिरङ्गैरायुते द्वयोः प्प्रणयन्ति तस्माद्द्वाभ्यामेत्येवमु ह प्प्रजापतिश्चातुर्म्मास्यैरात्मानं विदधे तथो ऽएवैवंविद्यजमानश्चातुर्म्मास्यैरात्मानं विधत्ते ॥८॥ तदाहुः सर्वङ्गायत्रं वैश्वदेवꣳ हविः स्यात्सर्वन्त्रैष्टुभं वरुणप्प्रघासाः सर्वञ्जागतम्महाहविः सर्वानुष्टुभꣳ शुनासीरीयञ्चतुष्टोमस्याप्त्या ऽइति तदु तथा न कुर्य्याद्यत्त्वा ऽएतान्यभिसम्पद्यन्ते तेनैवास्य स काम ऽउपाप्तो भवति ॥ ९ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि द्वाषष्ठानि त्रीणि शतानि बृहत्यः सम्पद्यन्ते तदेभिः सँवत्सरञ्च महाव्रतञ्चाप्नोत्यथो द्विप्प्रतिष्ठो वा ऽअयं रुयजमानो यजमानमेवैतत्स्वर्गे लोक ऽआयातयति प्प्रतिष्ठापयति ॥ १० ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ प्रश्नप्रतिवचनैरग्निहोत्रहोमस्य सर्वदेवतृप्तिकरत्वप्रतिपादनम् ]

शौचेयो ह प्प्राचीनयोग्यः । उद्दालकमारुणिमाजगाम ब्रह्मोद्यमग्निहोत्रं विविदिषिष्यामीति¹ ॥ १ ॥ स होवाच । गौतम का तेऽग्निहोत्री को वत्सः किमुपसृष्टा किꣳ संयोजनङ्किन्दुह्यमानङ्किन्दुग्धङ्किमाह्रियमाणङ्किमधिश्रितङ्किमवज्योत्यमानङ्किमद्भिः प्रत्यानीतङ्किमुद्वास्यमानङ्किमुद्वा-

(१) 'ग' 'ज' पुस्तकयोः "विविदिषामीति" इति पाठो दृश्यते ।

सितङ्किमुन्नीयमानङ्किमुन्नीतङ्किमुद्यतङ्किꣳ ह्रियमाणङ्किन्निगृहीतम् ॥ २ ॥ काꣳ समिधमादधासि का पूर्वाहुतिः किमुपासीषदः किमपैक्षिष्ठाः कोत्तराहुतिः ॥ ३ ॥ किꣳ हुत्वा प्प्रकम्पयासि । किꣳ स्रुचम्परिमृज्य कूर्च्चे न्न्यमार्ज्जीः किन्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीषदः किम्पूर्वम्प्राशीः किन्द्वितीयङ्किमुत्स्सृप्प्यापाः किꣳ स्रुच्च्यप ऽआनीय निरौक्षीः किन्द्वितीयङ्किन्तृतीयमेतान्दिशमुदौक्षीः किञ्जघनेनाहवनीयमपो न्न्यनैषीः किꣳ समतिष्ठिपो यदि वा ऽएतद्विद्वानग्निहोत्रमहौषीरथ ते हुतं य्यद्यु वा ऽअविद्वानहुतमेव त ऽइति ॥ ४ ॥ स होवाच । हुडैव मे मानव्व्यग्निहोत्री व्वायव्व्यो व्वत्सः सजूरुपसृष्टा व्विराट् संव्वोजनमाश्श्विनन्दुह्यमानं व्वैश्श्वदेवन्दुग्धं व्वायव्व्यमाह्रियमाणमाग्नेयमधिश्श्रितमैन्द्राग्ग्नमवज्ज्योत्त्यमानं व्वारुणमद्भिः प्प्रत्यानीतं व्वायव्व्यमुद्वास्यमानन्द्यावापृथिव्व्यमुद्वासितमाश्श्विनमुन्नीयमानं व्वैश्श्वदेवमुन्नीतम्महादेवायोद्यतं व्वायव्व्यꣳ ह्रियमाणं व्वैष्णवन्निगृहीतम् ॥ ५ ॥ अथ याꣳ समिधमादधामि । आहुतीनाꣳ सा प्प्रतिष्ठा या पूर्वाहुतिर्द्देवाँस्तयाप्प्रैषं य्यदुपासीषदम्बार्हस्पत्यन्तद्यदपैक्षिषीमश्चामुञ्च लोकौ तेन समिधां य्योत्तराहुतिम्मान्तया स्वर्ग्गे लोकेऽधाम् ॥६॥ अथ यद्धुत्वा प्प्रकम्पयामि । व्वायव्व्यन्तद्यत्स्रुचम्परिमृज्य कूर्च्चे न्न्यमार्ज्जिषमोषधिवनस्पतीँस्तेनाप्प्रैषं यद्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीषदम्पितॄँस्तेनाप्प्रैषं य्यत्पूर्वम्प्राशिषम्मान्तेनाप्प्रैषं य्यद्द्वि-

तीयम्प्रजान्तेनाथ यदुरस्य्यापाम्पशूँस्तेनाप्प्रैषं यदस्त्रुचय्यप ऽआनीय निरौक्षिषन्त्सर्प्पदेवजनाँस्तेनाप्प्रैषं यद्द्वितीयङ्गन्धर्व्वाप्प्सरसस्तेनाथ यत्तृतीयमेतान्दिशमुदौक्षिषन्त्स्वर्ग्गस्य लोकस्य तेन द्वारं व्यवारिषं यज्जघनेनाहवनीयमपो न्ययनैषमस्मै लोकाय तेन वृष्टिमदां यत्समतिष्ठिपं यत्पृथिव्या ऽऊनन्तत्तेनापूपुरमित्येतन्नौ भगवन्त्सहेति होवाच ॥ ७ ॥ शौचेयो ऽप्सुः । प्प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यस्मिन्न्काल ऽउद्धृतास्तेऽग्नयः स्युरुपावहृतानि पात्राणि होष्यन्त्स्या ऽअथ त ऽआहवनीयोऽनुगच्छेद्वेत्थ तन्द्भयं यदुत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य ज्येष्ठः पुत्रो म्म्रियेत यस्यैतदविदितन्त्स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति प्प्राण ऽउदानमप्प्यगादिति गार्हपत्त्य ऽआहुतिञ्जुहुयात्सैव प्प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ८ ॥ शौचेयो ऽप्सुः । प्प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छैव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले गार्हपत्त्योऽनुगच्छेद्वेत्थ तन्द्भयं यदुत्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य गृहपतिर्म्म्रियेत यस्यैतदविदितन्त्स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरित्युदानः प्प्राणमप्प्यगादित्त्याहवनीय ऽआहुतिञ्जुहुयात्सैव प्प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ९ ॥ शौचेयो ऽप्सुः ।

प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव कालेऽन्न्वाहार्य्यपचनोऽनुगच्छेद्देत्थ तद्यं य्यदुत्र जुह्वतो भवतीति व्वेदेति होवाच पुरा चिरादस्य सर्वे पशवो म्म्रियेरन्न्यस्यैतदविदितꣳ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं व्विदितङ्का प्प्रायश्चित्तिरिति व्व्यान ऽउदानमप्प्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयाꣳ सैव प्प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्त्येतन्नौ भगवन्त्सहेति होवाच ॥ १० ॥ शौचेयो ज्ञप्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले सर्वेऽग्नयोऽनुगच्छेयुर्व्वेत्थ तद्यं य्यदुत्र जुह्वतो भवतीति व्वेदेति होवाच पुरा चिरादस्यादायादङ्कुलꣳ स्याद्यस्यैतदविदितꣳ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं व्विदितङ्का प्प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्त्वा यान्दिशं व्वातो व्वायात्तान्दिशमाहवनीयमुद्धृत्य व्वायव्व्यामाहुतिञ्जुहुयाꣳ स व्विद्याꣳ सम्मृद्धम्मेऽग्निहोत्रꣳ सर्व्वदेवत्यं व्वायुꣳ ह्येव सर्वाणि भूतान्न्यपियन्ति व्वायोः पुनर्व्विसृज्ज्यन्ते सैव प्प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्त्येतन्नौ भगवन्त्सहेति होवाच ॥ ११ ॥ शौचेयो ज्ञप्तः । प्प्रक्ष्यामि त्त्वेव भगवन्तमिति पृच्छैव प्प्राचीनयोग्ग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले निवाते सर्वेऽग्नयोऽनुगच्छेयुर्व्वेत्थ तद्यं य्यदुत्र जुह्वतो भवतीति व्वेदेति होवाचाप्प्रियमेवास्मिँल्लोके पश्येताप्प्रियममुष्मिन्न्यस्यैतदविदितꣳ स्याद्विद्या-

भिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा प्राञ्चमाहवनीयमुद्धृत्य जघनेनाहवनीयमुपविश्याहमेवैनत्पिबेयꣳ स विद्यात्सꣳसमृद्धम्मेऽग्निहोत्रꣳ सर्वदेवत्यम्ब्राह्मणꣳ ह्येव सर्वाणि भूतान्यपियन्ति ब्राह्मणात्पुनर्विसृज्यन्ते सैव प्रायश्चित्तिर्न तदागꣳ कुर्वीयेत्यथ वा ऽअहमेतन्नावेदिषमिति होवाच ॥ १२ ॥ शौचेयो ज्ञप्तꣳ । इमानि समित्काष्ठान्न्युपायानि भगवन्तमिति स होवाच यदेवन्नावक्ष्यो मूर्द्धा ते व्व्यपतिष्यदेह्युपेहीति तथेति तꣳ होपनिन्न्ये तस्मै हैताꣳ शोकतरां व्व्याहृतिमुवाच यत्सत्यन्तस्मादु सत्यमेव वदेत् ॥ १३ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ उपनयनधर्मनिरूपणम् ]

ब्रह्मचर्य्यमागामित्याह । ब्रह्मण ऽएवैतदात्मानन्निवेदयति ब्रह्मचार्य्यसानीत्याह ब्रह्मण ऽएवैतदात्मानम्परिददात्यथैनमाह को नामासीति प्रजापतिर्वै कꣳ प्राजापत्यमेवैनन्तत्कृत्वोपनयते ॥ १ ॥ अथास्य हस्तङ्गृह्णाति । इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासावित्येते वै श्रेष्ठे वालेष्ठे देवते ऽएताभ्यामेवैनꣳ श्रेष्ठाभ्याम्बलिष्ठाभ्यान्देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ २ ॥ अथैनम्भूतेभ्यꣳ परिददाति । प्रजापतये त्वा परिददामि

देवाय त्वा सवित्रे परिददामीत्त्येते वै श्श्रेष्ठे व्वर्षिष्ठे देवते ऽएताब्भ्यामेवैनथं श्रेष्ठाब्भ्यां व्वर्षिष्ठाब्भ्यान्देवताब्भ्याम्परिददाति तथा हास्य ब्ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं व्वेद ॥ ३ ॥ अद्भ्यस्त्वौषधीब्भ्यः परिददामीति । तदेनमद्ब्भ्यश्चौषधिब्भ्यश्च परिददाति द्यावापृथिवीब्भ्यान्त्वा परिददामीति तदेनमाब्भ्यान्द्यावापृथिवीब्भ्याम्परिददाति यथोरिदꣳ सर्व्वमधि विश्वेब्भ्यस्त्वा भूतेब्भ्यः परिददाम्म्यरिष्ट्या ऽइति तदेनꣳ सर्वेब्भ्यो भूतेब्भ्यः परिददात्त्यरिष्ट्यै तथा हास्य ब्ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं व्वेद ॥४॥ * ब्रह्मचार्य्यसीत्त्याह । ब्ब्रह्मण ऽएवैनन्तत्परिददात्त्यपोऽशानेत्त्यमृतं व्वा ऽआपोऽमृतमशानेत्त्येवैनन्तदाह कर्म्म कुर्व्वीति व्वीर्य्यं वै कर्म्म व्वीर्य्यङ्कुर्व्वित्त्येवैनन्तदाह समिधमाधेहीति समित्स्वात्मानन्तेजसा ब्ब्रह्मवर्च्चसेनेत्त्येवैनन्तदाह मा सुषुप्प्था ऽइति मा मृथा ऽइत्त्येवैनन्तदाहापोऽशानेत्त्यमृतं व्वा ऽआपोऽमृतमशानेत्त्येवैनन्तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति तथा हास्य ब्ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं व्वेद ॥ ५ ॥ अथास्म्मै सावित्रीमन्न्वाह[†] । ताꣳ ह स्म्मैताम्पुरा सँव्वत्त्सरेऽन्न्वाहुः सँव्वत्त्सरसम्मिता वै गब्भीः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ६ ॥ अथ षट्सु मासेषु । षड्वा ऽऋतवः सँव्वत्त्सरस्य सँव्वत्त्सरसम्मिता वै गब्भीः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वा-

* अत्रशतम् ५८०० ।
† पा० गृ० सू० २. ३. ३ ।

चन्दद्ध्म ऽइति ॥ ७ ॥ अथ चतुर्विंꣳशत्यहे । चतुर्विंꣳशतिर्वै सँवत्सरस्यार्द्धमासाः सँवत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ८ ॥ अथ द्वादशाहे । द्वादश वै मासाः सँवत्सरस्य सँवत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्मँ ऽइति ॥ ९ ॥ अथ षडहे । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ १० ॥ अथ त्र्यहे । त्रयो वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥११॥ तदुपि श्श्लोकङ्गायन्ति । आचार्य्यो गर्ब्भी भवति हस्तमाधाय दक्षिणन्तृतीयस्याꣳ स जायते सावित्र्या सह ब्ब्राह्मण ऽइति सद्यो ह त्वात्र ब्ब्राह्मणायानुब्ब्रूयादाग्नेयो वै ब्ब्राह्मणः सद्यो वा ऽअग्निर्ज्जायते तस्मात्सद्य ऽएव ब्ब्राह्मणायानुब्ब्रूयात् ॥ १२ ॥ ताꣳ हैतामेके । सावित्रीमनुष्टुभमन्न्वाहुर्वाग्वा ऽअनुष्टुप्तदस्मिन्न्वाचन्दद्ध्म ऽइति न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयादा न्न्वा ऽअयमस्य व्वाचमादित मूको भविष्यतीतीश्श्वरो ह तथैव स्यात्तस्मादेताङ्गायत्रीमेव सावित्रीमनुब्ब्रूयात् ॥ १३ ॥ अथ हैके दक्षिणतः । तिष्ठते व्वासीनाय व्वान्न्वाहुर्न्न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयाद्बुलब्बन्न्वा ऽअयमिममजीजनत बुलब्बो भविष्ष्यतीतीश्श्वरो ह तथैव स्यात्तस्मात्पुरस्तादेव प्प्रतीचे समीक्षमाणायानुब्ब्रूयात् ॥ १४ ॥ तां व्वै पच्छोऽन्न्वाह । त्रयो वै

प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवास्म्मिँस्तद्दधात्यथा-र्द्धर्चशो द्वौ वा ऽइमौ प्प्राणौ प्प्राणोदानावेव प्प्राणोदानावे-वास्म्मिँस्तद्दधात्यथ कृत्स्नामेको वा ऽअयम्प्प्राणः कृत्स्न ऽएव प्प्राणमेवास्म्मिँस्तत्कृत्स्नन्दधाति ॥ १५ ॥ तदाहुः । न ब्ब्राह्मणम्ब्रह्मचर्य्यमुपनीय मिथुनञ्चरेद्गर्ब्भो वा ऽएष भवति यो ब्ब्रह्मचर्य्यमुपैति नेदिमम्ब्राह्मणं व्विषिक्ताद्रेतसो जनया-नीति ॥ १६ ॥ तदु वा ऽआहुः । काममेव चरेद्द्वय्यो वा ऽइमाः प्प्रजा दैव्व्यश्चैव मानुष्व्यश्च ता वा ऽइमा मानुष्व्यः प्प्रजाः प्प्रजननात्प्रजायन्ते च्छन्दाᳬंसि वै दैव्व्यः प्प्रजास्तानि मुखतो जनयते तत ऽएतज्जनयते तस्म्मादु काममेव चरेत् ॥ १७ ॥ तदाहुः । न ब्ब्रह्मचारी सन्मध्वश्नीयादोषधीनां व्वा ऽएष परमो रसो यन्मधु नेदन्नाद्यस्यान्तङ्गच्छानीत्यथ ह स्माह श्वेतकेतुरारुणेयो ब्ब्रह्मचारी सन्म्मध्वश्नन्त्रय्यै वा ऽएतद्विद्यायै शिष्टं यन्मधु स तु रसो यस्येदृक्क्शिष्टमिति यथा ह वा ऽऋचं व्वा यजुर्वा साम वाभिव्व्याहरेत्तादृक्तद्य ऽएवं व्विद्वान्ब्रह्मचारी सन्म्मध्वश्नाति तस्म्मादु काममेवाश्नीयात् ॥ १८ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ शतातिरात्राख्यसत्रविधानमाख्यायिकया ]

देवाव्वा ऽऊर्द्ध्वान्स्वर्ग्गँल्लोकं य्यतः । असुरास्तमसा-न्तरदधुस्ते होचुर्न्न वा ऽअस्यान्न्येन सत्रादपघातोऽस्ति हन्त सत्रमासामहा ऽइति ॥ १ ॥ ते शताग्निष्टोमः

सत्रमुपेयुः । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाघ्नन्-तैवमेव शतोक्क्थ्येन यावत्तिष्ठन्न्परापश्श्येत्तावतस्तमोऽपाघ्नत ॥ २ ॥ ते होचुः । अप वाव तमो हन्न्महे न त्वेव सर्व्वमिव हन्त प्प्रजापतिम्पितरम्प्रत्ययामेति ते प्प्रजापतिम्पितरम्प्रतीत्योचुरसुरा वै नो भगव ऽऊर्द्ध्वान्स्वर्ग्गँल्लोकं ययतस्तमसान्तरदधुः ॥ ३ ॥ ते शताग्निष्टोमः सत्रमुपेम । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाहन्न्महत्र्येवमेव शतोक्क्थ्येन यावत्तिष्ठन्न्परापश्श्येत्तावतस्तमोऽपाहन्न्महि प्प्र नो भगवञ्छाधि यथासुराँस्तमोऽपहत्त्य सर्व्वम्पाप्प्मानमपहत्त्य स्वर्ग्गँल्लोकम्प्रज्ञास्याम ऽइति ॥ ४ ॥ स होवाच । असर्व्वक्रतुभ्भ्यां वै यज्ञाभ्भ्यामगन्त यदग्निष्टोमेन चोक्क्थ्येन च शतातिरात्रः सत्रमुपेत तेनासुराँस्तमोऽपहत्त्य सर्व्वम्पाप्प्मानमपहत्त्य स्वर्ग्गँल्लोकम्प्रज्ञास्यथेति ॥ ५ ॥ ते शतातिरात्रः सत्रमुपेयुः । तेनासुराँस्तमोऽपहत्त्य सर्व्वम्पाप्प्मानमपहत्त्य स्वर्ग्गँल्लोकम्प्रजज्ञुस्तेषामर्वाक्क्पश्चाशेष्ष्वेवाहः-स्वहरभि रात्रिसामानि परीयू रात्रिमभ्भ्यहःसामानि ॥ ६ ॥ ते होचुः । अमुहाम वै न प्प्रजानीमो हन्त प्प्रजापतिमेव पितरम्प्रत्ययामेति ते प्प्रजापतिमेव पितरम्प्रतीत्योचुरहन्नो रात्रिसामानि रात्र्यामहन्नो भवन्ति नः ॥ विपश्चिद्यज्ञान्मुग्ग्धान्न्विद्वान्धीरोऽनुशाधि न ऽइति ॥ ७ ॥ तान्हैतदुपजगौ । महाहिमिव वै ह्रदाद्बलीयानन्न्ववेत्त्य ॥ अनुत्त स्वादास्त्थानात्ततः सत्रन्न तायत ऽइति ॥ ८ ॥ आश्विनं वै वः शस्यमानम् । प्रातरनुवाकमास्त्थानादनुत्त

यमास्स्थानादनुदन्धीराः सन्तोऽधीरवत् ॥ प्रशास्त्रा तमुपेत शनैरप्प्रतिशंसतेति ॥ ९ ॥ ते होचुः । कथन्नु भगवः शस्तङ्कथमप्प्रतिशस्तमिति स होवाच यत्र होताश्विनꣳ शꣳसन्नाग्नेयस्य क्रतोर्गायत्रस्य च्छन्दसः पारङ्गच्छात्त-त्प्रतिप्प्रस्स्थाता वसतीवरीः परिहृत्य मैत्रावरुणस्य हवि-र्द्धानयोः प्प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शंसति शनै-रितरो जञ्जप्प्यमान ऽइवान्न्वाह तन्न वाचा व्वाचम्प्रत्येति न च्छन्दसा च्छन्दः ॥ १० ॥ परिहिते प्प्रातरनुवाके । यथा-यतनमेवोपाꣳश्वन्तर्य्यामौ हुत्वा द्रोणकलशे पवित्त्रम्प्र-पीड्य निदधाति तिरोह्यैश्चरित्त्वा प्प्रत्यञ्चः प्प्रतिपरेत्त्य तिरोह्यानेव भक्षयाद्धा ऽअथानुपूर्व्वं य्यज्ञपुच्छꣳ सꣳ-स्थाप्प्य य ऽऊर्द्ध्वा ऽअन्तर्य्यामाद्ग्रहास्तान्न्गृहीत्वा व्वि-प्प्रुषाꣳ होमꣳ हुत्वा सन्तनिश्च बहिष्प्पवमानेन स्तुत्त्वा-हरेव प्प्रतिपद्याद्धा ऽइति ॥ ११ ॥ तदुतेऽभि श्श्लोकाः । चतुर्भिः सैन्धवैर्य्युक्तैर्द्धीरा व्व्यजहुस्तमः ॥ विद्वाꣳसो ये शतक्रतुदेवाः सत्त्रमतन्न्वतेति ॥ १२ ॥ चत्वारो ह्यत्र युक्ता भवन्ति । द्वौ होतारौ द्वावद्ध्वर्य्यू पवेन्नु शक्वेव हनूनि कल्प्पयन्नहन्नोरन्तौ व्व्यतिषजन्त धीराः ॥ न दानवा यज्ञि-यन्तन्तुमेषां व्विजानीमो व्विततम्मोहयन्ति नः ॥ पूर्वस्याहः परिशिꣳषन्ति कर्म्म तदुत्तरेणाभिवितन्न्वतेऽह्ना ॥ दुर्व्विज्ञान-

(१) "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥ (कर्मप्र०)
"कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ ।" ( का० श्रौ० सू० २. ३. ३० )

(२) अभिषवे ग्रहणे च पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात् तत्प्रत्यवायपरिहाराय घृतहोमस्य विप्रुड्ढोम इति संज्ञा ।

सत्रमुपेयुः । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाघ्नन्-तैवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपाघ्नत ॥ २ ॥ ते होचुः । अप वाव तमो हन्मेह न त्वेव सर्वमिव हन्त प्रजापतिम्पितरम्प्रत्ययामेति ते प्रजापतिम्पितरम्प्रतीत्योचुरसुरा वै नो भगव ऽऊर्द्ध्वान्त्स्वर्गँल्लोकं यतस्तमसान्तरदधुः ॥ ३ ॥ ते शताग्निष्टोमः सत्रमुपैम । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाहन्महोवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपाहन्महि प्र नो भगवञ्छाधि यथासुरांस्तमोऽपहत्य सर्वम्पाप्मानमपहत्य स्वर्गँल्लोकम्प्रज्ञास्याम ऽइति ॥ ४ ॥ स होवाच । असर्वक्रतुभ्यां वै यज्ञाभ्यामगन्त यदग्निष्टोमेन चोक्थ्येन च शतातिरात्रः सत्रमुपेत तेनासुरांस्तमोऽपहत्य सर्वम्पाप्मानमपहत्य स्वर्गँल्लोकम्प्रज्ञास्यथेति ॥ ५ ॥ ते शतातिरात्रः सत्रमुपेयुः । तेनासुरांस्तमोऽपहत्य सर्वम्पाप्मानमपहत्य स्वर्गँल्लोकम्प्रजज्ञुस्तेषामर्वाक्पश्चाशेष्वेवाहः-स्वहरभि रात्रिसामानि परीयू रात्रिमभ्यहःसामानि ॥ ६ ॥ ते होचुः । असुहाम वै न प्रजानीमो हन्त प्रजापतिमेव पितरम्प्रत्ययामेति ते प्रजापतिमेव पितरम्प्रतीत्योचुरहन्नो रात्रिसामानि रात्र्यामहन्नो भवन्ति नः ॥ विपश्चिद्यज्ञान्मुग्धान्विद्वान्धीरोऽनुशाधि न ऽइति ॥ ७ ॥ तान्हैतदुपजगौ । महाहिमिव वै ह्रदाद्गलीयानन्ववेत्य ॥ अनुत्त स्वादास्त्थानात्ततः सत्रन्न तायत ऽइति ॥ ८ ॥ आश्विनं वै वः शस्यमानम् । प्रातरनुवाकमास्त्थानादनुत्त

यमास्त्थानादनुद्धन्धीराः सन्तो ऽअधीरवत् ॥ प्रशास्त्रा तमुपेत शनैरप्प्रतिशश्सतेति ॥ ९ ॥ ते होचुः । कथन्नु भगवः शस्तङ्कथमप्प्रतिशस्तमिति स होवाच यत्र होताश्विनश्शश्सन्नाग्नेयस्य क्रतोर्गायत्रस्य च्छन्दसः पारङ्गच्छात्तत्प्रतिप्प्रस्त्थाता वसतीवरीः परिहृत्त्य मैत्रावरुणस्य हविर्द्धानयोः प्प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शश्सति शनैरितरो जञ्जप्प्यमान ऽइवान्न्वाह तन्न वाचा वाचम्प्रत्येति न च्छन्दसा च्छन्दः ॥ १० ॥ परिहिते प्प्रातरनुवाके । यथायतनमेवोपाꣳश्वन्तर्य्यामौ हुत्त्वा द्रोणकलशे पवित्रम्प्रपीड्य निदधाति तिरोह्नयैश्चरित्त्वा प्प्रत्यञ्चः प्प्रतिपरेत्त्य तिरोह्नयानेव भक्षयाद्धा ऽअथानुपूर्व्वं ग्रहपुच्छश्सꣳस्थाप्प्य य ऽऊर्द्ध्वा ऽअन्तर्य्यामाद्ग्रहास्तान्न्गृहीत्त्वा विप्प्रुषाꣳ होमंः हुत्त्वा सन्तनिञ्च बहिष्प्पवमानेन स्तुत्त्वाहरेव प्प्रतिपद्याद्धा ऽइति ॥ ११ ॥ तदेतेऽभि श्लोकाः । चतुर्ब्भिः सैन्धवैर्युक्तैर्द्धीरा व्व्यजहुस्तमः ॥ विद्वाꣳसो ये शतक्रतुदेवाः सत्रमतन्न्वतेति ॥ १२ ॥ चत्त्वारो ह्यत्र युक्ता भवन्ति । द्वौ होतारौ द्वावद्ध्वर्यू पवेन्नु शक्नेव हनूनि कल्प्पयन्नहन्नोरन्तौ व्व्यतिषजन्त धीराः ॥ न दानवा यज्ञियन्तन्तुमेषां व्विजानीमो व्विततम्मोहयन्ति नः ॥ पूर्वस्याह्नः परिशिश्षन्ति कर्म्म तदुत्तरेणाभिवितन्वतेऽह्ना ॥ दुर्विज्ञान-

(१) "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥ (कर्मप्र०)
"कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ" ( का० श्रौ० सू० २. ३. ३० )

(२) अभिषवे ग्रहणे च पतितानां सोमबिन्दूनां ग्रहणाशक्यत्वात् तत्प्रत्यवायपरिहाराय घृतहोमस्य विप्रुड्ढोम इति संज्ञा ।

ङ्गाऽव्यन्देवतानाथं सोमाः सोमैऽर्व्यतिषक्ताः पप्लवन्ते ॥ समानान्त्सदसुक्षन्ति हयान्काष्ठभृतो यथा ॥ पूर्णान्परि-स्रुतः कुम्भाञ्जनमेजयसादन ऽइत्यसुररक्षसान्यपेयुः ॥१३॥

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ पञ्चमहायज्ञानां महासत्रत्वप्रतिपादनम् ]

पञ्चैव महायज्ञाः *। तान्येव महासत्राणि भूत-यज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ ऽइति ॥ १ ॥ अहरहर्भूतेभ्यो बलिं हरेत्। तथैतम्भूतयज्ञः समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतम्मनुष्ययज्ञः समाप्नो-त्यहरहः स्वधाकुर्य्यादोदपात्रात्तथैतम्पितृयज्ञः समाप्नोत्य-हरहः † स्वाहाकुर्य्यादाकाष्ठात्तथैतन्देवयज्ञः समाप्नोति ॥२॥ अथ ब्रह्मयज्ञः। स्वाध्यायो वै ब्रह्मयज्ञस्तस्य वा ऽएतस्य ब्रह्मयज्ञस्य वागेव जुहूर्म्मन ऽउपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः स्वर्ग्गो लोक ऽउदयनं यावन्तः ह वा ऽइमा-म्पृथिवीं वित्तेन पूर्णान्ददँल्लोकञ्जयति त्रिस्तावन्तञ्जयति भूयाथंसञ्चाक्षय्यं य ऽएवं विद्वानहरहः स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥ पय ऽआहुतयो ह वा ऽएता देवानाम्। यदृचः स य ऽएवं विद्वानृचोऽहरहः स्वाध्यायमधीते पय ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त

* "अथातः पञ्च महायज्ञाः" पा० गृ० सू० का० २ क० ९ सू० १।

† "अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात्" पा० गृ० सू० २. ९. १६।

ऽएनन्तृप्प्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वा-
त्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधु-
कुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ४ ॥ आज्याहुतयो
ह वा ऽएता देवानाम् । यद्यजूꣳषि स य ऽएवं विद्वा-
न्यजूꣳष्यहरहः स्वाद्ध्यायमधीत ऽआज्याहुतिभिरेव
तद्देवाँस्तर्प्पयति त ऽएनन्तृप्प्तास्तर्प्पयन्ति योगक्षेमेण
प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भि-
र्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ५ ॥
सोमाहुतयो ह वा ऽएता देवानाम् । यत्सामानि स य
ऽएवं विद्वान्त्सामान्यहरहः स्वाद्ध्यायमधीते सोमाहुति-
भिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्प्तास्तर्प्पयन्ति योग-
क्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः
सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति
॥ ६ ॥ मेद ऽआहुतयो ह वा ऽएता देवानाम् । यदथर्वा-
ङ्गिरसः स य ऽएवं विद्वानथर्वाङ्गिरसोऽहरहः स्वाद्ध्याय-
मधीते मेद ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्प्ता-
स्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः
पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा
ऽअभिवहन्ति ॥७॥ मद्ध्वाहुतयो ह वा ऽएता देवानाम् । यद-
नुशासनानि * विद्या † वाकोवाक्य[१]मितिहासपुराणङ्गाथा

---

* अनुशिष्यन्ते—व्युत्पाद्यन्ते एभिरित्यनुशासनानि-व्याकरणनिरुक्तादीनि षडङ्गानि ।

† न्यायमीमांसादयः ।

१) उक्तिप्रत्युक्तिरूपं प्रकरणं वाकोवाक्यम् ।

नाराशꣳस्यः स य ऽएवं विद्वाननुशासनानि विद्या वाकोवाक्क्यमितिहासपुराणङ्गाथा नाराशꣳसीरित्त्यहरहः स्वाद्ध्यायमधीते मद्धाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्ताास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ८ ॥ तस्य वा ऽएतस्य ब्रह्मयज्ञस्य । चत्त्वारो वषट्कारा यद्वातो वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्ज्जति तस्मादेवंविद्वाते वाति विद्योतमाने स्तनयत्त्यवस्फूर्ज्जत्त्यधीयीतैव वषट्काराणामच्छम्बट्कारायाति ह वै पुनर्म्मृत्त्युम्मुच्च्यते गच्छति ब्रह्मणः सात्मताꣳ स चेदपि प्प्रबलमिव न शक्क्नुयादप्प्येकन्देवपदमधीयीतैव तथा भूतेब्भ्यो न हीयते ॥ ९ ॥

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ११२ ॥



[ स्वाध्यायप्रशंसा ]

अथातः स्वाद्ध्यायप्प्रशꣳसा । प्प्रिये स्वाद्ध्यायप्प्रवचने भवतो युक्तमना भवत्त्यपराधीनोऽहरहरत्र्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्त्सक ऽआत्मनो भवतीन्द्रियसंय्यमश्चैकारामता च प्प्रज्ञावृद्धिर्य्यशो लोकपक्तिः प्प्रज्ञा वर्द्धमाना चतुरो धर्म्मान्ब्राह्मणमभिनिष्प्पादयति ब्राह्मण्ण्यम्प्रतिरूपचर्य्यां यशो लोकपक्तिँल्लोकः पच्च्यमान-

श्चतुर्ब्भिर्द्धर्म्मैर्ब्ब्राह्मणम्भुनक्त्यर्च्चया च दानेन चाज्येयतया चावद्ध्यतया च ॥ १ ॥ ये ह वै के च श्रमाः । इमे द्यावापृथिवी ऽअन्तरेण स्वाद्ध्यायो हैव तेषाम्परमता काष्ठा य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ २ ॥ यद्यद्ध वा ऽअयञ्छन्दसः । स्वाद्ध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टम्भवति य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ३ ॥ यदि ह वा अप्प्यभ्यक्तः । अलङ्कृतः सुहितः सुखे शयने शयानः स्वाद्ध्यायमधीत ऽआ हैव स नखाग्ग्रेभ्यस्तप्प्यते य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ४ ॥ मधु ह वा ऽऋचः । घृतᳪ ह सामान्यमृतं य्यजूᳫंषि यद्ध वा ऽअयं व्वाकोवाक्क्यमधीते क्षीरौदनमाᳫंसौदनौ हैव तौ ॥ ५ ॥ मधुना ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वानृचोऽहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्प्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भ्भोगैः ॥ ६ ॥ घृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्त्सामान्न्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्प्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भ्भोगैः ॥ ७ ॥ अमृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्न्यजूᳫंष्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्प्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्भ्भोगैः ॥८॥ क्षीरौदनमाᳫंसौदनाभ्याᳫं ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्व्वाकोवाक्क्यमितिहासपुराणमित्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्प्तास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वै-

नाराशꣳस्यः स य ऽएवं विद्वाननुशासनानि विद्या वाकोवाक्क्यमितिहासपुराणङ्गाथा नाराशꣳसीरित्यहरहः स्वाद्ध्यायमधीते मद्ध्वाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्प्तास्तर्प्पयन्ति योगक्षेमेण प्प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्ण्याभिः सम्पद्भिर्घृतकुल्ल्या मधुकुल्ल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ८ ॥ तस्य वा ऽएतस्य ब्ब्रह्मयज्ञस्य । चत्वारो वषट्कारा यद्वातो वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्ज्जति तस्मादेवंविद्वाते वाति विद्योतमाने स्तनयत्यवस्फूर्ज्जत्यधीयीतैव वषट्काराणामच्छम्बट्कारायाति ह वै पुनर्म्मृत्युम्मुच्च्यते गच्छति ब्ब्रह्मणः सात्मताꣳ स चेदपि प्प्रबलमिव न शक्क्नुयादप्प्येकन्देवपदमधीयीतैव तथा भूतेब्भ्यो न हीयते ॥ ९ ॥

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ११२ ॥



[ स्वाध्यायप्रशंसा ]

अथातः स्वाद्ध्यायप्प्रशꣳसा । प्प्रिये स्वाद्ध्यायप्प्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्त्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्सक ऽआत्मनो भवतीन्द्रियसंयमश्चैकारामता च प्प्रज्ञावृद्धिर्य्यशो लोकपक्तिः प्प्रज्ञा वर्द्धमाना चतुरो धर्म्मान्ब्राह्मणमभिनिष्प्पादयति ब्ब्राह्मण्ण्यम्प्रतिरूपचर्य्यां यशो लोकपक्तिँल्लोकः पच्च्यमान-

श्चतुर्ब्भिर्द्धर्म्मैर्ब्ब्राह्मणम्भुनक्त्यर्च्चया च दानेन चाज्येयतया चावद्ध्यतया च ॥ १ ॥ ये ह वै के च श्श्रमाः । इमे द्यावापृथिवी ऽअन्तरेण स्वाद्ध्यायो हैव तेषाम्परमता काष्ठा य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ २ ॥ यद्यद्ध वा ऽअयञ्छन्दसः । स्वाद्ध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टम्भवति य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ३ ॥ यदि ह वा अप्प्यभ्यक्तः । अलङ्कृतः सुहितः सुखे शयने शयानः स्वाद्ध्यायमधीत ऽआ हैव स नखाग्ग्रेभ्यस्तप्प्यते य ऽएवं विद्वान्त्स्वाद्ध्यायमधीते तस्म्मात्स्वाद्ध्यायोऽद्ध्येतव्व्यः ॥ ४ ॥ मधु ह वा ऽऋचः । घृतᳬ ह सामान्यमृतं ग्ग्यजूᳬषि यद्ध वा ऽअयं व्वाकोवाक्क्यमधीते क्षीरौदनमाᳬसौदनौ हैव तौ ॥ ५ ॥ मधुना ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वानृचोऽहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्ताास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्ब्भोगैः ॥ ६ ॥ घृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्त्सामान्न्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्ताास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्ब्भोगैः ॥ ७ ॥ अमृतेन ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्न्यजूᳬष्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्प्ताास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वैर्ब्भोगैः ॥८॥ क्षीरौदनमाᳬसौदनाब्भ्याᳬ ह वा ऽएष देवाँस्तर्प्पयति । य ऽएवं विद्वान्व्वाकोवाक्क्यमितिहासपुराणमित्त्यहरहः स्वाद्ध्यायमधीते त ऽएनन्तृप्ताास्तर्प्पयन्ति सर्व्वैः कामैः सर्व्वै-

र्भोगैः ॥ ९ ॥ यन्ति वा ऽआपः । एत्यादित्य ऽएति चन्द्रमा यन्ति नक्षत्राणि यथा ह वा ऽएता देवता नेयुर्न्न कुर्य्युरेवꣳ हैव तदहर्ब्ब्राह्मणो भवति यदहः स्वाध्यायन्नाधीते तस्मात्स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजुर्व्वा साम वा गाथां वा कुंव्यां वाभिव्याहरेद्व्रतस्याव्यवच्छेदाय ॥ १० ॥

पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ आख्यायिकया व्याहृत्युत्पत्तिकथनम् ]

प्रजापतिर्व्वा ऽइदमग्र ऽआसीत् । एक ऽएव सोऽकामयत स्याम्प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानात्त्रयो लोका ऽअसृज्यन्त पृथिव्यन्तरिक्षन्द्यौः ॥ १ ॥ स ऽइमाँस्त्रीँल्लोकानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि ज्योतीꣳष्यजायन्ताग्निर्य्योऽयम्पवते सूर्य्यः ॥ २ ॥ स ऽइमानि त्रीणि ज्योतीꣳष्यभितताप । तेभ्यस्तप्तेभ्यस्त्रयो व्वेदा ऽअजायन्ताग्नेर्ऋग्वेदो व्वायोर्य्यजुर्व्वेदः सूर्य्यात्सामवेदः ॥ ३ ॥ स इमाँस्त्रीन्वेदानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्यृग्वेदाद्भुव ऽइति यजुर्वेदात्स्वरिति सामवेदात्तदृग्वेदेनैव होत्रमकुर्वत यजुर्वेदेनाध्वर्य्यवꣳ सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रन्तेन ब्ब्रह्मत्वमथोच्चक्राम ॥ ४ ॥ ते देवाः प्रजापतिमब्रुवन् । यदि न ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्केनैनम्भिषज्येमेति ॥ ५ ॥ स होवाच ।

यद्यृक्तो भूरिति चतुर्ग्गृहीतमाज्यङ्गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव ऽइति चतुर्ग्गृहीतमाज्यङ्गृहीत्वाग्नीध्रीये जुहवथान्न्वाहार्य्यपचने†वा हविर्यज्ञे यदि सामतः स्वरिति चतुर्ग्गृहीतमाज्यङ्गृहीत्वाहवनीये जुहवथ यद्यु ऽअविज्ञातमसत्त्सर्वाण्ण्यनुद्रुत्याहवनीये जुहवथ तदृग्वेदेनैवऽर्ग्वेदम्भिषज्ज्यति यजुर्वेदेन यजुर्वेदः सामवेदेन सामवेदः स यथा पर्व्वणा पर्व्व सन्दद्ध्यादेवꣳ हैव स सन्दधाति य ऽएताभिर्भिषज्ज्यत्यथ यो हातोऽन्न्येन भिषज्ज्यति यथा शीर्ण्णेन शीर्ण्णꣳ सन्धित्सेद्यथा वा शीर्ण्णे गरमभिनिदद्ध्यादेवन्तत्तस्म्मादेवंविदमेव ब्ब्रह्माणङ्कुर्वीत नानेवंविदम् ॥ ६ ॥ तदाहुः । यदृचा होत्रङ्क्रियते यजुषाद्ध्वर्य्यवꣳ साम्म्नोद्गीथोऽथ केन ब्ब्रह्मत्वमित्त्यनया त्रय्या विद्ययेति ह ब्ब्रूयात् ॥ ७ ॥

पञ्चमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ अंश्वदाभ्ययोर्ग्रहयोरात्मवागादिरूपतया समुच्चित्यानुष्ठानम् ]

प्रजापतिर्ह वा ऽएष यदꣳशुः । सोऽस्यैष ऽआत्मैवात्मा ह्ययम्प्रजापतिर्व्वागेवादाभ्यः स यदꣳशुङ्गृहीत्वादाभ्यङ्गृह्णात्त्यात्मानमेवास्यैतत्संस्कृत्य तस्म्मिन्नेतां व्वाचम्प्रतिष्ठापयति ॥ १ ॥ अथ मनो ह वा ऽअꣳशुः । व्वागदाभ्यः प्प्राण ऽएवाꣳशुरुदानोऽदाभ्यश्चक्षुरेवाꣳशुः श्श्रोत्रमदा-

† अन्वाहार्यपचने—दक्षिणाग्नौ ।

भ्यस्तद्यदेतौ ग्रहौ गृह्णन्ति सर्वत्वायैव कृत्स्नतायै ॥ २ ॥ अथ देवाश्च ह वा ऽअसुराश्च । उभये प्राजापत्या ऽअस्पर्द्धन्त त ऽएतस्मिन्नेव यज्ञे प्रजापतावस्पर्द्धन्ता-स्माकमयꣳ स्यादस्माकमयꣳ स्यादिति ॥ ३ ॥ ततो देवाः । अर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतद्ग्रहन्ददृशुरेत-मदाभ्यन्तमगृह्णत ते सवनानि प्रावृहन्त ते सर्वं यज्ञꣳ समवृञ्जतान्तरायन्नसुरान्यज्ञात् ॥ ४ ॥ ते हाचुः । अदभाम वा ऽएनानिति तस्मादुदाभ्यो न वै नोऽदभन्निति तस्मा-दुदाभ्यो वाग्वा ऽअदाभ्यः सेयमदब्धा वाक्तस्मा-द्देवादाभ्य ऽएवꣳ ह वै द्विषतो भ्रातृव्यस्य सर्वं यज्ञꣳ संवृङ्क्त ऽएवन्द्विषन्तम्भ्रातृव्यꣳ सर्वस्माद्यज्ञा-न्निर्भजति बहिर्द्धा करोति य ऽउ ऽएवमेतद्वेद ॥ ५ ॥ स येनैव पात्रेणाꣳशुङ्गृह्णाति । तस्मिन्नेव पात्रे निग्राभ्या-भ्योऽप ऽआनीय तस्मिन्नेतानꣳशून्गृह्णाति A ॥६॥ 'उपया-मगृहीतोऽसि । अग्नये त्वा गायत्रच्छन्दसङ्गृह्णामी'ति गायत्र-म्प्रातःसवनन्तत्प्रातःसवनम्प्रवृहती'न्द्राय त्वा त्रिष्टुप्छन्द-सङ्गृह्णामी'ति त्रैष्टुभम्माध्यन्दिनꣳ सवनन्तन्माध्यन्दिनꣳ सवनम्प्रवृहति 'विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसङ्गृ-ह्णामी'ति जागतन्तृतीयसवनन्तत्तृतीयसवनम्प्रवृहत्य'नुष्टु-प्सेऽभिगर' ऽइति यद्वा ऽऊर्द्ध्वꣳ सवनेभ्यस्तदानुष्टुभन्त-

(१) अभिषोतव्यस्य सोमस्य सेवनीया आपो निग्राभ्या उच्यन्ते।

(A) का० श्रौ० सू० अ० १२ क० ५ सू० १६ ।

(२) शु० य० वे० सं० अ० ८ क० ४७। (३) शु० य० वे० सं० अ० ८ क० ४७।
(४) शु० य० वे० सं० अ० ८ क० ४७। (५) शु० य० वे० सं० अ० ८ क० ४७।

देवैतत्प्रवृहति तन्नाभिषुणोति वज्रो वै ग्रावा वागदाभ्यो नेद्वज्रेण वाचः हिनसानीति ॥ ७ ॥ अथ शूनेवाधूनोतिB । 'वेशीनान्त्वा पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि भन्दनानान्त्वा पत्मन्नाधूनोमि मदिन्तमानान्त्वा पत्मन्नाधूनोमि मधुन्तमानान्त्वा पत्मन्नाधूनोमी'त्येता वै देवीरापस्तद्याश्चैव देवीरापो याश्चेमा मानुष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसन्दधाति ॥ ८ ॥ 'शुक्रन्त्वा शुक्र ऽआधूनोमी'ति । शुक्रं ह्येतच्छुक्र ऽआधूनो'त्यह्नो रूपे सूर्यस्य रश्मिष्वि'ति तदह्नश्चैवैनमेतद्रूपे सूर्यस्य च रश्मिष्वाधूनोति ॥ ९ ॥ 'ककुभं रूपं वृषभस्य रोचते बृहदि'ति । एतद्वै ककुभं रूपं वृषभस्य रोचते बृहद्य ऽएष तपति 'शुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगा' ऽइति तच्छुक्रमेवैतच्छुक्रस्य पुरोगाङ्करोति सोमः सोमस्य पुरोगां 'यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामी'त्येतद्ध वा ऽअस्यादाभ्यन्नाम जागृवि यद्वाक्तद्वाचमेवैतद्वाचे गृह्णाति ॥ १० ॥ अथोपनिष्क्रम्य जुहोति* । 'तस्मै ते सोम सोमाय स्वाहे'ति तत्सोममेवैतत्सोमाय जुहोति तथो वाचमग्नौ न प्रवृणक्त्यथ हिरण्यमभिव्यनित्य-

(B) का० श्रौ० सू० १२. ५. १९ ।

(१) शु० य० वे० सं० अ० ८ क० ४८ । (२) शु० य० वे० सं० अ० ८ क० ४८ ।
(३) शु० य० वे० सं० अ० ८ क० ४८ । (४) शु० य० वे० सं० अ० ८ क० ४९ ।
(५) शु० य० वे० सं० अ० ८ क० ४९ । (६) शु० य० वे० सं० अ० ८ क० ४९ ।

* "तस्मै त इति जुहोति" का० श्रौ० सू० १२. ५. २ ।

(७) शु० य० वे० सं० अ० ८ क० ४९ ।

सावेव बन्धुस्तस्य तावतीरेव दक्षिणा यावतीरद्धशोः * ॥ ११ ॥ अथाᳪंशून्पुनरप्प्यर्जति † । 'उशिक्त्वन्देव सोमाग्नेः प्प्रियम्पाथोऽपीहि वशी त्वन्देव सोमेन्द्रस्य प्प्रियम्पाथोऽपीह्यस्म्मत्सखा त्वन्देव सोम विश्वेषान्देवानाम्प्रियम्पाथोऽपीही'ति सवनानि वा ऽअदः प्प्रवृहति तान्न्येवैतत्पुनराप्प्याययत्त्ययातयामानि करोति तैरयातयामैर्य्यज्ञन्तन्न्वते ॥ १२ ॥

पञ्चमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ आख्यायिकया समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्तिसाधनताकथनम् ]

भृगुर्ह वै वारुणिः । वरुणम्पितरं विद्ययातिमेने तद्ध वरुणो विद्दाञ्चकारातिवै मा विद्यया मन्न्यत ऽइति ॥ १ ॥ स होवाच । प्राङ् पुत्रक व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वा दक्षिणा व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वा प्प्रत्यग्व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वोदग्व्रजतात्तत्र यत्पश्श्येस्तद्दृष्ट्वैतयोः पूर्व्वयोरुत्तरमन्न्ववान्तरदेशं व्रजतात्तत्र यत्पश्श्येस्तन्न्म ऽआचक्षीथा ऽइति ॥ २ ॥ स ह तत ऽएव प्प्राङ् प्रवव्राज । इदु पुरुषैः पुरुषान्न्पर्व्वाण्ण्येषाम्पर्व्वशः संव्रश्चम्पर्व्वशो विभजमानानिदन्तवेदम्मम-

* "अद्धशुवद्दक्षिणा" का० श्रौ० सू० १२. ५. २२ ।

† का० श्रौ० सू० १२. ५. २१ ।

(१) शु० य० वे० सं० अ० ८ क० ५० ।

मेति स होवाच भीष्ममभूवत भोः पुरुषान्वा ऽएतत्पुरुषाः पर्वाण्येषाम्पर्वशः संव्रश्च्यम्पर्वशो ऽव्यभक्षतेति ते होचुरित्थं वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चित्ती३रित्यस्तीति कातिं पिता ते वेदेति ॥ ३ ॥ स ह तत ऽएव दक्षिणा प्रवव्राज । इदु पुरुषैः पुरुषान्पर्वाण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो विभजमानानिदन्तवेदम्मेति स होवाच भीष्ममभूवत भोः पुरुषान्वा ऽएतत्पुरुषाः पर्वाण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो ऽव्यभक्षतेति ते होचुरित्थं वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चित्ती३रित्यस्तीति कातिं पितैव ते वेदेति ॥ ४ ॥ स ह तत ऽएव प्रत्यङ् प्रवव्राज । इदु पुरुषैः पुरुषाँस्तूष्णीमासीनाँस्तूष्णीमासीनैरद्यमानान्स होवाच भीष्ममभूवत भोः पुरुषान्वा ऽएतत्पुरुषास्तूष्णीमासीनाँस्तूष्णीमासीना ऽअदन्तीति ते होचुरित्थं वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चित्ती३रित्यस्तीति कातिं पितैव ते वेदेति ॥ ५ ॥ स ह तत ऽएवोदङ् प्रवव्राज । इदु पुरुषैः पुरुषानाक्रन्दयत ऽआक्रन्दयद्भिरद्यमानान्स होवाच भीष्ममभूवत भोः पुरुषान्वा ऽएतत्पुरुषा ऽआक्रन्दयत ऽआक्रन्दयन्तोऽदन्तीति ते होचुरित्थं वा ऽइमेऽस्मानमु-

( १ ) 'ग' 'ज' पुस्तकयोः 'एदु' इति पाठ उपलभ्यते ।

ष्मिमँल्लोकेऽसचन्त तान्न्वयमिदमिह प्प्रतिसचामहा ऽइति स होवाचास्तीह प्प्रायश्चित्तीश्रित्त्यस्तीति क्वाति पितैव ते व्वेदेति ॥ ६ ॥ स ह तत ऽएवैतयोः पूर्व्वयोः । उत्तरमन्ववान्तरदेशम्प्रवव्राजेद स्त्रियौ कल्ल्याणी चातिकल्ल्याणीश्च ते ऽअन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिस्तस्थौ तꣳ हैनन्दृष्ट्वा भीर्व्विवेद स हेत्त्य संविवेश तꣳ ह पितोवाचाधीष्ष्व स्वाद्ध्यायङ्कस्म्मान्नु स्वाद्ध्यायन्नाधीष ऽइति स होवाच किमद्ध्येष्ष्ये न किञ्चनास्तीति तद्ध व्वरुणो विदाञ्चकाराद्ध्र्यैग्वा ऽइति ॥ ७ ॥ स होवाच । यान्वैतत्प्राच्च्यान्दिश्यद्राक्षीः पुरुषैः पुरुषान्न्पर्व्वाण्ण्येषाम्पर्व्वशः संव्वृश्च्यम्पर्व्वशो विभजमानानिदन्तवेदम्ममेति व्वनस्प्पतयो वै ते ऽअभूवन्त्स यद्वनस्प्पतीनाꣳ समिधमादधाति तेन व्वनस्प्पतीनवरुन्द्धे तेन व्वनस्प्पतीनाँल्लोकञ्जयति ॥ ८ ॥ अथ यानेतद्दक्षिणायान्दिश्यद्राक्षीः । पुरुषैः पुरुषान्न्पर्व्वाण्ण्येषाम्पर्व्वशः सङ्कर्त्तम्पर्व्वशो विभजमानानिदन्तवेदम्ममेति पशवो वै ते ऽअभूवन्त्स यत्पयसा जुहोति तेन पशूनवरुन्द्धे तेन पशूनाँल्लोकञ्जयति ॥ ९ ॥ अथ यानेतत्प्रतीच्च्यान्दिश्यद्राक्षीः । पुरुषैः पुरुषाँस्तूष्ण्णीमासीनाँस्तूष्ण्णीमासीनैरद्यमानानोषधयो वै ता ऽअभूवन्त्स यत्तृणेनावज्ज्योतयति तेनौषधीरवरुन्द्धे तेनौषधीनाँल्लोकञ्जयति ॥ १० ॥ अथ यानेतदुदीच्च्यान्दिश्यद्राक्षीः । पुरुषैः पुरुषानाक्क्रन्दयत ऽआक्क्रन्दयद्भिरद्यमानानापो वै ता ऽअभूवन्त्स

(१) 'घ्र' इत्यस्य स्थाने 'द्य' इति 'ग' 'ज' पुस्तकयोः ।

यदपः प्रत्यानयति तेनापोऽवरुन्द्धे तेनापाँल्लोकञ्जयति ॥ ११ ॥ अथ ये ऽएते । स्त्रियावद्राक्षीः कल्ल्याणीञ्चातिकल्ल्याणीञ्च सा या कल्ल्याणी सा श्रद्धा स यत्पूर्वामाहुतिञ्जुहोति तेन श्रद्धामवरुन्द्धे तेन श्रद्धाञ्जयत्यथ यातिकल्ल्याणी साऽश्रद्धा स यदुत्तरामाहुतिञ्जुहोति तेनाश्रद्धामवरुन्द्धे तेनाश्रद्धाञ्जयति ॥१२॥ अथ य ऽएने । सोऽन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिरस्त्थात्क्रोधो वै सोऽभूत्स यत्स्रुच्यप ऽआनीय निनयति तेन क्क्रोधमवरुन्द्धे तेन क्क्रोधञ्जयति स य ऽएवं विद्वानग्निहोत्रञ्जुहोति तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ १३ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ आख्यायिकयाग्निहोत्राहुतिप्राशस्त्यप्रतिपादनम् ]

जनको ह वै वैदेहः । ब्राह्मणैर्द्धावयद्भिः समाजगाम श्वेतकेतुनारुणेयेन सोमशुष्मेण सात्त्ययज्ञिना याज्ञवल्क्येन तान्होवाच कथङ्कथमग्निहोत्रञ्जुहुथेति ॥ १ ॥ स होवाच । श्वेतकेतुरारुणेयो घर्म्मावेव सम्म्राडहमजस्रौ यशसा वि[1]ष्प्यन्दमानावन्न्योऽन्न्यस्मिञ्जुहोमीति कथन्तदित्त्यादित्त्यो वै घर्म्मस्तः सायमग्नौ जुहोम्म्यग्निर्वै घर्म्मस्तम्प्रातरादित्त्ये जुहोमीति किः स भवति य ऽएवञ्जुहोत्त्यजस्र ऽएव श्रिया यशसा भवत्त्येतयोश्च देवतयोः सायुज्यः सलोकताञ्जयतीति ॥ २ ॥ अथ होवाच सोमशुष्मः सात्त्ययज्ञिः । तेज ऽएव सम्म्राडहन्तेजसि जुहोमीति कथन्त-

(१) 'विष्यन्द' इति 'ग' 'ज' पुस्तकयोः ।

दित्यादित्यो वै तेजस्तꣳ सायमग्नौ जुहोम्म्यग्निर्वै तेजस्त-
प्रातरादित्ये जुहोमीति किꣳ स भवति य ऽएवञ्जुहोतीति
तेजस्वी यशस्व्यन्नादो भवत्येतयोश्चैव देवतयोः सायुज्यꣳ
सलोकताञ्जयतीति ॥ ३ ॥ अथ होवाच याज्ञवल्क्यः ।
यदहमग्निमुद्धराम्म्यग्निहोत्रमेव तदुद्यच्छाम्म्यादित्यं वा
ऽअस्तं यन्तꣳ सर्वे देवा ऽअनुयन्ति ते म ऽएतमग्नि-
मुद्धृतन्दृष्ट्वोपावर्त्तन्तेऽथाहम्पात्राणि निर्णिज्ज्योपवाप्प्या-
ग्निहोत्रीन्दोहयित्वा पश्श्यन्न्पश्श्यतस्तर्प्पयामीति त्वन्ने-
दिष्ठं याज्ञवल्क्याग्निहोत्रस्यामीमाꣳसिष्ठा धेनुशतन्ददा-
मीति होवाच न त्वेवैनयोस्त्वमुत्क्रान्तिन्न गतिन्न प्प्रति-
ष्ठान्न तृप्तिन्न पुनरावृत्तिन्न लोकम्प्रत्युत्थायिनमित्त्युक्त्वा
रथमास्थाय प्प्रधावयाञ्चकार ॥ ४ ॥ ते होचुः । अति वै
नोऽयꣳ राजन्न्यबन्धुरवादीद्धन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति
स होवाच याज्ञवल्क्यो ब्राह्मणा वै वयꣳ स्म्मो राज-
न्न्यबन्धुरसौ यद्यमुं वयञ्जयेम कमजैष्ष्मेति ब्रूयामाथ
यद्यसावस्म्माञ्जयेद्ब्राह्मणान्न्राजन्न्यबन्धुरजैषीदिति नो ब्रू-
युर्म्मैदमाद्दढ्वमिति तद्धास्य जज्ञुरथ ह याज्ञवल्क्यो रथ-
मास्थायानुप्प्रधावयाञ्चकार तꣳ हान्न्वाजगाम स होवा-
चाग्निहोत्रं याज्ञवल्क्य वेदितूꣳमित्त्यग्निहोत्रꣳ सम्म्राडिति
॥ ५ ॥ ते वा ऽएते ऽआहुती हुते ऽउत्क्रामतः । ते
ऽअन्तरिक्षमाविशतस्ते ऽअन्तरिक्षमेवाहवनीयङ्कुर्वाते वायुꣳ
समिधम्मरीचीरेव शुक्क्रामाहुतिन्ते ऽअन्तरिक्षन्तर्प्पयतस्ते
तत ऽउत्क्रामतः ॥ ६ ॥ ते दिवमाविशतः । ते दिवमेवा-

हवनीयङ्कुर्व्वाते ऽआदित्यꣳ समिधञ्चन्द्रमसमेव शुक्क्रामाहुतिन्ते दिवन्तर्प्पयतस्ते तत ऽआवर्त्तेते ॥ ७ ॥ ते ऽइमामाविशतꣳ । ते ऽइमामेवाहवनीयङ्कुर्व्वाते ऽअग्निꣳ समिधमोषधीरेव शुक्क्रामाहुतिन्ते ऽइमान्तर्प्पयतस्ते तत ऽउत्क्रामतꣳ ॥ ८ ॥ ते पुरुषमाविशतꣳ । तस्य मुखमेवाहवनीयङ्कुर्व्वाते जिह्वाꣳ समिधमन्नमेव शुक्क्रामाहुतिन्ते पुरुषन्तर्प्पयतꣳ स ग्र ऽएवं व्विद्वानश्नात्यग्निहोत्रमेवास्य हुतम्भवति ते तत ऽउत्क्रामतꣳ ॥९॥ [अर्धः प्रपाठकः ॥५१॥] ते स्त्रियमाविशतꣳ । तस्या ऽउपस्थमेवाहनीयङ्कुर्व्वाते धारकाꣳ समिधन्धारका ह वै नामैषैतया ह वै प्प्रजापतिꣳ प्प्रजा धारयाञ्चकार रेत ऽएव शुक्क्रामाहुतिन्ते स्त्रियन्तर्प्पयतꣳ स य ऽएवं व्विद्वान्मिथुनमुपैत्यग्निहोत्रमेवास्य हुतम्भवति यस्ततꣳ पुत्रो जायते स लोकꣳ प्प्रत्युत्थाय्येतदग्निहोत्रं य्याज्ञवल्क्य नातꣳ परमस्तीति होवाच तस्मै ह याज्ञवल्क्यो व्वरन्ददौ स होवाच कामप्प्रश्नन्न ऽएव मे त्वयि याज्ञवल्क्यासदिति ततो ब्ब्रह्मा जनक ऽआस ॥ १० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ आख्यायिकयाऽग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्त्वतः प्राणशब्दाभिधेयपरमात्मरूपताप्रतिपादनम् ]

जनको ह व्वैदेहꣳ । बहुदक्षिणेन यज्ञेनेज स ह गवाꣳ सहस्रमवरुन्धन्नुवाचैता वो ब्ब्राह्मणा यो ब्ब्रह्मिष्ठ(१)ꣳ स ऽउदजतामिति ॥ १ ॥ स होवाच याज्ञवल्क्यꣳ ।

(१) ब्रह्मिष्ठः ।

अर्वाचीरेता ऽइति ते होचुस्त्वꣳ स्विन्नो याज्ञवल्क्य ब्ब्रह्मिष्ठोऽसी३ ऽइति स होवाच नमोऽस्तु ब्ब्रह्मिष्ठाय गोकामा ऽएव वयꣳ स्म ऽइति ॥ २ ॥ ते होचुः । को न ऽइमम्प्रक्ष्यतीति स होवाच व्विदग्धः शाकल्ल्योऽहमिति तꣳ ह प्प्रतिख्यायोवाच त्वाꣳ स्विच्छाकल्ल्य ब्ब्राह्मणा ऽउल्मुकावक्षयणमक्रता३ ऽइति ॥ ३ ॥ स होवाच । कति देवा याज्ञवल्क्येति त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय ऽइत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावि-त्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यद्ध्यर्द्ध ऽइत्यो-मिति होवाच कत्येव देवा याज्ञवल्क्येत्येक ऽइत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सह-स्रेति ॥ ४ ॥ स होवाच । महिमान ऽएवैषामेते त्रयस्त्रिꣳ-शत्त्वेव देवा ऽइति कतमे ते त्रयस्त्रिꣳशदित्यष्टौ व्वसव ऽएकादश रुद्रा द्वादशादित्यास्त ऽएकत्रिꣳशदिन्द्रश्चैव प्प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ ५ ॥ कतमे व्वसव ऽइति । अग्निश्च पृथिवी च व्वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते व्वसव ऽएते हीदꣳ सर्वं व्वासयन्ते ते यदिदꣳ सर्वं व्वासयन्ते तस्माद्वसव ऽइति ॥ ६ ॥ कतमे रुद्रा ऽइति । दशेमे पुरुषे प्प्राणा-ऽआत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोद-

(१) अर्धदग्धकाष्ठमुल्मुकम्—तस्य वहिर्निरसनमवक्षयणम् ।

यन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा ऽइति ॥ ७ ॥ कतम ऽआदित्त्या ऽइति । द्वादश मासाः सँव्वत्सरस्यैत ऽआदित्त्या ऽएते हीदᳬ सर्व्वमाददाना यन्ति ते यदिदᳬ सर्व्वमाददाना यन्ति तस्मादादित्त्या ऽइति ॥ ८ ॥ कतम ऽइन्द्रः कतमः प्प्रजापतिरिति । स्तनयित्नुरेवेन्द्रो यज्ञः प्प्रजापतिरिति कतम स्तनयित्नुरित्त्यशनिरिति कतमो यज्ञ ऽइति पशव ऽइति ॥ ९ ॥ कतमे ते त्रयो देवा ऽइति । इम ऽएव त्रयो लोका ऽएषु हीमे सर्व्वे देवा ऽइति कतमौ तौ द्वौ देवावित्त्यन्नञ्चैव प्प्राणश्चेति कतमोऽद्ध्यर्द्ध ऽइति योऽयम्पवत ऽइति [१]यदस्मिन्निदᳬ सर्व्वमद्ध्यार्ध्नोत्तेनाद्ध्यर्द्ध ऽइति कतम ऽएको देव ऽइति प्प्राण ऽइति ॥ १० ॥ स होवाच । अनतिप्प्रश्न्याम्मा देवतामत्त्यप्राक्षीः पुरेतित्थ्यै मरिष्ष्यसि न तेऽस्थीनि चन गृहान्प्राप्स्यन्तीति स ह तथैव ममार तस्य हाप्प्यन्न्यन्न्मन्न्यमानाः परिमोषिणोऽस्थीन्न्युपजह्रुस्तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति ॥ ११ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥



[ पशुबन्धप्रशंसा ]

पशुबन्धेन*यजते । पशवो वै पशुबन्धः स यत्पशुबन्धेन यजते पशुमानसानीति तेन गृहेषु † यजेत

(१) 'यदस्मिन्निदᳬ सर्व्वमद्ध्याध्नोत्तेनाद्ध्यर्द्ध ऽइति' इति पाठः 'ग' 'ज' पुस्तकयोर्नास्ति ।

* पशुर्वध्यते यज्ञार्थं यस्मिन्कर्मणि स पशुबन्धाख्यो यागः ।
उद्भिदा यजेतेतिवद्यजिसमानाधिकृतत्वाद्यागनामधेयम् ॥

† का० श्रौ० सू० ६. १. ३. ।

गृहेषु पशून्बद्ध्ना ऽइति तेन सुयवसे A यजेत सुयवसे पशून्बद्ध्ना इति जीर्य्यन्ति ह वै जुह्वतो यजमानस्याग्नयोऽग्नीञ्जीर्य्यतोऽनु यजमानो यजमानमनु गृहाश्च पशवश्च ॥ १ ॥ * स यत्पशुबन्धेन यजते । अग्नीनेवैतत्पुनर्णवान्कुरुतेऽग्नीनाम्पुनर्णवतामनु यजमानो यजमानमनु गृहाश्च पशवश्चायुष्यो ह वा ऽअस्यैष ऽआत्मनिष्क्रयणो भवति माꣳसीयन्ति B ह वै जुह्वतो यजमानस्याग्नयस्ते यजमानमेव ध्यायन्ति यजमानꣳ सङ्कल्पयन्ति पचन्ति वा ऽअन्येष्वग्निषु वृथा माꣳसमथैतेषान्नातोऽन्या माꣳसाशा विद्यते यस्यो चैते भवन्ति ॥ २ ॥ स यत्पशुबन्धेन यजते । आत्मानमेवैतन्निष्क्रीणीते वीरेण वीरं वीरो हि पशुर्वीरो यजमान ऽएतद्ध ह वै परममन्नाद्यं यन्माꣳसꣳ स परमस्यैवान्नाद्यस्यात्ता भवति तं वै सँवत्सरो नानीजानमतीयादायुर्वै सँवत्सर आयुरेवैतदमृतमात्मन्धत्ते ॥ ३ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पशुबन्धस्येष्टिविधत्वम्, सोमविधत्वञ्च ]

हविर्यज्ञविधो ह वा ऽअन्यः पशुबन्धः । सवविधोऽन्यः स हैष हविर्यज्ञविधो[1] यस्मिन्व्रतमुपनयति

(A) शोभनानि यवसानि तृणानि यस्मिन्नृतौ स कालः सुयवसः ।

* शतम् ५९०० ।

(B) मांसीयन्ति = मांसं खादितुमिच्छन्ति ।

(१) "व्रतोपायन-प्रणीताज्यभाग-भागावदान-पूर्णपात्र-विष्णुक्रमान् कुर्याद्धविर्यज्ञविधे" (का० श्रौ० सू० ६. २. ४)

यस्मिन्नपः प्प्रणयति यस्मिन्न्पूर्णपात्रन्निनयति यस्मिन्न्विष्णुक्रमान्क्रमयत्यथ हैष सर्वविधो यस्मिन्नेतानि न क्रियन्ते ॥ १ ॥ तदाहुः । इष्टिः पशुबन्धा३ महायज्ञा३ ऽइति महायज्ञ ऽइति ह ब्रूयादिष्टिं वै तर्हि पशुबन्धमकुर्व्वेनमकृक्षथा ऽइत्येनम्ब्रूयात् ॥ २ ॥ तस्य प्प्रयाजा ऽएव प्प्रातःसवनम् । अनुयाजास्तृतीयसवनम्पुरोडाश ऽएव माद्ध्यन्दिनꣳ सवनम् ॥ ३ ॥ तद्धैके । वपायाꣳ हुतायान्दक्षिणा नयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयाद्धर्हिर्द्धां व्वा ऽअयम्प्राणेभ्यो दक्षिणा ऽअनैषीन्न प्प्राणानदद्क्षदन्धो वा स्रामो वा बधिरो वा पक्षहतो वा भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्य्यात् । पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेदैन्द्रो वा ऽअयम्मद्ध्यतः प्प्राण ऽइममेवैतदैन्द्रम्मद्ध्यतः प्प्राणन्दक्षिणाभिर्द्दक्षयत्यैन्द्रं वै माद्ध्यन्दिनꣳ सवनम्माद्ध्यन्दिने वै सवने दक्षिणा नीयन्ते तस्मात्पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेत् ॥ ५ ॥ तदाहुः । अद्ध्वर्य्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमदिदीक्ष ऽइत्यावभृथादनूहꣳहेयुरद्ध्वर्य्युश्च प्प्रतिप्प्रस्थाता च होता च मैत्रावरुणश्च ब्रह्मा चाग्नीद्ध्रश्चैतैर्व्वा ऽएष षड्ढोता * तमनुद्रुत्य षड्ढोतारञ्जुहोत्येकामाहुतिङ्कृत्वा पञ्च वाज्या 'द्यौष्पृष्ठमन्तरिक्षमात्माङ्गैर्यज्ञम्पृथिवीꣳ शरीरैः । व्वाचस्पतेऽच्छिद्रया व्वाचा-

---

* षट् होतारो होमनिष्पादका यस्मिन् स षड्ढोता ।

( १ ) "षड्ढोतारं पञ्चगृहीतं मनसानुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा" ( का० श्रौ० सू० ६. १. १३ )

च्छिद्रया जुह्वा दिवि देवावृधꣳ होत्रामैरयत्स्वाहे'ति सैव दीक्षा ॥ ६ ॥ तदाहुः । अद्धुरर्थो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमवभृथमवनेष्यसीति स यद्धृदयशूलेन चरन्ति स हैवैतस्यावभृथः ॥ ७ ॥ मधुको ह स्माह पैङ्ग्यः । विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके दिवि वै सोम ऽआसीत्तङ्गायत्री वयो भूत्वाहरत्तस्य यत्पर्णमच्छिद्यत तत्पर्णस्य पर्णत्वमिति न्वा ऽएतद्ब्राह्मणमुद्यते विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके स हैष विसोमेन पशुबन्धेन यजते योऽन्न्यम्पालाशाद्यूपङ्कुरुतेऽथ हैष ससोमेन पशुबन्धेन यजते यः पालाशं यूपङ्कुरुते तस्म्मात्पालाशमेव यूपङ्कुर्वीत ॥ ८ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ बहुसारस्य यूपस्य पशुविरोधित्वम्, अल्पसारस्य पशुसमृद्धिकरत्वञ्च ]

स य ऽएष बहुसारः । स हापशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपन्न कुर्वीताथ य ऽएष फल्गुप्प्रासहः स ह पशव्व्यस्तस्म्मात्तादृशम्पशुकामो यूपङ्कुर्वीत ॥ १ ॥ अथ यस्यैतद्वक्रस्य सतः । शूल ऽइवाग्ग्रम्भवति स ह कपोती नाम स यो ह तादृशं य्यूपङ्कुरुते पुरा हायुषोऽमुँल्लोकमेति तस्म्मात्तादृशमायुष्कामो यूपन्न कुर्वीत ॥ २ ॥ अथ य ऽएष ऽआनतः । उपरिष्टादुपनतो मद्ध्ये सोऽशनायै रूपः स यो ह तादृशं य्यूपङ्कुरुतेऽशनायुका हास्य भार्य्या

( १ ) का० श्रौ० सू० अ० ६ क० १ सू० ८ ।

भवन्ति तस्म्मात्तादृशमन्नाद्यकामो यूपन्न कुर्वीताथ य ऽएष ऽआनत ऽउपरिष्टादुपनतो मद्ध्ये सोऽन्नाद्यस्य रूपन्तस्म्मात्तादृशमन्नाद्यकामो यूपङ्कुर्वीत ॥ ३ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपप्रमाणम् ]

स यत्पशुना यक्ष्यमाणः । एकारत्निं यूपङ्कुरुत ऽइममेव तेन लोकञ्जयत्यथ यद्द्व्यरत्निमन्तरिक्षलोकमेव तेन जयत्यथ यत्त्र्यरत्निन्दिवमेव तेन जयत्यथ यच्चतुररत्निन्दिश ऽएव तेन जयति स वा ऽएष त्र्यरत्निर्वैव चतुररत्निर्वा * पशुबन्धयूपो भवत्यथ योऽत ऽऊर्द्ध्वः सौम्म्यस्यैव सोऽद्ध्वरस्य ॥ १ ॥ तदाहुः । यजेदाज्यभागौ ना३ ऽइति यजेदित्याहुश्चक्षुषी वा ऽएते यज्ञस्य यदाज्यभागौ किम्मृते पुरुषश्चक्षुर्भ्याथ्ठं स्यादिति यावद्वै भागिनथ्ठं स्वेन भागधेयेन न निर्भजन्त्यनिर्भक्तो वै स तावन्मन्यतेऽथ यदैव तथ्ठं स्वेन भागधेयेन निर्भजन्त्यथैव स निर्भक्तो मन्यते स यत्रैतद्धोतान्न्वाहास्न्ना रक्षः सथ्ठंसृजतादिति तदेनथ्ठं स्वेन भागधेयेन निर्भजति ॥ २ ॥ एतद्वै पशोः संज्ञप्प्यमानस्य । हृदयः शुक्क्समवैति हृदयाच्छूलन्तद्ध्ये सह हृदयेन पशुथ्ठं श्रपयन्ति पुनः पशुः शुगनुविष्प्पन्देत पार्श्वेत ऽएवैनत्काष्ठे प्प्रतृद्य श्रपयेत् † ॥ ३ ॥ उपस्तृणीत ऽआज्ज्यम् । तत्पृथिव्यै रूपङ्करोति हिरण्यशकलमवदधाति तदग्ग्नेः रूप-

* "त्र्यरत्निश्चतुररत्निर्वा" का० श्रौ० सू० ६. १. ४ ।

† का० श्रौ० सू० ६. ७. १४ ।

ङ्करोति वपामवदधाति तदन्तरिक्षस्य रूपङ्करोति हिरण्यशकलमवदधाति तदादित्यस्य रूपङ्करोत्यथ यदुपरिष्टादभिघारयति तद्दिवो रूपङ्करोति सा वा ऽएषा पञ्चावत्ता वपा भवति पाङ्क्तो यज्ञः [A] पाङ्क्तः पशुः [B] पञ्च ऽऋतवः सँवत्सरस्य तस्मात्पञ्चावत्ता वपा भवति ॥ ४ ॥

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ अग्निहोत्रे मह इत्युपस्थानं कर्तव्यनिमित्तं विधातुमाख्यायिका ]

तद्यथा ह वै । इदꣳ रथचक्रं वा कौलालचक्रं वाप्रतिष्ठितङ्क्रन्देदेवꣳ हैवेमे लोका ऽअध्रुवा ऽअप्रतिष्ठिता ऽआसुः ॥ १ ॥ स ह प्रजापतिरीक्षाञ्चक्रे । कथन्विमे लोका ध्रुवाः प्रतिष्ठिताः स्युरिति स ऽएभिश्चैव पर्वतैर्नदीभिश्चेमामदृꣳहद्वयोभिश्च मरीचिभिश्चान्तरिक्षञ्जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥ स मह ऽइति व्याहरत् । पशवो वै महस्तस्माद्यस्यैते बहवो भवन्ति भूयिष्ठमस्य कुले महीयन्ते बहवो ह वा ऽअस्यैते भवन्ति भूयिष्ठꣳ हास्य कुले महीयन्ते तस्माद्यद्येनमायतनाद्बाधेरन्वा प्र वा यापयेयुरग्निहोत्रꣳ हुत्वा मह ऽइत्युपतिष्ठेत प्रति प्रजया पशुभिस्तिष्ठति नायतनाच्च्यवते ॥ ३ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(A) धानाकरम्भादिपञ्चद्रव्यसाध्यत्वाद्यज्ञः पाङ्क्तः ।
(B) लोमत्वङ्मांसास्थिमज्जाख्यपञ्चधातुमयत्वात्पशुः पाङ्क्तः ।

[ आहितादिभेदेनाग्नेश्चातुर्विध्यम् ]

चत्त्वारो ह वा ऽअग्नयः । आहित ऽउद्धृतः प्प्रहृतो विहृतोऽयमेव लोक ऽआहितोऽन्तरिक्षलोक ऽउद्धृतो द्यौष्प्रहृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृत ऽआदित्त्यः प्प्रहृतश्चन्द्रमा विहृतो गार्हपत्त्य ऽएवाहित ऽआहवनीय ऽउद्धृतोऽथ यमेतमाहवनीयात्प्राञ्चम्प्रणयन्ति स प्प्रहृतोऽथ यमेतमुदञ्चम्पशुश्रपणायाहरन्ति यञ्चोपयड्भ्यः स विहृतस्तस्म्मात्प्रहार्य्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पशोः प्रजापतिः सूर्य इन्द्राग्नीति देवतात्रयप्रतिपादनम् ]

तदाहुः । किन्देवत्त्य ऽएष पशुः स्यादिति प्प्राजापत्त्यः स्यादित्त्याहुः प्प्रजापतिर्वा ऽएतमग्ग्रेऽभ्यपश्श्यत्तस्म्मात्प्राजापत्त्य ऽएवैष पशुः स्यादिति ॥ १ ॥ अथो ऽअप्प्याहुः । सौर्य्य ऽएवैष पशुः स्यादिति तस्म्मादेतस्म्मिन्नस्तमिते पशवो बद्ध्यन्ते बद्ध्नन्त्येकान्न्यथागोष्ट्ठमेक ऽउपसमायन्ति तस्म्मात्सौर्य्य ऽएवैष पशुः स्यादिति ॥ २ ॥ अथो ऽअप्प्याहुः । ऐन्द्राग्ग्न ऽएवैष पशुः स्यादित्त्येते वै देवते ऽअन्न्वन्न्ये देवा यद्यार्त्तो यजते पारयत ऽएव यदि महसा यजते पारयत ऽएव तस्म्मादैन्द्राग्ग्न * ऽएवैष पशुः स्यादिति ॥ ३ ॥ प्राण ऽएव पशुबन्धः । तस्म्माद्यावज्जी-

* "ऐन्द्राग्नः सौर्यः प्राजापत्यो वा यमिच्छेत्" ( का० श्रौ० सू० ६. ३. २६ )

वति नास्यान्न्यः पशूनामीष्ट्वे बद्धा ह्यस्मिन्नेते भवन्ति ॥४॥ स ह प्रजापतिरग्निमुवाच। अजै त्वया त्वा लभा ऽइति नेति होवाच वायुम्ब्रूहीति स ह वायुमुवाच अजै त्वया त्वा लभा ऽइति नेति होवाच पुरुषम्ब्रूहीति स ह पुरुषमुवाच अजै त्वया त्वा लभा ऽइति नेति होवाच पशून्ब्रूहीति स ह पशूनुवाच अजै युष्माभिरा वो लभा ऽइति नेति होचुश्चन्द्रमसम्ब्रूहीति स ह चन्द्रमसमुवाच अजै त्वया त्वा लभा ऽइति नेति होवाचादित्यम्ब्रूहीति स हादित्यमुवाच अजै त्वया त्वा लभा ऽइति तथेति होवाच य ऽउ त ऽएते नाचीकमन्त किमु म ऽएतेषु स्यादिति यद्यत्कामयेथा ऽइति तथेति तमालभत सोऽस्यायम्पशुरालब्धः संज्ञप्तोऽश्वयत्तमेताभिराप्रीभिराप्रीणात्तद्यदेनमेताभिराप्रीभिराप्रीणात्तस्मादाप्रियो नाम तस्मादु पशुः संज्ञप्तम्ब्रूयाच्छेतान्नु मुहूर्त्तमिति स यावन्तमश्वमेधेनेष्ट्वा लोकञ्जयति तावन्तमेनेन[1] जयति ॥ ५ ॥ तम्प्राची दिक्। प्राणेत्यनुप्राणत्प्राणमेवास्मिँस्तदधात्तन्दक्षिणा दिग्व्यानेत्यनुप्राणद्व्यानमेवास्मिँस्तदधात्तम्प्रतीची दिगपानेत्यनुप्राणदपानमेवास्मिँस्तदधात्तमुदीची दिगुदानेत्यनुप्राणदुदानमेवास्मिँस्तदधात्तमूर्द्ध्वा दिक्समानेत्यनुप्राणत्समानमेवास्मिँस्तदधात्तस्मादु पुत्रञ्जातमकृत्तनाभिम्पञ्च ब्राह्मणान्ब्रूयादित्येनमनुप्राणितेति * यद्यु तान्न विन्देदपि

(१) 'ते' इति 'ग' 'ज' पुस्तकयोः।

* पा० गृ० सू० १. १६. १०।

स्वयमेवानुपरिक्क्रामन्नमनुप्प्राण्ण्यात्स सर्व्वमायुरेत्त्या हैव जरायै जीवति ॥ ६ ॥ स प्प्राणमेवाग्नेरादत्त । तस्म्मादेष नानुपद्ध्मातो नानुपज्ज्वलितो ज्वलत्त्यात्तो ह्यस्य प्प्राण ऽआ ह वै द्विषतो ब्भ्रातृव्व्यस्य प्प्राणन्दत्ते य ऽएवं व्वेद ॥ ७ ॥ रूपमेव व्वायोरादत्त । तस्म्मादेतस्य लेलयत ऽइवैवो-पश्शृण्ण्वन्ति न त्त्वेनम्पश्श्यन्त्यात्तथं ह्यस्य रूपमा ह वै द्विषतो ब्भ्रातृव्व्यस्य रूपन्दत्ते य ऽएवं व्वेद ॥ ८ ॥ चित्त-मेव पुरुषस्यादत्त । तस्म्मादाहुर्द्देवचित्तन्त्वावतु मा मनुष्य-चित्तमित्त्यात्तथं ह्यस्य चित्तमा ह वै द्विषतोब्भ्रातृव्व्यस्य चित्तन्दत्ते य ऽएवं व्वेद ॥ ९ ॥ चक्षुरेव पशूनामादत्त । तस्म्मादेते चाकश्श्यमाना ऽइवैव न जानन्त्यथ यदैवो-पजिग्घ्रन्त्यथ जानन्त्यात्तथं ह्येषाञ्चक्षुरा ह वै द्विषतो ब्भ्रातृव्व्यस्य चक्षुर्द्दत्ते य ऽएवं व्वेद ॥ १० ॥ भामेव चन्द्रमस ऽआदत्त । तस्म्मादेतयोः सदृशयोः सतोर्न्नत-राश्चन्द्रमा भात्त्यात्ता ह्यस्य भा ऽआ ह वै द्विषतो ब्भ्रातृव्व्यस्य भान्दत्ते य ऽएवं व्वेद तद्यदादत्त तस्म्मा-दादित्त्यः ॥ ११ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ पशुप्रायश्चित्ततया स्पृत्याख्यहोमविधानम् ]

केशिगृहपतीनामु ह । सम्म्राड्दुघाथं शार्द्दूलो जघान स ह ससत्रिण आमन्त्रयाञ्चक्क्रे केह प्प्रायश्चित्तिरिति ते होचुर्न्नेह प्प्रायश्चित्तिरस्ति खण्डिक ऽएवौद्भारिरस्य

प्रायश्चित्तिं वेद स उ त एतादृक्कञ्चैव कामयते ऽतश्च पापीय इति ॥ १ ॥ स होवाच । सङ्गृहीतर्थ्युङ्क्ष्धि मे स्यन्त्स्यामि स यद्यह मे वक्ष्यति समाप्स्यामि यद्यु मा मारयिष्यति यज्ञं विक्रुष्टमनु विक्रुक्ष्य इति ॥ २ ॥ स ह युक्त्वा ययावाजगाम । तद्ध ह प्रातिख्यायोवाच यन्न्वे-तान्न्येवाजिनानि मृगेषु भवन्त्यथैषाम्पृष्टीरपिशीर्ष्णं पचामहे कृष्णाजिनम्मे ग्रीवास्वाबद्धमित्येव मेदुमधृष्णोऽभ्युव-स्यन्तू३ मिति ॥ ३ ॥ नेति होवाच । सम्राड्दुघां* वै मे भगवः शार्दूलोऽवधीत्स यद्यह मे वक्ष्यसि समाप्स्यामि यद्यु मा मारयिष्यसि यज्ञं विक्रुष्टमनु विक्रुक्ष्य इति ॥ ४ ॥ स होवाच । आमन्त्रणीयान्न्वामन्त्रया इति तान्हामन्त्र्योवाच यद्यस्मै वक्ष्याम्यमुष्यैवेदम्प्रजा भविष्यति न मम लोकी त्वहम्भविष्यामि यद्यु वा ऽअस्मै न वक्ष्यामि ममैवेदम्प्रजा भविष्यति नामुष्य लोकी त्वसौ भविष्यतीति ते होचुर्म्मा भगवो वोचोऽयं वाव क्षत्रियस्य लोक इति स होवाच वक्ष्याम्येवामूवै रात्रयो भूयस्य इति ॥ ५ ॥ तस्मा उ हैतदुवाच । स्पृतीर्हुत्वान्न्यामाजतेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति चन्द्रात्ते मन स्पृणोमि स्वाहा सूर्य्यात्ते चक्षु स्पृणोमि स्वाहा वातात्ते प्राणान्त्स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रꣳ स्पृणोमि स्वाहाद्भ्यस्ते लोहितꣳ स्पृणोमि स्वाहा पृथिव्यै ते शरीरꣳ स्पृणोमि स्वाहेत्यथान्न्यामाजतेति

* प्रवर्ग्यदोहनार्थां गामित्यर्थः ।

ब्ब्रूतास्सा ते सम्म्राड्दुघा स्यादिति ततो हैव स ऽउत्स- स्साद् कैशिनीरेवेमा ऽअप्प्येतर्हि प्प्रजा जायन्ते ॥ ६ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या॥१०२॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

अष्टाध्यायीनामैकादशं काण्डं समाप्तम्* ॥ ११ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ॥ ४३७,॥

# अथ मध्यमनाम द्वादशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—दीक्षाक्रमः, सत्राणि, पृष्ठ्याऽभिप्लु-स्वरसाम—विषुवन्महाव्रतादिनिरूपणम्' गवामयनम्, अग्निहोत्र-प्रायश्चित्तम्, मृतकाग्निहोत्रम्, मृतस्यदाहः ]

## [ द्वादशाहे* दीक्षाक्रमः ]

॥ ॐ ॥ अयं वै यज्ञो योऽयम्पवते। तमेत ऽईप्प्सन्ति ये सँवत्सराय दीक्षन्ते तेषाङ्गृहपतिः प्प्रथमो दीक्षतेऽयं वै लोको गृहपतिरस्स्मिन्न्वै लोक ऽइदꣳ सर्व्वम्प्रतिष्ठ्ठितङ्गृहपता ऽउ वै ससत्रिणः प्प्रतिष्ठ्ठिताः प्प्रतिष्ठ्ठायामेवै-तत्प्रतिष्ठ्ठाय दीक्षन्ते ॥ १ ॥ अथ ब्ब्रह्माणन्दीक्षयति। चन्द्रमा वै ब्ब्रह्मा सोमो वै चन्द्रमाः सौम्म्या ऽओषधय ऽओषधीस्तदनेन लोकेन सन्दधाति तस्म्मादेतावन्तरे-णान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेतौषधी-स्तदनेन लोकेन नानाकुर्य्यादुच्छोषुका ह स्युस्तस्म्मादेता-

---

* द्वादशाहो द्विविधः सत्रात्मकोऽहीनात्मकश्चेति। तयोर्लक्षणं यथा—'आसत उपयन्तीति सत्र-लिङ्गं यजत इत्यहीनस्य' ( का० श्रौ० सू० १२. १. ५. ) इति। यस्य उत्पत्तिवाक्ये आस् धातुः, उपोपसृष्ट इण् धातुर्वा श्रूयते तत् सत्रम्। यथा—'द्वादशाहमृद्धिकामा उपेयुः' 'देवा ह वै सत्रमासत' इति। यजधातुघटितवाक्यविहितत्वमहीनत्वम्। यथा—'द्वादशाहेन प्रजाकामं याजयेत्' इति।

लक्षणान्तरञ्च—'उभयतोऽतिरात्र सत्रमुपरिष्टादहीनस्य' ( का० सू० १२. १. ६ ) इति। अत्र सत्रे अहीने वा योऽहःशब्दो रात्रिशब्दो वा श्रूयते स सर्वोऽप्यहोरात्रसमुदायवाचकः। तेन द्वादशरात्रो द्वादशाह इति समानार्थक एव।

( १ ) का० श्रौ० सू० १२. २. १५।

वन्तरेणान्न्यो न दीक्षेत ॥ २ ॥ अथोद्गातारन्दीक्षयति । पर्ज्जन्न्यो वा ऽउद्गाता पर्ज्जन्न्याद्वु वै व्वृष्टिर्ज्जायते व्वृष्टि-न्तदोषधिभिः सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत व्वृष्टिन्तदोषधिभिर्न्नानाकुर्य्याद्वर्षुको ह स्यात्तस्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ३ ॥ अथ होतारन्दीक्षयति । अग्निर्वै होताधि-देवतं व्वागध्यात्ममन्नं व्वृष्टिरग्निश्च तद्वाचश्चान्नेन सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेताग्निश्च तद्वाचश्चान्नेन नानाकुर्य्यादशनायुका ह स्युस्तस्मादेतावन्तरेणान्न्यो न दीक्षेतैतांश्चतुरोऽध्वर्य्यु-र्दीक्षयति ॥ ४ ॥ अथाध्वर्य्युम्प्रतिप्प्रस्थाता दीक्षयति । मनो वा ऽअध्वर्य्युर्व्वाग्घोता मनश्च तद्वाचश्च सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत मनश्च तद्वाचश्च नानाकुर्य्यात्प्रमायुका ह स्युस्त-स्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ५ ॥ अथ ब्ब्रह्मणे ब्ब्राह्म-णाच्छꣳसिनन्दीक्षयति । तꣳ हि सोऽन्न्वथोद्गात्रे प्प्रस्तोतार-न्दीक्षयति तꣳ हि सोऽन्न्वथ होत्रे मैत्रावरुणन्दीक्षयति तꣳ हि सोऽन्न्वेतांश्चतुरः प्प्रतिप्प्रस्थाता दीक्षयति ॥६॥ अथाध्व-र्य्यवे प्प्रतिप्प्रस्थातारेन्नष्टौ[२] दीक्षयति । तꣳ हि सोऽन्न्वेतेषां वै नवानाङ्क्लृप्तिमन्न्वितरे कल्प्पन्ते नव वै प्प्राणाः प्प्राणा-नेवैष्वेतद्दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽ-

(१) 'ग' 'ज' पुस्तकयोः 'तदोषधिभ्यः' इति पाठ उपलभ्यते ।
(२) का० श्रौ० सू० १२. २. १६ । (३) का० श्रौ० सू० १२. २. १७ ।

स्म्माल्लोकात्प्रयन्ति ॥ ७ ॥ अथ ब्ब्रह्मणे पोतारन्दीक्ष-यति । तꣳ हि सोऽन्न्वथोद्गात्रे प्प्रतिहर्त्तारन्दीक्षयति तꣳ हि सोऽन्न्वथ होत्रेऽच्छावाकन्दीक्षयति तꣳ हि सोऽन्न्वेताँश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥ अथाद्ध्वर्य्युं वै नेष्टारमुन्नेता दीक्षयति । तꣳ हि सोऽन्न्वथ ब्ब्रह्मण ऽआग्नीध्रन्दीक्षयति तꣳ हि सोऽन्न्वथोद्गात्रे सुब्ब्रह्मण्ण्या-न्दीक्षयति तꣳ हि सोऽन्न्वथ होत्रे ग्ग्रावस्तुतन्दीक्षयति तꣳ हि सोऽन्न्वेताँश्चतुर ऽउन्नेता दीक्षयति ॥ ९ ॥ अथोन्नेतारम्[2] । स्नातको वा ब्ब्रह्मचारी वान्न्यो वा दीक्षितो दीक्षयति न पूतः पावयेदिति ह्याहुः सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाꣳसो दीक्षन्ते दीक्षमाणा हैव ते यज्ञ-ङ्कल्प्पयन्ति यज्ञस्य क्लृप्तिमनु सत्रिणां य्योगक्षेमः कल्प्पते सत्रिणां य्योगक्षेमस्य क्लृप्तिमन्न्वपि तस्यार्द्धस्य योगक्षेमः कल्प्पते यस्मिन्नर्द्धे यजन्ते ॥ १० ॥ तेषां व्वा ऽउन्नेतोत्तमो दीक्षते । प्प्रथमोऽवभृथादुदायतामुदैति प्प्राणो वा ऽउन्नेता प्प्राणमेवैष्वेतदुभयतो दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽस्म्माल्लोकात्प्र-यन्ति सैषानुपूर्व्वदीक्षा स यत्र हैवं विद्वाꣳसो दीक्षेरँ-स्तदेव दीक्षेत ॥ ११ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) का० श्रौ० सू० १२. २. १८ । (२) का० श्रौ० सू० [illegible] १४ ।

[ द्वादशाहस्याहःक्लृप्तिः ]

श्रद्धाया वै देवाः । दीक्षाग्निरमिमतादित्यै प्राय- णीयꣳ * सोमक्रयं विष्णोरातिथ्यमादित्यात्प्रवर्ग्यꣳ स्वधाया उपसदोऽग्नीषोमाभ्यामुपवसथमस्माल्लोकात्प्रा- यणीयमतिरात्रम् ॥ १ ॥ सँवत्सराच्चतुर्विꣳशमहः । ब्रह्म- णोऽभिप्लवङ्क्षत्रात्पृष्ठ्यमग्नेरभिजितमद्भ्यः स्वरसाम्न ऽआदित्याद्विषुवन्तमुक्ताः स्वरसामान † ऽइन्द्राद्विश्वजि- तमुक्तौ पृष्ठ्याभिप्लवौ ‡ मित्रावरुणाभ्याङ्गोऽआयुषी वि- श्वेभ्यो देवेभ्यो दशरात्रन्दिग्भ्यो द्वाशरात्रिकम्पृष्ठ्यꣳ षडहमेभ्यो लोकेभ्यश्छन्दोमान् ॥ २ ॥ सँवत्सराद्दशम- महः । प्रजापतेर्म्महाव्रतꣳ § स्वर्ग्गाल्लोकादुदयनीयमति- रात्रन्तदेतत्सँवत्सरस्य जन्म स यो हैवमेतत्सँवत्सरस्य जन्म वेद हास्माच्छ्रेयाञ्जायते सात्मा भवति सँवत्सरो भवति सँवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ उक्ताहःक्लृप्त्यर्थवादः ]

यद्वै दीक्षन्ते । अग्नाविष्णू ऽएव देवते यजन्तेऽ- ग्नाविष्णू देवते भवन्त्यग्नाविष्ण्वोः सायुज्यꣳ सलोक-

---

* प्रकृष्टमयनमारम्भो यत्रेति व्युत्पत्त्या प्रायणीयशब्दो द्वादशाहस्य प्रथमदिनवाचकः ।

† "यज्ञा यज्ञा" ( ४. ८. १ ) इत्यस्यां योनावुत्पन्नानि चत्वारि स्वरसंज्ञकानि सामानि येषु ते स्वरसामानः । ‡ प्रथमोऽग्निष्टोमः, ततश्चत्वार उक्थ्याः, पुनः षष्ठोऽग्निष्टोमः, एवं विधस्याहां षट्कस्य अभिप्लव इति संज्ञा ( तै० सं० सा० ७. ४. ११. १७, ऐ० ब्रा० ४. ३१ ।

§ महाव्रतं यज्ञस्यान्तिममहः । महानवर्तिष्ट अनेन कर्मणा इति महाव्रतम् ( तै० ब्रा० सा० भा० १. २. ६ ) ।

ताञ्जयन्ति ॥ १ ॥ अथ यत्प्रायणीयेन यजन्ते । अदितिमेव देवतां यजन्तेऽदितिर्देवता भवन्त्यदितेः सायुज्यꣳ सलोकताञ्जयन्ति ॥ २ ॥ अथ यत्क्रयेण चरन्ति । सोममेव देवतां यजन्ते सोमो देवता भवन्ति सोमस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ३ ॥ अथ यदातिथ्येन यजन्ते । विष्णुमेव देवतां यजन्ते विष्णुर्देवता भवन्ति विष्णोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ४ ॥ अथ यत्प्रवर्ग्येण यजन्ते । आदित्यमेव देवतां यजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ५ ॥ अथ यदुपसद ऽउपयन्ति । एता ऽएव देवता यजन्ते या ऽएता ऽउपसत्स्वेता देवता भवन्त्येतासान्देवतानाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ ६ ॥ अथ यदग्नीषोमीयेण पशुना यजन्ते । अग्नीषोमावेव देवते यजन्तेऽग्नीषोमौ देवते भवन्त्यग्नीषोमयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ७ ॥ अथ यत्प्रायणीयमतिरात्रमुपयन्ति । अहोरात्रे ऽएव देवते यजन्तेऽहोरात्रे देवते भवन्त्यहोरात्रयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ८ ॥ अथ यच्चतुर्विꣳशमहरुपयन्ति । सँवत्सरमेव देवतां यजन्ते सँवत्सरो देवता भवन्ति सँवत्सरस्य सायुज्यꣳ सलोकताञ्जयन्ति ॥ ९ ॥ अथ यदभिप्लवꣳ षडहमुपयन्ति । अर्द्धमासाँश्च मासाँश्च देवता यजन्तेऽर्द्धमासाश्च मासाश्च देवता भवन्त्यर्द्धमासानाञ्च मासानाञ्च सायुज्यꣳ सलोकताञ्जयन्ति ॥ १० ॥ अथ यत्पृष्ठ्यꣳ षडहमुपयन्ति ।

ऋतूनेव देवता यजन्त ऽऋतवो देवता भवन्त्यृतूनाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ ११ ॥ अथ यदभिजितमुपयन्ति । अग्निमेव देवतां ᳬयजन्तेऽग्निर्देवता भवन्त्यग्नेः सायुज्यᳬं सलोकताञ्जयन्ति ॥ १२ ॥ अथ यत्स्वरसाम्न ऽउपयन्ति । अप ऽएव देवता यजन्त ऽआपो देवता भवन्त्यपाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ १३ ॥ अथ यद्विषुवन्तमुपयन्ति । आदित्यमेव देवतां ᳬयजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यᳬं सलोकताञ्जयन्त्युक्ताः स्वरसामानः ॥ १४ ॥ अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवतां ᳬयजन्त ऽइन्द्रो देवता भवन्तीन्द्रस्य सायुज्यᳬं सलोकताञ्जयन्त्युक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥ अथ यद्गोऽआयुषी ऽउपयन्ति । मित्रावरुणावेव देवते यजन्ते मित्रावरुणौ देवते भवन्ति मित्रावरुणयोः सायुज्यᳬं सलोकताञ्जयन्ति ॥ १६ ॥ अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान्देवता * यजन्ते विश्वे देवा देवता भवन्ति विश्वेषान्देवानाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ १७ ॥ अथ यद्दाशरात्रिकम्पृष्ठ्यᳬं षडहमुपयन्ति । दिश ऽएव देवता यजन्ते दिशो देवता भवन्ति दिशाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ १८ ॥ अथ यच्छन्दोमानुपयन्ति । इमानेव लोकान्देवता यजन्त ऽइमे लोका देवता भवन्त्येषाँल्लोकानाᳬं सायुज्यᳬं सलोकताञ्जयन्ति ॥ १९ ॥ अथ यद्दशममहरुपयन्ति । सँवत्सरमेव देवतां ᳬयजन्ते

* 'ग' 'ज' पुस्तकयोः 'देवतां' इति पाठ उपलभ्यते ।

सँव्वत्सरो देवता भवन्ति सँव्वत्सरस्य सायुज्यꣳ सलोकता-ञ्जयन्ति ॥ २० ॥ अथ यन्महाव्रतमुपयन्ति । प्रजापतिमेव देवतां यजन्ते प्रजापतिर्द्देवता भवन्ति प्रजापतेः सायु-ज्यꣳ सलोकताञ्जयन्ति ॥ २१ ॥ अथ यदुदयनीयमतिरा-त्रमुपयन्ति । सँव्वत्सरमेव तदाप्त्वा स्वर्ग्गे लोके प्रति-तिष्ठन्ति तान्यदि पृच्छेयुः कामद्य देवतां यजद्ध्वे का देवता स्थ कस्यान्देवतायां वसथेत्यत ऽएवैकतमाम्ब्रूयु-र्य्यस्यै तु नेदिष्ठꣳ स्युरेते ह वै सति सद ऽएते हि सतीषु देवतासु सीदन्तो यन्ति सत्रसदो हैवेतरे स यो हैवं विदुषान्दीक्षितानाम्पापकꣳ सत्रे कीर्त्तयेदेतां-ल्ल्यस्त्वा देवताभ्य ऽआवृश्चाम ऽइत्येनम्ब्रूयुः स पापी-यान्भवति श्रेयाꣳस ऽआत्मना ॥ २२ ॥ स ऽएष सँव्व-त्सरस्त्रिमहाव्रतः । चतुर्विꣳशे महाव्रतं विषुवति महाव्रत-म्महाव्रत ऽएव महाव्रतन्तꣳ ह स्मैतत्पूर्व्व ऽउपयन्ति त्रिम-हाव्रतन्ते तेजस्विन ऽआसुः सत्यवादिनः सꣳशितव्रता ऽअथ य ऽउ हैनमप्येतर्हि तथोपेयुर्य्यथामपात्रमुदक ऽआसिक्ते विम्रित्येदेवꣳ हैव ते विम्रित्येयुरुपर्य्युपयन्ति तदेषाꣳ सत्येन श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभि-रवरुद्धम्भवति ॥ २३ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



१ 'ग' 'ज' पुस्तकयोः 'ते' इति ।

[ द्वादशाहस्य संवत्सरात्मना स्तुतिः ]

पुरुषो वै सँव्वत्सरः । तस्य पादावेव प्प्रायणीयोऽतिरात्रः पादाब्भ्याᳬ हि प्प्रयन्ति तयोर्यच्छुक्क्लन्तदह्नो रूपं यत्कृष्णन्तद्रात्रेर्न्नखान्येवौषधिवनस्प्पतीनाᳬ रूपमूरू चतुर्विᳬशमहरुरोऽभिप्प्लवः पृष्ट्ठम्पृष्ठ्यः ॥ १ ॥ अयमेव दक्षिणो बाहुरभिजित् । इम ऽएव दक्षिणे त्रयः प्प्राणाः स्वरसामानो मूर्द्धा विषुवानिम ऽएवोत्तरे त्रयः प्प्राणाः स्वरसामानः ॥ २ ॥ अयमेवोत्तरो बाहुर्व्विश्वजित् । उक्क्तौ पृष्ठ्याभिप्प्लवौ यावुवाञ्चौ प्प्राणौ ते गोऽआयुषी ऽअङ्गानि दशरात्रो मुखम्महाव्रतᳬ हस्तावेवोदयनीयोऽतिरात्रो हस्ताब्भ्याᳬ ह्युद्यन्ति तयोर्यच्छुक्क्लन्तदह्नो रूपं यत्कृष्णन्तद्रात्रेर्न्नखान्येव नक्षत्राणाᳬ रूपᳬ स ऽएष सँव्वत्सरोऽद्ध्यात्मम्प्रतिष्ठितः स यो हैवमेतᳬ सँव्वत्सरमद्ध्यात्मम्प्रतिष्ठितं व्वेद प्प्रतितिष्ठति प्प्रजया पशुभिरस्मिँल्लोकेऽमृतत्त्वेनामुष्मिन् ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ संवत्सरसत्रस्याहःक्लृप्तिर्ब्राह्मणद्वयेन ]

समुद्रं व्वा ऽएते प्प्रतरन्ति । ये सँव्वत्सराय दीक्षन्ते तस्य तीर्त्थमेव प्प्रायणीयोऽतिरात्रस्तीर्त्थेन हि प्प्रस्नान्ति तद्यत्प्रायणीयमतिरात्रमुपयन्ति यथा तीर्त्थेन समुद्रम्प्रस्नायुस्तादृक्तत् ॥ १ ॥ गाधमेव प्प्रतिष्ठा चतुर्विᳬशमहः ।

यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्भ्य प्रस्नान्ति प्रस्नेयोऽभिप्लवः प्रस्नेयः पृष्ठ्यः ॥ २ ॥ गाधमेव प्रतिष्ठाभिजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्भ्योत्क्रामन्त्यूरुदघ्न ऽएव प्रथमः स्वरसामा जानुदघ्नो द्वितीयः कुल्फदघ्नस्तृतीयो द्वीपः प्रतिष्ठा विषुवान्कुल्फदघ्न ऽएव प्रथमोऽर्वाक्सामा जानुदघ्नो द्वितीय ऽऊरुदघ्नस्तृतीयः ॥ ३ ॥ गाधमेव प्रतिष्ठा विश्वजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्भ्य प्रस्नान्ति प्रस्नेयः पृष्ठ्यः प्रस्नेयोऽभिप्लवः प्रस्नेये गोऽआयुषी प्रस्नेयो दशरात्रः ॥ ४ ॥ गाधमेव प्रतिष्ठामहाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्भ्योत्स्नान्ति तीर्थमेवोदयनीयोऽतिरात्रस्तीर्थेन ह्युत्स्नान्ति तद्यदुदयनीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नाय तीर्थेनोत्स्नायुस्तादृक्तत् ॥ ५ ॥

तदाहुः । कति सँवत्सरस्यातिरात्राः कत्यग्निष्टोमाः कत्युक्थ्याः कति षोडशिनः कति षडहा ऽइति द्वावतिरात्रौ षट्शतमग्निष्टोमा द्वे चत्वारिंशे शते ऽउक्थ्यानामिति नु य ऽउक्थ्यान्स्वरसाम्न ऽउपयन्ति ॥ ६ ॥ अथ येऽग्निष्टोमान् । द्वादशशतमग्निष्टोमा द्वे चतुस्त्रिंशे शते ऽउक्थ्यानान्द्वादश षोडशिनः षष्टिः षडहा ऽइति नु सँवत्सरस्याप्तिः ॥ ७ ॥ द्वादश वै मासाः सँवत्सरस्य । तेषामेतत्तेज ऽइन्द्रियं यत्पृष्ठानि तद्यन्मासि मासि पृष्ठान्युपयन्ति मासश ऽएव तत्सँवत्सरस्य तेज ऽआप्नु-

वन्त्यथ कथन्त्रयोदशस्य मासस्य तेज ऽआप्नुवन्तीत्युपरिष्टाद्विषुवतो विश्वजितः सर्वपृष्ठमग्निष्टोममुपयन्त्येवमु त्रयोदशस्य मासस्य तेज ऽआप्नुवन्ति ॥ ८ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः सँवत्सराय न्न्वा ऽअहन्दीक्षिष्य ऽइति तः ह पितोपेक्ष्योवाच वेत्थ न्न्वायुष्मन्त्सँवत्सरस्य गाधप्रतिष्ठा ऽइति वेदेति होवाचैतद्ध तद्विद्वानुवाच ॥ ९ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



तदाहुः । कस्मादुभयतोज्ज्योतिषोऽभिप्लवा भवन्त्यन्न्यतोज्ज्योतिः पृष्ठ्य ऽइतीमे वै लोका ऽअभिप्लवा ऽउभयतोज्ज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदित्येनामुत ऽऋतवः पृष्ठ्योऽन्न्यतोज्ज्योतिषो वा ऽऋतव ऽएष ऽएषाञ्ज्योतिर्य ऽएष तपति ॥ १ ॥ देवचक्रे वा ऽएते पृष्ठ्यप्रतिष्ठिते । यजमानस्य पाप्मानन्तृःहती परिप्लवेते स यो हैवं विदुषान्दीक्षितानाम्पापकः सत्रे कीर्त्तयत्त्येते हास्य देवचक्रे शिरश्छिन्तो दशरात्र ऽउद्धिः पृष्ठ्याभिप्लवौ चक्रे ॥ २ ॥ तदाहुः । यत्समे ऽएव चक्रे भवतोऽथैते विषमा स्तोमाः कथमस्यैते समा स्तोमा ऽउपेता भवन्तीति यदेव षडन्न्यान्न्यहानि षडन्न्यानि तेनेति ब्रूयात् ॥ ३ ॥ पृष्ठ्याभिप्लवौ तन्त्रे कुर्वीतेति ह स्माह पैङ्ग्यः । तयो स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति स यत्सञ्चारयति तस्मादिमे प्राणा

नाना सन्त ऽएकोतयः समानमूतिमनुसञ्चरन्त्यथ यन्न सञ्चारयेत्प्रमायुको यजमानः स्यादेष ह वै प्रमायुको योऽन्धो वा बधिरो वा ॥ ४ ॥ नवाग्निष्टोमा मासि सम्पद्यन्ते । नव वै प्राणाः प्राणानेवैष्वेतद्दधाति तथा सर्वमायुर्यन्ति तथो ह न पुरायुषोऽस्माल्लोकात्प्रयन्ति ॥५॥ एकविꣳशतिरुक्थ्याः । द्वादश वै मासाः सँवत्सरस्य पञ्चर्त्तवस्त्रयो लोकास्तद्विꣳशतिरेष ऽएवैकविꣳशो य ऽएष तपत्येतामभिसम्पदꣳ स ऽएतया सम्पदा मासि मासि स्वर्ग्गँल्लोकꣳ रोहति मासशः स्वर्ग्गँल्लोकꣳ समश्नुत ऽएकविꣳशश्च स्तोमस्बृहतीश्च च्छन्दः ॥ ६ ॥ चतुस्त्रिꣳशदग्निष्टोमा मासि सम्पद्यन्ते । त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशः सर्वासान्देवतानामाप्त्या ऽएक ऽउक्थ्यः षोडशिमानन्नं वा ऽउक्थ्यो वीर्यꣳ षोडशी ॥ ७ ॥ एतेन वै देवाः । वीर्येणान्नेन सर्वान्कामानाप्नुवन्त्सर्वान्कामानाश्नुवत तथो ऽएवैष ऽएतेन वीर्येणान्नेन सर्वान्कामानाप्नोति सर्वान्कामानश्नुते तस्मात्पृष्ठ्याभिप्लवा ऽउपेयात्सँवत्सराय दीक्षित ऽएतस्मै कामाय ॥ ८ ॥ अथादित्याश्च ह वा ऽअङ्गिरसश्च । उभये प्राजापत्या ऽअस्पर्द्धन्त वयम्पूर्वे स्वर्ग्गँल्लोकमेष्यामो वयम्पूर्व ऽइति ॥ ९ ॥ त ऽआदित्याः । चतुर्भि स्तोमैश्चतुर्भिः पृष्ठैर्ल्लघुभिः सामभिः स्वर्ग्गँल्लोकमभ्यप्लवन्त यदभ्यप्लवन्त तस्मादभिप्लवाः ॥ १० ॥ अन्वञ्च ऽइवाङ्गिरसः । सर्वै स्तोमैः सर्वैः पृष्ठैर्ग्गुरुभिः सामभिः

स्वर्ग्गँल्लोकमस्पृशन्न्यदस्पृशँस्तस्म्मात्पृष्ठ्यः ॥ ११ ॥ अभिप्प्लवः षडहः । षड्ढ्यहानि भवन्त्यभिप्प्लवः पञ्चाहः पञ्च ह्यहानि भवन्ति षळ्येव प्प्रथममहस्तदुत्तममभिप्प्लवश्चतुरहश्चत्त्वारो हि स्तोमा भवन्ति त्रिवृत्पञ्चदशः सप्तदश ऽएकविंᳪश ऽइत्त्यभिप्प्लवस्त्र्यहस्त्र्यावृद्धि ज्योतिर्गौरायुरभिप्प्लवो द्व्यहो द्वे ह्येव सामनी भवतो बृहद्रथन्तरे ऽएवाभिप्प्लव ऽएकाह ऽएकाहस्यो हि स्तोमैस्तायते चतुर्ण्णामुक्क्थ्यानान्द्वादश स्तोत्राणि द्वादश शस्त्राण्ण्यतियन्ति स सप्तमोऽग्निष्टोम ऽएवमु सप्ताग्निष्टोमाः सम्पद्यन्ते ॥ १२ ॥ प्रोतिर्ह कौशाम्बेयः । कौसुरुबिन्दिरुद्दालक ऽआरुणौ ब्ब्रह्मचर्य्यमुवास तᳪ हाचार्य्यः पप्प्रच्छ कुमार कति ते पिता सँव्वत्सरस्याहान्न्यमन्न्यतेति ॥ १३ ॥* दशेति होवाच । दश वा ऽइति होवाच दशाक्षरा विराड्वैराजो यज्ञः ॥ १४ ॥ कति त्त्वेवेति । नवेति होवाच नव वा ऽइति होवाच नव वै प्प्राणाः प्प्राणैरु यज्ञस्तायते ॥ १५ ॥ कति त्त्वेवेति । अष्टेति होवाचाष्टौ वा ऽइति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञः ॥ १६ ॥ कति त्त्वेवेति । सप्तेति होवाच सप्त वा ऽइति होवाच सप्त च्छन्दाᳪसि चतुरुत्तराणि च्छन्दोभिरु यज्ञस्तायते ॥ १७ ॥ [ अर्धः प्रपाठकः ६६ ] कति त्त्वेवेति । षडिति होवाच षड्वा ऽइति होवाच षड्वृतवः सँव्वत्सरः सँव्वत्सरो यज्ञः समानमेतदहर्य्यत्प्रायणीयोदयनीयौ ॥ १८ ॥ कति त्त्वेवेति ।

---

* अत्र शतम् ६००० ।

पञ्चेति होवाच पञ्च वा ऽइति होवाच पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्सरस्य संवत्सरो यज्ञः समानमेतदुहर्यच्चतुर्विंशमहाव्रते ॥ १९ ॥ कति त्वेवेति । चत्वारीति होवाच चत्वारि वा ऽइति होवाच चतुष्पादाः पशवः पशवो यज्ञः समानमेतदुहर्यत्पृष्ठ्याभिप्लवौ ॥ २० ॥ कति त्वेवेति । त्रीणीति होवाच त्रीणि वा ऽइति होवाच त्रीणि च्छन्दांसि त्रयो लोकास्त्रिसवनो यज्ञः समानमेतदुहर्यदभिजिद्विश्वजितौ ॥ २१ ॥ कति त्वेवेति । द्वे ऽइति होवाच द्वे वा ऽइति होवाच द्विपाद्वै पुरुषः पुरुषो यज्ञः समानमेतदुहर्यत्स्वरसामानः ॥ २२ ॥ कति त्वेवेति । एकमिति होवाचाहरेवेति तदेतदुहरहरिति सर्वं संवत्सरः सैषा संवत्सरस्योपनिषत्स यो हैवमेतां संवत्सरस्योपनिषदं वेदा हास्माच्छ्रेयाञ्जायते सात्मा भवति संवत्सरो भवति संवत्सरो भूत्वा देवानप्येति ॥ २३ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ दशरात्रनिरूपणम् ]

स वा ऽएष संवत्सरो बृहतीमभिसम्पन्नः । द्वावाक्ष्यतामह्नां षडहौ द्वौ पृष्ठ्याभिप्लवौ गोऽआयुषी दशरात्रस्तत्षट्त्रिंशत्षट्त्रिंशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गे लोकेऽयतन्त बृहत्या स्वर्गँल्लोकमाप्नुवँस्तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्गे लोके यतते बृहत्या स्वर्गँल्लोकमाप्नोत्यथ यो बृहत्याङ्कामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १ ॥

षष्ठे चतुर्विंशमहः । दशरात्रस्य वै तत्सप्तमं वा नवमं वाभिप्लवात्पृष्ठ्यो निर्मितः पृष्ठ्यादभिजिदभिजितः स्वरसामानः स्वरसामभ्यो विषुवान्विषुवतः स्वरसामानः स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्यः पृष्ठ्यादभिप्लवोऽभिप्लवाद्गोऽआयुषी गोऽआयुर्भ्यान्दशरात्रः ॥२॥ अथैतदुहराक्ष्यैत् । षन्महाव्रतम्पञ्चविंशो ह्येतस्य स्तोमो भवति नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्यान्न स्तोत्रियया स्तोमः ॥ ३ ॥ अभिप्लवम्पूर्वम्पुरस्ताद्विषुवत ऽउपयन्ति । पृष्ठ्यमुत्तरम्पुत्रा वा ऽअभिप्लवः पिता पृष्ठ्यस्तस्म्मात्पूर्ववयसे पुत्राः पितरमुपजीवन्ति पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्वमुपयन्त्यभिप्लवमुत्तरन्तस्म्मादुत्तरवयसे पुत्रान्पितोपजीवत्युप ह वा ऽएनम्पूर्ववयसे पुत्रा जीवन्त्युपोत्तरवयसे पुत्राञ्जीवति य ऽएवमेतद्वेद ॥ ४ ॥ तदाहुः । यच्चतुर्विंशमहरुपेत्य प्रेयात्कथमनागूर्त्ती भवतीति यदेवादः प्रायणीयमतिरात्रमुपयन्ति तेनेति ब्रूयात् ॥ ५ ॥ तदाहुः । यद्द्वादश मासाः सँवत्सरस्याथैतदुहरत्येति यद्वैषुवतमवरेषामेताश्त्परेषाश्मित्त्यवरेषाञ्चैव परेषाञ्चेति ह ब्रूयादात्मा वै सँवत्सरस्य विषुवानङ्गानि मासा यत्र वा ऽआत्मा तदङ्गानि यत्रो ऽअङ्गानि तदात्मा न वा ऽआत्माङ्गान्न्यतिरिच्च्यते नात्मानमङ्गान्न्यतिरिच्चयन्त ऽएवमु हैतदवरेषाञ्चैव परेषाञ्च भवति ॥ ६ ॥ अथ ह वा ऽएष महासुपर्ण्णो ऽएव यत्सँवत्सरः । तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्न्यतरः पक्षोऽथ यान्षडु-

परिष्टात्सोऽन्यतर ऽआत्मा विषुवान्यत्र वा ऽआत्मा तत्पक्षौ यत्र वा पक्षौ तदात्मा न वा ऽआत्मा पक्षावतिरिच्येते नात्मानम्पक्षावतिरिच्येयेते ऽएवमु हैतद्वरेषाञ्चैव परेषाञ्च भवति ॥ ७ ॥ तदाहुः । यत्पुरस्ताद्विषुवत ऽऊर्ध्वान्स्तोमान्षण्मासानुपयन्ति यदुपरिष्टादावृत्तान्कथमस्यैत ऽऊर्ध्वा स्तोमा ऽउपेता भवन्तीति यमेवामुमूर्ध्वस्तोमन्दशरात्रमुपयन्ति तेनेति ब्रूयाद्देवेभ्यो ह वै महाव्रतन्न तस्थे कथमूर्ध्वैं स्तोमैर्विषुवन्तमुपागाताऽवृत्तैर्मामिति ॥ ८ ॥ ते ह देवा ऽऊचुः । उप तं यज्ञक्रतुञ्जानीत य ऽऊर्ध्वस्तोमो येनेदमाप्नवामेति त ऽएतमूर्ध्वस्तोमन्दशरात्रमपश्यन्त्सँवत्सरविधन्तस्य यः पृष्ठ्यः षडह ऽऋतवः स ऽइमे लोकाश्छन्दोमाः सँवत्सरो दशममहस्तेनैनदाप्नुवँस्तदेभ्योऽतिष्ठत तिष्ठते ह वा ऽअस्मै महाव्रतं य ऽएवमेतद्वेद ॥ ९ ॥ अथ वा ऽअतोऽह्नामभ्यारोहः । प्रायणीयेनातिरात्रेणोदयनीयमतिरात्रमभ्यारोहन्ति चतुर्विंशेन महाव्रतमभिप्लवेन परमभिप्लवम्पृष्ठ्येन परम्पृष्ठ्यमभिजिता विश्वजितं स्वरसामभिः परान्त्स्वरसाम्नोऽथैतदुहरनभ्यारूढं यद्वैषुवतमभि ह वै श्रेयांसः रोहति नैनम्पापीयानभ्यारोहति य ऽएवमेतद्वेद ॥१०॥ अथ वा ऽअतोऽह्नान्निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विंशायाह्ने निवहति चतुर्विंशमहरभिप्लवायाभिप्लवः पृष्ठ्याय पृष्ठ्योऽभिजितेऽभिजित्स्वरसामभ्यः स्वरसामानो विषुवते विषुवान्त्स्वरसामभ्यः स्वरसामानो विश्वजिते विश्वजित्पृष्ठ्याय

पृष्ठ्योऽभिप्लवायाभिप्लवो गोऽआयुर्भ्यां गोऽआयुषी दशरात्राय दशरात्रो महाव्रताय महाव्रतमुदयनीयायातिरात्रायोदयनीयोऽतिरात्रः स्वर्ग्याय लोकाय प्रतिष्ठाया ऽअन्नाद्याय ॥ ११ ॥ तानि वा ऽएतानि । यज्ञारण्यानि यज्ञकृन्तत्राणि[1] तानि शतꣳ शतꣳ रथाह्न्यान्यन्तरेण तानि येऽविद्वाꣳस ऽउपयन्ति यथारण्यान्यम्मुग्धाꣳश्चरतोऽशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि सचेरन्नेवꣳ[2] हैवैनामशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि सचन्तेऽथ ये विद्वाꣳसो यथा प्रवाहात्प्रवाहमभयादभयमेवꣳ हैव ते देवतायै देवतामुपसंक्रमन्ति ते स्वस्ति स्वर्गँल्लोकꣳ समश्नुवते ॥ १२ ॥ तदाहुः । कति सँवत्सरस्याहानि पराञ्चि क्रियन्त्यर्वाञ्चीति स यानि सकृत्सकृदुपयन्ति तानि पराञ्च्यथ यानि पुनः पुनस्तान्यर्वाञ्च्यर्वाञ्चीति ह त्वेवैनान्युपासीत षडहयोर्ह्यावृत्तिमन्वावर्त्तन्ते[3] ॥ १३ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ संवत्सरस्याभिप्लवाद्यात्मना स्तुतिर्ब्राह्मणद्वयेन ]

पुरुषो वै सँवत्सरः । तस्य प्राण ऽएव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति वागेवारम्भणीयमहर्वाचा

(१) 'ग' 'ज' पुस्तकयोः 'यज्ञकृन्तत्राणि' इत्यस्य स्थाने 'यज्ञक्षत्राणि' इति पाठ उपलभ्यते ।

(२) 'सचेरन्नेवꣳ हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षाꣳसि' एतावान् पाठः 'ग' 'ज' पुस्तकयोर्नास्ति ।

(३) 'ग' 'ज' पुस्तकयोः 'वर्तते' इति पाठो दृश्यते ।

ह्यारभन्ते षष्ठ्यदारभन्ते ॥ १ ॥ अयमेव दक्षिणो हस्तोऽभिप्लवः षडहः । तस्येदमेव प्रथममहस्तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनङ्गायत्र्या ऽआयतने तस्मादियमासाꣳ ह्रसिष्ठा ॥ २ ॥ इदमेव द्वितीयमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनन्त्रिष्टुभ ऽआयतने तस्मादियमस्यै वर्षीयसी ॥३॥ इदमेव तृतीयमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनञ्जगत्या ऽआयतने तस्मादियमासां वर्षिष्ठा ॥ ४ ॥ इदमेव चतुर्थमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनं विराज ऽआयतनेऽन्नं वै विराट् तस्मादियमासामन्नादितमा ॥ ५ ॥ इदमेव पञ्चममहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनम्पङ्क्तेरायतने पृथुरिव वै पङ्क्तिस्तस्मादयमासाम्प्रथिष्ठः ॥ ६ ॥ इदमेव षष्ठमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनमतिच्छन्दस ऽआयतने तस्मादयमासां वर्षिष्ठो गायत्रमेतदहर्भवति तस्मादिदम्फलकꣳ ह्रसिष्ठꣳ स ऽइतोऽभिप्लवः षडहः स ऽइतः स ऽइतः स ऽइत ऽआत्मा पृष्ठ्यः ॥ ७ ॥ एतद्ध स्म वै तद्विद्वानाह पैङ्ग्यः । प्लवन्त ऽइव वा ऽअभिप्लवास्तिष्ठतीव पृष्ठ्य ऽइति प्लवत ऽइव ह्ययमङ्गैस्तिष्ठतीवात्मनेति ॥ ८ ॥ शिर ऽएवास्य त्रिवृत् । तस्मात्तत्त्रिविधम्भवति त्वगस्थि मस्तिष्कः ॥ ९ ॥ ग्रीवाः

पञ्चदशः । चतुर्दश वा ऽएतासाङ्करूकराणि वीर्य्यम्पञ्च-
दशन्तस्म्मादेताभिरण्वीभिः सतीभिर्ग्गुरुम्भारꣳ हरति
तस्म्माद्ग्रीवाः पञ्चदशः ॥ १० ॥ उरः सप्तदशः । अष्टा-
वन्न्ये जत्रवोऽष्टावन्न्य ऽउरः सप्तदशन्तस्म्मादुरः सप्त-
दशः ॥ ११ ॥ उदरमेकविꣳशः । विꣳशतिर्वा ऽअन्तरुदरे
कुन्तापान्न्युदरमेकविꣳशन्तस्म्मादुदरमेकविꣳशः ॥ १२ ॥
पार्श्वे त्रिणवः । त्रयोदशान्न्याः पर्शवस्त्रयोदशान्न्याः
पार्श्वे त्रिणवे तस्म्मात्पार्श्वे त्रिणवः ॥ १३ ॥ अनूकन्त्रय-
स्त्रिꣳशः । द्वात्रिꣳशद्वा ऽएतस्य करूकराण्यनूकन्त्रयस्त्रिꣳ-
शन्तस्म्मादनूकन्त्रयस्त्रिꣳशः ॥ १४ ॥ अयमेव दक्षिणः
कर्णोऽभिजित् । यदिदमक्ष्णः शुक्लꣳ स प्रथमः
स्वरसामा यत्कृष्णꣳ स द्वितीयो यन्मण्डलꣳ स तृतीयो
नासिके विषुवान्न्यदिदमक्ष्णो मण्डलꣳ स प्रथमोऽर्वा-
क्वसामा यत्कृष्णꣳ स द्वितीयो यच्छुक्लꣳ स तृतीयः
॥ १५ ॥ अयमेवोत्तरः कर्णो विश्वजित् । उक्तौ पृष्ठ्या-
भिप्लवौ यावर्वाञ्चौ प्राणौ ते गोऽआयुषी ऽअङ्गानि दश-
रात्रो मुखम्महाव्रतमुदान ऽएवोदयनीयोऽतिरात्र ऽउदानेन
ह्युद्यन्ति स ऽएष सँवत्सरोऽध्यात्मम्प्रतिष्ठितः स यो
हैवमेतꣳ सँवत्सरमध्यात्मम्प्रतिष्ठितं वेद प्रतितिष्ठति
प्रजया पशुभिरस्मिँल्लोकेऽमृतत्त्वेनामुष्मिन् ॥ १६ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



यद्दालाके । इदुन्त्रिवृद्देति सर्व्वमन्न्योऽन्न्यमभिसम्प्यमानम् ॥ कथꣳस्विद्यज्ञः पुरुषः प्प्रजापतिरन्न्योऽन्न्यन्नातिरिच्यन्त ऽएते ॥ १ ॥ यदूर्ध्वा स्तोमा ऽअनुयन्ति । यज्ञमभ्यावर्त्तः सामभिः कल्प्पमानाः ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ २ ॥ प्रायणीयोऽतिरात्रः । चतुर्व्विꣳशमहश्चत्वारोऽभिप्प्लवाः पृष्ठ्यऽइत्येते ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ ३ ॥ अभिजिता स्वरसामानः । अभिक्लप्ता ऽउभयतो विषुवन्तमुपयन्ति ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ ४ ॥ त्रिवृत्प्रायाः । सप्पदशाभिक्लृप्प्तास्त्रयस्त्रिꣳशान्ताश्चतुरुत्तरेण ॥ कथꣳस्वित्ते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्तीति ॥ ५ ॥ शिरस्त्रिवृत् । पञ्चदशोऽस्य ग्रीवा ऽउर ऽआहुः सप्पदशाभिक्क्लृप्प्तम् ॥ एकविꣳशमुदरङ्कल्प्पयन्ति पार्श्वे पर्शूस्त्रिणवेनाभिक्क्लृप्प्ते ॥ ६ ॥ अभिप्प्लवा ऽउभयतोऽस्य बाहू । पृष्ठम्पृष्ठ्य ऽइति धीरा वदन्ति ॥ अनूकमस्य चतुरुत्तरेण सँवत्सरे ब्राह्मणाः कल्प्पयन्ति ॥ ७ ॥ कुण्णविस्याभिजिद्विश्वजिच्च । अक्ष्याबाहुः स्वरसामाभिक्लृप्प्ते ॥ नस्यम्प्राणं विषुवन्तमाहुर्गोऽआयुषी प्प्राणावेतावुवाञ्चौ ॥ ८ ॥ अङ्गान्न्यस्य दशरात्रमाहुः । मुखम्महाव्रतꣳ सँवत्सरे ब्राह्मणाः कल्प्पयन्ति ॥ सर्वस्तोमꣳ सर्व्वसामानमेतꣳ सँवत्सरमध्यात्मम्प्रविष्टम् ॥ समन्धीर

ऽआत्मना कल्पयित्वा ब्रध्नस्यास्ते विष्टपेऽजात-शोकः ॥ ९ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



पुरुषो वै सँवत्सरः । पुरुष ऽइत्येकः सँवत्सर ऽइत्येकमत्र तत्समन्द्वे वै सँवत्सरस्याहोरात्रे द्वाविमौ पुरुषे प्प्राणावत्र तत्समन्त्रय ऽऋतवः सँवत्सरस्य त्रय ऽइमे पुरुषे प्प्राणा ऽअत्र तत्समश्चतुरक्षरो वै सँवत्सरश्चतुरक्षरोऽयं यजमानोऽत्र तत्समम्पञ्चर्त्तवः सँवत्सरस्य पञ्चेमे पुरुषे प्प्राणा ऽअत्र तत्समः षडृतवः सँवत्सरस्य षडिमे पुरुषे प्प्राणा ऽअत्र तत्समः सप्तर्त्तवः सँवत्सरस्य सप्तेमे पुरुषे प्प्राणा ऽअत्र तत्समम् ॥ १ ॥ द्वादश वै मासाः सँवत्सरस्य । द्वादशेमे पुरुषे प्प्राणा ऽअत्र तत्समन्त्रयोदश वै मासाः सँवत्सरस्य त्रयोदशेमे पुरुषे प्प्राणा नाभिस्त्रयोदश्यत्र तत्समश्चतुर्विंशतिर्वै सँवत्सरस्यार्द्धमासाश्चतुर्विंशोऽयम्पुरुषो विंशत्यङ्गुलिश्चतुरङ्गोऽत्र तत्समः षड्विंशतिर्वै सँवत्सरस्यार्द्धमासाः षड्विंशोऽयम्पुरुषः प्प्रातिष्ठे षड्विंश्यावत्र तत्समम् ॥ २ ॥ त्रीणि च वै शतानि षष्टिश्च । सँवत्सरस्य रात्रयस्त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीन्यत्र तत्समन्त्रीणि च वै शतानि षष्टिश्च सँवत्सरस्याहानि त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानोऽत्र तत्समम् ॥ ३ ॥ सप्त च

वै शतानि विꣳशतिश्च । सँवत्सरस्याहोरात्राणि सप्त च शतानि विꣳशतिश्च पुरुषस्यास्थीनि च मज्जानश्चात्र तत्समम् ॥ ४ ॥ दश च वै सहस्राण्यष्टौ च शतानि । सँवत्सरस्य मुहूर्त्ता यावन्तो मुहूर्त्तास्तावन्ति पञ्चदश कृत्वः क्षिप्राणि यावन्ति क्षिप्राणि तावन्ति पञ्चदश कृत्व ऽएतर्हीणि यावन्त्येतर्हीणि तावन्ति पञ्चदश कृत्व ऽइदानीनि यावन्तीदानीनि तावन्तः पञ्चदश कृत्वः प्राणा यावन्तः प्राणास्तावन्तोऽना यावन्तोऽनास्तावन्तो निमेषा यावन्तो निमेषास्तावन्तो लोमगर्त्ता यावन्तो लोमगर्त्तास्तावन्ति स्वेदायनानि यावन्ति स्वेदायनानि तावन्त ऽएते स्तोका वर्षन्ति ॥ ५ ॥ एतद्ध स्म वै तद्विद्वानाह वार्कलिः । सार्वभौमम्मेघं वर्षन्तं वेदाहमस्य वर्षस्य स्तोकानिति ॥ ६ ॥ तदेष श्लोकोऽभ्युक्तः । प्रमादन्यत्र परिवर्त्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि ॥ अहोरात्राभ्याम्पुरुषः समेन कति कृत्वः प्राणिति चाप चानितीति ॥ ७ ॥ तदेष श्लोकः प्रत्युक्तः । शतꣳ शतानि पुरुषः समेनाष्टौ शता यन्मितन्तद्वदन्ति ॥ अहोरात्राभ्याम्पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानितीति ॥ ८ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ संवत्सरादि दीक्षापक्षः ]

देवा ह वै सहस्रसँवत्सराय दिदीक्षिरे । तेषाम्पञ्च शतानि सँवत्सराणाम्पर्य्युपेतान्यासुरथेदꣳ सर्वमेव शश्राम

ये स्तोमा यानि पृष्ठानि यानि च्छन्दाᳬंसि ॥ १ ॥ ततो देवाः । एतद्यज्ञस्यायातयामापश्यँस्तेनायातयाम्ना या वेदे व्यष्टिरासीत्तां व्याश्नुवतायातयामा वा ऽअस्य वेदा ऽअयातयाम्न्या हास्य त्रय्या विद्ययार्त्विज्यङ्कृतम्भवति य ऽएवमेतद्वेद ॥ २ ॥ तदेतद्यज्ञस्यायातयाम । ओ श्राव-यास्तु श्रौषड्यज ये यजामहे वौषडिति तासां वा ऽएता-साम्पञ्चानां व्याहृतीनाᳬं सप्तदशाक्षराण्यो श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह ऽइति पञ्चाक्षरम् ॥ ३ ॥ द्व्यक्षरो वषट्कारः । स ऽएष सप्तदशः प्रजापतिरधिदेवतञ्चाध्यात्मञ्च प्रति-ष्ठितः स यो हैवमेतᳬं सप्तदशम्प्रजापतिमधिदेवतञ्चा-ध्यात्मञ्च प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशु-भिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ ४ ॥ ते ह देवा ऽऊचुः । उप तं यज्ञक्रतुञ्जानीत यः सहस्रसँवत्सरस्य प्रतिमा को हि तस्मै मनुष्यो यः सहस्रसँवत्सरेण समाप्नुयादिति ॥ ५ ॥ ते विश्वजितमेव सर्वपृष्ठम् । पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬंसि ॥ ६ ॥ पृष्ठ्यमेव षडहम् । द्वादशाहस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬंसि ॥ ७ ॥ द्वाद-शाहमेव । सँवत्सरस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬंसि ॥ ८ ॥ सँवत्सरमेव । तापश्चितस्याञ्जःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि

पृष्ठानि तानि च्छन्दाᳬसि ॥ ९ ॥ तापश्चितमेव । सहस्र-सँवत्सरस्याञ्जःसवमपञ्चशयँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬसि ॥ १० ॥ स वै सँवत्सरन्दीक्षाभिरेति । सँवत्सरमुपसद्भिः सँवत्सरᳬ सुत्याभिः ॥ ११ ॥ स यत्सँवत्सरन्दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरमुपसद्भिर्मध्यमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरᳬ सुत्याभिरुत्तमार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धे ॥ १२ ॥ स वै द्वादश मासान्दीक्षाभिरेति । द्वादशोपसद्भिर्द्वादश सुत्याभिस्तत्षट्त्रिᳬशत्षट्त्रिᳬशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गे लोकेऽयतन्त बृहत्या स्वर्गँल्लोकमाप्नुवँस्तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्गे लोके यतते बृहत्या स्वर्गँल्लोकमाप्नोत्यथ यो बृहत्याङ्कामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १३ ॥ तद्वा ऽएतत् । त्रयᳬ सह क्रियतेऽग्निरर्कश्चर्यम्महदुक्थᳬ स यत्सँवत्सरन्दीक्षाभिरेति सँवत्सरमुपसद्भिस्तेनास्याग्न्यर्कावाप्तौ भवतोऽथ यत्सँवत्सरᳬ सुत्याभिरेति तेनो ऽएवास्य महदुक्थमाप्तम्भवति स वा ऽएष ऽएव सहस्रसँवत्सरस्य प्रतिमा यत्तापश्चित ऽएष प्रजानाम्प्रजात्यै यत्तापश्चितः ॥ १४ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या १३२ ॥

[ ज्योतिष्टोमे उद्गात्राद्यन्वारम्भः ]

पुरुषꣳ ह नारायणम्प्रजापतिरुवाच । यजस्व यजस्वेति स होवाच यजस्व यजस्वेति वाव त्वम्मामात्थ त्रिरयक्षि वसवꣳ प्रातःसवनेनागू रुद्रा माद्ध्यन्दिनेन सवनेनादित्यास्तृतीयसवनेनाथ मम यज्ञवास्त्वेव यज्ञवास्तावेवाहुमास ऽइति ॥ १ ॥ स होवाच । यजस्वैवाहं वै ते तद्वक्ष्यामि यथा त ऽउक्क्थानि मणिरिव सूत्र ऽओतानि भविष्यन्ति सूत्रमिव वा मणाविति ॥ २ ॥ तस्म्मा ऽउ हैतदुवाच । प्रातःसवने बहिष्पवमान ऽउद्गातारमन्वारभासै श्श्येनोऽसि गायत्रच्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ३ ॥ अथ माद्ध्यन्दिने पवमाने । उद्गातारमन्न्वारभासै सुपर्णोऽसि त्रिष्टुप्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ४ ॥ अथ तृतीयसवन ऽआर्भवे पवमाने । उद्गातारमन्न्वारभासा ऽऋभुरसि जगच्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ५ ॥ अथ सꣳस्थितेषु सꣳस्थितेषु सवनेषु जपेꣳ । मयि भर्ग्गो मयि महो मयि यशो मयि सर्वमिति ॥ ६ ॥ अयं वै लोको भर्ग्गꣳ । अन्तरिक्षलोको महो द्यौर्यशो येऽन्न्ये लोकास्तत्सर्वम् ॥७॥ अग्निर्वै भर्ग्गꣳ । वायुर्म्मह ऽआदित्यो यशो येऽन्न्ये देवास्तत्सर्वम् ॥ ८ ॥ ऋग्वेदो वै भर्ग्गꣳ । यजुर्वेदो महꣳ सामवेदो यशो येऽन्न्ये वेदास्तत्सर्वम् ॥ ९ ॥ वाग्वै भर्ग्गꣳ । प्राणो महश्चक्षुर्यशो येऽन्न्ये प्राणास्तत्सर्वम् ॥ १० ॥ तद्विद्यात् । सर्वाँल्लोकानात्मन्नधिषि सर्वेषु

लोकेष्वात्मानमधाᳪं सर्वान्देवानात्मन्नधिषि सर्वेषु देवेष्वात्मानमधाᳪं सर्वान्वेदानात्मन्नधिषि सर्वेषु वेदेष्वात्मानमधाᳪं सर्वान्प्राणानात्मन्नधिषि सर्वेषु प्राणेष्वात्मानमधामित्यक्षिता वै लोका ऽअक्षिता देवा ऽअक्षिता वेदा ऽअक्षिताः प्राणा ऽअक्षितः सर्वमक्षिताद्ध वा ऽअक्षितमुपसङ्क्रामत्यप पुनर्मृत्युञ्जयति सर्वमायुरेति य ऽएवमेतद्वेद ॥ ११ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ सोमादीनां नित्यत्वम् ]

सावित्रः ह स्मैतम्पूर्वं पशुमालभन्ते । अथैतर्हि प्राजापत्यं एषो ह्येव सविता स प्रजापतिरिति वदन्तस्तस्मात्सद्युप्याग्नीस्तेन यजेरन्गृहपतेरेवाग्निषु यथेदग्राघन्न्या पत्नीः संयाजयन्ति तस्यान्नोऽप्यसदिति ते ततो यदानिकामन्दीक्षन्ते ॥ १ ॥ तदु वा ऽआहुः । नानाधिष्ण्या ऽएव स्युर्यदि दीक्षितस्योपतपेत्पार्श्वतोऽग्निहोत्रञ्जुहवसेत्स यद्यगदो भवति सःसृज्यैनम्पुनरुपह्वयन्ते यद्यु म्रियते स्वैरेव तमग्निभिर्दहन्त्यशवाग्निभिरितरे यजमाना ऽआसत ऽइति तदुहैवाहिताग्नेः कर्म समानधिष्ण्यास्त्वेव भवन्ति तस्य तदेव ब्राह्मणं एषत्पुरश्चरणे ॥ २ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामग्निहोत्रमनन्तरितम्भवतीति व्रतेनेति ब्रूयात् ॥ ३ ॥

तदाहुः । षट्त्सँवत्त्सराय सँवत्त्सरसदो दीक्षन्ते कथमेषा-न्पौर्ण्णमासꣳ हविरनन्तरितम्भवतीत्त्याज्ज्येन च पुरोडाशेन चेति ब्रूयात् ॥ ४ ॥ तदाहुः षट्त्सँवत्त्सराय सँवत्त्सरसदो दीक्षन्ते कथमेषाम्पितृयज्ञोऽनन्तरितो भवतीत्त्यौपासनै-रिति ब्रूयात् ॥५॥ तदाहुः । षट्त्सँवत्त्सराय सँवत्त्सरसदो दीक्षन्ते कथमेषामामावास्यꣳ हविरनन्तरितम्भवतीति दद्ध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥ तदाहुः । षट्त्सँवत्त्सराय सँवत्त्सरसदो दीक्षन्ते कथमेषामाग्ग्रयणेष्टि-रनन्तरिता भवतीति सौम्म्येन चरुणेति ब्रूयात् ॥ ७ ॥ तदाहुः । षट्त्सँवत्त्सराय सँवत्त्सरसदो दीक्षन्ते कथमेषा-ञ्चातुर्म्मास्यान्न्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयात् ॥ ८ ॥ तदाहुः । षट्त्सँवत्त्सराय सँवत्त्सरसदो दीक्षन्ते कथमेषाम्पशुबन्धोऽनन्तरितो भवतीति पशुना च पुरो-डाशेन चेति ब्रूयात् ॥ ९ ॥ तदाहुः । षट्त्सँवत्त्सराय सँव-त्त्सरसदो दीक्षन्ते कथमेषाꣳ सोमोऽनन्तरितो भवतीति सवनैरिति ब्रूयात् ॥ १० ॥ ते वा ऽएवमेते षज्ञक्रतवः । सँवत्त्सरमपियन्ति स यो हैवमेतां य्यज्ञक्रतूनाꣳ सँवत्त्सरेऽ-पीतिं व्वेदाप्प्यस्य स्वर्ग्गे लोके भवति ॥ ११ ॥ सँवत्त्सरस्य समता वेदितव्व्या । एकम्पुरस्ताद्विषुवतोऽतिरात्रमुपयन्त्ये-कमुपरिष्टात्त्रयः पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुप-यन्ति त्रयः पञ्चाशतमुपरिष्टाद्विꣳशतिꣳशतम्पुरस्ताद्विषुवत ऽउक्क्थ्यान्न्यहान्न्युपयन्ति व्विꣳशतिꣳशतमुपरिष्टादिति नु ष ऽउक्क्थ्यान्त्स्वरसाम्म्न ऽउपयन्ति ॥ १२ ॥ अथ

षेऽग्निष्टोमान् । षट्पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमा-
नुपयन्ति षट्पञ्चाशतमुपरिष्टात्सप्तदशꣳ शतम्पुरस्ता-
द्विषुवत ऽउक्थ्यान्यहान्युपयन्ति सप्तदशमुपरिष्टात्षट्
पुरस्ताद्विषुवतꣳ षोडशिन ऽउपयन्ति षडुपरिष्टात्त्रिꣳशत-
म्पुरस्ताद्विषुवतꣳ षडहानुपयन्ति त्रिꣳशतमुपरिष्टादेषा
हास्य समता समेन ह वा ऽअस्याꣳऽऋद्धेनान्यूनेनान-
तिरिक्तेनायनेनेतम्भवति य ऽएवमेतद्वेद ॥ १३ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ अग्निहोत्रप्रायश्चित्तं ब्राह्मणद्वयेन ]

दीर्घसत्त्रꣳ ह वा ऽएत ऽउपयन्ति । येऽग्निहोत्र-
ञ्जुहृत्येतद्वै जरामर्य्यꣳ सत्रं यदग्निहोत्रञ्जरया वा ह्येवा-
स्मान्मुच्यन्ते मृत्युना वा ॥ १ ॥ तदाहुः । यदेतस्य
दीर्घसत्त्रिणोऽग्निहोत्रञ्जुह्वतोऽन्तरेणाग्नी युक्तं वा विया-
यात्सं वा चरेयुः किन्तत्र कर्म्म का प्रायश्चित्तिरिति
कुर्वीत हैव निष्कृतिमपीष्ट्या यजेत तदु तन्नाद्रियेतेमान्वा
ऽएष लोकाननुवितनुते योऽग्नी ऽआधत्ते ॥ २ ॥ तस्या-
यमेव लोको गार्हपत्यः । अन्तरिक्षलोकोऽन्वाहार्य्यपच-
नोऽसौ लोक ऽआहवनीयः कामन्वा ऽएषु लोकेषु वया-
ꣳसि युक्तञ्चायुक्तञ्च सञ्चरन्ति स यदि हास्याप्यन्तरेण
ग्रामोऽग्नीन्वियायान्नैव मे का चनार्त्तिरस्ति न रिष्टिरिति

हैव विद्यात् ॥ ३ ॥ त्रयो ह त्वाव पशवोऽमेध्याः । दुर्वराह ऽएडकः श्वा तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्सञ्चरेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके गार्हपत्याद्भस्मोपहृत्याहवनीयान्निवपन्तो यन्ती'दं विष्णुर्विचक्रम, ऽइत्येतयर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तन्मो भस्मनास्य पदमपिवपाम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादासान्न्वा ऽअयं यजमानस्यावाप्सीत्क्षिप्रे परमासानावप्स्यते ज्येष्ठगृह्यश्च रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्य्यात् । उदस्थालीं वैवोदकमण्डलुं वादाय गार्हपत्यादग्र ऽआहवनीयान्निनयन्नियादिदं विष्णुर्विचक्रम ऽइत्येतयैवर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तनोति यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयत्येतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याग्निहोत्रन्दोह्यमानꣳ स्कन्देत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यदु नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्रायश्चितेनैवाभिमृश्याद्भिरुपनिनीय यदन्यद्विन्देत्तेन जुहुयात् ॥ ६ ॥* अथ यत्र स्कन्नꣳ स्यात् । तदभिमृशेदस्कन्नधित प्राजनीति यदा वै स्कन्दत्यथ धीयते यदा धीयतेऽथ प्रजायते योनिर्वा ऽइयः रेतः पयस्तदस्यां योनौ रेतो दधात्यनुष्ठ्या हास्य रेतः सिक्तम्प्रजायते

(१) शु० य० सं० ५. १५ । ऋ० सं० १. २. ७ । का० श्रौ० सू० २५. ४. १८ ।

* अत्र शतम् ६१०० ।

य ऽएवमेतद्वेदामुतो वै दिवो वर्षतीहौषधयो वनस्पतयः प्रजायन्ते पुरुषाद्रेत स्कन्दति पशुभ्यस्तत ऽइदꣳ सर्वं-म्प्रजायते तद्विद्याद्भूयसी मे प्रजातिरभूद्बहुः प्रजया पशुभिर्भविष्यामि श्रेयान्भविष्यामीति ॥ ७ ॥ अथ यत्रावभिन्नꣳ स्यात् । तदुदस्थालीं वैवोदकमण्डलुं वा निनयेद्यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयति भूर्भुवः स्वरित्येताभि-र्व्याहृतिभिरेता वै व्याहृतयः सर्वप्रायश्चित्तीस्तदनेन सर्वेण प्रायश्चित्तिं कुरुते तानि कपालानि सञ्चित्य यत्र भस्मोद्धृतꣳ स्यात्तन्निवपेदेतदेव तत्र कर्म ॥ ८ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमानोपविशेत्किन्तत्र कर्म का प्रायश्चित्तिरिति ताꣳ हैके यजुषोत्थापयन्त्युदस्था[1]-द्देव्यदितिरितीयं वा ऽअदितिरिमामेवास्मा ऽएतदुत्थाप-याम ऽइति वदन्त ऽआयुर्यज्ञपतावधादित्यायुरेवास्मिँस्त-द्दध्म ऽइति वदन्त ऽइन्द्राय कृण्वती भागमितीन्द्रियमे-वास्मिँस्तद्दध्म ऽइति वदन्तो मित्राय वरुणाय चेति प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवास्मिँस्तद्दध्म ऽइति वदन्तस्तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमनभ्याग-मिष्यन्मन्येतार्त्तिं वा ऽएषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षदार्त्तिमेवास्मिँस्तत्पाप्मानम्प्रतिमुञ्चाम ऽइति वदन्तः ॥ ९ ॥ तदुहोवाच याज्ञवल्क्यः । अश्र-द्दधानेभ्यो हैभ्यो गौरपक्रामत्यार्त्यौ वा ऽआहुतिं

(१) का० श्रौ० सू० २५. १. १२ ।

विद्ध्यन्तीत्थमेव कुर्य्याद्दण्डेनैवैनां विपिष्ट्योत्थापयेदिति तद्यथैवादो धावयतोऽश्वो वाऽश्वतरो वा गदायेत बलीवर्द्दो वा युक्तस्तेन दण्डप्प्रजितेन तोत्त्रप्प्रजितेन यमद्ध्वानꣳ समीप्प्सति तꣳ समश्नुत ऽएवमेवैतया दण्डप्प्रजितया तोत्त्रप्प्रजितया यꣳ स्वर्ग्गँल्लोकꣳ समीप्प्सति तꣳ समश्नुते ॥ १० ॥ अथ होवाचारुणिः । द्यौर्वा ऽएतस्याग्निहोत्रस्याग्निहोत्र्ययमेव वत्सो योऽयम्पवत ऽइयमेवाग्निहोत्रस्थाली न वा ऽएवं विदुषोऽग्निहोत्री नश्यति क्क ह्यसौ नश्येन्नैवं विदुषोऽग्निहोत्रीवत्सो नश्यति क्क ह्येष नश्येन्नैवं विदुषोऽग्निहोत्रस्थाली भिद्यते क्क ह्येयम्भिद्येत श्रियो वै पर्ज्जन्न्यो वर्षति तद्दिव्याच्छ्रेमाणम्मे महिमानमधारयमाणोपाविक्षच्छ्रेयान्भविष्याम्मीति तामात्मन्न्येव कुर्वीतात्मन्न्येव तच्छ्रियन्धत्त ऽइति ह स्माहारुणिरेतदेव तत्र कर्म्म ॥ ११ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमाना वाश्येत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति स्तम्बमाच्छिद्य ग्रासयेदेतदेव तत्र कर्म्म ॥ १२ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

तदाहुः । यस्याग्निहोत्री लोहितन्दुहीत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति व्युत्क्रामतेत्युक्त्वा मेक्षणङ्खात्वान्वाहार्य्यपचनम्परिश्रयितवै ब्रूयात्तस्मिन्नेनच्छ्रपयि-

(१) का० श्रौ० सू० २५. १. १८ । ( २ ) का० श्रौ० सू० २५. २. २ ।

त्वा तस्मिँस्तूष्णीञ्जुहुयादनिरुक्तो वै प्रजापतिः प्राजापत्यमग्निहोत्रꣳ सर्वं वा ऽअनिरुक्तन्तदनेन सर्वेण प्रायश्चित्तिङ्कुरुते तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमन-भ्यागमिष्यन्मन्येतार्त्तिं वा ऽएषा पाप्मानं यजमानस्य प्रतिदृश्य दुहे या लोहितन्दुह ऽआर्त्तिमेवास्मिँस्तत्पा-प्मानम्प्रतिमुञ्चत्यथ यदन्यद्विन्देत्तेन जुहुयादनार्त्तेनैव तदार्त्तं यज्ञस्य निष्करोत्येतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याग्निहोत्रन्दोह्यमानममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नै-तस्याहोमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्ते बीभत्सन्ता३ऽइ तु देवा ऽइत्थमेव कुर्य्याद्गार्हपत्यादुष्णं भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मँस्तूष्णीन्निनयेदद्भि-रुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेत-देव तत्र कर्म्म ॥ २ ॥ तदाहुः । यस्याग्निहोत्रन्दोहितम-मेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति य ऽएवै-तेऽङ्गारा निरूढा येष्वधिश्रयिष्यन्भवति तान्प्रत्युह्य तस्मिन्नेनदुष्णे भस्मँस्तूष्णीन्निनयेदद्भिरुपनिनयत्य-द्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति य ऽएवैतेऽङ्गारा निरूढा येष्वधिश्रितम्भवति तेष्वेनत्तूष्णीञ्जुहुयात्तद्धुत-महुतं यदुहैनत्तेषु जुहोति तेन हुतं यद्वेनाँस्तेनैवानुगम-

(१) "०दनिरुक्तमनिरुक्तो" इति 'ग' 'ज' पुस्तकयोः।

यति तेनाहुतमद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ४ ॥ तदाहुः । यदुधिश्रितेऽग्निहोत्रे यजमानो म्रियेत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तदेवैनदभिपर्य्याधाय विष्पन्दयेदथो खल्वाहुरेतावती सर्वस्य हविर्य्यज्ञस्य प्रायश्चित्तिरित्येतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याग्निहोत्रꣳ स्रुच्युन्नीतꣳ स्कन्देत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्यु नीची स्रुक् स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यत्स्थाल्ल्याम्परिशिष्टꣳ स्यात्तेन जुहुयात् ॥ ६ ॥ तद्धैके । प्रतिपरेत्य यत्स्थाल्ल्याम्परिशिष्टम्भवति तेन जुह्वति तदु तथा न कुर्य्यात्स्वर्ग्यं वा ऽएतद्यदग्निहोत्रं य्यो हैनन्तत्र ब्रूयात्प्रति न्वा ऽअयꣳ स्वर्ग्गाल्लोकादुवारुक्षन्नास्येदꣳ स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ७ ॥ इत्थमेव कुर्य्यात् । तदेवोपविशेद्यत्स्थाल्ल्याम्परिशिष्टꣳ स्यात्तदस्मा ऽउन्नीयाहरेयुस्तद्धैक ऽउपवल्हन्ते हुतोच्छिष्टं वा ऽएतद्यातयाम वा ऽएतन्नैतस्य होतव्यमिति तदु तन्नाद्रियेत यदा वा ऽएतदुयातयामाथैनद्धविरातञ्चनङ्कुर्वते तस्माद्यत्स्थाल्ल्याम्परिशिष्टꣳ स्यात्तदस्मा ऽउन्नीयाहरेयुर्य्यद्यु तत्र न स्याद्यदन्यद्विन्देत्तदग्नावधिश्रित्यावज्ज्योत्यापः प्रत्यानीयोद्वास्य तदद्वो हैवोन्नेष्यामीत्युक्तम्भवत्यथात्र यथोन्नीतमेवास्मा ऽउन्नीयाहरेयुस्तेन कामञ्जुहुयादेतदेव तत्र कर्म्म ॥ ८ ॥ तदाहुः ।

यस्याग्निहोत्रꣳ स्रुच्युन्नीतममेध्यमापद्येत किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्प्रयतमेतन्नैतस्याहोमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्त ऽइति तद्धैक ऽउत्सिच्य च्छर्दयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयात्परासिश्चत न्वा ऽअयमग्निहोत्रं क्षिप्प्रेऽयं य्यजमानः परासेक्ष्यत ऽइतीश्वरो ह तथैव स्यादित्थमेव कुर्य्यादाहवनीये समिधमभ्याधायाहवनीयादुदीचोऽणनम्भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मँस्तूष्णीन्निर्णयेदद्भिरुपनिनयत्यद्भिरेनदाप्प्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ९ ॥ तदाहुः । यस्याग्निहोत्रꣳ स्रुच्युन्नीतमुपरिष्टादववर्षेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्मा शुक्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्भविष्यामीति तेन कामञ्जुहुयादेतदेव तत्र कर्म्म ॥ १० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ गार्हपत्याद्यनुगमने प्रायश्चित्तम् ]

तदाहुः । यत्पूर्वस्यामाहुत्याꣳ हुतायामथाग्निरनुगच्छेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति यम्प्रतिवेशः शकलं विन्देत्तमभ्यस्याभिजुहुयाद्दारौ दारावग्निरिति वदन्दारौ दारौ ह्येवाग्निर्यद्यु ऽअस्य हृदयं व्येव लिखेद्धिरण्यमभिजुहुयादग्नेर्वा ऽएतद्रेतो यद्धिरण्यं य्ष ऽउ वै पुत्रः स पिता यः पिता स पुत्रस्तस्माद्धिरण्यमभिजुहुयादेतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याहवनीय ऽउद्धृतः

पुराग्निहोत्रादनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयात्स यद्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेद्गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयादेतदेव तत्र कर्म्म ॥२॥ [अर्धः प्रपाठकः ४८] तदाहुः । यस्य गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्ध हैक ऽउल्मुकादेव निर्म्मन्थन्ति यतो वै पुरुषस्यान्ततो नश्यति ततो वै स तस्य प्रायश्चित्तिमिच्छत ऽइति वदन्तस्तदु तथा न कुर्य्यादुल्मुकद्ध ह वै वादाय चरेयुरुल्मुकस्य वावव्रश्चमित्थमेव कुर्य्यादुल्मुकादङ्गारमादाय तमरण्योरभिविमथ्नीयादुप ह तङ्कामम्माप्नोति य ऽउल्मुकमथ्य ऽउपो तं ह्यो ऽरण्योरेतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्याग्नावग्निमभ्युद्धरेयुः किन्तत्र कर्म्म का प्रायश्चित्तिरितीश्वरौ वा ऽएतौ सम्पद्याशान्तौ यजमानस्य प्रजाञ्च पशूँश्च निर्द्दहस्तदभिमन्त्रयेत '[1]समितं सङ्कल्पेथाथं सम्प्रियौ रोचिष्णू सुमनस्यमानौ ॥ इषमूर्ज्जमभि संवसानौ ॥ सं वाम्मनाथंसि सं व्रता समु चित्तान्याकरम् ॥ अग्ने पुरीष्याधिपा भव त्वन्न ऽइषमूर्ज्जं यजमानाय धेही'ति शान्तिमेवाभ्यामेतद्दधाति यजमानस्य प्रजायै पशूनामहिंसायै ॥ ४ ॥ यद्यु ऽअस्य हृदयं व्येव लिखेत् । अग्नयेऽग्निमतेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ऽअथैते याज्यानुवाक्ये

(१) शु० य० सं० ( अ० १२ क० ५७–५८ ) ।

ऽ'अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ॥ हव्यवाड्जुह्वास्य' ऽइत्यथ याज्या 'त्वꣳह्यग्ने ऽअग्निना विप्रो विप्रेण सन्त्सता॥ सखा सख्या समिध्यस' ऽइति शान्तिमेवाभ्यामेतद्वदति यजमानस्य प्रजायै पशूनामहिꣳसाया ऽएतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याहवनीयेऽननुगते गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तꣳ हैके तत ऽएव प्राञ्चमुद्धरन्ति प्राणा वा ऽअग्नयः प्राणानेवास्मा ऽएतदुद्धराम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्राचो न्वा ऽअयं यजमानस्य प्राणान्प्रारौत्सीन्मरिष्यत्ययं यजमान ऽइतीश्वरो ह तथैव स्यात् ॥ ६ ॥ अथ हैके प्रत्यञ्चमाहरन्ति । प्राणोदानाविमाविति वदन्तस्तदु तथा न कुर्य्यात्स्वर्ग्यं वा ऽएतद्यदग्निहोत्रं यो हैनन्तत्र ब्रूयात्प्रति न्वा ऽअयꣳ स्वर्गाल्लोकादवारुक्षन्नास्येदꣳ स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ७ ॥ अथ हैकेऽन्यङ्गार्हपत्यम्मन्थन्ति । तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादग्नेर्न्वा ऽअयमधि द्विषन्तम्भ्रातृव्यमजीजनत क्षिप्रेऽस्य द्विषद्भ्रातृव्यो जनिष्यते प्रियतमꣳ रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ८ ॥ अथ हैकेऽनुगमय्यान्यम्मन्थन्ति । तस्याशान्तेयादपि यत्परिशिष्टमभूत्तदजीजसत नास्य दायादश्चन परिशेक्ष्यत ऽइतीश्वरो ह तथैव स्यात् ॥ ९ ॥ इत्थमेव कुर्य्यात् । अरण्योरग्नी समारोह्योदङ्ङुदवसाय निर्म्मथ्य जुहुयात्तथा ह न

(१) ऋ० सं० १, १. २२ । (२) ऋ० सं० ६. ३. ३१. ।

काञ्चन परिचक्षाङ्करोति नवावसान ऽउ ऽअस्याभितोरात्रꣳ हुतम्भवति * ॥ १० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अग्न्यन्तरसंसर्गादौ प्रायश्चित्तम् ]

अथ प्प्रातर्ब्भस्म्माद्ध्युद्धृत्य । गोमयेनालिप्प्यारण्ण्योरेवाग्न्नी समारोह्य प्प्रत्त्यवस्यति मथित्त्वा गार्हपत्त्यमुद्धृत्त्याहवनीयमाहृत्त्यान्न्वाहार्य्यपचनमग्ग्नये पथिकृतेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्ज्यभागौ व्विराजौ संय्याज्ज्ये ऽअथैते याज्यानुवाक्क्ये 'व्वेत्त्था हि व्वेधो ऽअद्ध्वनः पथश्च्च देवाञ्जसा ॥ अग्ग्ने यज्ञेषु सुक्क्रत'विर्त्त्यथ याज्या'देवानामपि पन्थामगन्म यच्छक्क्नवाम तदनुप्प्रवोढुम् ॥ अग्निर्व्विद्वान्त्स यजात्सेदु होता सो ऽअद्ध्वरान्त्स ऽऋतून्कल्पयाती'त्त्यग्निर्व्वै पथिकृत्पथामपिनेता स ऽएवैनं य्यज्ञपथमपिनयत्त्येतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याग्नयः सꣳसृज्ज्येरन्न्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति स यदि परस्ताद्दहन्नभीयात्तद्विद्यात्परस्तान्न्मा शुक्क्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्न्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेदग्ग्नये व्विविचयेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्ज्यभागौ व्विराजौ संय्याज्ज्ये ऽअथैते

* का० श्रौ० सू० २५. ३. ४–९।

(१) ऋ० सं० ४. ५. २१। (२) ऋ० सं० ७. ५. ३०।

याज्यानुवाक्ये 'वि ते वि[1]ष्वग्ग्वातजूतासो ऽअग्ग्ने भामासः शुचे शुचयश्चरन्ति ॥ तुविम्म्रक्षासो दिव्व्या नवग्ग्वा वना वनन्ति धृषता रुजन्त' इत्त्यथ याज्या 'त्वा[2]मग्ग्ने मानुषीरीडते विशो होत्राविदं विविचिꣳ रत्नधातमम् ॥ गुहा सन्तꣳ सुभग विश्श्वदर्शतन्तुविष्ष्वणसꣳ सुयजङ्घृतश्श्रिय'मित्त्यथो ह यो द्विषतो ब्भ्रातृव्व्याद्व्याविवृत्सेत तत्काम ऽएतया यजेत वि हैवास्म्माद्वर्त्तत ऽएतदेव तत्र कर्म्म ॥ २ ॥ यद्ययमितो दुहन्नभीयात् । तद्विद्यादभि द्विषन्तम्भ्रातृव्व्यम्भविष्ष्यामि श्श्रेयान्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेदग्ग्नये संवर्ग्गायाष्ष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्प्तदश सामिधेनीरनुब्ब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ सꣳयाज्ज्ये ऽअथैते याज्ज्यानुवाक्क्ये 'परस्या[3] ऽअधि संवतोऽवराꣳ॥ऽअब्भ्यातर ॥ यत्राहमस्स्मि ताꣳ॥ ऽअवे'त्त्यथ याज्ज्या 'मा[4] नो ऽअस्स्मिन्न्महाधने परावर्ग्भारभृद्यथा ॥ संवर्ग्गꣳ सꣳ रयिञ्जये'त्त्यथो ह यो द्विषतो ब्भ्रातृव्व्यात्संविवृक्षेत तत्काम ऽएतया यजेत सꣳ हैवास्म्माद्वृङ्क्त ऽएतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्य वैद्युतो दुहेत्किन्तत्र कर्म्म का प्प्रायश्चित्तिरिति तद्विद्यादुपरिष्ट्टान्न्मा शुक्क्रमागन्नुप मान्देवाः प्प्राभूवञ्छ्रेयान्भविष्ष्यामीति यद्यु ऽअस्य हृदयं व्व्येव लिखेदग्ग्नयेऽप्प्सुमतेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्प्तदश सामिधेनीरनु-

---

(१) ऋ० सं० ४. ५. ८। (२) ऋ० सं० ३. ८. २६। (३) शु० य० सं० ११. ७१। (४) ऋ० सं० ६. ५. २६।

ब्ब्रूयाद्द्वार्भ्ग्नावाज्ज्यभागौ विराजौ सँस्थाज्ज्ये ऽअथैते याज्ज्यानुवाक्क्ये 'ऽअप्प्स्वग्ग्ने सधिष्ट्व सौषधीरनुरुद्ध्यसे॥ गब्भें सञ्जायसे पुन'रित्त्यथ याज्ज्या 'गब्भों ऽअस्योषधीनाङ्गब्भों व्वनस्पतीनाम् । गब्भों व्विश्श्वस्य भूतस्याग्ग्ने गब्भों ऽअपामसी'ति शान्तिमेवाब्भ्यामेतद्दधाति यजमानस्य प्प्रजायै पशूनामहिंःसाया ऽएतदेव तत्र कर्म्म॥ ४॥ तदाहुः । यस्याग्ग्नयोऽमेध्यैरग्ग्निभिः सःसृज्ज्येरन्किन्तत्र कर्म्म का प्प्रायश्चित्तिरित्त्यग्ग्नये शुचयेऽष्टाकपालम्पुरोडाशन्निर्व्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्ब्रूयाद्द्वार्भ्ग्नावाज्ज्यभागौ विराजौ संस्थाज्ज्ये ऽअथैते याज्ज्यानुवाक्क्ये 'ऽअग्ग्निः शुचिव्रततमः शुचिर्व्विप्प्रः शुचिः कविः॥ शुची रोचत ऽआहुत' इत्त्यथ याज्ज्यो'दग्ग्ने शुचयस्तव शुक्क्रा ब्भ्राजन्त ऽईरते॥ तव ज्ज्योतीःष्यर्च्चय' ऽइति शान्तिमेवाब्भ्यामेतद्दधाति यजमानस्य प्प्रजायै पशूनामहिंःसाया ऽएतदेव तत्र कर्म्म॥ ५॥ तदाहुः । यस्याहवनीयमनुद्धृतमादित्त्योऽब्भ्यस्तमियात्किन्तत्र कर्म्म का प्प्रायश्चित्तिरित्त्येते वै रश्म्मयो व्विश्श्वे देवास्तेऽस्म्मादपप्प्रयन्ति तदस्म्मै व्व्यृद्ध्यते यस्म्माद्देवा ऽअपप्प्रयन्ति तामनु व्व्यृद्धिं यश्च व्वेद यश्च न ता ऽउभावाहतुरनुद्धृतमस्याब्भ्यस्तमगादिति तत्रेत्थङ्कुर्य्याद्धरितः हिरण्यन्दब्भें प्प्रबद्ध्य पश्चाद्धर्त्तवै ब्ब्रूयात्तदेतस्य रूपङ्क्रियते य ऽएष तपत्यहर्व्वा ऽएष तदहृन्नो

(१) ऋ० सं० ६. ३. ३०। शु० य० सं० १२. ३६। (२) शु० य० सं० १२. ३७। (३) ऋ० सं० ६. ३. ४०। (४) ऋ० सं० ६. ३. ३९।

रूपङ्क्रियते पवित्रन्दर्भाः पवयत्त्येवैनन्तदुथेद्धममादीप्प्य प्प्राञ्चः हर्त्तवै ब्रूयाद्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा ऽआर्षेयः सर्वा देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्प्रतिपरेत्त्य गार्हपत्य ऽआज्यमधिश्रित्त्योद्वास्योत्त्पूयावेक्ष्य चतुर्ग्गृहीतमाज्यङ्गृहीत्त्वा समिधमुपसङ्गृह्य प्प्राङुदाद्रवत्त्यथाहवनीये समिधमब्भ्याधाय दक्षिणञ्जान्न्वाच्च्य जुहोति विश्श्वेब्भ्यो देवेब्भ्यः स्वाहेति स यथा ब्राह्मणमावसथवासिनङ्क्रुद्धं स्यन्तमुक्षवेहुतोपमन्त्रयेतैवमेवैतद्विश्श्वान्देवानुपमन्त्रयते जानन्ति हैनमुप हैनमावर्त्तन्त ऽएतदेव तत्र कर्म्म ॥ ६ ॥ तदाहुः । यस्याहवनीयमनुद्धृतमादित्त्योऽब्भ्युदियात्त्किन्तत्र कर्म्म का प्प्रायश्चित्तिरित्त्येते वै रश्श्मयो विश्श्वे देवास्तेऽस्स्मादूषिवाꣳसोऽपप्प्रयन्ति तदस्स्मै व्व्यृद्ध्यते यस्स्माद्देवा ऽअपप्प्रयन्ति तामनु व्व्यृद्धिं स्यश्च वेद यश्च न ता ऽउभा वाहतुरनुद्धृतमस्याब्भ्युदगादिति तत्रेत्थङ्कुर्याद्रजतः हिरण्यन्दर्भे प्प्रबद्ध्य पुरस्ताद्धर्त्तवै ब्रूयात्त्चन्द्रमसो रूपङ्क्रियते रात्त्रिर्वै चन्द्रमास्तद्रात्त्रे रूपङ्क्रियते पवित्रन्दर्भाः पवयत्त्येवैनन्तदुथेद्धममादीप्प्याञ्चवञ्चः हर्त्तवै ब्रूयाद्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा ऽआर्षेयः सर्वा देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्प्रतिपरेत्त्य गार्हपत्य ऽआज्यमधिश्रित्त्योद्वास्योत्त्पूयावेक्ष्य यथागृहीतमाज्यङ्गृहीत्त्वा समिधमुपसङ्गृह्य प्प्राङुदाद्रवत्त्यथाहवनीये समिधमब्भ्याधाय दक्षिणञ्जान्न्वाच्च्य जुहोति

विश्श्वेब्भ्यो देवेब्भ्यः स्वाहेति सोऽसावेव बन्धुर्न्न ह वै तत्र का चनार्त्तिर्न्न रिष्टिर्ब्भवति यत्रैषा प्प्रायश्चित्तिः क्रियत ऽएतदेव तत्र कर्म्म ॥ ७ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ मृताग्निहोत्रनिरूपणम् ]

तदाहुः । यदेष दीर्ग्घसत्त्र्यग्निहोत्रञ्जुह्वत्प्रवसन्म्म्रियेत जुहुयुरस्म्मा३ ऽइ ना३ ऽइति तद्धैके होतव्यम्मन्न्यन्त ऽआगन्तोरिति तदु तथा न कुर्य्यादुतस्त्थानो वा ऽएष तस्म्मै यदेनः शवद्ध्वाया ऽइव जुहुयुर्य्यज्ञाय वा ऽएष ऽआहुतिब्भ्यस्तस्त्थानः स हैनमम्मृष्यमाणस्तृप्प्रः सचते ॥ १ ॥ अथ हैक ऽआहुः । एवमेवान्न्वाहिता ऽआहूय-मानाः शयीरन्निति तदु तथा न कुर्य्यादुतस्त्थानो वा ऽएष तस्म्मै यदेनः शवद्ध्वाया ऽइवेन्धीरन्न्यज्ञाय वा ऽएष ऽआहुतिब्भ्यस्तस्त्थानः स हैनमम्मृष्यमाणस्तृप्प्रः सचते ॥ २ ॥ अथ हैकेऽरण्योः । अग्नी समारोह्य निदधति तमाहृते निर्म्मन्थन्ति तदु तथा न कुर्य्यादुत-स्त्थानो वा ऽएष तस्म्मै यदेनः शवद्ध्वाया ऽइव निर्म्मन्थेयुर्य्यज्ञाय वा ऽएष आहुतिब्भ्यस्तस्त्थानः स हैनमम्मृष्यमाणस्तृप्प्रः सचते ॥ ३ ॥ इत्थमेव कुर्य्यात् । निवान्न्यवत्सामेष्वैवै ब्रूयात्तस्यै पयसा जुहुयादार्त्तं वा

ऽएतत्पयो यन्निवान्न्यवत्साया * ऽआर्त्तमेतदग्निहोत्रं य्यथ-न्मृतस्य तदार्त्तेनैव तदार्त्तन्निष्कृत्य श्श्रेयान्न्भवति ॥ ४ ॥ तदुप्प्युपमास्ति । यद्द्वौ रथौ मृदितौ समागच्छेतान्ताभ्यां स्यादेवान्न्यतरः स्यदायेति ॥ ५ ॥ तस्य वा ऽएतस्या-ग्निहोत्रस्योपचारः । प्राचीनावीती दोहयति यज्ञोपवीती वै देवेब्भ्यो दोहयत्त्यथैवम्पितृणाम् ॥६॥ नाङ्गारेष्ष्वधिश्श्रयति । यद्धाङ्गारेष्ष्वधिश्श्रयेद्देवत्रा कुर्य्याद्गार्हपत्त्यादुष्णम्भस्म दक्षिणा निरुह्य तस्मिन्नेनदधिश्श्रयति पितृदेवत्त्यमेवैनत्तत्करोति ॥७॥ नावज्ज्योतयति नापः प्प्रत्त्यानयति । यद्धावज्ज्योतये-द्यदपः प्प्रत्त्यानयेद्देवत्रा कुर्य्यान्न त्रिः प्प्रतिष्ठापः हरति यत्त्रिः प्प्रतिष्ठापः हरेद्देवत्रा कुर्य्यात्सकृदेव निकर्षन्न्हरति पितृदेवत्त्यमेवैनत्तत्करोति ॥ ८ ॥ नोन्नेष्ष्यामीत्याह । न चतुरुन्नयति यद्धोन्नेष्ष्यामीति ब्ब्रूयाद्यच्चतुरुन्नयेद्देवत्रा कुर्य्या-त्सकृदेव तूष्णीन्न्यक्क्पर्य्यस्यति पितृदेवत्त्यमेवैनत्तत्करोति ॥ ९ ॥ नोपरिष्टात्समिधमब्भ्यस्य हरति । यद्धोपरिष्टा-त्समिधमब्भ्यस्य हरेद्देवत्रा कुर्य्याद्धस्तादुपास्य हरति पितृ-देवत्त्यमेवैनत्तत्करोति ॥ १० ॥ नोत्तरेण गार्हपत्त्यमेति । यद्धोत्तरेण गार्हपत्त्यमियाद्देवत्रा कुर्य्याद्दक्षिणेन गार्हपत्त्य-मेति पितृदेवत्त्यमेवैनत्तत्करोति ॥ ११ ॥ अथ यान्न्यमू-न्न्युदीचीनाग्ग्राणि तृणानि भवन्ति । दक्षिणाग्ग्राणि तानि करोति पितृदेवत्त्यमेवैनत्तत्करोत्त्यथाहवनीये समिधमब्भ्या-धाय सव्व्यञ्जान्न्वाच्च्य सकृदेव तूष्णीन्न्यक्क्पर्य्यस्यति

* निवः पाता अन्यः परकीयवत्सो यस्याः । परकीयेण वत्सेन या मृतवत्सा गौर्दुह्यते सा निवान्यवत्सा । "अभिमृश्यार्धाः पिष्ट्वा निवान्यादुग्धे" ( का० श्रौ० सू० ५. ८. १८ ) ।

पितृदेवत्यमेवैनत्तत्करोति नोदिङ्गयति नोपमृष्टे न प्प्राश्नाति नोदुक्षति पितृदेवत्यमेवैनत्तत्करोति ॥ १२ ॥ तदाहुः । यदेष दीर्घसत्त्र्यग्निहोत्र्युहुवत्प्रवसन्म्रियेत कथमेनमग्निभिः कुर्युरिति तः हैके दग्ध्वाहरन्ति तमाहृतमग्निभिः सङ्क्षापयन्ति तदु तथा न कुर्याद्यथान्यस्यां य्योनौ रेतः सिक्तन्तदन्यस्याम्प्रजिजनयिषेत्तादृक्तदुस्त्थीन्येतान्याहृत्य कृष्णाजिने न्युप्य पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य तमग्निभिः समुपोषेत्तदेनं स्वाद्योनेः प्रजनयतीति ॥ १३ ॥ तः हैके ग्रामाग्निना दहन्ति । तदु तथा न कुर्यादेष वै विश्वात्क्रव्यादग्निः स हैनमीश्वरः सपुत्रः सपशुः समन्तोः ॥ १४ ॥ अथ हैके प्रदव्येन दहन्ति । तदु तथा न कुर्यादेष वा ऽअशान्तोऽग्निः स हैनमीश्वरः सपुत्रः सपशुम्प्रदग्धोः ॥ १५ ॥ अथ हैक ऽउल्मुक्येन दहन्ति । तदु तथा न कुर्यादेष वै रुद्रियोऽग्निः स हैनमीश्वरः सपुत्रः सपशुमभिमन्तोः ॥ १६ ॥ अथ हैकेऽन्तरेणाग्नीश्चितिश्चित्वा । तमग्निभिः समुपोषन्त्येतद्वै यजमानस्यायतनं यदन्तरेणाग्नीनिति तदु तथा न कुर्याद्यो हैनन्तत्र ब्रूयान्मद्ध्ये न्वा ऽअयङ्कामस्याशसनमजीजनत क्षिप्रेऽस्याशसनञ्जनिष्यते प्रियतमः रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



ऽएतत्पयो यन्निवान्न्यवत्साया * ऽआर्त्तमेतदग्निहोत्रं यस्य-
न्मृतस्य तदार्त्तेनैव तदार्त्तन्निष्कृत्य श्श्रेयान्भवति ॥ ४ ॥
तदप्प्युपमास्ति । यद्द्वौ रथौ मृदितौ समागच्छेतान्ताभ्याᳬ
स्यादेवान्न्यतरः स्यदायेति ॥ ५ ॥ तस्य वा ऽएतस्या-
ग्निहोत्रस्योपचारः । प्राचीनावीती दोहयति यज्ञोपवीती वै
देवेब्भ्यो दोहयत्त्यथैवम्पितृणाम् ॥६॥ नाङ्गारेष्ष्वधिश्श्रयति ।
यद्धाङ्गारेष्ष्वधिश्श्रयेद्देवत्रा कुर्य्याद्गार्हपत्त्यादुष्णम्भस्म दक्षिणा
निरुह्य तस्मिन्नेनदधिश्श्रयति पितृदेवत्त्यमेवैनत्तत्करोति ॥७॥
नावज्ज्योतयति नापः प्प्रत्यानयति । यद्धावज्ज्योतये-
द्यदपः प्प्रत्त्यानयेद्देवत्रा कुर्य्यान्न त्रिः प्प्रतिष्ठापः हरति
यत्रिः प्प्रतिष्ठापः हरेद्देवत्रा कुर्य्यात्सकृदेव निकर्षन्न्हरति
पितृदेवत्त्यमेवैनत्तत्करोति ॥ ८ ॥ नोन्नेष्ष्यामीत्याह । न
चतुरुन्नयति यद्धोन्नेष्ष्यामीति ब्रूयाद्यच्चतुरुन्नयेद्देवत्रा कुर्य्या-
त्सकृदेव तूष्णीन्न्यक्क्पर्य्यस्यति पितृदेवत्त्यमेवैनत्तत्करोति
॥ ९ ॥ नोपरिष्टात्समिधमब्भ्यस्य हरति । यद्धोपरिष्टा-
त्समिधमब्भ्यस्य हरेद्देवत्रा कुर्य्यादधस्तादुपास्य हरति पितृ-
देवत्त्यमेवैनत्तत्करोति ॥ १० ॥ नोत्तरेण गार्हपत्त्यमेति ।
यद्धोत्तरेण गार्हपत्त्यमियाद्देवत्रा कुर्य्याद्दक्षिणेन गार्हपत्त्य-
मेति पितृदेवत्त्यमेवैनत्तत्करोति ॥ ११ ॥ अथ यान्न्यमू-
न्न्युदीचीनाग्ग्राणि तृणानि भवन्ति । दक्षिणाग्ग्राणि तानि
करोति पितृदेवत्त्यमेवैनत्तत्करोत्त्यथाहवनीये समिधमब्भ्या-
धाय सव्व्यज्ञान्न्वाच्च्य सकृदेव तूष्णीन्न्यक्क्पर्य्यस्यति

* निवः पाता अन्यः परकीयवत्सो यस्याः । परकीयेण वत्सेन या मृतवत्सा गौर्दुह्यते सा निवान्यवत्सा । "अभिमृश्यार्धाः पिष्ट्वा निवान्यादुग्धे" ( का० श्रौ० सू० ५. ८. १८ )।

पितृदेवत्यमेवैनत्तत्करोति नोदिङ्गयति नोपमृष्टे न प्राश्नाति नोदुक्षति पितृदेवत्यमेवैनत्तत्करोति ॥ १२ ॥ तदाहुः । यदेष दीर्घसत्र्यग्निहोत्र्याहुद्वत्प्रवसन्म्रियेत कथमेनमग्निभिः कुर्युरिति तद्ध हैके दग्ध्वाहरन्ति तमाहृतमग्निभिः सङ्क्षापयन्ति तदु तथा न कुर्याद्यथान्यस्यां यो नौ रेतः सिक्तन्तदन्यस्याम्प्रजिजनयिषेत्तादृक्तदस्थीन्येतान्याहृत्य कृष्णाजिने न्युप्य पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य तमग्निभिः समुपोषेत्तदेनथं स्वाद्योनेः प्रजनयतीति ॥ १३ ॥ तद्ध हैके ग्रामाग्निना दहन्ति । तदु तथा न कुर्यादेष वै विश्वात्क्रव्याद्ग्निः स हैनमीश्वरः सपुत्रं सपशुं समन्तोः ॥ १४ ॥ अथ हैके प्रदव्येन दहन्ति । तदु तथा न कुर्यादेष वा ऽअशान्तोऽग्निः स हैनमीश्वरः सपुत्रं सपशुम्प्रदग्धोः ॥ १५ ॥ अथ हैक ऽउल्मुक्येन दहन्ति । तदु तथा न कुर्यादेष वै रुद्रियोऽग्निः स हैनमीश्वरः सपुत्रं सपशुमभिमन्तोः ॥ १६ ॥ अथ हैकेऽन्तरेणाग्नीश्चितिश्चित्वा । तमग्निभिः समुपोषन्त्येतद्वै यजमानस्यायतनं यदन्तरेणाग्नीनिति तदु तथा न कुर्याद्यो हैनन्तत्र ब्रूयान्मध्ये न्वा ऽअयङ्कामस्याशसनमजीजनत क्षिप्रेऽस्याशसनञ्जनिष्यते प्रियतमं रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ और्ध्वदेहिकनिरूपणम् ]

अथ ह स्माह नाको मौद्गल्यः। मरिष्यन्तञ्चेद्यजमानम्मन्येत यत्रैवास्मा ऽआशसनञ्जोषितथं स्यात्तद्रण्योरग्नी समारोह्य निर्म्मथ्य जुहुवद्वसेत्स यदास्माल्लोकाद्यजमानः प्रेयात् ॥ १ ॥ अथैनमन्तरेणाग्नीञ्चितिञ्चित्त्वा। तमग्निभिः समुपोषेदिति तदु तथा न कुर्य्यादुतस्थानो वा ऽएष तस्मै यदेनः शवदह्याया ऽइव जुहुयुर्यज्ञाय वा ऽएष ऽआहुतिभ्यस्तस्थानः स हैनममृष्यमाणस्तृप्रः सचते ॥ २ ॥ इत्थमेव कुर्य्यात्। तिस्र ऽएव स्थालीरेष्टवै ब्रूयात्तासु गोमयानि च शुम्बलानि चावधाय नाना त्रिष्वग्निषु प्रवृञ्ज्यात्ते ये ततः सन्तापादग्नयो जायेरँस्तैरेनन्दहेयुस्तथाह तैरेव दग्धो भवति नो प्रत्यक्षमिव ॥ ३ ॥ तस्मादप्येतदृषिणाभ्यनूक्तम्। 'यो ऽअग्निरग्नेरध्यजायत शोकात्पृथिव्या ऽउत वा दिवस्परि ॥ येन प्रजा विश्वकर्म्मा जजान तमग्ने हेडः परि ते वृणक्त्वि'ति यथऽर्क्कथा ब्राह्मणम् ॥ ४ ॥ अथैनं विपुरीषङ्कृत्वा। अस्याम्पुरीषम्प्रतिष्ठापयति पुरीषं वा ऽइयन्तत्पुरीष ऽएवैतत्पुरीषन्दधाति या ह वा ऽअस्यैषा वृकला सपुरीषा तस्यै ह विदग्धायै सृगालः सम्भवति नेत्सृगालः सम्भवदिति तदु तथा न कुर्य्याद्रक्षोधुका हास्य प्रजा भवति तमन्तरतः प्रक्षाल्याज्येनान्वनक्ति मेध्यमेवैनत्तत्करोति ॥ ५ ॥ अथास्य सप्तसु प्राणायतनेषु *।

(१) शु० य० सं० अ० १३ क० ४५।
* का० श्रौ० सू० २५. ७. २०–३४।

सप्त हिरण्यशकलान्प्रत्यस्यति ज्योतिर्वा ऽअमृतः हिरण्यञ्ज्योतिरेवास्मिँस्तदमृतन्दधाति ॥ ६ ॥ अथैनमन्तरेणाग्नीश्चितिञ्चित्वा । कृष्णाजिनमुत्तरलोम प्राचीनग्रीवम्प्रस्तीर्य तस्मिन्नेनमुत्तानन्निपाद्य जुहूं घृतेन पूर्णान्दक्षिणे पाणावादधाति सव्य ऽउपभृतमुरसि ध्रुवाम्मुखेऽग्निहोत्रहवणीन्नासिकयोः स्रुवौ कर्णयोः प्राशित्रहरणे शीर्षञ्चमसम्प्रणीताप्रणयनम्पार्श्वयोः शूर्पे ऽउदरे पात्रीं समवत्तधानीम्पृषदाज्यवतीं शिश्नस्यान्ते शम्याम्माण्डयोरन्ते वृषारवावन्वगुलूखलञ्च मुसलञ्चान्तरेणोरू ऽअन्यानि यज्ञपात्राणि दक्षिणे पाणौ स्फ्यम् ॥ ७ ॥ स ऽएष यज्ञायुधी यजमानः । यथा बिभ्यद्मोषमतीयादेवमेव योऽस्य स्वर्गो लोको जितो भवति तमभ्यत्येति तमेते सन्ताप्या ऽअग्नयो यथा पुत्राः पितरम्प्रोषुषमागतः शिवमुपस्पृशन्त्येवः शिवं हैवैनमुपस्पृशन्ति प्र हैवैनङ्कल्पयन्ति ॥ ८ ॥ तं यदि गार्हपत्यः पूर्वः प्राप्नुयात् । तद्विद्यात्प्रतिष्ठ ऽएनमग्निः पूर्वः प्रापत्प्रतिष्ठास्यति प्रत्येव तेऽस्मिँल्लोके स्थास्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ९ ॥ अथ यद्याहवनीयः । तद्विद्यान्मुख्य ऽएनमग्निः पूर्वः प्रापन्मुखतो लोकानजैषीन्मुखमेव तेऽस्मिँल्लोके भविष्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ १० ॥ अथ यद्यन्वाहार्यपचनः । तद्विद्यादन्नाद ऽएनमग्निः पूर्वः प्रापदन्नमत्स्यत्यन्नमेव तेऽस्मिँल्लोकेऽत्स्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ११ ॥ अथ यदि

सर्वं सकृत् । तद्विद्यात्कल्याणँल्लोकमजैषीदित्येतान्यस्मिन्विज्ञानानि ॥ १२ ॥ तां वा ऽएताम् । यजमानास्याहुतिमन्ततो जुहोति स योऽस्य स्वर्ग्गो लोको जितो भवति तत ऽआहुतिमयोऽमृतः सम्भवति ॥ १३ ॥ अथ यान्यश्ममयानि च मृन्मयानि च भवन्ति । तानि ब्राह्मणाय ‡ दद्याच्छवोढ्हमु ह तम्मन्यन्ते यस्तानि प्रतिगृह्णात्यप ऽएवैनान्यभ्यवहरेयुरापो वा ऽअस्य सर्वस्य प्रतिष्ठा तदेनमप्स्वेव प्रतिष्ठापयति ॥ १४ ॥ अथैतामाहुतिञ्जुहोति * । पुत्रो वा भ्राता वा यो वान्यो ब्राह्मणः स्याद्'स्मात्त्वमधि जातोऽसि त्वदयञ्जायतां पुनः ॥ असौ स्वर्ग्गाय लोकाय स्वाहे'त्यनपेक्षमेत्याप ऽउपस्पृशन्ति † ॥ १५ ॥ ॐ द्यौः शान्तिः ॥ अतो यत्नः समीहसे ॥ विश्वानि देव ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ ९५ ॥

---

‡ का० श्रौ० सू० २५. ७ ३६ ।
* का० श्रौ० सू० २५. ७. ४० ।
(१) शु० य० सं० ३३. २२ ।
† 'अनपेक्षमेत्योपस्पृशन्त्यपः'( का० श्रौ० सू० २५. ७. ४१ )

[ ज्योतिष्टोमप्रायश्चित्तम् ]

सोमो वै राजा यज्ञः प्रजापतिः । तस्यैतास्तन्न्वो या ऽएता देवता या ऽएता ऽआहुतीर्जुहोति ॥ १ ॥ स यद्य-ज्ञस्याच्छेंत् । यान्तत्प्रति देवताम्मन्न्येत तामनुसमीक्ष्य जुहु-याद्यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुत ऽआग्नीध्रे वि वा ऽएतद्यज्ञस्य पर्व्व स्त्रंसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञम्भिषज्ज्यति तया देवतया यज्ञम्प्रति सन्दधाति ॥ २ ॥ स यद्येनम्मनसाभि-ध्यातः । यज्ञो नोपनमेत्परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥३॥ [* काण्डस्यार्धम् २३० ] अथ यद्येनं व्वाचाभिव्याहृतः । यज्ञो नोपनमेत्प्रजापतये स्वाहेति जुहुयात्प्रजापतिर्हि स तर्हि भव-त्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥४॥ अथ यस्य राजानमुच्छेत्वा । नाहुरन्त ऽएयुरन्धसे स्वाहेति जुहुयादुन्धो हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ५ ॥ अथ यदि सातः । किञ्चिदापद्येत सवित्रे स्वाहेति जुहुयात्सविता हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ६ ॥ अथ यदि दीक्षासु । किञ्चिदापद्येत विश्वकर्म्मणे स्वाहेति जुहुयाद्विश्वकर्म्मा हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ७ ॥ अथ यदि सोमक्रयण्याम् । किञ्चिदापद्येत पूष्णे स्वाहेति जुहुयात्पूषा हि स तर्हि भवत्त्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ८ ॥ अथ यदि क्रयायोपोत्थितः । किञ्चि-

* इयमर्धकाण्डसंख्याऽत्र काण्डे लिखिता । सापि 'क' पुस्तक एव ।

दापद्येतेन्द्राय च मरुद्भ्यश्च स्वाहेति जुहुयादिन्द्रश्च हि स तर्हि मरुतश्च भवत्यप पाप्मानꣳ हत ऽउपैनं रुयज्ञो नमति ॥९॥ अथ यदि पण्यमानꣳ। किञ्चिदापद्येतासुराय स्वाहेति जुहुयादसुरो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं रुयज्ञो नमति ॥ १० ॥ अथ यदि क्रीतꣳ। किञ्चिदापद्येत मित्राय स्वाहेति जुहुयान्मित्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं रुयज्ञो नमति ॥ ११ ॥ अथ यद्यूरावासन्नꣳ। किञ्चिदापद्येत विष्णवे शिपिविष्टाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि शिपिविष्टो भवत्यप पाप्मानꣳ हत ऽउपैनं रुयज्ञो नमति ॥ १२ ॥ अथ यदि पर्युह्यमाणꣳ। किञ्चिदापद्येत विष्णवे नरन्धिषाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि नरन्धिषो भवत्यप पाप्मानꣳ हत ऽउपैनं रुयज्ञो नमति ॥ १३ ॥ अथ यद्यागतꣳ। किञ्चिदापद्येत सोमाय स्वाहेति जुहुयात्सोमो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं रुयज्ञो नमति ॥ १४ ॥ अथ यद्यासन्द्यामासन्नꣳ। किञ्चिदापद्येत वरुणाय स्वाहेति जुहुयाद्वरुणो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं रुयज्ञो नमति ॥ १५ ॥ अथ यद्याग्नीध्रगतः। किञ्चिदापद्येताग्नये स्वाहेति जुहुयादग्निर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं रुयज्ञो नमति ॥ १६ ॥ अथ यदि हविर्धानगतꣳ। किञ्चिदापद्येतेन्द्राय स्वाहेति जुहुयादिन्द्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं रुयज्ञो नमति ॥ १७ ॥ अथ यद्युपावह्रियमाणꣳ किञ्चिदापद्येताथर्वणे

स्वाहेति जुहुयादथर्वा हि स तर्हि भवत्यप पाप्मानꣳ
हत ऽउपैनं यज्ञो नमति ॥ १८ ॥ अथ यद्यꣳशुषु न्युप्तः ।
किञ्चिदापद्येत विश्वेभ्यो देवेभ्यः स्वाहेति जुहुयाद्विश्वे
हि स तर्हि देवा भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो
नमति ॥ १९ ॥ अथ यद्याप्याय्यमानः । किञ्चि-
दापद्येत विष्णव ऽआप्प्रीतपाय स्वाहेति जुहुयाद्वि-
ष्णुर्हि स तर्ह्याप्प्रीतपा भवत्यप पाप्मानꣳ हत
ऽउपैनं यज्ञो नमति ॥ २० ॥ अथ यद्यभिषूयमाणः ।
किञ्चिदापद्येत यमाय स्वाहेति जुहुयाद्यमो हि स तर्हि
भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २१ ॥
अथ यदि सम्भ्रियमाणः । किञ्चिदापद्येत विष्णवे स्वाहेति
जुहुयाद्विष्णुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं
यज्ञो नमति ॥ २२ ॥ अथ यदि पूयमानः । किञ्चिदाप-
द्येत वायवे स्वाहेति जुहुयाद्वायुर्हि स तर्हि भवत्यप
पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २३ ॥ अथ यदि
पूतः । किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स
तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥२४॥
अथ यदि क्षीरश्रीः । किञ्चिदापद्येत शुक्राय स्वाहेति
जुहुयाच्छुक्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं
यज्ञो नमति ॥ २५ ॥ अथ यदि सक्तुश्रीः । किञ्चिदा-
पद्येत मन्थिने स्वाहेति जुहुयान्मन्थी हि स तर्हि भवत्यप
पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २६ ॥ अथ यदि
चमसेषून्नीतः । किञ्चिदापद्येत विश्वेभ्यो देवेभ्यः स्वा-

हेति जुहुयाद्विश्वे हि स तर्हि देवा भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २७ ॥ अथ यदि होमायोद्यतः । किञ्चिदापद्येतासवे स्वाहेति जुहुयादसुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २८ ॥ अथ यदि हूयमानः । किञ्चिदापद्येत रुद्राय स्वाहेति जुहुयाद्रुद्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २९ ॥ अथ यद्यभ्यावृत्तः । किञ्चिदापद्येत वाताय स्वाहेति जुहुयाद्वातो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥३०॥ अथ यदि प्रातिख्यातः । किञ्चिदापद्येत नृचक्षसे स्वाहेति जुहुयान्नृचक्षा हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३१ ॥ अथ यदि भक्ष्यमाणः किञ्चिदापद्येत भक्षाय स्वाहेति जुहुयाद्भक्षो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३२ ॥ अथ यदि नाराशꣳसेषु सन्नः । किञ्चिदापद्येत पितृभ्यो नाराशꣳसेभ्यः स्वाहेति जुहुयात्पितरो हि स तर्हि नाराशꣳसा भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३३ ॥ अथ यद्यवभृथायोद्यतः । किञ्चिदापद्येत सिन्धवे स्वाहेति जुहुयात्सिन्धुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३४ ॥ अथ यद्यभ्यवह्रियमाणः । किञ्चिदापद्येत समुद्राय स्वाहेति जुहुयात्समुद्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३५ ॥*

* शतम् ६२०० ।

अथ यदि प्रप्लुतः । किञ्चिदापद्येत सलिलाय स्वाहेति जुहुयात्सलिलो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ३६ ॥ ता वा ऽएताः । चतुस्त्रिꣳशतमाज्याहुतीर्जुहोति त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳश ऽएतद्दु सर्वैर्देवैर्यज्ञम्भिषज्यति सर्वैर्देवैर्यज्ञम्प्रति सन्दधाति ॥३७॥ ता ब्रह्मैव जुहुयात् । नाब्रह्मा ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्ते ब्रह्मा यज्ञन्दक्षिणतो गोपायति यदि तु ब्रह्मा न विद्यादपि य ऽएव कश्च विद्यात्स जुहुयाद्ब्रह्माणन्त्वामन्त्र्य ब्रह्मणातिसृष्टस्तासां वा ऽएतासां व्याहृतीनाम्बन्धुता वसिष्ठो ह विराजं विदाञ्चकार ताꣳ हेन्द्रोऽभिदध्यौ ॥ ३८ ॥ स होवाच । ऋषे विराजꣳ ह वै वेत्थ ताम्मे ब्रूहीति स होवाच किम्मम ततः स्यादिति सर्वस्य च ते यज्ञस्य प्रायश्चित्तिम्ब्रूयाꣳ रूपञ्च त्वा दर्शयेयेति स होवाच यन्नु मे सर्वस्य यज्ञस्य प्रायश्चित्तिम्ब्रूयाः किमु स स्याद्यन्त्वꣳ रूपन्दर्शयेथा ऽइति जीवस्वर्ग्ग ऽएवास्माल्लोकात्प्रेयादिति ॥ ३९ ॥ ततो हैतामृषिरिन्द्राय विराजमुवाच । इयं वै विराडिति तस्माद्योऽस्यै भूयिष्ठँल्लभते स ऽएव श्रेष्ठो भवति ॥ ४० ॥ अथ हैतामिन्द्र ऽऋषये । प्रायश्चित्तिमुवाचाग्निहोत्रादग्र ऽआ महत ऽउक्थात्ता ह स्मैताः पुरा व्याहृतीर्वसिष्ठा ऽएव विदुस्तस्माद्ध स्म पुरा वासिष्ठ ऽएव ब्रह्मा भवति यतस्त्वेना ऽअप्येतर्हि य ऽएव कश्चाधीते ततोऽप्येतर्हि य ऽएव कश्च ब्रह्मा भवति स ह वै ब्रह्मा

भवितुमर्हति स वा ब्रह्मन्नित्यामन्त्रितः प्रतिशृणुयाद्य एवमेता व्याहृतीर्वेद ॥ ४१ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

[ * सौत्रामणीहविः ]

विश्वरूपं वै त्वाष्ट्रमिन्द्रोऽहन् । तन्त्वष्टा हतपुत्रोऽभ्यचरत्सोऽभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्यार्च्छत्तस्येन्द्रियं वीर्यमङ्गादङ्गादस्रवत् ॥ १ ॥ तस्याक्षिभ्यामेव तेजोऽस्रवत् । सोऽजः पशुरभवद्धूम्रोऽथ यत्पक्ष्मभ्यस्ते गोधूमा यदश्रुभ्यस्तत्कुवलम् ॥ २ ॥ नासिकाभ्यामेवास्य वीर्यमस्रवत् । सोऽविः पशुरभवन्मेषोऽथ यच्छ्लेष्मणस्ता उपवाका यत्स्नीहा तद्बदरम् ॥ ३ ॥ मुखादेवास्य बलमस्रवत् । स गौः पशुरभवदृषभोऽथ ये फेनास्ते यवा यत्स्नेहस्तत्कर्कन्धु ॥ ४ ॥ श्रोत्रादेवास्य यशोऽस्रवत् । तदेकशफमभवदश्वोऽश्वतरो गर्दभः ॥ ५ ॥ स्तनाभ्यामेवास्य शुक्रमस्रवत् । तत्पयोऽभवत्पशूनाञ्ज्यो-

* सुष्ठु त्रायत इति सुत्रामा तस्येयं सौत्रामणी नाम पशुयगः । स च स्वतन्त्रोऽङ्गभूतश्चेति द्विविधः । चयनानन्तरं तदङ्गत्वेनानुष्ठीयमाना सौत्रामण्यङ्गभूता । स्वातन्त्र्येण विहिता च प्रधानभूता । सा नित्या काम्या नैमित्तिकी चेति त्रिविधा । तत्र फलमनुद्दिश्य विहिता नित्या हविर्यज्ञान्तर्गता । सैव च ऋद्धिफलोद्देशेन विधीयमाना काम्या । सोमवमनादिषु निमित्तेषूत्पन्नेषु तदनन्तरमनुष्ठेयतया विहिता नैमित्तिकी । स्वतन्त्रसौत्रामण्यां ब्राह्मणस्यैवाधिकारः । अङ्गभूतायां तु क्षत्रियवैश्यावप्यधिकारिणौ ।

रुरस ऽएवास्य हृदयाच्छिषिरस्रवत्स श्येनोऽपाष्ट्रिहाभवद्व्यसाᳫं राजा ॥ ६ ॥ नाभ्या ऽएवास्य शुषोऽस्रवत् । तत्सीसमभवन्नायो न हिरण्यं रेतस ऽएवास्य रूपमस्रवत्तत्सुवर्ण्णं हिरण्यमभवच्छिश्नादेवास्य रसोऽस्रवत्सा परिस्रुदभवत्स्फिग्भ्यामेवास्य भामोऽस्रवत्सा सुराभवदन्नस्य रसः ॥ ७ ॥ मूत्रादेवास्यौजोऽस्रवत् । स वृकोऽभवदारण्यानाम्पशूनाञ्जूतिरूवध्यादेवास्य मन्युरस्रवत्स व्याघ्रोऽभवदारण्यानाम्पशूनाᳫं राजा लोहितादेवास्य सहोऽस्रवत्स सिᳫंहोऽभवदारण्यानाम्पशूनामीशः ॥ ८ ॥ लोमभ्य ऽएवास्य चित्तमस्रवत् । ते श्यामाका ऽअभवँस्त्वच ऽएवास्यापचितरस्रवत्सोऽश्वत्थो वनस्पतिरभवन्माᳫंसेभ्य ऽएवास्योर्ग्गस्रवत्स ऽउदुम्बरोऽभवदस्थिभ्य ऽएवास्य स्वधास्रवत्स न्यग्रोधोऽभवन्मज्जभ्य ऽएवास्य भक्षः सोमपीथोऽस्रवत्ते व्रीहयोऽभवन्नेवमस्येन्द्रियाणि वीर्य्याणि व्युदक्रामन् ॥ ९ ॥ अथ ह वै तर्हि । नमुचिनैवासुरेण सह चचार स ऽऐक्षत नमुचिरपुनर्वा ऽअयमभूद्धन्तास्येन्द्रियं वीर्यᳫं सोमपीथमन्नाद्यᳫं हराणीति तस्यैतयैव सुरयेन्द्रियं वीर्यᳫं सोमपीथमन्नाद्यमहरत्स ह न्यपर्ण्णः शिश्ये तन्देवा ऽउपसञ्जग्मिरे श्रेष्ठो वै नोऽयमभूत्तमिमम्पाप्माविदद्धन्तेमम्भिषज्यामेति ॥ १० ॥ तेऽश्विनावब्रुवन् । युवं वै ब्रह्माणौ भिषजौ स्थो युवमिमम्भिषज्यतमिति तावब्रूतामस्तु नौ भाग ऽइति तेऽब्रुवन्य ऽएषोऽजः स वाम्भाग ऽइति तथेति तस्मा-

दाश्विनो धूम्रो भवति ॥ ११ ॥ ते सरस्वतीमब्रुवन् । त्वं वै भैषज्यमसि त्वमिमम्भिषज्ज्येति साब्रवीदुस्तु मे भाग ऽइति तेऽब्रुवन्य ऽएषोऽविः स ते भाग ऽइति तथेति तस्मात्सारस्वतो मेषो भवति ॥ १२ ॥ अथाब्रुवन् । एतावद्वा ऽअस्मिन्नेतर्हि यावदयमृषभोऽस्यैवायमस्त्विति तथेति तस्मादैन्द्र ऽऋषभो भवति ॥ १३ ॥ तावश्विनौ च सरस्वती च । इन्द्रियं वीर्यन्नमुचेराहृत्य तदस्मिन्पुन-रदधुस्तम्पाप्मनोऽत्रायन्त सुत्रातम्बतैनम्पाप्मनोऽत्रास्म-हीति तद्वाव सौत्रामण्यभवत्तत्सौत्रामण्यै सौत्रामणी-त्वन्त्रायते मृत्योरात्मानमप पाप्मानꣳ हते य ऽएवमेत-त्सौत्रामण्यै सौत्रामणीत्वं वेद त्रयस्त्रिꣳशद्दक्षिणा भवन्ति त्रयस्त्रिꣳशद्धि तन्देवता ऽअभिषज्यꣳस्तस्मादाहुर्भैषजन्द-क्षिणा ऽइति ॥ १४ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ सुराक्रयादि ]

अप वा ऽएतस्मात् । तेज ऽइन्द्रियं वीर्यङ्क्रामति यꣳ सोमोऽतिपवत ऽऊर्ध्वं वावाञ्चं वा ॥ १ ॥ तदाहुः । अन्नं वा ऽएतद्ब्राह्मणस्य यत्सोमो न वै सोमेन ब्राह्मणः सोमवामी स यो वा ऽअलम्भूत्यै सन्भूतिन्न प्राप्नोति यो वालम्पशुभ्यः सन्पशून्न विन्दुते स सोमवामी पशवो हि सोम ऽइति ॥ २ ॥ स ऽएतमाश्विनन्धूम्रमालभेत ।

(१) 'ग' 'ज' पुस्तकयोः "चा" इति ।

सारस्वतम्मेषमैन्द्रमृषभमश्विनौ वै देवानाम्भिषजौ ताभ्यामेवैनम्भिषज्यति सरस्वती भेषजन्तयैवास्मै भेषजङ्करोतीन्द्र ऽइन्द्रियं व्वीर्य्यन्तेनैवास्मिन्नन्निन्द्रियं व्वीर्य्यन्दधाति ॥ ३ ॥ चक्षुर्व्वा ऽअश्विनौ तेजः। यदाश्विनो भवति चक्षुरेवास्मिँस्तत्तेजो दधात्यथो श्श्रोत्रꣳ समानꣳ हि चक्षुश्च श्श्रोत्रञ्च ॥४॥ प्राणः सरस्वती व्वीर्य्यम्। यत्सारस्वतो भवति प्प्राणमेवास्मिँस्तद्वीर्य्यन्दधात्यथो ऽअपानꣳ समानꣳ हि प्प्राणश्चापानश्च ॥५॥ [अर्धप्रपाठकः ६०] व्वागिन्द्रो बलम्। यदैन्द्रो भवति व्वाचमेवास्मिँस्तद्बलन्दधात्यथो मनः समानꣳ हि व्वाक्च मनश्च ॥ ६ ॥ आश्विनीरजाः। सारस्वतीरवीरैन्द्रीर्ग्गाव ऽइत्याहुर्य्यदेते पशव ऽआलभ्यन्त ऽएताभिरेव देवताभिरेतान्पशूनवरुन्द्धे ॥ ७ ॥ व्वडवानुशिशुर्भवति। यश ऽएवैकशफमवरुन्द्ध ऽआरण्यानाम्पशूनाँल्लोमानि भवन्त्यारण्यानाम्पशूनामवरुद्ध्यै व्वृकलोमानि भवन्त्योज ऽएव जूतिमारण्यानाम्पशूनामवरुन्द्धे व्याघ्रलोमानि भवन्ति मन्न्युमेव राज्यमारण्यानाम्पशूनामवरुन्द्धे सिꣳहलोमानि भवन्ति सह ऽएवेशामारण्यानाम्पशूनामवरुन्द्धे ॥ ८ ॥ व्रीहयश्च श्श्यामाकाश्च भवन्ति। गोधूमाश्च कुवलानि (A) चोपवाकाश्च[1] बदराणि (B) च यवाश्च कर्क्कन्धूनि च[2] शष्प्पाणि * च तोक्मानि † चोभयमेव

(A) स्थूलानि बदरीफलानि।

(१) उपवाका इन्द्रयवाः।

(B) सूक्ष्मबदरीफलानि।

(२) 'ग' 'ज' पुस्तकयोः 'च' इति नास्ति।

* विरूढा व्रीहयः शष्पाणि। † विरूढा यवाः तोक्माः।

ग्ग्राम्म्यञ्चान्नमारण्ण्यञ्चावरुन्द्धेऽथो ऽउभयेनैवान्नेन यथारूपमिन्द्रियं व्वीर्र्यमात्मन्धत्ते ॥ ९ ॥ सीसेन शष्प्पाणि क्क्रीणाति । ऊर्ण्णाभिस्तोक्क्मानि सूत्रैर्व्रीहीनुभयोर्व्वा ऽएतद्रूपमयसश्च हिरण्ण्यस्य च यत्सीसमुभयङ्सौत्रामणीष्टिश्च पशुबन्धश्चोभयस्यावरुद्ध्यै ॥ १० ॥ ऊर्ण्णासूत्रेण क्क्रीणाति । तद्वा ऽएतत्स्त्रीणाङ्कर्म्म यदूर्ण्णासूत्रङ्कर्म्म वा ऽइन्द्रियं व्वीर्र्यन्तदेतदुत्सन्नꣳ स्त्रीषु तद्यदेवेन्द्रियं व्वीर्र्यमुत्सन्नꣳ स्त्रीषु तदेवावरुन्द्धे ॥ ११ ॥ तद्धैतदुन्न्येऽद्धर्य्यवः । सीसेन क्लीबाच्छष्प्पाणि क्क्रीणन्ति तत्तदिति न वा ऽएष स्त्री न पुमान्न्यत्क्लीबो नेष्टिर्न्न पशुबन्धः सौत्रामणीति वदन्तस्तदु तथा न कुर्र्यादुभयं वै सौत्रामणीष्टिश्च पशुबन्धश्च ऽऽर्द्धमु वा ऽएतन्न्मनुष्येषु यत्क्लीबो यज्ञमुख ऽएव ते यज्ञस्य ऽऽर्द्धिन्दधति ये तथा कुर्व्वन्ति सोमविक्क्रयिण ऽएव क्क्रीणीयात्सोमो वै सौत्रामणी यज्ञमुख ऽएव तत्सोमरूपङ्करोति यज्ञस्य समृद्ध्यै ॥ १२ ॥ शतातृण्णा कुम्भी भवति । बहुधेव हि स व्यस्रवदथो शतोन्मानो वै यज्ञो यज्ञमेवावरुन्द्धे सतम्भवति सदेवावरुन्द्धे चप्प्यम्भवत्यन्नाद्यस्यैवावरुद्ध्यै पवित्रम्भवति पुनन्ति ह्येनं व्वालो भवति पाप्प्मनो व्यावृत्त्यै सुवर्ण्णꣳ हिरण्ण्यम्भवति रूपस्यैवावरुद्ध्यै शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्र्यमात्मन्धत्ते ॥ १३ ॥ आश्वत्थम्पात्रम्भवति । अपचितिमेवावरुन्द्ध ऽऔदुम्बरम्भवत्यूर्ज्जमेवावरुन्द्धे नैयग्ग्रोधम्भवति स्वधामेवा-

वरुन्द्धे स्स्थाल्ल्यो भवन्ति पृथिव्व्या ऽएवान्नाद्यमवरुन्द्धे ॥ १४ ॥ पालाशान्न्युपशयानि भवन्ति । ब्ब्रह्म वै पलाशो ब्ब्रह्मणैव स्वर्ग्गँल्लोकञ्जयत्त्यपाष्ट्टिहस्य पत्रे भवतस्त्विषिमेव राज्ज्यं व्वयसामवरुन्द्धे षट्त्रिꣳशदेतानि भवन्ति षट्त्रिꣳशदक्षरा वै बृहती बार्हताः पशवो बृहत्त्यैवास्स्मै पशूनवरुन्द्धे ॥१५॥ तदाहुः । अन्न्यदेवत्त्याः पशवो भवन्त्यन्न्यदेवत्त्याः पुरोडाशा व्विलोमैतत्क्क्रियते कथमेतत्त्सलोम भवतीत्त्यैन्द्रः पशूनामुत्तमो भवत्त्यैन्द्रः पुरोडाशानाम्प्रथम ऽइन्द्रियं व्वै व्वीर्य्यमिन्द्र ऽइन्द्रियेणैवास्स्मा ऽइन्द्रियं व्वीर्य्यꣳ सन्दधातीन्द्रियेणेन्द्रियं व्वीर्य्यमवरुन्द्धे ॥ १६ ॥ सावित्रः पुरोडाशो भवति । सवितृप्प्रसूततायै व्वारुणो भवति व्वरुणो व्वा ऽएतङ्गृह्णाति यः पाप्प्मना गृहीतो भवति व्वरुणेनैवैनं व्वरुण्ण्यान्मुञ्चत्त्यन्त्यो भवत्त्यन्तत ऽएवैनं व्वरुणपाशात्प्रमुञ्चति ॥ १७ ॥ एकादशकपाल ऽऐन्द्रो भवति । एकादशाक्षरा वै त्रिष्ट्टुबिन्द्रियमु वै व्वीर्य्यन्त्रिष्ट्टुबिन्द्रियस्यैव व्वीर्य्यस्यावरुद्ध्यै ॥ १८ ॥ द्वादशकपालः सावित्रो भवति । द्वादश वै मासाः सँव्वत्त्सरस्य सँव्वत्त्सरं व्वा ऽअन्नाद्यमन्न्वायत्तꣳ सँव्वत्त्सरादेवास्स्मा ऽअन्नाद्यमवरुन्द्धे ॥ १९ ॥ दशकपालो व्वारुणो भवति । दशाक्षरा वै व्विराडन्नं व्विराड्वरुणोऽन्नपतिर्व्वरुणेनैवास्स्मा ऽअन्नमवरुन्द्धे मद्ध्यत ऽएतैः पुरोडाशैः प्प्रचरति मद्ध्यं व्वा ऽएतेषां रुपोनिः स्वादेवैनान्न्योनेः प्प्रजनयति ॥ २० ॥ व्वडवानुशिशुर्द्दक्षिणा भवति । उभयं व्वा ऽएषा जनय-

त्यश्वश्चाश्वतरश्चोभयꣳ सौत्रामणीष्टिश्च पशुबन्धश्चो-भयस्यैवावरुद्ध्यै ॥ २१ ॥

सप्तमाध्याये द्वितीय ब्राह्मणम् ॥ २ ॥



[ सौत्रामणीग्रहग्रहणादि ]

इन्द्रस्येन्द्रियमन्नस्य रसम् । सोमस्य भक्षꣳ सुरया-सुरो नमुचिरहरत्सोऽश्विनौ च सरस्वतीञ्चोपाधावच्छे-पानोऽस्मि नमुचये न त्वा दिवा न नक्तꣳ हनानि न दण्डेन न धन्वना न पृथेन न मुष्टिना न शुष्केण नार्द्रेणाथ म ऽइदमहार्षीदिदम्म ऽआजिहीर्षथेति ॥ १ ॥ तेऽब्रुवन् । अस्तु नोऽत्राप्यथाहरामेति सह न ऽएतदथाहरतेत्यब्र-वीदिति ॥ २ ॥ तावश्विनौ च सरस्वती च । अपाम्फेनं वज्रमसिञ्चन्न शुष्को नार्द्र ऽइति तेनेन्द्रो नमुचेरासुरस्य व्युष्टायाꣳ रात्रावनुदित ऽआदित्ये न दिवा न नक्त-मिति शिर ऽउदवासयत् ॥ ३ ॥ तस्मादेतदृषिणाभ्यनू-क्तम् । 'अपाम्फेनेन नमुचेः शिर ऽइन्द्रोदवर्त्तयः ॥ विश्वा यदजय स्पृध' ऽइति पाप्मा वै नमुचिः पाप्मानं वाव तद्द्विषन्तम्भ्रातृव्यꣳ हत्वेन्द्रियं वीर्य्यमस्यावृङ्क्त स यो भ्रातृव्यवान्स्यात्स सौत्रामण्या यजेत पाप्मान-मेव तद्द्विषन्तम्भ्रातृव्यꣳ हत्वेन्द्रियं वीर्य्यमस्य वृङ्क्ते तस्य शीर्षञ्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत्तस्मादबी-भत्सन्त त ऽएतदन्धसोर्विपानमपश्यन्त्सोमो राजामृतꣳ

(१) शु॰ य॰ सं॰ १९. ७१। (२) शु॰ य॰ सं॰ १९. ७२।

सुत, ऽइति तेनैनथं स्वदयित्वात्मन्नदधत ॥४॥ '[1]स्वाद्वीन्त्वा स्वादुने'ति सुराथं सन्दधाति । स्वदयत्येवैना'[2]न्तीव्रान्तीव्रेणे'तीन्द्रियमेवास्मिमन्दधात्य'[3]मृतामतेने' त्यायुरेवास्मिन्दधाति '[4]मधुमतीम्मधुमते'ति रसमेवास्यान्दधाति '[5]सृजामि सछं सोमेने'ति सोमरूपमेवैनाङ्करोति ॥ ५ ॥ '[6]सोमोऽस्यश्विभ्याम्पच्यस्व । सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वे'त्येता वा ऽएतन्देवता ऽअग्रे यज्ञछं समभरँस्ताभिरेवैनछं सम्भरत्यथो ऽएता ऽएवैतद्देवता भागधेयेन समर्द्धयत्यासुनोति सुत्यायै तिस्रो रात्रीर्वसति तिस्रो हि रात्रीः सोमः क्रीतो वसति सोमरूपमेवैनाङ्करोति ॥ ६ ॥ द्वे वेदी * भवतः । द्वौ वाव लोकावित्याहुर्देवलोकश्चैव पितृलोकश्चेत्युत्तरान्या भवति दक्षिणान्योत्तरो वै देवलोको दक्षिणः पितृलोक ऽउत्तरयैव देवलोकमवरुन्द्धे दक्षिणया पितृलोकम् ॥ ७ ॥ पयश्च सुरा च भवतः । सोमो वै पयोऽन्नछं सुरा पयसैव सोमपीथमवरुन्द्धे सुरयान्नाद्यं क्षत्रं वै पयो विट् सुरा सुराम्पूत्वा पयः पुनाति विश ऽएव तत्क्षत्रञ्जनयति विशो हि क्षत्रञ्जायते ॥ ८ ॥ '[7]वायोः पूतः पवित्रेण । प्रत्यङ्क्सोमो ऽअतिद्रुत, ऽइति सोमातिपूतस्य † पुनाति यथारूपमेवैनम्पुनाती'[8]न्द्रस्य

(१) शु० य० सं० १९. १। (२) शु० य० सं० १९. १। (३) शु० य० सं० १९. १। (४) शु० य० सं० १९. १। (५) शु० य० सं० १९. १। (६) शु० य० सं० १९. १।

* का० श्रौ० सू० १९. २. १।

(७) शु० य० सं० १९. ३।

† मुखेतरच्छिद्रसोमवामिन इत्यर्थः। (८) शु० य० सं० १९. ३।

युज्यः सखे'ति यदेवास्य तेनेन्द्रियं वीर्य्यमतिक्रान्तम्भवति तदस्मिन्न्पुनर्दधाति ॥ ९ ॥ 'वायोः[1] पूतः पवित्रेण । प्राङ्क्सोमो ऽअतिद्रुत' ऽइति सोमवामिनः पुनाति यथा-रूपमेवैनम्पुनाती'न्द्रस्य[2] युज्यः सखे'ति यदेवास्य तेनेन्द्रियं वीर्य्यमतिक्रान्तम्भवति तदस्मिन्न्पुनर्दधाति ॥ १० ॥ 'पुनाति[3] ते परिस्रुत'मिति । समृद्धिकामस्य पुनाति समृद्ध्यै 'सोमं[4] सूर्य्यस्य दुहिते'ति श्रद्धा वै सूर्य्यस्य दुहिता श्रद्धयैष सोमो भवति श्रद्धयैवैनं सोमङ्करोति 'वारेण[5] शश्वता तने'ति वालेन ह्येषा पूयते ॥ ११ ॥ 'ब्रह्म[6] क्षत्रम्पवत' ऽइति पयः पुनाति । ब्रह्मण ऽएव तत्क्षत्रञ्जनयति ब्रह्मणो हि क्षत्रञ्जायते 'तेजः ऽइन्द्रिय'मिति तेज ऽएवास्मिन्निन्द्रियं वीर्य्यन्दधाति 'सुरया सोम' ऽइति सुरया हि सोमः 'सुत ऽआसुत' ऽइत्यासुताद्धि सूयते 'मदाये'ति मदाय वाव सोमो मदाय सुरोभावेव सोमम-दश्च सुरामदञ्चावरुन्द्धे 'शुक्रेण[11] देव देवताः पिपृग्धी'ति शुक्रेण देव देवताः प्रीणीहीत्येवैतदाह 'रसेना[12]न्नं यजमानाय धेही'ति रसमेवान्नं यजमाने दधाति पूर्वे पयोग्रहा गृह्यन्तेऽपरे सुराग्रहा विशन्तत्क्षत्रस्यानुवर्त्मानङ्करोति ॥ १२ ॥ 'कुविद[13]ङ्ग यवमन्तो यवञ्चि'दिति । पयोग्रहान्गृह्णाति * सोमांशवो वै यवाः सोमः पयः

(१) शु० य० सं० १९. ३। (२) शु० य० सं० १९. ३। (३) शु० य० सं० १९. ४। (४) शु० य० सं० १९. ४। (५) शु० य० सं० १९. ४। (६–१२) शु० य० सं० १९. ५। (१३) शु० य० सं० १९. ६।

* का० श्रौ० सू० १९. २. १४।

सोमेनैवैनꣳ सोमङ्करोत्येकया गृह्णात्येकधैव यजमाने श्रियन्दधाति श्रीर्हि पयः ॥ १३ ॥ 'नाना हि वान्देवहितꣳ सदस्कृत'मिति । सुराग्रहान्गृह्णाति नाना हि सोमश्च सुरा च देवहितमिति देवहिते ह्येते नाना सदस्कृतमिति द्वे हि वेदी भवतो 'मा सꣳसृक्षाथाम्परमे व्योम'न्निति पाप्मनैवैनं व्यावर्त्तयति 'सुरा त्वमसि शुष्मिणी'ति सुरामेव सुराङ्करोति 'सोमꣳ एष'इति सोममेव सोमङ्करोति 'मो मा हिꣳसीः स्वां योनिमाविशन्ती'ति यथायोन्येवैनां व्यावर्त्तयत्यात्मनोऽहिꣳसाया एकया गृह्णात्येकधैव यजमाने यशो दधाति यशो हि सुरा ॥ १४ ॥ क्षत्रं वै पयोग्रहाः विट् सुराग्रहा यद्व्यतिषक्तान्गृह्णीयाद्विशं क्षत्राद्व्यवच्छिन्द्यात्क्षत्रं विशः पापवस्यसङ्कुर्य्याद्यज्ञस्य व्यृद्धिं व्यतिषक्तान्गृह्णाति विशमेव क्षत्रेण सन्दधाति क्षत्रं विशा पापवस्यसस्य व्यावृत्त्यै यज्ञस्य समृद्ध्यै ॥ १५ ॥ प्राणा वै पयोग्रहाः । शरीरꣳ सुराग्रहा यद्व्यतिषक्तान्गृह्णीयाच्छरीरम्प्राणेभ्यो व्यवच्छिन्द्यात्प्राणाञ्छरीरात्प्रमायुको यजमानः स्याद्व्यतिषक्तान्गृह्णाति शरीरमेव प्राणैः सन्दधाति प्राणाञ्छरीरेणाथो आयुरेवास्मिन्दधाति तस्मात्सौत्रामण्ययेजानः सर्वमायुरेत्यथो य एवमेतद्वेद ॥ १६ ॥ सोमो वै पयोग्रहाः । अन्नꣳ सुराग्रहा यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते सोमपीथञ्चैवान्नाद्यञ्चावरुन्द्धे

(१) शु० य० सं० १९. ७ । (२) शु० य० सं० १९. ७ । (३) शु० य० सं० १९. ७ । (४) शु० य० सं० १९. ७ । (५) शु० य० सं० १९. ७ ।

॥ १७ ॥ पशवो वै पयोग्ग्रहाः । अन्नꣳ सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्ते पशूꣳश्चैवान्नाद्यञ्चावरुन्द्धे ॥ १८ ॥ ग्राम्म्या वै पशवः पयोग्ग्रहाः । आरण्याः सुराग्ग्रहा यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्ते ग्ग्राम्म्याँश्चैव पशूनारण्याँश्चावरुन्द्धे ग्ग्राम्म्येण चान्नेनारण्येन च पयोग्ग्रहाञ्छ्रीणाति तस्म्माद्ग्ग्राम्म्याणाम्पशूनाङ्ग्राम्म्यञ्चैवान्नाद्यमारण्यञ्चावरुद्धम् ॥ १९ ॥ तदाहुः । एतस्यै वा ऽएतद्घलायै देवतायै रूपं यदेते घोरा ऽआरण्याः पशवो यदेतेषाम्पशूनाँल्लोमभिः पयोग्ग्रहाञ्छ्रीणीयाद्रुद्रस्यास्ये पशूनपिदद्ध्यादपशुर्य्यजमानः स्याद्यन्न श्रीणीयादनवरुद्धा ऽअस्य पशवः स्यू रुद्रो हि पशूनामीष्ट ऽइति सुराग्ग्रहानेवैतेषाम्पशूनाँल्लोमभिः श्रीणाति सुरायामेव तद्रौद्रन्दधाति तस्म्मात्सुराम्पीत्त्वा रौद्रमना ऽअथो ऽआरण्येष्ष्वेव पशुषु रुद्रस्य हेतिन्दधाति ग्ग्राम्म्याणाम्पशूनामहिꣳसाया ऽअवरुद्धा ऽअस्य पशवो भवन्ति न रुद्रस्यास्ये पशूनपिदधाति ॥ २० ॥ '[1]सीसेन त्न्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति । अश्विना यज्ञꣳ सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यन्' ॥ 'यदापिपेष मातरम्पुत्रः प्रमुदितो धयन् ॥ एतत्तदग्ग्ने ऽअनृणो भवाम्म्यहतौ पितरौ मये'ति ॥ २१ ॥ अद्ध्वर्य्युश्च प्प्रतिप्प्रस्थाता च । जघनेन वेदिम्प्राञ्चमावृत्त्य यजमानꣳ श्ष्येनपत्त्राभ्यामूर्द्ध्वञ्चावाञ्चञ्च पावयतः प्प्राणोदानयोस्तद्रूपम्प्राणोदाना-

(१) शु० य० सं० १९. १० । (२) शु० य० सं० १९. ११ ।

वेवावरुन्द्ध ऽऊर्द्ध्वश्च ह्ययमवाङ् च प्राण ऽआत्मानमनुसञ्चरति ‘सम्पृच स्त्थ सम्मा भद्रेण पृङ्क्ते’ति पयोग्ग्रहान्त्सम्मृशति श्रियैवैनं यशसा समर्द्धयति ‘विपृच स्त्थ वि मा पाप्मना पृङ्क्ते’ति सुराग्ग्रहान्पाप्मनैवैनं व्यावर्त्तयति ॥ २२ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥



[ ग्रहभक्षणसुरापावनादि ]

इन्द्रस्य वै यत्र । इन्द्रियाणि वीर्य्याणि व्युदक्रामँस्तानि देवा ऽएतेनैव यज्ञेन पुनः समदधुर्य्यत्पयोग्ग्रहाश्च सुराग्ग्रहाश्च गृह्यन्त ऽइन्द्रियाण्येवास्मिँस्तद्वीर्य्याणि पुनः सन्दधत्युत्तरेऽग्नौ पयोग्ग्रहाञ्जुह्वति शुक्रेणैवैनन्तत्सोमपीथेन समर्द्धयन्ति ॥ १ ॥ स जुहोति ‘सुरावन्तम्बर्हिषदः सुवीर’मिति सुरावान्न्वा ऽएष बर्हिषद्यज्ञो यत्सौत्रामणी बर्हिषैवैनं यज्ञेन समर्द्धयति ‘यज्ञः हिन्न्वन्ति महिषा नमोभि’रित्यृत्विजो वै महिषा यज्ञो नम ऽऋत्विग्भिरेव यज्ञः समर्द्धयति यज्ञेन यजमान‘न्दधानाः सोम’मिति सोमपीथमेवास्मिन्दधति ‘दिवि देवतास्वि’ति दिव्येवैनन्देवतासु दधति ‘मदेमेन्द्र’मिति मदाय वाव सोमो मदाय सुरोभावेव सोममदञ्च सुरामदञ्चावरुन्द्धे ‘यजमानाः

( ३ ) शु० य० सं० १९. ११। ( ४ ) शु० य० सं० १९. ११। ( ५ ) शु० य० सं० १९ ३२। ( ६ ) शु० य० सं० १९. ३२। ( ७ ) शु० य० सं० १९. ३२। ( ८ ) शु० य० सं० १९. ३२। ( ९ ) शु० य० सं० १९. ३२। (१०) शु० य० सं० १९. ३२।

स्वर्क्कौ’ ऽइत्यर्क्कौ * वै देवानामन्नमन्नं यज्ञो यज्ञेनैवैनम-न्नाद्येन समर्द्धयति हुत्वा भक्षयन्ति समृद्धमेवास्य तद्वर्द्ध-यन्ति ॥ २ ॥ स भक्षयति । ‘[1]यमश्विना नमुचेरासुरा-दधी’त्यश्विनौ ह्येतन्नमुचेरध्याहरताछं ‘[2]सरस्वत्यसुनोदि-न्द्रियाये’ति सरस्वती ह्येतमसुनोदिन्द्रियाये‘[3]मन्तछं शुक्र-म्मधुमन्तमिन्दु’मिति शुक्रो वा ऽएष मधुमानिन्दुर्यत्सोमछं ‘[4]सोमछं राजानमिह भक्षयामी’ति सोम ऽएवास्य राजा भक्षितो भवति दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति पाप्मनैवैन-न्तद्व्यावर्त्तयन्ति ॥ ३ ॥ स जुहोति । ‘[5]यस्ते रसः सम्भृत ऽओषधीष्वि’त्यपाञ्च वा ऽएष ऽओषधीनाञ्च रसो यत्सुरापाश्चैवैन[6]मेतदोषधीनाञ्च रसेन समर्द्धयति ‘[7]सोमस्य शुष्मछं सुरया सुतस्ये’ति य ऽएव सोमे शुष्मो यछं सुरायान्तमेवावरुन्द्धे ‘[8]तेन जिन्व यजमानम्मदेने’ति तेन प्रीणीहि यजमानम्मदेनेत्येवैतदाह ‘[9]सरस्वतीमश्विनावि-न्द्रमग्नि’मिति देवताभिरेव यज्ञछं समर्द्धयति देवताभिर्यज्ञेन यजमानछं हुत्वा भक्षयन्ति व्यृद्धमेवास्य तत्समर्द्धयन्ति ॥४॥ स भक्षयति । ‘[10]यदत्र रिप्तछं रसिनछं सुतस्ये’ति सुता-सुतयोरेव रसमवरुन्द्धे ‘[11]यदिन्द्रो ऽअपिबच्छचीभि’रितीन्द्रो ह्येतदपिबच्छचीभिर‘[12]हन्तदस्य मनसा शिवेने’त्यशिव ऽइव वा

* ‘अर्कमन्नं भवत्यर्चति भूतानि’ ( निरु० नै० का० ५. ४ )।

(१) शु० य० सं १९. ३४। (२) शु० य० सं० १९. ३४। (३) शु० य० सं० १९. ३४। (४) शु० य० सं० १९. ३४। (५) शु० य० सं० १९. ३३।

(६) ‘सुरापाश्चैन०’ इति ‘ग’ ‘ज’ पुस्तकयोः पाठः।

(७) शु० य० सं० १९. ३३।

(८) शु० य० सं० १९. ३३। (९) शु० य० सं० १९. ३३। (१०) शु० य० सं० १९. ३५। (११) शु० य० सं० १९. ३५। (१२) शु० य०० सं० १२. ३५।

ऽएष भक्षो यत्सुरा ब्राह्मणस्य शिवमेवैनमेतत्कृत्वात्मन्धत्ते 'सोमꣳ राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति ॥ ५ ॥ तद्धैतदन्न्येऽद्ध्वर्य्यवः । राजन्न्यं वा वैश्यं वा परिक्क्रीणन्ति स ऽएतद्भक्षयिष्ष्यतीति तदु तथा न कुर्य्याद्यो ह वा ऽएतद्भक्षयति तस्य हैव-स्पितृन्न्पितामहानेष सोमपीथोऽन्न्वेति दक्षिणस्यैवाग्नेरुत्री-नङ्गारान्निर्वृत्त्य बहिष्प्परिधि तदेताभिर्व्याहृतिभिर्ज्जुहुयात् ॥ ६ ॥ 'पितृभ्भ्यः स्वधायिभ्भ्यः स्वधा नम' ऽइति । पितृनेव पितृलोके स्वधायान्दधाति 'पितामहेभ्भ्यः स्वधा-यिभ्भ्यः स्वधा नम' ऽइति पितामहानेव पितामहलोके स्वधायान्दधाति 'प्प्रपितामहेभ्भ्यः स्वधायिभ्भ्यः स्वधा नम' ऽइति प्प्रपितामहानेव प्प्रपितामहलोके स्वधायान्द-धाति ॥ ७ ॥ अप ऽआनीय निनयति । 'अक्षन्न्पितर' ऽइत्त्यन्नाद्यमेवैषु दधात्त्य'मीमदन्त पितर' ऽइति मद-यत्त्येवैनान'तीतृपन्त पितर' ऽइति तर्प्पयत्त्येवैना'न्न्पितरः शुन्धद्ध्व'मित्त्यनुपूर्व्वमेवैनान्त्सर्व्वान्न्पावयति पवित्रं वै सौत्रा-मणी ॥ ८ ॥ त्रिभिः पवित्रैः पावयन्ति । त्रयो वा ऽइमे लोका ऽएभिरेवैनँल्लोकैः पुनन्ति ॥ ९ ॥ पावमानीभिः पावयन्ति । पवित्रं वै पावमान्न्यः पवित्रेणैवैनम्पुनन्ति ॥ १० ॥ तिसृभिस्तिसृभिः पावयन्ति । त्रयो वै प्प्राणाः

(१) शु० य० सं० १९. ३५ । (२) शु० य० सं० १९. ३६ । (३) शु० य० सं० १९. ३६ । (४) शु० य० सं० १९. ३६ । (५) शु० य० सं० १९. ३६ । (६) शु० य० सं० १९. ३६ । (७) शु० य० सं० १९. ३६ । (८) शु० य० सं० १९. ३६ ।

प्प्राण ऽउदानो व्व्यानस्तैरेवैनम्पुनन्ति ॥ ११ ॥ नवभिः पावयन्ति । नव वै प्प्राणाः प्प्राणैरेवैनम्पुनन्ति प्प्राणेषु पुनः पूतम्प्रतिष्ठापयन्ति ॥ १२ ॥ पवित्रेण पावयन्ति । अजाविकस्य वा ऽएतद्रूपं य्यत्पवित्रमजाविकेनैवैनम्पुनन्ति ॥ १३ ॥ बालेन पावयन्ति । गोऽश्वस्य वा ऽएतद्रूपं य्यद्वालो गोऽश्वेनैवैनम्पुनन्ति ॥ १४ ॥ हिरण्मयेन पावयन्तिं । देवानां वा ऽएतद्रूपं य्यद्धिरण्यन्देवाना-मेवैनꣳ रूपेण पुनन्ति ॥ १५ ॥ सुरया पावयन्ति । सुरा हि पूता पूतयैवैनम्पुनन्ति तद्यथा सुरा पूयमाना बल्कसेन विविच्च्यत ऽएवमेवैतद्यजमानः सर्व्वस्म्मात्पाप्प्मनो निर्म्मुच्च्यते य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं वेद ॥ १६ ॥ तदाहुः । याजयितव्व्यः सौत्रामण्या३ न याजयितव्व्या३मित्त्यनन्तरायꣳ ह्येवास्यं सर्व्वम्पाप्प्मान-मपघ्नन्तीति तदु ह स्म्माह रेवोत्तरा स्स्थपतिः पाटवश्चा-क्रोऽपि प्प्रदानम्प्रदाय याजयितव्व्यमेवात्मा वै यज्ञस्य यज-मानोऽङ्गान्यृत्विजो यत्र वा ऽआत्मा पूतः पूतानि तत्रा-ङ्गान्युभय ऽएव पुनत ऽउभये पाप्प्मानमपघ्नते तस्म्मा-दुपि प्प्रदानम्प्रदाय याजयितव्व्यमेवेति ॥ १७ ॥ पितृलोकं वा ऽएतेऽन्ववयन्ति । ये दक्षिणेऽग्नौ चरन्त्याज्याहुति-ञ्जुहोति यज्ञो वा ऽआज्यं य्यज्ञादेव यज्ञे प्प्रतितिष्ठन्ति ॥ १८ ॥ स जुहोति । 'ये समानाः समनसः पितरो यम-राज्ये ॥ तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्प्पता'मिति

(१) "ह्येवास्मात्" इति 'ग' 'ज' पुस्तकयोः। (२) शु० य० सं० १९. ४५।

पितॄनेव यमे परिददात्यथो पितृलोकमेव जयति सर्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्त्ययं वै लोक ऽउत्तरोऽग्निरस्मिन्नेव लोके प्रतितिष्ठन्त्याज्याहुतिं जुहोति यज्ञो वा ऽआज्यं स्वयज्ञादेव यज्ञे प्रतितिष्ठन्ति ॥ १९ ॥ स जुहोति । 'ये समानाः समनसो जीवा जीवेषु मामकाः ॥ तेषाᳪं श्रीर्म्मयि कल्पतामस्मिँल्लोके शतᳪं समा' ऽइति स्वानामेव श्रियमवरुन्द्धेऽथो ज्योग्जीवातुमेवैषु दधाति पयः समन्वारब्धेषु जुहोति प्राणो वा ऽअन्नम्पयः प्राण ऽएवान्नाद्येऽन्ततः प्रतितिष्ठन्ति ॥२०॥ स जुहोति । 'द्वे स्रुती ऽअशृणवम्पितॄणामह'मिति द्वे वाव स्रुती ऽइत्याहुर्देवानाञ्चैव पितॄणाञ्चेति 'ताभ्यामिदं विश्वमेजत्समेती'ति ताभ्याᳪं हीदᳪं सर्वमेजत्समेति 'यदन्तरा पितरम्मातरञ्च'ेत्यसौ वै पितेयम्माताभ्यामेव पितॄन्देवलोकमपिनयत्येकाकी हुतोच्छिष्टम्भक्षयत्येकधैव श्रियमात्मन्धत्ते श्रीर्हि पयः ॥ २१ ॥ स भक्षयति । 'इदᳪं हविः प्रजननम्मे ऽअस्त्वि'ति प्रजननᳪं हि यदि पयो यदि सोमो 'दशवीर'मिति प्राणा वै दश वीराः प्राणानेवात्मन्धत्ते 'सर्वगण'मित्यङ्गानि वै सर्वे गणा ऽअङ्गान्येवात्मन्धत्ते 'स्वस्तय ऽआत्मसनी'त्यात्मानमेव सनोति

(१) शु० य० सं० १९. ४६। (२) शु० य० सं० १९. ४७। (३) शु० य० सं० १९. ४७। (४) शु० य० सं० १९. ४७। (५) शु० य० सं० १९. ४८। (६) शु० य० सं० १९. ४८। (७) शु० य० सं० १९. ४८। (८) शु० य० सं० १९. ४८। (९) शु० य० सं० १९. ४८।

'प्रजासनी'ति प्रजामेव सनोति 'पशुसनी'ति पशूनेव सनोति 'लोकसनी'ति लोकाय वै यजते तमेव जयत्य'भयसनी'ति स्वर्गो वै लोकोऽभयथं स्वर्ग ऽएव लोकेऽन्ततः प्रतितिष्ठत्य'ग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो ऽअस्मासु धत्ते'ति तद्य ऽएवैनमेते याजयन्ति तानेतदाहैतन्मयि सर्वन्धत्तेति हिरण्येन मार्जयन्तेऽमृतं वै हिरण्यममृत ऽएवान्ततः प्रतितिष्ठन्ति ॥ २२ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या १२० ॥



[ सुरानिर्माणादि ]

प्रजापतिर्यज्ञमसृजत । तमाहरत्तेनायजत तेनेष्ट्वा रिरिचान ऽइवामन्यत स ऽएतं यज्ञक्रतुमपश्यत्सौत्रामणीन्तेनायजत ततो वै स पुनराप्यायत रिच्यत ऽइव वा ऽएष यः सोमेन यजते वीव ह्यस्य वित्तं वेदो हरन्ति ॥ १ ॥ सोमेनेष्ट्वा सौत्रामण्या यजेत । यथा धेनुर्दुग्ध्वा पुनराप्यायेतैवꣳ हैव पुनराप्यायत ऽआ प्रजया पशुभिः प्यायते प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्गँल्लोकञ्जयति य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं वेद ॥ २ ॥ तद्धैतत्पप्रच्छ । सुप्ला सार्ञ्जयः प्रतीदर्शमैभावतं यन्न

(१) शु० य० सं० १९.४८। (२) शु० य० सं० १९. ४८। (३) शु० य० सं० १९. ४८। (४) शु० य० सं० १९. ४८। (५) शु० य० सं० १९. ४८।

दीक्षयेव दीक्षते न सोमाᳫंशव ऽइव न्न्युप्प्यन्तेऽथ कथᳩ सौत्रामणी सोमयज्ञो भवतीति ॥ ३ ॥ स होवाच । शिरो वा ऽएतद्यज्ञस्य यद्व्रतमात्त्मा दीक्षैतत्त्खलु वै व्व्रतस्य रूपं य्यत्त्सत्त्यमेतद्दीक्षायै यच्छ्रद्धा मनो यजमानस्य रूपं व्वाग्ग्यज्ञस्येति ॥ ४ ॥ स यद्वाचा व्व्रतमुपैति । आत्त्मन्न्येवैतद्यज्ञस्य शिरᳲ प्प्रतिदधाति सत्त्यᳫं श्रद्धायान्दधाति यजमानं य्यज्ञे ॥ ५ ॥ तस्म्मादेतस्य यज्ञस्य । व्व्रतमेव दीक्षा व्वृषो वै व्व्रतं य्योषा दीक्षा वृषा सत्त्यं य्योषा श्श्रद्धा व्वृषा मनो योषा व्वाग्ग्वृषा पत्त्न्यै यजमानस्तस्म्माद्यत्रैव पतिस्तत्र जायाथो यज्ञमुख ऽएव तन्न्मिथुनानि करोति प्प्रजात्त्यै ॥ ६ ॥ एते खलु वा ऽएतस्य यज्ञस्य । सोमाᳫंशव ऽइत्त्याहुर्य्यच्छष्प्पाणि तोक्क्मानि लाजा ऽइति ॥ ७ ॥ प्रातᳲसवनस्यैतद्रूपम् । यच्छष्प्पाण्ण्ययं व्वै लोकᳲ प्प्रातᳲसवनᳩ स ऽआश्श्विन ऽआश्श्विनेन पयसा प्प्रथमाᳬ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण प्प्रातᳲसवनेन समर्द्धयति ॥ ८ ॥ माद्ध्यन्दिनस्यैतत्त्सवनस्य रूपम् । यत्तोक्क्मान्न्यन्तरिक्षं वै माद्ध्यन्दिनᳩ सवनन्तत्त्सारस्वतᳩ सारस्वतेन पयसा द्वितीयाᳬ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण माद्ध्यन्दिनेन सवनेन समर्द्धयति ॥ ९ ॥ तृतीयसवनस्यैतद्रूपम् । यल्लाजा द्यौर्वै तृतीयसवनᳩ सैन्द्र्यैन्द्रेण पयसा तृतीयाᳫं रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण तृतीयसवनेन समर्द्धयति ॥ १० ॥

एकस्यै दुग्धेन । प्रथमाᳬं रात्रिम्परिषिञ्चति द्वयोर्दुग्धेन द्वितीयान्तिसृणान्दुग्धेन तृतीयां यथारूपमेवैनं यथा-देवतᳬं सवनैः समर्द्धयति ॥ ११ ॥ 'परीतो षिञ्चता सुत'-मिति परिषिञ्चति सुत्यायै 'सोमो य उत्तमᳬं हवि'-रित्युत्तमं वा एतद्धविर्यत्सोम उत्तममेवैनᳬं हविष्क-रोति 'दधन्वा यो नर्य्यो अप्स्वन्तरे'त्यद्भिश्च ह्येषो-न्तरेण च सूयते 'सुषाव सोममद्रिभि'रित्यद्रिभिर्वै सोमः सूयतेऽद्रिभिरेवैनᳬं सुनोति सोमसुत्यायै ॥ १२ ॥ तदाहुः । उभयोर्वा एतद्रूपᳬं सुतस्य चासुतस्य च यत्सौत्रामण्यय-पामेष ओषधीनाᳬं रसो यत्पयस्तत्सुतस्य रूपमन्नस्यै-ष रसो यत्परिस्रुत्तदासुतस्य रूपमुभाभ्यामेवैनᳬं सवा-भ्याᳬं सुनोत्युभाभ्याᳬं सवाभ्यामवरुन्द्धे ॥ १३ ॥ तदाहुः । यद्ग्रावभिः सोमः सूयतेऽथ कथᳬं सौत्राम-णीति प्रैषाप्रीभिरिति ब्रूयाद्बार्हता वै प्रैषा बार्हता ग्रावाणो ग्रावभिर्वै सोमः सूयते ग्रावभिरेवैनᳬं सुनोति सोमसुत्यायै ॥ १४ ॥ सर्वे पयस्वन्तो भवन्ति । पयसा हि सूयते सर्वे सोमवन्तो भवन्ति सोमरूपतायै सर्वे परिस्रुन्मन्तो भवन्ति परिस्रुता हि सूयते सर्वे घृतवन्तो भवन्त्येतद्वै प्रत्यक्षाद्यज्ञरूपं यद्घृतम्प्रत्यक्षादेवैनं यज्ञरू-पङ्करोति सर्वे मधुमन्तो भवन्त्येतद्वै प्रत्यक्षात्सोमरूपं यन्मधु प्रत्यक्षादेवैनᳬं सोमरूपङ्करोति ॥ १५ ॥ *

(१) शु० य० सं० १९. २। (२) शु० य० सं० १९. २। (३) शु० य० सं० १९. २। (४) शु० य० सं० १९. २।

* शतम् ६३००।

सर्वं ऽआश्विना भवन्ति । भैषज्याय सर्वे सारस्वता ऽअन्नाद्यस्यैवावरुद्ध्यै सर्वं ऽऐन्द्रा इन्द्रियस्येव वीर्यस्या-वरुद्ध्यै ॥ १६ ॥ यद्वेव सर्वं ऽआश्विना भवन्ति । सर्वे सारस्वताः सर्वं ऽऐन्द्रा ऽएता वा ऽएतन्देवता ऽअग्रे यज्ञꣳ समभरँस्ताभिरेवैनꣳ सम्भरत्यथो ऽएता एवैतद्देवता भागधेयेन समर्द्धयति ॥ १७ ॥ सन्तता याज्यापुरोऽनु-वाक्या भवन्ति । समानदेवत्याः प्रजानाꣳ सन्तत्या ऽअव्यवच्छेदाय सर्वा ऽआश्विन्न्यो भवन्ति सर्वाः सार-स्वत्यः सर्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १८ ॥ अनुष्टुभ ऽआप्रियो भवन्ति । वाग्वा ऽअनुष्टुब्वाचो वै सोमः सूयते वाचैवैनꣳ सुनोति सोमसुत्यायै सर्वा ऽआश्विन्न्यो भवन्ति सर्वाः सारस्वत्यः सर्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १९ ॥ जागता ऽअनुप्रैषा भवन्ति । इयं वै जगत्यनया वै सोमः सूयतेऽनयैवैनꣳ सुनोति सोमसुत्यायै सर्वे ऽआश्विना भवन्ति सर्वे सारस्वताः सर्व ऽऐन्द्राः समानी बन्धुता ॥ २० ॥ स वा ऽएष प्रत्यक्षात्सोमयज्ञ ऽएव यत्सौत्रामणी तं यद्येकाकी यजमानो भक्षयेदिष्टिर्वैव स्यात्पशुबन्धो वा सर्व ऽऋत्विजो भक्षयन्ति सर्वे वा ऽऋत्विजः सोमम्भक्षयन्ति सोमरूपतायै ॥ २१ ॥ आश्विन-मध्वर्यवो भक्षयन्ति । अश्विनौ वै देवानामध्वर्यू स्वमेवैतद्भागधेयꣳ स्व ऽआयतने भक्षयन्ति ॥ २२ ॥ सारस्वतꣳ होता ब्रह्मा मैत्रावरुणः । वाग्वै यज्ञस्य होता हृदयम्ब्रह्मा मनो मैत्रावरुणः स्वमेवैतद्भागधेयꣳ स्व

ऽआयतने भक्षयन्ति ॥ २३ ॥ ऐन्द्रं यजमानो भक्षयति । ऐन्द्रो वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्वमेवैतद्भागधेयथं स्व ऽआयतने भक्षयति ॥२४॥ चक्षुर्व्वा ऽआश्विनो ग्ग्रहः । प्प्राणः सारस्वतो व्वागैन्द्र ऽआश्विनात्सारस्वतेऽवनयति चक्षुरेवास्य तत्प्राणैः सन्दधाति सारस्वतादैन्द्रे प्प्राणानेवास्य तद्वाचा सन्दधात्यथो प्प्राणानेवास्य तद्वाचि प्प्रतिष्ठापयति तस्मात्सर्वे प्प्राणा व्वाचि प्प्रतिष्ठिताः ॥२५॥ त्रय आश्विनम्भक्षयन्ति । अद्ध्वर्युः प्प्रतिप्प्रस्त्थाताग्नीद्ध्रस्त्रिवृद्वा ऽइदञ्चक्षुः शुक्लं कृष्णङ्कनीनका यथारूपमेवास्मिँश्चक्षुर्द्दधाति ॥२६॥ त्रयः सारस्वतम् । होता ब्ब्रह्मा मैत्रावरुणस्त्रेधाविहितो वा ऽअयम्प्राणः प्प्राण ऽउदानो व्व्यान ऽइति यथारूपमेवास्मिन्प्राणन्दधाति ॥ २७ ॥ एकाक्क्यैन्द्रं यजमानो भक्षयति । एकधा वा ऽएषा प्प्राणानाथं श्रीर्य्यद्वागेकधैव व्वाचथं श्रियमात्मन्धत्ते तस्मात्सौत्रामण्येजान ऽएकधा स्वानाथं श्रेष्ठो भवत्यथो य ऽएवमेतद्वेद ॥ २८ ॥ ऋतवो वा ऽऋत्विजः/ मासा भक्षाः षडृत्विजो भक्षयन्ति षड्वा ऽऋतव ऽऋत्विग्भिरेवर्तूनवरुन्द्धे ॥ २९ ॥ द्वादश भक्षा भवन्ति । द्वादश वै[2] मासा भक्षैरेव मासानवरुन्द्धे पुनः पुनरभिनिवर्त्तमृत्विजो भक्षयन्ति तस्मादृतवश्च मासाश्चान्योऽन्यमभिनिवर्त्तन्ते ॥ ३० ॥ त्रयोदशं यजमानो भक्षयति । यो ह वा ऽएष त्रयोदशो मास ऽएष ऽएव प्रत्य-

(१) 'ग' 'ज' पुस्तकयोः 'धा' इति । (२) 'ग' 'ज' पुस्तकयोः "वै" इति नास्ति ।

क्षात्सँवत्सर ऽएतमेवाप्त्वावरुन्द्धे स वा ऽएष सँवत्सर ऽएव यत्सौत्रामणी तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ ३१ ॥ त्रयः पशवो भवन्ति। त्रयो वा ऽइमे लोका ऽइमानेव तैल्लोकानवरुन्द्ध ऽइममेव लोकमाश्विनेनान्तरिक्षꣳ सारस्वतेन दिवमैन्द्रेण यथारूपमेव यथादेवतमिमाँल्लोकाञ्जयति चाव च रुन्द्धे ॥ ३२ ॥ त्रयः पुरोडाशा भवन्ति। त्रयो वा ऽऋतव ऽऋतूनेवं तैरवरुन्द्धे ग्ग्रीष्ममेवैन्द्रेण वर्षाः सावित्रेण हेमन्तं वारुणेन यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३३ ॥ षड्ग्रहा भवन्ति। षड्वा ऽऋतव ऽऋतूनेवं[2] तैरवरुन्द्धे वसन्तग्ग्रीष्मावेवाश्विनाभ्यां वर्षाशरदौ सारस्वताभ्याꣳ हेमन्तशिशिरावैन्द्राभ्यां यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३४ ॥ सन्तता याज्यापुरोऽनुवाक्क्या भवन्ति। समानदेवत्त्या ऽऋतूनाꣳ सन्तत्त्या ऽअव्व्यवच्छेदाय सर्वाः पुरोऽनुवाक्क्या भवन्ति सर्वा याज्यास्तस्म्मादृतवः सर्वे पराञ्चः सर्वे प्प्रत्यञ्चः सर्वाः प्प्रथमा भवन्ति सर्वा मद्ध्यमाः सर्वा ऽउत्तमास्तस्म्मादृतवः सर्वे प्प्रथमाः सर्वे मद्ध्यमाः सर्वं ऽउत्तमाः सर्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्क्ये भवतोऽहोरात्रयोस्तद्रूपमहोरात्रे ऽएवावरुन्द्धे तस्म्मादृतवश्च मासाश्चाहोरात्रयोरेव प्प्रतिष्ठिताः ॥ ३५ ॥ स वा ऽएष सँवत्सर ऽएव यत्सौत्रामणी। चन्द्रमा ऽएव प्प्रत्यक्षादादित्यो यजमानस्तस्येयमेव पृथिवी वेदिरन्तरिक्षमुत्तरवेदि-

(१-२) "ऋतूनेवैतै॰" इति 'ग' 'ज' पुस्तकयोः।

द्यौर्ब्बर्हिर्द्दिश ऽऋत्त्विजो व्वनस्प्पतय ऽइद्‌ध्म ऽआप ऽआज्यमोषधय ऽआहुतयोग्ग्निरेवाग्ग्निः सँव्वत्त्सरः सर्वंस्था तद्वा ऽइदꣳ सर्व्वꣳ सँव्वत्सर ऽएव यदिदङ्किञ्च तस्म्मात्सौत्रामण्ण्येजानः सर्व्वञ्जयति सर्व्वमवरुन्द्धे ॥ ३६ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ राज्ञोऽभिषेकादि ]

त्वष्टा हतपुत्त्रः । अभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्प्रासहा सोममपिबत्स व्विष्व्वङ्व्यार्च्छंत्तस्य मुखात्प्प्राणेब्भ्यः श्रीयशसान्न्यूर्द्ध्वान्न्युदक्क्रामँस्तानि पशून्प्प्राविशँस्तस्म्मात्पशवो यशो यशो ह भवति य ऽएवं व्विद्वान्त्सौत्रामण्ण्याभिषिच्च्यते ॥ १ ॥ ततोऽस्म्मा ऽएतमश्विनौ च सरस्वती च । यज्ञꣳ समभरन्त्सौत्रामणीम्भैषज्ज्याय तयैनमब्भ्यषिञ्चँस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानाम्भवति य ऽएनयाभिषिच्च्यते ॥२॥ कृष्ण्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्ण्णाजिनं यज्ञ ऽएवैनमेतदभिषिञ्चति लोमतश्छदाꣳसि वै लोमानि च्छन्दःस्वेवैनमेतदभिषिञ्चति ॥ ३ ॥ आसन्द्यामभिषिञ्चति । आसन्दी सद्वै साम्म्राज्यꣳ साम्म्राज्येनैवैनꣳ साम्म्राज्यङ्गमयति ॥४॥ औदुम्बरी भवति । ऊर्ग्वा ऽउदुम्बर ऽऊर्ज्यैवाद्ध्यभिषिच्च्यते जानुसम्मिता भवति जानुसम्मितो वा ऽअयँल्लोकोऽस्म्मा ऽउ व्वै लोकाय क्षत्त्रियोऽभिषिच्च्यते क्षत्त्रमु

वा ऽएष भवति यः सौत्रामण्याभिषिच्यते तस्मा-ज्जानुसम्मितापरिमिता तिरश्ची ॥ ५ ॥ राष्ट्रं वा ऽआसन्दी । अपरिमितसमृद्धमु वै राष्ट्रम्मुञ्जविवयना भवति यज्ञिया हि मुञ्जा द्वा ऽउत्तरस्यां वेद्याम्पादौ भवतो द्वौ दक्षिणस्यामयं वै लोक ऽउत्तरा वेदिर्दक्षिणा पितृलोकस्त-देनमुभयोर्ल्लोकयोरभ्यभिषिञ्चति ॥ ६ ॥ एतद्ध स्म वै तद्विद्वानाह । गौरीवितिः शाक्त्यः क्षत्रमिवाह किल वय-ममुष्मिँल्लोके भविता स्म ऽइति शश्वद्धास्मा ऽऋषभो याज्ञतुरः प्रोवाच श्विक्नानाथं राजा ॥ ७ ॥ स ऽआस-न्दीमास्तृणाति * । 'क्षत्रस्य योनिरसि क्षत्रस्य नाभिर-सी'ति क्षत्रस्य वा ऽएषा योनिः क्षत्रस्य नाभिः ॥८॥ अथै-नाङ्कृष्णाजिनेनास्तृणाति † । 'मा त्वा हिंसीन्मा मा हिंसी'रिति यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्चा-हिंसायै ॥ ९ ॥ अथाधिरोहति । वारुण्यर्चा वरुणो वै देवानां राजा स्वयैवैनमेतद्देवतयाभिषिञ्चति 'निषसाद धृतव्रतो वरुणः पस्त्यास्वा ॥ साम्राज्याय सुक्रतु'रिति ॥१०॥ अथ सुवर्णरजतौ रुक्मौ ‡ व्युपास्यति । 'मृत्योः पाहि विद्योत्पाही'ति वृष्टिर्वै विराट् तस्या ऽएते घोरे तन्वौ विद्युच्च

---

* का० श्रौ० सू० १९. ४. ७।
(१) शु० य० सं० २०. १।
† का० श्रौ० सू० १९. ४. ८।
(२) शु० य० सं० २०. १। (३) शु० य० सं० २०. २।
‡ मण्डलाकारो भूषणविशेषो रुक्मः। (म० भा०)
(४) शु० य० सं० २०. २।

ह्लादुनिश्च ततः सुवर्ण्णं ऽएव रुक्क्मो विद्युतो रूपᳬ रजतो ह्लादुनेस्ताभ्यामेवास्म्मै देवताभ्याᳬं शर्म्म यच्छति तस्म्मात्सौत्रामण्ण्येजानस्यैताभ्यान्देवताभ्यान्न शङ्का भवत्त्यथो य ऽएवमेतद्वेद ॥ ११ ॥ पशूनां वसयाभिषिञ्चति । श्रीर्वै पशूनां वसा * श्रियैवैनमेतत्पशूनाᳬं रसेनाभिषिञ्चत्त्यथो परमं वा ऽएतदन्नाद्यं यद्वसा परमेणैवैनमेतदन्नाद्येनाभिषिञ्चति ॥ १२ ॥ शफग्ग्रहा भवन्ति । शफैर्वै पशवः प्प्रतितिष्ठन्ति प्प्रतिष्ठामेवैनङ्गमयति त्रयस्त्रिᳬशद्ग्रहा भवन्ति त्रयस्त्रिᳬशद्वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति जगतीभिर्ज्जुहोति जागता वै पशवो जगत्त्यैवास्म्मै पशूनवरुन्द्धे षोडशभिर्ऋग्भिर्ज्जुहोति षोडशकला वै पशवोऽनुकूलमेवास्मिञ्छ्रियन्दधाति ॥ १३ ॥ 'सीसेर्न[2] तन्त्रम्मनसा मनीषिण' ऽइति । द्वौ द्वौ† समासᳬ हुत्वा सते सᳬंस्रवान्त्समवनयत्त्यहोरात्राण्ण्येवैतदर्द्धमासान्मासानृतून्त्सँवत्त्सरे प्प्रतिष्ठापयति तानीमान्न्यहोरात्राण्ण्यर्द्धमासा मासा ऽऋतवः सँवत्त्सरे प्प्रतिष्ठिताः ॥ १४ ॥ वैतसः सतो भवति । अप्प्सुयोनिर्वै वेतस ऽआपो वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति ॥१५॥ सर्वसुरभ्युन्म्मर्द्दनम्भवति परमो वा ऽएष गन्धो यत्त्सर्वसुरभ्युन्म्मर्द्दनङ्गन्धेनैवैनमेतदभिषिञ्चति ॥ १६ ॥ पुरस्तात्त्प्रत्यङ्ङभिषिञ्चति । पुरस्ताद्धि प्प्रत्यगन्नमद्यते शीर्षतः शीर्षतो ह्यन्नमद्यत ऽआ मुखादन्न्ववस्त्रावयति

* मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसाशब्देनोच्यते ।
† "द्वौ द्वौ हुत्वा वेतसान्तवे करोति" ( का॰ श्रौ॰ सू॰ १९. ४. १३ )
( १ ) 'ग' 'ञ' पुस्तकयोः "दधति" इति । ( २ ) शु॰ य॰ सं॰ १९, ८० ।

मुखेन ह्यन्नमद्यते सर्व्वतः परिक्क्रामꣳ सर्व्वाब्भ्य ऽएवास्मिन्नेतद्दिग्भ्योऽन्नाद्यन्दधाति तस्मात्सौत्रामण्ण्येजानस्य सर्व्वासु दिक्ष्वन्नाद्यमवरुद्धम्भवत्त्यथो य ऽएवमेतद्वेद ॥ १७ ॥ आश्विनेन प्प्रथमेन यजुषाभिषिञ्चति । अथ सारस्वतेनाथैन्द्रेणैताभिरेवैनमेतद्देवताभिरभिषिञ्चति तꣳ हैक ऽएताभिश्च देवताभिरभिषिञ्चन्ति भूर्ब्भुवः स्वरित्त्येताभिश्च व्व्याहृतिभिरेता वै व्व्याहृतय ऽइदꣳ सर्व्वन्तदेनमनेन सर्व्वेणाभिषिञ्चाम ऽइति न तथा कुर्य्यादेताभिरेवैनन्देवताभिरभिषिञ्चेदेता ऽउ ह्येव देवता इदꣳ सर्व्वम् ॥ १८ ॥ पुरस्तात्स्विष्टकृतोऽभिषिञ्चति । क्षत्रं व्वै स्विष्टकृत्क्षत्रेणैवैनमेतदभिषिञ्चत्त्यन्तरा व्वनस्प्पतिञ्च स्विष्टकृतञ्चाभिषिञ्चति सोमो वै व्वनस्प्पतिरग्निः स्विष्टकृदग्नीषोमाब्भ्यामेवैनमेतत्परिगृह्याभिषिञ्चति तस्माद्ये चैतद्विदुर्ये च न त ऽआहुः क्षत्रियो वाव क्षत्रियस्याभिषेक्तेति ॥ १९ ॥ अथैनञ्जानुमात्रे धारयन्ति । अथ नाभिमात्रेऽथ मुखमात्र ऽएष्ष्वेवास्म्मा ऽएतल्लोकेष्ष्वायतनानि कल्प्पयत्त्यभिषेको वा ऽएष यद्राजपेयमभिषेकः सौत्रामणी तद्यथैवादो व्वाजपेये यूपꣳ रोहति तदेवैतद्रूपङ्क्रियते ॥ २० ॥ [अर्धः प्रपाठकः ॥५६॥ ] तदाहुः । प्प्रेव वा ऽएषोऽस्म्माल्लोकाच्च्यवते यः सौत्रामण्ण्याभिषिच्च्यत ऽइति कृष्ण्णाजिने प्प्रत्त्यवरोहति यज्ञो वै कृष्ण्णाजिनं य्यज्ञ ऽएवान्ततः प्प्रतितिष्ठति ॥ २१ ॥ 'प्प्रति क्षत्रे प्प्रतितिष्ठामि राष्ट्रे' ऽइति । क्षत्र

(१) शु० य० सं० २०. १० ।

ऽएव राष्ट्रे प्रतितिष्ठति क्षत्राद्राष्ट्रादुपशाय 'प्रत्य-श्वेषु प्रतितिष्ठामि गोषिव'ति गोऽश्वऽएव प्रतिति-ष्ठति गोऽश्वादुपशाय 'प्रत्यङ्गेषु प्रतितिष्ठाम्या-त्म'न्नित्यङ्गेष्वेवात्मन्प्रतितिष्ठत्यङ्गेभ्य ऽआत्मनोऽपशाय 'प्रति प्राणेषु प्रतितिष्ठामि पुष्टे' ऽइति प्राणे-ष्वेव पुष्टे प्रतितिष्ठति प्राणेभ्यः पुष्टादुपशाय 'प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञ' ऽइति तदनयो-र्द्यावापृथिव्योः प्रतितिष्ठति ययोरिदं सर्वमधि ॥ २२ ॥ अथ साम गायति। क्षत्रं वै साम क्षत्रेणैवैनमेतदभिषि-ञ्चत्यथो साम्राज्यं वै साम साम्राज्येनैवैनं साम्राज्य-ङ्गमयति सर्वेषां वा ऽएष वेदानां रसो यत्साम सर्वेषा-मेवैनमेतद्वेदानां रसेनाभिषिञ्चति ॥ २३ ॥ बृहत्या गा-यति। बृहत्यां वा ऽअसावादित्यः श्रियाम्प्रतिष्ठायाम्प्रतिष्ठि-तस्तपति बृहत्यामेवैनमेतच्छ्रियाम्प्रतिष्ठायाम्प्रतिष्ठापयति ॥२४॥ ऐन्द्र्याम्बृहत्याङ्गायति*। ऐन्द्रो वा ऽएष यज्ञो यत्सौ-त्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्व ऽएवैनमेत-दायतनेऽभिषिञ्चति ॥ २५ ॥ अथ यस्मात्संशानानि नाम। एतैर्वै सामभिर्देवा ऽइन्द्रमिन्द्रियाय वीर्याय समश्यँस्तथो ऽएवैतमृत्विजो यजमानमेतैरेव सामभिरि-न्द्रियाय वीर्याय संश्यन्ति संश्रवसे विश्रवसे सत्य-

(१) शु० य० सं० २०. १० । (२) शु० य० सं० २०. १० । (३) शु० य० सं० २०. १० । (४) शु० य० सं० २०. १० ।

* का० श्रौ० सू० १९. ५. २।

इश्रवसे इश्रवस ऽइति सामानि भवन्त्येष्वेवैनमेतल्लोकेषु इश्रावयन्ति चतुर्न्निधनम्भवति चतस्रो वै दिशः सर्व्वास्वेवैनमेतद्दिक्षु प्प्रतिष्ठापयन्ति सर्व्वे निधनमुपावयन्ति संविदाना ऽएवास्मिमिँल्लियन्दधति ॥ २६ ॥ तदाहुः । यदेतत्साम गीयतेऽथ क्कैतस्य साम्म्न ऽउक्क्थङ्का प्प्रतिष्ठा ऽव्वृद्धः हि तद्यस्तुतमननुशस्तमिति ॥ २७ ॥ त्रया देवा ऽएकादशेति । एतद्वा ऽएतस्य साम्म्न ऽउक्क्थमेषा प्प्रतिष्ठा ॥ २८ ॥ अथो 'त्रया देवा ऽएकादशे'ति । त्रयस्त्रिंशशङ्गहञ्जुहोति त्रया हि देवा ऽएकादश 'त्रयेस्त्रिंशाः सुराधस' ऽइति त्रयस्त्रिंशद्धि देवा 'बृहस्प्पतिपुरोहिता' ऽइति ब्ब्रह्म वै बृहस्प्पतिर्ब्ब्रह्मपुरोहिता ऽइत्येवैतदाह 'देवस्य सवितुः सव' ऽइति देवेन सविञ्ञा प्प्रसूता ऽइत्येवैतदाह 'देवा देवैरवन्तु मे'ति देवा ह्येतन्देवैरभिषिञ्चन्ति ॥ २९ ॥ 'प्रथमा द्वितीयै'रिति । प्प्रथमा ह्येतन्द्वितीयैरभिषिञ्चन्ति 'द्वितीयाँस्तृतीयै'रिति द्वितीया ह्येतन्तृतीयैरभिषिञ्चन्ति 'तृतीयाः सत्त्येने'ति तृतीया ह्येतः सत्त्येनाभिषिञ्चन्ति 'सत्त्यं य्यज्ञेने'ति सत्त्यः ह्येतं य्यज्ञेनाभिषिञ्चति 'यज्ञो यजुर्भि'रिति यज्ञो ह्येतं य्यजुर्भिरभिषिञ्चति 'यजूंषि सामभि'रिति यजूंषि ह्येतः साम-

(१) शु० य० सं० २०. ११। (२) शु० य० सं० २०. ११। (३) शु० य० सं० २०. ११। (४) शु० य० सं० २०. ११। (५) शु० य० सं० २०. ११। (६) शु० य० सं० २०. १२। (७) शु० य० सं० २०. १२। (८) शु० य० सं० २०. १२। (९) शु० य० सं० २०. १२। (१०) शु० य० सं० २०. १२। (११) शु० य० सं० २०. १२।

भिरभिषिञ्चन्ति 'सामान्यृग्भि'रिति सामानि ह्येतमृग्भिरभिषिञ्चन्त्यृ'चः पुरोऽनुवाक्याभि'रित्यृचो ह्येतम्पुरोऽनुवाक्याभिरभिषिञ्चन्ति 'पुरोऽनुवाक्या याज्याभि'रिति पुरोऽनुवाक्या ह्येतं य्याज्याभिरभिषिञ्चन्ति 'याज्या वषट्कारै'रिति य्याज्या ह्येतं व्वषट्कारैरभिषिञ्चन्ति 'व्वषट्कारा ऽआहुतिभि'रिति व्वषट्कारा ह्येतमाहुतिभिरभिषिञ्चन्त्या'हुतयो मे कामान्त्समर्द्धयन्तु भूः स्वाहे'ति तदेनमेताभिर्देवताभिः परोऽवरमभिषिच्याथास्म्मा ऽआहुतिभिः सर्वान्कामान्त्समर्द्धयत्यथर्त्विक्षूपहवमिष्ट्वा भक्षयत्यृतवो वा ऽऋत्विज ऽऋतुष्वेवैतदुपहवमिच्छते ॥ ३० ॥ स भक्षयति । 'लोमानि प्प्रयतिर्म्मम त्वङ्म ऽआनतिरागतिः ॥ माꣳसम्म ऽउपनतिर्वस्वस्थि मज्जा म ऽआनति'रिति प्प्रेव वा ऽएष लोकाँश्च देवताश्च विशति यः सौत्रामण्याभिषिच्यते तदेतदवान्तरामात्मानमुपह्वयते तथा कृत्स्न ऽएव सर्वतनूः साङ्गः सम्भवति ॥ ३१ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

—:o:—

[ सौत्रामणीशेषः ]

एतस्माद्वै यज्ञात्पुरुषो जायते । स यद्ध वा ऽअस्मिँल्लोके पुरुषोऽन्नमत्ति तदेनममुष्मिँल्लोके प्प्रत्यत्ति स

(१) शु० य० सं० २०. १२। (२) शु० य० सं० २०. १२। (३) शु० य० सं० २०. १२। (४) शु० य० सं० २०. १२। (५) शु० य० सं० २०. १२। (६) शु० य० सं० २०. १२। (७) शु० य० सं० २०. १३।

वा ऽएष परिस्रुतो यज्ञस्तायतेऽन्नाद्या वै ब्ब्राह्मणेन परि-
स्रुत्स ऽएतस्मादन्नाद्याज्जायते तद्ध ह्यमुष्मिँल्लोकेऽन्न
प्प्रत्यत्ति तस्मादेष ब्ब्राह्मणयज्ञ ऽएव यत्सौत्रामणी ॥ १ ॥
तस्य लोमान्येव शष्प्पाणि । त्वक्तोक्क्मानि माꣳसँल्लाजा
ऽअस्थि कारोतरो मज्जा मासरꣳ रसः परिस्रुन्नग्नहुल्लो-
हितꣳ रेतः पयो मूत्रꣳ सुरोवध्यं बल्क्कसम् ॥ २ ॥ हृदय-
मेवास्यैन्द्रः पुरोडाशः । यकृत्सावित्रः क्क्लोमा व्वारुणो
मतस्ने ऽएवास्याश्श्वत्थश्च पात्रमौदुम्बरश्च पित्तन्नैयग्ग्रोध-
मान्त्राणि स्स्थाल्ल्यो गुदा ऽउपशयानि श्श्येनपत्त्रे प्प्लीहा-
सन्दी नाभिः कुम्भो व्वनिष्ठुः प्लाशिः शतातृण्णा तद्यत्सा
बहुधा व्वितृण्णा भवति तस्मात्प्लाशिर्ब्बहुधा व्विकृत्तो
मुखꣳ सतञ्जिह्वा पवित्रञ्चप्प्यम्पायुर्व्वस्तिर्व्वालः ॥ ३ ॥
अङ्गान्येवास्याश्श्विनः पशुः । आत्मा सारस्वतो रूपमैन्द्र
ऽऋषभस्तस्मादाहुर्ग्गावः पुरुषस्य रूपमित्त्यायुर्हिरण्य-
न्तच्छतमानम्भवति तस्माच्छतायुः पुरुषः ॥ ४ ॥ चक्षुषी
ऽएवास्याश्श्विनौ ग्ग्रहौ । पक्ष्माणि गोधूमसक्तवश्च
कुवलसक्तवश्च नासिके ऽएवास्य सारस्वतौ ग्ग्रहावथ
यानि नासिकयोर्ल्लोमानि तान्युपवाकसक्तवश्च बदरसक्त-
वश्च श्श्रोत्रे ऽएवास्यैन्द्रौ ग्ग्रहावथ यानि कर्ण्णयोर्ल्लोमानि
यानि च भ्भ्रुवोस्तानि यवसक्तवश्च कर्क्कन्धुसक्तवश्च
॥ ५ ॥ अथ यान्न्युपस्थे लोमानि । यानि चाधस्तात्तानि

(१) 'सर्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजपिप्पलीवंशावकाबृहच्छत्राचित्रकेन्द्र-वारुण्यश्वगन्धाधान्यकयवानीजीरकद्वयहरिद्राद्वयविरूढयवव्रीहय एकीकृता नग्नहुः' (म०भा०)।

व्वृकलोमान्न्यथ यान्न्युरसि लोमानि यानि च निकक्ष-योस्तानि व्व्याग्घ्रलोमानि केशाश्च श्म्मश्श्रूणि च सिंह-लोमानि ॥ ६ ॥ त्रयः पशवो भवन्ति । त्रेधाविहितो वा ऽअयम्पुरुषस्यात्त्मात्त्मानमेवास्य तै स्पृणोति यदुवाङ्ना-भेस्तदाश्श्विनेन यदूर्द्ध्वन्नाभेरवाचीनꣳ शीर्ष्णस्तत्सारस्वतेन शिर ऽऐन्द्रेण यथारूपमेव यथादेवतमात्त्मानम्मृत्त्यो स्पृत्त्वा-मृतङ्कुरुते ॥ ७ ॥ त्रयः पुरोडाशा भवन्ति । त्रेधाविहितं व्वा ऽइदम्पुरुषस्य व्वयो व्वय ऽएवास्य तै स्पृणोति पूर्व्ववयसम-वैन्द्रेण मद्ध्यमवयसꣳ सावित्रेणोत्तमवयसं व्वारुणेन यथा-रूपमेव यथादेवतं व्वयो मृत्त्यो स्पृत्त्वामृतङ्कुरुते ॥ ८ ॥ षड्ग्रहा भवन्ति । षड्वा ऽइमे शीर्षन्प्राणाः प्प्राणानेवास्य तै स्पृणोति चक्षुषी ऽएवाश्श्विनाब्भ्यान्नासिके सारस्व-ताब्भ्याꣳ श्रोत्रे ऽऐन्द्राब्भ्यां य्यथारूपमेव यथादेवत-म्प्राणान्मृत्त्यो स्पृत्त्वामृतान्कुरुते ॥ ९ ॥ सन्तता याज्या-पुरोऽनुवाक्क्या भवन्ति । समानदेवत्त्याः प्प्राणानाꣳ सन्तत्त्या ऽअव्व्यवच्छेदाय सर्व्वाः पुरोऽनुवाक्क्या भवन्ति सर्व्वा याज्यास्तस्म्मात्प्राणाः सर्व्वे पराञ्चः सर्व्वे प्प्रत्त्यञ्चः सर्व्वाः प्प्रथमा भवन्ति सर्व्वा मद्ध्यमाः सर्व्वा ऽउत्तमास्त-स्म्मात्प्राणाः सर्व्वे प्प्रथमाः सर्व्वे मद्ध्यमाः सर्व्व ऽउत्तमाः सर्व्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्क्ये भवतः प्प्राणो-दानयोस्तद्रूपम्प्राणोदानावेवावरुन्द्धे तस्म्मात्सर्व्वे प्प्राणाः प्प्राणोदानयोरेव प्प्रतिष्ठिताः ॥ १० ॥ स वा एष ऽआ-

(१) "मात्त्मानम्मृत्त्यो स्पृत्त्वामृतङ्कुरुते" इति 'ग' 'ज' पुस्तकयोः ।

त्मैव यत्सौत्रामणी । मन ऽएव प्रत्यक्षाद्वाग्ग्यजमानस्त-
स्यात्मैव वेदिः प्रजोत्तरवेदिः पशवो बर्हिरङ्गान्न्यृत्विजो-
ऽस्त्थीनीद्ध्म ऽआज्ज्यम्मज्जा मुखमग्निरन्नमाहुतिर्व्वयः
सꣳस्था तस्म्मात्सौत्रामण्ण्येजानो व्वय ऽउपगच्छति ॥११॥
तद्यौ ह वा ऽइमौ पुरुषाविवाक्ष्योः । एतावेवाश्विनावथ
यत्कृष्ण्णन्तत्सारस्वतं यच्छुक्लन्तदैन्द्रन्तद्यदाश्विने पशौ
सत्यथैता देवताः सह यजत्येतान्न्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते
॥ १२ ॥ मन ऽएवेन्द्रः । व्वाक्सरस्वती श्श्रोत्रे ऽअश्विनौ
यद्वै मनसा ध्यायति तद्वाचा वदति यद्वाचा वदति
तत्कर्ण्णाभ्यां श्शृणोति तद्यत्सारस्वते पशौ सत्यथैता
देवताः सह यजत्येतान्न्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते ॥ १३ ॥
प्राण ऽएवेन्द्रः । जिह्वा सरस्वती नासिके ऽअश्विनौ
यद्वै प्राणेनान्नमात्मन्न्प्रणयते तत्प्राणस्य प्राणत्वञ्जिह्वया
वा ऽअन्नस्य रसं व्विजानाति नासिके ऽउ वै प्राणस्य
पन्थास्तद्यदैन्द्रे पशौ सत्यथैता देवताः सह यजत्येता-
न्न्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते ॥ १४ ॥ हृदयमेवेन्द्रः । यकृ-
त्सविता क्क्लोमा व्वरुणस्तद्यदैन्द्रे पुरोडाशे सत्यथैता
देवताः सह यजत्येतान्न्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते ॥ १५ ॥
प्राण ऽएव सविता । व्यानो व्वरुणः शिश्नमिन्द्रो यद्वै
प्राणेनान्नमत्ति तद्व्यानेन व्यनिति शिश्नेन वा ऽअन्नस्य
रसः रेतः सिञ्चति तद्यत्सावित्रे पुरोडाशे सत्यथैता
देवताः सह यजत्येतान्न्येवैतत्सार्द्धङ्कृत्वात्मन्धत्ते ॥ १६ ॥
योनिरेव व्वरुणः । रेत ऽइन्द्रः सवितैव रेतसः प्रजनयिता

तद्यद्वारुणे पुरोडाशे सत्यथैता देवताः सह यजत्येताभ्ये-वैतत्सार्द्धङ्कृत्वात्मन्धत्ते स य ऽएवमेतद्वेदैता ऽएव देवता अनुसम्भवत्येता देवता ऽअनु प्प्रजायत ऽआ प्प्रजया पशुभिः प्प्यायते प्प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्ग्गँल्लो-कञ्जयति य ऽएवं विद्वान्त्सौत्रामण्ण्या यजते यो वैत-देवं वेद ॥ १७ ॥

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अवभृथेष्टिः ]

अवभृथमिष्ट्वा यन्ति । अवभृथं वै सोमेनेष्ट्वा यन्ति सोम ऽएष यत्सौत्रामणी ॥ १ ॥ 'यद्देवा[1] देवहेडन'मिति । देवकृतादेवैनमेनसो मुञ्चति 'यदि दिवा[2] यदि नक्त'मिति यदेवाहोरात्राभ्यामेनः करोति तस्म्मादेवैनम्मुञ्चति 'यदि[3] जाग्ग्रद्यदि स्वप्न' ऽइति मनुष्ष्या वै जागरितम्पितरः सुप्तम्मनुष्ष्यकिल्बिषाच्चैवैनम्पितृकिल्बिषाच्च मुञ्चति ॥ २ ॥ 'यद्ग्ग्रामे[4] यदरण्ण्य' ऽइति । ग्ग्रामे वा ह्यरण्ण्ये वैनः क्क्रियते तस्म्मादेवैनम्मुञ्चति 'यत्सभाया[5]'मिति सभ्भ्या-देवैनमेनसो मुञ्चति 'यदिन्द्रिय[6]' ऽइति देवादेवैनमेनसो मुञ्चति 'यच्छूद्रे[7] यदर्य्ये यदेनश्चकृमा वयं ऽयदेकस्याधि धर्म्मणि तस्यावयजनमसी'ति सर्वस्म्मादेवैनमेतस्म्मादे-नसो मुञ्चति ॥ ३ ॥ 'यदापो[8] ऽअग्घ्न्या ऽइति । वरुणेति

(१) शु० य० सं० २०, १४। (२) शु० य० सं० २०, १५। (३) शु० य० सं० २०, १६। (४) शु० य० सं० २०, १७। (५) शु० य० सं० २०, १७। (६) शु० य० सं० २०, १७। (७) शु० य० सं० २०, १७। (८) शु० य० सं २०, १८।

शपामहे ततो वरुण नो मुञ्चे'ति वरुण्याद्देवैनमेनसो मुञ्चत्य-
'व[1]भृथ निचुम्पुण निचेरुरसि निचुम्पुण' ऽइति यो ह वाऽअ-
यमपामावर्त्तः स हावभृथः स हैष वरुणस्य पुत्रो वा भ्राता
वा तमेवैतत्स्तौत्य'[2]व देवैर्देवकृतमेनो यक्षी'ति देवकृतमेवैनो-
ऽवयजते'ऽव [3]मर्त्यैर्मर्त्यकृत'मिति मर्त्यकृतमेवैनोऽवयजते
'पुरुराव्णो देव रिषस्पाही'ति सर्वाभ्यो मार्त्तिभ्यो
गोपायेत्त्येवैतदाह ॥ ४ ॥ 'स[4]मुद्रे ते हृदयमप्स्वन्त'रिति ।
आपो वै समुद्रो रसो वा ऽआपस्तदेनमेतेन रसेन
सꣳसृजति 'सन्त्वा[5] विशन्त्वोषधीरुताप' ऽइति तदेन-
मेतेनोभयेन रसेन सꣳसृजति यश्चौषधिषु यश्चाप्सु
द्वौ विक्रमा ऽउदङ्ङुत्क्रामत्येतावती वै मनुष्ये जूति-
र्य्यावान्विक्रमस्तद्यावत्येवास्मिञ्जूतिस्तयैव पाप्मानं विज-
हाति ॥ ५ ॥ 'सुमित्रिया[6] न ऽआप ऽओषधयः सन्त्वि'ति ।
अञ्जलिनाप ऽउपाचति वज्रो वा ऽआपो वज्रेणैवैतन्मि-
त्रधेयङ्कुरुते 'दु[7]र्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि
यञ्च वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दि-
शम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ६ ॥ 'द्रुप[8]दादिव
मुमुचानः । स्विन्नः स्नातो मलादिव ॥ पूतम्पवित्रेणेवाज्य-
मापः शुन्धन्तु मैनस' ऽइति वासोऽपप्लावयति यथे-
षीकाम्मुञ्जाद्विवृहेदेवमेनꣳ सर्वस्मात्पाप्मनो विवृहति

(१) शु० य० सं० २०. १८। (२) शु० य० सं० २० १८। (३) शु० य० सं० २०. १८। (४) शु० य० २०. १८। (५) शु० य० सं० २०. १९. (६) शु० य० सं० २०. १९। (७) शु० य० सं० २०. १९। (८) शु० य० सं० २०. १९। (९) शु० य० सं० २०. २०।

स्नाति तम ऽएवापहते ॥ ७ ॥ 'उद्वयन्तमसस्परी'ति । पाप्मा वै तमः पाप्मानमेव तमोऽपहते 'स्वः पश्यन्त ऽउत्तर'मित्ययं वै लोकोऽथ ऽउत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति 'देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तम'मिति स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमꣳ स्वर्ग ऽएव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीयमुपतिष्ठते ॥ ८ ॥ 'अपो ऽअद्यान्वचारिष'मिति । अपामेव रसमवरुन्द्धे 'रसेन समसृक्ष्महि'त्यपामेव रसमात्मन्धत्ते 'पयस्वानग्न ऽआगमन्तम्मा सꣳसृज वर्चसा प्रजया च धनेन चे'त्याशिषमेवैतदाशास्ते ॥ ९ ॥ 'एधोऽस्येधिषीमहि'ति समिधमादत्ते * । एधो ह वा ऽअग्नेः समि'त्समिदसि तेजोऽसि तेजो मयि धेही'त्याहवनीये समिधमभ्यादधात्यग्निमेवैतया समिन्द्धे स ऽएनꣳ समिद्धस्तेजसा समिन्द्धे ॥ १० ॥ आदित्यञ्चरुं रुपक्ष्यमाणो निर्वपति । आदित्यमीजान ऽइयं वा अदितिरस्यामेव यज्ञन्तनुतेऽस्यामिष्ट्वा प्रतितिष्ठति धेनुर्दक्षिणेयं वै धेनुरिमामेव सर्वान्कामान्दुहे वत्सम्पूर्वस्यान्ददाति मातरमुत्तरस्यां ष्यदा वै वत्सो मातरन्धयत्यथ सा प्रत्ता दुहे प्रत्तामेवेमाꣳ सर्वान्कामान्दुहे ॥ ११ ॥ तदाहुः । प्रेव वा ऽएषोऽस्मा-

---

( १ ) शु० य० सं० २०. २१ । ( २ ) शु० य० सं० २०. २१ । ( ३ ) शु० य० सं० २०. २१ । ( ४ ) शु० य० सं० २०. २२ । ( ५ ) शु० य० सं० २०. २२ । ( ६ ) शु० य० सं० २०. २२ । ( ७ ) शु० य० सं० २०. २३ । ( ८ ) शु० य० सं० २०. २३ ।

* का० श्रौ० सू० १९. ५. १९ ।

ह्लोकाच्च्यवते यो ऽपो ऽवभृथमभ्यवैतीत्यवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजते ऽयं वै लोको मित्रो ऽसौ वरुणो यदेवेदमन्तरेण तत्पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजत ऽएष्वेवैतल्लोकेषु प्रतितिष्ठति प्राणो वै मित्रो ऽपानो वरुणो ऽन्नमेव पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजते प्राण ऽएवान्नाद्ये ऽन्ततः प्रतितिष्ठति ॥१२॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ सौत्रामण्यर्थवादः ]

दुष्टरीतुर्ह पौंसायनः । दशपुरुषं राज्यादुपरुद्ध ऽआस रेवोत्तरसमु ह पाटवं चाक्रं स्थपतिं सृञ्जया ऽअपरुरुधुः ॥ १ ॥ स होवाच । दुष्टरीतुम्पौंसायनं सौत्रामण्या त्वा याजयानि यदिदं सृञ्जयेषु राष्ट्रन्त्वयि धास्यामीति तथेति तयैनमयाजयत् ॥ २ ॥ तदु ह बल्हिकः प्रातिपीयः शुश्राव । कौरव्यो राजा यो ह वा ऽअयन्दुष्टरीतुः पौंसायनो दशपुरुषं राज्यादुपरुद्धो ऽभूत्तमयं चाक्र स्थपतिः सौत्रामण्या याजयिष्यति यदिदं सृञ्जयेषु राष्ट्रन्तद्धास्मिन्धास्यतीति ॥ ३ ॥ स होवाच । तन्न्वा ऽअहन्तं वेदिष्यामि यदि स तस्मिन्राष्ट्रन्धास्यति बहिर्द्धा वैनं राष्ट्राद्धास्यतीति स ऽआजगाम यस्यां वेलायाङ्ग्रहा गृह्यन्ते ॥ ४ ॥ स होवाच । स्थपते चाक्र नाहवनीये सुरा होतव्येत्या-

हुर्व्वान्यत्राहवनीयाद्यद्याहवनीये सुराᳬं होष्यसि पापवस्यसङ्करिष्यसि जामि यज्ञस्य यद्यन्यत्राहवनीयाद्बहिर्द्धैनᳬं राष्ट्राद्धास्यसि नैनᳬं राष्ट्रे धास्यसि नास्मिन्राष्ट्रन्धास्यसीति ॥ ५ ॥ स होवाच। नाहवनीये सुराᳬं होष्यामि नान्यत्राहवनीयान्न पापवस्यसङ्करिष्यामि न जामि यज्ञस्य नैनम्बहिर्द्धा राष्ट्राद्धास्यामि राष्ट्रऽएनन्धास्यामि राष्ट्रमस्मिन्धास्यामीति ॥ ६ ॥ स होवाच। कथᳬं हि करिष्यसी३ऽइति स हैतदुवाचासुरेषु वा ऽएषोऽग्ग्रे यज्ञ आसीत्सौत्रामणी स देवानुपप्रैत्सोऽप ऽआगच्छत्तमापᳬ प्रत्यनन्दँस्तस्मादु श्रेयाᳬंसमागतम्प्रत्येव नन्दन्ति तᳬं होचुरेह्येव भगव ऽइति ॥ ७ ॥ स होवाच। बिभेमि वै प्प्रणयत मेति कस्माद्भगवो बिभेषीत्त्यसुरेब्भ्य ऽइति तथेति तमापᳬ प्प्राणयँस्तस्माद्यो वधत्रो भवति स बिब्भ्यतम्प्रणयति यदापᳬ प्प्राणयँस्तस्माद्वापᳬ प्प्रणीतास्तत्प्रणीतानाम्प्रणीतात्त्वम्प्रति ह तिष्ठति य ऽएवमेतत्प्रणीतानाम्प्रणीतात्त्वं वेद ॥ ८ ॥ तदिष्टाᳬ प्प्रयाजा ऽआसुᳬ। अपर्य्यग्ग्निकृतमथासुरा ऽअन्न्वाजग्मुस्ते देवाᳬ पर्य्यग्ग्निनैवासुरान्त्सपत्नान्भ्रातृव्यान्न्यज्ञादन्तरायँस्तथो ऽएवैष ऽएतत्पर्य्यग्ग्निनैव द्विषन्तम्भ्रातृव्यं यज्ञादन्तरेति ॥ ९ ॥ देवयोनिर्व्वा ऽएष यदाहवनीयᳬ। तस्यैतावमृतपक्षौ यावेतावभितोऽग्नी तद्यदाहवनीये यज्ञन्तन्न्वते देवयोनावेवैतद्देवेभ्यो यज्ञन्तन्न्वत ऽउप हैनम्पुनर्य्यज्ञो नमति नास्माद्यज्ञो

ऽव्युवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १० ॥ उत्तरेऽग्नौ पयोग्रहाञ्जुहोति । उत्तरेऽग्नौ पशूँल्लपयन्ति पशूनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्प्रजनयत्यप ह वै पशूनाम्पुनर्म्मृत्युञ्जयति नास्मायज्ञो ऽव्युवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ ११ ॥ दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंरुयुक्ताभिः पितॄनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्प्रजनयत्यप ह वै पितॄणाम्पुनर्म्मृत्युञ्जयति नास्मायज्ञो ऽव्युवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १२ ॥ तद्यदेतावग्नी ऽआहवनीयाद्विह्रियेते । तेनाहवनीयावथ यदाहवनीयम्पुनर्न्नाह्रन्नुवाते तेनानाहवनीयौ तेनोभौ होमा ऽउपाप्नोति यश्चाहवनीये यश्चानाहवनीये यच्च हुतं यच्चाहुतम्पुनर्हायमित्त्वोवाच न तदस्ति यत्सृञ्जयानाᳪं राष्ट्रन्दुष्टरीतोस्तदद्य तथायश्चाक्रुस्त्थपतिर्य्यज्ञेऽकरिति ॥१३॥ उत्तरेऽग्नौ पशुभिः पुरोडाशैः पयोग्रहैरिति चरन्ति । यदु चान्यत्तेन देवानेव तद्देवलोके प्प्रीणाति त ऽएनम्प्रीताः प्प्रीणन्त्यथो देवलोकमेव जयति ॥ १४ ॥ दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंरुयुक्ताभिः पितॄनेव तत्पितृलोके प्प्रीणाति त ऽएनम्प्रीताः प्प्रीणन्त्यथो पितृलोकमेव जयति ॥ १५ ॥ स वा ऽएष आत्मैव यत्सौत्रामणी । तस्मात्सा निरुक्ता निरुक्तो ह्यात्मा

लोको वयोधास्तस्मात्सोऽनिरुक्तोऽनिरुक्तो हि लोक ऽआत्मा वै यज्ञस्य सौत्रामणी बाहू ऽऐन्द्रश्च वयोधाश्च तद्यदेतावभितः पशू भवतस्तस्मादिमावात्मानमभितो बाहू यथो वै पशुरेवं ऽयूपस्तद्यदेतः सौत्रामणिकं ऽयूपमेतौ यूपावभितो भवतस्तस्माद्विमावात्मानमभितो बाहू ॥ १६ ॥

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ११२ ॥

इति नवमोऽध्यायः ॥ ९ ॥

मध्यमनाम द्वादशं काण्डं समाप्तम्* ॥ १२ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ४५९ ।

# अथाश्वमेधनाम त्रयोदशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—अश्वमेधः, तद्गतं प्रायश्चित्तम्, पुरुषमेधः, सर्वमेधः, दशरात्रः, पितृमेधः ]

[ ब्रह्मौदनपाकः ]

॥ ॐ ॥* ब्रह्मौदनम्पचति । रेत ऽएव तद्धत्ते यदाज्य-मुच्छिष्यते तेन रशनामभ्यज्याद्त्ते तेजो वा ऽआज्य-म्प्राजापत्योऽश्वः प्रजापतिमेव तेजसा समर्द्धयत्यपूतो वा ऽएषोऽमेध्यो यदश्वः ॥ १ ॥ दर्भमयी रशना भवति । पवित्रं वै दर्भाः पुनात्येवैनम्पूतमेवैनम्मेध्यमालभते ॥ २ ॥ अश्वस्य वा ऽआलब्धस्य । रेत ऽउदक्रामत्तत्सुवर्णः हिरण्यमभवद्यत्सुवर्णः हिरण्यन्ददात्यश्वमेव रेतसा समर्द्धयति ॥ ३ ॥ † प्रजापतिर्यज्ञमसृजत । तस्य महि-मापाक्रामत्स महर्त्विजः प्राविशत्तम्महर्त्विग्भिरन्वैच्छत्त-म्महर्त्विग्भिरन्ववन्दद्यन्महर्त्विजो ब्रह्मौदनम्प्राश्नन्ति महिमानमेव तद्यज्ञस्य यजमानोऽवरुन्द्धे ब्रह्मौदने सुव-र्णः हिरण्यन्ददाति रेतो वा ऽओदनो रेतो हिरण्यः रेतसैवास्मिँस्तद्रेतो दधाति शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते चतुष्टयीरपो

---

* ब्राह्मणेभ्य ऋत्विग्भ्यो देय ओदनः ब्रह्मौदनः ।

† अत्र शतम् ६४०० ।

( १ ) 'क्र' इति 'ज' पुस्तके ।

वसतीवरीर्म्मध्यमायाह्नि गृह्णाति ता दिग्भ्यः समाहृता भवन्ति दिक्षु वा ऽअन्नमन्नमापोऽन्नेनैवास्मा ऽअन्नमवरुन्द्धे ॥ ४ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ अश्वस्य बन्धनप्रोक्षणादि ]

ऽव्यृद्धमु वा ऽएतद्यज्ञस्य । यदयजुष्क्केण क्रियत ‘ऽइ[1]मामगृब्भ्णन्रशनामृतस्ये’त्यश्श्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै द्वादशारत्निर्भवति द्वादश मासाः सँवत्सरः सँवत्सरमेव यज्ञमाप्नोति ॥ १ ॥ तदाहुः । द्वादशारत्नी रशना कार्य्या३ त्रयोदशारत्नी३रित्यृषभो वा ऽएष ऽऋतूनां यत्सँवत्सरस्तस्य त्रयोदशो मासो विष्टप मृषभ ऽएष यज्ञानां यदश्श्वमेधो यथा वा ऽऋषभस्य विष्टपमेवमेतस्य विष्टपन्त्रयोदशमरत्निः रशनायामुपादध्यात्तद्यथर्षभस्य* विष्टपः संस्क्रियते तादृक्तत् ॥ २ ॥ ‘अभि[2]धा ऽअसी’ति । तस्मादश्श्वमेधयाजी सर्व्वा दिशोऽभिजयति ‘भुव[3]नमसी’ति भुवनन्तज्जयति ‘य[4]न्तासि धर्त्ते’ति यन्तारमेवैनन्धर्त्तारङ्करोति’ ‘स त्वं[5]मग्निं वैश्श्वानर’मित्यग्निमेवैनं वैश्श्वानरङ्गमयति ‘सप्प्र[6]थसङ्गच्छे’ति प्प्रजयैवैनम्पशुभिः प्प्रथयति ‘स्वाहाँकृत’ ऽइति वषट्कार

(१) शु० य० सं० २२. २ ।

* ‘०थ ऽऋृषभस्य’ इति ‘ग’ ‘ज’ पुस्तकयोः ।

(२) शु० य० सं० २२. ३ । (३) शु० य० सं० २२. ३ । (४) शु० य० सं० २२. ३ । (५) शु० य० सं० २२. ३ । (६) शु० य० सं० २२. ३ । (७) शु० य० सं० २२. ३ ।

ऽएवास्यैष 'स्वगा[1] त्वा देवेब्भ्य' ऽइति देवेब्भ्य ऽएवैनथ्ठं स्वगा करोति 'प्प्रजापतय[2]' ऽइति प्प्राजापत्त्योऽश्श्वः स्वयैवैनन्देवतया समर्द्धयति ॥ ३ ॥ ईश्श्वरो वा ऽएषः । आर्त्तिमार्त्तोर्य्यो ब्ब्रह्मणे देवेब्भ्योऽप्प्रतिप्प्रोच्च्याश्श्वम्बद्ध्नाति 'ब्ब्रह्मन्नश्श्वम्भन्त्स्यामि[3] देवेब्भ्यः प्प्रजापतये तेन राद्ध्यास'मिति ब्ब्रह्माणमामन्त्रयते ब्ब्रह्मण ऽएवैनम्प्रतिप्प्रोच्च्य बद्ध्नाति नार्त्तिमार्च्छति 'तम्बधान[4] देवेब्भ्यः प्प्रजापतये तेन राद्ध्नुही'ति ब्ब्रह्मा प्प्रसौति स्वयैवैनन्देवतया समर्द्धयत्त्यथ प्प्रोक्षत्त्यसावेव बन्धुः ॥ ४ ॥ स प्प्रोक्षति । 'प्प्रजापतये[5] त्वा जुष्टम्प्प्रोक्षामी'ति प्प्रजापतिर्व्वै देवानां व्वीर्य्यवत्तमो व्वीर्य्यमेवास्स्मिन्दधाति तस्स्मादश्श्वः पशूनां व्वीर्य्यवत्तमः ॥५॥ 'इन्द्राग्ग्निब्भ्यान्त्वा[6] जुष्टम्प्रोक्षामी'ति । इन्द्राग्ग्नी वै देवानामोजस्वितमा ऽओज ऽएवास्स्मिन्दधाति तस्स्मादश्श्वः पशूनामोजस्वितमः ॥ ६ ॥ 'व्वायवे[7] त्वा जुष्टम्प्रोक्षामी'ति । व्वायुर्व्वै देवानामाशिष्ठो जवमेवास्स्मिन्दधाति तस्स्मादश्श्वः पशूनामाशिष्ठः ॥ ७ ॥ 'व्विश्श्वेब्भ्यस्त्वा[8] देवेब्भ्यो जुष्टम्प्रोक्षामी'ति । व्विश्श्वे वै देवा देवानां य्यशस्वितमा य्यश ऽएवास्स्मिन्दधाति तस्स्मादश्श्वः पशूनां य्यशस्वितमः 'सर्व्वेब्भ्यस्त्वा[9] देवेब्भ्यो जुष्टम्प्रोक्षामी'ति ॥ ८ ॥ तदाहुः । य्यत्प्राजापत्त्योऽश्श्वोऽथ कथाप्प्यन्न्याब्भ्यो

(१) शु० य० सं० २२. ४। (२) शु० य० सं० २२. ४। (३) शु० य० सं० २२. ४। (४) शु० य० सं० २२. ४। (५) शु० य० सं० २२. ५। (६) शु० य० सं० २२. ५। (७) शु० य० सं० २२. ५। (८) शु० य० सं० २२. ५। (९) शु० य० सं० २२. ५।

देवताभ्यः प्रोक्षतीति सर्वा वै देवता ऽअश्वमेधेऽन्वायत्ता यदाह सर्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामीति सर्वा ऽएवास्मिन्देवता ऽअन्वायातयति तस्मादश्वमेधे सर्वा देवता ऽअन्वायत्ताः पाप्मा वा ऽएतम्भ्रातृव्य ऽईप्सति योऽश्वमेधेन यजते वज्रोऽश्वः 'परो मर्त्तः परः श्वे'ति श्वानञ्चतुरक्षः हत्वाधस्पदमश्वस्योपप्लावयति वज्रेणैवैनमवक्रामति नैनम्पाप्मा भ्रातृव्य ऽआप्नोति ॥ ९ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ सहस्रमाहुतयः ]

यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशोः स्कन्दति यन्निक्तमनालब्धमुत्सृजन्ति यत्स्तोकीया जुहोति सर्वहुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नः हि तद्यद्धुतस्य स्कन्दति सहस्रञ्जुहोति सहस्रसम्मितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥ १ ॥ तदाहुः । यन्मिता जुहुयात्परिमितमवरुन्धीतेत्यमिता जुहोत्यपरिमितस्यैवावरुद्ध्या ऽउवाच ह प्रजापति स्तोकीयासु वा ऽअहमश्वमेधः सꣳस्थापयामि तेन सꣳस्थितेनैवात ऽऊर्द्ध्वञ्चरामीति ॥ २ ॥ 'अग्नये स्वाहे'ति । अग्नय ऽएवैनञ्जुहोति 'सोमाय स्वाहे'ति सोमायैवैनञ्जुहो'त्यपाम्मोदाय

(१) शु० य० सं० २२. ५। (२) शु० य० सं० २२. ६। (३) शु० य० सं० २२. ६। (४) शु० य० सं० २२. ६।

स्वाहे'त्यग्नय ऽएवैनञ्जुहोति '[1]सवित्रे स्वाहे'ति सवित्र ऽएवैनञ्जुहोति '[2]वायवे स्वाहे'ति वायव ऽएवैनञ्जुहोति '[3]विष्णवे स्वाहे'ति विष्णव ऽएवैनञ्जुहोती'न्द्राय स्वाहे'-तीन्द्रायैवैनञ्जुहोति '[5]बृहस्पतये स्वाहे'ति बृहस्पतय ऽएवै-नञ्जुहोति '[6]मित्राय स्वाहे'ति मित्रायैवैनञ्जुहोति 'वरुणाय स्वाहे'ति वरुणायैवैनञ्जुहोत्त्येतावन्तो वै सर्वे देवास्तेभ्य ऽएवैनञ्जुहोति पराचीर्ज्जुहोति पराङिव वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्त्यै ॥ ३ ॥ ईश्वरो वा ऽएषः । पराङ् प्रदघोर्ष्यः पराचीराहुतीर्ज्जुहोति पुनरावर्त्ततेऽस्मिन्नेव लोके प्रतितिष्ठत्त्येताथं ह वाव स यज्ञस्य सथंस्थिति-मुवाचास्कन्दायास्कन्नथं हि तद्यद्धुतस्य स्कन्दति ॥ ४ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यम्प्रोक्षितमनालब्धमुत्सृजन्ति यद्रूपाणि जुहोति सर्व-हुतमेवैनञ्जुहोत्त्यस्कन्दायास्कन्नथं हि तद्यद्धुतस्य स्कन्दति '[7]हिङ्काराय स्वाहा हिङ्कृताय स्वाहे'त्त्येतानि वा ऽअश्वस्य रूपाणि तान्त्येवावरुन्द्धे ॥ ५ ॥ तदाहुः । अनाहुतिर्वै रूपाणि नैता होतव्या ऽइत्त्यथो खल्वाहुरत्र वा ऽअश्व-मेधः सन्तिष्ठते यद्रूपाणि जुहोति होतव्या ऽएवेति बहिर्द्धा वा ऽएतमायतनात्करोति भ्रातृव्यमस्मै जन-यति यस्यानायतनेऽन्यत्राग्नेराहुतीर्ज्जुहोति ॥ ६ ॥ सावित्र्या

(१) शु० य० सं० २२. ६ । (२) शु० य० सं० २२. ६ । (३) शु० य० सं० २२. ६ । (४) शु० य० सं० २२. ६ । (५) शु० य० सं २२. ६ । (६) शु० य० सं० २२. ६ ।
(७) शु० य० सं० २२. ६ । (८) शु० य० सं० २२. ७ ।

ऽएवेष्टेः । पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यायतन ऽएवाहुतीर्जुहोति नास्मै भ्रातृव्यञ्जनयति यज्ञमुखे यज्ञमुखे जुहोति यज्ञस्य सन्तत्या ऽअव्यवच्छेदाय ॥ ७ ॥ तदाहुः । यद्यज्ञमुखे यज्ञमुखे जुहुयात्पशुभिर्व्यृध्येत पापीयान्त्स्यात्सकृदेव होतव्या न पशुभिर्व्यृध्यते न पापीयान्भवत्यष्टाचत्वारिꣳशतञ्जुहोत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्ध ऽएकमतिरिक्तञ्जुहोति तस्मादेकः प्रजास्वर्द्धुकः ॥ ८ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ सावित्र्य इष्टयः ]

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स दिशोऽनुप्राविशत्तन्देवाः प्रैषमैच्छँस्तमिष्टिभिरनुप्रायुञ्जत तमिष्टिभिरन्वैच्छँस्तमिष्टिभिरन्वविन्दन्न्यदिष्टिभिर्यजतेऽश्वमेव तन्मेध्यं यजमानोऽन्विच्छति ॥ १ ॥ सावित्र्यो भवन्ति । इयं वै सविता यो वा ऽअस्यान्निलयते योऽन्यत्रैत्यस्यां वाव तमनुविन्दन्ति न वा ऽइमाङ्कश्चन तिर्यङ्नोर्द्ध्वोऽत्येतुमर्हति यत्सावित्र्यो भवन्त्यश्वस्यैवानुवित्त्यै ॥ २ ॥ तदाहुः । प्र वा ऽएतदश्वो मीयते यत्पराङेति न ह्येनम्प्रत्यावर्त्तयन्तीति यत्सायन्धृतीर्जुहोति क्षेमो वै धृतिः क्षेमो रात्रिः क्षेमेणैवैनन्दाधार तस्मात्सायम्मनुष्याश्च पशवश्च क्षेम्या भवन्त्यथ यत्प्रातरिष्टि-

भिरुर्ध्वंजत ऽइच्छत्र्येवैनन्तत्तस्माद्दिवा नष्टैष ऽएति यद्वेव सायन्धृतीर्जुहोति प्रातरिष्टिभिरुर्ध्वंजते योगक्षेममेव तद्यजमानः कल्पयते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ गाथागानम् ]

अप वा ऽएतस्मात् । श्री राष्ट्रङ्क्रामति योऽश्वमेधेन यजते यदा वै पुरुषः श्रियङ्गच्छति वीणास्मै वाद्यते ब्राह्मणौ वीणागाथिनौ सँवत्सरङ्गायतः श्रियै वा ऽएतद्रूपं यद्वीणा श्रियमेवास्मिँस्तद्धत्तः ॥ १ ॥ तदाहुः । यदुभौ ब्राह्मणौ गायेतामपास्मात्क्षत्रङ्क्रामेद्ब्रह्मणो वा ऽएतद्रूपं यद्ब्राह्मणो न वै ब्रह्मणि क्षत्रꣳ रमत ऽइति ॥ २ ॥ यदुभौ राजन्यौ । अपास्माद्ब्रह्मवर्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं यद्राजन्यो न वै क्षत्रे ब्रह्मवर्चसꣳ रमत ऽइति ब्राह्मणोऽन्यो गायति राजन्योऽन्यो ब्रह्म वै ब्राह्मणः क्षत्रꣳ राजन्यस्तदस्य ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥ तदाहुः । यदुभौ दिवा गायेतामप्रभ्रꣳशुकास्माच्छ्रीः स्याद्ब्रह्मणो वा ऽएतद्रूपं यदहर्यदा वै राजा कामयतेऽथ ब्राह्मणञ्जिनाति पापीयाँस्तु भवति ॥ ४ ॥ यदुभौ नक्तम् । अपास्माद्ब्रह्मवर्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं यद्रात्रिर्न वै क्षत्रे

ब्रह्मवर्च्चसꣳ रमत ऽइति दिवा ब्राह्मणो गायति नक्तꣳ राजन्न्यस्तथो हास्य ब्ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवतीति ॥ ५ ॥ अयजतेत्यददादिति ब्ब्राह्मणो गायतीष्टापूर्त्तं व्वै ब्ब्राह्मणस्येष्टापूर्त्तेनैवैनꣳ स समर्द्धय-तीत्ययुद्ध्यतेत्यमुꣳ सङ्ग्राममजयदिति राजन्न्यो युद्धं व्वै राजन्न्यस्य व्वीर्य्यं व्वीर्य्येणैवैनꣳ स समर्द्धयति तिस्रोऽन्न्यो गाथा गायति तिस्रोऽन्न्यः षट् सम्पद्यन्ते षडृतवः सँव्वत्सर ऽऋतुष्वेव सँव्वत्सरे प्प्रतितिष्ठति ताभ्याꣳ शतन्ददाति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ६ ॥

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ अश्वकर्णे जपः, धृतिहोमश्च ]

'[1]विभूर्म्मात्रा प्प्रभूः पित्रे'ति । इयं व्वै मातासौ पिताभ्यामेवैनम्परिददा'[2]त्यश्वोऽसि हयोऽसी'ति शास्त्येवैनन्तत्तस्माच्छिष्टाः प्प्रजा जायन्ते'[3]ऽत्योऽसि मयोऽसी'त्यत्येवैनन्नयति तस्मादश्वः पशूनत्येति तस्मादश्वः पशूनाꣳ श्रैष्ठ्यङ्गच्छ'[4]त्यर्वासि सप्तिरसि व्वाज्यसी'ति यथायजुरेवैत'[5]द्वृषासि नृमणा ऽअसी'ति मिथुनत्त्वाय '[6]ययुर्न्नामासि शिशुर्न्नामासी'त्येतद्वा ऽअश्वस्य प्प्रियन्नाम-

(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९। (३) शु० य० सं० २२. १९। (४) शु० य० सं० २२. १९। (५) शु० य० सं० २२. १९। (६) शु० य० सं० २२. १९।

धेयम्प्रियेणैवैनन्नाम्नाभिवदति तस्म्मादुप्प्यामित्रौ सङ्गत्त्य नाम्म्ना चेदभिवदतोऽन्न्योऽन्न्यꣳ समेव जानाते ॥ १ ॥ 'आदित्त्यानाम्पत्त्वान्न्विही'ति । आदित्त्यानेवैनङ्गमयति 'देवा ऽआशापाला ऽएतन्देवेब्भ्योऽश्श्वम्मेधाय प्प्रोक्षितꣳ रक्षते'ति शतं वै तल्प्या राजपुत्त्रा ऽआशापालास्तेब्भ्य ऽएवैनम्परिददाती'ह रन्तिरिह रमतामिह धृतिरिह स्वधृतिꣳ स्वाहे'ति सँवत्त्सरमाहुतीर्ज्जुहोति षोडश नवतीरेता वा ऽअश्श्वस्य बन्धनन्ताभिरेवैनम्बद्ध्नाति तस्म्मादश्श्वꣳ प्प्रमुक्तो बन्धनमागच्छति षोडश नवतीरेता वा ऽअश्श्वस्य बन्धनन्ताभिरेवैनम्बद्ध्नाति तस्म्मादश्श्वꣳ प्प्रमुक्तो बन्धनन्न जहाति ॥ २ ॥ राष्ट्रं वा ऽअश्श्वमेधꣳ । राष्ट्रे ऽएते व्व्यायच्छन्ते येऽश्श्वꣳ रक्षन्ति तेषां य्य ऽउदृचङ्गच्छन्ति राष्ट्रेणैव ते राष्ट्रम्भवन्त्यथ ये नोदृचङ्गच्छन्ति राष्ट्रात्ते व्व्यवच्छिद्यन्ते तस्म्माद्राष्ट्र्यश्श्वमेधेन यजेत परा वा ऽएष सिच्च्यते योऽबलोऽश्श्वमेधेन यजते यद्यमित्त्रा ऽअश्श्वं व्विन्देरन्न्यज्ञोऽस्य व्विच्छिद्येत पापीयान्त्स्याच्छतङ्कवचिनो रक्षन्ति यज्ञस्य सन्तत्त्या ऽअव्व्यवच्छेदाय न पापीयान्भवत्त्यथान्न्यमानीय प्प्रोक्षेयुꣳ सैव तत्र प्प्रायश्चित्तिꣳ ॥ ३ ॥

प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



(१) शु० य० सं० २२, १९ । (२) शु० य० सं० २२, १९ । (३) शु० य० सं० २२, १९ ।

[ औद्ग्रभणहोमः ]

प्रजापतिरकामयत । अश्वमेधेन यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य सप्तधात्मनो देवता ऽअपाक्रामन्त्सा दीक्षाभवत्स ऽएतानि वैश्वदेवान्यपश्यत्तान्यजुहोत्तैर्वै स दीक्षामवारुन्द्ध यद्वैश्वदेवानि जुहोति दीक्षामेव तैर्यजमानोऽवरुन्द्धेऽन्वहञ्जुहोत्यन्वहमेव दीक्षामवरुन्द्धे सप्त जुहोति सप्त वै ता देवता ऽअपाक्रामँस्ताभिरेवास्मै दीक्षामवरुन्द्धे ॥ १ ॥ अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । ये दीक्षामतिरेचयन्ति सप्ताहम्प्रचरन्ति सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे त्रेधा विभज्य देवताञ्जुहोति त्र्यावृतो वै देवास्त्र्यावृत ऽइमे लोका ऽऋद्ध्यामेव वीर्य ऽएषु लोकेषु प्रतितिष्ठति ॥ २ ॥ एकविꣳशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳशस्तद्दैवं क्षत्रꣳ सा श्रीस्तदाधिपत्यन्तद्ब्रध्नस्य विष्टपन्तत्स्वाराज्यमश्नुते ॥ ३ ॥ त्रिꣳशतमौद्ग्रभणानि जुहोति । त्रिꣳशदक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै चत्वार्यौद्ग्रभणानि जुहोति त्रीणि वैश्वदेवानि सप्त सम्पद्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे पूर्णाहुतिमुत्तमाञ्जुहोति प्रत्युत्तब्ध्यै सयुक्त्वाय ॥ ४ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

प्रजापतिरश्श्वमेधमसृजत । स सृष्टः प्प्राऽर्चमल्लीनात्स्र साम तं वैश्श्वदेवान्न्युदयच्छन्न्यद्वैश्श्वदेवानि जुहोत्त्यश्श्वमेधस्यैवोद्यत्त्यै ॥ १ ॥ 'काय[1] स्वाहा । कस्म्मै स्वाहा कतमस्म्मै स्वाहे'ति प्प्राजापत्त्यम्मुख्यङ्करोति प्प्रजापतिमुखाभिरेवैनन्देवताभिरुद्यच्छति ॥ २ ॥ 'स्वाहाधिमा[2]धीताय स्वाहा । मनः प्प्रजापतये स्वाहा चित्तं विज्ञाताये'ति यदेव पूर्वासाम्ब्राह्मणन्तदत्र ॥ ३ ॥ 'अदित्त्यै[3] स्वाहा । अदित्त्यै मह्यै स्वाहादित्त्यै सुमृडीकायै स्वाहे'तीयं वा ऽअदितिरनयैवैनमुद्यच्छति ॥ ४ ॥ 'सरस्वत्त्यै[4] स्वाहा । सरस्वत्त्यै पावकायै स्वाहा सरस्वत्त्यै बृहत्त्यै स्वाहे'ति वाग्वै सरस्वती वाचैवैनमुद्यच्छति ॥ ५ ॥ 'पूष्ण्णे[5] स्वाहा । पूष्ण्णे प्प्रपत्थ्याय स्वाहा पूष्ण्णे नरन्धिषाय स्वाहे'ति पशवो वै पूषा पशुभिरेवैनमुद्यच्छति ॥ ६ ॥ 'त्वष्ट्रे[6] स्वाहा । त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहे'ति त्वष्टा वै पशूनाम्मिथुनानाᳬं रूपकृद्रूपैरेवैनमुद्यच्छति ॥ ७ ॥ 'विष्ण्णवे[7] स्वाहा । विष्ण्णवे निभूयपाय स्वाहा विष्ण्णवे शिपिविष्टाय स्वाहे'ति यज्ञो वै विष्ण्णुर्यज्ञेनैवैनमुद्यच्छति 'विश्श्वो[8] देवस्य नेतु'रिति पूर्ण्णाहुतिमुत्तमाञ्जुहोतीयं वै पूर्ण्णाहुतिरस्यामेवान्ततः प्प्रतितिष्ठति ॥ ८ ॥

प्रथमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



(१) शु० य० सं० २२. २०। (२) शु० य० सं० २२. २०। (३) शु० य० सं० २२. २०। (४) शु० य० सं० २२. २०। (५) शु० य० सं० २२. २०। (६) शु० य० सं० २२. २०। (७) शु० य० सं० २२. २०। (८) शु० य० सं० २२. २१।

[ अध्वर्युकर्तृकजपः ]

'ओं ब्ब्रह्मन् । ब्राह्मणो ब्ब्रह्मवर्च्चसी जायता'मिति ब्ब्राह्मण ऽएव ब्ब्रह्मवर्च्चसन्दधाति तस्म्मात्पुरा ब्ब्राह्मणो ब्ब्रह्मवर्च्चसी जज्ञे ॥ १ ॥ 'आ राष्ट्रे राजन्न्यः । शूर ऽइषव्व्योऽतिव्व्याधी महारथो जायता'मिति राजन्न्य ऽएव शौर्य्यम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यः शूर ऽइषव्व्योऽतिव्व्याधी महारथो जज्ञे ॥ २ ॥ 'दोग्ध्री धेनु'-रिति । धेन्न्वामेव पयो दधाति तस्म्मात्पुरा धेनुर्द्दोग्ग्ध्री जज्ञे ॥ ३ ॥ 'व्वोढानड्वा'निति । अनडुह्येव बलन्दधाति तस्म्मात्पुरानड्वान्व्वोढा जज्ञे ॥ ४ ॥ 'आशुः सप्प्ति'रिति । अश्श्व ऽएव जवन्दधाति तस्म्मात्पुराश्श्वः सत्त्तां जज्ञे ॥ ५ ॥ 'पुरन्धिर्य्योषे'ति । योषित्त्येव रूपन्दधाति तस्म्माद्रूपिणी युवतिः प्प्रिया भावुका ॥ ६ ॥ 'जिष्ण्णू रथेष्ठा' ऽइति । राजन्न्य ऽएव जैत्रम्महिमानन्दधाति तस्म्मात्पुरा राजन्न्यो जिष्ण्णुर्ज्जज्ञे ॥ ७ ॥ 'सभेयो युवे'ति । एष वै सभेयो युवा यः प्प्रथमवयसी तस्म्मात्प्रथमवयसी स्त्रीणाम्प्रियो भावुकः ॥ ८ ॥ 'आऽस्य यजमानस्य व्वीरो जायता'-मिति । यजमानस्यैव प्प्रजायां व्वीर्य्यन्दधाति तस्म्मात्पुरेजानस्य व्वीरो जज्ञे ॥९॥ [अर्धः प्रपाठकः ॥५४॥] 'निकामे-निकामे नः पर्ज्जन्न्यो व्वर्षत्त्वि'ति । निकामे-निकामे वै तत्र पर्ज्जन्न्यो

(१) शु० य० सं० २२. २२। (२) शु० य० सं० २२. २२। (३) शु० य० सं० २२. २२। (४) शु० य० सं० २२. २२। (५) शु० य० सं० २२. २२। (६) शु० य० सं० २२. २२। (७) शु० य० सं० २२. २२। (८) शु० य० सं० २२, २२। (९) शु० य० सं० २२. २२। (१०) शु० य० सं० २२. २२।

वर्षति यत्रैतेन यज्ञेन यजन्ते 'फलवत्यो न ऽओषधयः पच्यन्ता'मिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैतेन यज्ञेन यजन्ते 'योगक्षेमो नः कल्पता'मिति योगक्षेमो वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः प्रजानां योगक्षेमो भवति ॥ १० ॥

प्रथमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

[ आज्यसक्तुधानालाजहोमः ]

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स ऽआत्मन्नश्वमेधमधत्त ते देवाः प्रजापतिमब्रुवन्नेष वै यज्ञो यदश्वमेधोऽपि नोऽत्रास्तु भाग ऽइति तेभ्य ऽएतानन्नहोमानकल्पयद्यदन्नहोमाञ्जुहोति देवानेव तत्प्रीणाति ॥१॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्यम्प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥ सक्तुभिर्जुहोति । देवानां वा ऽएतद्रूपं यत्सक्तवो देवानेव तत्प्रीणाति ॥ ३ ॥ धानाभिर्जुहोति । अहोरात्राणां वा ऽएतद्रूपं यद्धाना ऽअहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥ लाजैर्जुहोति । नक्षत्राणां वा ऽएतद्रूपं यल्लाजा नक्षत्राण्येव तत्प्रीणाति 'प्राणाय स्वाहापानाय स्वाहे'ति नामग्राहञ्जुहोति नाम-

(१) शु० य० सं० २१. २२। (२) शु० य० सं० २२. २२। (३) शु० य० सं० २२. २३।

ग्ग्राहमेवैनाँस्तत्प्रीणा'त्येकस्मै स्वाहा द्वाभ्याथं स्वाहा शताय स्वाहैकशताय स्वाहे'त्यनुपूर्व्वञ्जुहोत्यनुपूर्व्वमेवैनाँस्तत्प्रीणात्येकोत्तरा जुहोत्येकवृद्धे स्वर्ग्गो लोक ऽएकधैवैनथं स्वर्ग्गँल्लोकङ्गमयति पराचीर्ज्जुहोति पराङिव वै स्वर्ग्गो लोकः स्वर्ग्गस्य लोकस्याभिजित्यै ॥५॥ ईश्श्वरो वा ऽएषः । पराङ् प्रदघोर्षः पराचीराहुतीर्ज्जुहोति नैकशतमत्त्येति यदेक-शतमतीयादायुषा यजमानं व्व्यर्द्धयेदेकशतञ्जुहोति शतायुर्वै पुरुष ऽआत्मैकशत आयुष्ष्येवात्मन्प्रतितिष्ठति 'व्व्युष्ट्यै स्वाहा स्वर्ग्गाय स्वाहे'त्युत्तमे ऽआहुती जुहोति रात्रिर्वै व्व्युष्टिरहः स्वर्ग्गोऽहोरात्रे ऽएव तत्प्रीणाति ॥ ६ ॥ तदाहुः । यदुभे दिवा वा नक्तं वा जुहुयादहोरात्रे मोहये-द्व्युष्ट्यै स्वाहेत्यनुदित ऽआदित्ये जुहोति स्वर्ग्गाय स्वाहेत्युदितेऽहोरात्रयोरव्व्यतिमोहाय ॥ ७ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पर्यङ्गपशुनिरूपणम् ]

राजा वा ऽएष यज्ञानां रुयदश्श्वमेधः । यजमानो वा ऽअश्श्वमेधो यजमानो यज्ञो यदश्श्वे पशून्नियुनक्ति यज्ञ ऽएव तद्यज्ञमारभते ॥ १ ॥ अश्श्वन्तूपरङ्गोमृगमिति । तान्मद्ध्यमे यूप ऽआलभते सेनामुखमेवास्यैतेन सथंश्श्यति तस्माद्राज्ञः सेनामुखम्भीष्ष्मम्भावुकम् ॥ २ ॥ कृष्णग्ग्रीवमाग्नेयथं रराटे पुरस्तात् । पूर्व्वामग्निमेव तत्कुरुते

(१) शु० य० सं० २२. ३४ । (२) शु० य० सं० २२. ३४ ।

तस्म्माद्राज्ञः पूर्वाग्निर्भावुकः ॥ ३ ॥ सारस्वतीम्मेषीमधस्ताद्धन्न्वोः । स्त्रीरेव तदनुगाः कुरुते तस्म्मात्स्त्रियः पुꣳसोऽनुवर्त्मानो भावुकाः ॥ ४ ॥ आश्विनावधोरामौ बाह्वोः । बाह्वोरेव बलन्धत्ते तस्म्माद्राजा बाहुबली भावुकः ॥ ५ ॥ सौमापौष्णꣳ श्यामन्नाभ्याम् । प्रतिष्ठामेव ताङ्कुरुत ऽइयं वै पूषास्यामेव प्प्रतितिष्ठति ॥ ६ ॥ सौर्य्ययामौ श्वेतञ्च कृष्णञ्च पार्श्वयोः । कवचे ऽएव ते कुरुते तस्म्माद्राजा सन्नद्धो वीर्य्यङ्करोति ॥७॥ त्वाष्ट्रौ लोमशसक्क्थौ सक्क्थ्योः । ऊर्वोरेव बलन्धत्ते तस्म्माद्राजोरुबली भावुकः ॥ ८ ॥ वायव्व्यꣳ श्वेतम्पुच्छे । उत्सेधमेव तङ्कुरुते तस्म्मादुत्सेधम्प्रजा भयेऽभिसꣳश्रयन्तीन्द्राय स्वपस्याय वेहतं यज्ञस्य सेन्द्रतायै वैष्णवो वामनो यज्ञो वै विष्णुर्य्यज्ञ ऽएवान्ततः प्प्रतितिष्ठति ॥ ९ ॥ ते वा ऽएते । पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति पञ्चदशो वै वज्रो वीर्य्यं वज्जो वज्जेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्प्मानमपहते ॥ १० ॥ पञ्चदश—पञ्चदशो ऽएवेतरेषु । पञ्चदशो वै वज्जो वीर्य्यं वज्जो वज्जेणैवैतद्वीर्य्येण यजमानोऽभितः पाप्प्मानमपहते ॥ ११ ॥ तदाहुः । अपाहैवैतैः पाप्प्मानꣳ हता ऽइत्यकृत्स्नञ्च त्वै प्प्रजापतिꣳ संस्करोति न चेदꣳ सर्वमवरुन्द्धे ॥ १२ ॥ सप्प्तदशैव * पशून्मद्ध्यमे यूप ऽआलभेत । सप्प्तदशो वै प्प्रजापतिः

* त्रयोऽश्वतूपरगोमृगाः द्वौ चाग्नेयावेकादशिनौ ,द्वादश रोहितादयः, एवं सप्तदश पशवो मध्यमे यूपे भवन्ति ।

प्प्रजापतिरश्श्वमेधोऽश्श्वमेधस्यैवाप्प्त्यै षोडश–षोडशेतरेषु षोडशकलं व्वा ऽइदꣳ सर्व्वन्तदिदꣳ सर्व्वमवरुन्द्धे ॥ १३ ॥ ताङ्कथमाप्प्रीणीयादित्त्याहुः । 'समिद्धो ऽअञ्जन्कृदरम्मतीना'मिति बार्हदुक्क्थीभिराप्प्रीणीयाद्बृहदुक्क्थो ह वै व्वामदेव्व्योऽश्श्वो वा सामुद्रिरश्श्वस्याप्प्रीर्ददर्श ता ऽएतास्ताभिरेवैनमेतदाप्प्रीणीम ऽइति व्वदन्तो न तथा कुर्य्याज्जामदग्ग्नीभिरेवाप्प्रीणीयात्प्रजापतिर्व्वै जमदग्ग्निः सोऽश्श्वमेधः स्वयैवैनन्देवतया समर्द्धयति तस्म्माज्जामदग्ग्नीभिरेवाप्प्रीणीयात् ॥ १४ ॥ तद्धैके । एतेषाम्पशूनाङ्कथाणान्नाना याज्यापुरोऽनुवाक्क्याः कुर्व्वन्ति विन्दाम ऽएतेषामवित्त्येतरेषान्न कुर्म्म ऽइति न तथा कुर्य्यात्क्षत्रं व्वा ऽअश्श्वो विडितरे पशवः प्प्रतिप्प्रतिनीथꣳ ह ते प्प्रत्युद्यामिनीङ्क्षत्राय विशङ्कुर्व्वन्त्यथो ऽआयुषा यजमानं व्व्यर्द्धयन्ति ये तथा कुर्व्वन्ति तस्म्मात्प्राजापत्त्य ऽएवाश्श्वो देवदेवत्त्या ऽइतरे क्षत्रायैव तद्विशङ्कृतानुकरामनुवर्त्मानङ्करोत्त्यथो ऽआयुषैव यजमानꣳ समर्द्धयति ॥ १५ ॥ हिरण्मयोऽश्श्वस्य शासो भवति । लोहमयाः पशूनाङ्कथाणामायसा ऽइतरेषाञ्ज्योतिर्व्वै हिरण्यꣳ राष्ट्रमश्श्वमेधो ज्योतिरेव तद्राष्ट्रे दधात्त्यथो हिरण्यज्योतिषैव यजमानः स्वर्ग्गँल्लोकमेत्त्यथो ऽअनूकाशमेव तङ्कुरुते स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १६ ॥ अथो क्षत्रं व्वा ऽअश्श्वः । क्षत्रस्यैतद्रूपं यद्धिरण्यं क्षत्रमेव तत्क्षत्रेण समर्द्धयति ॥ १७ ॥ अथ

(१) शु॰ य॰ सं॰ २९. १ ।

यल्लोहमया᳸ पर्र्यङ्क्याणाम् । यथा वै राज्ञोऽराजानो राज-कृत᳸ सूतग्ग्रामण्य ऽएवं वा ऽएतेऽश्वस्य यत्पर्र्यङ्ग्या ऽएवमु वा ऽएतद्धिरण्यस्य यल्लोह᳸ स्वेनैवैनाँस्तद्रूपेण समर्द्धयति ॥ १८ ॥ अथ यदायसा ऽइतरेषाम् । विड्वा ऽइतरे पशवो विश ऽएतद्रूपं रुषदुयो विशमेव तद्विशा समर्द्धयति वैतस ऽइटसून ऽउत्तरतोऽश्वस्यावघ्नन्त्या-नुष्टुभो वा ऽअश्व ऽआनुष्टुभैषा दिक्स्वायामेवैनन्तद्दिशि दधात्यथ यद्वैतस ऽइटसूनेऽप्सुयोनिर्व्वा ऽअश्वोऽप्सुजा वैतस᳸ स्वयैवैनं रुषोन्या समर्द्धयति ॥ १९ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ उद्गात्रन्वारम्भः ]

देवा वा ऽअश्वमेधे पवमानम् । स्वर्ग्गँल्लोकन्न प्प्राजानँस्तमश्व᳸ प्प्राजानाद्यदश्वमेधेऽश्वेन पवमानाय सर्प्पन्ति स्वर्ग्गस्य लोकस्य प्प्रज्ञात्यै पुच्छमन्वारभन्ते स्वर्ग्गस्यैव लोकस्य समष्ट्यै न वै मनुष्य᳸ स्वर्ग्गँल्लोक-मञ्जसा वेदाश्वो वै स्वर्ग्गँल्लोकमञ्जसा वेद ॥ १ ॥ यदुद्गा-तोद्गायेत् । यथाक्षेत्रज्ञोऽन्येन पथा नयेत्तादृक्तदथ यदु-द्गातारमपरुद्ध्याश्वमुद्गीथाय व्वृणीते यथा क्षेत्रज्ञोऽञ्जसा नयेदेवमेवैतद्यजमानमश्व᳸ स्वर्ग्गँल्लोकमञ्जसा नयति हिङ्करोति सामैव तद्धिङ्करोत्युद्गीथ ऽएव स वडवा ऽउप-

(१) 'व' इति 'ग' 'ज' पुस्तकयोः।

रुन्धन्ति सꣳशिꣳषते यथोपगातार ऽउपगायन्ति तादृक्त-द्धिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥२॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ ग्राम्यपश्वालम्भः, आरण्यपशूनामुत्सर्गश्च ]

प्रजापतिरकामयत । उभौ लोकावभिजयेयन्देवलो-कञ्च मनुष्यलोकञ्चेति स ऽएतान्पशूनपश्यद्ग्राम्याँश्चा-रण्याँश्च तानालभत तैरिमौ लोकाववारुन्द्ध ग्राम्यै-रेव पशुभिरिमँल्लोकमवारुन्द्धारण्यैरमुमयं वै लोको मनु-ष्यलोकोऽथासौ देवलोको यद्ग्राम्यान्पशूनालभत ऽइममेव तैर्ल्लोकं यजमानोऽवरुन्द्धे यदारण्यानमुन्तैः ॥१॥ स यद्ग्राम्यैः सꣳस्थापयेत् । समद्ध्वानः क्रामेयुः सम-न्तिकङ्ग्रामयोर्ग्रामान्तौ स्यातान्नऽर्क्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्यस्तस्करा ऽअरण्येष्वाजायेर-न्यदारण्यैर्व्यद्ध्वानः क्रामेयुर्व्विदूरङ्ग्रामयोर्ग्रामान्तौ स्या-तामृक्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्य-स्तस्करा ऽअरण्येष्वाजायेरन् ॥ २ ॥ तदाहुः । अपशुर्व्वा ऽएष यदारण्यो नैतस्य होतव्यं यज्जुहुयात्क्षिप्रं यज-मानमरण्यम्मृतꣳ हरेयुररण्यभागा ह्यारण्याः पशवो यन्न जुहुयाद्यज्ञवेशसꣳ स्यादिति पर्य्यग्निकृतानेवोत्सृजन्ति तन्नैव हुतन्नाहुतन्न यजमानमरण्यम्मृतꣳ हरन्ति न यज्ञवेशसम्भवति ॥ ३ ॥ ग्राम्यैः सꣳस्थापयति । व्वि पितापुत्राववस्यतः समद्ध्वानः क्रामन्ति समन्तिकङ्ग्राम-

योग्ग्रामान्तौ भवतो नऽर्क्षीकाः पुरुषव्व्याग्घ्राः परिमोषिण ऽआव्व्याधिन्न्यस्तस्क्करा ऽअरण्ण्येष्व्वाजायन्ते ॥ ४ ॥

द्वितीयाध्यायें चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ पश्वेकादशिनी ]

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स पङ्क्तिर्भूत्वा संवत्सरम्प्राविशत्तेऽर्द्धमासा ऽअभवँस्तम्पञ्चदशिभिरनुप्प्रायुङ्क्त तमाप्नोत्तमाप्त्वा पञ्चदशिभिरवारुन्द्धार्द्धमासानां व्वा ऽएषा प्रतिमा यत्पञ्चदशिनो यत्पञ्चदशिन ऽआलभतेऽर्द्धमासानेव तैर्यजमानोऽवरुन्द्धे ॥ १ ॥ तदाहुः । अनवरुद्धो व्वा ऽएतस्य सँव्वत्सरो भवति योऽन्न्यत्र चातुर्म्मास्येभ्यः सँव्वत्सरन्तनुत ऽइत्येष वै साक्षात्सँव्वत्सरो यच्चातुर्म्मास्यानि यच्चातुर्म्मास्यान्पशूनालभते साक्षादेव तत्सँव्वत्सरमवरुन्द्धे वि व्वा ऽएष प्रजया पशुभिर्ऋद्ध्यतेऽप स्वर्ग्गँल्लोकँ राद्ध्नोति योऽन्न्यत्रैकादशिनेभ्यः सँव्वत्सरन्तनुत ऽइत्येष वै सम्प्रति स्वर्ग्गो लोको यदेकादशिनी प्रजा वै पशव ऽएकादशिनी यदेकादशिनान्पशूनालभते न स्वर्ग्गँल्लोकमपराद्ध्नोति न प्रजया पशुभिर्व्यृद्ध्यते ॥ २ ॥ प्रजापतिर्विराजमसृजत । सास्मात्सृष्टा पराच्यैत्साश्वम्मेध्यम्प्राविशत्तान्दशिभिरनुप्प्रायुङ्क्त तामाप्नोत्तामाप्त्वा दशिभिरवारुन्द्ध यद्दशिन ऽआलभते विराजमेव तैर्यजमानोऽवरुन्द्धे शतमालभते शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥ ३ ॥

एकादश दशत ऽआलभते। एकादशाक्षरा वै त्रिष्टुबिन्द्रियमु वै वीर्यन्त्रिष्टुबिन्द्रियस्यैव वीर्यस्यावरुद्ध्या ऽएकादश दशत ऽआलभते दश वै पशोः प्राणा ऽआत्मैकादशः प्राणैरेव पशून्त्समर्द्धयति वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वो ऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ४ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ अश्वस्य नियोजनाञ्जनमणिबन्धनादि ]

'युञ्जन्ति ब्रध्नमरुषञ्चरन्त'मिति। असौ वा ऽआदित्यो ब्रध्नोऽरुषोऽमुमेवास्मा ऽआदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै ॥ १ ॥ तदाहुः। पराङ्वा ऽएतस्माद्यज्ञ ऽएति यस्य पशुरुपाकृतोऽन्यत्र वेदेरेती'त्येतथं स्तोतरनेन पथा पुनरश्वमावर्त्तयासि न' ऽइति वायुर्वै स्तोता तमेवास्मा ऽएतत्परस्ताद्दधाति तथा नात्येति ॥२॥ अप वा ऽएतस्मात्। तेज ऽइन्द्रियम्पशवः श्रीः क्रामन्ति योऽश्वमेधेन यजते ॥ ३ ॥ 'वसवस्त्वाञ्जन्तु। गायत्रेण च्छन्दसे'ति महिष्यभ्यनक्ति तेजो वा ऽआज्यन्तेजो गायत्री तेजसी ऽएवास्मिन्त्समीची दधाति ॥ ४ ॥ 'रुद्रास्त्वाञ्जन्तु। त्रैष्टुभेन च्छन्दसे'ति वावाता तेजो वा ऽआज्य-

(१) शु० य० सं० २३.५। (२) शु० य० सं० २३. ७। (३) शु० य० सं० २३.८। (४) शु० य० सं० २३.८।

मिन्द्रियन्त्रिष्टुप्तेजश्चैवास्मिन्निन्द्रियञ्च समीची दधाति ॥ ५ ॥ 'आदित्यास्त्वाञ्जन्तु । जागतेन च्छन्दसे'ति परिवृक्ता तेजो वा ऽआज्यम्पशवो जगती तेजश्चैवास्मिन्पशूँश्च समीची दधाति ॥ ६ ॥ पत्न्योऽभ्यञ्जन्ति * । श्रियै वा ऽएतद्रूपं यत्पत्न्यः श्रियमेवास्मिँस्तद्दधति नास्मात्तेज ऽइन्द्रियम्पशवः श्रीरपक्रामन्ति ॥ ७ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यस्य निक्तस्य लोमानि शीयन्ते यत्काचानावयन्ति लोमान्येवास्य सम्भरन्ति हिरण्मया भवन्ति तस्योक्तम्ब्राह्मणमेकशतमेकशतङ्काचानावयन्ति शतायुर्वै पुरुष ऽआत्मैकशत ऽआयुष्येवात्मन्प्रतितिष्ठति 'भूर्भुवः स्व'रिति प्राजापत्याभिरावयन्ति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयन्ति 'लाजी३ञ्छाची३न्यव्ये गव्य' ऽइत्यतिरिक्तमन्नमश्वायोपावहरति प्रजामेवान्नादीङ्कुरुत 'ऽएतदन्नमत्त देवा ऽएतदन्नमद्धि प्रजापत' ऽइति प्रजामेवान्नाद्येन समर्द्धयति ॥ ८ ॥ अप वा ऽएतस्मात् । तेजो ब्रह्मवर्चसङ्क्रामति योऽश्वमेधेन यजते होता च ब्रह्मा च ब्रह्मोद्यं वदत ऽआग्नेयो वै होता बार्हस्पत्यो ब्रह्मा ब्रह्म बृहस्पतिस्तेजश्चैवास्मिन्ब्रह्मवर्चसञ्च समीची धत्तो यूपमभितो वदतो यजमानो वै यूपो यजमानमेवैतत्तेजसा

---

(१) शु० य० सं० २३. ८ ।

* का० श्रौ० सू० २०. ५. १५ ।

(२) शु० य० सं० २३. ८ । (३) शु० य० सं० २३. ८ । (४) शु० य० सं० २३. ८ ।

च ब्रह्मवर्चसेन चोभयतः परिधत्तः ॥ ९ ॥ 'कः स्विदे-काकी चरती'ति । असौ वा ऽआदित्य ऽएकाकी चरत्येष ब्रह्मवर्चसम्ब्रह्मवर्चसमेवास्मिँस्तद्धत्तः ॥ १० ॥ 'क ऽउ स्विज्जायते पुन'रिति । चन्द्रमा वै जायते पुनरायुरेवा-स्मिँस्तद्धत्तः ॥ ११ ॥ 'किँ स्विद्धिमस्य भेषज'मिति । अग्निर्वै हिमस्य भेषजन्तेज ऽएवास्मिँस्तद्धत्तः ॥ १२ ॥ * 'किम्वावपनम्मह'दिति । अयं वै लोक ऽआवपनम्महद-स्मिन्नेव लोके प्रतितिष्ठति ॥ १३ ॥ 'का स्विदासी-त्पूर्वचित्ति'रिति । द्यौर्वै वृष्टिः पूर्वचित्तिर्दिवमेव वृष्टि-मवरुन्धे ॥ १४ ॥ 'किँ स्विदासीद्बृहद्वय' ऽइति । अश्वो वै बृहद्वय ऽआयुरेवावरुन्धे ॥ १५ ॥ 'का स्विदासी-त्पिलिप्पिले'ति । श्रीर्वै पिलिप्पिला श्रियमेवावरुन्धे ॥१६॥ 'का स्विदासीत्पिशङ्गिले'ति अहोरात्रे वै पिशङ्गिले ऽअहो-रात्रयोरेव प्रतितिष्ठति ॥ १७ ॥

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ १०८ ॥



(१) शु० य० सं० २३. ९। (२) शु० य० सं० २३. ९। (३) शु० य० सं० २३. ९।
* अत्र शतम् ६५००।
(४) शु० य० सं० २३. ९। (५) शु० य० सं० २३. ११। (६) शु० य० सं० २३. ११। (७) शु० य० सं० २३. ११। (८) शु० य० सं० २३. ११।

[ अश्वस्य प्रोक्षणादि ]

नियुक्तेषु पशुषु । प्रोक्षणीरध्वर्युरादत्तेऽश्वम्प्रोक्षिष्यन्नन्वारब्धे यजमान ऽआध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यते ॥ १ ॥ 'वायुष्ट्वा पचतैरवत्वि'ति । वायुरेवैनम्पच'त्यसितग्रीवश्छागै'रित्यग्निर्वा ऽअसितग्रीवोऽग्निरेवैनञ्छागैः पचति ॥ २ ॥ 'न्यग्रोधश्चमसै'रिति । यत्र वै देवा यज्ञेनायजन्त त ऽएताँश्चमसान्न्यौब्जँस्ते न्यञ्चोऽरोहँस्तस्मान्न्यञ्चो न्यग्रोधा रोहन्ति ॥ ३ ॥ 'शल्मलिर्वृद्ध्ये'ति । शल्मलौ वृद्धिन्दधाति तस्माच्छल्मलिर्वनस्पतीनां वर्षिष्ठं वर्द्धते ॥४॥ 'एष स्य राथ्यो वृषे'ति । अश्वेनैव रथं सम्पादयति तस्मादश्वो नान्यद्रथाद्वहति ॥ ५ ॥ 'पड्भिश्चतुर्भिरेदग'न्निति । तस्मादश्वस्त्रिभिस्तिष्ठँस्तिष्ठत्यथ युक्तः सर्वैः पद्भिः समममायुते ॥ ६ ॥ 'ब्रह्माकृष्णश्च नोऽवत्वि'ति । चन्द्रमा वै ब्रह्माकृष्णश्चन्द्रमस ऽएवैनम्परिददाति 'नमोऽग्नय' ऽइत्यग्नय ऽएव नमस्करोति ॥ ७ ॥ 'संशितो रश्मिना रथ' ऽइति । रश्मिनैव रथं सम्पादयति तस्माद्रथः परिवृतो दर्शनीयतमो भवति ॥ ८ ॥ 'संशितो रश्मिना हय' ऽइति । रश्मिनैवाश्वं सरुपादयति तस्मादश्वो रश्मिना प्रतिहतो भूयिष्ठं रोचते ॥ ९ ॥ 'संशितो

(१) शु० य० सं० २३. १३ । (२) शु० य० सं० २३. १३ । (३) शु० य० सं० २३. १३ । (४) शु० य० सं० २३. १३ । (५) शु० य० सं० २३. १३ । (६) शु० य० सं० २३. १३ । (७) शु० य० सं० २३ १३ । (८) शु० य० सं० २३. १३ । (९) शु० य० २३. १४ । (१०) शु० य० सं० २३. १४ । (११) शु० य० सं० २३. १४ ।

ऽअप्स्वप्सुजा' ऽइति । अप्सुयोनिर्वा ऽअश्वः स्वयैवैनं योन्या समर्द्धयति 'ब्रह्मा सोमपुरोगव' ऽइति सोमपुरोगवमेवैनꣳ स्वर्गँल्लोकङ्गमयति ॥१०॥ 'स्वयं वाजिंस्तन्वङ्कल्पयस्वे'ति । स्वयꣳ रूपङ्कुरुष्व यादृशमिच्छसीत्येवैनन्तदाह 'स्वयं यजस्वे'ति स्वाराज्यमेवास्मिन्दधाति 'स्वयञ्जुषस्वे'ति स्वयँल्लोकꣳ रोचयस्व यावन्तमिच्छसीत्येवैनन्तदाह 'महिमा तेऽन्येन न सन्नश' ऽइत्यश्वमेव महिम्ना समर्द्धयति ॥११॥ 'न वा ऽउ ऽएतन्म्रियसे न रिष्यसी'ति । प्रश्वासयत्येवैनन्त'देवाँ२॥ ऽइदेषि पथिभिः सुगेभि'रिति देवयानानेवैनम्पथो दर्शयति 'यत्रासते सुकृतो यत्र ते ययु'रिति सुकृद्भिरेवैनꣳ सलोकङ्करोति 'तत्र त्वा देवः सविता दधात्वि'ति सवितैवैनꣳ स्वर्गे लोके दधाति 'प्रजापतये त्वा जुष्टम्प्रोक्षामी'त्युपाꣳश्वथोपगृह्णाति ॥ १२ ॥ 'अग्निः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तञ्जेष्यसि पिबैता ऽअप' ऽइति यावानग्नेर्विजयो यावाँल्लोको यावदैश्वर्यन्तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्यम्भविष्यतीत्येवैनन्तदाह ॥ १३ ॥ 'वायुः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्वायुः स ते लोको भविष्यति तञ्जेष्यसि पिबैता

(१) शु० य० सं० २३. १४। (२) शु० य० सं० २३. १५। (३) शु० य० सं० २३. १५। (४) शु० य० सं० २३. १५। (५) शु० य० सं० २३. १५। (६) शु० य० सं० २३. १६। (७) शु० य० सं० २३. १६। (८) शु० य० सं० २३. १६। (९) शु० य० सं० २३. १६। (१०) शु० य० सं० २२. ५। (११) शु० य० सं० २३. १७। (१२) शु० य० सं० २३. १७।

ऽअप' ऽइति यावान्वायोर्विजयो यावाँल्लोको यावदैश्वर्य्य-न्तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्त्यै-वैनन्तदाह ॥ १४ ॥ 'सूर्य्यः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्त्सूर्य्यः स ते लोको भविष्यति तञ्जेष्यसि पिबैता ऽअप' ऽइति यावान्त्सूर्य्यस्य विजयो यावाँल्लोको यावदैश्वर्य्यन्तावाँस्ते विजयस्तावाँल्लोकस्ता-वदैश्वर्य्यम्भविष्यतीत्त्यैवैनन्तदाह तर्प्पयित्वाऽश्वम्पुनः सं-स्कृत्य प्प्रोक्षणीरितरान्पशून्प्प्रोक्षति तस्यातः ॥ १५ ॥

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ मृतस्याऽश्वस्य परिक्रमणादि ]

देवा वा ऽउदश्वः । स्वर्गँल्लोकन्न प्प्राजानँस्तमश्वः प्प्राजानाद्यदश्वेनोदञ्चो यन्ति स्वर्गस्य लोकस्य प्प्रज्ञात्त्यै व्वासोऽधिवासः हिरण्यमित्त्यश्वायोपस्तृणन्ति यथा नान्न्यस्म्मै पशवे तस्म्मिन्नेनमधि संज्ञपयन्त्यन्न्यैरेवैनन्तत्पशु-भिर्व्याकुर्वन्ति ॥१॥ घ्नन्ति वा ऽएतत्पशुम् । यदेनः संज्ञपय न्ति '[2]प्प्राणाय स्वाहापानाय स्वाहा व्व्यानाय स्वाहे'ति संज्ञ-प्प्यमान ऽआहुतीर्जुहोति प्प्राणानेवास्म्मिन्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टम्भवति ॥२॥ '[3]अम्बे * ऽअम्बिकेऽ-म्बालिके । न मा नयति कश्चने'ति पत्नीरुदानयत्त्युक्तै-

( १ ) शु० य० सं० २३. १७ । ( २ ) शु० य० सं० २३. १८ । ( ३ ) शु० य० सं० २३. १८ ।

* 'आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालिकेऽम्बिके पूर्वे' ( पा० सू० ६. १. १२८. ) इति प्रकृतिभावः ।

वैना ऽएतद्दथो मेद्ध्या ऽएवैनाꣳ करोति ॥ ६ ॥ 'गणाना-न्त्वा गणपतिꣳ हवामह' ऽइति । पत्न्यꣳ परियन्त्यपह्नुव-त ऽएवास्म्मा ऽएतद्दुतो न्न्येवास्म्मै ह्नुवतेऽथो धुवत ऽएवैनन्त्रिꣳ परियन्ति त्र्यो वा ऽइमे लोका ऽएभिरेवैनँ-ल्लोकैर्द्धुवते त्रिꣳ पुनꣳ परियन्ति षट् सम्पद्यन्ते षड्वा ऽऋतव ऽऋतुभिरेवैनन्धुवते ॥ ७ ॥ अप वा ऽएतेब्भ्यꣳ प्प्राणाꣳ क्क्रामन्ति । ये यज्ञे धुवनन्तन्न्वते नव कृत्वꣳ परि-यन्ति नव वै प्प्राणाꣳ प्प्राणानेवात्मन्दधते नैब्भ्यꣳ प्प्राणा ऽअपक्क्रामन्त्या'हमजानि गब्भधमात्त्वमजासि गब्भध'मिति प्प्रजा वै पशवो गब्भꣳ प्प्रजामेव पशूनात्मन्धत्ते 'तौ ऽउभौ चतुरꣳ पदꣳ सम्प्रसारयावे'ति मिथुनस्यावरुद्ध्यै 'स्वर्ग्गे लोके प्प्रोर्ण्णुवाथा'मित्त्येष वै स्वर्ग्गो लोको यत्र पशुꣳ संज्ञपयन्ति तस्म्मादेवमाह 'वृषा वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैवावरुद्ध्यै ॥ ८ ॥

द्वितीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ संवादः ]

अप वा ऽएतस्म्मात् । श्री राष्ट्रं क्क्रामति यो ऽश्श्वमेधेन यजते ॥ १ ॥ 'ऊर्द्ध्वामेनामुच्छ्रापये'ति । श्रीर्वै राष्ट्रमश्श्व-मेधꣳ श्रियमेवास्म्मै राष्ट्रमूर्द्ध्वमुच्छ्रयति ॥ २ ॥ 'गिरौ

(१) शु० य० सं० २३. १९ । (२) शु० य० सं० २३. १९ । (३) शु० य० सं० २३. २० । (४) शु० य० सं० २३. २० । (५) शु० य० सं० २३. २० । (६) शु० य० सं० २३. २६ । (७) शु० य० सं० २३. २६ ।

भारꣳ हरन्निवे'ति । श्रीर्वै राष्ट्रस्य भारः श्रियमेवास्मै राष्ट्रꣳ सन्नह्यत्यथो श्रियमेवास्मिन्राष्ट्रमधिनिदधाति ॥ ३ ॥ '[1]अथास्यै मध्यमेधता'मिति । श्रीर्वै राष्ट्रस्य मध्यꣳ श्रियमेव राष्ट्रे मध्यतोऽन्नाद्यन्दधाति ॥ ४ ॥ 'शीते [2]वाते पुनन्निवे'ति । क्षेमो वै राष्ट्रस्य शीतं क्षेममेवास्मै करोति ॥ ५ ॥ '[3]यकासकौ शकुन्तिके'ति । विड्वै शकुन्तिका'हलगिति [4]वञ्चती'ति विशो वै राष्ट्राय वञ्चन्त्या'हन्ति गभे पसो निगल्गलीति धारके'ति विड्वै गभो राष्ट्रम्पसो † राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ६ ॥ '[5]माता च ते पिता च त' इति । इयं वै मातासौ पिताभ्यामेवैनꣳ स्वर्गँल्लोकङ्गमयत्य'[6]ग्रं [7]वृक्षस्य रोहत' इति श्रीर्वै राष्ट्रस्याग्रꣳ श्रियमेवैनꣳ राष्ट्रस्याग्रङ्गमयति '[8]प्रतिलामीति ते पिता गभे मुष्टिमतꣳसय'दिति विड्वै गभो राष्ट्रम्मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकः ॥ ७ ॥ '[9]यद्धरिणो यवमत्ती'ति विड्वै यवो राष्ट्रꣳ हरिणो विशमेव राष्ट्रायाद्याङ्करोति तस्माद्राष्ट्री विशमत्ति 'न पुष्टम्पशु मन्यत' इति तस्माद्राजा पशून्न पुष्यति '[10]शूद्रा [11]यदर्य्यजारा *

(१) शु० य० सं० २३. २६। (२) शु० य० सं० २३. २६। (३) शु० य० सं० २३. २२। (४) शु० य० सं० २३. २२। (५) शु० य० सं० २३. २२।

† 'पस इति पसतेः स्पृशतिकर्मणः' ( निरु० ५. १६ ) इति यास्कः।

(६) शु० य० सं० २३. २४। (७) शु० य० सं० २३. २४। (८) शु० य० सं० २३. २४। (९) शु० य० सं० २३. ३०।

(१०) शु० य० सं० २३. ३०। (११) शु० य० सं० २३. ३०।

* 'अर्यः स्वामिवैश्ययोः' ( पा० ३. १. १०३ ) इति निपातनादर्यो वैश्यो जार उपपतिर्यस्याः सा अर्यजारा।

न पोषाय धनायती’ति तस्माद्वैशीपुत्रन्नाभिषिञ्चति ॥ ८ ॥ अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । ये यज्ञेऽपूतां वाचं वदन्ति ‘दधिक्राव्णो ऽअकारिष’मिति सुरभिमती-मृचमन्ततोऽन्वाहुर्वाचमेव पुनते नैभ्यः प्राणा ऽअ-पक्रामन्ति ॥ ९ ॥

द्वितीयाध्याये नवमं ब्राह्मणम् ॥ ९ ॥



[ अश्वशरीरे सूचीभिर्वितोदः ]

यदसिपथान्कल्पयन्ति । सेतुमेव तः सङ्क्रमणं यजमानः कुरुते स्वर्गस्य लोकस्य समष्ट्यै ॥१॥ सूचीभिः कल्पयन्ति । विशो वै सूच्यो राष्ट्रमश्वमेधो विशञ्चैवा-स्मिन्राष्ट्रञ्च समीची दधति हिरण्मय्यो भवन्ति तस्योक्तम्ब्राह्मणम् ॥ २ ॥ त्रय्यः सूच्यो भवन्ति । लोह-मय्यो रजता हरिण्यो दिशो वै लोहमय्योऽवान्तर-दिशो रजता ऽऊर्द्ध्वा हरिण्यस्ताभिरेवैनङ्कल्पयन्ति तिर-श्चीभिश्चोर्द्ध्वाभिश्च बहुरूपा भवन्ति तस्माद्बहुरूपा दिशो नानारूपा भवन्ति तस्मान्नानारूपा दिशः ॥ ३ ॥

द्वितीयाध्याये दशमं ब्राह्मणम् ॥ १० ॥



( ३ ) शु० य० सं० २३. ३३ ।
( ४ ) ‘ग’ ‘ज’ पुस्तकयोः “हिरण्यमय्यो” इति पाठः ।

[ परिपशव्याहुती ]

प्रजापतिरकामयत । महान्भूयान्स्यामिति स ऽएतावश्वमेधे महिमानौ ग्रहावपश्यत्तावजुहोत्ततो वै स महान्भूयानभवत्स यः कामयेत महान्भूयान्स्यामिति स ऽएतावश्वमेधे महिमानौ ग्रहौ जुहुयान्महान्हैव भूयान्भवति ॥ १ ॥ वपामभितो जुहोति । यजमानो वा ऽअश्वमेधो राजा महिमा राज्येनैवैनमुभयतः परिगृह्णाति पुरस्तात्स्वाहाकृतयो वा ऽअन्ये देवा ऽउपरिष्टात्स्वाहाकृतयोऽन्ये तानेवैतत्प्रीणाति 'स्वाहा देवेभ्यो देवेभ्यः स्वाहे'ति राज्ञा वपाम्परियजति ये चैवास्मिँल्लोके देवा य ऽउ चामुष्मिँस्तानेवैतत्प्रीणाति त ऽएनमुभये देवाः प्रीताः स्वर्गँल्लोकमभिवहन्ति ॥ ३ ॥

द्वितीयाध्याये एकादशं ब्राह्मणम् ॥ ११ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अश्वस्यावदानम् ]

प्रजापतेरक्ष्यश्वयत् । तत्परापतत्ततोऽश्वः समभवद्यदश्वयत्तदश्वस्याश्वत्वन्तद्देवा ऽअश्वमेधेनैव प्रत्यदधुरेष ह वै प्रजापतिः सर्वङ्करोति योऽश्वमेधेन यजते सर्व ऽएव भवति सर्वस्य वा ऽएषा प्रायश्चित्तिः सर्वस्य भेषजः सर्वं वा ऽएतेन पाप्मानन्देवा ऽअतरन्नपि वा ऽएतेन ब्रह्महत्यामतरँस्तरति सर्वम्पाप्मानन्तरति ब्रह्महत्यां

(१) शु० य० सं० ६. ११।

यो ऽश्वमेधेन यजते ॥ १ ॥ उत्तरं वै तत्प्रजापतेरक्ष्य-श्वयत् । तस्मादुत्तरतो ऽश्वस्यावद्यन्ति दक्षिणतो ऽन्येषा-म्पशूनाम् ॥ २ ॥ वैतसः कटो भवति । अप्सुयोनिर्वा ऽअश्वो ऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ ३ ॥ चतुष्टोम स्तोमो भवति । स्रद्वा ऽअश्वस्य सक्थ्याबृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्रत्यदधुर्यच्च-तुष्टोम स्तोमो भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमो ऽति-रात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमो ऽतिरात्रः सर्व-मश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ वपाप्रचारः ]

परमेण वा ऽएष स्तोमेन जित्वा । चतुष्टोमेन कृते-नायानामुत्तरे ऽहन्नेकविंशे प्रतिष्ठायाम्प्रतितिष्ठत्येकविं-शात्प्रतिष्ठाया ऽउत्तरमहरृतूनन्वारोहत्यृतवो वै पृष्ठा-न्यृतवः सँवत्सर ऽऋतुष्वेव सँवत्सरे प्रतितिष्ठति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दो ऽन्ये ऽन्ये वा ऽअत्र पशव ऽआलभ्यन्त ऽउतेव ग्राम्या ऽउतेवारण्या यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वायान्ये पशव ऽआलभ्यन्ते ऽन्ये ऽन्ये हि स्तोमाः क्रियन्ते ॥ २ ॥ तदाहुः । नैते सर्वे पशवो यदजावयश्चारण्याश्चैते वै सर्वे पशवो यद्गव्या ऽइति गव्यानुत्तमे ऽहन्नालभत

(१) "गव्या ऽउत्तमे०" इति 'ग' 'ज' पुस्तकयोः पाठः ।

ऽएते वै सर्वे पशवो यद्व्याः सर्वानेव पशूनालभते वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ३ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ यूपैकविंशतिः ]

यत्तिस्रोऽनुष्टुभो भवन्ति। तस्मादुश्वस्त्रिभिस्तिष्ठँस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मादुश्वः सर्वैः पद्भिः प्रतिदधत्पलायते परमं वा ऽएतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनाम्परमश्चतुष्टोम स्तोमानाम्परमेणैवैनम्परमतां गमयति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति। अन्यदन्यच्छन्दोऽन्येऽन्ये हि स्तोमाः क्रियन्ते यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वाय ॥ १ ॥ एकविंशमग्निष्टोमसमहर्भवति। असौ वा ऽआदित्य ऽएकविंशः सोऽश्वमेधः स्वेनैवैनं स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति ॥ ३ ॥ वामदेव्यम्मैत्रावरुणसाम भवति। प्रजापतिर्वै वामदेव्यम्प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥४॥ पार्थुरश्मम्ब्रह्मसाम भवति। रश्मिना वा ऽअश्वो यत ऽईश्वरो वा ऽअश्वोऽयतोऽधृतोऽप्रतिष्ठितः परावतङ्गन्तोर्यत्पार्थुरश्मम्ब्रह्मसाम भवत्यश्वस्यैव धृत्यै ॥ ५ ॥ सङ्कृत्यच्छावाकसाम भवति। उत्सन्नयज्ञ ऽइव वा ऽएष यदश्वमेधः किं वा ह्येतस्य क्रियते किं वा न यत्स-

स्यो ऽश्वमेधेन यजते ॥ १ ॥ उत्तरं वै तत्प्रजापतेरक्ष्य-श्वयत् । तस्मादुत्तरतो ऽश्वस्यावद्यन्ति दक्षिणतो ऽन्येषा-म्पशूनाम् ॥ २ ॥ वैतसः कटो भवति । अप्सुयोनिर्वा ऽअश्वो ऽप्सुजा वेतसः स्वयैवैनं स्योन्या समर्द्धयति ॥ ३ ॥ चतुष्टोम स्तोमो भवति । सरड्ढा ऽअश्वस्य सक्थ्यावृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्रत्यदधुर्यच्च-तुष्टोम स्तोमो भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमो ऽति-रात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमो ऽतिरात्रः सर्व-मश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

——०——

[ वपाप्रचारः ]

परमेण वा ऽएष स्तोमेन जित्वा । चतुष्टोमेन कृते-नायानामुत्तरे ऽहन्नेकविंशे प्रतिष्ठायाम्प्रतितिष्ठत्येकविं-शात्प्रतिष्ठाया ऽउत्तरमहर्ऋतूनन्वारोहत्यृतवो वै पृष्ठा-न्यृतवः सँवत्सर ऽऋतुष्वेव सँवत्सरे प्रतितिष्ठति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दो ऽन्येऽन्ये वा ऽअत्र पशव ऽआलभ्यन्त ऽउतेव ग्राम्या ऽउतेवारण्या यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वायान्ये पशव ऽआलभ्यन्तेऽन्येऽन्ये हि स्तोमाः क्रियन्ते ॥ २ ॥ तदाहुः । नैते सर्वे पशवो यदजावयश्चारण्याश्चैते वै सर्वे पशवो यद्गव्या ऽइति गव्यानुत्तमे ऽहन्नालभत

(१) "गव्या ऽउत्तमे०" इति 'ग' 'ज' पुस्तकयोः पाठः ।

ऽएते वै सर्वे पशवो यद्गव्याः सर्वानेव पशूनालभते वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्त्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ३ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

——०——

[ यूपैकविंशतिः ]

यत्तिस्रोऽनुष्टुभो भवन्ति । तस्मादुश्वस्त्रिभिस्तिष्ठँस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मादश्वः सर्वैः पद्भिः प्रतिदधत्पलायते परमं वा ऽएतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनाम्परमश्चतुष्टोम स्तोमानाम्परमेणैवैनम्परमताङ्गमयति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्न्यदन्न्यच्छन्दोऽन्न्येऽन्न्ये हि स्तोमाः क्रियन्ते यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्त्वाय ॥ २ ॥ एकविंशमग्निष्टोममहर्भवति । असौ वा ऽआदित्य ऽएकविंशः सोऽश्वमेधः स्वेनैवैनथ्ठं स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति ॥ ३ ॥ वामदेव्यम्मैत्रावरुणसाम भवति । प्रजापतिर्वै वामदेव्यम्प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥४॥ पार्थुरश्मम्ब्रह्मसाम भवति । रश्मिना वा ऽअश्वो यत ऽईश्वरो वा ऽअश्वोऽयतोऽधृतोऽप्रतिष्ठितः परास्परावतङ्गन्तोर्यत्पार्थुरश्मम्ब्रह्मसाम भवत्यश्वस्यैव धृत्यै ॥ ५ ॥ सङ्कृत्यच्छावाकसाम भवति । उत्सन्नयज्ञ ऽइव वा ऽएष यदश्वमेधः किं वा ह्येतस्य क्रियते किं वा न यस्स-

ङ्क्त्यच्छावाकसाम भवत्त्यश्श्वस्यैव सर्व्वत्त्वाय सर्व्वस्तोमोऽतिरात्र ऽउत्तममहर्ब्भवति सर्व्वं वै सर्व्वस्तोमोऽतिरात्रः सर्व्वमश्श्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ ६ ॥ एकविꣳशोऽग्निर्ब्भवति । एकविꣳश स्तोम ऽएकविꣳशतिर्य्यूपा यथा वा ऽऋषभा वा व्वृषाणो वा सꣳस्फुरेरन्नेवमेते स्तोमाः समृच्छन्ते यदेकविꣳशास्तान्न्यत्त्समर्प्पयेद्द्वार्त्तिमार्च्छेद्यजमानो हन्न्येतास्य यज्ञः ॥ ७ ॥ द्वादश ऽएवाग्निः स्यात् । एकादश यूपा यद्द्वादशोऽग्निर्ब्भवति द्वादश मासाः सँवत्त्सरः सँवत्त्सरमेव यज्ञमाप्नोति यदेकादश यूपा विराड्वा ऽएषा सम्मीयते यदेकादशिनी तस्यै य ऽएकादश स्तन ऽएवास्यै स दुह ऽएवैनान्तेन ॥ ८ ॥ तदाहुः । यद्द्वादशोऽग्निः स्यादेकादश यूपा यथा स्त्थूरिणा यायात्तादृक्तद्दित्त्येकविꣳश ऽएवाग्निर्ब्भवत्त्येकविꣳश स्तोम ऽएकविꣳशतिर्य्यूपास्तद्यथा प्प्रष्टिभिर्य्यायात्तादृक्तत् ॥ ९ ॥ शिरो वा ऽएतद्यज्ञस्य यदेकविꣳशः । यो वा ऽअश्श्वमेधे त्त्रीणि शीर्षाणि व्वेद शिरो ह राज्ञाम्भवत्त्येकविꣳशोऽग्निर्ब्भवत्त्येक विꣳश स्तोम ऽएकविꣳशतिर्य्यूपा ऽएतानि वा ऽअश्श्वमेधे त्त्रीणि शीर्षाणि तानि य ऽएवं व्वेद शिरो ह राज्ञाम्भवति यो वा ऽअश्श्वमेधे तिस्रः ककुदो व्वेद ककुद्ध राज्ञाम्भवत्त्येकविꣳशोऽग्निर्ब्भवत्त्येकविꣳश स्तोम ऽएकविꣳशतिर्य्यूपा ऽएता वा ऽअश्श्वमेधे तिस्रः ककुदस्ता य ऽएवं व्वेद ककुद्ध राज्ञाम्भवति ॥ १० ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अश्वस्य लोहितश्रपणादि ]

सर्वाभ्यो वै देवताभ्योऽश्वऽआलभ्यते। यत्प्राजापत्यङ्कुर्य्याद्या देवता ऽअपिभागास्ता भागधेयेन व्यर्द्धयेच्छौदन्दद्भिरवकान्दन्तमूलै रित्याज्यमवदाना कृत्वा प्रत्याख्यायन्देवताभ्य ऽआहुतीर्ज्जुहोति या ऽएव देवता ऽअपिभागास्ता भागधेयेन समर्द्धयत्यरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिञ्जुहोति द्यावापृथिव्योर्वै सर्वा देवताः प्रतिष्ठितास्ता ऽएवैतत्प्रीणाति देवासुराः संयत्ता ऽआसन् ॥ १ ॥ तेऽब्रुवन्। अग्नयः स्विष्टकृतोऽश्वस्य वयमुद्धारमुद्धरामहै तेनासुरानभिभविष्याम ऽइति ते लोहितमुदहरन्त भ्रातृव्याभिभूत्यै यत्स्विष्टकृद्भ्यो लोहितञ्जुहोति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ २ ॥ गोमृगकण्ठेन प्रथमामाहुतिञ्जुहोति। पशवो वै गोमृगा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्दधाति तस्माद्यत्रैषाश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ३ ॥ अश्वशफेन द्वितीयामाहुतिञ्जुहोति। पशवो वा ऽएकशफा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्दधाति तस्माद्यत्रैषाश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ४ ॥ अयस्मयेन चरुणा तृतीयामाहुतिञ्जुहोति। आयास्या[२] वै प्रजा रुद्रः स्विष्टकृत्प्रजा ऽएव रुद्रादन्तर्दधाति तस्माद्य-

---

( १ ) शु० य० सं० २५. १।
( २ ) "आयस्यो" इति 'ग' 'ज' पुस्तकयोः पाठः।

न्त्रैषाश्श्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः प्प्रजा ऽअभिमन्न्यते ॥ ५ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—०—

[ अश्वमेधेनापमृत्युनिरासः ]

सर्वेषु वै लोकेषु । मृत्त्यवोऽन्न्वायत्तास्तेब्भ्यो यदाहुतीर्न्न जुहुयाल्लोके लोक ऽएनम्मृत्त्युर्व्विन्देद्यन्न्मृत्त्युब्भ्य ऽआहुतीर्जुहोति लोके लोक ऽएव मृत्त्युमपजयति ॥ १ ॥

तदाहुः । यदमुष्म्मै स्वाहामुष्म्मै स्वाहेति जुह्वत्सञ्चक्षीत बहुम्मृत्त्युममित्रङ्कुर्व्वीत मृत्त्यव ऽआत्मानमपिदद्ध्यादिति 'मृत्त्यवे स्वाहे'त्त्येकस्म्मा ऽएवैकामाहुतिञ्जुहोत्त्येको ह वा ऽअमुष्म्मिँल्लोके मृत्त्युरशनायैव तमेवामुष्म्मिँल्लोकेऽपजयति ॥२॥ [ अर्धः प्रपाठकः कण्डिकाः ५९ ] '²ब्रह्महत्त्यायै स्वाहे'ति द्वितीयामाहुतिञ्जुहोति। अमृत्त्युर्ह वा ऽअन्न्यो ब्ब्रह्महत्त्यायै मृत्त्युरेष ह वै साक्षान्न्मृत्त्युर्य्यद्ब्रह्महत्त्या साक्षादेव मृत्त्युमपजयति ॥ ३ ॥

एताᳪ ह वै मुण्डिभ ऽऔदन्न्यः । ब्रह्महत्त्यायै प्प्रायश्चित्तिं विदाञ्चकार यद्ब्रह्महत्त्याया ऽआहुतिञ्जुहोति मृत्त्युमेवाहुत्त्या तर्प्पयित्वा परिपाणङ्कृत्वा ब्ब्रह्मघ्ने भेषजङ्करोति तस्म्माद्यस्यैषाश्श्वमेध ऽआहुतिर्हूयतेऽपि योऽस्यापरीषु प्प्रजाया ब्ब्राह्मणᳪ हन्ति तस्म्मै भेषजङ्करोति ॥ ४ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—०—

(१) शु० य० सं० ३९.१३। (२) शु० य० सं० ३९.१३।

[ अश्वस्तोमीयहोमः ]

अश्श्वस्य वा ऽआलब्धस्य । मेध ऽउदक्क्रामत्तदश्श्वस्तोमीयमभवद्यदश्श्वस्तोमीयञ्जुहोत्त्यश्श्वमेव मेधसा समर्द्धयति ॥ १ ॥ आज्ज्येन जुहोति । मेधो वा ऽआज्ज्यम्मेधोऽश्श्वस्तोमीयम्मेधसैवास्म्मिँस्तन्म्मेधो दधात्त्याज्ज्येन जुहोत्त्येतद्वै देवानाम्प्रियन्धाम यदाज्ज्यम्प्रियेणैवैनान्धाम्म्ना समर्द्धयति ॥ २ ॥ अश्श्वस्तोमीयꣳ हुत्त्वा द्विपदा जुहोति । अश्श्वो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा द्विपाद्वै पुरुषो द्विप्प्रतिष्ठस्तदेनम्प्रतिष्ठया समर्द्धयति ॥ ३ ॥ तदाहुः । अश्श्वस्तोमीयम्पूर्वꣳ होतव्व्याँ३ द्विपदा३ ऽइति पशवो वा ऽअश्श्वस्तोमीयम्पुरुषो द्विपदा यदश्श्वस्तोमीयꣳ हुत्त्वा द्विपदा जुहोति तस्म्मात्त्पुरुष ऽउपरिष्टात्त्पशूनधितिष्ठति ॥ ४ ॥ षोडशाश्श्वस्तोमीया जुहोति । षोडशकला वै पशवः सा पशूनाम्मात्त्रा पशूनेव मात्त्रया समर्द्धयति यत्कनीयसीर्वा भूयसीर्वा जुहुयात्त्पशून्मात्त्रया व्व्यर्द्धयेत्षोडश जुहोति षोडशकला वै पशवः सा पशूनाम्मात्त्रा पशूनेव मात्त्रया समर्द्धयति नान्न्यामुत्तमामाहुतिञ्जुहोति यदन्न्यामुत्तमामाहुतिञ्जुहुयात्त्प्रतिष्ठायै च्च्यवेत द्विपदा ऽउत्तमा जुहोति प्प्रतिष्ठा वै द्विपदाः प्प्रत्त्येव तिष्ठति 'जुम्बकाय स्वाहे'त्त्यवभृथ ऽउत्तमामाहुतिञ्जुहोति व्वरुणो वै जुम्बकः साक्षादेव व्वरुणमवयजते शुक्क्लस्य खलतेर्विक्क्लिधस्य पिङ्गाक्षस्य मूर्द्धनि जुहोत्त्येतद्वै व्वरुणस्य रूपꣳ

(१) शु० य० सं० २५. ९।

रूपेणैव वरुणमवयजते ॥ ५ ॥ द्वादश ब्रह्मौदनानुत्थाय निर्वपति । द्वादशभिर्वेष्टिभिर्यजते तदाहुर्यज्ञस्य वा ऽएतद्रूपं यदिष्टयो यदिष्टिभिर्यजेतोपनामुक ऽएनं यज्ञः स्यात्पापीयाँस्तु स्याद्यातयामानि वा ऽएतदीजानस्य छन्दाꣳसि भवन्ति तानि किमेतावदाशु प्रयुञ्जीत सर्वा वै सꣳस्थिते यज्ञे वागाप्यते सात्राप्ता यातयाम्नी भवति क्रूरीकृतेव हि भवत्यरुष्कृता वाग्वै यज्ञस्तस्मान्न प्रयुञ्जीतेति ॥ ६ ॥ द्वादशैव ब्रह्मौदनानुत्थाय निर्वपेत् । प्रजापतिर्वा ऽओदनः प्रजापतिः सँवत्सरः प्रजापतिर्यज्ञः सँवत्सरमेव यज्ञमाप्नोत्युपनामुक ऽएनं यज्ञो भवति न पापीयान्भवति ॥ ७ ॥

तृतीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

—०—

[ अश्वमेधमहिमा ]

एष वै प्रभूर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रभूतम्भवति ॥ १ ॥ एष वै विभूर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव विभूतम्भवति ॥ २ ॥ एष वै व्यष्टिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यष्टम्भवति ॥ ३ ॥ एष वै विधृतिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव विधृतम्भवति ॥ ४ ॥ एष वै व्यावृत्तिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यावृत्तम्भवति ॥ ५ ॥ एष वा ऽऊर्ज्जस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेवोर्जस्वद्भवति ॥ ६ ॥ एष वै

पयस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव पयस्वद्भवति ॥ ७ ॥ एष वै ब्रह्मवर्च्चसी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ ब्राह्मणो ब्रह्मवर्च्चसी जायते ॥ ८ ॥ एष वा ऽअतिव्याधी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ राजन्न्योऽतिव्याधी जायते ॥ ९ ॥ एष वै दीर्ग्घो नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ दीर्ग्घारण्यञ्जायते ॥ १० ॥ एष वै क्लृप्तिर्न्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव क्लृप्तम्भवति ॥ ११ ॥ एष वै प्रतिष्ठा नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्व्वमेव प्रतिष्ठितम्भवति ॥ १२ ॥

तृतीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

—०—

[ अश्वमेधप्रायश्चित्तम् ]

अथातः प्रायश्चित्तीनाम् । यद्यश्वो वडवाꣳ स्कन्देद्वायव्यम्पयोऽनुनिर्व्वपेद्वायुर्वै रेतसां विकर्त्ता प्राणो वै वायुः प्राणो हि रेतसां विकर्त्ता रेतसैवास्मिँस्तद्रेतो दधाति ॥ १ ॥ अथ यदि स्रामो विन्देत् । पौष्णञ्चरुमनुन्निर्व्वपेत्पूषा वै पशूनामीष्टे स यस्यैव पशवो यः पशूनामीष्टे तमेवैतत्प्रीणात्यगदो हैव भवति ॥ २ ॥ अथ यद्यक्षतामयो विन्देत् । वैश्वानरन्द्वादशकपालम्भूमिकपालम्पुरोडाशमनुनिर्व्वपेदियं वै वैश्वानर ऽइमामेवैतत्प्रीणात्यगदो हैव भवति ॥ ३ ॥ अथ यद्यक्ष्यामयो विन्देत् । सौर्य्यञ्चरुमनुनिर्व्वपेत्सूर्य्यो वै प्रजानाञ्चक्षुर्यदा ह्येवैष ऽउ-

देत्यथेदꣳ सर्वं चरति चक्षुषैवास्मिँस्तच्चक्षुर्दधाति स यच्च-
रुर्भवति चक्षुषा ह्ययमात्मा चरति ॥ ४ ॥ अथ यद्युदके
म्रियेत । वारुणं यवमयं चरुमनुनिर्वपेद्वरुणो वा ऽएत-
ङ्गृह्णाति योऽप्सु म्रियते स ऐवैनन्देवता गृह्णाति तामे-
वैतत्प्रीणाति सास्मै प्रीताऽयमालम्भायानुमन्यते तया-
नुमतमालभते स यद्यवमयो भवति वरुण्या हि यवाः
॥ ५ ॥ अथ यदि नश्येत् । त्रिहविषमिष्टिमनुनिर्वपेद्
द्यावापृथिव्यमेककपालम्पुरोडाशं वायव्यम्पयः सौर्यं चरुं
यद्वै किञ्च नश्यत्यन्तरैव तद् द्यावापृथिवी नश्यति
तद्वायुरुपवात्यादित्योऽभितपति नैताभ्यो देवताभ्य ऽऋते
किञ्चन नश्यति सैषा पृथगेव नष्टवेदनी स यद्यस्याप्य-
श्यन्नश्येदेतयैव यजेतानु हैवैनद्विन्दत्यथ यद्यमित्रा ऽअश्वं
विन्देरन्यदि वा म्रियेत यदि वाप्स्वन्यमानीय प्रोक्षेयुः
सैव तत्र प्रायश्चित्तिः ॥ ६ ॥

तृतीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

—o—

[ अश्वमेधारम्भकालादि ]

प्रजापतिरकामयत । सर्वान्कामानाप्नुयाꣳ सर्वा
व्यष्टीर्व्यश्नुवीयेति स ऽएतमश्वमेधन्त्रिरात्रं यज्ञ-
क्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वा सर्वान्कामानाप्नो-
त्सर्वा व्यष्टीर्व्याश्नुत सर्वान्ह वै कामानाप्नोति सर्वा
व्यष्टीर्व्यश्नुते योऽश्वमेधेन यजते ॥ १ ॥ तदाहुः ।

कस्मिन्नृतावभ्यारम्भ ऽइति ग्रीष्मेऽभ्यारभेतेत्यु हैक ऽआहुर्ग्रीष्मो वै क्षत्रियस्यर्त्तुः क्षत्रिययज्ञ ऽउ वा ऽएष यदश्वमेध ऽइति ॥ २ ॥ तद्वै वसन्त ऽएवाभ्यारभेत । वसन्तो वै ब्राह्मणस्यर्त्तुर्य्य ऽउ वै कश्च यजते ब्राह्मणीभूयेवैव यजते तस्माद्वसन्त ऽएवाभ्यारभेत ॥ ३ ॥ सा यासौ फाल्गुनी पौर्णमासी भवति । तस्यै पुरस्तात्षडहे वा सप्ताहे वर्त्विज ऽउपसमायन्त्यध्वर्युश्च होता च ब्रह्मा चोद्गाता चैतान्वा ऽअन्वन्य ऽऋत्विजः ॥ ४ ॥ तेभ्योऽध्वर्युश्चातुष्प्राश्यम्ब्रह्मौदनन्निर्वपति । तस्योक्तम्ब्राह्मणञ्चतुरः पात्राँश्चतुरोऽञ्जलीँश्चतुरः प्रस्थतान्द्वादशविधन्द्वादश मासाः सँवत्सरः सर्वं सँवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ५ ॥ तमेते चत्वार ऽऋत्विजः प्राश्नन्ति । तेषामुक्तम्ब्राह्मणन्तेभ्यश्चत्वारि सहस्राणि ददाति सर्वं वै सहस्रं सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै चत्वारि च सुवर्णानि शतमानानि हिरण्यानि तस्यो ऽएवोक्तम् ॥ ६ ॥ अथास्मा ऽअध्वर्युर्निष्कम्प्रतिमुञ्चन्वाचयति * । 'तेजोऽसि शुक्रममृत'[1]मिति तेजो वै शुक्रममृतं हिरण्यन्तेज ऽएवास्मिञ्छुक्रममृतन्दधा'त्यायुष्पा ऽआयुर्म्मे पाही'[2]त्यायुरेवास्मिन्दधात्यथैनमाह वाचं यच्छेति वाग्वै यज्ञो यज्ञस्यै-

* 'निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति' ( का० श्रौ० सू० २०. १. ९ )। चतुःसुवर्णनिर्मित आभरणविशेषो निष्कः।

( १ ) शु० य० सं० २२. १.। ( २ ) शु० य० सं० २२. १।

वाब्भ्यारम्भाय ॥७॥ चतस्रो जाया ऽउपक्कॢप्ता भवन्ति । महिषी[1] व्वावाता परिवृक्ता पालागली सर्व्वा निष्क्किण्ण्यो[2]ऽलङ्कृता मिथुनस्यैव सर्व्वत्वाय ताभिः सहाग्न्यगारम्प्रपद्यते पूर्व्वया द्वारा यजमानो दक्षिणया पत्न्यः ॥ ८ ॥ सायमाहुत्याᳫं हुतायाम् । जघनेन गार्हपत्यमुदङ्वावातया सह संविशति तदेवापीतराः संविशन्ति सोऽन्तरोरू ऽअसंवर्त्तमानः शेतेऽनेन तपसा स्वस्ति सँवत्सरस्योदृचः समश्नवा ऽइति ॥ ९ ॥ प्रातराहुत्याᳫं हुतायाम् । अद्ध्वर्य्युः पूर्ण्णाहुतिञ्जुहोति सर्व्वं व्वै पूर्ण्णᳫं सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै तस्यां व्वरेण व्वाचं व्विसृजते * वरन्ददामि ब्ब्रह्मण ऽइति सर्व्वं वै व्वरः सर्व्वमश्वमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्यै ॥ १० ॥ † अथ योऽस्य निष्कः प्रतिमुक्तो भवति । तमद्ध्वर्य्यवे ‡ ददात्यद्ध्वर्य्यवे ददमृतमायुरात्मन्धत्तेऽमृतᳫं ह्यायुर्हिरण्ण्यम् ॥ ११ ॥ अथाग्नेयीमिष्टिन्निर्व्वपति । पथश्च कामाय यज्ञमुखस्य चाच्छम्बट्कारायाथो ऽअग्निमुखा ऽउ वै सर्व्वा देवताः सर्व्वे कामा ऽअश्वमेधे मुखतः सर्व्वान्देवान्प्रीत्त्वा सर्व्वाङ्कामानाप्नवानीति ॥ १२ ॥ तस्यै पञ्चदश सामिधेन्न्यो भवन्ति । पञ्चदशो वै व्वज्रो व्वीर्य्यं व्वज्रो व्वज्रेणैवैतद्वीर्य्येण यजमानः

---

(१) महिषी = प्रथमपरिणीता स्त्री । वावाता = वल्लभा । परिवृक्ता=अवल्लभा । पालागली=दूतपुत्री
(२) 'निष्क्किन्न्यो०' इति 'ग' 'ज' पुस्तकयोः पाठः ।
* तथा चोक्तं सूत्रकृता—'आ वरदानाद्वाग्यमनम्' ( का० श्रौ० सू० २०।१।११ ) ।
† शतम् ६६०० ।
‡ 'अध्वर्यवे च प्रतिमुक्तं निष्कम्' ( का० श्रौ० सू० २०।१।२० )

पुरस्तात्पाप्मानमपहते वार्त्रघ्नावाज्यभागौ पाप्मा वै वृत्रः पाप्मनोऽपहत्या 'ऽअग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥' इत्यग्नेर्याज्यानुवाक्ये मूर्द्धन्वत्यन्यत्या भवति सद्वत्यन्यद्यैष वै मूर्द्धा य ऽएष तपत्येतस्यैवावरुद्ध्या ऽअथ यत्सद्वती सदेवावरुन्द्धे विराजौ सँयाज्ये सर्वदेवत्यं वा ऽएतच्छन्दो यद्विराट् सर्वे कामा ऽअश्वमेधे सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्नवानीति हिरण्यन्दक्षिणा सुवर्णँ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३॥ अथ पौष्णीन्निर्वपति । पूषा वै पथीनामधिपतिरश्वायैवैतत्स्वस्त्ययनङ्करोत्यथो ऽइयं वै पूषेमामेवास्मा ऽएतद्गोप्त्रीङ्करोति तस्य हि नार्त्तिरस्ति न ह्वला यमियमद्भुतगोपायतीमामेवास्मा ऽएतद्गोप्त्रीङ्करोति ॥ १४ ॥ तस्यै सप्तदश सामिधेन्यो भवन्ति । सप्तदशो वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वृधन्वन्तावाज्यभागौ यजमानस्यैव वृद्ध्यै 'पूषँस्तव व्रते वयम्पथस्पथः परिपतिं वचस्ये'त्युपाँशु हविषो याज्यानुवाक्ये व्रतवत्यन्यत्या भवति पथन्वत्यन्यत्या वीर्यं वै व्रतं वीर्यस्याप्त्यै वीर्यस्यावरुद्ध्या ऽअथ यत्पथन्वत्यश्वायैवैतत्स्वस्त्ययनङ्करोत्यनुष्टुभौ सँयाज्ये वाग्वा ऽअनुष्टुब्वाग्वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वासः शतन्दक्षिणा रूपं वा ऽएतत्पुरुषस्य यद्वासस्तस्माद्यमेव कञ्च सुवाससमाहुः को न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैनः

(१) शु० य० सं० १३. १४-१५। (२) शु० य० सं० ३४. ४१-४२।

समर्द्धयति शतम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥ १५ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ ब्राह्मणद्वयेन सावित्र्य इष्टयः, पारिप्लवाशंसनादि च निरूप्यन्ते ]

एतस्यान्तायमानायाम् । अश्वन्निक्त्वोदानयन्ति यस्मिन्त्सर्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सहस्त्रार्हम्पूर्व्व्यं ख्यो दक्षिणायान्धुर्य्यप्रतिधुरः ॥ १ ॥ तद्यत्सर्वरूपो भवति । सर्वं वै रूपः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽअथ यज्जवसमृद्धो वीर्य्यं वै जवो वीर्य्यस्याप्त्यै वीर्य्यस्यावरुद्ध्या ऽअथ यत्सहस्त्रार्हः सर्वं वै सहस्त्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽअथ यत्पूर्व्व्यं ऽएष वा ऽअपरिमितं वीर्य्यमभिवर्द्धते यत्पूर्व्व्यो ऽपरिमितस्यैव वीर्य्यस्यावरुद्ध्या ऽअथ यद्दक्षिणायान्धुर्य्यप्रतिधुर ऽएष वा ऽएष य ऽएष तपति न वा ऽएतङ्कश्चन प्रतिप्रतिरेतस्यैवावरुद्ध्यै ॥ २ ॥ तदु होवाच भाल्लवेयः । द्विरूप ऽएवैषोऽश्वः स्यात्कृष्णसारङ्गः प्रजापतेर्वा ऽएषोऽक्ष्णः समभवद्द्विरूपं वा ऽइदञ्चक्षुः शुक्लञ्चैव कृष्णञ्च तदेनथं स्वेन रूपेण समर्द्धयतीति ॥ ३ ॥ अथ होवाच सात्ययज्ञिः । त्रिरूप ऽएवैषोऽश्वः स्यात्तस्य कृष्णः पूर्वार्द्धः शुक्लोऽपरार्द्धः कृत्तिकाञ्जिः पुरस्तात्तद्यत्कृष्णः पूर्वार्द्धो भवति यदेवेदङ्कृष्णमक्ष्णस्तदस्य तदुथ यच्छुक्लोऽपरार्द्धो यदेवेदङ् शुक्लमक्ष्णस्तदस्य तदुथ यत्कृत्ति-

काञ्जिः पुरस्तात्सा कनीनका स ऽएव रूपसमृद्धोऽतो यतमोऽस्योपकूल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत जवेन त्वेव समृद्धः स्यात् ॥ ४ ॥ तस्यैते पुरस्ताद्रक्षितार ऽउपक्क्लृप्ता भवन्ति । राजपुत्राः कवचिनः शतछ राजन्न्या निषङ्गिणः शतछ सूतग्रामण्ण्याम्पुत्रा ऽइषुपर्षिणः शतं क्षात्रसङ्ग्रहीतॄणाम्पुत्रा दण्डिनः शतमश्वशतन्निरष्टन्निरमणं यस्मिन्नेनमपिसृज्य रक्षन्ति ॥ ५ ॥ अथ सावित्रीमिष्टिन्निर्वपति । सवित्रे प्प्रसवित्रे द्वादशकपालम्पुरोडाशछ सविता वै प्प्रसविता सविता म ऽइमं यज्ञम्प्रसुवादिति ॥ ६ ॥ तस्यै पञ्चदश सामिधेन्न्यो भवन्ति । वार्त्रघ्नावाज्यभागौ 'य ऽइमा विश्वा जातान्या देवो यातु सविता सुरत्न' ऽइत्युपाछंशु हविषो याज्यानुवाक्क्ये विराजौ सँयाज्ये हिरण्यन्दक्षिणा सुवर्णछ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयछ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥८॥ अथ द्वितीयान्निर्वपति । सवित्र ऽआसवित्रे द्वादशकपालम्पुरोडाशछ सविता वा ऽआसविता सविता म ऽइमं यज्ञमासुवादिति [ ❋ काण्डस्यार्धम् २१६] ॥९॥ तस्यै सप्तदश सामिधेन्न्यो भवन्ति । सद्वन्तावाज्यभागौ सदेवावरुन्द्धे 'विश्वानि देव सवितः' 'स घा नो

(१) ऋ० सं० ४. ४. २६ ।

* इयं काण्डार्धसंख्याऽत्र 'क' पुस्तक एवास्ति ।

(२) ऋ० सं० ४. ४. २६ । (३) ऋ० सं० ५. ४. १२ ।

देवः सविता सहावे'त्युपाꣳशु हविषो याज्यानुवाक्ये ऽअनुष्टुभौ सँय्याज्ये रजतꣳ हिरण्यन्दक्षिणा नानारूपताया ऽअथो ऽउत्क्रमायानपक्रमाय शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥१०॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ ११ ॥ अथ तृतीयान्निर्वपति । सवित्रे सत्यप्प्रसवाय द्वादशकपालम्पुरोडाशमेष ह वै सत्यः प्प्रसवो यः सवितुः सत्येन मे प्प्रसवेनेमं य्यज्ञम्प्रसुवादिति ॥ १२ ॥ तस्यै सप्तदशैव सामिधेन्न्यो भवन्ति । रयिमन्तावाज्यभागौ वीर्य्यं वै रयिर्वीर्य्यस्याप्त्यै वीर्य्यस्यावरुद्ध्या '[1]ऽआ विश्वदेवꣳ सत्पति'न्न [2]प्प्रेमिये सवितुर्दैव्व्यस्य तदि'त्युपाꣳशु हविषो याज्यानुवाक्ये नित्ये सँय्याज्ये नेद्यज्ञपथादयानीति क्लृप्त ऽएव यज्ञेऽन्ततः प्प्रतितिष्ठति त्रिष्टुभौ भवत ऽइन्द्रियं [3]वै वीर्य्यन्त्रिष्टुबिन्द्रियस्यैव वीर्य्यस्यावरुद्ध्यै हिरण्यन्दक्षिणा सुवर्ण्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ तस्यै प्प्रयाजेषु तायमानेषु । ब्ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयꣳ सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ १४ ॥ एतस्याꣳ सꣳस्थितायाम् । उपोत्थायाद्ध्वर्युश्च यजमानश्चाश्वस्य

(१) ऋ० सं० ४. ४. २६ । (२) ऋ० सं० ३. ८. ५ । (३) 'ग' 'ज' पुस्तकयोः 'इन्द्रे वै' इति पाठः ।

दक्षिणे कर्ण्ण ऽआजपतो 'विभूर्म्मात्रा प्प्रभूः पित्रेति तस्योक्तम्ब्राह्मणमथैनमुदश्वम्प्राञ्चम्प्रसृजत ऽएषा ह्योभये-षान्देवमनुष्याणान्दिग्ग्यदुदीची प्प्राची स्वायामेवैनन्तद्दिशि धत्तो न वै स्व ऽआयतने प्प्रतिष्ठितो रिष्ष्यत्त्यरिष्ट्यै ॥ १५ ॥ स ऽआह 'देवा ऽआशापालाः । एतन्देवेब्भ्योऽ-श्श्वम्मेधाय प्प्रोक्षितꣳ रक्षते'त्युक्त्वा मानुषा ऽआशापाला ऽअथैते देवा ऽआप्प्याः साद्ध्या ऽअन्न्वाद्ध्या मरुतस्तमेत ऽउभये देवमनुष्याः संविदाना ऽअप्प्रत्यावर्त्तयन्तः सँव-त्सरꣳ रक्षन्ति तद्यन्न प्प्रत्यावर्त्तयन्त्येष वा ऽएष य ऽएष तपति क ऽउ ह्येतमर्हति प्प्रत्यावर्त्तयितुं यद्ध्येनम्प्रत्याव-र्त्तयेयुः परागेवेदꣳ सर्व्वꣳ स्यात्तस्म्मादप्प्रत्यावर्त्तयन्तो रक्षन्ति ॥ १६ ॥ स ऽआहाशापालाः । ये वा ऽएतस्योदृचङ्गमि-ष्ष्यन्ति राष्ट्रन्ते भविष्ष्यन्ति राजानो भविष्ष्यन्त्यभिषे-चनीया ऽअथ य ऽएतस्योदृचन्न गमिष्ष्यन्त्यराष्ट्रन्ते भवि-ष्ष्यन्त्यराजानो भविष्ष्यन्ति राजन्न्या विशोऽनभिषेचनी-यास्तस्म्मान्न्मा प्प्रमदत स्न्नात्वाच्चैवैनमुदकान्निरुन्धीद्ध्वं वडवाब्भ्यश्च ते यद्यद्ब्राह्मणजातमुपनिगच्छेत तत्तत्पृच्छेत ब्ब्राह्मणाः कियद्यूयमश्श्वमेधस्य वित्थेति ते ये न विद्युर्जिनी-यात तान्त्सर्व्वं वा ऽअश्श्वमेधः सर्व्वस्यैष न वेद यो ब्ब्राह्मणः सन्नश्श्वमेधस्य न वेद सोऽब्ब्राह्मणो ज्येय ऽएव स पानङ्क-रवाथ खादन्निवपाथाथ यत्किञ्च जनपदे कृतान्नꣳ सर्व्वं

(१) शु० य० सं० २२. १९। (२) शु० य० सं० २२. १९।

वस्तत्सुतन्तेषाᳬं रथकारकुल * ऽएव वो वसतिस्तद्ध्यश्व-स्यायतनमिति ॥ १७ ॥

चतुर्थोऽध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ ११७ ॥

प्रमुच्च्याश्वन्दक्षिणेन वेदिम् । हिरण्मयङ्कशिपूप-स्तृणाति तस्मिन्न्होतोपविशति दक्षिणेन होतारᳬं हिरण्मये कूर्चे † यजमानो दक्षिणतो ब्रह्मा चोद्गाता च हिरण्मय्योः कशिपुनोः ‡ पुरस्तात्प्रत्यङ्ङध्वर्युर्हिरण्मये वा कूर्चे हिरण्मये वा फलके ॥ १ ॥ समुपविष्टेष्वध्वर्युᳬं सम्प्रेष्यति । होतर्भूतान्न्याचक्ष्व भूतेष्विमं यजमानमध्यूहेति सम्प्रेषितो होताध्वर्युमामन्त्रयते पारिप्लवमाख्यानमाख्यास्यन्नध्वर्यवित्ति हवै होतरित्यध्वर्युᳬं ॥ २ ॥ मनुर्वैवस्वतो राजेत्त्याह । तस्य मनुष्या विशस्त ऽइम ऽआसत ऽइत्त्यश्रोत्रिया गृहमेधिन ऽउपसमेता भवन्ति तानुपदिशत्त्यृचो वेदᳬं सोऽयमित्त्यृचाᳬं सूक्तं व्याचक्षाण ऽइवानुद्रवेद्वीणागणगिन ऽउपसमेता भवन्ति तानध्वर्युᳬं सम्प्रेष्यति वीणागणगिन ऽइत्त्याह पुराणैरिमं यजमानᳬं राजभिᳬं साधुकृद्भिᳬं सङ्गायतेति तन्ते तथा सङ्गायन्ति तद्यदेनमेवᳬं सङ्गायन्ति पुराणैरेवैनन्तद्राजभिᳬं साधुकृद्भिᳬं

* 'रथकारगृहवासाश्च' ( का० श्रौ० सू० २०।२।१६ )
† सपादमासनं कूर्चः ।
‡ कशिपुशब्देन मृद्वासनं मसूरक उच्यते ।

सलोकङ्कुर्वन्ति ॥ ३ ॥ सम्प्रेष्ष्याद्ध्वर्य्युः प्प्रक्क्रमाञ्जुहोति । अन्न्वाहार्य्यपचने वाऽश्वस्य वा पदम्परिलिख्य यतरथास्य तत्त्रावृद्द्रवति पूर्व्वा ह्येव स्थितिः ॥ ४ ॥ सावित्र्या ऽएवेष्टेः । पुरस्तादनुद्रुत्त्य सकृदेव रूपाण्ण्याहवनीये जुहोत्त्यथ सायन्धृतिषु हूयमानासु राजन्न्यो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाग्घ्नँस्तिस्त्रः स्वयः सम्भृता गाथा गायतीत्त्ययुद्ध्यतेत्त्यमुः सङ्ग्राममजयदिति तस्योक्तम्ब्राह्मणम् ॥ ५ ॥ अथ श्वोभूते द्वितीयेऽहन् । एवमेवैतासु सावित्त्रीष्ष्विष्टिषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युर्य्यमो वैवस्वतो राजेत्त्याह तस्य पितरो व्विशस्त ऽइम ऽआसत ऽइति स्त्थविरा ऽउपसमेता भवन्ति तानुपदिशति यजूꣳषि व्वेदः सोऽयमिति यजुषामनुवाकं व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ६ ॥ अथ तृतीयेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युर्व्वरुण ऽआदित्त्यो राजेत्त्याह तस्य गन्धर्व्वा व्विशस्त ऽइम ऽआसत ऽइति युवानः शोभना ऽउपसमेता भवन्ति तानुपदिशत्त्यथर्व्वाणो व्वेदः सोऽयमित्त्यथर्व्वणामेकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्य्युः सम्प्रेष्ष्यति न प्प्रक्क्रमाञ्जुहोति ॥ ७ ॥ अथ चतुर्त्थेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्त्येवाद्ध्वर्य्युः सोमो वैष्ष्णवो राजेत्त्याह तस्याप्सरसो व्विशस्ता ऽइमा ऽआसत ऽइति युवतयः शोभना ऽउपसमेता भवन्ति ता ऽउपदिशत्त्यङ्गिरसो व्वेदः सोऽयमि-

त्यङ्गिरसामेकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ८ ॥ अथ पञ्चमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्ध्वर्य्यवितिहवै होतरित्त्येवाद्ध्वर्युरर्ब्बुदः काद्रवेयो राजेत्त्याह तस्य सर्प्पा विशस्त ऽइम ऽआसत ऽइति सर्प्पाश्च सर्प्पविदश्चोपसमेता भवन्ति तानुपदिशति सर्प्पविद्या वेदः सोऽयमिति सर्प्पविद्याया ऽएकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ९ ॥ अथ षष्ठेऽहन् ।

एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्ध्वर्य्यवितिहवै होतरित्त्येवाद्ध्वर्युः कुबेरो वैश्रवणो राजेत्त्याह तस्य रक्षाꣳसि विशस्तानीमान्न्यासत ऽइति सेलगाः पापकृत ऽउपसमेता भवन्ति तानुपदिशति देवजनविद्या वेदः सोऽयमिति देवजनविद्याया ऽएकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ १० ॥ अथ सप्तमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्ध्वर्य्यवितिहवै होतरित्त्येवाद्ध्वर्युरसितो धान्वो राजेत्त्याह तस्यासुरा विशस्त ऽइम ऽआसत ऽइति कुसीदिन ऽउपसमेता भवन्ति तानुपदिशति माया वेदः सोऽयमिति काञ्चिन्मायाङ्कुर्य्यादेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ११ ॥ अथाष्टमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदुद्ध्वर्य्यवितिहवै होतरित्त्येवाद्ध्वर्युर्म्मत्स्यः साम्मदो राजेत्त्याह तस्योदकेचरा विशस्त ऽइम ऽआसत ऽइति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीति-

हासो व्वेदः सोऽयमिति कञ्चिदितिहासमाचक्षीतैवमेवाद्ध्वर्युः सम्प्रेष्यति न प्प्रक्रमाञ्जुहोति ॥ १२ ॥ अथ नवमेऽहन् । एवमेवैतास्विष्ष्टिषु सᳬस्थितास्वेषैवावृदद्ध्वर्युर्व्विति हवै होतरित्त्येवाद्ध्वर्युस्ताक्ष्यो व्वैपश्यतो राजेत्याह तस्य व्वयाᳬसि व्विशस्तानीमान्यासत ऽइति व्वयाᳬसि च व्वायोविद्धिकाश्चोपसमेता भवन्ति तानुपदिशति पुराणं व्वेदः सोऽयमिति किञ्चित्पुराणमाचक्षीतैवमेवाद्ध्वर्युः सम्प्रेष्यति न प्प्रक्रमाञ्जुहोति ॥ १३ ॥ अथ दशमेऽहन् । एवमेवैतास्विष्ष्टिषु सᳬस्थितास्वेषैवावृदद्ध्वर्युर्व्विति हवै होतरित्त्येवाद्ध्वर्युर्द्धर्म्म ऽइन्द्रो राजेत्याह तस्य देवा व्विशस्त ऽइम ऽआसत ऽइति श्श्रोत्रिया अप्प्रतिग्ग्राहका ऽउपसमेता भवन्ति तानुपदिशति सामानि व्वेदः सोऽयमिति साम्म्नान्दशतम्ब्रूयादेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्प्रक्रमाञ्जुहोतीति ॥ १४ ॥ एतत्पारिप्लवम् । सर्व्वाणि राज्यान्न्याचष्ष्टे सर्व्वा व्विशः सर्व्वान्व्वेदान्त्सर्व्वान्देवान्त्सर्व्वाणि भूतानि सर्व्वेषाᳬ ह वै स ऽएतेषाᳬ राज्यानाᳬ सायुज्यᳬ सलोकतामश्नुते सर्व्वासां विशामैश्वर्य्यमाधिपत्यङ्गच्छति सर्व्वान्व्वेदानवरुन्द्धे सर्व्वान्देवान्प्रीत्त्वा सर्व्वेषु भूतेष्ष्वन्ततः प्प्रतितिष्ष्ठति यस्यैवंव्विदेतद्धोता पारिप्लवमाख्यानमाचष्ष्टे यो वैतदेवं व्वेदैतदेव समानमाख्यानम्पुनः पुनः सँवत्सरम्परिप्प्लवते तद्यत्पुनः पुनः परिप्प्लवते तस्मात्पारिप्प्लवᳬ षट्त्रिᳬशतन्दशाहानाचष्ष्टे षट्त्रिᳬशदक्षरा बृहती बार्हताः पशवो बृहत्त्यैवास्म्मै पशून्नवरुन्द्धे ॥ १५ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपकाष्ठादि ]

सँव्वत्सरे पर्य्यवेते दीक्षा । प्प्राजापत्त्यमालब्भ्योत्सीदन्तीष्ट्यः पुरोहितस्याग्निषु यजेतेत्यु हैक ऽआहुः किमु दीक्षितो यजेत द्वादश दीक्षा द्वादशोपसदस्तिस्रः सुत्त्यास्तत्त्रिणवमभिसम्पद्यते व्वज्र्रो वै त्रिणवः क्षत्रमश्वः क्षत्रꣳ राजन्न्यो व्वज्रेण खलु वै क्षत्रꣳ स्पृतन्तद्वज्रेणैव क्षत्रꣳ स्पृणोति ॥ १ ॥ दीक्षणीयायाꣳ सꣳस्थितायाम् । सायं व्वाचि व्विसृष्टायां व्वीणागणगिन ऽउपसमेता भवन्ति तानद्ध्वर्य्युः सम्प्रेष्यति व्वीणागणगिन ऽइत्त्याह देवैरिमं यजमानꣳ सङ्गायतेति तन्ते तथा सङ्गायन्ति ॥ २ ॥ अहरहर्व्वाचि व्विसृष्टायाम् । अग्नीषोमीयाणामन्ततः सꣳस्थाया-म्परिहृतासु व्वसतीवरीषु तद्यदेनन्देवैः सङ्गायन्ति देवैरे-वैनन्तत्सलोकङ्कुर्व्वन्ति ॥ ३ ॥ प्रजापतिना सुत्त्यासु । एव-मेवाहरहः परिहृतास्वेव व्वसतीवरीषूदवसानीयायामन्ततः सꣳस्थितायां तद्यदेनम्प्रजापतिना सङ्गायन्ति प्प्रजापति-नैवैनन्तदन्ततः सलोकङ्कुर्व्वन्ति ॥ ४ ॥ एकविꣳशतिर्य्यूपाः । सर्व्वे ऽएकविꣳशत्त्यरत्नयो राज्जुदालोऽग्निष्ठो भवति पैतु-दारवावभितः षड्बैल्वास्त्रय ऽइत्थास्त्रय ऽइत्थात्षट् खादि-रास्त्रय ऽएवेत्थात्त्रय ऽइत्थात्षट् पालाशास्त्रय ऽएवेत्थात्त्रय ऽइत्थात् ॥ ५ ॥ तद्यदेत ऽएवं रूपा भवन्ति । प्प्रजापतेः प्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमद्ध्रियत तस्य यः श्लेष्मासीत्सꣳसार्द्धꣳ समवद्भुत्त्य मद्ध्यतो नस्त ऽउदभि-नत्स ऽएष व्वनस्पतिरभवद्रज्जुदालस्तस्मात्स श्लेष्मणः

श्लेष्मणो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-
स्सोऽग्निष्ठो भवति मद्ध्यं वा ऽएतद्यूपानां यदग्निष्ठो*
मद्ध्यमेतत्प्राणानां यन्नासिके स्व ऽएवैनन्तदायतने दधाति
॥ ६ ॥ अथ यदापोमयन्तेज ऽआसीत् । यो गन्धः स
सार्द्धः समवद्रुत्य चक्षुष्ट ऽउदभिनत्स ऽएष वनस्पति-
रभवत्पीतुदारुस्तस्मात्स सुरभिर्गन्धाद्धि समभवत्तस्मादु
ज्वलनस्तेजसो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-
त्तावभितोऽग्निष्ठम्भवतस्तस्मादिमे ऽअभितो नासिकाश्च-
क्षुषी स्व ऽएवैनौ तदायतने दधाति ॥ ७ ॥ अथ यत्कु-
न्तापमासीत् । यो मज्जा स सार्द्धः समवद्रुत्य श्श्रोत्रत
ऽउदभिनत्स ऽएष वनस्पतिरभवद्बिल्वस्तस्मात्तस्यान्तरतः
सर्व्वमेव फलमाद्यम्भवति, तस्मादु हारिद्र ऽइव भवति
हारिद्र ऽइव हि मज्जा तेनैवैनन्तद्रूपेण समर्द्धयत्त्यन्तरे पैतुदा-
रवौ भवतो बाह्ये बैल्वा ऽअन्तरे हि चक्षुषी बाह्ये श्श्रोत्रे
स्व ऽएवैनाँस्तदायतने दधाति ॥ ८ ॥ अस्थिभ्य ऽएवास्य
खदिरः समभवत् । तस्मात्स दारुणो बहुसारो दारुणमिव
ह्यस्थि तेनैवैनन्तद्रूपेण समर्द्धयत्त्यन्तरे बैल्वा भवन्ति
बाह्ये खादिरा ऽअन्तरे हि मज्जानो बाह्यान्यस्थीनि स्व
ऽएवैनाँस्तदायतने दधाति ॥ ९ ॥ माꣳसेभ्य ऽएवास्य
पलाशः समभवत् । तस्मात्स बहुरसो लोहितरसो लोहि-
तमिव हि माꣳसन्तेनैवैनन्तद्रूपेण समर्द्धयत्त्यन्तरे खादिरा
भवन्ति बाह्ये पालाशा ऽअन्तराणि ह्यस्थीनि बाह्यानि

* अग्निसमीपे तिष्ठतीति-अग्निष्ठः=मध्यमो यूप इत्यर्थः ।

(१) 'पैतुदारवौ' इति 'ग' 'ज' पुस्तकयोः पाठः ।

माᳬसानि स्व ऽएवैनाँस्तदायतने दधाति ॥ १० ॥ अथ यदेकविᳬशतिर्भवन्ति । एकविᳬशत्यरत्नय ऽएकविᳬशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्च ऽर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविᳬशः सोऽश्वमेध ऽएष प्प्रजापतिरेवमेतम्प्रजापतिं स्वञ्जङ्कृत्स्नᳬ संस्कृत्य तस्मि-न्नेकविᳬशतिमग्नीषोमीयान्पशूनालभते तेषाᳬ समान ङ्कर्म्मेत्यैतत्पूर्वेद्युः कर्म्म ॥ ११ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

—०—

[ सवनीयाः पशवः ]

अथ प्प्रातर्ग्गोतमस्य । चतुःष्टोम स्तोमो भवति तस्य चतसृषु बहिष्प्पवमानमष्टास्वष्टास्वाज्यानि द्वादशसु माध्य-न्दिनः पवमानः षोडशसु पृष्ठानि विᳬशत्यामार्भव पवमानश्चतुर्विᳬशत्यामग्निष्टोमसाम* ॥ १ ॥ तस्य हैके अग्निष्टोमसाम चतुःसाम कुर्वन्ति नाग्निष्टोमो नोक्थ्य ऽइति वदन्तस्तद्यदि तथा कुर्य्युः सार्द्धᳬ स्तोत्रियᳬ शस्त्व सार्द्धमनुरूपᳬ शᳬसेद्रथन्तरम्पृष्ठᳬ राथन्तरᳬ शस्त्रमग्नि-ष्टोमो यज्ञस्तेनेमँल्लोकमृद्ध्नोति ॥ २ ॥ एकविᳬशतिः सव-नीयाः पशवः । सर्व्वे ऽआग्नेयास्तेषाᳬ समानङ्कर्म्मेत्यु हैक ऽआहुर्द्वे त्वेवैते ऽएकादशिन्यावालभेत स ऽएवैकाद-

* येन साम्ना अग्निष्टोमसंस्था समाप्यते तदग्निष्टोमसाम ।

शिनेषु कामस्तस्य कामस्याप्त्यै ॥ ३ ॥ सर्ठ०स्थितेऽग्निष्टोमे । परिहृतासु वसतीवरीष्वध्वर्युरन्नहोमाञ्जुहोति तेषामुक्तम्ब्राह्मणं 'प्राणाय स्वाहापानाय स्वाहे'ति द्वादशभिरनुवाकैर्द्वादश मासाः सँवत्सरः सर्वः सँवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥ एकविंशम्मध्यममहर्भवति । असौ वा ऽआदित्य ऽएकविंशः सोऽश्वमेधः स्वेनैवैनर्ठ० स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति तस्मादेकविंशम् ॥ ५ ॥ षड्वेवैकविंशम् । एकविंशो वै पुरुषो दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविंशस्तदनेनैकविंशेनात्मनैतस्मिन्नेकविंशे प्रतिष्ठायाम्प्रतितिष्ठति तस्मादेकविंशम् ॥ ६ ॥ षड्वेवैकविंशम् । एकविंशो वै स्तोमानाम्प्रतिष्ठा बहु खलु वा ऽएतदेतस्मिन्नहन्युच्चावचमिव कर्म्म क्रियते तद्यदेतदेतस्मिन्नहन्युच्चावचम्बहु कर्म्म क्रियते तदेतस्मिन्नेकविंशे प्रतिष्ठायाम्प्रतिष्ठितङ्क्रियाता ऽइति तस्माद्वेवैतदेकविंशमहः ॥ ७ ॥ तस्य प्रातःसवनम् । 'अग्निन्तम्मन्ये यो वसु'रिति होता पाङ्क्तमाज्यर्ठ० शस्त्वैकाहिकमुपसंशंसति बार्हतञ्च प्रउगम्माधुच्छन्दसञ्च त्रिचश ऽउभे संशंसति यश्च बार्हते प्रउगे कामो य ऽउ च माधुच्छन्दसे तयोरुभयोः कामयोराप्त्यै क्लृप्तम्प्रातःसवनम् ॥ ८ ॥ अथातो माध्यन्दिनर्ठ० सवनम् । अतिच्छन्दाः प्रतिपन्मरुत्वतीयस्य 'त्रिके-

(१) शु॰ य॰ सं॰ २२. २३। (२) शु॰ य॰ सं॰ १५. ४१। (३) ऋ॰ सं॰ २. ६. २८।

द्रुकेषु महिषो यवाशिर'मित्यतिष्ठा वा ऽएषा च्छन्दसां यदुतिच्छन्दा ऽअतिष्ठा ऽअश्वमेधो यज्ञानामश्वमेधस्यैवाप्त्यै सैषैव त्रिः शस्ता त्रिचः सम्पद्यते तेनो तङ्काममाप्नोति यस्त्रिच 'ऽइदं वसो सुतमन्ध' ऽइत्यनुचर ऽएष ऽएव नित्य ऽएकाहातान 'ऽइत्था हि सोम ऽइन्मदे' ऽवितांसि सुन्वतो वृक्तबर्हिष' ऽइति पङ्क्तीश्च षट्पदाश्च शस्त्वैकाहिके निविदन्दधातीति मरुत्वतीयम् ॥ ९ ॥ अथातो निष्केवल्यम् । महानाम्न्यः पृष्ठम्भवन्ति सानुरूपाः सप्रगाथाः शंसति सर्वे वै कामा महानाम्नीषु सर्वे कामा ऽअश्वमेधे सर्वेषाङ्कामानामाप्त्या 'ऽइन्द्रो मदाय वावृधे' 'प्रेदम्ब्रह्म वृत्रतूर्येष्वाविथे'ति पङ्क्तीश्च षट्पदाश्च शस्त्वैकाहिके निविदन्दधाति क्लृप्तम्माध्यन्दिनः सवनम् ॥ १० ॥ अथातस्तृतीयसवनम् । अतिच्छन्दा ऽएव प्रतिपद्वैश्वदेवस्या'भि त्यन्देवः सवितारमोण्यो'रिति तस्या ऽएतदेव ब्राह्मणं यत्पूर्वस्या 'ऽअभि त्वां देव सवित'रित्यनुचरोऽभिवानभिभूत्यै रूप'मुदु ष्य देवः सविता दमूना' ऽइति सावित्रः शस्त्वैकाहिके निविदन्दधाति 'मही द्यावापृथिवी ऽइह ज्येष्ठे' ऽइति चतुर्ऋचन्द्यावापृथिवीयः शस्त्वैकाहिके निविदन्दधा'त्यृभुर्विभ्वा वाज ऽइन्द्रो नो ऽअच्छे'त्यार्भवः शस्त्वैकाहिके

(१) ऋ० सं० ५. ७. १७। (२) ऋ० सं० १. ५. २९। (३) ऋ० सं० ६. ३. १८। (४) ऋ० सं० १. ६. २१। (५) ऋ० सं० ६. ३. १६। (६) शु० य० सं० ४. २५। (७) ऋ० सं० १. २. १३। (८) ऋ० सं० ५. ४. ५। (९) ऋ० सं० १०. ८. ८। (१०) ऋ० सं० ३. ७. ३।

निविदन्दधाति 'को नु वाम्मित्रावरुणावृताय'न्निति वैश्वदेवꣳ शस्त्वैकाहिके निविदन्दधातीति वैश्वदेवम् ॥ ११ ॥ अथात ऽआग्निमारुतम् । 'मूर्द्धानन्दिवो ऽअरतिम्पृथिव्या' ऽइति वैश्वानरीयꣳ शस्त्वैकाहिके निविदन्दधा'त्यां रुद्रास ऽइन्द्रवन्तः सजोषस' ऽइति मारुतꣳ शस्त्वैकाहिके निविदन्दधाती'मसूँ षु वो ऽअतिथिमुषर्बुध'मिति नवर्च्चञ्जा वेदसीयꣳ शस्त्वैकाहिके निविदन्दधाति तद्यदैकाहिकानि निविद्धानानि भवन्ति प्प्रतिष्ठा वै ज्योतिष्टोमः प्प्रतिष्ठाया ऽअप्प्रच्च्युत्त्यै ॥ १२ ॥ तस्यैते पशवो भवन्ति । 'अश्वस्तूपरो* गोमृग,† ऽइति पञ्चदश पर्य्यङ्ग्यास्तेषामुक्तम्ब्राह्मणमथैत ऽआरण्या 'वसन्ताय कपिञ्जलानालभते ग्ग्रीष्म्माय कलविङ्कान्वर्षाब्भ्यस्तित्तिरी'निति तेषाम्म्वेवोक्तम् ॥ १३ ॥ अथैतानेकविꣳशतये । चातुर्म्मास्यदेवताब्भ्य ऽएकविꣳशतिमेकविꣳशतिम्पशूनालभत ऽएतावन्तो वै सर्वे देवा यावन्तश्चातुर्म्मास्यदेवताः सर्वे कामा ऽअश्वमेधे सर्वान्देवान्प्प्रीत्वा सर्वान्कामानाप्नवानीति न तथा कुर्य्यात् ॥ १४ ॥ सप्तदशैव पशून्मद्ध्यमे यूप ऽआलभेत । प्प्रजापतिः सप्तदशः सर्वꣳ सप्तदशः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै षोडश षोडशेतरेषु षोडशकलं वा ऽइदꣳ सर्वꣳ

(१) ऋ० सं० ४. २. १३। (२) ऋ० सं० ४. ५. ९। शु० य० सं० ७. २५।३३. ८। (३) ऋ० सं० ४. ३. ११। (४) ऋ० सं० ४. ५. १७। (५) शु० सं० य० २४. १।

* 'शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनश्छागः = तूपरः।

† गोमृगः = गवयः।

(६) शु० य० सं० २४. २०।

सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते त्रयोदश मासाः संवत्सरः सर्वः संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १५ ॥ अथ पुरा बहिष्पवमानात् । अश्वन्निक्तोदानयन्ति तेन पवमानाय सर्पन्ति तस्योक्तम्ब्राह्मणꣳ स्तुते बहिष्पवमानेऽश्वमास्तावमाक्रमयन्ति स यद्यव वा जिघ्रेद्वि वा वर्तेत समृद्धो मे यज्ञ इति ह विद्यात्तमुपाकृत्याध्वर्युराह होतरभिष्टुहीति तमेकादशभिर्होताभिष्टौति ॥ १६ ॥ 'यदक्रन्दः प्रथमञ्जायमान' इति । त्रिः प्रथमया त्रिरुत्तमया ताः पञ्चदश सम्पद्यन्ते पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते तद्वै यजमानायैव वज्रः प्रदीयते योऽस्य स्तृत्यस्तꣳ स्तर्त्तव उप प्रागाच्छसनं वाज्यर्वोप प्रागात्परमं यत्सधस्थमिति ॥ १७ ॥ एते उद्धृत्य । 'मा नो मित्रो वरुणो अर्यमायु'रित्येतत्सूक्तमध्रिगावावपति 'चतुस्त्रिꣳशद्वाजिनो देवबन्धो'रित्यु हैक एतां वङ्क्रीणाम्पुरस्ताद्दधति नेदनायतने प्रणवन्दधामेत्यथो नेदेकवचनेन बहुवचनं व्यवायामेति न तथा कुर्य्यात्सार्द्धमेव सूक्तमावपे'दुप प्रागाच्छसनं वाज्यर्वो'प प्रागात्परमं यत्सधस्थ'मिति ॥ १८ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

(१) शु० य० सं० २९. १२ । (२) शु० य० सं० २५. २४ । (३) शु० य० सं० २५. ४१ । (४) शु० य० सं० २९. २३ । (५) शु० य० सं० २९. २४ ।

[ संवादः ]

एते ऽउक्त्वा । यदुद्धिगोः परिशिष्टम्भवति तदाह वासोऽधिवासह्ँ हिरण्यमित्यश्श्वायोपस्तृणन्ति तस्मिन्नेनमधि संज्ञपयन्ति संज्ञप्तेषु पशुषु पत्न्यः पान्नेजनैरुदायन्ति चतस्रश्च जायाः कुमारी पञ्चमी चत्वारि च शतान्यनुचरीणाम् ॥ १ ॥ निष्ठितेषु पान्नेजनेषु । महिषीमश्श्वायोपनिपादयन्त्यथैनावधिवासेन * सम्प्रोर्ण्णुवन्ति † 'स्वर्गे लोके प्प्रोर्ण्णुवाथा'मित्येष वै स्वर्ग्गो लोको यत्र पशुह्ँ संज्ञपयन्ति निरायत्त्याश्श्वस्य शिश्नम्महिष्युपस्थे निधत्ते ‡ '[2]वृषा वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैव सर्वत्वाय ॥ २ ॥ तयोः शयानयोः । अश्श्वं य्यजमानोऽभिमेथ'[3]त्युत्सक्थ्या ऽअव गुदन्धेही'ति तन्न कश्चन प्प्रत्यभिमेथति नेद्यजमानम्प्रातिप्प्रतिः कश्चिदसदिति ॥ ३ ॥ अथाद्ध्वर्युः कुमारीमभिमेथति । कुमारि हये हये कुमारि '[4]यकासकौ शकुन्तिके'ति तङ्कुमारी प्प्रत्यभिमेथत्यद्ध्वर्यो हये हयेऽद्ध्वर्यो '[5]यकोऽसकौ शकुन्तक' ऽइति ॥ ४ ॥ अथ ब्ब्रह्मा महिषीमभिमेथति । महिषि हये हये महिषि '[6]माता च ते पिता च तेऽग्ग्रं व्वृक्षस्य रोहत' ऽइति तस्यै शतह्ँ राजपुत्र्योऽनुचर्य्यो भवन्ति ता ब्ब्रह्माणम्प्रत्यभिमेथ-

---

* अथ उपरिष्टाचाच्छादनक्षमं वासोऽधिवासः ।

† का० श्रौ० सू० २०. ६. १५ ।

( १ ) शु० य० सं० २३. २० ।

‡ 'अश्वशिश्नमुपस्थे कुरुते' ( का० श्रौ० सू० २०. ६. १६ ) ।

(२) शु० य० सं० २३ २० । (३) शु० य० सं० २३. २१ । (४) शु० य० सं० २३. २२ ।
( ५ ) शु० य० सं० २३. २३ । ( ६ ) शु० य० सं० २३. २४ ।

न्ति ब्ब्रह्मन्हये हये ब्ब्रह्म'न्न्माता च ते पिता च तेऽग्ग्रे ब्वृक्षस्य क्क्रीडत' ऽइति ॥ ५ ॥ अथोद्गाता व्वावातामभिमेथति । व्वावाते हये हये व्वावात 'ऽऊर्द्ध्वामेनामुच्छ्रापये'ति तस्यै शतꣳ राजन्न्या ऽअनुचर्य्यो भवन्ति ता ऽउद्गातारम्प्रत्यभिमेथन्त्युद्गातर्हये हय ऽउद्गात'रूर्द्ध्वमेनमुच्छ्रयता'दिति ॥ ६ ॥ अथ होता परिवृक्तामभिमेथति । परिवृक्ते हये हये परिवृक्ते 'यदस्या अꣳहुभेद्या' ऽइति तस्यै शतꣳ सूतग्ग्रामण्ण्यान्दुहितरोऽनुचर्य्यो भवन्ति ता होतारम्प्रत्यभिमेथन्ति होतर्हये हये होत'र्य्यद्देवासो ललामगु'मिति ॥ ७ ॥ अथ क्षत्ता पालागलीमभिमेथति । पालागलि हये हये पालागलि 'यद्धरिणो यवमत्ति न पुष्टम्पशु मन्न्यत' ऽइति तस्यै शतङ्क्षात्रसङ्ग्रहीतॄणान्दुहितरोऽनुचर्य्यो भवन्ति ताः क्षत्तारम्प्रत्यभिमेथन्ति क्षत्तर्हये हये क्षत्त'र्य्यद्धरिणो यवमत्ति न पुष्टम्बहु मन्न्यत' ऽइति ॥ ८ ॥ सर्व्वाप्तिर्व्वा ऽएषा व्वाचः । यदभिमेथिकाः सर्व्वे कामा ऽअश्ववमेधे सर्व्वया व्वाचा सर्व्वान्न्कामानाप्नवामेत्युत्थापयन्ति महिषीन्ततस्ता यथेतम्प्रतिपरायन्त्यथेतरे सुरभिमतीमृचमन्ततोऽन्न्वाहु'र्दधिक्क्राव्ण्णो ऽअकारिष'मिति ॥ ९ ॥ [अर्धप्रपाठकः ॥५३॥] अप व्वा ऽएतेभ्य ऽआयुर्द्देवताः क्क्रामन्ति । ये यज्ञेऽपूतां व्वाचं व्वदन्ति व्वाचमेवैतत्पुनते देवयज्ज्यायै देवतानामनपक्क्रमाय या च गोमृगे वपा भवति या चाजे तूपरे

(१) शु० य० सं० २३. २५। (२) शु० य० सं० २३. २६। (३) शु० य० सं० २३. २७। (४) शु० य० सं० २३. २८। (५) शु० य० सं० २३. २९। (६) शु० य० सं० २३. ३०। (७) शु० य० सं० २३. ३१। (८) शु० य० सं० २३. ३२।

ते ऽअश्वे प्प्रत्यवधायाहरन्ति नाश्वस्य वपास्तीति वदन्तो न तथा कुर्य्यादश्वस्यैव प्प्रत्यक्षम्मेद ऽआहरेत्प्रज्ञाता ऽह्युतराः ॥ १० ॥ शृतासु वपासु । स्वाहाकृतिभिश्चरित्वा प्प्रत्यञ्चः प्प्रतिपरेत्त्य सदसि ब्ब्रह्मोद्यं वदन्ति पूर्वया द्वारा प्प्रपद्य यथाधिष्ण्ण्यं व्व्युपविशन्ति ॥ ११ ॥ स होताद्ध्वर्य्युम्पृच्छति । 'कः स्विदेकाकी चरती'ति तम्प्रत्याह 'सूर्य्य ऽएकाकी[2] चरती'ति ॥ १२ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छति । 'किꣳ स्विदा[3]सीत्पूर्वचित्ति'रिति ...

'किꣳ स्वित्सूर्य्यसमञ्ज्योति'रिति तम्प्रत्याह ब्ब्रह्म 'सूर्य्य-समञ्ज्योति'रिति ॥ १३ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'पृच्छामि त्वा चितये देवसखे'ति तम्प्रत्याहा'पि तेषु त्रिषु पदेष्ष्वस्मी'ति ॥ १४ ॥ अथोद्गाता ब्ब्रह्माणम्पृच्छति । 'केष्ष्वन्तः पुरुष ऽआविवेशे'ति तम्प्रत्याह 'पञ्चस्वन्तः पुरुष ऽआविवेशे'ति ॥ १५ ॥ एतस्यामुक्तायामुत्थाय । सदसोऽधि प्प्राञ्चो यजमानमब्भ्यायन्त्यग्ग्रेण हविर्द्धाने ऽआसीनमेत्त्य यथायतनम्परर्य्युपविशन्ति ॥ १६ ॥ स होता-द्ध्वर्य्युम्पृच्छति । 'का स्विदासीत्पूर्वचित्ति'रिति तम्प्रत्याह 'द्यौरासीत्पूर्वचित्ति'रिति ॥ १७ ॥ अथाद्ध्वर्य्युर्होतारम्पृच्छ-ति । 'का[11] ऽईमरे पिशङ्गिले'ति तम्प्रत्याहा'जारे[12] पिशङ्गि-ले'ति ॥ १८ ॥ अथ ब्ब्रह्मोद्गातारम्पृच्छति । 'कस्य[13]

---

(१) शु० य० सं० २३.४५। (२) शु० य० सं० २३.४६। (३) शु० य० सं० २३.४७। (४) शु० य० सं० २३.४८। (५) शु० य० सं० २३.४९। (६) शु० य० सं० २३.५०। (७) शु० य० सं० २३.५१। (८) शु० य० सं० २३.५२। (९) शु० य० सं० २३.५३। (१०) शु० य० सं० २३.५४। (११) शु० य० सं० २३.५५। (१२) शु० य० सं० २३.५६। (१३) शु० य० सं० २३.५७।

विष्ट्वाः कत्यक्षराणी'ति तम्प्रत्याह 'षडस्य विष्ट्वाः शतमक्षराणी'ति ॥ १९ ॥ अथोद्गाता ब्रह्माणम्पृच्छति । 'को ऽअस्य वेद भुवनस्य नाभि'मिति तम्प्रत्याह 'वेदाहमस्य भुवनस्य नाभि'मिति ॥ २० ॥ अथाध्वर्युं यजमानः पृच्छति । 'पृच्छामि त्वा परमन्तम्पृथिव्या' ऽइति तम्प्रत्याहे'यं वेदिः परो ऽअन्तः पृथिव्या' ऽइति ॥ २१ ॥ सर्वाप्तिर्वा ऽएषा वाचः । यद्ब्रह्मोद्यꣳ सर्वे कामा ऽअश्वमेधे सर्वया वाचा सर्वान्कामानाप्नवामेति ॥ २२ ॥ उदिते ब्रह्मोद्ये । प्रपद्याध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यम्महिमानङ्गृह्णाति तस्य पुरोरु'ग्घिरण्यगर्भः समवर्त्तताग्र' ऽइत्यथास्य पुरोऽनुवाक्या 'सुंभूः स्वयम्भूः प्रथम' ऽइति 'होता यक्षत्प्रजापति'मिति प्रैषः 'प्रजापते न त्वदेतान्न्यन्य' ऽइति होता यजति वषट्कृते जुहोति 'यस्तेऽहन्त्सँवत्सरे महिमा सम्बभूवे'ति नानुवषट्करोति सर्वहुतꣳ हि जुहोति ॥ २३ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ वपाहोमः ]

अथातो वपानाꣳ होमः । नानैव चरेयुरा वैश्वदेवस्य वपायै वैश्वदेवस्य वपायाꣳ हुतायान्तदन्वितरा

(१) शु० य० सं० २३. ५८. । (२) शु० य० सं० २३. ५९ । (३) शु० य० २३. ६० । (४) शु० य० सं० २३. ६१ । (५) शु० य० सं० २३. ६२ । (६) शु० य० सं० २३. १ । (७) शु० य० सं० २३. ६३ । (८) शु० य० सं० २३. ६४ । (९) शु० य० सं० २३. ६५ । (१०) शु० य० सं० २३. २

जुहुयुरिति ह स्माह सत्यकामो जाबालो विश्वे वै सर्वे देवास्तदेनान्यथादेवतम्प्रीणातीति ॥ १ ॥ ऐन्द्राग्नस्य वपायाᳬं हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माहतुः सौमापौ मानुतन्तव्याविन्द्राग्नी वै सर्वे देवास्तदुवैनान्न्यथादेवतम्प्रीणातीति ॥ २ ॥ कायस्य वपायाᳬं हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माह शैलालिः प्रजापतिर्वै कः प्रजापतिमु वा ऽअनु सर्वे देवास्तदुवैनान्न्यथादेवतम्प्रीणातीति ॥ ३ ॥ एकविᳬशतिश्चातुर्म्मास्यदेवता ऽअनुद्रुत्य । एकविᳬशतिधा कृत्वा प्रचरेयुरिति ह स्माह भाल्लवेय ऽएतावन्तो वै सर्वे देवा यावत्यश्चातुर्म्मास्यदेवतास्तदुवैनान्न्यथादेवतम्प्रीणातीति ॥ ४ ॥ नानेव चरेयुः । इतीन्द्रोतः शौनकः किमुत स्वरैरँस्तदुवैनान्न्यथादेवतम्प्रीणातीत्येतदुह तेषां वचोऽन्न्या त्वेवात स्थितिः ॥ ५ ॥ अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः सकृद्देवदेवत्याभिस्तदुवैनान्न्यथादेवतम्प्रीणात्यञ्जसा यज्ञस्य सᳬंस्थामुपैति न ह्वलतीति ॥ ६ ॥ हुतासु वपासु । प्रपद्याद्ध्वर्यु रजतेन पात्रेण प्राजापत्यम्महिमानमुत्तरङ्गृह्णाति तस्य पुरोरुग्ग्यः [१]प्राणतो निमिषतो महित्वे’ति विपर्य्यस्ते याज्यानुवाक्ये ऽअयातयामताया ऽएष ऽएव प्रैषो वषट्कृते जुहोति ‘[२]यस्ते रात्रौ सँवत्सरे महिमा सम्बभूवे’ति नानुवषट्करोति तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ नान्येषाम्पशूनान्तेदन्न्या ऽअवद्यन्ति । अवद्यन्त्यश्वस्य

(१) शु० य० सं० २३. ३। (२) शु० य० सं० २३. ४।

दक्षिणतोऽन्न्येषाम्पशूनामवघ्नन्त्युत्तरतोऽश्वस्य प्लक्षशाखास्वन्न्येषाम्पशूनामवघ्नन्ति वेतसशाखास्वश्वस्य ॥ ८ ॥ तदु होवाच सात्ययज्ञिः । इतरथैव कुर्य्युः पथ ऽएव नापोदित्यमिति पूर्वा त्वेव स्थितिरुक्क्थ्यो यज्ञस्तेनान्तरिक्षलोकमृद्ध्नोति सर्वस्तोमोऽतिरात्र ऽउत्तममहर्ब्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ९ ॥ तस्य त्रिवृद्बहिष्पवमानम् * । पञ्चदशान्न्याज्यानि सप्तदशो माद्ध्यन्दिनः पवमान ऽएकविꣳशानि पृष्ठानि त्रिणवस्तृतीयः पवमानस्त्रयस्त्रिꣳशमग्निष्टोमसामैकविꣳशान्न्युक्क्थान्न्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिर्य्यद्द्वितीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छत्रमतिरात्रो यज्ञस्तेनामुँल्लोकमृद्ध्नोति ॥ १० ॥ एकविꣳशतिः सवनीयाः पशवः । सर्वं ऽआग्नेयास्तेषाꣳ समानङ्कर्म्मेत्यु हैक ऽआहुश्चतुर्विꣳशतिन्त्वेवैतान्न्गव्व्यानालभेत द्वादशभ्यो देवताभ्यो द्वादश मासाः सँवत्सरः सर्वꣳ सँवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥ †

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—०—

* सामगानामुत्तरार्चिके तृचात्मकानि सूक्तान्याम्नातानि ( साम० उ० १. १. १–९ )। तत्र 'उपास्मै' इत्याद्यं सूक्तम् । 'दविद्युतत्या' इति द्वितीयम् । 'पवमानस्य ते' इति तृतीयम् । प्रातःस्वनानुष्ठाने तेषु त्रिषु सूक्तेषु यावत्रं साम गीयते । तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते । तत्र स्थितानामृचां पवमानार्थत्वाद्बहिःसम्बन्धाच्च ।

† शतम् ६७०० ।

[ प्रत्यृतु पश्वालम्भः ]

एतेन हेन्द्रोतो दैवापः शौनकः । जनमेजयम्पारिक्षितं य्याजयाञ्चकार तेनेष्ट्वा सर्व्वाम्पापकृत्याᳬं सर्व्वाम्ब्रह्महत्यामपजघान सर्व्वाᳬं ह वै पापकृत्याᳬं सर्व्वाम्ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते ॥ १ ॥ तदेतद्गाथयाभिगीतम् । आसन्दीवति धान्न्यादुᳬ रुक्मिमणᳬ हरितस्रजम् ॥ अबध्नादश्वᳬ सारङ्गन्देवेभ्यो जनमेजय ऽइति ॥ २ ॥ एते ऽएव पूर्वे ऽअहनी । ज्योतिरतिरात्रस्तेन भीमसेनमेते ऽएव पूर्वे ऽअहनी गौरतिरात्रस्तेनोग्ग्रसेनमेते ऽएव पूर्वे ऽअहनी ऽआयुरतिरात्रस्तेन श्रुतसेनमित्येते पारिक्षितीयास्तदेतद्गाथयाभिगीतम्पारिक्षिता यजमाना ऽअश्वमेधैᳬ परोऽवरम् ॥ अजहुᳬ कर्म्म पापकम्पुण्ण्याᳬ पुण्ण्येन कर्म्मणेति ॥ ३ ॥ एते ऽएव पूर्वे ऽअहनी । अभिजिदतिरात्रस्तेन ह पर ऽआट्णार ऽईजे कौसल्ल्यो राजा तदेतद्गाथयाभिगीतमट्णारस्य परᳬ पुत्रोऽश्वम्मेध्यमबन्धयत् ॥ हैरण्ण्यनाभᳬ कौसल्ल्यो दिशᳬ पूर्णा अमᳬहतेति ॥ ४ ॥ एते ऽएव पूर्वे ऽअहनी । विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्ग्गहेणेज ऽऐक्ष्वाको राजा तस्मादेतदृषिणाभ्यनूक्त'मस्माकमत्र पितरस्त ऽआसन्त्सप्त ऽऋषयो दौर्ग्गहे बध्यमान' ऽइति ॥ ५ ॥ एते ऽएव पूर्वे ऽअहनी । महाव्रतमतिरात्रस्तेन ह मरुत्त ऽआविक्षित ऽईज ऽआयोगवो राजा तस्य ह ततो मरुतᳬ परिवेष्टारोऽग्निᳬ क्षत्ता विश्वे देवाᳬ

(१) ऋ० सं० ३. ७. १८ ।

सभासदो बभूवुस्तदेतद्गाथयाभिगीतम्मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे ॥ आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासद ऽइति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते ॥ ६ ॥ एते ऽएव पूर्वे ऽअहनी । अप्तोर्यामोऽतिरात्रस्तेन हैतेन क्रैव्य ऽईजे पाञ्चालो राजा क्रिवय ऽइति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाभिगीतमश्वम्मेध्य-मालभत क्रिवीणामतिपूरुषः ॥ पाञ्चालः परिवक्रायाᳪं सहस्रशतदक्षिणमिति ॥ ७ ॥ अथ द्वितीयया । सहस्रमास-न्नयुता शता च पञ्चविᳪंशतिः ॥ दिक्कोदिक्कः पञ्चालाना-म्ब्राह्मणा या विभेजिर ऽइति ॥ ८ ॥ त्रिवृदग्निष्टोमः । पञ्चदश ऽउक्थ्यः सप्तदशन्तृतीयमहः सोक्थकमेकविᳪं-शः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरित्येषोऽनुष्टुप्सरूप-स्तेन हैतेन ध्वसा द्वैतवन ऽईजे मात्स्यो राजा यत्रैत-द्द्वैतवनᳪं सरस्तदेतद्गाथयाभिगीतञ्चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयान् ॥ इन्द्राय वृत्रघ्नेऽबध्नात्तस्माद्द्वैतवनᳪं सर ऽइति ॥ ९ ॥ चतुर्विᳪंशाः पवमानाः । त्रिवृदभ्या-वर्त्तश्चतुश्चत्वारिᳪंशाः पवमाना ऽएकविᳪंशमभ्यावर्त्तम-ष्टाचत्वारिᳪंशाः पवमानास्त्रयस्त्रिᳪंशमभ्यावर्त्तमाग्निष्टोम-सामाद्द्वात्रिᳪंशान्युक्थान्येकविᳪंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति ॥ १० ॥ एतद्विष्णोः क्रान्तम् । तेन हैतेन भरतो दौःषन्तिरीजे तेनेष्ट्वेमां व्यष्टिं व्यानशे येयम्भरतानान्तदेतद्गाथयाभिगीतमष्टासप्ततिम्भरतो दौः-

षन्तिरुर्यमुनामनु ॥ गङ्गायां व्वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतꣳ हयानिति ॥ ११ ॥ अथ द्वितीयया । त्रयस्त्रिꣳशꣳ शतꣳ राजाऽश्वान्बद्ध्वाय मेध्यान् ॥ सौद्युम्निरत्यष्ठादन्न्यानमायान्मायवत्तर ऽइति ॥ १२ ॥ अथ तृतीयया । शकुन्तला नाडपित्यप्सरा भरतन्दधे ॥ परꣳ सहस्रानिन्द्रायाश्वान्मेध्यान्य ऽआहरद्विजित्य पृथिवीꣳ सर्वामिति ॥ १३ ॥ अथ चतुर्थ्या । महदद्य भरतस्य न पूर्वे नापरे जनाः ॥ दिवम्मर्त्य ऽइव बाहुब्भ्यान्नोदापुः पञ्च मानवा ऽइति ॥१४॥ एकविꣳशस्तोमेन ऽऋषभो याज्ञतुर ऽईजे श्विक्नानाꣳ राजा तदेतद्गाथयाभिगीतं य्याज्ञतुरे यजमाने ब्ब्रह्माण ऽऋषभे जनाः ॥ अश्वमेधे धनँल्लब्ध्वा व्विभजन्ते स्म दक्षिणा ऽइति ॥ १५ ॥ त्रयस्त्रिꣳशस्तोमेन । शोणः सात्रासाह ऽईजे पाञ्चालो राजा तदेतद्गाथयाभिगीतꣳ सात्रासाहे यजमानेऽश्वमेधेन तौर्वशाः ॥ उदीरते त्रयस्त्रिꣳशाः षट् सहस्राणि व्वर्म्मिणामिति ॥ १६ ॥ अथ द्वितीयया । षट् षट् षड्ढा सहस्राणि यज्ञे कोकपितुस्तव ॥ उदीरते त्रयस्त्रिꣳशाः षट् सहस्राणि व्वर्म्मिणामिति ॥ १७॥ अथ तृतीयया । सात्रासाहे[2] यजमाने पाञ्चाले राज्ञि सुस्रजि ॥ अमाद्यदिन्द्रः सोमेनातृप्यन्ब्राह्मणा धनैरिति ॥ १८ ॥ गोविनतेन शतानीकः । सात्राजित ऽईजे काश्यस्याश्वमादाय ततो हैतदर्वाक्काशयोऽग्नीन्नादधत ऽआत्तसोमपीथाः स्म ऽइति वदन्तः ॥ १९ ॥ तस्य विधा चतुर्विꣳशाः पव-

( १-२ ) 'सात्रासहे' इति 'ग' 'ज' पुस्तकयोः पाठः ।

मानाः । त्रिवृदभ्यावर्त्तश्चतुश्चत्वारिꣳशाः पवमाना ऽएक-विꣳशान्याज्यानि तृणवान्न्युक्क्थान्न्येकविꣳशानि पृष्ठानि षट्त्रिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाग्निष्टोमसामादेकविꣳशान्न्युक्क्थान्न्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ २० ॥ तदेतद्गाथयाभिगीतम् । शतानीकꣳ समन्तासु मेद्ध्यꣳ सात्राजितो हयम् ॥ आदत्त यज्ञङ्काशीनाम्भरतः सत्त्वतामिवेति ॥ २१ ॥ अथ द्वितीयया । श्वेतꣳ समन्तासु वशञ्चरन्तꣳ शतानीको धृतराष्ट्रस्य मेद्ध्यम् ॥ आदाय सह्वा दशमास्यमश्वꣳ शतानीको गोविनतेन हेज ऽइति ॥ २२ ॥ अथ चतुर्त्थ्या । महदद्य भरतानान्न पूर्वे नापरे जनाः ॥ दिवम्मर्त्य ऽइव पक्षाभ्यान्नोदापुः सप्त मानवा ऽइति ॥ २३ ॥ अथातो दक्षिणानाम् । मद्ध्यम्प्राति राष्ट्रस्य यदन्न्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्प्रतीच्च्यद्ध्वर्य्योरुदीच्च्युद्गातुस्तदेव होतृका ऽअन्न्वाभक्ताः ॥ २४ ॥ उदयनीयायाꣳ सꣳस्थितायाम् । एकविꣳशतिं वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्वैश्वदेवीर्ब्बार्हस्पत्त्या ऽएतासान्देवतानामाप्प्त्यै तद्यद्बार्हस्पत्त्या ऽअन्त्या भवन्ति ब्रह्म वै बृहस्प्पतिस्तदु ब्रह्मण्ण्येवान्ततः प्प्रातितिष्ठति ॥ २५ ॥ अथ यदेकविꣳशतिर्भवन्ति । एकविꣳशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्च ऽर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्त्य ऽएकविꣳश ऽएतामभिसम्पदम् ॥ २६ ॥ उदवसानीयायाꣳ

(१) 'ग' 'ज' पुस्तकयोः "०स्पत्यान्त्या" इति पाठः ।

सꣳस्थितायाम् *। चतस्रश्च जायाः कुमारीम्पञ्चमीञ्चत्वारि च शतान्न्यनुचरीणां ऽयथासमुदितन्दक्षिणान्ददाति ॥ २७ ॥ अथोत्तरꣳ सँव्वत्सरमृतुपशुभिर्यजते† । षड्भिराग्नेयैर्वसन्ते षड्भिरैन्द्रैर्ग्रीष्मे षड्भिः पार्जन्न्यैर्वा मारुतैर्वा वर्षासु षड्भिर्म्मैत्रावरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षडृतवः सँव्वत्सर ऽऋतुष्ष्वेव सँव्वत्सरे प्प्रतितिष्ठति षट्त्रिꣳशदेते पशवो भवन्ति षट्त्रिꣳशदक्षरा बृहती बृहत्त्यामधि स्वर्ग्गो लोकः प्प्रतिष्ठितस्तद्यन्ततो बृहत्त्यैव च्छन्दसा स्वर्ग्गे लोके प्प्रतितिष्ठति ॥२८॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥ १०६ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

—०—

[ पुरुषमेधः ]

पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयꣳ सर्वाणि भूतान्न्यहमेवेदꣳ सर्व्वꣳ स्यामिति स ऽएतम्पुरुषमेधम्पञ्चरात्रं ऽयज्ञक्क्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवदुतितिष्ठति सर्वाणि भूतानीदꣳ सर्वम्भवति य ऽएवं विद्वान्पुरुषमेधेन यजते यो वैतदेवं वेद ॥ १ ॥ तस्य त्रयोविꣳशतिर्दीक्षाः ‡ । द्वा-

* 'उदवसानीयान्ते भार्या ददाति यथासंवादꣳ सानुचरीः' (का० श्रौ०सू०२०.८.२४) इति।

† तथा च सूत्रितं कात्यायनमहर्षिणा 'प्रत्यृतु पशूनालभते षद् षड् वसन्तायाग्नेयानैन्द्रान्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्राबार्हस्पत्यान्' ( का० श्रौ० सू० २०. ८. ३० ) इति ।

‡ 'पुरुषमेधस्त्रयोविꣳशतिदीक्षोऽतिष्ठाकामस्य' ( का० श्रौ० सू० २१. १. १ ) इति ।

दशोपसदः पञ्च सुत्याः स ऽएष चत्वारिꣳशद्रात्रः सदीक्षोपसत्कश्चत्वारिꣳशदक्षरा विराट् तद्विराजमभिसम्पद्यते '[1]ततो विराडजायत विराजो ऽअधि पूरुष' ऽइत्येषा वै सा विराडेतस्या ऽएवैतद्विराजो यज्ञम्पुरुषञ्जनयति ॥ २ ॥ ता वा ऽएताः । चतस्रो दशतो भवन्ति तद्यदेताश्चतस्रो दशतो भवन्त्येषाञ्चैव लोकानामाप्त्यै दिशाञ्चेममेव लोकम्प्रथमया दशताप्नुवन्नन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्या तथैवैतद्यजमान ऽइममेव लोकम्प्रथमया दशताप्नोत्यन्तरिक्षन्द्वितीयया दिवन्तृतीयया दिशश्चतुर्थ्यैतावद्वा ऽइदꣳ सर्वं यावदिमे च लोका दिशश्च सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ३ ॥ एकादशाग्नीषोमीयाः[2] † पशव ऽउपवसथे । तेषाꣳ समानङ्कर्मैकादश यूपा ऽएकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ४ ॥ ऐकादशिनाः सुत्यासु पशवो भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ ५ ॥ सꣳहैवैकादशिना भवन्ति । एकादशिनी वा ऽइदꣳ सर्वम्प्रजापतिर्ह्येकादशिनी सर्वꣳ हि प्रजापतिः सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥ स वा ऽएष पुरुषमेधः पञ्चरात्रो यज्ञ-

---

(१) शु० य० सं० ३१. ५।

(२) 'ग' 'ज' पुस्तकयोः "एकादशाग्निषोमीयाः" इति पाठो दृश्यते, स तु प्रामादिक एव, 'ईदग्नेः सोमवरुणयोः' (पा० ६. ३. २७) इति सूत्रेण—ईद्विधानात् ।

† का० श्रौ० सू० २१. १. ५।

क्तुर्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँव-त्सरो यत्किञ्च पञ्चविधमधिदेवतमध्यात्मन्तदेनेन सर्व्व-माप्नोति ॥ ७ ॥ तस्याग्निष्टोमः प्प्रथममहर्भवति । अथोक्थ्योऽथातिरात्रोऽथोक्थ्योऽथाग्निष्टोमः स वा ऽएष ऽउभयतोज्योतिरुभयतऽउक्थ्यः ॥ ८ ॥ यवमध्यः पञ्चरात्रो भवति । इमे वै लोकाः पुरुषमेध ऽउभयतो-ज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदित्येनामुतस्त-स्म्मादुभयतोज्योतिरन्नमुक्थ्य ऽआत्मातिरात्रस्तद्यदेता ऽउ-क्थ्यावतिरात्रमभितो भवतस्तस्म्मादयमात्मान्नेन परि-वृढोऽथ यदेष वर्षिष्ठोऽतिरात्रोऽह्नाथं स मध्ये तस्म्मा-द्यवमध्यो युते ह वै द्विषन्तम्भ्रातृव्यमयमेवास्ति नास्य द्विषन्भ्रातृव्य ऽइत्याहुर्य्य ऽएवं वेद ॥ ९ ॥ तस्याय-मेव लोकः प्प्रथममहः । अयमस्य लोको वसन्त ऽऋ-तुर्य्यदूर्द्ध्वमस्म्माल्लोकादर्वाचीनमन्तरिक्षात्तद्द्वितीयमहस्तद्वस्य ग्ग्रीष्म्म ऽऋतुरन्तरिक्षमेवास्य मध्यममहरन्तरिक्षमस्य वर्षाशरदावृतू यदूर्द्ध्वमन्तरिक्षादर्वाचीनन्दिवस्तच्चतुर्त्थमह-स्तद्वस्य हेमन्त ऽऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिशिर ऽऋतुरित्यधिदेवतम् ॥ १० ॥ अथाध्यात्मम् । प्रतिष्ठै-वास्य प्प्रथममहः प्प्रतिष्ठो ऽअस्य वसन्त ऽऋतुर्य्यदूर्द्ध्व-म्प्रतिष्ठाया ऽअवाचीनम्मध्यात्तद्द्वितीयमहस्तद्वस्य ग्ग्रीष्म्म ऽऋतुर्म्मध्यमेवास्य मध्यममहर्म्मध्यमस्य वर्षाशरदावृतू यदूर्द्ध्वम्मध्यादवाचीनः शीर्ष्णस्तच्चतुर्त्थमहस्तद्वस्य हेमन्त ऽऋतुः शिर ऽएवास्य पञ्चममहः शिरोऽस्य शिशिर ऽऋतु-

रेवमिमे च लोकाः सँवत्सरश्चात्मा च पुरुषमेधमभिसम्पद्यन्ते सर्वं वा ऽइमे लोकाः सर्वꣳ सँवत्सरः सर्वमात्मा सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ ब्राह्मणादीनामष्टाचत्वारिंशत्संख्यकानामग्निष्ठे यूपे नियोजनादि ]

अथ यस्म्मात्पुरुषमेधो नाम । इमे वै लोकाः पूरयमेव पुरुषो योऽयम्पवते सोऽस्याम्पुरि शेते तस्म्मात्पुरुषस्तस्य यदेषु लोकेष्वन्नन्तदस्यान्नम्मेधस्तद्यदस्यैतदन्नम्मेधस्तस्म्मात्पुरुषमेधोऽथो यदस्मिन्मेध्यान्पुरुषानालभते तस्म्माद्वेव पुरुषमेधः ॥ १ ॥ तान्वै मध्यमेऽहन्नालभते । अन्तरिक्षं वै मध्यममहरन्तरिक्षमु वै सर्वेषाम्भूतानामायतनमथो ऽअन्नं वा ऽएते पशव ऽउदरम्मध्यममहरुदरे तदन्नन्दधाति ॥ २ ॥ तान्वै दश दशालभते । दशाक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै ॥ ३ ॥ एकादश दशत ऽआलभते । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्प्मानमपहते ॥ ४ ॥ अष्टाचत्वारिꣳशतम्मध्यमे यूप ऽआलभते । अष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्म्मै पशूनवरुन्द्धे ॥५॥ एकादशैकादशेतरेषु । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्प्मानमपहते ॥ ६ ॥ अष्टा ऽउत्तमानालभते । अष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मैवैतदस्य

सर्व्वस्योत्तमङ्करोति तस्म्माद्ब्रह्मास्य सर्व्वस्योत्तममित्त्याहुः ॥ ७ ॥ ते वै प्प्राजापत्त्या भवन्ति। ब्ब्रह्म वै प्प्रजापति-र्ब्ब्राह्मो हि प्प्रजापतिस्तस्म्मात्प्राजापत्त्या भवन्ति ॥ ८ ॥ स वै पशूनुपाकरिष्ष्यन् *। एतास्तिस्रः सावित्त्री-राहुतीर्ज्जुहोति 'देव सवितस्तत्सवितुर्व्वरेण्ण्यं व्विश्श्वानि देव सवित'रिति सवितारम्प्रीणाति सोऽस्म्मै प्प्रीत ऽएतान्पु-रुषान्प्रसौति तेन प्प्रसूतानालभते ॥ ९ ॥ ब्रह्मणे ब्ब्राह्म-णमालभते। ब्ब्रह्म वै ब्ब्राह्मणो ब्ब्रह्मैव तद्ब्रह्मणा समर्द्ध-यति क्षत्त्राय राजन्न्यं क्षत्त्रं व्वै राजन्न्यः क्षत्त्रमेव तत्क्षत्त्रेण समर्द्धयति मरुद्भ्यो व्वैश्श्यं व्विशो वै मरुतो व्विशमेव तद्विशा समर्द्धयति तपसे शूद्रन्तपो वै शूद्रस्तप ऽएव तत्त-पसा समर्द्धयत्त्येवमेता देवता यथारूपम्पशुभिः समर्द्धयति ता ऽएनꣳ समृद्धाः समर्द्धयन्ति सर्व्वैः कामैः ॥ १० ॥ आज्येन जुहोति। तेजो वा ऽआज्यन्तेजसैवास्म्मिँस्त-त्तेजो दधात्त्याज्ज्येन जुहोत्त्येतद्वै देवानाम्प्रियन्धाम यदाज्ज्य-म्प्रियेणैवैनान्धाम्म्ना समर्द्धयति त ऽएनꣳ समृद्धाः सम-र्द्धयन्ति सर्व्वैः कामैः ॥ ११ ॥ नियुक्तान्पुरुषान्। ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपा'दित्त्येतेन षोडशर्च्चेन षोडशकलं व्वा ऽइदꣳ सर्व्वꣳ सर्व्वम्पुरुषमेधः सर्व्वस्याप्त्यै सर्व्वस्यावरुद्ध्या ऽइत्थमसी-त्थमसीत्त्युपस्तौत्त्येवैनमेतन्महयत्त्येवाथो यथैष तथैनमेतदाह

* 'पशूनुपाकरिष्यन्नतिरात्रेण देव सवितरिति प्रत्यृचं जुहोति' ( का० श्रौ० सू० २१. १. ६ ) इति।

( १ ) शु० य० सं० ३०। १-३। ( २ ) शु० य० सं० ३१. १।

तत्पर्य्यग्निकृताः पशवो बभूवुरसंज्ञप्ताः ॥ १२ ॥ अथ हैनं वागभ्युवाद । पुरुष मा सन्तिष्ठिपो यदि सꣳस्थापयिष्यसि पुरुष ऽएव पुरुषमत्स्यतीति तान्पर्य्यग्निकृतानेवोदसृजत्तद्देवत्या ऽआहुतीरजुहोत्ताभिस्ता देवता ऽअप्रीणात्ता ऽएनम्प्रीता ऽअप्रीणन्त्सर्वैः कामैः ॥ १३ ॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधाति ॥ १४ ॥ ऐकादशिनैः सꣳस्थापयति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानो मध्यतः पाप्मानमपहते ॥ १५ ॥ उदयनीयायाꣳ सꣳस्थितायाम् । एकादश वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या ऽएतासान्देवतानामाप्त्यै तद्यद्बार्हस्पत्या ऽअन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्येवान्ततः प्रतितिष्ठति ॥ १६ ॥ अथ यदेकादश भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानोऽन्ततः पाप्मानमपहते त्रेधा- तव्युदवसानीयासावेव बन्धुः ॥ १७ ॥ अथातो दक्षिणानाम् । मध्यम्प्रति राष्ट्रस्य यदन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्सपुरुषम्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्य्योरुदीच्युद्गातुस्तदेव होतृका ऽअन्वाभक्ताः ॥१८॥ अथ यदि ब्राह्मणो यजेत । सर्ववेदसन्दद्यात्सर्वं वै ब्राह्मणः सर्वꣳ सर्ववेदसꣳ सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

(१) 'ग' 'ज' पुस्तकयोः "मध्यतः" इति पाठः ।

॥१९॥ अथात्मन्नग्नी समारोह्य *। उत्तरनारायणेनादित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्प्रेयात्तदेव मनुष्येभ्यस्तिरो भवति यद्यु ग्रामे व्विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्यमुपस्थाय[1] गृहेषु प्प्रत्यवस्येदथ तान्यज्ञक्रतूनाहरेत यानभ्याप्प्नुयात्स वा ऽएष न सर्वस्म्मा ऽअनुवक्तव्यः सर्वꣳ हि पुरुषमेधो नेत्सर्वस्म्मा ऽइव सर्वम्ब्रवाणीति यो न्न्वेव ज्ञातस्तस्म्मै ब्ब्रूयादथ योऽनूचानोऽथ योऽस्य प्प्रियः स्यान्नेत्त्वेव सर्वस्म्मा ऽइव ॥ २० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

[ सर्वमेधः ]

ब्रह्म वै स्वयम्भु तपोऽतप्प्यत। तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहम्भूतेष्ष्वात्मानञ्जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्ष्वात्मानꣳ हुत्वा भूतानि चात्मनि सर्वेषाम्भूतानाꣳ श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यम्पर्य्यैत्तथैवैतद्यजमानः सर्वमेधे सर्वान्म्मेधान्हुत्वा [2]सर्वेषाम्भूतानाꣳ

---

* का० श्रौ० सू० २१. १. १७। 'गार्हपत्येऽधरारणिमनुप्रहृत्याहवनीय - उत्तरारणिमात्मन्यग्नी समारोप्यारण्यं व्रजेत्' इति शाङ्खायनोक्तिः। तथा च मनुः 'आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' ( मनु० ६. ३८ ) इति।

'त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्यवेयात्' 'ग्रामे वा विवत्सन्नरण्योः' ( का० श्रौ० सू० २१। १। १७–१८ ) इति कात्यायनोक्तिः।

( १ ) "अद्भ्यः सम्भृतः" इत्यादिषण्णां कण्डिकानामुत्तरनारायणमिति संज्ञा।

( २ ) 'ग' 'ज' पुस्तकयोः 'सर्व्वेषाम्भूतानाम्' इत्यस्य स्थाने 'सर्व्वाणि भूतानि' इति पाठः समुपलभ्यते।

श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यम्पर्य्येति ॥ १ ॥ स वा ऽएष सर्व्वमेधो दशरात्रो यज्ञक्क्रतुर्ब्भवति । दशाक्षरा व्विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नग्निम्पराद्ध्यꣳश्चिनोति परमो वा ऽएष यज्ञक्क्रतूनां यत्सर्व्वमेधः परमेणैवैनम्परमताङ्गमयति ॥ २ ॥ तस्याग्निष्टुदग्निष्टोमः प्प्रथममहर्ब्भवति । अग्निर्व्वा ऽअग्निष्टुदग्निष्टोमोऽग्निमुखा ऽउ वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्प्त्यै तस्याग्नेया ग्ग्रहा भवन्त्याग्ग्नेय्यः पुरोरुचः सर्व्वमाग्नेयमसदिति ॥ ३ ॥ इन्द्रस्तुदुक्क्थ्यो द्वितीयमहर्ब्भवति । इन्द्रो वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्प्त्यै तस्यैन्द्रा ग्ग्रहा भवन्त्यैन्द्र्यः पुरोरुचः सर्व्वमैन्द्रमसदिति ॥ ४ ॥ सूर्य्यस्तुदुक्क्थ्यस्तृतीयमहर्ब्भवति । सूर्य्यो वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्प्त्यै तस्य सौर्य्या ग्ग्रहा भवन्ति सौर्य्यः पुरोरुचः सर्व्वꣳ सौर्य्यमसदिति ॥ ५ ॥ वैश्वदेवश्चतुर्त्थमहर्ब्भवति । व्विश्वे वै सर्व्वे देवाः सर्व्वेषान्देवानामाप्प्त्यै तस्य वैश्वदेवा ग्ग्रहा भवन्ति वैश्वदेव्यः पुरोरुचः सर्व्वं वैश्वदेवमसदिति ॥ ६ ॥ आश्वमेधिकम्मद्ध्यमम्पञ्चममहर्ब्भवति । तस्मिन्नश्वम्मेद्ध्यमालभतेऽश्वमेधस्यैवाप्प्त्यै ॥ ७ ॥ पौरुषमेधिकम्मद्ध्यमꣳ षष्ठमहर्ब्भवति । तस्मिन्नमेद्ध्यान्पुरुषानालभते पुरुषमेधस्यैवाप्प्त्यै ॥ ८ ॥ अप्तोर्य्यामः सप्तममहर्ब्भवति । सर्व्वेषां यज्ञक्क्रतूनामाप्प्त्यै तस्मिन्त्सर्व्वान्मेद्ध्यानालभते यच्च प्प्राणि यच्चाप्प्राणं व्वपा व्वपावताञ्जुहोति

(१-१) 'ग' 'ज' पुस्तकयोः 'तस्य' इति पाठो नोपलभ्यते ।

त्वच ऽउत्कर्त्तमवपाकानाथ्ठं संब्भ्रश्चमोषधिवनस्पतीनाम्प्र-
किरन्ति शुष्काणाञ्चार्द्राणाञ्चान्नमन्नञ्जुहोत्यन्नस्यान्नस्याप्त्यै
सर्वञ्जुहोति सर्वस्मै जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै
प्प्रातःसवने हुतासु वपास्वेवमेव तृतीयसवने हुतेषु
हविःषु ॥ ९ ॥ त्रिणवमष्टममहर्ब्भवति । वज्रो वै त्रिणवो
वज्रेण खलु वै क्षत्रथ्ठं स्पृतन्तद्वज्रेणैव क्षत्रथ्ठं स्पृणोति
॥ १० ॥ त्रयस्त्रिंशन्नवममहर्ब्भवति । प्प्रतिष्ठा वै त्रय-
स्त्रिंशः प्प्रतिष्ठित्यै ॥ ११ ॥ विश्वजित्सर्वपृष्ठोऽति-
रात्रो दशममहर्ब्भवति । सर्वं वै विश्वजित्सर्वपृष्ठोऽति-
रात्रः सर्वंं सर्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १२ ॥
अथातो दक्षिणानाम् । मद्ध्यम्प्रति राष्ट्रस्य यदन्यद्ब्रा-
ह्मणस्य वित्तात्सभूमि सपुरुषम्प्राची दिग्घोतुर्द्दक्षिणा
ब्ब्रह्मणः प्प्रतीच्यद्ध्वर्य्योरुदीच्युद्गातुस्तदेव होतृका
ऽअन्वाभक्ताः ॥ १३ ॥ तेन हैतेन विश्वकर्म्मा भौवन
ऽईजे । तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदंं सर्वमभवदति-
तिष्ठति सर्वाणि भूतानीदंं सर्वम्भवति य ऽएवं विद्वा-
न्त्सर्वमेधेन यजते यो वैतदेवं वेद ॥ १४ ॥ तंं ह कश्यपो
याजयाञ्चकार । तदपि भूमिः श्लोकञ्जगौ न मा मर्त्यः
कश्चन दातुमर्हति विश्वकर्म्मन्भौवन मन्द ऽआसिथ ॥
उपमङ्क्ष्यति स्या सलिलस्य मद्ध्ये मृषैष ते सङ्गरः
कश्यपायेति ॥ १५ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ ब्राह्मणचतुष्टयेन पितृमेधनिरूपणम् ]

* अथास्मै श्मशानङ्कुर्वन्ति । गृहान्वा प्रज्ञानं वा यो वै कश्च म्रियते स शवस्तस्मा ऽएतदन्नङ्करोति तस्माच्छवान्नꣳ शवान्नꣳ ह वै तच्छ्मशानमित्याचक्षते परोक्षꣳ श्मशा ऽउ हैव नाम पितृणामत्तारस्ते ह्यमुष्मिँल्लोकेऽकृतश्मशानस्य साधुकृत्यामुपदम्भयन्ति तेभ्य ऽएतदन्नङ्करोति तस्माच्छ्मशान्नꣳ श्मशान्नꣳ ह वै तच्छ्मशानमित्याचक्षते परोऽक्षम् ॥ १ ॥ तद्वै न क्षिप्रङ्कुर्य्यात् । नेन्नवमघङ्करवाणीति चिर ऽएव कुर्य्यादघमेव तत्तिरः करोति यत्र समा नानु चन स्मरेयुरश्रुतिमेव तदघङ्गमयति यद्यनुस्मरेयुः ॥ २ ॥ अयुक्षु सँवत्सरेषु कुर्य्यात् । अयुक्ꣳ हि पितृणामेकनक्षत्र ऽएकनक्षत्रꣳ हि पितृणाममावास्यायाममावास्या वा ऽएकनक्षत्रमेको हि यद्वेताꣳ रात्रिꣳ सर्वाणि भूतानि सँवसन्ति तेनो तङ्काममाप्नोति यः सर्वेषु नक्षत्रेषु ॥ ३ ॥ शरदि कुर्य्यात् । स्वधा वै शरत्स्वधो वै पितृणामन्नन्तदेनमन्ने स्वधायान्दधाति माघे वा मा नोऽघं भूदिति निदाघे वा नि नोऽघन्धीयाता ऽइति ॥४॥ [अर्धप्रपाठकः ॥५०॥] चतुःस्रक्ति । देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्यान्दिग्भ्योऽनुदन्त ते ऽदिक्काः पराभवँस्तस्माद्या दैव्यः प्रजा-

* अत्राध्यायारम्भे 'अथास्मै कल्याणङ्कुर्वन्ति' इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोरुपलभ्यते । स तु प्रामादिक एव प्रतीयते, प्राचीनतमहस्तलिखितपुस्तकेष्वदर्शनात् ।

श्चतुःस्रक्तीनि ताः श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यः
प्प्राच्च्यास्त्वद्ये त्वत्परिमण्डलानि तेऽनुदन्त ह्येनान्दिग्ग्भ्य
ऽउभे दिशावन्तरेण विदधाति प्प्राचीञ्च दक्षिणाञ्चैत-
स्याᳫं ह दिशि पितृलोकस्य द्वारन्द्वारैवैनम्पितृलोकम्प्रपाद-
यति स्रक्तिभिर्दिक्षु प्प्रतितिष्ठतीतरेणात्मनावान्तरदिक्षु
तदेनᳫं सर्वासु दिक्षु प्प्रतिष्ठापयति ॥ ५ ॥ अथातो
भूमिजोषणस्य । उदीचीनप्प्रवणे करोत्युदीची वै मनु-
ष्ष्याणान्दिक्तदेनम्मनुष्ष्यलोक ऽआभजत्येतद्ध वै पितरो
मनुष्ष्यलोक ऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्प्रजा
ह्यास्य श्श्रेयसी भवति ॥ ६ ॥ दक्षिणाप्प्रवणे * कुर्य्या-
दित्याहुः । दक्षिणाप्प्रवणो वै पितृलोकस्तदेनम्पितृलोक
ऽआभजतीति न तथा कुर्य्यादामीवद्ध नाम तच्छ्मशान-
करणङ्क्षिप्प्रे हैषामपरोऽनुप्प्रैति ॥ ७ ॥ दक्षिणाप्प्रवणस्य
प्प्रत्यर्षे कुर्य्यादित्यु हैक ऽआहुः । तत्प्रत्युच्छ्रितमघम्भव-
तीति नो ऽएव तथा कुर्य्याद्यद्वा ऽउदीचीनप्प्रवणे करोति
तदेव प्प्रत्युच्छ्रितमघम्भवति ॥ ८ ॥ यस्यैव समस्य सतः ।
दक्षिणतः पुरस्तादाप ऽएत्य सᳫंस्थायाप्प्रग्घ्नत्य ऽएता-
न्दिशमभिनिष्प्पद्याक्षय्या ऽअपोऽपिपद्येरँस्तत्कुर्य्यादन्नं वा
ऽआपोऽन्नाद्यमेवास्म्मा ऽएतत्पुरस्तात्प्रत्यग्ग्दधात्यमृतमु
वा ऽआप ऽएषो ह जीवानान्दिगन्तरेण सप्तऽर्षीणाञ्चो-
दयनमादित्यस्य चास्तमयनममृतमेव तज्जीवेषु दधाति
तद्धैतत्प्रतिमीवन्नाम श्मशानकरणञ्जीवेभ्यो हितं यद्वाव

* 'दक्षिणाप्रवण एके' ( का॰ श्रौ॰ सू॰ २१. ३. १७ )।

जीवेभ्यो हितन्तरिपितृभ्यः ॥ ९ ॥ कम्वति * कुर्य्यात् । कम्मेऽसदित्यथो शम्वति शम्मेऽसदिति नाधिपथङ्कुर्य्या-न्नाकाशे नेदाविरघङ्करवाणीति ॥ १० ॥ गुहा सद्वताषि स्यात् । तद्यद्गुहा भवत्यघमेव तद्गुहा करोत्यथ यद्व-ताप्यसौ वा ऽआदित्यः पाप्मनोऽपहन्ता स ऽएवास्मा-त्पाप्मानमपहन्त्यथो ऽआदित्यज्योतिषमेवैनङ्करोति ॥११॥ न तस्मिन्कुर्य्यात् । यस्येत्थादनूकाशः स्याद्याचमानꣳ ह नाम तत्क्षिप्प्रे हैषामपरोऽनुप्प्रैति ॥ १२ ॥ चित्र-म्पश्चात्स्यात् । प्रजा वै चित्रश्चित्रꣳ हास्य प्प्रजा भवति यदि चित्रन्न स्यादापः पश्चाद्वोत्तरतो वा स्युरापो ह्येव चित्रश्चित्रꣳ हैवास्य प्प्रजा भवति ॥ १३ ॥ ऊषरे करोति । रेतो वा ऽऊषाः प्प्रजननन्तदेनम्प्रजनन ऽआभ-जत्येतद्ध वै पितरः प्प्रजनन ऽआभक्ता भवन्ति यदेषा-म्प्रजा भवति प्प्रजा हास्य श्श्रेयसी भवति ॥ १४ ॥ समूले समूलꣳ हि पितृणां वीरिणमिश्श्र ऽएतद्धास्याः पिञ्यमनतिरिक्तमथो ऽअघमेव तद्बध्नु करोति ॥ १५ ॥ न भूमिपाशमभिविदध्यात् । न शरन्नाश्मगन्धान्नाध्याण्डान्न पृश्निपर्णीन्नाश्वत्थस्यान्तिकङ्कुर्य्यान्न बिभीतकस्य न तिल्व-कस्य न स्फूर्जकस्य न हरिद्रोर्न्न न्यग्ग्रोधस्य ये चान्न्ये पाप-नामानो मङ्गलोपेप्सया नाम्नामेव परिहाराय ॥ १६ ॥ अथात ऽआवृदेव । अग्निविधयाग्निचितः श्मशानङ्करोति

---

* 'शम्वति कम्वति वा' ( का० श्रौ० सू० २१. ३. २२. ) इति ।

(१) 'वीरिणमिश्रमेतद्धास्याः' इति 'ग' पुस्तके । 'वीरिणमिश्रमेतमेतद्धास्याः' इति च 'ज' पुस्तके ।

यद्वै यजमानोऽग्निञ्चिनुतेऽमुष्मै तल्लोकाय यज्ञेनात्मानꣳ संस्कुरुत ऽएतदु ह यज्ञियङ्कर्म्मासꣳस्थितमा श्मशान-करणात्तद्यदग्निविधयाग्निचितꣳ श्मशानङ्करोत्यग्निचित्यामेव तत्सꣳस्थापयति ॥१७॥ तद्वै न महत्कुर्यात् । नेन्महदघङ्कर-वाणीति यावानपक्षपुच्छोऽग्निस्तावत्कुर्यादित्यु हैक ऽआहुꣳ समानो ह्यस्यैष ऽआत्मा यथैवाग्नेस्तथेति ॥ १८ ॥ पुरुष-मात्रन्त्वेव कुर्यात् । तथापरस्मा ऽअवकाशन्न करोति पश्चाद्वरीयꣳ प्रजा वै पश्चात्प्रजामेव तद्वरीयसीङ्कुरुत ऽउत्तरतो वर्षीयꣳ प्रजा वा ऽउत्तराꣳ प्रजामेव तद्वर्षीयसी-ङ्कुरुते तद्विधायापसलविसृष्टाभि स्पन्द्याभिꣳ पर्यातनो-त्यपसलवि पित्र्यꣳ हि कर्म्म ॥ १९॥ अथोद्धन्तवा ऽआह । स यावत्येव निवप्स्यन्त्स्यात्तावदुद्धन्न्यात्पुरुषमात्रन्त्वेवो-द्धन्न्यात्तथापरस्मा ऽअवकाशन्न करोत्यथो ऽओषधिलोको वै पितर ऽओषधीनाꣳ ह मूलान्न्युपसर्प्पन्त्यथो नेदस्या ऽअन्तर्हितोऽसदिति ॥ २० ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

अन्तर्द्धायो हैके निवपन्ति । देवाश्चासुराश्चोभये प्राजापत्या ऽअस्मिँल्लोकेऽस्पर्द्धन्त ते देवा ऽअसुरान्त्स-पत्नान्भ्रातृव्व्यानस्माल्लोकादनुदन्त तस्माद्या दैव्व्यꣳ प्रजा ऽअनन्तर्हितानि ताꣳ श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यꣳ प्राच्च्यास्त्वद्ये त्वदन्तर्हितानि ते चम्वान्त्वद्य-स्मिँस्त्वत् ॥ १ ॥ अथैनत्परिश्रिद्भिꣳ परिश्रयति ।

या ऽएवामूः परिश्रितस्ता ऽएता यजुषा ताः परिश्रयति तूष्णीमिमा देवश्चैव तत्पितॄंश्च व्याकरोत्यपरिमिताभिर्परिमितो ह्यसौ लोकः ॥ २ ॥ अथैनत्पलाशशाखया व्युदूहति *। यदेवादो व्युदूहनन्तदेत'दपेतो यन्तु पणयोऽसुम्ना देवपीयव, ऽइति पणीनेवैतदसुम्नान्देवपीयूनसुररक्षसान्यस्माल्लोकादपहन्त्यस्य लोकः सुतावत' ऽइति सुतवान्हि य ऽईजानो 'द्युभिरहोभिरक्तुभिर्व्यक्त'मिति तदेनमृतुभिश्चाहोरात्रैश्च सलोकङ्करोति ॥ ३ ॥ 'यमो ददात्ववसानमस्मा' ऽइति। यमो ह वा ऽअस्यामवसानस्येष्टे तमेवास्मा ऽअस्यामवसानं याचति तान्दक्षिणोदस्यत्युदगितरान्देवश्चैव तत्पितॄंश्च व्याकरोति ॥ ४ ॥ अथ दक्षिणतः सीरं युनक्ति। उत्तरत ऽइत्यु हैक ऽआहुः स यथा कामयेत तथा कुर्याद्युङ्क्तेति सम्प्रेष्याभिमन्त्रयते 'सविता ते शरीरेभ्यः पृथिव्याँल्लोकमिच्छत्वि'ति सवितैवास्यैतच्छरीरेभ्यः पृथिव्याँल्लोकमिच्छति 'तस्मै युज्यन्तामुस्रिया' ऽइत्येतस्मा ऽउ हि कर्म्मण ऽउस्रिया युज्यन्ते ॥ ५ ॥ षड्गवम्भवति। षड्ऋतवः सँवत्सर ऽऋतुष्वेवैनमेतत्सँवत्सरे प्रतिष्ठायाम्प्रतिष्ठापयति तदपसलवि पर्य्याहृत्योत्तरतः प्रतीचीम्प्रथमाथं सीताङ्कृषति 'वायुः पुनात्वि'ति 'सविता

---

* का० श्रौ० सू० २१. १. ३१।

(१) शु० य० सं० ३५. १। (२) शु० य० सं० ३५. १। (३) शु० य० ३५. १। (४) शु० य० सं० ३५. १। (५) शु० य० सं० ३५. २। (६) शु० य० सं० ३५. २। (७) शु० य० सं० ३५. ३। (८) शु० य० सं० ३५. ३।

पुनात्विति जघनार्द्धेन दक्षिणा'ग्नेर्भ्राजस'इति दक्षिणार्द्धेन प्राचीॅ 'सूर्य्यस्य वर्चस'इत्यग्रेणोदीचीम् ॥ ६ ॥ *

चतस्रः सीता यजुषा कृषति †। तद्यच्चतसृषु दिक्ष्वन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥ ७ ॥ अथास्मानं विकृषति। तद्यदेव सँवत्सरेऽन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तूष्णीमपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ ८ ॥ अथैनद्विमुञ्चति। कृत्वा तत्कर्म्म यस्मै कर्म्मण एनद्युङ्क्ते 'विमुच्यन्तामुस्रिया' इत्येतस्मा उ हि कर्म्मण उस्रिया युज्यन्ते तद्दक्षिणोदस्यत्युदगितरद्देवश्चैव तत्पितृश्च व्याकरोति॥९॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

अथ सर्व्वौषधं वपति। यद्वेवादः सर्व्वौषधन्तदेतद्बह्वीभिस्तद्रूपत्येकयेदन्देवश्चैव तत्पितृश्च व्याकरो'त्यश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृत'इति ज्योग्जीवातुमेवैभ्य एतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्रैति ॥ १ ॥ अथैनन्निवपति। इयं वै पृथिवी प्रतिष्ठास्यामेवैनमेतत्प्रतिष्ठायाम्प्रतिष्ठापयति पुरादित्यस्योदयात्तिर इव वै पितरस्तिर इव रात्रिस्तिर एव तत्करोति यथा कुर्व्वतोऽभ्यु-

(१) शु० य० सं० ३५. ३। (२) शु० य० सं० ३५. ३

* अत्र शतम् ६८००।

† का० श्रौ० सू० २१. ४. १।

(३) शु० य० सं० ३५. ३।(४) शु० य० सं० ३५. ४।

दि्याक्तदेनमुभयोरहोरात्रयोः प्प्रतिष्ठापयति ॥२॥ 'सविता ते शरीराणि। मातुरुपस्त्थ ऽआवपत्त्वि'ति सवितैवास्यैतच्छरीराण्ण्यस्यै पृथिव्व्यै मातुरुपस्त्थ ऽआवपति 'तस्यै पृथिवि शम्भवे'ति यथैवास्स्मा ऽइयᳪ शᳪ स्यादेवमेतदाह 'प्प्रजापतौ त्त्वा देवतायामुपोदके लोके निदधाम्म्यसा'वि्विति नाम गृह्णात्त्ययं व्वै लोक ऽउपोदकस्तदेनम्प्रजापतौ देवतायामुपोदके लोके निदधाति ॥ ३ ॥ अथ कश्चिदाह। एतान्दिशमनवानन्त्स्त्वा कुम्भम्प्रक्षीयानपेक्षमाण ऽएहीति तत्र जपति 'परम्मृत्त्यो ऽअनु परेहि पन्थां ग्यस्ते ऽअन्य ऽइतरो देवयानात् ॥ चक्षुष्म्मते शृण्वते ते ब्ब्रवीमि मा नᳪ प्प्रजाᳪ रीरिषो मोत व्वीरा'निति ज्ज्योग्ग्जीवातुमेवैभ्य ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्प्रैति ॥ ४ ॥ अथैनं ग्यथाङ्कल्प्पयति। 'शं व्वातᳪ शᳪ हि ते घृणिᳪ शन्ते भवन्त्विष्टकाᳪ॥ शन्ते भवन्त्वग्नयᳪ पार्त्थिवासो मा त्त्वाभिशूशुचन्' ॥ 'कल्प्पन्तान्ते दिशस्तुब्भ्यमापᳪ शिवतमास्तुब्भ्यम्भवन्तु सिन्धवᳪ ॥ अन्तरिक्षᳪ शिवन्तुब्भ्यङ्कल्प्पन्तान्ते दिशᳪ सर्व्वा' ऽइत्त्येतदेवास्स्मै सर्व्वङ्कल्प्पयत्त्येतदस्स्मै शिवङ्करोति ॥ ५ ॥ अथ त्रयोदश पादमात्त्र्य ऽइष्टका ऽअलक्षणाᳪ कृता भवन्ति। या ऽएवामूरग्ग्नाविष्टकास्ता ऽएता यजुषा ता ऽउपदधाति तूष्णीमिमा दैवञ्चैव तत्पित्र्यञ्च व्याकरोति ॥ ६ ॥ त्रयोदश भवन्ति। त्रयोदश मासाᳪ

(१) शु० य० सं० ३५. ५। (२) शु० य० सं० ३५. ५। (३) शु० य० सं० ३५. ६। (४) शु० य० सं० ३५. ७। (५) शु० य० सं० ३५. ८। (६) शु० य० सं० ५१. ९।

सँवत्सर ऽऋतुष्ष्वेवैनमेतत्सँवत्सरे प्प्रतिष्ठायाम्प्रतिष्ठापयति ॥ ७ ॥ पादमात्र्यो भवन्ति । प्प्रतिष्ठा वै पादः प्प्रतिष्ठामेवास्म्मै करोत्त्यलक्षणा भवन्ति तिर ऽइव वै पितरस्तिर ऽइव तद्यदलक्षणन्तिर ऽएव तत्तिरः करोति ॥ ८ ॥ तासामेकाम्मद्ध्ये प्प्राचीमुपदधाति । स ऽआत्मा तिस्रः पुरस्तान्म्मूर्द्धसᳬहितास्तच्छिरस्तिस्रो दक्षिणतः स दक्षिणः पक्षस्तिस्र ऽउत्तरतः स ऽउत्तरः पक्षस्तिस्रः पश्श्चात्तत्पुच्छᳬ सोऽस्यैष पक्षपुच्छवानात्त्मा यथैवाग्ग्नेस्तथा ॥ ९ ॥ अथ प्प्रदरात्पुरीषमाहर्त्तवा ऽआह । एतद्धास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्दूरं करोत्त्यस्म्मिन्नु हैकेऽवान्तरदेशे कर्षूङ्खात्वा ततोऽभ्याहारङ्कुर्वन्ति परिकृषन्त्यु हैके दक्षिणतः पश्श्चादुत्तरतस्ततोऽभ्याहारङ्कुर्वन्ति स यथा कामयेत तथा कुर्य्यात् ॥ १० ॥ तद्वै न महत्कुर्य्यात् । नेन्म्महदघङ्करवाणीति यावानुद्बाहुः पुरुषस्तावत्क्षत्रियस्य * कुर्य्यान्म्मुखदघ्नम्ब्राह्मणस्योपस्त्थदघ्नᳬ स्त्रिया ऽऊरुदघ्नं वैश्श्यस्याष्ठीवद्दघ्नᳬ शूद्रस्यैवं वीर्य्या ह्येत ऽइति ॥ ११ ॥ अधोजानु त्त्वेव कुर्य्यात् । तथापरस्म्मा ऽअवकाशन्न करोति तस्य क्रियमाणस्य तेजनीमुत्तरतो धारयन्ति प्प्रजा ह सा प्प्रजामेव तदुत्तरतो धारयन्ति तान्न न्न्यस्येद्धृत्वा वैनामूढ्वा वा गृहेषूच्छ्रयेत्प्रजामेव तद्गृहेषूच्छ्रयति ॥ १२ ॥ कृत्वा यवान्न्वपति । अघम्मे यवयानित्त्यवकाभिः प्प्रच्छादयति कम्मेऽसदिति दर्ब्भैः प्प्रच्छादयत्त्यरूक्षतायै ॥ १३ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

अथैनञ्छङ्कुभिः परिणिहन्ति । पालाशम्पुरस्ताद्ब्रह्म वै पलाशो ब्रह्मपुरोगवमेवैनꣳ स्वर्गँल्लोकङ्गमयति शमीमयमुत्तरतः शम्मेऽसदिति वारणम्पश्चादघम्मे वारयाता ऽइति व्वृत्रशङ्कुन्दक्षिणतोऽघस्यैवानत्ययाय ॥ १ ॥ अथ दक्षिणतः परिवक्के खनन्ति । ते क्षीरेण चोदकेन च पूरयन्ति ते हैनममुष्मिँल्लोकेऽक्षिते कुल्ल्ये ऽउपधावतः सप्तोत्तरतस्ता ऽउदकेन पूरयन्ति न ह वै सप्त स्रवन्तीरघमत्येतुमर्हत्यघस्यैवानत्ययाय ॥ २ ॥ अश्मनस्त्रीँस्त्रीन्प्रकिरन्ति । ता ऽअभ्युत्तरन्त्य[1]'श्मन्न्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः ॥ अत्रा जहीमोऽशिवा ये ऽअसञ्छिवान्न्वयमुत्तरेमाभि व्वाजा'निति यथैव यजुस्तथा बन्धुः ॥ ३ ॥ अपामार्गैरपमृजते । अघमेव तदपमृजतेऽ[2]'पाघमप किल्विषमप कृत्यामपो रपः ॥ अपामार्ग्ग त्वमस्मदप दुःष्वप्न्यꣳ सुवे'ति यथैव यजुस्तथा बन्धुः ॥ ४ ॥ यत्रोदकम्भवति तत्स्नान्ति । '[3]सुमित्रिया न ऽआप ऽओषधयः सन्त्वि'त्यञ्जलिनाप ऽउपाचति व्वज्रो वा ऽआपो व्वज्रेणैवैतन्मित्रधेयङ्कुरुते 'दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च व्वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ५ ॥ स यदि स्थावरा ऽआपो भवन्ति । स्थापयन्त्येषाम्पाप्मानमथ यदि व्वहन्ति व्वहन्त्येवैषाम्पाप्मानꣳ. स्नात्वाहतानि व्वा-

* 'उरः क्षत्रियस्योर्ध्वबाहु वा' ( का० श्रौ० सू० २१. ४. १२ ) इति ।

( १ ) शु० य० सं० ३५. १० । ( २ ) शु० य० सं० ३५. ११ । ( ३ ) शु० य० सं० ३५. १२ । ( ४ ) शु० य० सं० ३५. १२ ।

साᳬंसि परिधायानडुहः पुच्छमन्न्वारभ्यायन्त्याग्नेयो वा ऽअनड्वानग्निमुखा ऽएव तत्पितृलोकाज्जीवलोकमभ्यायन्त्यथो ऽअग्निर्वै पथोऽतिवोढा स ऽएनाननतिवहति ॥ ६ ॥ 'उद्वयन्तमसस्परी'ति । एतामृचञ्जपन्तो यन्ति तत्तमसः पितृलोकादादित्यञ्ज्योतिरभ्यायन्ति तेभ्य ऽआगतेभ्य ऽआञ्जनाभ्यञ्जने प्रयच्छन्त्येष ह मानुषोऽलङ्कारस्तेनैव तन्मृत्युमन्तर्दधते ॥ ७ ॥ अथ गृहेष्ष्वग्निᳬं समाधाय । वारणान्परिधीन्परिधाय वारणेन स्रुवेणाग्नय ऽआयुष्मत ऽआहुतिञ्जुहोत्यग्निर्वा ऽआयुष्मानायुष ऽईष्टे तमेवैभ्य ऽआयुर्य्याचत्य'ग्न[2] ऽआयूᳬंषि पवस' ऽइति पुरोऽनुवाक्क्याभाजनम् ॥ ८ ॥ अथ जुहोति । 'आ[3]युष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ॥ घृतम्पीत्वा मधु चारु गव्व्यम्पितेव पुत्रमभिरक्षतादिमान्त्स्वाहे'ति यथैवैनानभिरक्षेद्यथाभिगोपायेदेवमेतदाह ॥ ९ ॥ तस्य पुराणोऽनड्वान्दक्षिणा * । पुराणा यवाः पुराण्यासन्दी सोपबर्हणैषा न्न्वादिष्टा दक्षिणा कामं ऽयथाश्रद्धम्भूयसीर्द्दद्यादिति न्न्वग्निचितः ॥ १० ॥ अथानग्निचितः । एतदेव भूमिजोषणमेतत्समानङ्कर्म्म यदन्न्यदग्निकर्म्मणः कुर्य्यादाहिताग्नेः शर्करा ऽइत्यु हैक ऽआहुर्य्या ऽएवामूरग्न्याधेयशर्करास्ता ऽएता ऽइति न कुर्य्यादित्येक ऽईश्वरो हैता ऽअनग्निचितः सन्तप्तोरिति स यथा कामयेत तथा

(१) शु॰ य॰ सं॰ ३५. १४। (२) शु॰ य॰ सं॰ ३५. १६। (३) शु॰ य॰ सं॰ ३५. १७।

* तथा च कात्यायनः "आसन्दी सोपधाना दक्षिणाऽनड्वान्यवाश्च सर्वं पुराणम् ( का॰ श्रौ॰ सू॰ २१. ४. २९ ) इति।

कुर्य्यात् ॥ ११ ॥ मर्य्यादाया ऽएव लोष्टमाहृत्य । अन्तरेण निदधाती'मञ्जीवेभ्यः परिधिन्दधामि मैषान्नु गादपरो ऽअर्त्थमेतम् ॥ शतञ्जीवन्तु शरदः पुरूचीरन्तर्म्मृत्युन्दधताम्पर्वतेने'ति जीवेभ्यश्चैवैताम्पितृभ्यश्च मर्य्यादाङ्करोत्यसम्भेदाय तस्म्मादु हैतज्जीवाश्च पितरश्च न सन्दृश्यन्ते ॥ १२ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१००॥

इत्यऽष्टमोऽध्यायः ॥ ८ ॥

अश्वमेधनाम त्रयोदशं काण्डं † समाप्तम् ॥ १३ ॥



(१) शु० य० सं० ३५. १५।

† अस्मिन्काण्डे कण्डिकासंख्या ४३२।

# अथोपनिषन्नाम* चतुर्दशं काण्डम्

—— ० ——

काण्डेऽस्मिन्प्रतिपाद्या विषयाः—घर्मः, प्रवर्ग्यः, महावीरः, प्रवर्ग्योत्सादनम्, प्रवर्ग्यकर्तृनियमः, बृहदारण्यकम्, काम्यहवनादि, गर्भाधानादि, जातकर्म, वंशब्राह्मणमिति ।

[ घर्मोपक्रमः ]

॥ ॐ ॥ देवा ह वै सत्रन्निषेदुः । अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवा ऽअन्यत्रैवाश्विभ्याम् ॥ १ ॥ तेषाङ्कुरुक्षेत्रन्देवयजनमास । तस्मादाहुः कुरुक्षेत्रन्देवानान्देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यत ऽइदन्देवयजनमिति तद्धि देवानान्देवयजनम् ॥ २ ॥ त ऽआसत । श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति तथो ऽएवेमे सत्रमासते ये[1] सत्रमासते श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति ॥३॥ ते होचुः । यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचम्पूर्वोऽवगच्छात्स नः श्रेष्ठोऽसत्तदु नः सर्वेषाथं सहेति तथेति ॥ ४ ॥ तद्विष्णुः प्रथमः प्राप । स देवानाथं श्रेष्ठोऽभवत्तस्मादाहुर्विष्णुर्देवानाथं श्रेष्ठ ऽइति ॥ ५ ॥ स यः स विष्णुर्यज्ञः स । स यः स यज्ञोऽसौ स ऽआदित्यस्तद्धेदं यशो विष्णुर्न्न शशाक सँयन्तुन्तदिद-

---

* उपनिषच्छब्देन मुख्यया वृत्त्या ब्रह्मविद्यैवोच्यते । उप समीपस्थं प्रत्यगात्मैकत्वं नीति निश्चितं सत् तत्पराणं सहेतुं संसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्थकत्वेनोपचारादुपनिषदित्युच्यते ।

(१) "ये सत्रमासते" इति पाठः 'ग' 'ज' पुस्तकयोर्न दृश्यते ।

मप्प्येतर्हि नैव सर्व्व ऽइव यशः शक्क्नोति सँय्यन्तुम् ॥ ६ ॥ स तिस्रधन्न्वमादायापचक्क्राम । स धनुरार्त्न्या शिर ऽउपस्तभ्य तस्थौ तन्देवा ऽअनभिधृष्ण्णुवन्तः समन्तम्परिण्ण्यविशन्त ॥ ७ ॥ ता ह व्वम्र्य ऽऊचुः । इमा वै व्वम्र्यो यदुपदीका यो ऽस्य ज्यामप्प्यद्यात्किमस्म्मै प्प्रयच्छेतेत्यन्नाद्यमस्म्मै प्प्रयच्छेमापि धन्न्वन्नपो ऽधिगच्छेत्तथास्म्मै सर्वमन्नाद्यम्प्रयच्छेमेति तथेति ॥ ८ ॥ तस्योपपरासृत्त्य । ज्यामपिजक्षुस्तस्याञ्छिन्नायान्धनुरार्त्न्यौ व्विष्फुरन्त्यौ व्विष्ण्णोः शिरः प्प्रचिच्छिदतुः ॥ ९ ॥ तद्‍घृङ्ङिति पपात । तत्पतित्त्वासावादित्त्यो ऽभवदथेतरः प्प्राङेव प्प्रावृज्यत तद्यद्‍घृङ्ङित्त्यपतत्तस्म्माद्‍घर्म्मो ऽथ यत्प्रावृज्यत तस्म्मात्प्रवर्ग्यः ॥ १० ॥ ते देवा ऽअब्रुवन् । महान्न्बत नो व्वीरो ऽपादीति तस्म्मान्महावीरस्तस्य यो रसो ऽव्यक्षरत्तम्पाणिभिः सम्ममृजुस्तस्म्मात्सम्राट् ॥ ११ ॥ तन्देवा ऽअभ्यसृज्यन्त । यथा व्वित्तिं व्वेत्स्यमाना ऽएवन्तमिन्द्रः प्प्रथमः प्प्राप तमन्वङ्गमनुन्न्यपद्यत तम्पर्य्यगृह्णात्तम्परिगृह्येदं य्यशो ऽभवद्यदिदमिन्द्रो यशो यशो ह भवति य ऽएवं व्वेद ॥ १२ ॥ स ऽउ ऽएव मखः स व्विष्ण्णुः । तत ऽइन्द्रो मखवानभवन्मखवान्ह वै तम्मघवानित्याचक्षते परो ऽक्षम्परो ऽक्षकामा हि देवाः ॥ १३ ॥ ताभ्यो व्वम्रीभ्यो ऽन्नाद्यम्प्रायच्छन् । आपो वै सर्वमन्नन्ताभिर्हीदमभिक्क्नूयमिवादन्ति यदिदङ्किञ्चादन्ति ॥ १४ ॥ अथेमं व्विष्ण्णुं य्यज्ञन्त्रेधा ऽव्यभजन्त ।

(१) ग' 'ज' पुस्तकयोः ' किम्वदन्ति", इति ।

वसवः प्रातःसवनꣳ रुद्रा माध्यन्दिनꣳ सवनमादित्यास्तृतीयसवनम् ॥ १५ ॥ अग्निः प्रातःसवनम् । इन्द्रो माध्यन्दिनꣳ सवनं विश्वे देवास्तृतीयसवनम् ॥ १६ ॥ गायत्री प्रातःसवनम् । त्रिष्टुम्माध्यन्दिनꣳ सवनञ्जगती तृतीयसवनन्तेनापशीर्ष्णा यज्ञेन देवा ऽअर्चन्तः श्राम्यन्तश्चेरुः ॥ १७ ॥ दध्यङ् ह वा ऽआथर्वणः । एतꣳ शुक्रमेतं यज्ञं विदाञ्चकार यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥ स हेन्द्रेणोक्त ऽआस । एतञ्चेदन्न्यस्मा ऽअनुब्रूयास्तत ऽएव ते शिरश्छिन्द्यामिति ॥ १९ ॥ तदु हाश्विनोरनुश्श्रुतमास । दध्यङ्ङु ह वा ऽआथर्वण ऽएतꣳ शुक्रमेतं यज्ञं वेद यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति[1] ॥ २० ॥ तौ हेत्योचतुः । उप त्वायावेति किमनुवक्ष्यमाणाविव्येतꣳ शुक्रमेतं यज्ञं यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २१ ॥ स होवाच । इन्द्रेण वा ऽउक्तोऽस्म्येतञ्चेदन्न्यस्मा ऽअनुब्रूयास्तत ऽएव ते शिरश्छिन्द्यामिति तस्माद्वै बिभेमि यद्वै मे स शिरो न च्छिन्द्यान्न वामुपनेष्य ऽइति ॥ २२ ॥ तौ होचतुः । आवान्त्वा तस्मात्त्रास्यावेहे[2] ऽइति कथम्मा त्रास्येथे ऽइति यदा ना ऽउपनेष्यसेऽथ ते शिरश्छित्त्वान्न्यत्रापनिधास्यावोऽथाश्वस्य शिर ऽआहृत्य तत्ते प्रतिधास्यावस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः

(१) "भवति" इति 'ग' 'ज' पुस्तकयोः । (२) 'ग' 'ज' पुस्तकयोः "त्वह" इति ।

शिरश्छेत्स्यत्यथ ते स्वꣳ शिर ऽआहृत्य तत्ते प्प्रतिधास्याव ऽइति तथेति ॥२३॥ तौ होपनिन्न्ये। तौ यदोपनिन्न्येऽथास्य शिरश्छित्त्वान्न्यत्रापनिदधतुरथाश्श्वस्य शिर ऽआहृत्य तद्धास्य प्प्रतिदधतुस्तेन हाब्भ्यामनूवाच स यदाब्भ्यामनूवाचा-थास्य तदिन्द्रꣳ शिरश्चिच्छेदाथास्य स्वꣳ शिर ऽआहृत्य तद्धास्य प्प्रतिदधतुꣳ ॥२४॥ तस्म्मादेतदृषिणाब्भ्यनूक्तम् । दध्यङ् ह यन्म्मद्ध्वाथर्वणो वामश्श्वस्य शीर्ष्णा प्प्र यदी-मुवाचेत्त्ययतन्तदुवाचेति हैव तदुक्तम् ॥ २५ ॥ तन्न सर्व्वस्म्मा ऽअनुब्ब्रूयात् । एनस्यꣳ हि तदुथो नेन्न्म ऽइन्द्रꣳ शिरश्छि-नददिति यो न्न्वेव ज्ञातस्तस्म्मै ब्ब्रूयादुथ योऽनूचानोऽथ योऽस्य प्प्रियꣳ स्यान्न त्वेव सर्व्वस्म्मा ऽइव ॥ २६ ॥ सँव्व-त्सरवासिनेऽनुब्ब्रूयात् । एष वै सँव्वत्सरो य ऽएष तपत्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्सँव्वत्सरवासिनेऽ-नुब्ब्रूयात् ॥ २७ ॥ तिस्रो रात्रीर्व्रतञ्चरति । त्रयो वा ऽऋ-तवꣳ सँव्वत्सरस्य सँव्वत्सर ऽएष य ऽएष तपत्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्तिस्रो रात्रीर्व्रतञ्चरति ॥२८॥ तप्प्तमाचामति । तपस्व्यनुब्ब्रवा ऽइत्त्यमाꣳसाश्श्य-नुब्ब्रूते तपस्व्यनुब्ब्रवा ऽइति ॥ २९ ॥ अमृन्न्मयपायी । अस्ति वा ऽअस्याꣳ सꣳसृष्टमिव यदस्यामनृतं व्वदति तस्म्मादमृन्न्मयपायी ॥ ३० ॥ अशूद्रोच्छिष्टी । एष वै घर्म्मो य ऽएष तपति सैषा श्श्रीꣳ सत्त्यञ्ज्योतिरनृतꣳ स्त्री शूद्रꣳ श्वा कृष्णꣳ शकुनिस्तानि न प्प्रेक्षेत नेच्छ्रियञ्च पाप्प्मानञ्च नेज्ज्योतिश्च तमश्च नेत्सत्त्यानृते सꣳसृजा-

नीति ॥ ३१ ॥ अथैष वाव यशः । य ऽएष तपति तद्य- त्तदादित्यो यशो यज्ञो हैव तद्यशस्तद्यत्तद्यज्ञो यशो यज- मानो हैव तद्यशस्तद्यत्तद्यजमानो यश ऽऋत्विजो हैव तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्या- मस्मै दक्षिणामानयेयुर्न्न तांᳫं सद्योऽन्न्यस्मा ऽअति- दिशेन्नेद्यन्मेदं यश आगँस्तत्सद्योऽन्न्यस्मा ऽअतिदिशा- नीति श्वो वैव भूते द्व्यहे वा तदात्मन्न्येवैतद्यशः कृत्वा यदेव तद्भवति तत्स ददाति हिरण्यङ्कां वासोऽश्वं वा ॥ ३२ ॥ अथैतद्वै[2] । आयुरेतज्ज्योतिः प्प्रविशति य ऽएत- मनु वा ब्रूते भक्षयति वा तस्य व्व्रतचर्य्या नातपति प्प्रच्छादयेत नेदेतस्मात्तिरोऽसानीति नातपति निष्ठी- वेन्नेदेतमभिनिष्ठीवानीति नातपति प्प्रस्रावयेत नेदेतमभि- प्प्रस्रावया ऽइति यावद्वा ऽएष ऽआतपति तावानेष नेदेत- मेतैर्हिनसानीत्यवज्ज्योत्य रात्रावश्नीयात्तदेतस्य[3] रूपङ्क्रियते य ऽएष तपति तदु होवाचासुरिरेकः ह वै देवा व्व्रतञ्च- रन्ति यत्सत्त्यन्तस्मादु सत्त्यमेव वदेत् ॥ ३३ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ प्रवर्ग्यः * ]

स वै सम्भारान्त्सम्भरति । स यद्वा ऽएनानित्थाच्चे- त्थाच्च सम्भरति तत्सम्भाराणाᳫं सम्भारत्वः स वै यत्र

( १ ) "ता ऽइत्सद्यो०" इति 'ग' 'ज' पुस्तकयोः ।
( २ ) "अथैतद्वा" इति 'ग' 'ज' पुस्तकयोः ।
( ३ ) "०तदस्य" इति 'ग' 'ज' पुस्तकयोः पाठः ।
* तप्ते घृते पयःप्रक्षेपादिना प्रणीयते 'घर्मः' खाद्यविशेषः । स एव प्रक्षेपः प्रवृञ्जन-

यत्र यज्ञस्य न्न्यक्तन्ततस्ततः सम्भरति ॥ १ ॥ कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतत्सम्भरति लोमतश्छन्दाꣳसि वै लोमानि च्छन्दःस्वेवैनमेतत्सम्भरत्युत्तरत ऽउदीची हि मनुष्याणान्दिक्प्राचीनग्ग्रीवं तद्धि देवत्रा ॥ २ ॥ अब्भ्र्या । वज्रो वा ऽअभ्रिर्वीर्यं वै वज्रो वीर्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ४ ॥ अथो वैकङ्कती । प्प्रजापतिर्याम्प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्न्यमृष्ट ततो विकङ्कतः समभवद्यज्ञो वा ऽआहुतिर्यज्ञो विकङ्कतो यज्ञेनैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ अरत्निमात्री भवति । बाहुर्वा ऽअरत्निर्ब्बाहुनो वै वीर्यं क्क्रियते वीर्यसम्मितैव तद्भवति वीर्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ६ ॥ तामादत्ते । 'देवस्य[2] त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्यामाददे नारिरसी'त्यसावेव बन्धुः ॥ ७ ॥ ताꣳ सव्ये पाणौ कृत्वा । दक्षिणेनाभिमृश्य जपति 'युञ्जते[3] मन ऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक ऽइन्महो देवस्य सवितुः परिष्टुति'रित्यसावेव बन्धुः ॥ ८ ॥ अथ मृत्पिण्डं

मुच्यते । तादृशप्रवृञ्जननिबन्धनैवास्य कर्मणः समाख्या प्रवर्ग्य इति । तत्र घर्मपाकाय मृन्निर्मित उलूखलाकारपात्रविशेषो महावीरः । गौण्या तु वृत्या घर्मः, प्रवर्ग्यः, महावीरः' इति त्रीण्येव पदानि समानार्थानीति विवेकः । (तै० साय० भा० ५. ११. १. । शत० ब्रा० १४. १. १–११)

( १ ) 'ग' 'ज' पुस्तकयोः "०जिनꣳ स०" इति पाठः ।

( २ ) शु० य० सं० ३७. १ । ( ३ ) शु० य० सं० ३७. २ ।

परिगृह्णाति * । अभ्र्या च दक्षिणतो हस्तेन च हस्तेनैवोत्तरतो 'देवी[1] द्यावापृथिवी' ऽइति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति तस्मादाह देवी द्यावापृथिवी ऽइति 'मखस्य[2] वामद्य शिरो राध्यास'मिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह 'देवयजने[3] पृथिव्या' ऽइति देवयजने हि पृथिव्यै सम्भरति 'मखाय[4] त्वा मखस्य त्वा शीर्ष्णे' ऽइति यज्ञो वै मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्णे ऽइत्येवैतदाह ॥ ९ ॥ अथ वल्मीकवपाम् । 'देव्यो[5] वम्र्य' ऽइत्येता वा ऽएतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'भूतस्य[6] प्रथमजा' ऽइतीयं वै पृथिवी भूतस्य प्रथमजा तदनयैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'मखस्य[7] वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥ १० ॥ अथ वराहविहतम् । 'इयत्यग्र[8] ऽआसी'दितीयती ह वा ऽइयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष ऽइति वराह ऽउज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नङ्करोति 'मखस्य[9] तेऽद्य शिरो राध्यासन्देवयजने

---

* 'मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी' ( का० श्रौ० सू० २६. १. ४ ) इति ।

(१) शु० य० सं० ३७. ३ । (२) शु० य० सं० ३७. ३ । (३) शु० य० सं० ३७. ३ । (४) शु० य० सं० ३७. ३ । ( ५ ) शु० य० सं० ३७. ४ । ( ६ ) शु० य० सं० ३७. ४ । ( ७ ) शु० य० सं० ३७. ४ । ( ८ ) शु० य० सं० ३७. ५ । ( ९ ) शु० य० सं० ३७. ५ ।

पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥ ११ ॥ अथादारान् । 'इन्द्रस्यौज स्थे'ति यत्र वा ऽएनमिन्द्र ऽओजसा पर्य्यगृह्णात्तदस्य परिगृहीतस्य रसो व्यक्षरत्स पूयन्निवाशेत सोऽब्रवीदादृतो ऽर्वेव बत म ऽएष रसोऽस्तोषीदिति तस्मादादारा ऽअथ यत्पूयन्निवाशेत तस्मात्पूतीकास्तस्मादग्नावाहुतिरिवाभ्याहिता ज्वलन्ति तस्मादु सुरभयो यज्ञस्य हि रसात्सम्भूता ऽअथ यदे- नन्तदिन्द्र ऽओजसा पर्य्यगृह्णात्तस्मादाहेन्द्रस्यौज स्थेति 'मखस्य वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥१२॥ अथाजा- क्षीरम् । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्ततोऽजा समभवत्त- यैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥१३॥ तान्वा ऽएतान्पञ्च सम्भारात्सम्भरति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्येष ऽउ प्रवर्ग्य- स्तदेतमेवैतत्प्रीणाति तान्त्सम्भृतानभिमृशति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥१४॥ अथोत्तरतः परिश्रितम्भवति । तदभिप्रयन्तो जपन्ति 'प्रैतु ब्रह्मण- स्पतिरि'त्येष वै ब्रह्मणस्पतिर्य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह प्रैतु ब्रह्मण- स्पतिरिति 'प्र देव्येतु सूनृते'ति देवी ह्येषा सूनृता-

(१) शु० य० सं० ३७. ६ । (२) शु० य० सं० ३७. ६ । (३) शु० य० सं० ३७. ६ । (४) शु० य० सं० ३७. ६ । (५) शु० य० सं० ३७. ७ । (६) शु० य० सं० ३७. ७ ।

'च्छा वीरन्नर्य्यम्पङ्क्ति राधस'मित्युपस्तौत्येवैनमेतन्महयत्येव 'देवा[2] यज्ञन्नयन्तु न' इति सर्व्वानेवास्मा एतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥ परिश्रितम्भवति । एतद्वै देवा अबिभयुर्य्यद्वै न इममिह रक्षाᳬसि नाष्ट्रा न हन्न्युरिति तस्मा एताम्पुरम्पर्य्यश्रयँस्तथैवास्मा अयमेताम्पुरम्परिश्रयति ॥ १६ ॥ अथ खरे सादयति । 'मखाय[3] त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुरथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णे इत्यसावेव बन्धुरथ मृत्पिण्डमुपादाय महावीरङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुः प्रादेशमात्रम्प्रादेशमात्रमिव हि शिरो मध्ये सङ्गृहीतम्मध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलम्मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधाति. तन्निष्ठितमभिमृशति 'मखस्य शिरोऽसी'ति मखस्य ह्येतत्सौम्यस्य शिर एवमितरौ तूष्णीम्पिन्न्वने तूष्णीᳬ रौहिणकपाले ॥ १७ ॥ प्रजापतिर्व्वा एष यज्ञो भवति । उभयं वा एतत्प्रजापतिर्न्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तम्परिमितः रूपन्तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितः रूपन्तदस्य तेन संस्करोति स ह वा एतः सर्वङ्कृत्स्नम्प्रजापतिः संस्करोति य एवं विद्वानेतदेवङ्करोत्यथोपशयायै पिण्डम्परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥ अथ गवेधुकाभिर्हिन्वति ।

(१) शु० य० सं० ३७. ७। (२) शु० य० सं० ३७. ७। (३) शु० य० ३७. ७। (४) शु० य० सं० ३७. ८। (५) शु० य० सं० ३७. ८।

यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णणीम्पिन्न्वने तूष्णणीᳬं रौहिणकपाले ॥ १९ ॥ अथैनान्धूपयति । 'अश्श्वस्य त्वा व्वृष्णणः शक्क्ना धूपयामी'ति व्वृषा वा ऽअश्श्वो व्वीर्य्यं वै व्वृषा व्वीर्य्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति 'देवयजने पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णणीम्पिन्न्वने तूष्णणीᳬं रौहिणकपाले ॥२०॥ अथैनाञ्छ्रपयति । श्रृतᳬ हि देवानामिष्टकाभिः श्रपयन्त्येता वा ऽएतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति तदु येनैव सुश्रृताः स्युस्तेन श्श्रपयेदथ पुचनमवधाय महावीरमवदधाति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णणीम्पिन्न्वने तूष्णणीᳬं रौहिणकपाले तान्द्विवैवोपवपेद्दिवोद्वपेदुदग्घि देवानाम् ॥ २१ ॥ स ऽउद्वपति । 'ऋजवे त्वे'त्यसौ वै लोक ऽऋजुः सत्यᳬं ह्यृजुः सत्यमेष य ऽएष तपत्येष ऽउ प्प्रथमः प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाहऽर्ज्जवे त्वेति ॥ २२ ॥ 'साधवे त्वे'ति । अयं वै साधुर्य्योऽयम्पवत ऽएष हीमाँल्लोकान्न्सिद्धोऽनुपवत ऽएष ऽउ द्वितीयः प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह साधवे त्वेति ॥ २३ ॥

(१) शु० य० सं० ३७. ८। (२) शु० य० सं० ३७. ९। (३) शु० य० सं० ३७. ९ । (४) शु० य० सं० ३७. ९। (५) शु० य० सं० ३७. १०। (६) शु० य० सं० ३७. १०।

'सुक्षित्यै त्वे'ति । अयं वै लोकः सुक्षितिरस्मिन्हि लोके सर्वाणि भूतानि क्षियन्त्यथो ऽअग्निर्वै सुक्षितिरग्निर्ह्येवा-स्मिँल्लोके सर्वाणि भूतानि क्षियन्त्येष ऽउ तृतीयः प्रव-र्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णी-म्पिन्वने तूष्णीᳬं रौहिणकपाले ॥ २४ ॥ अथैनानाच्छृ-णत्ति । अजायै पयसा 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳬं रौहिणकपाले ॥ २५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रवि-शति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ २६ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ महावीरसंस्काराः ]

स यदैतदातिथ्येन प्रचरति । अथ प्रवर्ग्येण चरि-ष्यन्पुरोपसदोऽग्रेण गार्हपत्यम्प्राचः कुशान्त्सᳬंस्तीर्य्य द्वन्द्वम्पात्राण्युपसादयत्युपयमनीम्महावीरम्परीशासौ पि-न्वने रौहिणकपाले रौहिणहवन्यौ स्रुचौ यदु चान्य-द्भवति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैत-द्यज्ञमभिसम्पादयत्यथ यद्द्वन्द्वन्द्वन्द्वं वै वीर्य्यं यदा वै द्वौ सᳬंरभेते ऽअथ तौ वीर्य्यङ्कुरुतो द्वन्द्वं वै मिथुनम्प्रजननम्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति कृत्स्न-ङ्करोति ॥ १ ॥ अथाद्भुः । प्रोक्षणीरादायोपोत्तिष्ठन्नाह

(१) शु० य० सं० ३७. १०। (२) शु० य० सं० ३७. १०।

ब्ब्रह्मन्प्प्रचरिष्ष्यामो होतरभिष्ष्टुहीति ब्ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्तेऽभिगोप्प्ता तमेवैतदाहाप्प्रमत्त ऽआस्स्व यज्ञस्य शिरः प्प्रतिधास्याम ऽइति होतरभिष्ष्टुहीति यज्ञो वै होता तमेवैतदाह यज्ञस्य शिरः प्प्रतिधेहीति प्प्रतिपद्यते होता ॥ २ ॥ 'ब्रह्म जज्ञानम्प्रथमम्पुरस्तादि'ति । असौ वा ऽआदित्त्यो ब्ब्रह्माहरहः पुरस्ताज्जायत ऽएष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह ब्ब्रह्म जज्ञानम्प्रथमम्पुरस्तादित्त्यथ प्प्रोक्षत्यसावेव बन्धुः ॥ ३ ॥ स प्प्रोक्षति । 'यमाय त्त्वे'त्त्येष वै यमो य ऽएष तपत्त्येष हीदꣳ सर्व्वं य्यमयत्त्येतेनेदꣳ सर्व्वं य्यतमेष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह यमाय त्त्वेति ॥ ४ ॥ 'मखाय त्त्वे'ति । एष वै मखो य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह मखाय त्त्वेति ॥ ५ ॥ 'सूर्य्यस्य त्त्वा तपस' ऽइति । एष वै सूर्य्यो य ऽएष तपत्त्येषऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह सूर्य्यस्य त्त्वा तपस ऽइति ॥ ६ ॥ पूर्व्वया द्वारा स्त्थूणान्निर्हृत्त्य । दक्षिणतो निमिन्न्वन्ति यथैनाꣳ होताभिष्ष्टुवन्न्परापश्श्येद्यज्ञो वै होता स ऽएवास्यामेतद्यज्ञम्प्रतिदधाति तथैषा घर्म्मम्पिन्न्वते ॥ ७ ॥ [अर्धः प्रपाठकः ॥६६॥] अग्ग्रेणाहवनीयꣳ सम्म्राडासन्दीम्परुर्य्याहृत्त्य दक्षिणतः प्प्राचीमासादयत्त्युत्तराꣳ राजासन्द्यै ॥ ८ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥९॥ अꣳसदघ्घ्ना भवति । अꣳसयोर्व्वा

(१) शु० य० सं० १३. ३ । (२) शु० य० सं० ३७. ११ । (३) शु० य० सं० ३७. ११ । (४) शु० य० सं० ३७. ११ ।

ऽइदꣳ शिरः प्प्रतिष्ट्ठितन्तदुꣳसयोरेवैतच्छिरः प्प्रतिष्ट्ठापयति ॥ १० ॥ बाल्ल्वजीभी रज्जुभिर्व्युता भवति। यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ११ ॥ अथ यदुत्तरत ऽआसादयति। यज्ञो वै सोमः शिरः प्प्रवर्ग्ग्य ऽउत्तरं वै शिरस्तस्मादुत्तरत ऽआसादयत्त्यथो राजा वै सोमः सम्म्राट् प्रवर्ग्ग्य ऽउत्तरं वै राज्यात्साम्म्राज्यन्तस्मादुत्तरत ऽआसादयत्त्युत्तरो वै प्प्रजा तस्मादुत्तरत ऽआसादयति ॥ १२ ॥ स यत्रैताꣳ होतान्वाह। 'अञ्जन्ति यम्प्रथयन्तो न व्विप्प्रा' ऽइति तदेतम्प्रचरणीयम्महावीरमाज्येन समनक्ति 'देवस्त्वा सविता मद्ध्वानक्त्व'ति सविता वै देवानाम्प्रसविता सर्व्वं व्वा ऽइदम्मधु यदिदङ्किञ्च तदेनमनेन सर्व्वेण समनक्ति तदस्मै सविता प्प्रसविता प्प्रसौति तस्मादाह देवस्त्वा सविता मद्ध्वानक्त्विति ॥ १३॥ * अथोत्तरतः सिकता ऽउपकीर्ण्णा भवन्ति। तद्रजतꣳ हिरण्यमधस्तादुपास्यति 'पृथिव्व्याः सꣳस्पृशस्प्पाहि'त्येतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममधस्ताद्रक्षाꣳसि नाष्ट्रा न हन्न्युरित्त्यग्ग्नेर्व्वा ऽएतद्रेतो यद्धिरण्यन्नाष्ट्राणाꣳ रक्षसामपहत्त्या ऽअथो पृथिव्व्यु ह व्वा ऽएतस्माद्बिभयाञ्चकार यद्वै मायन्तप्प्सः शुशुचानो न

(१) "आसादयत्त्युत्तरो वै प्प्रजा तस्मादुत्तरत" इति पाठः 'ग' 'ज' पुस्तकयोर्न दृश्यते।
(२) ऋ० सं० ४. २. २१। (३) शु० य० सं० ३७, ११।
* शतम् ६६००।
(४) शु० य० सं० ३७ ११।

हिꣳस्यादिति तदेवास्या ऽएतदन्तर्दधाति रजतम्भवति रजतेव हीयम्पृथिवी ॥ १४ ॥ स यत्रैताꣳ होतान्न्वाह । 'सꣳसीदस्व महाँ२॥ ऽअसी'ति तदुभयत ऽआदीप्ता मौञ्जाः प्प्रलवा भवन्ति तानुपास्य तेषु प्प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत ऽएता ऽओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ १५ ॥ अथ यदुभयत ऽआदीप्ता भवन्ति । सर्व्वाब्भ्य ऽएवैतद्दिग्भ्यो रक्षाꣳसि नाष्ट्रा ऽअपहन्ति तस्मिन्प्रवृज्यमाने पत्नी शिरः प्प्रोर्ण्णुते तप्तो वा ऽएष शुशुचानो भवति नेन्मेऽयन्तप्तः शुशुचानश्चक्षुः प्प्रमुष्णादिति ॥ १६ ॥ स प्प्रवृणक्ति । 'अर्चिरसि शोचिरसि तपोऽसी'त्येष वै घर्म्मो य ऽएष तपति सर्वं वा ऽएतदेष तदेतमेवैतत्प्रीणाति तस्मादाहार्चिरसि शोचिरसि तपोऽसीति ॥ १७ ॥ अथास्यामाशिष ऽआशास्ते । इयं वै यज्ञोऽस्यामेवैतदाशिष ऽआशास्ते ता ऽअस्म्मा ऽइयꣳ सर्व्वाः समर्द्धयति ॥ १८ ॥ 'अनाधृष्टा पुरस्ता'दिति । अनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्न्नाष्ट्राभि'रग्नेराधिपत्य' ऽइत्यग्निमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाꣳ रक्षसामपहत्या 'ऽआयुर्म्मे दा' ऽइत्यायुरेवास्मिन्धत्ते तथो ह सर्व्वमायुरेति ॥ १९ ॥ 'पुत्रवती दक्षिणत' ऽइति । नात्र तिरोहितमिवास्ती'न्द्रस्याधिपत्य' ऽइतीन्द्रमेवास्या ऽअधिपतिङ्करोति

(१) ऋ० सं० १. ३. ९। (२) शु० य० सं० ३७. ११। (३) शु० य० सं० ३७. ११। (४) शु० य० सं० ३७. १२। (५) शु० य० सं० ३७. १२। (६) शु० य० सं० ३७. १२। (७) शु० य० सं० ३७. १२।

नाष्ट्राणाᳬं रक्षसामपहत्यै 'प्प्रजाम्मे दा'[1] ऽइति प्प्रजामेव पशूनात्मन्धत्ते तथो ह पुत्री पशुमान्भवति ॥ २० ॥ 'सुषदा पश्चा'[2]दिति । नात्र तिरोहितमिवास्ति 'देवस्य[3] सवितुराधिपत्य' ऽइति देवमेवास्यै सवितारमधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्यै 'चक्षुर्म्मे दा'[4] ऽइति चक्षुरेवात्मन्धत्ते तथो ह चक्षुष्मान्भवति ॥ २१ ॥ 'आश्रुतिरुत्तरत'[5] ऽइति । आश्रावयन्नुत्तरत ऽइत्येवैतदाह 'धातुराधिपत्य'[6] ऽइति धातारमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्यै 'रायँस्प्पोषम्मे दा'[7] ऽइति रयिमेव पुष्टिमात्मन्धत्ते तथो ह रयिमान्पुष्टिमान्भवति ॥ २२ ॥ 'विधृतिरुपरिष्टा'[8]दिति । विधारयन्नुपरिष्टादित्येवैतदाह 'बृहस्पतेराधिपत्य'[9] ऽइति बृहस्पतिमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्या 'ऽओजो मे दा'[10] ऽइत्योज ऽएवात्मन्धत्ते तथौजस्वी बलवान्भवति ॥ २३ ॥ अथ दक्षिणत ऽउत्तानेन पाणिना निह्नुते । 'विश्वाभ्यो[11] मा नाष्ट्राभ्यस्पाही'ति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ २४ ॥ अथेमामभिमृश्य जपति । 'मनोरश्वासी'[12]त्यश्वा ह

(१) शु० य० सं० ३७. १२ । (२) शु० य० सं० ३७. १२ । (३) शु० य० सं० ३७. १२ । (४) शु० य० सं० ३७. १२ । (५) शु० य० सं० ३७. १२ । (६) शु० य० सं० ३७. १२ । (७) शु० य० सं० ३७. १२ । (८) शु० य० सं० ३७. १२ । (९) शु० य० सं० ३७. १२ । (१०) शु० य० सं० ३७. १२ । (११) शु० य० सं० ३७. १२ ।

* अत्र "रसो व्यक्षरत्त्स" इत्यधिकः पाठः । 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

(१२) शु० य० सं० ३७. १२ ।

वा ऽइयम्भूत्त्वा मनुमुवाह सोऽस्याः पतिः प्प्रजापति-स्तेनैवैनमेतन्न्मिथुनेन प्प्रियेण धाम्म्ना समर्द्धयति कृत्स्न-ङ्करोति ॥ २५ ॥ अथ वैकङ्कतौ शकलौ परिश्श्रयति प्प्राञ्चौ । 'स्वाहा मरुद्भिः परिश्श्रीयस्वे'त्त्यवरथ्ठं स्वाहाकारङ्क-रोति परान्देवतामेष वै स्वाहाकारो य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादवरथ्ठं स्वाहाकार-ङ्करोति परान्देवताम् ॥ २६ ॥ मरुद्भिः परिश्श्रीयस्वेति । विशो वै मरुतो विशैवैतत्क्षत्रम्परिबृंहति तदिदङ्क्षत्रमु-भयतो विशा परिवृढन्तूष्णणीमुदञ्चौ तूष्णणीम्प्राञ्चौ तूष्णणी-मुदञ्चौ तूष्णणीम्प्राञ्चौ ॥ २७ ॥ त्रयोदश सम्पादयति । त्रयोदश वै मासाः सँव्वत्सरस्य सँव्वत्सर ऽएष य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मात्त्रयोदश सम्पादयति ॥ २८ ॥ अथ सुवर्ण्णं हिरण्ण्यमुपरिष्ट्टान्निदधाति । 'दिवं सथ्ठंस्पृशस्प्पाही'त्त्येतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममुपरिष्ट्टाद्रक्षाथ्ठंसि नाष्ट्रा न हन्न्युरित्त्यग्ग्नेर्व्वा ऽएत-द्रेतो यद्धिरण्ण्यन्नाष्ट्राणाथ्ठं रक्षसामपहत्त्या ऽअथो द्यौर्ह वा ऽएतस्म्माद्विभयाञ्चकार यद्वै मायन्तप्तः शुशुचानो न हिथ्ठंस्यादिति तदेवास्या ऽएतदन्तर्द्दधाति हरितम्भवति हरिणीव हि द्यौः ॥ २९ ॥ अथ धवित्रैराधूनोति । 'मधु मद्धि'ति त्रिः प्प्राणो वै मधु प्प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवा-

(१) शु० य० सं० ३७. १३ । (२) शु० य० सं० ३७. १३ । (३) शु० य० सं० ३७. १३ ।

स्मिन्नेतद्दधाति ॥ ३० ॥ अथापसलवि त्रिर्द्धून्वन्ति । यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तैरेवै-नमेतत्समीरयति ॥ ३१ ॥ अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । ये यज्ञे धुवनन्तन्वते पुनः प्रसलवि त्रिर्द्धून्वन्ति षट् सम्पद्यन्ते षड्वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्द-धाति श्श्रपयन्ति रौहिणौ स यदार्चिर्जायतेऽथ हिरण्य-मादत्ते ॥ ३२ ॥ स यत्रैताᳬं होतान्वाह । 'अप्नस्वतीम-श्विना व्वाचमस्मे' ऽइति तदद्ध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति स यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्य-तीति व्विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति व्विद्या-दथ यदि नैव रुचितो नारुचितो नैव श्श्रेयान्न पापी-यान्भविष्यतीति व्विद्याद्यथा त्वेवं रुचितः स्यात्तथा धवितव्व्यम् ॥३३॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनुवा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥३४॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

———०———

स यदैतदद्ध्वर्युः । उपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति तदुपोत्थायावकाशैरुपतिष्ठन्ते प्राणा वा ऽअवकाशाः प्राणानेवास्मिन्नेतद्दधाति षडुपतिष्ठन्ते षड्वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ १ ॥ 'गर्भो देवाना'मिति।

---

* अत्र "रसो व्यक्षरत्त" इत्यधिकः पाठः [ ] इति चिह्नान्तर्गतः 'ग' 'ज' पुस्तकयो-रुपलभ्यते ।

(१) शु० य० सं० ३४. २९ । (२) "न्वेव" इति 'ग' 'ज' पुस्तकयोः ।

(३) "धवितव्यः" इति 'ग' 'ज' पुस्तकयोः । (४) शु० य० सं० ३७. १४ ।

एष वै गर्ब्भो देवानां य एष तपत्येष हीदꣳ सर्व्वङ्गृह्ण[1]ा-त्येतेनेदꣳ सर्व्वङ्गृभीतमेष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह गर्ब्भो देवानामिति ॥ २ ॥ 'पि[2]ता मतीना'-मिति । पिता ह्येष मतीना'म्प[3]तिः प्प्रजाना'मिति पतिर्ह्येष प्प्रजानाम् ॥ ३ ॥ 'स[4]न्देवो देवेन सवित्रा गते'ति सꣳ हि देवो देवेन सवित्रा गत 'स[5]ꣳ सूर्य्येण रोचत' ऽइति सꣳ हि सूर्य्येण रोचते ॥ ४ ॥ 'स[6]मग्निरग्निना गते'ति । सꣳ ह्यग्निरग्निना गत 'स[7]न्दैवेन सवित्रे'ति सꣳ हि दैवेन सवित्रा गत 'स[8]ꣳ सूर्य्येणारोचिष्टे'ति सꣳ हि सूर्य्येणारो-चिष्ट ॥ ५ ॥ 'स्वा[9]हा समग्निस्तपसा गते'ति सꣳ ह्यग्निस्तपसा गतावरꣳ स्वाहाकारङ्करोति परान्देवतामसा-वेव बन्धुः 'सन्दै[10]व्व्येन सवित्रे'ति सꣳ हि दैव्व्येन सवि-त्रा गत 'स[11]ꣳ सूर्य्येणारूरुचते'ति सꣳ हि सूर्य्येणारूरुचत ॥ ६ ॥ ते वा ऽएते त्रयोऽवकाशा भवन्ति । त्रयो वै प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तै[12]नेवास्मिन्नेतद्दधाति ॥ ७ ॥ 'ध[13]र्त्ता दिवो विभाति तपसस्पृथिव्व्या'मिति । धर्त्ता ह्येष दिवो विभाति तपसस्पृथिव्व्या'न्ध[14]र्त्ता देवो देवानाम-मर्त्यस्तपोजा' ऽइति धर्त्ता ह्येष देवो देवानाममर्त्यस्तपोजा 'वा[15]चमस्म्मे नियच्छ देवायुव'मिति यज्ञो वै वाग्य्यज्ञमस्म्म-

(१) "गृह्णा०" इति 'ग' 'ज' पुस्तकयोः। (२) शु० य० सं० ३७. १४। (३) शु० य०
सं० ३७. १४। (४) शु० य० सं० ३७. १४। (५) शु० य० सं० ३७. १४। (६)
शु० य० सं० ३७. १५। (७) शु० य० सं० ३७. १५। (८) शु० य० सं० ३७. १५।
९) शु० य० सं० ३७. १५। (१०) शु० य० सं० ३७. १५। (११) शु० य० सं०
७. १५। (१२) "०स्तैनै" इति 'ग' 'ज' पुस्तकयोः। (१३) शु० य० सं० ३७. १६।
१४) शु० य० सं० ३७. १६। (१५) शु० य० सं० ३७. १६।

ऽब्भ्यम्प्रयच्छ येन देवान्प्रीणामेत्त्येवैतदाह ॥ ८ ॥ '[1]अपश्श्य-
ङ्गोपामनिपद्यमान'मिति । एष वै गोपा य ऽएष तपत्त्येष
हीदꣳ सर्व्वङ्गोपायत्त्यथो न निपद्यते तस्म्मादाहापश्श्यङ्गोपा-
मनिपद्यमानमिति ॥ ९ ॥ '[2]आ च परा च पथिभिश्श्चरन्त'-
मिति । आ च ह्येष परा च देवैः पथिभिश्श्चरति '[3]स
सद्ध्रीचीः स विषूचीर्व्वसान' ऽइति सद्ध्रीचीश्श्च ह्येष विषू-
चीश्श्च दिशो वस्तेऽथो रश्श्मी'नावरीवर्त्ति भुवनेष्ष्वन्त'रिति
पुनः पुनर्ह्येष ऽएषु लोकेषु वरीवर्त्यमानश्श्चरति ॥ १० ॥
'[4]विश्श्वासाम्भुवाम्पते । विश्श्वस्य मनसस्प्पते विश्श्वस्य
वचसस्प्पते सर्व्वस्य वचसस्प्पत' ऽइत्त्येतस्य सर्व्वस्य पत
ऽइत्त्येत'[5]द्देवश्श्रुत्त्वन्देव घर्म्म देवो देवान्प्पाही'ति नात्र
तिरोहितमिवास्ति ॥ ११ ॥ '[6]अत्र प्प्रावीरनु वान्देववीतय'
ऽइति । अश्श्विनावेवैतदाहाश्श्विनौ वा ऽएतद्यज्ञस्य शिरः
प्प्रत्त्यधत्तान्तावेवैतत्प्रीणाति तस्म्मादाहात्र प्प्रावीरनु वान्दे-
ववीतय ऽइति ॥ १२ ॥ '[7]मधु माद्ध्वीभ्याम्मधु माधूचीभ्या'-
मिति । दद्ध्यङ् ह वा ऽआभ्यामाथर्व्वणो मधु नाम ब्राह्म-
णमुवाच तदेनयोः प्प्रियन्धाम तदेवैनयोरेतेनोपगच्छति
तस्म्मादाह मधु माद्ध्वीभ्याम्मधु माधूचीभ्यामिति
॥ १३ ॥ '[8]हृदे त्त्वा मनसे त्त्वा दिवे त्त्वा सूर्य्याय त्त्वा ।
ऊर्द्ध्वो ऽअद्ध्वरन्दिवि देवेषु धेही'ति नात्र तिरोहितमि-

(१) शु० य० सं० ३७. १७। (२) शु० य० सं० ३७. १७। (३) शु० य सं० ३७. १७। (४) शु० य० सं० ३७. १७। (५) शु० य० सं० ३७. १८। (६) शु० य० सं० ३७. १८। (७) शु० य० सं० ३७. १८। (८) शु० य० सं० ३७. १८।
(९) शु० य० सं० ३७. १९।

वास्ति ॥ १४ ॥ 'पिता नोऽसि पिता नो बोधी'ति । एष वै पिता य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पिता नोऽसि पिता नो बोधीति 'नमस्ते ऽअस्तु मा मा हिꣳसी'रित्याशिषमेवैतदाशास्ते ॥ १५ ॥ अथ पत्न्यै शिरोऽपावृत्य । महावीरमीक्षमाणां वाचयति 'त्वष्टृमन्तस्त्वा सपेमे'ति वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १६ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ ॥ १७ ॥

प्रथमाध्याये चतुर्थ ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

—०—

[ रौहिणहोमः, महावीरेषु अजापयस आसेकश्च ]

अथातो रौहिणौ जुहोति । 'अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा प्रातः 'रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा सायम् ॥ १ ॥ तद्यद्रौहिणौ जुहोति । अग्निश्च ह वा ऽआदित्यश्च रौहिणावेताभ्याꣳ हि देवताभ्यां यजमानाः स्वर्गं लोकꣳ रोहन्ति ॥ २ ॥ अथो ऽअहोरात्रे वै रौहिणौ । आदित्यः प्रवर्ग्योऽमुं तदादित्यमहोरात्राभ्या-

(१) शु० य० सं० ३७. २०। (२) शु० य० सं० ३७. २०। (३) "०प०" इति 'ग' 'ज' पुस्तकयोः। (४) शु० य० सं० ३७. २०। (५) शु० य० सं० ३७ २१। (६) शु० य० सं० ३७. २१।

स्परिगृह्णाति तस्मादेषोऽहोरात्राभ्याम्परिगृहीतः ॥ ३ ॥ अथो ऽइमौ वै लोकौ रौहिणौ। आदित्यः प्प्रवर्ग्योऽमुन्तदादित्यमाभ्याँल्लोकाभ्याम्परिगृह्णाति तस्मादेष ऽआभ्याँल्लोकाभ्याम्परिगृहीतः ॥ ४ ॥ अथो चक्षुषी वै रौहिणौ। शिरः प्प्रवर्ग्यः शीर्षँस्तच्चक्षुर्दधाति ॥५॥ अथ रज्जुमादत्ते। 'देवस्य त्वा सवितुः प्प्रसवेऽश्श्विनोर्ब्बाहुभ्याम्पूष्णो हस्ताभ्यामाददेऽदित्यै[2] रास्नासी'त्यसावेव बन्धुः ॥६॥ अथ गामाह्वयति। जघनेन गार्हपत्यं स्थ'न्निडे[3] ऽएह्यदित ऽएहि सरस्वत्येही'तीडा हि गौरदितिर्हि गौः सरस्वती हि गौरथोच्चैराह्वयति नाम्म्ना'सावेह्यसावेही'ति त्रिः ॥ ७ ॥ तामागतामभिदधाति। 'अदित्यै[4] रास्नासीन्द्राण्या ऽउष्णीष' ऽइतीन्द्राणी ह वा ऽइन्द्रस्य प्प्रिया पत्नी तस्या ऽउष्णीषो विश्श्वरूपतमः सोऽसीति तदाह तमेवैनमेतत्करोति ॥ ८ ॥ अथ वत्समुपार्जति। 'पूषासी'त्ययं वै पूषा योऽयम्पवत ऽएष हीदꣳ सर्व्वम्पुष्यत्येष ऽउ प्प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पूषासीति ॥ ९ ॥ अथोन्नयति। 'घर्म्मार्य दीष्ष्वे'त्येष वा ऽअत्र घर्म्मो रसो भवति यमेषा पिन्न्वते तस्मै दयस्वेत्येवैतदाह ॥ १० ॥ अथ पिन्न्वने पिन्न्वयति। 'अश्श्विभ्याम्पिन्न्वस्वे'त्यश्श्विनावेवैतदाहाश्श्विनौ वा ऽएतद्यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहा-

(१) शु० य० सं० ३८. १। (२) 'ग' 'ज' पुस्तकयोः "ऽदित्यै" इति पाठो न दृश्यते। (३) शु० य० सं० ३८. २। (४) "तै" इति 'ग' 'ज' पुस्तकयोः। (५) शु० य० सं० ३८. २। (६) शु० य० ३८. ३। (७) शु० य० सं० ३८. ३। (८) शु० य० सं० ३८. ३। (९) शु० य० सं० ३८. ४।

श्विभ्यामिपन्न्वस्वेति ॥ ११ ॥ 'सरस्वत्यै पिन्न्वस्वे'ति । व्वाग्वै सरस्वती व्वाचा व्वा ऽएतदश्विनौ यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्न्वस्वेति ॥ १२ ॥ 'इन्द्राय पिन्न्वस्वे'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतदश्विनौ यज्ञस्य शिरः प्प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राय पिन्न्वस्वेति ॥ १३ ॥ अथ व्विप्रुषोऽभिमन्त्रयते । 'स्वाहेन्द्रवत्स्वाहेन्द्रव'दितीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञोऽवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ अथास्यै स्तनमभिपद्यते । 'यस्ते स्तनः शशयो यो मयोभू'रिति यस्ते स्तनो निहितो गुहायामित्येवैतदाह 'यो रत्नधा व्वसुविद्यः सुदत्र' ऽइति यो धनानान्दाता व्वसुविद्पणाऽय ऽइत्येवैतदाह 'येन व्विश्वा पुष्यसि व्वार्याणी'ति येन सर्वान्देवान्त्सर्वाणि भूतानि बिभर्षीत्येवैतदाह 'सरस्वति तमिह धातवेऽक'रिति व्वाग्वै सरस्वती सैषा घर्म्मदुघा यज्ञो वै व्वाग्यज्ञमस्मभ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाहाथ गार्हपत्यस्यार्द्धमै'त्युर्व्वन्तरिक्षमन्न्वेमी'त्यसावेव बन्धुः ॥ १५ ॥ अथ शफावादत्ते । 'गायत्रञ्छन्दोऽसि त्रैष्टुभञ्छन्दोऽसी'ति गायत्रेण चैवैना-

(१) शु० य० सं० ३८.४। (२) शु० य० सं० ३८.४। (३) शु०
य० सं०३८.४। (४) शु० य० सं० ३८.५। (५) शु० य० सं० ३८.५।
(६) शु० य० सं० ३८. ५। (७) शु० य० सं० ३८.५। (८) शु० य० सं०
३८.५। (९) शु० य० सं० ३८.६।

वेतस्त्रैष्टुभेन च च्छन्दसादत्ते 'द्यावापृथिवीभ्यान्त्वा परि- गृह्णामी'तीमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽ- मुन्तदादित्यमाभ्यान्द्यावापृथिवीभ्याम्परिगृह्णात्यथ मौञ्जेन वेदेनोपमार्ष्टचसावेव बन्धुः ॥ १६ ॥ अथोपयमन्न्योपगृह्णा- ति । 'अन्तरिक्षेणोपयच्छामी'त्यन्तरिक्षं वा उपयमन्न्य- न्तरिक्षेण हीदꣳ सर्वमुपयतमथो उदरं वा उपयमन्न्युद- रेण हीदꣳ सर्वमन्नाद्यमुपयतन्तस्मादाहान्तरिक्षेणोपयच्छा- मीति ॥ १७ ॥ अथाजाक्षीरमानयति । तप्तो वा एष शुशुचानो भवति तमेवैतच्छमयति तस्मिञ्छान्ते गोक्षी- रमानयति ॥ १८ ॥ 'इन्द्राश्विने'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणात्यश्विनेत्त्य- श्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्ता- न्तावेवैतत्प्रीणाति तस्मादाहेन्द्राश्विनेति ॥ १९ ॥ 'मधुनः सारघस्ये'ति । एतद्वै मधु सारघ'ङ्घर्म्मम्पाते'ति रसम्पातेत्त्ये- वैतदाह 'वसवं' इत्येते वै वसव एते हीदꣳ सर्वं वास- यन्ते 'यजत वा'डिति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भ- वति ॥ २० ॥ 'स्वाहा सूर्य्यस्य रश्मये वृष्टिवनय' इति। सूर्य्यस्य ह वा एको रश्मिर्वृष्टिवनिर्न्नाम येनेमाः सर्वाः प्रजा बिभर्त्ति तमेवैतत्प्रीणाति तस्मादाह स्वाहा सूर्य्यस्य रश्मये वृष्टिवनय इत्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥२१॥ अथैतद्वै । आयुरेतज्ज्योतिः

(१) शु० य० सं० ३८. ६ । (२) शु० य० सं० ३८. ६ । (३) शु० य० सं० ३८. ६ । (४) शु० य० सं० ३८. ६ । (५) शु० य० सं० ३८. ६ । (६) शु० य० सं० ३८. ६ । (७) शु० य० सं० ३८. ६ । (८) शु० य० सं० ३८. ६ ।

प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रत-चर्य्या या सृष्टौ ॥ २२ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ १३२ ॥

—o—

[ प्रवर्ग्यानुष्ठानम् ]

स यत्रैताꣳ होतान्न्वाह । 'प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृते'ति तदध्वर्युः प्राङुदायन्न्वातनामानि जुहोत्येतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममन्तरा रक्षाꣳसि नाष्ट्रा न हन्न्युरिति तमेतत्पुरैवाहवनीयात्स्वाहाकारेणा-जुहवुस्तꣳ हुतमेव सन्तमग्न्नावजुहवुस्तथो ऽएवैनमेष ऽएत-त्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तꣳ हुतमेव सन्त-मग्नौ जुहोति ॥ १ ॥ 'समुद्राय[2] त्वा वाताय स्वाहे'ति । अयं वै समुद्रो योऽयम्पवत ऽएतस्म्माद्वै समुद्रात्सर्व्वे देवाः सर्व्वाणि भूतानि समुद्रवन्ति तस्म्मा ऽएवैनञ्जुहोति तस्म्मा दाह समुद्राय त्वा वाताय स्वाहा ॥ २ ॥ 'सरिराय[3] त्वा वाताय स्वाहे'ति । अयं वै सरिरो योऽयम्पवत ऽएत-स्म्माद्वै सरिरात्सर्व्वे देवाः सर्व्वाणि भूतानि सहेरते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह सरिराय त्वा वाताय स्वाहा ॥ ३ ॥ 'अनाधृष्ष्याय त्वा वाताय स्वाहा प्रातिधृष्ष्याय त्वा

(१) शु० य० सं० ३७. ७ । (२) शु० य० सं० ३८. ७ । (३) शु० य० सं० ३८. ७ । (४) शु० य० सं० ३८. ७ ।

व्वाताय स्वाहे'ति । अयं व्वा ऽअनाधृष्योऽप्रतिधृष्यो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहानाधृष्याय त्वा व्वाताय स्वाहा प्रतिधृष्याय त्वा व्वाताय स्वाहेति ॥ ४ ॥ '[1]अवस्यवे त्वा व्वाताय स्वाहाशिमिदाय त्वा व्वाताय स्वाहे'ति । अयं व्वा ऽअवस्युरशिमिदो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहावस्यवे त्वा व्वाताय स्वाहाशिमिदाय त्वा व्वाताय स्वाहेति ॥ ५ ॥ '[2]इन्द्राय त्वा व्वसुमते रुद्रवते स्वाहे'ति । अयं व्वा ऽइन्द्रो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेति व्वसुमते रुद्रवत ऽइति तदिन्द्रमेवानु व्वसूँश्च रुद्राँश्चाभजत्यथो प्रातःसवनस्य चैवैतन्माध्यन्दिनस्य च सवनस्य रूपङ्क्रियते ॥ ६ ॥ '[3]इन्द्राय त्वादित्यवते स्वाहे'ति । अयं व्वा ऽइन्द्रो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेत्यादित्यवत ऽइति तदिन्द्रमेवान्वादित्यानाभजत्यथो तृतीयसवनस्यैवैतद्रूपङ्क्रियते ॥ ७ ॥ '[4]इन्द्राय त्वाभिमातिघ्ने स्वाहे'ति । अयं व्वा ऽइन्द्रो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेत्यभिमातिघ्न ऽइति सपत्नो व्वा ऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्त्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार ऽएवमस्यैष ॥ ८ ॥ '[5]सवित्रे त्व ऽऋभुमते विभुमते व्वाजवते स्वाहे'ति । अयं व्वै सविता योऽयम्पवते तस्मा

(१) शु० य० सं० ३८. ७। (२) शु० य० सं० ३८. ८। (३) शु० य० सं० ३८. ८। (४) शु० य० सं० ३८. ८। (५) शु० य० सं० ३८. ८।

ऽएवैनञ्जुहोति तस्म्मादाह सवित्रे त्वेत्त्र्भुमते विभुमते वाजवत ऽइति तदस्मिन्विश्श्वान्देवानन्न्वाभजति ॥ ९ ॥ 'बृहस्प्पतये त्वा विश्श्वदेव्व्यावते स्वाहे'ति । अयं वै बृहस्प्पतिर्य्योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह बृहस्प्पतये त्वेति विश्श्वदेव्व्यावत ऽइति तदस्मिन्विश्श्वान्त्सर्वान्देवानन्न्वाभजति ॥ १० ॥ 'यमाय त्वाङ्गिरस्वते पितृमते स्वाहे'ति । अयं वै यमो योऽयम्पवते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह यमाय त्वेत्त्यङ्गिरस्वते पितृमत ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्त्रया वै पितरस्तानेवैतदन्न्वाभजति ॥ ११ ॥ द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः सँव्वत्सरस्य सँव्वत्सर ऽएष य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्माद्द्वादश भवन्ति ॥ १२ ॥ अथोपयमन्न्या महावीर ऽआनयति । 'स्वाहा घर्म्मायेत्त्येष वै घर्म्मो य ऽएष तपत्त्येष ऽउ प्प्रवर्ग्ग्यस्तदेतमेवैतत्प्रीणाति तस्म्मादाह स्वाहा घर्म्मायेत्त्यवरर्द्धं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १३ ॥ आनीते जपति । 'स्वाहा घर्म्मः पित्र' ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्त्रया वै पितरस्तानेवैतत्प्रीणात्त्यवरर्द्धं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ नानुवाक्क्या-

(१) शु० य० सं० ३८, ८। (२) शु० य० सं० ३८, ९।

* अत्र "रसो व्यक्षरत्त्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते।

(३) शु० य० सं० ३८, ९। (४) शु० य० सं० ३८, ६।

मन्न्वाह । सकृद्ध ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्क्या-मन्न्वाहातिक्रम्स्याश्श्राव्ध्याह घर्म्मस्य यजेति व्वषट्कृते जुहोति ॥ १५ ॥ 'व्विश्श्वा ऽआशा दक्षिणस'दिति । सर्व्वा ऽआशा दक्षिणसदित्त्येवैतदाह 'व्विश्श्वान्देवानयाडिहे'ति सर्व्वान्देवानयाक्षीदिहेत्त्येवैतदाह 'स्वाहाकृतस्य घर्म्मस्य मधोः पिबतमश्श्विने'त्त्यश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्य-ज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणात्त्यवरर्द्धं स्वाहाकार-ङ्करोति परान्देवतामसावेव बन्धुः ॥ १६ ॥ अथ हुत्त्वो-र्द्ध्वमुत्कम्पयति । 'दिवि धा ऽइमं य्यज्ञमिमं य्यज्ञन्दिवि धा' ऽइत्त्यसौ वा ऽआदित्त्यो घर्म्मो यज्ञो दिवि वा ऽएष हितो दिवि प्प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्मादाह दिवि धा ऽइमं य्यज्ञमिमं य्यज्ञन्दिवि धा ऽइत्त्यनुवषट्कृते जुहोति ॥ १७ ॥ 'स्वाहाग्नये यज्ञियाये'ति । तत्स्विष्टकृद्भाजन-मग्निर्हि स्विष्टकृ'च्छं य्यजुर्भ्यः' ऽइति यजुर्भिर्ह्येषोऽ-स्मिँल्लोके प्प्रतिष्ठितस्तान्न्येवैतत्प्रीणात्त्यवरर्द्धं स्वाहा-कारङ्करोति परान्देवतामसावेव बन्धुः ॥ १८ ॥ अथ ब्ब्रह्मा-नुमन्त्रयते । ब्ब्रह्मा वा ऽऋत्त्विजाम्भिषक्तमस्तद्य ऽएवऽ-र्त्त्विजाम्भिषक्तमस्तेनैवैतद्यज्ञम्भिषज्यति ॥ १९ ॥ 'अ-श्श्विना घर्म्मम्पात'मिति । अश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणाति ॥ २० ॥

(१) शु० य० सं० ३८. १०। (२) शु० य० सं० ३८. १०। (३) शु० य० सं० ३८. १०। (४) शु० य० सं० ३८. ११। (५) शु० य० सं० ३८. ११। (६) शु० य० सं० ३८. ११। (७) "स्तेनैवैनमेत०" इति 'ग' 'ज' पुस्तकयोः पाठः। (८) शु० य० सं० ३८. १२।

'हार्द्वानेमहर्द्विवाभिरूतिभि'रिति । अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्यति ॥ २१ ॥ 'तन्त्रायिण' इति । एष वै तन्त्रायी य एष तपत्येष हीमाँल्लोकाँस्तन्त्रमिवानुसञ्चरत्येष उ प्रवर्ग्य-स्तदेतमेवैतत्प्रीणाति तस्मादाह तन्त्रायिण इति ॥ २२ ॥ 'नमो द्यावापृथिवीभ्या'मिति । तदाभ्यान्द्यावापृथि-वीभ्यान्निह्नुते ययोरिदꣳ सर्वमधि ॥ २३ ॥ अथ यज-मानः । यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञम्भिषज्यति ॥२४॥ 'अपातामश्विना घर्म्म'मिति । अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति ॥ २५ ॥ 'अनु द्यावापृथिवी अमꣳसाता'मिति । तदिमे द्यावा-पृथिवी आह ययोरिदꣳ सर्वमधी'हैव रातयः सन्त्विती-हैव नो धनानि सन्त्वित्येवैतदाह ॥ २६ ॥ अथ पिन्व-मानमनुमन्त्रयते *। 'इषे पिन्वस्वे'ति वृष्ट्यै तदाह यदाहेषे पिन्वस्वेत्यू'र्जे पिन्वस्वे'ति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह 'ब्रह्मणे पिन्वस्वे'ति तद्ब्रह्मण आह 'क्षत्राय पिन्वस्वे'ति तत्क्षत्रायाह 'द्यावापृथिवीभ्याम्पिन्व-स्वे'ति तदाभ्यान्द्यावापृथिवीभ्यामाह ययोरिदꣳ सर्वमधि ॥ २७ ॥ स यदूर्ध्वꣳ पिन्वते । तद्यजमानाय पिन्वते

(१) शु० य० सं० ३८. १२। (२) शु० य० सं० ३८. १२। (३) शु० य० सं० ३८. १२। (४) शु० य० सं० ३८. १३। (५) शु० य० सं० ३८. १३। (६) शु० य० सं० ३८. १३।

* का० श्रौ० सू० २६. ६. ८।

(७) शु० य० सं० ३८. १४। (८) शु० य० सं० ३८. १४। (९) शु० य० सं० ३८. १४। (१०) शु० य० सं० ३८. १४। (११) शु० य० सं० ३८. १४।

यत्प्राङ् तद्देवेभ्यो यद्दक्षिणा तत्पितृभ्यो यत्प्रत्यङ् तत्पशुभ्यो यदुदङ् तत्प्रजाया ऽअनपराद्धन्त्वेवं यजमानस्योर्द्ध्वो ह्येव पिन्विन्त्वथ यान्दिशम्पिन्वते ताम्पिन्वते यदा शाम्यन्ति विप्रुषः ॥ २८ ॥ अथ प्राङिवोदङ्ङुत्क्रामति*। 'धर्म्मासि सुधर्म्मे'त्येष वै धर्म्मो य ऽएष तपत्येष हीदꣳ सर्वन्धारयत्येतेनेदꣳ सर्वन्धृतमेष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह धर्म्मासि सुधर्म्मेति ॥ २९ ॥ अथ खरे सादयति । 'अमेन्यस्मे नृम्णानि धारये'त्यक्रुध्यन्नो धनानि धारयेत्येवैतदाह 'ब्रह्म धारय क्षत्रन्धारय विशन्धारये'त्येतत्सर्वन्धारयेत्येवैतदाह ॥३०॥ अथ शाकलैर्जुहोति । प्राणा वै शाकलाः प्राणानेवास्मिन्नेतद्दधाति ॥ ३१ ॥ 'स्वाहा पूष्णे शरस' इति । अयं वै पूषा योऽयम्पवत ऽएष हीदꣳ सर्वम्पुष्यत्येष ऽउ प्राणः प्राणमेवास्मिन्नेतद्दधाति तस्मादाह स्वाहा पूष्णे शरस ऽइत्यवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुर्हुत्वा मध्यमे परिधा ऽउपश्रयति ॥ ३२ ॥ 'स्वाहा ग्रावभ्य' ऽइति । प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधा ऽउपश्रयति ॥ ३३ ॥ 'स्वाहा प्रतिरवेभ्य' ऽइति । प्राणा वै प्रतिरवाः प्राणान्हीदꣳ सर्वम्प्रतिरत-

---

(१) "न्वेव" इति 'ग' 'ज' पुस्तकयोः । (२) "पिन्वत्याथ" इति 'ग' 'ज' पुस्तकयोः ।

* 'धर्म्मासीत्युत्क्रामत्युत्तरपूर्वार्द्धम्' का० श्रौ० सू० २६. ६. ९ ) इति ।

( ३ ) शु० य० सं० ३८. १४ । ( ४ ) शु० य० सं० ३८. १४ । ( ५ ) शु० य० सं० ३८. १४ । ( ६ ) शु० य० सं० ३८. १५ ।

(७) शु० य० सं० ३८. १५ । ( ८ ) शु० य० सं० ३८. १५ ।

न्प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधा ऽउपश्रयति ॥ ३४ ॥ 'स्वाहा पितृभ्य ऽऊर्ध्वबर्हिर्भ्यो घर्म्मपावभ्य' ऽइति । अहुत्वैवोदङ्ङीक्षमाणो दक्षिणार्द्धे बर्हिष ऽउपगूहति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्त्रया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्प्रेक्षते सकृद्धु ह्येव पराञ्चः पितरः ॥ ३५ ॥ 'स्वाहा द्यावापृथिवीभ्या'मिति । प्प्राणोदानौ वै द्यावापृथिवी प्प्राणोदानावेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधा ऽउपश्रयति ॥ ३६ ॥ 'स्वाहा विश्वेभ्यो देवेभ्य ऽइति । प्प्राणा वै विश्वे देवाः प्प्राणानेवास्मिन्नेतद्दधाति हुत्वा मध्यमे परिधा ऽउपश्रयति ॥ ३७ ॥ 'स्वाहा रुद्राय रुद्रहूतय' ऽइति । अहुत्वैव दक्षिणेक्षमाणः प्प्रतिप्प्रस्थात्रे प्प्रयच्छति तः स ऽउत्तरतः शालाया ऽउदङ्ङग्निरस्यत्येषा ह्येतस्य देवस्य दिक्स्वायामेवैनमेतद्दिशि प्प्रीणात्यथ यन्न प्प्रेक्षते नेद्दमा रुद्रो हिनसदिति ॥ ३८ ॥ सप्तैता ऽआहुतयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ ३९ ॥ अथ महावीरादुपयमन्यामप्रत्यानयति । 'स्वाहा सञ्ज्योतिषा ज्योति'रिति ज्योतिर्वा ऽइतरस्मिन्पयो भवति ज्योतिरितरस्यान्ते ह्येतदुभे ज्योतिषी सङ्गच्छेते ऽअवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः

* अत्र "रसो व्यक्षरत्स" इत्यधिकः पाठः 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

(१) शु० य० सं० ३८. १५ । (२) शु० य० सं० ३८. १५ । (३) शु० य० सं० ३८. १५ । (४) शु० य० सं० ३८. १६ । (५) शु० य० सं० ३८. १६ ।

॥ ४० ॥ * अथ रौहिणौ जुहोति । 'अहः केतुना जुषताꣳ सुज्ज्योतिर्ज्ज्योतिषा स्वाहे'त्यसावेव बन्धू 'रात्रिः केतुना जुषताꣳ सुज्ज्योतिर्ज्ज्योतिषा स्वाहे'त्यसावेव बन्धुः ॥ ४१ ॥ अथ यजमानाय घर्म्मोच्छिष्टम्प्रयच्छति । स ऽउपहवमिष्ट्वा भक्षयति 'मधु हुतमिन्द्रतमे ऽअग्नावि'ति मधु हुतमिन्द्रियवत्तमेऽग्नावित्येवैतदाहा'श्याम ते देव घर्म्म नमस्ते ऽअस्तु मा मा हिꣳसी'रित्याशिषमेवैतदाशास्ते ॥ ४२ ॥ अथ दक्षिणतः सिकता ऽउपकीर्ण्णा भवन्ति । तन्मार्ज्जयन्ते य ऽएव मार्ज्जालीये बन्धुः सोऽत्रानुप्प्रहरति शाकलानथोपसदा चरन्त्येतद्वु यज्ञस्य शिरः संस्कृतं यथा यथैनन्तदश्विनौ प्प्रत्यधत्ताम् ॥ ४३ ॥ तन्न प्प्रथमयज्ञे प्प्रवृञ्ज्यात् । एनस्यꣳ हि तदुथो नेन्म ऽइन्द्रः शिरश्छिनदिति द्वितीये वैव तृतीये वापशीर्ष्ण्णा ह्येवाग्ग्रे यज्ञेन देवा ऽअर्चन्तः श्राम्म्यन्तश्चेरुस्तस्म्माद्द्वितीये वैव तृतीये वाथो तप्तो वा ऽएष शुशुचानो भवति ॥ ४४ ॥ तं यत्प्रथमयज्ञे प्प्रवृञ्ज्यात् । एषोऽस्य तप्तः शुशुचानः प्प्रजाश्च पशूꣳश्च प्प्रदहेदुथो ऽआयुः प्प्रमायुको यजमानः स्यात्तस्म्माद्द्वितीये वैव तृतीये वा ॥ ४५ ॥ तन्न सर्वस्म्मा ऽइव प्प्रवृञ्ज्यात् । सर्वं वै प्प्रवर्ग्यो नेत्सर्वस्म्मा ऽइव सर्वङ्करवाणीति यो न्वेव ज्ञातस्तस्म्मै प्प्रवृञ्ज्याद्यो वास्य प्प्रियः स्याद्यो वानूचानोऽनूक्तेनैनम्प्राप्प्नुयात् ॥ ४६ ॥

* अत्र शतम् ७०००।

(१) शु० य० सं० ३८. १६। (२) शु० य० सं० ३८. १६। (३) शु० य० सं० ३८. १६। (४) शु० य० सं० ३८. १६।

सहस्रे प्प्रवृञ्ज्यात् । सर्वं वै सहस्रꣳ सर्वमेष सर्व-
वेदसे प्प्रवृञ्ज्यात्सर्वं वै सर्ववेदसꣳ सर्वमेष विश्व-
जिति सर्वपृष्ठे प्प्रवृञ्ज्यात्सर्वं वै विश्वजित्सर्वपृष्ठꣳ
सर्वमेष वाजपेये राजसूये प्प्रवृञ्ज्यात्सर्वꣳ हि तत्सत्रे
प्प्रवृञ्ज्यात्सर्वं वै सत्रꣳ सर्वमेष ऽएतान्न्यस्य प्प्रवर्ज्जना-
न्न्यतो नान्न्यत्र ॥ ४७ ॥ तदाहुः । यदुपशिरा ऽअप्प्रव-
र्ग्योऽथ केनास्याग्निहोत्रꣳ शीर्षण्वद्भवतीत्त्याहवनीयेनेति
ब्ब्रूयात्कथन्दर्शपूर्णमासावित्त्याज्येन च पुरोडाशेन चेति
ब्ब्रूयात्कथञ्चातुर्म्मास्यानीति पयस्ययेति ब्ब्रूयात्कथम्पशु-
बन्ध ऽइति पशुना च पुरोडाशेन चेति ब्ब्रूयात्कथꣳ
सौम्म्योऽध्वर ऽइति हविर्द्धानेनेति ब्ब्रूयात् ॥ ४८ ॥ अथो
ऽआहुः । यज्ञस्य शीर्षच्छिन्नस्य शिर ऽएतद्देवाः प्प्रत्त्य-
दधुर्य्यदातिथ्यन्न ह वा ऽअस्यापशीर्ष्णा केन चन यज्ञेनेष्टं-
म्भवति य ऽएवमेतद्वेद ॥ ४९ ॥ तदाहुः । यत्प्रणीताः
प्प्रणयन्ति यज्ञेऽथ कस्मादत्र न प्प्रणयतीति शिरो वा
ऽएतद्यज्ञस्य यत्प्रणीताः शिरः प्प्रवर्ग्यो नेच्छिरसा शिरो-
ब्भ्यारोहयाणीति ॥ ५० ॥ तदाहुः । यत्प्रयाजानुयाजा
ऽअन्न्यत्र भवन्त्यथ कस्मादत्र न भवन्तीति प्प्राणा वै
प्प्रयाजानुयाजाः प्प्राणा ऽअवकाशाः प्प्राणाः शाकला
नेत्प्राणैः प्प्राणानब्भ्यारोहयाणीति ॥ ५१ ॥ तदाहुः ।
यदाज्ज्यभागावन्न्यत्र जुह्वत्यथ कस्मादत्र न जुहोतीति
चक्षुषी वा ऽएते यज्ञस्य यदाज्ज्यभागौ चक्षुषी रौहिणौ
नेच्चक्षुषा चक्षुरब्भ्यारोहयाणीति ॥ ५२ ॥ तदाहुः । यद्वा-

नस्प्पत्त्यैर्द्देवेब्भ्यो जुहत्यथ कस्म्मादेतम्मृन्न्मयेनैव जुहोतीति यज्ञस्य शीर्षच्छिन्नस्य रसो ऽव्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्न्मृदियन्तद्यद्दापोऽसौ तन्न्मृदश्च्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ५३ ॥ स यद्दानस्प्पत्त्यः स्यात्। प्रदह्येत यद्धिरण्णमयः स्यात्प्रलीयेत यल्लोहमयः स्यात्प्रसिच्च्येत यदयस्म्मयः स्यात्प्रदहेत्परीशासावत्थैष ऽएवैतस्म्मा ऽअतिष्ठत तस्म्मादेतम्मृन्न्मयेनैव जुहोति ॥ ५४ ॥ अथैतद्वै। आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ५५ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

—०—

[ प्रवर्ग्योत्सादनम् ]

स वै तृतीयेऽहन्। षष्ठे वा द्वादशे वा प्प्रवर्ग्योपसदौ समस्य प्प्रवर्ग्ग्यमुत्सादयत्युत्सन्नमिव हीदꣳ शिरस्तद्यदेतमभितो भवति तत्सर्वꣳ समादायाग्ग्रेण शालास्तद्यदेतमभितो भवति तत्सर्वꣳ समादायाग्ग्रेण शाला- मन्तर्वेद्युपसमायन्ति ॥ १० ॥ अथाग्नीद्ध्रः। आहवनीये* त्रीञ्छालाकानुपकल्प्पयते तेषामेकमुज्वलय्य मुखदग्घ्रे धारयमाणो जुहोति यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्सेमाँ-

* तथा च कात्यायनः—'आहवनीये त्रीञ्छालाकान्प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोमं प्रमाणेषु' ( का० श्रौ० सू० २६. ७. ३ ) इति।

ह्लोकानाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ २ ॥ अथ षन्मुखदघ्ने । उपरीव वै तद्यन्मुखदघ्न-मुपरीव तद्यदसौ लोकस्तद्यामुँल्लोकꣳ शुगाविशत्तयैवैनमे-तच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ 'षा ते घर्म्म दिव्या शु'गिति । षैव दिव्या शु'ग्या गायत्र्याꣳ हविर्द्धान' इति षैव गायत्र्याꣳ हविर्द्धाने 'सा त ऽआप्प्यायतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ४ ॥ अथ द्वितीयमुज्ज्वलय्य । नाभिदघ्ने धारयमाणो जुहोति मद्ध्यमिव वै तद्यन्नाभिदघ्नम्मद्ध्यमिवान्तरिक्षलोक-स्तद्यान्तरिक्षलोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ 'षा ते घर्म्मान्तरिक्षे शु'गिति । षैवा-न्तरिक्षे शु'ग्या त्रिष्टुब्भ्याग्नीद्ध्र' ऽइति षैव त्रिष्टुब्भ्याग्नीद्ध्रे 'सा त ऽआप्प्यायतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरो-हितमिवास्ति ॥६॥ [अर्धः प्रपाठकः ॥ ६१ ॥] अथ तृतीयम-भ्याधाय। तस्मिन्नासीनो जुहोत्यध ऽइव वै तद्यदासीनोऽध ऽइव तद्यदयँल्लोकस्तद्येमँल्लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ७ ॥ 'षा ते घर्म्म पृथिव्व्याꣳ शु'गिति । षैव पृथिव्व्याꣳ शु'ग्या जगत्याꣳ सदस्ये'ति षैव जगत्याꣳ सदस्या 'सा त ऽआप्प्यायतान्निष्ट्यायता-न्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ८ ॥ अथो-

(१) शु० य० सं० ३८. १८। (२) शु० य० सं० ३८. १८। (३) शु० य० सं० ३८. १८। (४) शु० य० सं० ३८. १८। (५) शु० य० सं० ३८. १८। (६) शु० य० सं० ३८. १८। (७) शु० य० सं० ३८. १८। (८) शु० य० सं० ३८. १८। (९) शु० य० सं० ३८. १८।

पनिष्क्रामति । 'क्षत्त्रस्य त्वा परस्पाये'त्येतद्वै दैवं क्षत्त्रं यऽएष तपत्यस्य त्वा मानुषस्य क्षत्त्रस्य परस्पत्वायेत्त्येवैतदाह 'ब्ब्रह्मणस्तन्वस्पाही'ति ब्ब्रह्मण ऽआत्मानङ्गोपायेत्त्येवैतदाह 'व्विशस्त्वा धर्म्मणा व्वय'मिति यज्ञो वै व्विड्यज्ञस्य त्वारिष्ट्या ऽइत्त्येवैतदाहा'नुक्क्रामाम सुविताय नव्यस' ऽइति यज्ञस्य त्वारिष्ट्या ऽअह्वलाया ऽइत्त्येवैतदाह ॥ ९ ॥ अथाह साम गायेति । साम ब्ब्रूहीति वा गायेति त्वेव ब्ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिमान्बहिर्द्धा यज्ञाच्छरीरान्नाष्ट्रा रक्षाᳪंसि हिनसन्निति साम हि नाष्ट्राणाᳪं रक्षसामपहन्ता ॥ १० ॥ आग्नेय्याङ्गायति । अग्निर्हि रक्षसामपहन्तातिच्छन्दसि गायत्त्येषा वै सर्व्वाणि छन्दाᳪंसि यदतिच्छन्दास्तस्मादतिच्छन्दसि गायति ॥ ११ ॥ स गायति । अग्निष्टपति प्प्रतिदहत्त्यहावोऽहाव ऽइति तन्नाष्ट्रा ऽएवैतद्रक्षाᳪंस्यतोऽपहन्ति ॥ १२ ॥ त ऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्ग्रेणाग्नीध्रमेषा हि यज्ञस्य द्वाः स यस्यान्ततो दिश्यापो भवन्ति तद्यन्ति ॥ १३ ॥ तं व्वै परिष्यन्द ऽउत्सादयेत् । तप्तो वा ऽएष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुग्गृच्छेद्यदप्प्सूत्सादयेदपोऽस्य शुग्गृच्छेदथ यत्परिष्यन्द ऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यदहाप्प्सु न प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वा ऽआप-

(१) शु॰ य॰ सं॰ ३८. १९ । (२) "परस्पाये॰" इति 'ग' 'ज' पुस्तकयोः । (३) शु॰ य॰ सं॰ ३८. १९ । (४) शु॰ य॰ सं॰ ३८. १९ । (५) शु॰ य॰ सं॰ ३८. १९ । (६) "वै तद॰" इति 'ग' 'ज' पुस्तकयोः ।

स्तेनो ऽइमान्न हिनस्ति तस्मात्परिष्ष्यन्द ऽउत्सादयेत् ॥ १४ ॥ उत्तरवेदौ त्वेवोत्सादयेत् । यज्ञो वा ऽउत्तरवेदिः शिरः प्प्रवर्ग्ग्यो यज्ञ ऽएवैतच्छिरः प्प्रतिदधाति ॥ १५ ॥ उत्तरनाब्भ्या सꣳस्पृष्टम् । प्रथमम्प्रवर्ग्ग्यमुत्सादयति वाग्ग्वा ऽउत्तरनाभिः शिरः प्प्रवर्ग्ग्यः शीर्षस्तद्वाचन्दधाति ॥ १६ ॥ 'चतुःस्रक्ति'रिति । एष वै चतुःस्रक्तिर्य्य ऽएष तपति दिशो ह्येतस्य स्रक्तयस्तस्मादाह चतुःस्रक्तिरिति ॥ १७ ॥ '[2]नाभिर्ऋतस्य सप्प्रथा' ऽइति । सत्यं वा ऽऋतꣳ सत्यस्य नाभिः सप्प्रथा ऽइत्येवैतदाह '[3]स नो विश्श्वायुः सप्प्रथा' ऽइति स नः सर्व्वायुः सप्प्रथा ऽइत्येवैतदाह ॥ १८ ॥ '[4]अपै द्वेषो ऽअप ह्वर' ऽइति । नात्र तिरोहित-मिवास्त्य'[5]न्यव्रतस्य सश्चिमे'त्यन्यद्वा ऽएतस्य व्रतमन्यन्म-नुष्याणान्तस्मादाहान्यव्रतस्य सश्चिमेत्येवमितरौ प्प्राश्नौ तत्त्रिवृत्त्रिवृद्धीदꣳ शिरः ॥ १९ ॥ पुरस्तादुपशयाम्मृदम् । माꣳसमेवास्मिन्नेतद्दधाति तदभितः परीशासौ * बाहू ऽएवास्मिन्नेतद्दधात्यभितः परे रौहिणहवन्यौ स्रुचौ हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥ उत्तरतोऽब्भ्रिम् † । तद्धि तस्या ऽआयतनन्दक्षिणतः सम्म्राडासन्दीन्तद्धि तस्या ऽआयतनमुत्तरतः कृष्णाजिनन्तद्धि तस्यायतनꣳ सर्व्वतो धवित्राणि ‡ प्प्राणा वै धवित्राणि प्प्राणानेवास्मिन्नेतद्द-

(१) शु० य० सं० ३८. २०। (२) शु० य० सं० ३८. २०। (३) शु० य सं० ३८. २०। (४) शु० य० सं० ३८. २०। (५) शु० य० सं० ३८. २०।

* 'परीशासावभितः' ( का० श्रौ० सू० २६. ७. १७ ) इति।

† 'अभ्रिमुत्तरतः' ( का० सू० २६. ७. १९ ) इति।

‡ का० श्रौ० सू० २६. ७. २२।

धाति त्रीणि भवन्ति त्रयो वै प्प्राणाः प्प्राण ऽउदानो व्व्यानस्तानेवास्मिन्नेतद्दधाति ॥२१॥ अथैतद्रज्जुसन्दानम् । उपयमन्न्यामाधाय पश्चात्प्राचीमासादयत्त्युदरमेवास्मिन्नेतद्दधाति तदभितः पिन्न्वने ऽआण्डावेवास्मिन्नेतद्दधात्याण्डाब्भ्याᳬं हि व्वृषा पिन्न्वते पश्चात्स्थूणामयूखमूरू ऽएवास्मिन्नेतद्दधाति पश्चाद्रौहिणकपाले जानुनी ऽएवास्मिन्नेतद्दधाति ते यदेककपाले भवत ऽएककपाले ऽइव हीमे जानुनी पश्चाद्धृष्टी पादावेवास्मिन्नेतद्दधाति पादाब्भ्याᳬं हि धृष्टम्प्रहरत्त्युत्तरतः खरौ प्प्रचरणीयौ तद्धि तयोरायतनन्दक्षिणतो मार्ज्जालीयन्तद्धि तस्यायतनम् ॥२२॥ अथास्मिन्नपय ऽआनयति । 'घर्म्मैतत्ते[1] पुरीष'मित्त्यन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधाति 'तेन[2] वर्द्धस्व चा च प्प्यायस्वे'ति नात्र तिरोहितमिवास्ति 'वर्द्धिषीमहि[3] च वयमा च प्प्यासिषीमही'त्त्याशिषमेवैतदाशास्ते ॥ २३ ॥ स वै न सर्व्वमिवानयेत् । नेद्यजमानात्परागन्नमसदित्त्यर्द्धं वा भूयो वा परिशिनष्ट्टि तस्मिन्नपराह्णे यजमानाय व्रतमब्भ्युत्सिच्च्य प्प्रयच्छति तद्यजमान ऽएवैतदन्नाद्यन्दधाति तथो ह यजमानान्न परागन्नम्भवति ॥ २४ ॥ अथैनमद्भिः परिषिञ्चति । शान्तिर्व्वा ऽआपः शमयत्त्येवैनमेतत्सर्व्वतः परिषिञ्चति सर्व्वत ऽएवैनमेतच्छमयति त्रिष्क्कृत्वः परिषिञ्चति त्रिवृद्धि यज्ञः ॥ २५ ॥ अथाह

(१) शु॰ य॰ सं॰ ३८. २१। (२) शु॰ य॰ सं॰ ३८. २१। (३) शु॰ य॰ सं॰ ३८. २१।

वार्षाहरꣳ साम गायेति । एष वै वृषा हरिरेष ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह वार्षाहरꣳ साम गायेति ॥ २६ ॥ अथ चात्वाले मार्जयन्ते । '[1]सुमित्रिया न ऽआप ऽओषधयः सन्त्वि'त्यञ्जलिनाप ऽउपाचति वज्रो वा ऽआपो वज्रेणैवैतन्मित्रधेयङ्कुरुते '[2]दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ २७ ॥ अथ प्राञ्चिवोदङ्ङुत्क्रामति । '[3]उद्वयन्तमसस्परी'ति पाप्मा वै तमः पाप्मानमेव तमोऽपहते '[4]स्वः पश्यन्त ऽउत्तर'मित्ययं वै लोकोऽस्य ऽउत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति '[5]देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तम'मिति स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमꣳ स्वर्ग ऽएव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीये समिधमभ्यादधाति '[6]समिदसि तेजोऽसि तेजो मयि धेही'त्याशिषमेवैतदाशास्ते ॥ २८ ॥ अथ प्रसुते दधिघर्मेण चरन्ति । यज्ञो वै सोमः शिरः प्रवर्ग्यो यज्ञ ऽएवैतच्छिरः प्रतिदधाति माध्यन्दिने सवन ऽएतद्वा ऽइन्द्रस्य निष्केवल्यꣳ सवनं यन्माध्यन्दिनꣳ सवनꣳ स्व ऽएवैनमेतद्भागे प्रीणाति स्तुते माध्यन्दिने पवमाने प्राणो वै माध्यन्दिनः पवमानः प्राणमेवास्मिन्नेतद्धात्यग्निहोत्रहवण्या मुखं वा ऽएतद्यज्ञानां यदग्निहोत्रꣳ

(१) शु० य० सं० ३८.२३। (२) शु० य० सं० ३८.२३। (३) शु० य० सं० ३८.२४। (४) शु० य० सं० ३८.२४। (५) शु० य० सं० ३८.२४। (६) शु० य० सं० ३८.२५।

शीर्षंस्तन्मुखन्दधाति ॥ २९ ॥ स ऽआनीयमान ऽआह । होतर्व्वदस्व यत्ते व्वाच्यमिति व्वदते ह्यत्र होताथोपोत्तिष्ठन्नाह 'इश्रातꣳ हवि'रिति श्रातꣳ हि भवत्यतिक्रम्याश्रावयाह दधिघर्म्मस्य यजेति व्वषट्कृते जुहोत्यनुवषट्कृत ऽआह-रति भक्षन्तं यजमानाय प्प्रयच्छति ॥ ३० ॥ स ऽउप-हवमिष्ट्वा भक्षयति । 'मयि त्यदिन्द्रियम्बृह'दित्येतद्वा ऽइन्द्रियम्बृहद्य ऽएष तपति 'मयि दक्षो मयि क्रतु'रिति क्रतूदक्षावेवात्मन्धत्ते 'घर्म्मस्त्रिशुग्विराजती'ति घर्म्मो ह्येष त्रिशुग्विराजति 'व्विराजा ज्योतिषा सहे'ति व्विराजा ह्येष ज्योतिषा सह 'ब्ब्रह्मणा तेजसा सहे'ति ब्ब्रह्मणा ह्येष तेजसा सह 'पयसो रेत ऽआभृत'मिति पयसो ह्येत-द्रेत ऽआभृत'न्तस्य दोहमशीमह्युत्तरामुत्तराꣳ समा'मित्या-शिषमेवैतदाशास्तेऽथ चात्वाले मार्जयन्तेऽसावेव बन्धुः ॥ ३१ ॥ अथातो दक्षिणानाम् । सुवर्ण्णꣳ हिरण्यꣳ शतमानम्ब्रह्मणे ददात्यासीनो वै ब्ब्रह्मा यशः शयानꣳ हिरण्यन्तस्मात्सुवर्ण्णꣳ हिरण्यꣳ शतमानम्ब्रह्मणे ददाति ॥ ३२ ॥ अथ यैषा घर्म्मदुघा । तामद्ध्वर्य्यवे ददाति तप्त ऽइव वै घर्म्मस्तप्तमिवाद्ध्वर्य्युर्न्निष्क्रामति तस्मात्तामद्ध्व-र्य्यवे ददाति ॥ ३३ ॥ अथ यैषा यजमानस्य व्रतदुघा । ताꣳ होत्रे ददाति यज्ञो वै होता यज्ञो यजमानस्तस्मा-त्ताꣳ होत्रे ददाति ॥ ३४ ॥ अथ यैषा पत्न्यै व्रतदुघा ।

---

(१) ऋ० सं० ८. ८. ३७। (२) शु० य० सं० ३८. २७। (३) शु० य० सं० ३८. २७। (४) शु० य० सं० ३८. २७। (५) शु० य० सं० ३८. २७। (६) शु० य० सं० ३८. २७। (७) शु० य० सं० ३८. २८। (८) शु० य० सं० ३८. २८।

तामुद्गातृब्भ्यो ददाति पत्नीकर्म्मैव वा ऽएतेऽत्र कुर्वन्ति यदुद्गातारस्तस्मात्तामुद्गातृब्भ्यो ददाति ॥ ३५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्व्रतचर्य्या या सृष्टौ ॥ ३६ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—o—

[ घर्मभेदे प्रायश्चित्तम्, प्रवर्ग्यप्रशंसा च ]

सर्व्वेषां व्वा ऽएष भूतानाम् । सर्व्वेषान्देवानामात्मा यद्यज्ञस्तस्य समृद्धिमनु यजमानः प्प्रजया पशुभिर्ऋध्यते वि व्वा ऽएष प्प्रजया पशुभिर्ऋध्यते यस्य घर्म्मो व्विदीर्य्यते तत्र प्प्रायश्चित्तिः ॥ १ ॥ पूर्ण्णाहुतिञ्जुहोति । सर्वं व्वै पूर्ण्णꣳ सर्व्वेणैवैतद्भिषज्यति यत्किञ्च व्विवृढं रुयज्ञस्य ॥ २ ॥ 'स्व्वाहा[1] प्प्राणेब्भ्यः साधिपतिकेब्भ्य' ऽइति । मनो वै प्प्राणानामधिपतिर्म्मनसि हि सर्व्वे प्प्राणाः प्प्रतिष्ठितास्तन्मनसैवैतद्भिषज्यति यत्किञ्च व्विवृढं रुयज्ञस्य ॥ ३ ॥ 'पृथिव्व्यै[2] स्वाहे'ति । पृथिवी वै सर्व्वेषान्देवानामायतनन्तत्सर्व्वाभिरेवैतद्देवताभिर्ब्भिषज्यति यत्किञ्च व्विवृढं रुयज्ञस्य ॥ ४ ॥ 'अग्ग्नये[3] स्वाहे'ति । अग्निर्वै सर्व्वेषान्देवानामात्मा तत्सर्व्वाभिरेवैतद्देवताभिर्ब्भिषज्ज्यति यत्किञ्च व्विवृढं रुयज्ञस्य ॥ ५ ॥ 'अन्तरिक्षाय[4] स्वाहे'ति । अन्तरिक्षं वै सर्व्वेषान्देवानामायतनन्तत्सर्व्वाभि-

(१) शु० य० सं० ३९. १ । (२) शु० य० सं० ३९. १ । (३) शु० य० सं० ३९. १ । (४) शु० य० सं० ३९. १ ।

रेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ६ ॥ 'वायवे स्वाहे'ति। वायुर्वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ७ ॥ 'दिवे[2] स्वाहे'ति। द्यौर्वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ८ ॥ 'सूर्याय[3] स्वाहे'ति। सूर्यो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ९ ॥ 'दिग्भ्यः[4] स्वाहे'ति। दिशो वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १० ॥ 'चन्द्राय[5] स्वाहे'ति। चन्द्रो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ११ ॥ 'नक्षत्रेभ्यः[6] स्वाहे'ति। नक्षत्राणि वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १२ ॥ 'अद्भ्यः[7] स्वाहे'ति। आपो वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १३ ॥ 'वरुणाय[8] स्वाहे'ति। वरुणो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १४ ॥ 'नाभ्यै[9] स्वाहा पूताय स्वाहे'ति। अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्ज्यति ॥ १५ ॥

---

(१) शु० य० सं० ३९.१। (२) शु० य० सं० ३९.१। (३) शु० य० सं० ३९.१। (४) शु० य० सं० ३९.२। (५) शु० य० सं० ३९.२। (६) शु० य० सं० ३९.२। (७) शु० य०. सं० ३९.२। (८) शु० य० सं० ३९.२। (९) शु० य० सं० ३९.२।

त्रयोदशैता ऽआहुतयो भवन्ति । त्रयोदश वै मासाः सँवत्सरस्य सँवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्ज्यति ॥ १६ ॥ 'वाचे स्वाहे'ति । मुखमेवास्मिन्नेतद्दधाति '[२]प्राणाय स्वाहा प्राणाय स्वाहे'ति नासिके ऽएवास्मिन्नेतद्दधाति '[३]चक्षुषे स्वाहा चक्षुषे स्वाहे'त्यक्षिणी ऽएवास्मिन्नेतद्दधाति '[४]श्रोत्राय स्वाहा श्रोत्राय स्वाहे'ति कर्णावेवास्मिन्नेतद्दधाति ॥ १७ ॥ सप्तैता ऽआहुतयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति पूर्णाहुतिमुत्तमाञ्जुहोति सर्वं वै पूर्णꣳ सर्वेणैवैतद्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १८ ॥ '[५]मनसः काममाकूति'मिति । मनसा वा ऽइदꣳ सर्वमाप्तन्तन्मनसैवैतद्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य ॥ १९ ॥ '[६]वाचꣳ सत्यमशीये'ति । वाचा वा ऽइदꣳ सर्वमाप्तन्तद्वाचैवैतद्भिषज्ज्यति यत्किञ्च विवृढं यज्ञस्य '[७]पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयताम्मयि स्वाहे'त्याशिषमेवैतदाशास्ते ॥ २० ॥ अथ तञ्चोपशयाञ्च पिष्ट्वा । मार्त्स्नया मृदा सꣳसृज्यावृता करोत्यावृता पचन्त्युत्सादनार्थमथ य ऽउपशययोर्दृढꣳ स्यात्तेन प्रचरेत् ॥ २१ ॥ सँवत्सरो वै प्रवर्ग्यः । सर्वं वै सँवत्सरः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तद्वसन्तो यदुद्वचितस्तद्ग्रीष्मो यत्पिन्वितस्त-

(१) शु० य० सं० ३९. ३। (२) शु० य० सं० ३९. ३। (३) शु० य० सं० ३९. ३। (४) शु० य० सं० ३९. ३। (५) शु० य० सं० ३९. ४। (६) शु० य० सं० ३९. ४। (७) शु० य० सं० ३९. ४।

र्षा यदा वै वर्षाः पिन्वन्तेऽथैनाः सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वा अस्मै वर्षा य एवमेतद्वेद ॥ २२ ॥ इमे वै लोकाः प्रवर्ग्यः । सर्वं वा इमे लोकाः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदयँल्लोको यदुद्यतस्तदन्तरिक्षलोको यत्पिन्वितस्तदसौ लोको यदा वा असौ लोकः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्मा असौ लोको य एवमेतद्वेद ॥ २३ ॥ एता वै देवताः प्रवर्ग्यः । अग्निर्वायुरादित्यः सर्वं वा एता देवताः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदग्निर्यदुद्यतस्तद्वायुर्यत्पिन्वितस्तदसावादित्यो यदा वा असावादित्यः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्मा असावादित्यो य एवमेतद्वेद ॥ २४ ॥ यजमानो वै प्रवर्ग्यः । तस्यामा प्रजा पशवः सर्वं वै यजमानः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदात्मा यदुद्यतस्तत्प्रजा यत्पिन्वितस्तत्पशवो यदा वै पशवः पिन्वन्तेऽथैनान्त्सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वा अस्मै पशवो य एवमेतद्वेद ॥ ॥ २५ ॥ अग्निहोत्रं वै प्रवर्ग्यः । सर्वं वा अग्निहोत्रꣳ सर्वम्प्रवर्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदुन्नीतन्तदुद्यतो यद्धुतन्तत्पिन्वितो यदा वा अग्निहोत्रम्पिन्वतेऽथैनत्सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा अस्मा अग्निहोत्रं य एवमेतद्वेद ॥ २६ ॥ दर्शपूर्णमासौ वै प्रवर्ग्यः । सर्वं वै दर्शपूर्णमासौ सर्व-

स्प्रवर्ग्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदुासन्नन्तद्वुचितो यद्धुतन्तत्पिन्न्वितो यदा वै दर्शपूर्ण्णमासौ पिन्न्वेते ऽअथैनौ सर्व्वे देवाः सर्व्वाणि भूतान्न्युपजीवन्ति पिन्न्वेते ह वा ऽअस्म्मै दर्शपूर्ण्णमासौ य ऽएवमेतद्वेद ॥ २७ ॥ चातुर्म्मास्यानि वै प्प्रवर्ग्ग्यः । सर्व्वं वै चातुर्म्मास्यानि सर्व्वंम्प्रवर्ग्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदुासन्नन्तद्वुचितो यद्धुतन्तत्पिन्न्वितो यदा वै चातुर्म्मास्यानि पिन्न्वन्तेऽथैनानि सर्व्वे देवाः सर्व्वाणि भूतान्न्युपजीवन्ति पिन्न्वन्ते ह वा ऽअस्म्मै चातुर्म्मास्यानि य ऽएवमेतद्वेद ॥ २८ ॥ पशुबन्धो वै प्प्रवर्ग्ग्यः । सर्व्वं वै पशुबन्धः सर्व्वम्प्रवर्ग्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदासन्नस्तद्वुचितो यद्धुतस्तत्पिन्न्वितो यदा वै पशुबन्धः पिन्न्वतेऽथैनः सर्व्वे देवाः सर्व्वाणि भूतान्न्युपजीवन्ति पिन्न्वते ह वा ऽअस्म्मै पशुबन्धो य ऽएवमेतद्वेद ॥ २९ ॥ सोमो वै प्प्रवर्ग्ग्यः । सर्व्वं वै सोमः सर्व्वम्प्रवर्ग्ग्यः स यदभिषुतस्तत्प्रवृक्तो यदुन्नीतस्तद्वुचितो यद्धुतस्तत्पिन्न्वितो यदा वै सोमः पिन्न्वतेऽथैनः सर्व्वे देवाः सर्व्वाणि भूतान्न्युपजीवन्ति पिन्न्वते ह वा ऽअस्म्मै सोमो य ऽएवमेतद्वेद न ह वा ऽअस्या प्प्रवर्ग्ग्येण केन चन यज्ञेनेष्टम्भवति य ऽएवमेतद्वेद ॥ ३० ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३१ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥२॥ कण्डिकासंख्या ॥१२२॥

इति तृतीयोऽध्यायः ॥ ३ ॥

[ बृहदारण्यकम् * ]

( कोऽसौ पाप्मा मृत्युः, कुतो वा तस्योद्भवः, केन वा तस्यातिक्रमणम्, कथं चेत्येतत्सर्वं स्पष्टयति )

द्वया ह प्राजापत्याः । देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्द्धन्त ॥ १ ॥ ते ह देवा ऊचुः । हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥ २ ॥ ते ह वाचमूचुः । त्वन्न उद्गायेति तथेति तेभ्यो वागुदगायद्यो वाचि भोगस्तन्देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ ३ ॥ अथ ह प्राणमूचुः । त्वन्न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तन्देवेभ्य आगायद्यत्कल्याणञ्जिघ्रति तदात्मने तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपञ्जिघ्रति स एव स पाप्मा ॥४॥ अथ ह चक्षुरूचुः । त्वन्न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायद्यश्चक्षुषि भोगस्तन्देवेभ्य आगायद्यत्कल्याणम्पश्यति तदात्मने तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपम्पश्यति स एव स पाप्मा ॥ ५ ॥ अथ ह श्रोत्रमूचुः । त्वन्न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः

* बृहत्त्वं चास्य ब्रह्मविद्याहेतूनामन्तरङ्गबहिरङ्गभूतानां बहूनामिहोपदेशात्, अर्थतो। ग्रन्थपरिमाणतश्च बहुत्वात् । आरण्यकत्वं चास्य नियमपूर्वकमरण्येऽनूच्यमानत्वात् ।

श्रोत्रे भोगस्तन्देवेभ्य ऽआगायद्यत्कल्याणꣳ शृणोति
तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति
तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेद-
मप्रतिरूपꣳ शृणोति स ऽएव स पाप्मा ॥ ६ ॥ अथ
ह मन ऽऊचुः । त्वन्न ऽउद्गायेति तथेति तेभ्यो
मन ऽउदगायद्यो मनसि भोगस्तन्देवेभ्य ऽआगायद्यत्क-
ल्याणꣳ सङ्कल्पयति तदात्मने तेऽविदुरनेन वै न ऽउद्गा-
त्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स
पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्पयति स ऽएव स पाप्मै-
वमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मना-
विध्यन् ॥ ७ ॥ अथ हेममासन्न्यम्प्राणमूचुः । त्वन्न ऽउ-
द्गायेति तथेति तेभ्य ऽएष प्राण ऽउदगायत्तेऽविदुरनेन
वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्स-
न्त्सं यथाश्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैव विध्वꣳ-
समाना विष्वञ्चो विनेशुस्ततो देवा ऽअभवन्पराऽसुरा भव-
त्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद
॥ ८ ॥ ते होचुः । क्व नु सोऽभूद्यो न ऽइत्थमसक्तेत्यय-
मास्येऽन्तरिति सोऽयास्य ऽआङ्गिरसोऽङ्गानाꣳ हि रसः
॥ ९ ॥ सा वा ऽएषा देवता । दूर्नाम दूरꣳ ह्यस्या
मृत्युर्दूरꣳ ह वा ऽअस्मान्मृत्युर्भवति य एवं वेद ॥ १० ॥
सा वा ऽएषा देवता । एतासान्देवतानाम्पाप्मानम्मृत्यु-
मपहृत्य यत्रासान्दिशामन्तस्तद्गमयाञ्चकार तदासाम्पाप्म-

(१) सन्त्स" इति 'ग' 'ज' पुस्तकयोः ।

नो विन्न्यदधात्तस्म्मान्न जनमियान्नान्तमियान्नेत्पाप्प्मानम्मृत्त्युमन्न्ववायानीति ॥ ११ ॥ सा वा ऽएषा देवता । एतासान्देवतानाम्पाप्प्मानम्मृत्त्युमपहत्त्याथैना मृत्त्युमत्त्यवहत् ॥ १२ ॥ स वै वाचमेव प्प्रथमामत्त्यवहत् । सा यदा मृत्त्युमत्त्यमुच्च्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्त्युमतिक्क्रान्तो दीप्प्यते ॥ १३ ॥ अथ प्प्राणमत्त्यवहत् । स यदा मृत्त्युमत्त्यमुच्च्यत स वायुरभवत्सोऽयं वायुः परेण मृत्त्युमतिक्क्रान्तः पवते ॥ १४ ॥ अथ चक्षुरत्त्यवहत् । तद्यदा मृत्त्युमत्त्यमुच्च्यत स ऽआदित्त्योऽभवत्सोऽसावादित्त्यः परेण मृत्त्युमतिक्क्रान्तस्तपति ॥ १५ ॥ अथ श्श्रोत्रमत्त्यवहत् । तद्यदा मृत्त्युमत्त्यमुच्च्यत ता दिशोऽभवँस्ता ऽइमा दिशः परेण मृत्त्युमतिक्क्रान्ताः ॥ १६ ॥ अथ मनोऽत्त्यवहत् । तद्यदा मृत्त्युमत्त्यमुच्च्यत स चन्द्रमा ऽअभवत्सोऽसौ चन्द्रः परेण मृत्त्युमतिक्क्रान्तो भात्त्येवꣳ ह वा ऽएनमेषा देवता मृत्त्युमतिवहति य ऽएवं वेद ॥१७॥ अथात्त्मनेऽन्नाद्यमागायत् । यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत ऽइह प्प्रातितिष्ठति ॥ १८ ॥ * ते देवा ऽअब्ब्रुवन् । एतावद्वा ऽइदꣳ सर्वं यदन्नन्तदात्त्मन ऽआगासीरनु नोऽस्स्मिन्नन्न ऽआभजस्वेति ते वै माभिसँविशतेति तथेति तꣳ समन्तम्परिण्ण्यविशन्त तस्म्मायदनेनान्नमत्ति तेनैतास्तृप्प्यन्त्येवꣳ ह वा ऽएनꣳ स्वा ऽअभिसँविशन्ति भर्त्ता स्वानाꣳ श्श्रेष्ठः पुर ऽएता भवत्त्यन्नादोऽधिपतिर्य

* अत्र शतम् ७१०० ।

ऽएवं व्वेद ॥ १९ ॥ य ऽउ हैवंव्विदम् । स्वेषु प्प्रतिप्प्रतिब्बुभूषति न हैवालम्भार्य्येभ्यो भवत्यथ य ऽएवैतमनु भवति यो वैतमनु भार्य्यान्बुभूर्षति स हैवालम्भार्य्येभ्यो भवति ॥ २० ॥ सोऽयास्य ऽआङ्गिरसः । अङ्गानाꣳ हि रसः प्प्राणो वा ऽअङ्गानाꣳ रसः प्प्राणो हि वा ऽअङ्गानाꣳ रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण ऽउत्क्रामति तदेव तच्छुष्यत्येष हि वा ऽअङ्गानाꣳ रसः ॥२१॥ एष ऽउ ऽएव बृहस्प्पतिः । व्वाग्वै बृहती तस्या ऽएष पतिस्तस्मादु बृहस्प्पतिः ॥ २२ ॥ एष ऽउ ऽएव ब्रह्मणस्प्पतिः । व्वाग्वै ब्रह्म तस्या ऽएष पतिस्तस्मादु * ब्रह्मणस्प्पतिः ॥ २३ ॥ एष ऽउ ऽएव साम । व्वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वं यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम ऽएभिस्त्रिभिर्ल्लोकैः समोऽनेन सर्व्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यꣳ सलोकतां य ऽएवमेतत्साम व्वेद ॥ २४ ॥ एष ऽउ वा ऽउद्गीथः । प्प्राणो वा ऽउत्प्राणेन हीदꣳ सर्व्वमुत्तब्धं व्वागेव गीथोच्च गीथा चेति स ऽउद्गीथः ॥ २५ ॥ तद्धापि ब्रह्मदत्तश्चैकितानेयः । राजानम्भक्षयन्नुवाचायन्त्यस्य राजा मूर्द्धानं व्विपातयताद्यदितोऽयास्य ऽआङ्गिरसोऽन्येनोदगायदिति व्वाचा च ह्येव स प्प्राणेन चोदगायदिति ॥ २६ ॥ तस्य हैतस्य साम्नो यः स्वं व्वेद । भवति हास्य स्वन्तस्य वै स्वर ऽएव स्वन्तस्मादार्त्विज्यङ्करिष्यन्वाचि स्वरमिच्छेत तया

* अत्र 'ग' 'ज' पुस्तकयोः "हू" इत्यधिको दृश्यते ।

वाचा स्वरसम्पन्नयार्त्विज्यङ्कुर्वीत्तस्माद्यज्ञे स्वरवन्तन्दिदृक्षन्त ऽएवाथो यस्य स्वम्भवति भवति हास्य स्वं य ऽएवमेतत्साम्नः स्वं वेद ॥ २७ ॥ तस्य हैतस्य साम्नो यः सुवर्णं वेद । भवति हास्य सुवर्णन्तस्य वै स्वर ऽएव सुवर्णम्भवति हास्य सुवर्णं य ऽएवमेतत्साम्नः सुवर्णं वेद ॥ २८ ॥ तस्य हैतस्य । साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष ऽएतत्प्राणः प्रतिष्ठितो गीयतेऽन्न ऽइत्यु हैक ऽआहुः ॥ २९ ॥ अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेदसतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतङ्गमयेति ॥ ३० ॥ स यदाहासतो मा सद्गमयेति । मृत्युर्वा ऽअसत्सदमृतम्मृत्योर्मामृतङ्गमयामृतम्मा कुर्वित्येवैतदाह ॥ ३१ ॥ तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमो ज्योतिरमृतम्मृत्योर्मामृतङ्गमयामृतम्मा कुर्वित्येवैतदाह मृत्योर्मामृतङ्गमयेति नात्र तिरोहितमिवास्ति ॥ ३२ ॥ अथ यानीतराणि स्तोत्राणि । तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यङ्कामङ्कामयेत तꣳ स ऽएष ऽएवंविदुद्गातात्मने वा यजमानाय वा यङ्कामङ्कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया ऽआशास्ति य ऽएवमेतत्साम वेद ॥ ३३ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ ज्ञानकर्मणोः स्तुत्यर्थं तत्फलभूतस्य प्रजापतेर्जगत्सृष्ट्यादौ स्वातन्त्र्यविभूतिवर्णनेन फलोत्कर्षवर्णनम् ]

आत्मैवेदमग्र ऽआसीत् । पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहन्नामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र ऽउक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति ॥ १ ॥ स यत्पूर्वोऽस्मात्सर्वस्मात् । सर्वान्पाप्मन ऽऔषत्तस्मात्पुरुष ऽओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य ऽएवं वेद ॥ २ ॥ सोऽबिभेत् । तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत ऽएवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयम्भवति ॥ ३ ॥ स वै नैव रेमे । तस्मादेकाकी न रमते स द्वितीयमैच्छत्स हैतावानास यथा स्त्रीपुमाꣳसौ सम्परिष्वक्तौ ॥ ४ ॥ स ऽइममेवात्मानन्द्वेधापातयत् । ततः पतिश्च पत्नी चाभवतान्तस्मादिदमर्द्धवृगलमिव स्व ऽइति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्य्यत ऽएव ताꣳ समभवत्ततो मनुष्या ऽअजायन्त ॥५॥ सो हेयमीक्षाञ्चक्रे । कथन्नु मात्मन ऽएव जनयित्वा सम्भवति हन्त तिरोऽसानीति ॥ ६ ॥ सा गौरभवत् । ऋषभ ऽइतरस्ताꣳ समेवाभवत्ततो गावोऽजायन्त ॥ ७ ॥ वडवेतराभवत् । अश्ववृष ऽइतरो गर्दभीतरा गर्दभ ऽइतरस्ताꣳ समेवाभवत्तत ऽएकशफमजायत ॥ ८ ॥ अजेतराभवत् । वस्त इतरोऽविरितरा मेष ऽइतरस्ताꣳ समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदि-

(1) "॰रो" इति 'ग' 'ज' पुस्तकयोः ।

दङ्क्ष्च मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ९ ॥ सोऽवेत्। अहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याꣳ हास्यैतस्याम्भवति य ऽएवं वेद ॥ १० ॥ अथेत्यभ्यमन्थत्। स मुखाच्च योनेर्हस्ताभ्याञ्चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः ॥ ११ ॥ तद्यदिदमाहुः। अमुं यजामुं यजेत्येकैकन्देवमेतस्यैव सा विसृष्टिरेष ऽउ ह्येव सर्वे देवाः ॥ १२ ॥ अथ यत्किञ्चेदमार्द्रम्। तद्रेतसोऽसृजत तदु सोम ऽएतावद्वा ऽइदꣳ सर्वमन्नञ्चैवान्नादश्च सोम ऽएवान्नमग्निरन्नादः ॥ १३ ॥ सैषा ब्रह्मणोऽतिसृष्टिः। यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्याꣳ हास्यैतस्याम्भवति य ऽएवं वेद ॥ १४ ॥ तद्धेदन्तर्ह्यव्याकृतमासीत्। तन्नामरूपाभ्यामेव व्याक्रियतासौनामायमिदꣳ रूप ऽइति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदꣳ रूप ऽइति ॥ १५ ॥ स ऽएष ऽइह प्रविष्टः। आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तन्न पश्यन्त्यकृत्स्नो हि सः ॥१६॥ प्राणन्नेव प्राणो नाम भवति। वदन्वाक्पश्यꣳश्चक्षुः शृण्वञ्छ्रोत्रम्मन्वानो मनस्तान्यस्यैतानि कर्म्मनामान्येव स योऽत ऽएकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत ऽएकैकेन भवति ॥१७॥ [अर्धः प्रपाठकः ॥५०॥] आत्मेत्येवोपासीत। अत्र ह्येते सर्वे ऽएकम्भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा-

नेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवङ्कीर्त्तिᳪ
श्लोकं विन्दते य ऽएवं वेद ॥ १८ ॥ तदेतत्प्रेयः पुत्रात् ।
प्रेयो वित्तात्प्रेयोऽन्न्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा
स योऽन्न्यमात्मनः प्प्रियम्ब्रुवाणम्ब्रूयात्प्रियᳪ रोत्स्य-
तीतीश्वरो ह तथैव स्यादात्मानमेव प्प्रियमुपासीत स य
ऽआत्मानमेव प्प्रियमुपास्ते न हास्य प्प्रियम्प्रमायुकम्भ-
वति ॥ १९ ॥ तदाहुः । यद्ब्रह्मविद्यया सर्वम्भविष्ष्यन्तो
मनुष्ष्या मन्न्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति
॥ २० ॥ ब्रह्म वा ऽदमग्र ऽआसीत् । तदात्मानमेवावेदह-
म्ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो यो देवानाम्प्रत्य-
बुध्यत स ऽएव तदभवत्तथऽर्षीणान्तथा मनुष्ष्याणाम्
॥ २१ ॥ तद्धैतत्पश्श्यन्नृषिर्वामदेवः प्प्रतिपेदे । अहम्मनुर-
भवᳪ सूर्य्यश्चेति तदिदमप्प्येतर्हि य ऽएवं वेदाहम्ब्रह्मा-
स्मीति स इदᳪ सर्वम्भवति तस्य ह न देवाश्चनाभूत्या
ऽईशत ऽआत्मा ह्येषाᳪ स भवत्यथ योऽन्न्यान्देवतामुपा-
स्तेऽन्न्योऽसावन्न्योऽहमस्मीति न स वेद यथा पशुरेवᳪ
स देवानां यथा ह वै बहवः पशवो मनुष्ष्यम्भुञ्ज्युरेव-
मेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽ-
प्प्रियम्भवति किमु बहुषु तस्मादेषान्तन्न प्प्रियं यदे-
तन्मनुष्ष्या विद्युः ॥ २२ ॥ ब्रह्म वा ऽइदमग्र ऽआसीत् ।
एकमेव तदेकᳪ सन्न व्व्यभवत्तच्छ्रेयो रूपमत्त्यसृजत
क्षत्रं यान्न्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः
पर्ज्जन्न्यो यमो मृत्युरीशान ऽइति तस्मात्क्षत्रात्परन्नास्ति

तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र ऽएव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमताङ्गच्छति ब्रह्मैवान्तत ऽउपनिश्रयति स्वां य्योनिं य्य ऽउ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥ २३ ॥ स नैव व्यभवत् । स विशमसृजत यान्येतानि देवजातानि गणश ऽआख्यायन्ते वसवो रुद्रा ऽआदित्या विश्वे देवा मरुत ऽइति ॥ २४ ॥ स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयꣳ हीदꣳ सर्वम्पुष्यति यदिदङ्किञ्च ॥२५॥ स नैव व्यभवत् । तच्छ्रेयो रूपमत्यसृजत धर्म्मन्तदेतत्क्षत्रस्य क्षत्रं य्यद्धर्म्मस्तस्माद्धर्मात्परन्नास्त्यथो ऽअबलीयान्बलीयाꣳसमाशꣳसते धर्म्मेण यथा राज्ञैवं य्यो वै स धर्म्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्द्धर्म्मं वदतीति धर्म्मं वा वदन्तꣳ सत्यं वदतीत्येतद्ध्येवैतदुभयम्भवति ॥ २६ ॥ तदेतद्ब्रह्म क्षत्रं विट् शूद्रः । तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याꣳ हि रूपाभ्याम्ब्रह्माभवत् ॥ २७ ॥ अथ यो ह वा ऽअस्माल्लोकात्स्वँल्लोकमदृष्ट्वा प्रैति । स ऽएनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्यद्वा कर्म्माकृतं य्यदु ह वा ऽअप्यनेवंविन्महत्पुण्यङ्कर्म्म करोति तद्धास्यान्ततः क्षीयत ऽएवात्मान-

(१) 'यदि' इति 'ग' 'ज' पुस्तकयोः पाठः ।

मेव लोकमुपासीत स य ऽआत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्त-त्सृजते ॥ २८ ॥ अथो ऽअयं वा ऽआत्मा । सर्वेषाम्भूता-नाँल्लोकः स यज्जुहोति यद्यजते तेन देवानाँल्लोकोऽथ यदनु-ब्रूते तेनऽर्षीणामथ यत्प्रजामिच्छते यत्पितृभ्यो निपृ-णाति तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽ-शनन्ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाᳬंस्या पिपीलिकाभ्य ऽउपजीवन्ति तेन तेषाँल्लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवᳬ हैवंविदे सर्वदा सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा ऽएतद्विदितम्मीमाᳬंसितम् ॥ २९ ॥ आत्मैवेदमग्र ऽआसीत् । एक ऽएव सोऽ-कामयत जाया मे स्यादथ प्रजायेयाथ वित्तम्मे स्यादथ कर्म्म कुर्वीयेत्येतावान्वै कामो नेच्छँश्चनातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्या-दथ प्रजायेयाथ वित्तम्मे स्यादथ कर्म्म कुर्वीयेति स यावद-प्येतेषामेकैकन्न प्राप्नोत्यकृत्स्न ऽएव तावन्मन्यते तस्यो कृत्स्नता ॥ ३० ॥ मन ऽएवास्यात्मा । वाग्जाया प्राणः प्रजा चक्षुर्म्मानुषं वित्तञ्चक्षुषा हि तद्विन्दति श्रोत्र-न्दैवᳬं श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्म्मात्मना हि कर्म्म करोति स ऽएष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदᳬ सर्वं यदिदङ्किञ्च तदिदᳬ सर्व-माप्नोति यदिदङ्किञ्च य ऽएवं वेद ॥ ३१ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ अद्यमानत्वेन सृष्टस्यान्नभूतस्य जगत उपासनार्थं
विभागेन सप्तधा निरूपणम् ]

यत्सप्तान्नानि मेधया तपसाजनयत्पिता ॥ एकमस्य साधारणन्द्वे देवानभाजयत् ॥ त्रीण्यात्मनेऽकुरुत पशुभ्य एकम्प्रायच्छत् ॥ तस्मिन्त्सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा ॥ यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन ॥ स देवानपिगच्छति स ऊर्ज्जमुपजीवतीति श्लोकाः ॥ १ ॥ यत्सप्तान्नानि मेधया तपसाजनयत्पितेति ॥ मेधया हि तपसाजनयत्पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्त्तते मिश्रꣳ ह्येतत् ॥ २ ॥ द्वे देवानभाजयदिति । हुतञ्च प्रहुतञ्च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् ॥ ३ ॥ पशुभ्य एकम्प्रायच्छदिति । तत्पयः पयो ह्येवाग्ने मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारञ्जातङ्घृतं वैवाग्ने प्रतिलेहयन्ति स्तनं वानुधापयन्ति ॥ ४ ॥ अथ वत्सञ्जातमाहुः । अतृणाद इति तस्मिन्त्सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदꣳ सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ ५ ॥ तद्यदिदमाहुः । सँवत्सरम्पयसा जुह्वदप पुनर्म्मृत्युञ्जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्म्मृत्युमपजयत्येवं विद्वान्त्सर्वꣳ हि देवेभ्योऽन्नाद्यम्प्रयच्छति कस्मात्तानि न क्षीयन्तेऽद्य-

मानानि सर्व्वद्वेति ॥ ६ ॥ पुरुषो वा ऽअक्षितिः । स हीदमन्नम्पुनः पुनर्ज्जनयते यो वै तामक्षितिं वेद्वेति पुरुषो वा ऽअक्षितिः स हीदमन्नन्धिया धिया जनयते कर्म्मभिर्व्यद्धैतन्न कुर्य्यात्क्षीयेत ह सोऽन्नमत्ति प्प्रतीकेनेति मुखम्प्रतीकम्मुखेनेत्त्येतत्स देवानपिगच्छति स ऽऊर्ज्जमुपजीवतीति प्प्रशंसा ॥ ७ ॥ त्रीण्ण्यात्मनेऽकुरुतेति । मनो व्वाचम्प्राणन्तान्न्यात्मनेऽकुरुतान्न्यत्रमना ऽअभूवन्नादर्शमन्न्यत्रमना ऽअभूवन्नाश्रौषमिति मनसा ह्येव पश्श्यति मनसा शृणोति ॥ ८ ॥ कामः सङ्कल्प्पः । विचिकित्त्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्द्धीर्ब्भीरित्त्येतत्सर्व्वम्मन ऽएव तस्म्मादपि पृष्ठत ऽउपस्पृष्टो मनसा व्विजानाति ॥ ९ ॥ यः कश्च शब्दो व्वागेव सा । एषा ह्यन्तमायत्तैषा हि न प्प्राणोऽपानो व्व्यान ऽउदानः समानोऽन ऽइत्त्येतत्सर्व्वम्प्राण ऽएवैतन्मयो वा ऽअयमात्त्मा व्वाङ्मयो मनोमयः प्प्राणमयः ॥ १० ॥ त्रयो लोका ऽएत ऽएव । व्वागेवायँल्लोको मनोऽन्तरिक्षलोकः प्प्राणोऽसौ लोकः ॥ ११ ॥ त्रयो व्वेदा ऽएत ऽएव । व्वागेवऽर्ग्वेदो मनो यजुर्व्वेदः प्प्राणः सामवेदः ॥ १२ ॥ देवाः पितरो मनुष्या ऽएत ऽएव । व्वागेव देवा मनः पितरः प्प्राणो मनुष्याः ॥ १३ ॥ पिता माता प्प्रजैत ऽएव । मन ऽएव पिता व्वाङ्माता प्प्राणः प्प्रजा ॥ १४ ॥ व्विज्ञातं व्विजिज्ञास्यम् । अविज्ञातमेत ऽएव यत्किञ्च व्विज्ञातं व्वाचस्तद्रूपं व्वाग्घि व्विज्ञाता व्वागेनन्तद्भूत्वावति ॥१५॥ यत्किञ्च व्विजिज्ञास्यम् । मनसस्तद्रूपम्मनो

हि विजिज्ञास्यम्मन ऽएनं[1]न्तद्भूत्वावति ॥ १६ ॥ यत्किञ्चा-विज्ञातम् । प्राणस्य तद्रूपम्प्राणो ह्यविज्ञातः प्राण ऽएनं[2]-न्तद्भूत्वावति ॥१७॥ तस्यै वाचः पृथिवी शरीरम् । ज्योती रूपमयमग्निस्तद्यावत्येव वाक्तावती पृथिवी तावानयमग्निः ॥ १८ ॥ अथैतस्य मनसः । द्यौः शरीरञ्ज्योती रूप-मसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावा-दित्यस्तौ मिथुनꣳ समैतान्ततः प्राणोऽजायत स ऽइन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य ऽएवं वेद ॥ १९ ॥ अथैतस्य प्राणस्यापः । शरीरञ्ज्योती रूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य ऽआपस्तावानसौ चन्द्रः ॥२०॥ त ऽएते सर्व्व ऽएव समाः । सर्व्वेऽनन्ताः स यो हैताननन्तवत ऽउपास्तेऽन्तवन्तꣳ स लोकञ्जयत्यथ यो हैताननन्तानुपास्तेऽनन्तꣳ स लोकञ्ज-यति ॥ २१ ॥ स ऽएष सँव्वत्सरः । प्रजापतिः षोडश-कलस्तस्य रात्रय ऽएव पञ्चदश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्य्यतेऽप च क्षीयते सोऽमा-वास्याꣳ रात्रिमेतया षोडश्या कलया सर्वमिदम्प्राणभृद-नुप्रविश्य ततः प्रातर्जायते तस्मादेताꣳ रात्रिम्प्राण-भृतः प्राणन्न विच्छिन्द्यादपि कृकलासस्यैतस्या ऽएव देवताया ऽअपचित्यै ॥ २२ ॥ यो वै स सँव्वत्सरः । प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंविद्पुरुषस्तस्य वित्तमेव पञ्चदश कला ऽआत्मैवास्य षोडशी कला स

( १-२ ) "एव तद्भूत्वावति" इति 'ग' 'ज' पुस्तकयोः ।

वित्तेनैवा च पूर्ष्यतेऽप च क्षीयते तदेतन्नभ्यं ष्यदयमात्मा प्राधिर्व्वित्तन्तस्माद्यद्यपि सर्व्वज्यानिञ्जीयत ऽआत्मना चेज्जीवति प्राधिनागादित्याहुः ॥ २३ ॥ अथ त्रयो वाव लोकाः । मनुष्यलोकः पितृलोको देवलोक ऽइति सोऽयम्मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्म्मणा कर्म्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाᳪं श्रेष्ठस्तस्माद्विद्याम्प्रशᳪसन्ति ॥ २४ ॥ अथातः सम्प्रत्तिः । यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वम्ब्रह्म त्वं य्यज्ञस्त्वँल्लोक ऽइति स पुत्रः प्रत्याहाहम्ब्रह्माहं य्यज्ञोऽहँल्लोक ऽइति ॥ २५ ॥ यद्वै किञ्चानूक्तम् । तस्य सर्व्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषाᳪं सर्व्वेषां य्यज्ञ ऽइत्येकता ये वै के च लोकास्तेषाᳪं सर्व्वेषाँल्लोक ऽइत्येकतैतावद्वा ऽइदᳪ सर्व्वमेतन्मा सर्व्वᳪ सन्नयमितोऽभुनजदिति तस्मात्पुत्रमनुशिष्टँल्लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किञ्चिदक्षणया कृतम्भवति तस्मादेनᳪ सर्व्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा ऽअमृता ऽआविशन्ति ॥२६॥ पृथिव्यै चैनमग्नेश्च । दैवी व्वागाविशति सा वै दैवी व्वाग्यया यद्यदेव व्वदति तत्तद्भवति ॥ २७ ॥ दिवश्चैनमादित्याच्च । दैवम्मन ऽआविशति तद्वै दैवम्मनो येनानन्द्येव भवत्यथो न शोचति ॥ २८ ॥ अद्भ्यश्चैनञ्चन्द्रमसश्च । दैवः प्राण ऽआविशति स वै दैवः प्राणो यः

सञ्चरँश्चासञ्चरँश्च न व्व्यथतेऽथो न रिष्ष्यति स ऽएष ऽएवँव्वित्सर्व्वेषाम्भूतानामात्त्मा भवति यथैषा देवतैवꣳ स यथैतान्देवताꣳ सर्व्वाणि भूतान्न्यवन्त्येवꣳ हैवंव्विदꣳ सर्व्वाणि भूतान्न्यवन्ति यदु किञ्चेमाः प्प्रजाः शोचन्त्यमैवासान्तद्भवति पुण्ण्यमेवामुङ्गच्छति न ह वै देवान्पापङ्गच्छति ॥ २९ ॥ अथातो व्व्रतमीमाꣳसा । प्प्रजापतिर्ह कर्म्माणि ससृजे तानि सृष्टान्न्यन्न्योऽन्न्येनास्प्पर्द्धन्त व्वदिष्ष्याम्म्येवाहमिति व्वाग्दध्रे द्रक्ष्याम्म्यहमिति चक्षुः श्रोष्ष्याम्म्यहमिति श्रोत्रमेवमन्न्यानि कर्म्माणि यथाकर्म्म ॥ ३० ॥ तानि मृत्त्युः श्रमो भूत्त्वोपयेमे । तान्न्याप्प्नोत्तान्न्याप्प्त्वा मृत्त्युरवारुन्ध तस्म्माच्छ्राम्म्यत्त्येव व्वाक्श्राम्म्यति चक्षुः श्राम्म्यति श्रोत्रमथेममेव नाप्प्नोद्योऽयम्मद्ध्यमः प्प्राणः ॥ ३१ ॥ तानि ज्ञातुन्दध्रिरे । अयं व्वै नः श्रेष्ठो यः सञ्चरँश्चासंचरँश्च न व्व्यथतेऽथो न रिष्ष्यति हन्तास्यैव सर्व्वे रूपम्भवामेति त ऽएतस्यैव सर्व्वे रूपमभवँस्तस्म्मादेत ऽएतेनाख्यायन्ते प्प्राणा ऽइति तेन ह वाव तत्कुलमाख्यायते यस्म्मिन्न्कुले भवति य ऽएवं व्वेद य ऽउ हैवंव्विदा स्पर्द्धतेऽनुशुष्ष्य हैवान्ततो म्म्रियत ऽइत्त्यद्ध्यात्त्मम् ॥ ३२ ॥ अथाधिदैवतम् । ज्वलिष्ष्याम्म्येवाहमित्त्यग्निर्दध्रे तप्प्स्याम्म्यहमित्त्यादित्त्यो भास्याम्म्यहमिति चन्द्रमा ऽएवमन्न्या देवता यथादेवतꣳ स यथैषाम्प्राणानाम्मद्ध्यमः प्प्राण ऽएवमेतासान्देवतानां व्वायुर्म्म्लोचन्ति ह्यन्न्या देवता न व्वायुः सैषानस्तमिता देवता यद्वायुः

॥ ३३ ॥ अथैष श्लोको भवति । यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छतीति प्राणाद्वा ऽएष ऽउदेति प्राणेऽस्तमेति तन्देवाश्चक्रिरे धर्म्मᳪ स ऽएवाद्य स ऽउ श्व ऽइति यद्वा ऽएतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतञ्चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नवदिति यद्यु चरेत्समापिपयिषेत्तेनो ऽएतस्यै देवतायै सायुज्यᳪ सलोकताञ्जयति य ऽएवं वेद ॥ ३४ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—०—

[ प्रपञ्चितस्याविद्याकार्यस्य संक्षेपेणोपसंहारः ]

त्रयं वा ऽइदन्नाम रूपङ्कर्म्म । तेषान्नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्त्येतदेषाᳪ सामैतद्धि सर्वैर्न्नामभिᳪ सममेतदेषाम्ब्रह्मैतद्धि सर्वाणि नामानि बिभर्त्ति ॥ १ ॥ अथ रूपाणाम् । चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषाᳪ सामैतद्धि सर्वै रूपैᳪ सममेतदेषाम्ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्त्ति ॥ २ ॥ अथ कर्म्मणाम् । आत्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्म्माण्युत्तिष्ठन्त्येतदेषाᳪ सामैतद्धि सर्वैᳪ कर्म्मभिᳪ सममेतदेषाम्ब्रह्मैतद्धि सर्वाणि कर्म्माणि बिभर्त्ति तदेतत्त्रयᳪ सदेकमयमात्मात्मो ऽएकᳪ सन्नेतत्त्र-

यन्तदेतदमृतꣳ सत्त्येन च्छन्नम्प्राणो वा ऽअमृतन्नामरूपे सत्त्यन्ताभ्यामयम्प्राणश्छन्नः ॥ ३ ॥

### चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ १०१ ॥

### इति चतुर्थोऽध्यायः ॥ ४ ॥

—०—

[ अविद्याविषयमेव आत्मत्वेनोपगतवन्तं गार्ग्यं पूर्वपक्षिणं तद्विपरीतात्मदर्शिनमजातशत्रुं सिद्धान्तिनं चोपस्थाप्य आख्यायिकाप्रदर्शनम् ]

दृप्तबालाकिर्हानूचानो गार्ग्ग्य ऽआस । स होवाचाजातशत्रुङ्काश्श्यम्ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक ऽइति वै जना धावन्तीति ॥ १ ॥ स होवाच गार्ग्ग्यः । य ऽएवासावादित्त्ये पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा ऽअतिष्ठाः सर्व्वेषाम्भूतानाम्मूर्द्धा राजेति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्तेऽतिष्ठाः सर्व्वेषाम्भूतानाम्मूर्द्धा राजा भवति ॥ २ ॥ स होवाच गार्ग्ग्यः । य ऽएवासौ चन्द्रे पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा बृहन्न्पाण्डरवासाः सोमो राजेति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥ स होवाच गार्ग्ग्यः । य ऽएवायं

विद्युति पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठास्तेजस्वीति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्प्रजा भवति ॥ ४ ॥ स होवाच गार्ग्यः । य ऽएवायमाकाशे पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठाः पूर्णमप्प्रवर्त्तीति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते पूर्य्यते प्प्रजया पशुभिर्न्नास्यास्म्माल्लोकात्प्रजोद्वर्त्तते ॥ ५ ॥ स होवाच गार्ग्यः । य ऽएवायं वायौ पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा ऽइन्द्रो वैकुण्ठोऽपराजिता सेनेति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्ब्भवत्यन्न्यतस्त्यजायी ॥ ६ ॥ स होवाच गार्ग्यः । य ऽएवायमग्नौ पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा विषासहिरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्प्रजा भवति ॥ ७ ॥ स होवाच गार्ग्यः । य ऽएवायमप्प्सु पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठाः प्प्रतिरूप ऽइति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते प्प्रतिरूपꣳ हैवैनमुपगच्छति नाप्प्रतिरूपमथो प्प्रतिरूपोऽस्म्माज्जायते ॥ ८ ॥ स होवाच गार्ग्यः । य ऽएवायमादर्शे पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मि-

न्त्सँवदिष्ठा रोचिष्णुरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्प्रजा भवत्यथो यैः सन्निगच्छति सर्वांस्तानतिरोचते ॥ ९ ॥ स होवाच गार्ग्यः । य ऽएवायन्दिक्षु पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्न्त्सँवदिष्ठा द्वितीयोऽनपग ऽइति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥ १० ॥ स होवाच गार्ग्यः । य ऽएवायं यन्तम्पश्चाच्छब्दोऽनूदेत्येतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा ऽअसुरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते सर्वं᳘ हैवास्मिँल्लोक ऽआयुरेति नैनम्पुरा कालात्प्राणो जहाति ॥ ११ ॥ स होवाच गार्ग्यः । य ऽएवायञ्छायामयः पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा मृत्युरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते सर्व᳘ हैवास्मिँल्लोक ऽआयुरेति नैनम्पुरा कालान्मृत्युरागच्छति ॥ १२ ॥ स होवाच गार्ग्यः । य ऽएवायमात्मनि पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा ऽआत्मन्वीति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्त ऽआत्मन्वी ह भवत्यात्मन्विनी हास्य प्प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥ स होवाचाजातशत्रुः । एतावन्नू३ ऽइत्ये-

( १ ) "यश्चायमात्मनि" इति 'ग' 'ज' पुस्तकयोः ।

तावद्धीति नैतावता विदितम्भवतीति स होवाच गार्ग्ग्य उप त्वायानीति ॥ १४ ॥ स होवाचाजातशत्रुः । प्प्रतिलोमं वै तद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्ष्यामीति तम्पाणावादायोत्तस्थौ तौ ह पुरुषः सुप्तमाजग्मतुस्तमेतैर्न्नामभिरामन्त्रयाञ्चक्रे बृहन्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तम्पाणिनापेषं बोधयाञ्चकार स होत्तस्थौ ॥ १५ ॥ स होवाचाजातशत्रुः । यत्रैष ऽएतत्सुप्तोऽभूद्य ऽएष व्विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत ऽएतदागादिति तदु ह न मेने गार्ग्ग्यः ॥ १६ ॥ स होवाचाजातशत्रुः । यत्रैष ऽएतत्सुप्तोऽभूद्य ऽएष विज्ञानमयः पुरुषस्तदेषाम्प्राणानां व्विज्ञानेन विज्ञानमादाय य ऽएषोन्तर्हृदय ऽआकाशस्तस्मिञ्छेते ॥ १७ ॥ * तानि यदा गृह्णाति । अथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत ऽएव प्प्राणो भवति गृहीता व्वाग्गृहीतञ्चक्षुर्ग्गृहीतꣳ श्रोत्रङ्गृहीतम्मनः ॥ १८ ॥ स यत्रैतत्स्वप्न्यया चरति । ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मणं ऽउतेवोच्चावचन्निगच्छति ॥ १९ ॥ स यथा महाराजो जानपदान्गृहीत्त्वा स्वे जनपदे यथाकामम्परिवर्त्तेतैवमेवैष ऽएतत्प्राणान्गृहीत्त्वा स्वे शरीरे यथाकामम्परिवर्त्तते ॥ २० ॥ अथ यदा सुषुप्तो भवति । यदा न कस्य चन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्प्रतिष्ठन्ते ताभिः प्प्रत्यवसृप्प्य पुरीतति शेते

* शतम् ७२०० ।

॥२१॥ स यथा कुमारो वा महाब्राह्मणो वा। अतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष ऽएतच्छेते ॥ २२ ॥ स यथोर्णवाभिस्तन्तुनोच्चरेत् । यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व ऽएत ऽआत्मानो व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यन्तेषामेष सत्यम् ॥ २३ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ प्राणा वै सत्यमित्यंशेनोक्तायाः प्राणोपनिषदो व्याख्यानम् ]

यो ह वै शिशुम् । साधानः सप्रत्याधानः सस्थूणः सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि ॥ १ ॥ अयं वाव शिशुर्योऽयम्मध्यमः प्राणः । तस्येदमेवाधानमिदम्प्रत्याधानम्प्राण स्थूणान्नन्दाम तमेताः सप्ताक्षितय ऽउपतिष्ठन्ते ॥ २ ॥ तद्या ऽइमा ऽअक्षँल्लोहिन्न्यो राजयः । ताभिरेनः रुद्रोऽन्न्वायत्तोऽथ या ऽअक्षन्नापस्ताभिः पर्ज्जन्न्यो या कनीनका तयादित्यो यत्कृष्णन्तेनाग्निर्यच्छुक्लन्तेनेन्द्रोऽधरयैनं वर्त्तन्न्या पृथिव्यन्न्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य ऽएवं वेद ॥ ३ ॥ तदेष श्लोको भवति। अर्वाग्बिलश्चमस ऽऊर्द्ध्वबुद्ध्नस्तस्मिन्न्यशो निहितं विश्वरूपम् ॥ तस्यासत ऽऋषयः सप्त तीरे वागष्टमी ब्रह्मणा सँविदानेति ॥ ४ ॥

अर्वाग्बिलश्चमस ऽऊर्द्ध्वबुद्ध्न ऽइति । इदन्तच्छिर ऽएष ह्यर्वाग्बिलश्चमस ऽऊर्द्ध्वबुद्ध्नस्तस्मिन्न्यशो निहितं विश्श्वरूपमिति प्प्राणा वै यशो निहितं विश्श्वरूपम्प्राणानेतदाह तस्यासत ऽऋषयः सप्त तीर ऽइति प्प्राणा वा ऽऋषयः प्प्राणानेतदाह व्वागष्टमी ब्ब्रह्मणा सँविदानेति व्वाग्ध्यष्टमी ब्ब्रह्मणा सँवित्ते ॥ ५ ॥ इमावेव गोतमभरद्वाजौ । अयमेव गोतमोऽयम्भरद्वाज ऽइमावेव विश्श्वामित्रजमदग्नी ऽअयमेव विश्श्वामित्रोऽयञ्जमदग्निरिमावेव व्वसिष्ठकश्श्यपावयमेव व्वसिष्ठोऽयङ्कश्श्यपो व्वागेवात्रिर्व्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्व्वस्यात्ता भवति सर्व्वमस्यान्नम्भवति य ऽएवं व्वेद ॥ ६ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ब्रह्मण उपाधिभूतयोर्मूर्तामूर्तयोः कार्यकरणविभागेनाध्यात्माधिदैवतयोः विभागप्रदर्शनम् ]

द्वे वाव ब्ब्रह्मणो रूपे । मूर्त्तञ्चैवामूर्त्तञ्च मर्त्यञ्चामृतञ्च स्थितञ्च यच्च सच्च त्यच्च ॥ १ ॥ तदेतन्मूर्त्तम् । यदन्न्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत् ॥ २ ॥ तस्यैतस्य मूर्त्तस्य । एतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत ऽएष रसो य ऽएष तपति सतो ह्येष रसः ॥ ३ ॥ अथामूर्त्तम् । व्वायुश्चान्तरिक्षञ्चैतदमृतमेतद्यदेतत्त्यम् ॥ ४ ॥ तस्यैतस्यामूर्त्तस्य । एतस्यामृतस्यैतस्य यत ऽएतस्य त्यस्यैष रसो य ऽएष ऽएतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस

ऽइत्यधिदेवतम् ॥ ५ ॥ अथाध्यात्मम् । इदमेव मूर्त्तं यद्-
न्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश ऽएतन्मर्त्यमेतत्स्थि-
तमेतत्सत् ॥ ६ ॥ तस्यैतस्य मूर्त्तस्य । एतस्य मर्त्यस्यै-
तस्य स्थितस्यैतस्य सत ऽएष रसो यच्चक्षुः सतो ह्येष
रसः ॥ ७ ॥ अथामूर्त्तम् । प्राणश्च यश्चायमन्तरात्मन्ना-
काश ऽएतदमृतमेतद्यदेतत्त्यम् ॥ ८ ॥ तस्यैतस्यामूर्त्तस्य ।
एतस्यामृतस्यैतस्य यत ऽएतस्य त्यस्यैष रसो योऽयन्द-
क्षिणेऽक्षन्पुरुषस्त्यस्य ह्येष रसः ॥ ९ ॥ तस्य हैतस्य
पुरुषस्य रूपम् । यथा माहारजनं वासो यथा पाण्ड्वाविकं
ऽयथेन्द्रगोपो यथाग्न्यर्च्चिरर्यथा पुण्डरीकं ऽयथा सकृद्वि-
द्युत्तः सकृद्विद्युत्तेव ह वा ऽअस्य श्रीर्भवति य ऽएवं
वेद ॥ १० ॥ अथात ऽआदेशः । नेति नेति न ह्येतस्मा-
दिति नेत्यन्यत्परमस्त्यथ नामधेयः सत्यस्य सत्यमिति
प्राणा वै सत्यन्तेषामेष सत्यम् ॥ ११ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

———•———

[ प्रस्तुताया ब्रह्मविद्याया अङ्गत्वेन संन्यासविधानार्थं याज्ञवल्क्य-
मैत्रेयीसंवादरूपाख्यायिका ]

मैत्रेयीति होवाच याज्ञवल्क्यः । उद्यास्यन्वा ऽअरेऽ-
हमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्त-
ङ्करवाणीति ॥ १ ॥ सा होवाच मैत्रेयी । यन्म ऽइयम्भगोः
सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथन्तेनामृता स्यामिति
नेति होवाच याज्ञवल्क्यो यथैवोपकरणवताञ्जीवितन्तथैव

ते जीवितꣳ स्यादमृतत्वस्य तु नाशास्ति व्वित्तेनेति ॥ २ ॥
सा होवाच मैत्रेयी । येनाहन्नामृता स्याङ्किमहन्तेन कुर्य्यां
यदेव भगवान्वेद तदेव मे ब्ब्रूहीति ॥ ३ ॥ स होवाच
याज्ञवल्क्यः । प्प्रिया बतारे नः सती प्प्रियम्भाषस
ऽएह्यास्व व्व्याख्यास्यामि ते व्व्याचक्षाणस्य तु मे निदि-
ध्यासस्वेति ब्ब्रवीतु भगवानिति ॥ ४ ॥ स होवाच याज्ञ-
वल्क्यः । न वा ऽअरे पत्युः कामाय पतिः प्प्रियो भवत्या-
त्मनस्तु कामाय पतिः प्प्रियो भवति न वा ऽअरे जायायै
कामाय जाया प्प्रिया भवत्यात्मनस्तु कामाय जाया प्प्रिया
भवति न वा ऽअरे पुत्राणाङ्कामाय पुत्राः प्प्रिया भवन्त्या-
त्मनस्तु कामाय पुत्राः प्प्रिया भवन्ति न वा ऽअरे
व्वित्तस्य कामाय व्वित्तम्प्रियम्भवत्यात्मनस्तु कामाय व्वित्त-
म्प्रियम्भवति न वा ऽअरे ब्ब्रह्मणः कामाय ब्ब्रह्म प्प्रियम्भ-
वत्यात्मनस्तु कामाय ब्ब्रह्म प्प्रियम्भवति न वा ऽअरे
क्षत्रस्य कामाय क्षत्रम्प्रियम्भवत्यात्मनस्तु कामाय क्षत्र-
म्प्रियम्भवति न वा ऽअरे लोकानाङ्कामाय लोकाः प्प्रिया
भवन्त्यात्मनस्तु कामाय लोकाः प्प्रिया भवन्ति न वा ऽअरे
देवानाङ्कामाय देवाः प्प्रिया भवन्त्यात्मनस्तु कामाय देवाः
प्प्रिया भवन्ति न वा ऽअरे भूतानाङ्कामाय भूतानि प्प्रियाणि
भवन्त्यात्मनस्तु कामाय भूतानि प्प्रियाणि भवन्ति न वा
ऽअरे सर्वस्य कामाय सर्वम्प्रियम्भवत्यात्मनस्तु कामाय सर्व-
म्प्रियम्भवत्यात्मा वा ऽअरे द्रष्टव्व्यः श्रोतव्व्यो मन्तव्व्यो
निदिध्यासितव्व्यो मैत्रेय्यात्मनो वा ऽअरे दर्शनेन श्रवणेन

मत्या विज्ञानेनेदꣳ सर्वं विदितम् ॥ ५ ॥ ब्रह्म तम्परादाद् । योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रन्तम्परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तम्परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तम्परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तम्परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वन्तम्परादाद्योऽन्यत्रात्मनः सर्वं वेदेदम्ब्रह्मेदं क्षत्रमिमे लोका ऽइमे देवा ऽइमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ६ ॥ स यथा दुन्दुभेर्हन्यमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो * गृहीतः ॥ ७ ॥ स यथा वीणायै वाद्यमानायै । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा शङ्खस्य ध्मायमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥ स यथार्द्रैधाग्नेरभ्याहितस्य । पृथग्धूमा विनिश्चरन्त्येवं वा ऽअरेऽस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस ऽइतिहासः पुराणं विद्या ऽउपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निश्श्वसितानि ॥ १० ॥ स यथा सर्वासामपाꣳ समुद्र ऽएकायनम् । एवꣳ सर्वेषाꣳ स्पर्शानान्त्वगेकायनमेवꣳ सर्वेषाङ्गन्धानान्नासिके ऽएकायनमेवꣳ सर्वेषाꣳ रसानाञ्जिह्वैकायनमेवꣳ सर्वेषाꣳ रूपाणाञ्चक्षुरेकायनमेवꣳ सर्वेषाꣳ

* अत्र 'ग' 'ज' पुस्तकयोः "भवति" इत्यधिकः पाठ उपलभ्यते ।

शब्दानाᳬं श्रोत्रमेकायनमेवᳬं सर्वेषाᳬं सङ्कल्पानाम्मन ऽएकायनमेवᳬं सर्वेषां वेदानाᳬं हृदयमेकायनमेवᳬं सर्वेषाङ्कर्मणाᳬं हस्तावेकायनमेवᳬं सर्वेषामध्वनाम्पादावेकायनमेवᳬं सर्वेषामानन्दानामुपस्थ ऽएकायनमेवᳬं सर्वेषां विसर्गाणाम्पायुरेकायनमेवᳬं सर्वासां विद्यानां वागेकायनम् ॥ ११ ॥ स यथा सैन्धवखिल्यᳬं । उदके प्रास्त ऽउदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा ऽअर ऽइदम्महद्भूतमनन्तमपारं विज्ञानघन ऽएवैतेभ्यो भूतेभ्यᳬं समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यᳬं ॥१२॥ [अर्धः प्रपाठकः ॥५२॥] सा होवाच मैत्रेयी । अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति ॥ १३ ॥ स होवाच याज्ञवल्क्यᳬं । न वा ऽअरेऽहम्मोहम्ब्रवीम्यलं वा ऽअर ऽइदं विज्ञानाय ॥१४॥ यत्र हि द्वैतमिव भवति । तदितर ऽइतरम्पश्यति तदितर ऽइतरञ्जिघ्रति तदितर इतरमभिवदति तदितर ऽइतरᳬं शृणोति तदितर ऽइतरम्मनुते तदितर ऽइतरं विजानाति ॥ १५ ॥ यत्र त्वस्य सर्वमात्मैवाभूत् । तत्केन कम्पश्येत्तत्केन कञ्जिघ्रेत्तत्केन कमभिवदेत्तत्केन कᳬं शृणुयात्तत्केन कम्मन्वीत तत्केन कं विजानीयाद्येनेदᳬं सर्वं विजानाति तङ्केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥ १६ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ उक्तस्याध्यायद्वयस्यार्थोपसंहारः, आचार्यपरम्पराक्रमरूपवंशकथनञ्च ]

इयम्पृथिवी । सर्व्वेषाम्भूतानाम्मद्ध्वस्यै पृथिव्व्यै सर्व्वाणि भूतानि मधु यश्चायमस्याम्पृथिव्व्यान्तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ १ ॥ इमा ऽआपः । सर्व्वेषाम्भूतानाम्मद्ध्वासामपाꣳ सर्व्वाणि भूतानि मधु यश्चायमास्वप्प्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ २ ॥ अयमग्निः । सर्व्वेषाम्भूतानाम्मद्ध्वस्याग्नेः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ३ ॥ अयमाकाशः । सर्व्वेषाम्भूतानाम्मद्ध्वस्याकाशस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ४ ॥ अयं व्वायुः । सर्व्वेषाम्भूतानाम्मद्ध्वस्य व्वायोः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्न्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मम्प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ ५ ॥ अयमादित्यः । सर्व्वेषाम्भूतानाम्मद्ध्वस्यादित्यस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽ-

मृतमयः पुरुषो यश्चायमध्यात्मञ्चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्वम् ॥ ६ ॥ अयञ्चन्द्रः । सर्वेषाम्भूतानाम्मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्वम् ॥ ७ ॥ इमा दिशः । सर्वेषाम्भूतानाम्मध्वासान्दिशाꣳ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्वम् ॥ ८ ॥ इयं विद्युत् । सर्वेषाम्भूतानाम्मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मन्तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्वम् ॥ ९ ॥ अयꣳ स्तनयित्नुः । सर्वेषाम्भूतानाम्मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्त्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्वम् ॥१०॥ अयन्धर्मः । सर्वेषाम्भूतानाम्मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मन्धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्वम् ॥११॥ इदꣳ सत्यम् । सर्वेषाम्भूता-

नाम्मद्धस्य सत्त्यस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्त्स-त्त्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मꣳ सात्त्यस्तेजो-मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिद-म्ब्रह्मेदꣳ सर्व्वम् ॥१२॥ इदम्मानुषम्। सर्व्वेषाम्भूतानाम्मद्धस्य मानुषस्य सर्व्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजो-मयोऽमृतमयः पुरुषो यश्चायमद्ध्यात्मम्मानुषस्तेजोमयोऽ-मृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ १३ ॥ अयमात्मा। सर्व्वेषाम्भूतानाम्मद्धस्यात्मनः सर्व्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृ-तमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽ-यमेव स योऽयमात्मेदममृतमिदम्ब्रह्मेदꣳ सर्व्वम् ॥ १४ ॥ स वा ऽअयमात्मा। सर्व्वेषाम्भूतानामधिपतिः सर्व्वेषाम्भू-तानाꣳ राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्व्वे समर्प्पिता ऽएवमेवास्मिन्नात्मनि सर्व्वे प्प्राणाः सर्व्वे लोकाः सर्व्वे देवाः सर्व्वाणि भूतानि सर्व्व ऽएत ऽआत्मानः सम-र्प्पिताः ॥ १५ ॥ इदं वै तन्मधु। दद्ध्यङ्ङाथर्व्वणोऽश्विभ्-भ्यामुवाच तदेतदृषिः पश्यन्नवोचत् ॥ '[1]तद्वान्नरा सनये दꣳस ऽउग्रमाविष्कृणोमि तन्यतुर्न्न वृष्टिम् ॥ दद्ध्यङ् ह यन्मद्धाथर्व्वणो वामश्वस्य शीर्ष्णा प्प्र यदीमुवाचे'ति ॥ १६ ॥ इदं वै तन्मधु। दद्ध्यङ्ङाथर्व्वणोऽश्विभ्भ्या-मुवाच तदेतदृषिः पश्यन्नवोचत् ॥ '[2]आथर्व्वणायाश्विना दधीचेऽश्व्यꣳ शिरः प्प्रत्यैरयतम्॥ स वाम्मधु प्प्रवोचदृता-

(१) ऋ० सं १. ८ १०। (२) ऋ० सं १. ८. १७।

यन्त्वाष्ट्रं रुषद्दस्रावपि कक्ष्यं वा'मिति ॥ १७ ॥ इदं वै तन्मधु । दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् ॥ पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ॥ पुरः स पक्षी भूत्वा पुरः पुरुष ऽआविशदिति स वा ऽअयम्पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतन्नैनेन किञ्चनासंव्वृतम् ॥ १८ ॥ इदं वै तन्मधु । दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् ॥ 'रूपंरूपम्प्रतिरूपो बभूव तदस्य रूपम्प्रतिचक्षणाय ॥ इन्द्रो मायाभिः पुरुरूप ऽईयते युक्ता ह्यस्य हरयः शता दशे'त्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥ १९ ॥ अथ वंशः । तदिदं वयं शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज ऽऔदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो बैजवापाच्च गौतमाच्च गौतमो बैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ॥ २० ॥ अग्निवेश्यः सैतवात् । सैतवः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजा-

(१) ऋ० सं० ४. ७. ३३ ।

द्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो बैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज ऽआत्रेयात् ॥२१॥ आत्रेयो माण्टेः । माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात्काप्यात्कैशोर्य्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्न्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य ऽआङ्गिरस ऽआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच ऽआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन ऽएकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ २२ ॥

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

[ तत्त्वज्ञाने आगमोपपत्त्योरावश्यकत्वप्रतिपादनम् ]

( तत्र च ब्रह्मविद्यास्तुत्यर्थाऽऽख्यायिका )

जनको ह वैदेहः । बहुदक्षिणेन * यज्ञेनेजे तत्र ह कुरुपञ्चालानाम्ब्राह्मणा ऽअभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषाम्ब्राह्मणानामनूचानतम ऽइति ॥ १ ॥ स ह गवाᳬं सहस्रमवरुरोध । दश दश पादा ऽएकैकस्याः शृङ्गयोराबद्धा बभूवुस्तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स ऽएता गा ऽउदजतामिति ते ह ब्राह्मणा न दधृषुः ॥ २ ॥ अथ ह याज्ञवल्क्यः । स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सामश्रवा३ ऽइति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथन्नु नो ब्रह्मिष्ठो ब्रुवीतेति ॥ ३ ॥ अथ ह जनकस्य वैदेहस्य होताश्वलो बभूव । स हैनम्पप्रच्छ त्वन्नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ ऽइति स होवाच नमो वयम्ब्रह्मिष्ठाय कुर्म्मो गोकामा ऽएव वयᳬं स्म ऽइति तᳬं ह तत ऽएव प्रष्टुन्दध्रे होताश्वलः ॥ ४ ॥ याज्ञवल्क्येति होवाच । यदिदᳬं सर्वम्मृत्युनाप्तᳬं सर्वम्मृत्युनाभिपन्नङ्केन यजमानो मृत्योराप्तिमतिमुच्यत ऽइति होत्रऽर्त्विजाग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक्सोऽयमग्निः स होता सा मुक्तिः सातिमुक्तिः ॥५॥ याज्ञवल्क्येति होवाच । यदिदᳬं सर्वमहोरात्राभ्यामाप्तᳬं सर्वमहोरात्राभ्यामभिपन्नङ्केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत

* शाखान्तरप्रसिद्धेन, बहुदक्षिणाविशिष्टेनाश्वमेधेन वा ।

ऽइत्यद्ध्वर्य्युणर्त्त्विजा चक्षुषादित्येन चक्षुर्वै यज्ञस्याद्ध्वर्य्युस्तद्यदिदञ्चक्षुः सोऽसावादित्यः सोऽद्ध्वर्य्युः सा मुक्तिः सातिमुक्तिः ॥ ६ ॥ याज्ञवल्क्येति होवाच । यदिदꣳ सर्व्वम्पूर्व्वपक्षापरपक्षाब्भ्यामाप्तꣳ सर्व्वम्पूर्व्वपक्षापरपक्षाब्भ्यामभिपन्नङ्केन यजमानः पूर्व्वपक्षापरपक्षयोराप्तिमतिमुच्च्यत ऽइति ब्रह्मणर्त्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदम्मनः सोऽसौ चन्द्रः स ब्रह्मा सा मुक्तिः सातिमुक्तिः ॥७॥ याज्ञवल्क्येति होवाच । यदिदमन्तरिक्षमनारम्बणमिवाथ केनाक्क्रमेण यजमानः स्वर्ग्गँल्लोकमाक्क्रमत ऽइत्युद्गात्रर्त्त्विजा वायुना प्प्राणेन प्प्राणो वै यज्ञस्योद्गाता तद्योऽयम्प्राणः स वायुः स ऽउद्गाता सा मुक्तिः सातिमुक्तिरित्यतिमोक्षा ऽअथ सम्पदः ॥ ८ ॥ याज्ञवल्क्येति होवाच । कतिभिरयमद्यर्ग्भिर्होतास्म्मिन्न्यज्ञे करिष्ष्यतीति तिसृभिरिति कतमास्तास्तिस्र ऽइति पुरोऽनुवाक्क्या च याज्ज्या च शस्यैव तृतीया किन्ताभिर्ज्जयतीति पृथिवीलोकमेव पुरोऽनुवाक्क्यया जयत्त्यन्तरिक्षलोकं रुयाज्यया द्यौर्ल्लोकꣳ शस्यया ॥९॥ याज्ञवल्क्येति होवाच । कत्त्ययमद्याद्ध्वर्य्युरस्म्मिन्न्यज्ञ ऽआहुतीर्होष्ष्यतीति तिस्र ऽइति कतमास्तास्तिस्र ऽइति या हुता ऽउज्ज्वलन्ति या हुता ऽअतिनेदन्ति या हुता ऽअधिशेरते किन्ताभिर्ज्जयतीति या हुता ऽउज्ज्वलन्ति देवलोकमेव ताभिर्ज्जयति दीप्प्यत ऽइव हि देवलोको या हुता ऽअतिनेदन्ति मानुष्ष्यलोकमेव ताभि-

(१) "मनुष्यलोक०" इति 'ग' 'ज' पुस्तकयोः । काण्वशाखायामपि "मनुष्यलो०" इत्येव पाठ उपलभ्यते ॥

र्जयत्यतीव हि मानुष्यलोको या हुता ऽअधिशेरते पितृलोकमेव ताभिर्जयत्यध ऽइव हि पितृलोकः ॥ १० ॥ याज्ञवल्क्येति होवाच । कतिभिरयमद्य ब्रह्मा यज्ञन्दक्षिणतो देवताभिर्गोपायिष्यतीत्येकयेति कतमा सैकेति मन ऽएवेत्यनन्तं वै मनोऽनन्ता विश्वे देवा ऽअनन्तमेव स तेन लोकञ्जयति ॥ ११ ॥ याज्ञवल्क्येति होवाच । कत्ययमद्योद्गातास्मिन्यज्ञे स्तोत्रिया स्तोष्यतीति तिस्र ऽइति कतमास्तास्तिस्र ऽइति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीयाधिदेवतमथाध्यात्मङ्कतमास्ता या ऽअध्यात्ममिति प्राण ऽएव पुरोनुवाक्यापानो याज्या व्यानः शस्या किन्ताभिर्जयतीति यत्किञ्चेदम्प्राणभृदिति ततो ह होताश्वल ऽउपरराम ॥ १२ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ ग्रहातिग्रहविषये आर्तभागयाज्ञवल्क्यसंवादः ]

अथ हैनञ्जारत्कारव ऽआर्त्तभागः पप्रच्छ । याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा ऽइत्यष्टौ ग्रहा ऽअष्टावतिग्रहा ये तेऽष्टौ ग्रहा ऽअष्टावतिग्रहाः कतमे त ऽइति ॥ १ ॥ प्राणो वै ग्रहः । सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति ॥ २ ॥ जिह्वा वै ग्रहः । स रसेनातिग्रहेण गृहीतो जिह्वया हि रसान्विजानाति

(१) "मनुष्यलोक॰" इति 'ग' 'ज' पुस्तकयोः । काण्वशाखायामपि "मनुष्यलोक॰" इत्येव ॥

॥ ३ ॥ वाग्वै ग्रहः । स नाम्नातिग्रहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ४ ॥ चक्षुर्वै ग्रहः । स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः । स शब्देनातिग्रहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥६॥ मनो वै ग्रहः । स कामेनातिग्रहेण गृहीतो मनसा हि कामान्कामयते ॥७॥ हस्तौ वै ग्रहः । स कर्म्मणातिग्रहेण गृहीतो हस्ताभ्याᳬं हि कर्म्म करोति ॥ ८ ॥ त्वग्वै ग्रहः । स स्पर्शेनातिग्रहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत ऽइत्यष्टौ ग्रहा ऽअष्टावतिग्रहाः ॥ ९ ॥ याज्ञवल्क्येति होवाच । यदिदᳬं सर्वम्मृत्योरन्नङ्कास्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्म्मृत्युञ्जयति ॥ १० ॥ याज्ञवल्क्येति होवाच । यत्रायम्पुरुषो म्रियते किमेनन्न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वे देवा ऽअनन्तमेव स तेन लोकञ्जयति ॥ ११ ॥ याज्ञवल्क्येति होवाच । यत्रायम्पुरुषो म्रियत ऽउदस्मात्प्राणाः क्रामन्त्याहो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स ऽउच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥ १२ ॥ याज्ञवल्क्येति होवाच । यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातम्प्राणश्चक्षुरादित्यम्मनश्चन्द्रन्दिशः श्रोत्रम्पृथिवीᳬं शरीरमाकाशमात्मौषधीर्ल्लोमानि वनस्पतीन्केशा ऽअप्सु लोहितञ्च रेतश्च निधीयते क्वायन्तदा पुरुषो भवतीत्याहर सोम्य हस्तम् ॥ १३ ॥ आर्त्तभागेति होवाच । आवमेवैतद्वेदिष्यावो न

नावेतत्त्सजन ऽइति तौ होत्क्रम्म्य मन्त्रयाञ्चक्रतुस्तौ ह यदूचतुः कर्म्म हैव तदूचतुरथ ह यत्प्रशशꣳसतुः कर्म्म हैव तत्प्रशशꣳसतुः पुण्ण्यो वै पुण्ण्येन कर्म्मणा भवति पापः पापेनेति ततो ह जारत्कारव ऽआर्त्तभाग ऽउपरराम ॥ १४ ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥

कण्डिकासंख्या ॥ १०४ ॥

---

[ कर्मफलानां संसारत्वप्रदर्शनायैव भुज्युयाज्ञवल्क्यसंवादः ]

अथ हैनम्भुज्ज्युर्ल्लाह्यायनिः पप्प्रच्छ । याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्य्यव्व्रजाम ते पतञ्चलस्य काप्प्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्व्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्न्वाङ्गिरस ऽइति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता ऽअभवन्क्व पारिक्षिता ऽअभवन्निति तत्त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता ऽअभवन्निति ॥ १ ॥ स होवाच । उवाच वै स तदगच्छन्न्वै ते तत्र यत्राऽश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिꣳशतं वै देवरथाह्न्यान्न्ययँल्लोकस्तꣳ समन्तँल्लोकन्द्विस्तावत्पृथिवी पर्य्येति ताम्पृथिवीन्द्विस्तावत्त्समुद्रः पर्य्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रन्तावानन्तरेणाकाशस्तानिन्द्रः सुपर्ण्णो भूत्वा वायवे प्प्रायच्छत्तान्न्वा-

(१) "त" इति 'ग' 'ज' पुस्तकयोः ।

युरात्मनि धित्वा तत्रागमयद्यत्र पारिक्षिता ऽअभवन्नित्येवमिव वै स व्वायुमेव प्प्रशशᳬस तस्माद्वायुरेव व्व्यष्टिर्व्वायुः समष्टिरप पुनर्म्मृत्युञ्जयति सर्व्वमायुरेति य ऽएवं व्वेद ततो ह भुज्ज्युर्ल्लाह्यायनिरुपरराम ॥ २ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—०—

[ ससंन्यासात्मज्ञानविषये कहोडयाज्ञवल्क्यसंवादः ]

अथ हैनङ्कहोडः कौषीतकेयः पप्प्रच्छ । याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य ऽआत्मा सर्व्वान्तरस्तम्मे व्व्याचक्ष्वेत्येष त ऽआत्मा सर्व्वान्तरः कतमो याज्ञवल्क्य सर्व्वान्तरो योऽशनायापिपासे शोकम्मोहञ्जराम्मृत्युमत्त्येत्येतं व्वै तमात्मानं विदित्वा ब्ब्राह्मणाः पुत्त्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्व्युत्थायाथ भिक्षाचर्य्यञ्चरन्ति या ह्येव पुत्त्रैषणा सा व्वित्तैषणा या व्वित्तैषणा सा लोकैषणोभे ह्येते ऽएषणे ऽएव भवतस्तस्मात्पण्डितः पाण्डित्यन्निर्व्विद्य बाल्येन तिष्ठासेद्बाल्यञ्च पाण्डित्यञ्च निर्व्विद्याथ मुनिरमौनञ्च मौनञ्च निर्व्विद्याथ ब्ब्राह्मणः स ब्ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश ऽएव भवति य ऽएवं व्वेद ततो ह कहोडः कौषीतकेय ऽउपरराम ॥ १ ॥

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—०—

[ आत्मविषये उषस्तयाज्ञवल्क्यसंवादः ]

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ । याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य ऽआत्मा सर्वान्तरस्तम्मे व्याचक्ष्वेत्येष त ऽआत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त ऽआत्मा सर्वान्तरो योऽपानेनापानिति स त ऽआत्मा सर्वान्तरो यो व्यानेन व्यनिति स त ऽआत्मा सर्वान्तरो य ऽउदानेनोदनिति स त ऽआत्मा सर्वान्तरो यः समानेन समानिति[1] स त ऽआत्मा सर्वान्तरः स होवाचोषस्तश्चाक्रायणो यथा वै ब्रूयादसौ गौरसावश्व ऽइत्येवमेवैतद्व्यपदिष्टम्भवति यदेव साक्षादपरोक्षाद्ब्रह्म य ऽआत्मा सर्वान्तरस्तम्मे व्याचक्ष्वेत्येष त ऽआत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो न दृष्टेर्द्रष्टारम्पश्येर्न्न श्रुतेः श्रोतारꣳ शृणुया न मतेर्म्मन्तारम्मन्न्वीथा न विज्ञातेर्व्विज्ञातारं विजानीया ऽएष त ऽआत्मा सर्वान्तरोऽतोऽन्न्यदार्त्तन्ततो होषस्तश्चाक्रायण ऽउपरराम ॥ १ ॥

षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—०—

[ सर्वान्तरस्यात्मनः स्वरूपाधिगमाय गार्गीयाज्ञवल्क्यसंवादः ]

अथ हैनङ्गार्गी वाचक्नवी पप्रच्छ । याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतश्च प्रोतश्च कस्मिन्न्वाप ऽओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु वायुरोतश्च प्रोतश्चेत्याकाश ऽएव गार्गीति कस्मिन्न्वाकाश

(१) "समनिति" इति 'ग' 'ज' पुस्तकयोः ।

ऽओतश्च प्प्रोतश्चेत्यन्तरिक्षलोकेषु गार्ग्गीति कस्म्मिन्न्व-न्तरिक्षलोका ऽओताश्च प्प्रोताश्चेति द्यौर्ल्लोकेषु गार्ग्गीति कस्म्मिन्नु द्यौर्ल्लोका ऽओताश्च, प्प्रोताश्चेत्यादित्त्यलोकेषु गार्ग्गीति कस्म्मिन्न्वादित्त्यलोका ऽओताश्च प्प्रोताश्चेति चन्द्रलोकेषु गार्ग्गीति कस्म्मिन्नु चन्द्रलोका ऽओताश्च प्प्रोताश्चेति नक्षत्रलोकेषु गार्ग्गीति कस्म्मिन्नु नक्षत्र-लोका ऽओताश्च प्प्रोताश्चेति देवलोकेषु गार्ग्गीति क-स्म्मिन्नु देवलोका ऽओताश्च प्प्रोताश्चेति गन्धर्व्वलोकेषु गार्ग्गीति कस्म्मिन्नु गन्धर्व्वलोका ऽओताश्च प्प्रोताश्चेति प्प्रजापतिलोकेषु गार्ग्गीति कस्म्मिन्नु प्प्रजापतिलोका ऽओ-ताश्च प्प्रोताश्चेति ब्ब्रह्मलोकेषु गार्ग्गीति कस्म्मिन्नु ब्ब्रह्मलोका ऽओताश्च प्प्रोताश्चेति स होवाच गार्ग्गि मातिप्प्राक्षीर्म्मा ते मूर्द्धा व्व्यपप्प्तदनतिप्प्रश्न्या वै देवता ऽअतिपृच्छसि गार्ग्गि मातिप्प्राक्षीरिति ततो ह गार्ग्गी व्वाचक्क्नव्व्युपरराम ॥ १ ॥

षष्ठाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

———०———

[ ब्रह्मलोकानामन्तरतमं सूत्रं दर्शयितुमुद्दालकयाज्ञवल्क्यसंवादः ]

अथ हैनमुद्दालक ऽआरुणिः पप्प्रच्छ । याज्ञवल्क्येति होवाच मद्द्रेष्ष्ववसाम पतञ्चलस्य काप्प्यस्य गृहेषु यज्ञ-मधीयानास्तस्यासीद्भार्य्या गन्धर्व्वगृहीता तमपृच्छाम कोऽ-

( १ ) 'ग' 'ज' पुस्तकयोः "द्यौर्ल्लोके" इति पाठो दृश्यते ।

( २ ) "द्यौर्ल्लोक" इति 'ग' 'ज' पुस्तकयोः । तथैव तद्विशेषणीभूतौ ओतप्रोतशब्दावप्येक-वचनान्तावेवोक्तपुस्तकयोरुपलभ्येते ।

सीति सोऽब्रवीत्कबन्ध ऽआथर्वण ऽइति ॥ १ ॥ सोऽब्रवीत् । पतञ्चलङ्काप्यं याज्ञिकाँश्च वेत्थ नु त्वङ्काप्य तत्सूत्रं यस्मिन्नयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहन्तद्भगवन्वेदेति ॥ २ ॥ सोऽब्रवीत् । पतञ्चलङ्काप्यं याज्ञिकाँश्च वेत्थ नु त्वङ्काप्य तमन्तर्यामिणं य ऽइमञ्च लोकम्परञ्च लोकं सर्वाणि च भूतान्यन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्यो नाहन्तम्भगवन्वेदेति ॥ ३ ॥ सोऽब्रवीत् । पतञ्चलङ्काप्यं याज्ञिकाँश्च यो वै तत्काप्य सूत्रं विद्यात्तञ्चान्तर्यामिणं स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स यज्ञवित्स भूतवित्स ऽआत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वाँस्तञ्चान्तर्यामिणम्ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यतीति ॥ ४ ॥ वेद वा ऽअहङ्गौतम । तत्सूत्रन्तञ्चान्तर्यामिणमिति यो वा ऽइदङ्कश्चच ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥ ५ ॥ वायुर्वै गौतम तत्सूत्रम् । वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद्वै गौतम पुरुषम्प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण सन्दृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणम्ब्रूहीति ॥ ६ ॥ यः पृथिव्यान्तिष्ठन् । पृथिव्या ऽअन्तरो यम्पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः-

मृतः ॥ ७ ॥ योऽप्सु तिष्ठन् । अद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ ८ ॥ * योऽग्नौ तिष्ठन् । अग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ ९ ॥ य ऽआकाशे तिष्ठन् । आकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य ऽआकाशमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १० ॥ यो वायौ तिष्ठन् । वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ ११ ॥ य ऽआदित्ये तिष्ठन् । आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य ऽआदित्यमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १२ ॥ यश्चन्द्रतारके तिष्ठन् । चन्द्रतारकादन्तरो यञ्चन्द्रतारकन्न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १३ ॥ यो दिक्षु तिष्ठन् । दिग्भ्योऽन्तरो यन्दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १४ ॥ यो विद्युति तिष्ठन् । विद्युतोऽन्तरो यं विद्युन्न वेद यस्य विद्युच्छरीरं यो विद्युतमन्तरो यमयति स त ऽआत्मान्तर्याम्यमृतः ॥ १५ ॥ य स्तनयित्नौ तिष्ठन् । स्तनयित्नोरन्तरो यꣳ स्तनयित्नुर्न वेद यस्य स्तनयित्नुः शरीरं य स्तनयित्नुमन्तरो

* शतम् ७३०० ।

यमयति स त ऽआत्मान्तर्य्याम्यमृत ऽइत्यधिदैवतमथा-
धिलोकम् ॥ १६ ॥ यः सर्व्वेषु लोकेषु तिष्ठन् । सर्व्वेभ्यो
लोकेभ्योऽन्तरो यं सर्व्वे लोका न विदुर्य्यस्य सर्व्वे लोकाः
शरीरं यः सर्व्वाँल्लोकानन्तरो यमयति स त ऽआत्मान्त-
र्य्याम्यमृत ऽइत्यु ऽएवाधिलोकमथाधिवेदम् ॥ १७ ॥
यः सर्व्वेषु वेदेषु तिष्ठन् । सर्व्वेभ्यो वेदेभ्योऽन्तरो यं
सर्व्वे वेदा न विदुर्य्यस्य सर्व्वे वेदाः शरीरं यः सर्व्वान्वे-
दानन्तरो यमयति स त ऽआत्मान्तर्य्याम्यमृत ऽइत्यु
ऽएवाधिवेदमथाधियज्ञम् ॥ १८ ॥ यः सर्व्वेषु यज्ञेषु तिष्ठन् ।
सर्व्वेभ्यो यज्ञेभ्योऽन्तरो यं सर्व्वे यज्ञा न विदुर्य्यस्य
सर्व्वे यज्ञाः शरीरं यः सर्व्वान्यज्ञानन्तरो यमयति स त
ऽआत्मान्तर्य्याम्यमृत इत्यु ऽएवाधियज्ञमथाधिभूतम्
॥ १९ ॥ यः सर्व्वेषु भूतेषु तिष्ठन् । सर्व्वेभ्यो भूतेभ्योऽ-
न्तरो यं सर्व्वाणि भूतानि न विदुर्य्यस्य सर्व्वाणि भूतानि
शरीरं यः सर्व्वाणि भूतान्यन्तरो यमयति स त ऽआत्मा-
न्तर्य्याम्यमृत ऽइत्यु ऽएवाधिभूतमथाध्यात्मम् ॥ २० ॥
यः प्राणे तिष्ठन् । प्राणादन्तरो यम्प्राणो न वेद यस्य
प्राणः शरीरं यः प्राणमन्तरो यमयति स त ऽआत्मान्त-
र्य्याम्यमृतः ॥२१॥ यो वाचि तिष्ठन् । वाचोऽन्तरो यं वाङ्न
वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयति स
त ऽआत्मान्तर्य्याम्यमृतः ॥ २२ ॥ यश्चक्षुषि तिष्ठन् ।
चक्षुषोऽन्तरोयञ्चक्षुर्न्न वेद यस्य चक्षुः शरीरं य-
श्चक्षुरन्तरो यमयति स त ऽआत्मान्तर्य्याम्यमृतः ॥२३॥

यः श्रोत्रे तिष्ठन् । श्रोत्रादन्तरो यꣳ श्रोत्रन्न वेद यस्य श्रोत्रꣳ शरीरं य्यः श्रोत्रमन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २४ ॥ यो मनसि तिष्ठन् । मनसोऽन्तरो यम्मनो न वेद यस्य मनः शरीरं य्यो मनोऽन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २५ ॥ यस्त्वचि तिष्ठन् । त्वचोऽन्तरो यन्त्वङ्न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २६ ॥ यस्तेजसि तिष्ठन् । तेजसोऽन्तरो यन्तेजो न वेद यस्य तेजः शरीरं य्यस्तेजोऽन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २७ ॥ यस्तमसि तिष्ठन् । तमसोऽन्तरो यन्तमो न वेद यस्य तमः शरीरं य्यस्तमोऽन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २८ ॥ यो रेतसि तिष्ठन् । रेतसोऽन्तरो यꣳ रेतो न वेद यस्य रेतः शरीरं य्यो रेतोऽन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ २९ ॥ य ऽआत्मनि तिष्ठन् । आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य्य ऽआत्मानमन्तरो यमयति स त ऽआत्मान्तर्य्याम्म्यमृतः ॥ ३० ॥ अदृष्टो द्रष्टा । अश्रुतः श्रोतामतो मन्ताविज्ञातो विज्ञाता नान्योऽस्ति द्रष्टा नान्योऽस्ति श्रोता नान्योऽस्ति मन्ता नान्योऽस्ति विज्ञातैष त ऽआत्मान्तर्य्याम्म्यमृतोऽतोऽन्न्यदार्त्तन्ततो होद्दालक ऽआरुणिरुपरराम ॥ ३१ ॥

षष्ठाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

[ अशनायादिविनिर्मुक्तं निरुपाधिकं सर्वान्तरं ब्रह्म
वर्णयितुं गार्गीयाज्ञवल्क्यसंवादः ]

अथ ह व्वाचक्क्नव्व्युवाच। ब्ब्राह्मणा भगवन्तो हन्ताहमिमं रुयाज्ञवल्क्यन्द्वौ प्प्रश्नन्नौ प्प्रक्ष्यामि तौ चेन्न्मे व्विवक्ष्यति न वै जातु युष्म्माकमिमङ्कश्चिद्ब्रह्मोद्यञ्जेतेति तौ चेन्न्मे न व्विवक्ष्यति मूर्द्धास्य व्विपतिष्ष्यतीति पृच्छ गार्ग्गीति ॥ १ ॥ सा होवाच। अहं वै त्वा याज्ञवल्क्य यथा काश्श्यो वा व्वैदेहो वोग्ग्रपुत्र ऽउद्यन्धनुरधिज्ज्यङ्कृत्त्वा द्वौ व्वाणवन्तौ सपत्त्नातिव्व्याधिनौ[1] हस्ते कृत्त्वोपोत्तिष्ट्ठेदेवमेवाहन्त्वा द्वाब्भ्याम्प्रश्नाब्भ्यामुपोदस्त्थान्तौ मे ब्ब्रूहीति पृच्छ गार्ग्गीति ॥ २ ॥ सा होवाच। यदूर्द्ध्वं रुयाज्ञवल्क्य दिवो यदवाक्क्पृथिव्व्या यदन्तरा द्यावापृथिवी ऽइमे॥ यद्भूतञ्च भवच्च भविष्ष्यच्चेत्त्याचक्षते कस्मिँस्तदोतञ्च प्प्रोतञ्चेति ॥ ३ ॥ स होवाच। यदूर्द्ध्वङ्गार्ग्गि दिवो यदवाक्क्पृथिव्व्या यदन्तरा द्यावापृथिवी ऽइमे॥ यद्भूतञ्च भवच्च भविष्ष्यच्चेत्त्याचक्षत ऽआकाशे तदोतञ्च प्प्रोतञ्चेति ॥ ४ ॥ सा होवाच। नमस्ते याज्ञवल्क्य यो म ऽएतं व्व्यवोचोऽपरस्म्मै धारयस्वेति पृच्छ गार्ग्गीति ॥ ५ ॥ सा होवाच। यदूर्द्ध्वं रुयाज्ञवल्क्य दिवो यदवाक्क्पृथिव्व्या यदन्तरा द्यावापृथिवी ऽइमे॥ यद्भूतञ्च भवच्च भविष्ष्यच्चेत्त्याचक्षते कस्म्मिन्नेव तदोतञ्च प्प्रोतञ्चेति ॥ ६ ॥ स होवाच। यदूर्द्ध्वङ्गार्ग्गि दिवो यदवाक्क्पृथिव्व्या यदन्तरा द्यावापृथिवी ऽइमे॥

(१) "सपत्नाधिव्याधिनौ" इति 'ग' 'ज' पुस्तकयोः।

यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षत ऽआकाश ऽएव तदोतञ्च प्प्रोतञ्चेति कस्मिन्न्वाकाश ऽओतश्च प्प्रोतश्चेति ॥ ७ ॥ स होवाच । एतद्वै तदक्षरङ्गार्ग्गि ब्ब्राह्मणा ऽअभिवदन्त्यस्थूलमनण्ण्वह्रस्वमदीर्ग्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमस्प्पर्शमगन्धमरसमचक्षुष्कमश्श्रोत्रमवागमनोऽतेजस्कमप्प्राणममुखमनामागोत्रमजरममरमभयममृतमरजोऽशब्दमविवृतमसँव्वृतमपूर्व्वमनपरमनन्तरमबाह्यन्न तदश्नोति कश्चन न तदश्नोति कश्चन ॥ ८ ॥ एतस्य वा ऽअक्षरस्य । प्प्रशासने गार्ग्गि द्यावापृथिवी व्विधृते तिष्ठत ऽएतस्य वा ऽअक्षरस्य प्प्रशासने गार्ग्गि सूर्य्याचन्द्रमसौ व्विधृतौ तिष्ठत ऽएतस्य वा ऽअक्षरस्य प्प्रशासने गार्ग्ग्यहोरात्राण्ण्यर्द्धमासा मासा ऽऋतवः सँव्वत्सरा विधृतास्तिष्ठन्त्येतस्य वा ऽअक्षरस्य प्प्रशासने गार्ग्गि प्प्राच्च्योऽन्न्या नद्यः स्यन्दन्ते श्वेतेब्भ्यः पर्व्वतेब्भ्यः प्प्रतीच्च्योऽन्न्या यां यांश्च दिशमेतस्य वा ऽअक्षरस्य प्प्रशासने गार्ग्गि ददतम्मनुष्याः प्प्रशंसन्ति यजमानन्देवा दर्व्वीम्पितरोऽन्न्वायत्ताः ॥ ९ ॥ यो वा ऽएतदक्षरमविदित्त्वा गार्ग्गि । अस्मिँल्लोके जुहोति ददाति तपस्यत्त्यपि बहूनि वर्षसहस्राण्ण्यन्तवदेवास्य स लोको भवति यो वा ऽएतदक्षरमविदित्त्वा गार्ग्ग्यस्म्माल्लोकात्प्रैति स कृपणोऽथ य ऽएतदक्षरङ्गार्ग्गि विदित्त्वास्म्माल्लोकात्प्रैति स ब्ब्राह्मणः ॥ १० ॥ तद्वा ऽएतदक्षरङ्गार्ग्गि । अदृष्टन्द्रष्ट्रश्रुतँ श्श्रोत्रमतम्मन्त्रविज्ञातं विज्ञातृ नान्न्यदस्ति

द्रष्टृ नान्यदस्ति श्रोतृ नान्यदस्ति मन्तृ नान्यदस्ति विज्ञात्रेतद्वै तदक्षरङ्गार्गि यस्मिन्नाकाश ऽओतश्च प्रोतश्चेति ॥ ११ ॥ सा होवाच । ब्राह्मणा भगवन्तस्तदेव बहु मन्यध्वं यदस्मान्नमस्कारेण मुच्यध्वै न वै जातु युष्माकमिमङ्कश्चिद्ब्रह्मोद्यञ्जेतेति ततो ह वाचक्नव्युपरराम ॥ १२ ॥

षष्ठाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

---

[ ब्रह्मणो नियन्तव्यदेवताभेदसंकोचविकासद्वारेणाधिगन्तव्यं साक्षादपरोक्षत्वं वर्णयितुं शाकल्ययाज्ञवल्क्यसंवादः ]

अथ हैनं विदग्धः शाकल्यः पप्रच्छ । कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच ॥ १ ॥ कत्येव देवा याज्ञवल्क्येति । त्रयस्त्रिंशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय ऽइत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्द्ध ऽइत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक ऽइत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ २ ॥ स होवाच । महिमान ऽएवैषामेते त्रयस्त्रिंशत्त्वेव देवा ऽइति कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव ऽएकादश

रुद्रा द्वादशादित्यास्त ऽएकत्रिꣳशदिन्द्रश्चैव प्प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ ३ ॥ कतमे व्वसव ऽइति । अग्निश्च पृथिवी च व्वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते व्वसव ऽएतेषु हीदꣳ सर्वं व्वसु हितमेते हीदꣳ सर्वं व्वासयन्ते तद्यदिदꣳ सर्वं व्वासयन्ते तस्माद्वसव ऽइति ॥४॥ कतमे रुद्रा ऽइति । दशेमे पुरुषे प्प्राणा ऽआत्मैकादशस्ते यदास्म्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा ऽइति ॥ ५ ॥ कतम ऽआदित्या ऽइति । द्वादश मासाः सँवत्सरस्यैत ऽआदित्या ऽएते हीदꣳ सर्वमाददाना यन्ति तद्यदिदꣳ सर्वमाददाना यन्ति तस्मादादित्या ऽइति ॥ ६ ॥ [ अर्धः प्रपाठकः ॥ ५४ ॥ ] कतम ऽइन्द्रः कतमः प्प्रजापतिरिति । स्तनयित्नुरेवेन्द्रो यज्ञः प्प्रजापतिरिति कतम स्तनयित्नुरित्यशनिरिति कतमो यज्ञ ऽइति पशव ऽइति ॥ ७ ॥ कतमे षडिति । अग्निश्च पृथिवी च व्वायुश्चान्तरिक्षश्चादित्यश्च द्यौश्चैते षडित्येते ह्येवेदꣳ सर्वꣳ षडिति ॥ ८ ॥ कतमे ते त्रयो देवा ऽइति । इम ऽएव त्रयो लोका ऽएषु हीमे सर्वे देवा ऽइति कतमौ तौ द्वौ देवावित्यन्नञ्चैव प्प्राणश्चेति कतमोऽद्ध्यर्द्ध ऽइति योऽयम्पवत ऽइति ॥ ९ ॥ तदाहुः । यदयमेक ऽएव पवतेऽथ कथमद्ध्यर्द्ध ऽइति यदस्मिन्निदꣳ सर्वमद्ध्यार्ध्नोत्तेनाद्ध्यर्द्ध ऽइति कतम ऽएको देव ऽइति स ब्रह्म त्यदित्याचक्षते ॥ १० ॥ पृथिव्व्येव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ

स वै वेदिता स्याद्याज्ञवल्क्य व्वेद वा अहन्तम्पुरुषꣳ सर्व्व-स्यात्मनः परायणं ब्यमात्थ य ऽएवायꣳ शारीरः पुरुषः स ऽएष व्वदैव शाकल्ल्य तस्य का देवतेति स्त्रिय ऽइति होवाच ॥ ११ ॥ रूपाण्येव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं व्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य व्वेद वा ऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं ब्यमात्थ य ऽएवासावादित्ये पुरुषः स ऽएष व्वदैव शाकल्ल्य तस्य का देवतेति चक्षुरिति होवाच ॥ १२ ॥ आकाश ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं व्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य व्वेद वा ऽअहन्तम्पुरुषꣳ सर्व्व-स्यात्मनः परायणं ब्यमात्थ य ऽएवायं व्वायौ पुरुषः स ऽएष व्वदैव शाकल्ल्य तस्य का देवतेति प्राण ऽइति होवाच ॥ १३ ॥ काम ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं व्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य व्वेद वा ऽअहन्तम्पुरुषꣳ सर्व्व-स्यात्मनः परायणं ब्यमात्थ य ऽएवासौ चन्द्रे पुरुषः स ऽएष व्वदैव शाकल्ल्य तस्य का देवतेति मन ऽइति होवाच ॥ १४ ॥ तेज ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्यो-तिर्य्यो वै तम्पुरुषं व्विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य व्वेद वा ऽअहन्तम्पुरुषꣳ सर्व्वस्या-त्मनः परायणं ब्यमात्थ य ऽएवायमग्नौ पुरुषः स ऽएष व्वदैव शाकल्ल्य तस्य का देवतेति व्वागिति होवाच ॥ १५ ॥

तम ऽएव यस्यायतनम्। चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य ऽएवायञ्छायामयः पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति मृत्युरिति होवाच ॥ १६ ॥ आप ऽएव यस्यायतनम्। चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य ऽएवायमप्प्सु पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति वरुण ऽइति होवाच ॥ १७ ॥ रेत ऽएव यस्यायतनम् । चक्षुर्ल्लोको मनोज्ज्योतिर्य्यो वै तम्पुरुषं विद्यात्सर्व्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा ऽअहन्तम्पुरुषꣳ सर्व्वस्यात्मनः परायणं यमात्थ य ऽएवायम्पुत्रमयः पुरुषः स ऽएष वदैव शाकल्ल्य तस्य का देवतेति प्प्रजापतिरिति होवाच ॥ १८ ॥ शाकल्ल्येति होवाच याज्ञवल्क्यः । त्वाꣳ स्विदिमे ब्राह्मणा ऽअङ्गारावक्षयणमक्रूता३ ऽइति ॥ १९ ॥ याज्ञवल्क्येति होवाच शाकल्ल्यः । यदिदङ्कुरुपञ्चालानाम्ब्राह्मणानत्यवादीः किम्ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्प्रतिष्ठा ऽइति यद्दिशो वेत्थ सदेवाः सप्प्रतिष्ठाः ॥ २० ॥ किन्देवतोऽस्याम्प्राच्च्यान्दिश्यसीति । आदित्यदेवत ऽइति स ऽआदित्यः कस्म्मिन्प्प्रतिष्ठित ऽइति चक्षुषीति कस्म्मिन्नु चक्षुः प्प्रतिष्ठितम्भवतीति रूपेष्विति

चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानि भवन्तीति हृदय इति हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥ किन्देवतोऽस्यान्दक्षिणायान्दिश्यसीति । यमदेवत इति स यमः कस्मिन्प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठिता भवतीति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणान्ददाति श्रद्धायाᳬं ह्येव दक्षिणा प्रतिष्ठिता भवतीति कस्मिन्नु श्रद्धा प्रतिष्ठिता भवतीति हृदय इति हृदयेन हि श्रद्धत्ते हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥ किन्देवतोऽस्याम्प्रतीच्यान्दिश्यसीति । वरुणदेवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता भवन्तीति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितम्भवतीति हृदय इति तस्मादपि प्रतिरूपञ्जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्म्मित इति हृदये ह्येव रेतः प्रतिष्ठितम्भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥ किन्देवतोऽस्यामुदीच्यान्दिश्यसीति । सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठिता भवतीति । सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठिता भवतीति कस्मिन्नु सत्यम्प्रतिष्ठितम्भवतीति हृदय इति हृदयेन हि सत्यञ्जानाति हृदये ह्येव सत्यम्प्रतिष्ठितम्भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २४ ॥ किन्देवतोऽस्यान्ध्रुवाया-

न्दिशस्यसीति । अग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वाक्प्रतिष्ठिता भवतीति मनसीति कस्मिन्नु मनः प्रतिष्ठितम्भवतीति हृदय इति कस्मिन्नु हृदयम्प्रतिष्ठितम्भवतीति ॥ २५ ॥ अहल्लिकेति होवाच याज्ञवल्क्यः । यत्रैतदन्यत्रास्मन्मन्यासै यत्रैतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयांसि वैनद्विमथ्नीरन्निति ॥ २६ ॥ कस्मिन्नु त्वञ्चात्मा च प्रतिष्ठितौ स्थ इति । प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्नवपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति ॥ २७ ॥ स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो न सज्यते न व्यथत इत्येतान्यष्टावायतनान्यष्टौ लोका अष्टौ पुरुषाः स यस्तान्पुरुषान्व्युदुह्य प्रत्युह्यात्यक्रामीत्तन्त्वौपनिषदम्पुरुषम्पृच्छामि तञ्चेन्मे न विवक्ष्यसि मूर्द्धा ते विपतिष्यतीति तꣳह शाकल्यो न मेने तस्य ह मूर्द्धा विपपात तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः ॥२८॥ अथ ह याज्ञवल्क्य उवाच । ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत[1] यो वः कामयते तं वः पृच्छानि सर्वान्वा वः पृच्छानीति ते ह ब्राह्मणा न दधृषुः ॥ २९ ॥ तान्हैतैः श्लोकैः पप्रच्छ ।

(१) "पृच्छथ" इति 'क' पुस्तके ।

यथा व्वृक्षो व्वनस्प्पतिस्तथैव पुरुषोऽमृषा ॥ तस्य पर्ण्णानि लोमानि त्त्वगस्योत्पाटिका बहिः ॥ ३० ॥ त्त्वच ऽएवास्य रुधिरम्प्रस्यन्दि त्त्वच ऽउत्पटः ॥ तस्म्मात्तदातुन्नात्प्रैति रसो व्वृक्षादिवाहतात् ॥ ३१ ॥ माꣳसान्न्यस्य शकराणि किनाटꣳ स्नाव तत्स्थिरम् ॥ अस्त्थीन्न्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥ ३२ ॥ यद्वृक्षो व्वृक्क्णो रोहति मूलान्नवतरः पुनः ॥ मर्त्त्यः स्विन्न्मृत्त्युना व्वृक्क्णः कस्म्मान्न्मूलात्प्ररोहति ॥ ३३ ॥ रेतस ऽइति मा व्वोचत जीवतस्तत्प्रजायते ॥ जात ऽएव न जायते को न्न्वेनञ्जनयेत्पुनः ॥ धानारुह ऽउ वै व्वृक्षोऽन्न्यतः प्प्रेत्य सम्भवः ॥ यत्समूलमुद्वृहेयुर्व्वृक्षन्न पुनराभवेत् ॥ मर्त्त्यः स्विन्न्मृत्त्युना व्वृक्क्णः कस्म्मान्न्मूलात्प्ररोहति । विज्ञानमानन्दम्ब्रह्म रातेर्द्दातुः परायणम् ॥ तिष्ठमानस्य तद्विद ऽइति ॥३४॥

षष्ठाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

---

[ उपदिष्टस्यैव ब्रह्मणोऽधिगमने उपायान्तरस्य प्रदर्शनं ब्राह्मणद्वयेन ]

जनको ह व्वैदेह ऽआसाञ्चक्रे । अथ ह याज्ञवल्क्य ऽआवव्राज स होवाच जनको व्वैदेहो याज्ञवल्क्य किमर्त्थमचारीः पशूनिच्छन्नण्ण्वन्तानित्त्युभयमेव सम्म्राडिति होवाच यत्ते कश्चिदब्ब्रवीत्तच्छृणवामेति ॥ १ ॥ अब्ब्रवीन्म ऽउदङ्कः शौल्ल्वायनः ॥ प्प्राणो वै ब्ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्न्ब्रूयात्तथा तच्छौल्ल्वायनोऽ-

ब्ब्रवीत्प्राणो वै ब्ब्रह्मेत्यप्राणतो हि किꣳस्यादित्यब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्ब्रवीदित्येकपाद्वा ऽएतत्सम्म्राडिति ॥२॥ स वै नो ब्ब्रूहि याज्ञवल्क्य । प्प्राण ऽएवा[१]यतनमाकाशः प्प्रतिष्ठा प्प्रियमित्येनदुपासीत का प्प्रियता याज्ञवल्क्य प्प्राण ऽएव सम्म्राडिति होवाच प्प्राणस्य वै सम्म्राट्कामायायाज्ज्यं य्याजयत्यप्रतिगृह्यस्य प्प्रतिगृह्णात्यपि तत्र व[२]धशङ्का भवति यान्दिशमेति प्प्राणस्यैव सम्म्राट्कामाय प्प्राणो वै सम्म्राट् परमम्ब्रह्म नैनम्प्राणो जहाति सर्व्वाण्ण्येनम्भूतान्न्यभिक्षरन्ति ॥ ३ ॥ देवो भूत्वा देवानप्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति क ऽएव ते किमब्ब्रवीदिति ॥ ४ ॥ अब्ब्रवीन्न्मे जित्वा शैलिनः । व्वाग्वै ब्ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्न्ब्रूयात्तथा तच्छैलिनोऽब्ब्रवीद्वाग्वै ब्ब्रह्मेत्यवदतो हि किꣳ स्यादि[३]त्यब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्ब्रवीदित्येकपाद्वा ऽएतत्सम्म्राडिति ॥ ५ ॥ स वै नो ब्ब्रूहि याज्ञवल्क्य । व्वागेवायतनमाकाशः प्प्रतिष्ठा प्प्रज्ञेत्येनदुपासीत का प्प्रज्ञता याज्ञवल्क्य व्वागेव सम्म्राडिति होवाच व्वाचा वै सम्म्राड्बन्धुः प्प्रज्ञायत ऽऋग्ग्वेदो यजुर्व्वेदः सामवेदोऽ-

---

( १ ) "स ऽएवायत०" इति 'ग' 'ज' पुस्तकयोः ।

( २ ) "वधाशङ्का" इत्युक्तपुस्तकयोः ।

( ३ ) "स्यादब्ब्रवीत्तु" इति 'ग' 'ज' पुस्तकयोः ।

थर्वाङ्गिरस ऽइतिहासः पुराणं विद्या ऽउपनिषदः श्लोकाः सूत्राण्यनुव्व्याख्यानानि व्व्याख्यानानि व्वाचैव सम्म्राट् प्रज्ञायन्ते वाग्वै सम्म्राट् परमम्ब्रह्म नैनं व्वाग्जहाति सर्व्वाण्ण्ये-नम्भूतान्न्यभिक्षरन्ति ॥६॥ देवो भूत्वा देवानप्प्येति। य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभः सहस्रन्ददामीति होवाच जनको व्वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति क ऽएव ते किमब्ब्रवीदिति ॥ ७ ॥ अब्ब्रवीन्न्मे व्वर्क्कुर्व्वार्ष्ष्णः। चक्षुर्वै ब्ब्रह्मेति यथा मातृमान्न्पितृमानाचा-र्य्यवान्न्ब्रूयात्तथा तद्वार्ष्ष्णोऽब्ब्रवीच्चक्षुर्वै ब्ब्रह्मेत्त्यपश्श्यतो हि किंस्थं स्यादित्त्यब्ब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्ब्रवीदि-त्त्येकपाद्वा ऽएतत्सम्म्राडिति ॥ ८ ॥ स वै नो ब्ब्रूहि याज्ञ-वल्क्य। चक्षुरेवायतनमाकाशः प्प्रतिष्ठा सत्त्यमित्त्येनदु-पासीत का सत्त्यता याज्ञवल्क्य चक्षुरेव सम्म्राडिति होवाच चक्षुषा वै सम्म्राट् पश्श्यन्तमाहुरद्राक्षीरिति स ऽआहाद्रा-क्षमिति तत्सत्त्यम्भवति चक्षुर्वै सम्म्राट् परमम्ब्रह्म नैन-ञ्चक्षुर्ज्जहाति सर्व्वाण्ण्येनम्भूतान्न्यभिक्षरन्ति ॥ ९ ॥ देवो भूत्वा देवानप्प्येति। य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभः सहस्रन्ददामीति होवाच जनको व्वैदेहः स होवाच याज्ञ-वल्क्यः पिता मेऽमन्न्यत नाननुशिष्ष्य हरेतेति क ऽएव ते किमब्ब्रवीदिति ॥ १० ॥ अब्ब्रवीन्न्मे गर्द्दभीविपीतो भारद्वाजः। श्रोत्रं वै ब्ब्रह्मेति यथा मातृमान्न्पितृमाना-चार्य्यवान्न्ब्रूयात्तथा तद्भारद्वाजोऽब्ब्रवीच्छ्रोत्रं वै ब्ब्रह्मेत्त्य-श्रृण्ण्वतो हि किंस्थं स्यादित्त्यब्ब्रवीत्तु ते तस्यायतनम्प्रति-

ष्ठान्न मेऽब्रवीदित्येकपाद्वा ऽएतत्सम्राडिति ॥ ११ ॥ स वै नो ब्रूहि याज्ञवल्क्य । श्रोत्रमेवायतनमाकाशः प्रतिष्ठानन्त ऽइत्येनदुपासीत कानन्तता याज्ञवल्क्य दिश ऽएव सम्राडिति होवाच तस्माद्वै सम्राड्याङ्काञ्च दिशङ्गच्छति नैवास्या ऽअन्तङ्गच्छत्यनन्ता हि दिशः श्रोत्रꣳ हि दिशः श्रोत्रं वै सम्राट् परमम्ब्रह्म नैनꣳ श्रोत्रञ्जहाति सर्वाण्येनम्भूतान्यभिक्षरन्ति ॥ १२ ॥ देवो भूत्वा देवानप्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति क ऽएव ते किमब्रवीदिति ॥ १३ ॥ अब्रवीन्मे सत्यकामो जाबालः । मनो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तत्सत्यकामोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्येकपाद्वा ऽएतत्सम्राडिति ॥ १४ ॥ स वै नो ब्रूहि याज्ञवल्क्य । मन ऽएवायतनमाकाशः प्रतिष्ठानन्द ऽइत्येनदुपासीत कानन्दता याज्ञवल्क्य मन ऽएव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहर्यति तस्याम्प्रतिरूपः पुत्रो जायते स ऽआनन्दो मनो वै सम्राट् परमम्ब्रह्म नैनम्मनो जहाति सर्वाण्येनम्भूतान्यभिक्षरन्ति ॥ १५ ॥ देवो भूत्वा देवानप्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य

हरेतेति क ऽएव ते किमब्रवीदिति ॥ १६ ॥ अब्रवीन्मे विदग्धः शाकल्यः हृदयं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य हि किᳪ स्यादित्यब्रवीत्तु ते तस्यायतनम्प्रतिष्ठान्न मेऽब्रवीदित्येकपाद्वा ऽएतत्सम्राडिति ॥ १७ ॥ स वै नो ब्रूहि याज्ञवल्क्य । हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितिता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट् सर्वेषाम्भूतानाम्प्रतिष्ठा हृदयेन हि सर्वाणि भूतानि प्रतितिष्ठन्ति हृदयं वै सम्राट् परमम्ब्रह्म नैनᳬ हृदयᳬ जहाति सर्वाण्येनम्भूतान्यभिक्षरन्ति ॥ १८ ॥ देवो भूत्वा देवानप्येति । य ऽएवं विद्वानेतदुपास्ते हस्त्यृषभᳬ सहस्रन्ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ १९ ॥

षष्ठाध्याये दशमं ब्राह्मणम् ॥ १० ॥

—— ० ——

अथ ह जनको वैदेहः कूर्चादुपावसर्पन्नुवाच । नमस्ते याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन्रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्मास्येवं वृन्दारक ऽआढ्यः सन्नधीतवेद ऽउक्तोपनिषत्क ऽइतो विमुच्यमानः क्व गमिष्यसीति नाहन्तद्भगवन्वेद यत्र गमिष्यामीत्यथ

वै तेऽहन्तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥ स होवाच । इन्धो वै नामैष योऽयन्दक्षिणेऽक्षन्पुरुषस्तं वा ऽएतमिन्धꣳ सन्तमिन्द्र ऽइत्त्याचक्षते परोऽक्षेणेव परोऽक्षप्प्रिया ऽइव हि देवाः प्प्रत्त्यक्षद्विषः ॥ २ ॥ अथैतद्वामेऽक्षिणि पुरुषरूपम् । एषास्य पत्नी विराट् तयोरेष सꣳस्तावो य ऽएषोऽन्तर्हृदय ऽआकाशोऽथैनयोरेतदन्नं य ऽएषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सती सञ्चरणी यैषा हृदयादूर्द्ध्वा नाड्युच्चरति ॥ ३ ॥ ता वा ऽअस्यैताः । हिता नाम नाड्यो यथा केशः सहस्रधा भिन्न ऽएताभिर्वा ऽएतमास्रवदास्रवति तस्मादेष प्प्रविविक्ताहारतर ऽइव भवत्त्यस्म्माच्छारीरादात्मनः ॥ ४ ॥ तस्य वा ऽएतस्य पुरुषस्य । प्प्राची दिक्प्राञ्चः प्प्राणा दक्षिणा दिग्दक्षिणाः प्प्राणाः प्प्रतीची दिक्प्रत्यञ्चः प्प्राणा ऽउदीची दिगुदञ्चः प्प्राणा ऽऊर्द्ध्वा दिगूर्द्ध्वाः प्प्राणा ऽअवाची दिगवाञ्चः प्प्राणाः सर्वा दिशः सर्वे प्प्राणाः ॥५॥ स ऽएष नेति नेत्त्यात्मा । अगृह्यो न हि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गोऽसितो न सज्ज्यते न व्व्यथतेऽभयं वै जनक प्प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको वैदेहो नमस्ते याज्ञवल्क्याभयन्त्वागच्छताद्यो नो भगवन्नभयं वेदयस ऽइमे विदेहा ऽअयमहमस्म्मीति ॥ ६ ॥

षष्ठाध्याय एकादशं ब्राह्मणम् ॥ ११ ॥

माध्यन्दिनीये शतपथब्राह्मणे पञ्चमः प्रपाठकः ॥५॥ कण्डिकासंख्या ॥१०७॥

इति षष्ठोऽध्यायः ॥ ६ ॥

[ प्रस्तुतस्य ब्रह्मणो व्यतिरिक्तत्वशुद्धत्वाद्वैतत्वादिकप्रदर्शनम् ]

जनकꣳ ह वैदेहं ऽयाज्ञवल्क्यो जगाम । समेनेन वदिष्य ऽइत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदतुस्तस्मै ह याज्ञवल्क्यो वरन्ददौ स ह कामप्रश्नमेव वव्रे तꣳ हास्मै ददौ तꣳ ह सम्म्राडेव पूर्वꣳ पप्रच्छ ॥ १ ॥ याज्ञवल्क्य किञ्ज्योतिरयम्पुरुष ऽइति । आदित्यज्ज्योतिः सम्म्राडिति होवाचादित्येनैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्य्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥ अस्तमित ऽआदित्ये याज्ञवल्क्य । किञ्ज्योतिरेवायम्पुरुष ऽइति चन्द्रज्ज्योतिः सम्म्राडिति होवाच चन्द्रेणैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्य्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ३ ॥ अस्तमित ऽआदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते किञ्ज्योतिरेवायम्पुरुष ऽइत्यग्निर्ज्योतिः सम्म्राडिति होवाचाग्निनैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्य्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥ अस्तमित ऽआदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते शान्तेऽग्नौ किञ्ज्योतिरेवायम्पुरुष ऽइति वाग्ज्योतिः सम्म्राडिति होवाच वाचैवायञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्य्येतीति तस्माद्वै सम्म्राडपि यत्र स्वः पाणिर्न्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥ अस्तमित ऽआदित्ये याज्ञवल्क्य । चन्द्र-

(१) "न्येती०" इति 'ग' 'ज' पुस्तकयोः ।

मस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किञ्ज्योतिरेवाय-म्पुरुष ऽइत्यात्मज्ज्योतिः सम्म्राडिति होवाचात्मनैवाय-ञ्ज्योतिषास्ते पल्ल्ययते कर्म्म कुरुते विपर्य्येतीति ॥ ६ ॥* कतम ऽआत्मेति । षोऽयं विज्ञानमयः पुरुषः प्प्राणेषु हृद्यन्तर्ज्योतिः स समानः सन्नुभौ लोकौ सञ्चरति ध्यायतीव लेलायतीव सधीः स्वप्प्नो भूत्वेमँल्लोकमतिक्क्रामति ॥ ७ ॥ स वा ऽअयम्पुरुषो जायमानः । शरीरमभिस-म्पद्यमानः पाप्प्मभिः सꣳसृज्ज्यते स ऽउत्क्रामन्न्म्रियमाणः पाप्प्मनो विजहाति मृर्त्यो रूपाणि ॥ ८ ॥ तस्य वा ऽएतस्य पुरुषस्य । द्वे ऽएव स्थाने भवत ऽइदञ्च परलोकस्त्थानञ्च सन्ध्यन्तृतीयꣳ स्वप्प्नस्त्थानन्तस्म्मि-न्त्सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्श्यतीदञ्च परलोक-स्त्थानञ्च ॥ ९ ॥ अथ षथाक्क्रमोऽयम्परलोकस्त्थाने भवति । तमाक्क्रममाक्क्रम्म्योभयान्पाप्प्मन ऽआनन्दाँश्च पश्श्यति स षत्रायम्प्रस्वपिती[1]त्यस्य लोकस्य सर्व्वावतो मात्रामपादाय स्वयं विहत्य स्वयन्निर्म्माय स्वेन भासा स्वेन ज्योतिषा प्प्रस्वपित्यत्रायम्पुरुषः स्वयञ्ज्योतिर्भवति ॥ १० ॥ न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान्र-थयोगान्पथः सृजते न तत्रानन्दा मुदः प्प्रमुदो भवन्त्यथा-नन्दान्मुदः प्प्रमुदः सृजते न तत्र वेशान्ताः स्रवन्त्यः[2] पुष्करिण्यो भवन्त्यथ वेशान्ताः स्रवन्तीः पुष्करिणीः

* शतम् ७४०० ।

( १ ) "प्रस्वपित्यस्य" इति 'ग' 'ज' पुस्तकयोः ।

( २ ) "स्रवन्त्यः" इत्युक्तपुस्तकयोः ।

सृजते स हि कर्त्ता ॥ ११ ॥ तदुप्येते श्लोकाः । स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ॥ शुक्रमादाय पुनरैति स्थानꣳ हिरण्मयः पौरुष ऽएकहꣳसः ॥ १२ ॥ प्राणेन रक्षन्नपरङ्कुलायम्बहिष्कुलायादमृतश्च-रित्वा ॥ स ऽईयते ऽअमृतो यत्रकामꣳ हिरण्मयः पौरुष ऽएकहꣳसः ॥ १३ ॥ स्वप्नान्त ऽउच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ॥ उतेव स्त्रीभिः सह मोदमानो जक्षदु-तेवापि भयानि पश्यन् ॥ १४ ॥ आराममस्य पश्यन्ति । न तङ्कश्चन पश्यतीति तन्नायतम्बोधयेदित्याहुर्दुर्भि-षज्यꣳ हास्मै भवति यमेष न प्रतिपद्यते ॥ १५ ॥ अथो खल्वाहुः । जागरितदेश ऽएवास्यैष यानि ह्येव जाग्रत्पश्यति तानि सुप्त ऽइत्यत्रायम्पुरुषः स्वयञ्ज्योति-र्भवतीत्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददा-म्यत ऽऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥ स वा ऽएष ऽएतस्मिन्त्स्वप्नान्ते । रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायम्प्रतियोन्याद्रवति बुद्धान्तायैव स यदुत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययम्पुरुष ऽइत्येवमेवैतद्याजवल्क्य सोऽहम्भगवते सहस्रन्ददाम्यत ऽऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १७ ॥ तद्यथा महामत्स्यः । उभे कूले ऽअनुसञ्चरति पूर्वञ्चापरञ्चैवमेवायम्पुरुष ऽएता ऽउभावन्तावनुसञ्चरति स्वप्नान्तञ्च बुद्धान्तञ्च ॥ १८ ॥ तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः सꣳहत्य पक्षौ सल्लयायैव ध्रियत ऽएवमेवायम्पुरुष

ऽएतस्म्मा ऽअन्ताय धावति यत्र सुप्तो न कञ्चन कामङ्कामयते न कञ्चन स्वप्नम्पश्श्यति ॥१९॥ ता वा ऽअस्यैताः । हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्म्ना तिष्ठन्ति शुक्क्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्ण्णा ऽअथ यत्रैनङ्घ्नन्तीव जिनन्तीव हस्तीव व्विच्छाययति गर्त्तमिव पतति यदेव जाग्रद्भयम्पश्श्यति तदत्राविद्यया भयम्मन्यतेऽथ यत्र राजेव देव ऽइवाहमेवेदꣳ सर्व्वमस्म्मीति मन्यते सोऽस्य परमो लोकोऽथ यत्र सुप्तो न कञ्चन कामङ्कामयते न कञ्चन स्वप्नम्पश्श्यति ॥ २० ॥ तद्वा ऽअस्यैतत् । आत्मकाममाप्तकाममकामꣳ रूपन्तद्यथा प्प्रियया स्त्रिया सम्परिष्ष्वक्तो न बाह्यङ्किञ्चन व्वेद नान्तरमेवमेवायꣳ शारीर ऽआत्मा प्प्राज्ञेनात्मना सम्परिष्ष्वक्तो न बाह्यङ्किञ्चन व्वेद नान्तरम् ॥ २१ ॥ तद्वा ऽअस्यैतत् । अतिच्छन्दोऽपहतपाप्प्माभयꣳ रूपमशोकान्तरमत्र पितापिता भवति मातामाता लोका ऽअलोका देवा ऽअदेवा व्वेदा ऽअवेदा यज्ञा ऽअयज्ञा ऽअत्र स्तेनोऽस्तेनो भवति भ्रूणहाभ्रूणहा पौल्कसोऽपौल्कसश्चाण्डालोऽचाण्डालः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतम्पुण्ण्येनानन्वागतम्पापेन तीर्ण्णो हि तदा सर्व्वाञ्छोकान्हृदयस्य भवति ॥ २२ ॥ यद्वै तन्न पश्श्यति । पश्श्यन्वै तद्द्रष्टव्यन्न पश्श्यति न हि द्रष्टुर्दृष्टेर्व्विपरिलोपो व्विद्यतेऽविनाशित्वान्न तु तद्वि-

(१) "ऽनन्वागतः पुण्येनानन्वागतः पापेन" इति 'ग' 'ज' पुस्तकयोः पाठः ।

तीयमस्ति ततोऽन्न्यद्विभक्तं यत्पश्येत् ॥ २३ ॥ यद्वै तन्न जिघ्रति । जिघ्रन्न्वै तद्घ्रातव्व्यन्न जिघ्रति न हि घ्रातुर्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥ यद्वै तन्न रसयति । विजानन्न्वै तद्रसन्न रसयति न हि रसयितू रसाद्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्रसयेत् ॥ २५ ॥ यद्वै तन्न वदति । वदन्न्वै तद्वक्तव्व्यन्न वदति न हि वक्तुर्वचो विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्वदेत् ॥ २६ ॥ यद्वै तन्न शृणोति । शृण्वन्न्वै तच्छ्रोतव्व्यन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥ यद्वै तन्न मनुते । मन्न्वानो वै तन्मन्तव्व्यन्न मनुते न हि मन्तुर्म्मतेर्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यन्न्मन्न्वीत ॥ २८ ॥ यद्वै तन्न स्पृशति । स्पृशन्न्वै तत्स्प्रष्टव्व्यन्न स्पृशति न हि स्प्रष्टु स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥ यद्वै तन्न विजानाति । विजानन्न्वै तद्विज्ञेयन्न विजानाति न हि विज्ञातुर्विज्ञानाद्विपरिलोपो विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥ सलिल ऽएको द्रष्टाद्वैतो भवति । एष ब्रह्मलोकः सम्राडिति हैनमुवा-

चैषास्य परमा सम्पदेषोऽस्य परमो लोक ऽएषोऽस्य परम ऽआनन्द ऽएतस्यैवानन्दस्यान्न्यानि भूतानि मात्रामुपजीवन्ति ॥ ३१ ॥ स यो मनुष्याणाᳬ राद्धः समृद्धो भवति। अन्न्येषामधिपतिः सर्वैर्म्मानुष्यकैः कामैः सम्पन्नतमः स मनुष्याणाम्परम ऽआनन्दः ॥ ३२ ॥ अथ ये शतम्मनुष्याणामानन्दाः। स ऽएकः पितॄणाञ्जितलोकानामानन्दः ॥ ३३ ॥ अथ ये शतम्पितॄणाञ्जितलोकानामानन्दाः। स ऽएकः कर्म्मदेवानामानन्दो ये कर्म्मणा देवत्वमभिसम्पद्यन्ते ॥ ३४ ॥ अथ ये शतङ्कर्म्मदेवानामानन्दाः। स ऽएक ऽआजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३५ ॥ अथ ये शतमाजानदेवानामानन्दाः। स ऽएको देवलोक ऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३६ ॥ अथ ये शतन्देवलोक ऽआनन्दाः। स ऽएको गन्धर्व्वलोक ऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३७ ॥ अथ ये शतङ्गन्धर्व्वलोक ऽआनन्दाः। स ऽएकः प्प्रजापतिलोक ऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥ ३८ ॥ अथ ये शतम्प्रजापतिलोक ऽआनन्दाः। स ऽएको ब्ब्रह्मलोक ऽआनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहत ऽएष ब्ब्रह्मलोकः सम्म्राडिति हैनमनुशशासैतदमृतᳬ सोऽहम्भगवते सहस्त्रन्ददाम्म्यत ऽऊर्द्ध्वं विमोक्षायैव ब्ब्रूहीति ॥ ३९ ॥ स वा ऽएष ऽएतस्मिन्त्सम्प्रसादे। रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्प्रतिन्न्यायम्प्रतियोन्न्याद्रवति बुद्धान्तायैव

स यदुत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययम्पुरुष ऽइत्येवमेवैतद्याज्ञवल्क्य सोऽहम्भगवते सहस्रन्ददाम्यत ऽऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ ४० ॥ अत्र ह याज्ञवल्क्यो बिभयाञ्चकार । मेधावी राजा सर्वेभ्यो मान्तेभ्य ऽउदरौत्सीदिति स यत्राणिमानन्न्येति जरया वोपतपता वाणिमाननिगच्छति यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यतैवमेवायꣳ शारीर ऽआत्मैभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्प्रतिन्न्यायम्प्रतियोन्न्याद्रवति प्प्राणायैव ॥ ४१ ॥ तद्यथा नः सुसमाहितम् । उत्सर्ज्जंद्यायादेवमेवायꣳ शारीर ऽआत्मा प्प्राज्ञेनात्मनान्न्वारूढ ऽउत्सर्ज्जंद्याति ॥ ४२ ॥ तद्यथा राजानमायन्तम् । उग्राः प्प्रत्येनसः सूतग्ग्रामण्योऽन्नैः पानैरावसथैः प्प्रतिकल्प्पन्तेऽयमायात्ययमागच्छतीत्येवꣳ हैवंविदꣳ सर्वाणि भूतानि प्प्रतिकल्प्पन्त ऽइदम्ब्रह्मायातीदमागच्छतीति ॥ ४३ ॥ तद्यथा राजानम्प्रयियासन्तम् । उग्राः प्प्रत्येनसः सूतग्ग्रामण्य ऽउपसमायन्त्येवꣳ हैवंविदꣳ सर्वे प्प्राणा ऽउपसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ४४ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ उक्तस्यात्मनोऽङ्गेभ्यः संप्रमोक्षणस्य विस्तरेणोपपादनम् ]

स यत्रायꣳ शारीर ऽआत्माबल्ल्यन्नीत्य । सम्मोहमिव न्न्येत्यथैनमेते प्प्राणा ऽअभिसमायन्ति स ऽएता-

स्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ॥ १ ॥
स यत्रैष चाक्षुषः । पुरुषः पराङ् पर्य्यावर्त्ततेऽथारूपज्ञो
भवत्येकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्या-
हुरेकीभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकी-
भवति न शृणोतीत्याहुरेकीभवति न मनुत ऽइत्याहुरेकी-
भवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुः
॥ २ ॥ तस्य हैतस्य । हृदयस्याग्रम्प्रद्योतते तेन प्रद्योते-
नैष ऽआत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा
शरीरदेशेभ्यस्तमुत्क्रामन्तम्प्राणोऽनूत्क्रामति प्राणमनूत्क्रा-
मन्तः सर्वे प्राणा ऽअनूत्क्रामन्ति संज्ञानमेवान्ववक्रामति स
ऽएष ज्ञः सविज्ञानो भवति तं विद्याकर्म्मणी समन्वारभेते
पूर्वप्रज्ञा च ॥ ३ ॥ तद्यथा तृणजलायुका । तृणस्यान्तङ्गत्वा-
त्मानमुपसꣳहरत्येवमेवायम्पुरुष ऽइदꣳ शरीरन्निहत्याविद्या-
ङ्गमयित्वात्मानमुपसꣳहरति ॥ ४ ॥ तद्यथा पेशस्कारी । पेशसो
मात्रामपादायान्यन्नवतरङ्कल्याणतरꣳ रूपन्तनुत ऽएवमेवा-
यम्पुरुष ऽइदꣳ शरीरन्निहत्याविद्याङ्गमयित्वान्यन्नवतरङ्क-
ल्याणतरꣳ[1] रूपन्तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा
प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्यः ॥ ५ ॥
स वा ऽअयमात्मा । ब्रह्म विज्ञानमयो मनोमयो वाङ्म-
यः प्राणमयश्चक्षुर्म्मयः श्रोत्रमय ऽआकाशमयो वायुमय-
स्तेजोमय ऽआपोमयः पृथिवीमयः क्रोधमयोऽक्रोधमयो हर्ष-
मयोऽहर्षमयो धर्म्ममयोऽधर्म्ममयः सर्वमयस्तद्यदेदम्मयोऽ-

(१) "०० नवतरꣳ रूपन्तनुते" इति 'ग' 'ज' पुस्तकयोः ।

दोमय ऽइति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पापः पापेनेति ॥ ६ ॥ अथो खल्वाहुः । काममय ऽएवायम्पुरुष ऽइति स यथाकामो भवति तथाक्रतुर्भवति यथाक्रतुर्भवति तत्कर्म्म कुरुते यत्कर्म्म कुरुते तदभिसम्पद्यत ऽइति ॥ ७ ॥ तदेष श्लोको भवति । तदेव सत्तत्सह कर्म्मणैति लिङ्गम्मनो यत्र निषक्तमस्य ॥ प्राप्यान्तङ्कर्म्मणस्तस्य यत्किञ्चेह करोत्ययम् ॥ तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्म्मण ऽइति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम ऽआत्मकाम ऽआप्तकामो भवति न तस्मात्प्राणा ऽउत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ॥ ८ ॥ तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः[1] ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत ऽइति ॥ ९ ॥ तद्यथाहिनिर्ल्वयनी । वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदः शरीरः शेतेऽथायमनस्थिकोऽशरीरः प्राज्ञ ऽआत्मा ब्रह्मैव लोक ऽएव सम्राडिति होवाच याज्ञवल्क्यः सोऽहम्भगवते सहस्रन्ददामीति होवाच जनको वैदेहः ॥ १० ॥ तदप्येते श्लोकाः । अणुः पन्था विततः पुराणो माꣳ स्पृष्टोऽनुवित्तो मयैव ॥ तेन धीरा ऽअपियन्ति ब्रह्मविद ऽउत्क्रम्य स्वर्गँल्लोकमितो विमुक्ताः ॥ ११ ॥ तस्मिञ्छुक्लमुत

(१) "स्थिताः" इति 'ग' 'ज' पुस्तकयोः ।

नीलमाहुः पिङ्गलꣳ हरितँल्लोहितञ्च ॥ एष पन्था ब्ब्रह्मणा ह्यानुवित्तस्तेनैति ब्ब्रह्मवित्तैजसः पुण्यकृच्च ॥ १२ ॥ अन्धन्तमः प्प्रविशन्ति येऽसम्भूतिमुपासते ॥ ततो भूय ऽइव ते तमो य ऽउ सम्भूत्याꣳ रताः ॥ १३ ॥ असुर्य्या नाम ते लोकाः । अन्धेन तमसावृताः ॥ ताँस्ते प्प्रेत्यापिगच्छन्त्यविद्वाꣳसोऽबुधा जनाः ॥ १४ ॥ तदेव सन्तः । तदु तद्भवामो न चेदवेदी महती व्विनष्टिः ॥ ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति ॥१५॥ आत्मानञ्चेद्विजानीयात् । अयमस्मीति पूरुषः ॥ किमिच्छन्कस्य कामाय शरीरमनु सञ्चरेत् ॥ १६ ॥ यस्यानुवित्तः प्प्रतिबुद्ध ऽआत्मा । अस्मिन्त्सन्देहे गहने प्प्रविष्टः ॥ स व्विश्वकृत्स हि सर्वस्य कर्त्ता तस्य लोकः स ऽउ लोक ऽएव ॥ १७ ॥ यदैतमनुपश्यति । आत्मानन्देवमञ्जसा ॥ ईशानम्भूतभव्यस्य न तदा व्विचिकित्सति ॥ १८ ॥ यस्मिन्पञ्च पञ्चजनाः । आकाशश्च प्प्रतिष्ठितः ॥ तमेव मन्न्य ऽआत्मानं व्विद्वान्ब्रह्मामृतोऽमृतम् ॥१९॥ यस्माद्वार्क्सँवत्सरः । अहोभिः परिवर्त्तते ॥ तद्देवा ज्योतिषाञ्ज्योतिरायुर्होपासतेऽमृतम् ॥२०॥ प्राणस्य प्प्राणम् । उत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नम्मनसो ये मनो व्विदुः ॥ ते निचिक्युर्ब्रह्म पुराणमग्ग्र्यम्मनसैवाप्तव्व्यन्नेह नानास्ति किञ्चन ॥ २१ ॥ [ अर्धः प्रपाठकः ॥६४॥ ] मृत्योः स मृत्युमाप्नोति य ऽइह नानेव पश्यति ॥ मनसैवानुद्रष्टव्य-

(१) 'ग' 'ज' पुस्तकयोः "पुरुषः" इति पाठो दृश्यते । स तु प्रामादिक एव प्रतीयते 'पूरुषोऽवसाने' ( शु० य० प्रा० शा० ३. १२० ) इति दीर्घनिपातनात् ।

व्ययमेतद्प्रमयन्ध्रुवम् ॥२२॥ विरजः पर ऽआकाशात् । अज ऽआत्मा महान्ध्रुवः ॥ तमेव धीरो विज्ञाय प्रज्ञाङ्कुर्वीत ब्राह्मणः॥ नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ हि तदिति ॥२३॥ स वा ऽअयमात्मा । सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदम्प्रशास्ति यदिदङ्किञ्च स न साधुना कर्म्मणा भूयान्नो ऽएवासाधुना कनीयानेष भूताधिपतिरेष लोकेश्वर ऽएष लोकपालः स सेतुर्विधरण ऽएषाँल्लोकानामसम्भेदाय ॥ २४ ॥ तमेतं वेदानुवचनेन विविदिषन्ति । ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति ॥ २५ ॥ एतद्ध स्म वै तत्पूर्वे ब्राह्मणा ऽअनूचाना विद्वाꣳसः प्रजान्न कामयन्ते किम्प्रजया करिष्यामो येषान्नोऽयमात्मायँल्लोक ऽइति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यञ्चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते ऽएषणे ऽएव भवतः ॥ २६ ॥ स ऽएष नेति नेत्यात्मा । अगृह्यो नहि गृह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गोऽसितो न सज्यते न व्यथत ऽइत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे ऽउभे ह्येष ऽएते तरत्यमृतः साध्वसाधुनी नैनङ्कृताकृते तपतो नास्य केन चन कर्म्मणा लोको मीयते ॥ २७ ॥ तदेतदृचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न कर्म्मणा

(२) "महा ध्रुवः" इति 'ग' 'ज' पुस्तकयोः ।

वर्द्धते नो कनीयान् ॥ तस्यैव स्यात्पदवित्तं विदित्वा न कर्म्मणा लिप्यते पापकेनेति तस्मादेवंविच्छान्तो दान्त ऽउपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्न्येवात्मानम्पश्येत्सर्वमेनम्पश्यति सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवति सर्वम्पाप्मानन्तरति नैनम्पाप्मा तरति सर्वम्पाप्मानन्तपति नैनम्पाप्मा तपति विपापो विजरो विजिघत्सोऽपिपासो ब्ब्राह्मणो भवति य ऽएवं वेद ॥ २८ ॥ स वा ऽएष महानज ऽआत्मा। अन्नादो वसुदानः स यो हैवमेतम्महान्तमजमात्मानमन्नादं वसुदानं वेद विन्दते वसु ॥ २९ ॥ स वा ऽएष महानज ऽआत्मा। अजरोऽमरोऽभयोऽमृतो ब्ब्रह्माभयं वै जनक प्प्राप्तोऽसीति होवाच याज्ञवल्क्यः सोऽहम्भगवते विदेहान्ददामि माञ्चापि सह दास्यायेति ॥ ३० ॥ स वा ऽएष महानज ऽआत्मा। अजरोऽमरोऽभयोऽमृतो ब्ब्रह्माभयं वै ब्ब्रह्माभयः हि वै ब्ब्रह्म भवति य ऽएवं वेद ॥ ३१ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ आत्मज्ञाने आगमेनाधिगतस्यामृतत्वसाधनत्वस्य तर्केणापि प्रतिपादनम्, याज्ञवल्क्यकाण्डस्याचार्यपरम्परोपदेशश्च ]

अथ ह याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुः। मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्ब्रह्मवादिनी बभूव स्त्रीप्प्रज्ञेव कात्यायनी सोऽन्न्यद्वृत्तमुपाकरिष्ष्यमाणः ॥ १ ॥ मैत्रेयीति होवाच। प्प्रव्रजिष्ष्यन्न्वा ऽअरेऽयाज्ञवल्क्यो

हमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्न्यान्त-ङ्करवाणीति ॥ २ ॥ सा होवाच मैत्रेयी । यन्नु म ऽइयं-म्भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यान्न्वहन्तेना-मृताहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवता-ञ्जीवितन्तथैव ते जीवितथं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥ ३ ॥ सा होवाच मैत्रेयी । येनाहन्नामृता स्या-ङ्किमहन्तेन कुर्य्यां यदेव भगवान्न्वेद तदेव मे ब्रूहीति ॥ ४ ॥ स होवाच याज्ञवल्क्यः । प्रिया खलु नो भवती सती प्प्रियमवृतद्धन्त खलु भवति तेऽहन्तद्वक्ष्यामि व्व्या-ख्यास्यामि ते व्वाचन्तु मे व्व्याचक्षाणस्य निदिध्यासस्वेति ब्रवीतु भगवानिति ॥ ५ ॥ स होवाच याज्ञवल्क्यः । न वा ऽअरे पत्युः कामाय पतिः प्प्रियो भवत्यात्मनस्तु कामाय पतिः प्प्रियो भवति न वा ऽअरे जायायै कामाय जाया प्प्रिया भवत्यात्मनस्तु कामाय जाया प्प्रिया भवति न वा ऽअरे पुत्राणाङ्कामाय पुत्राः प्प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्प्रिया भवन्ति न वा ऽअरे वित्तस्य कामाय वित्तम्प्रियम्भवत्यात्मनस्तु कामाय वित्तम्प्रियम्भवति न वा ऽअरे ब्रह्मणः कामाय ब्रह्म प्प्रियम्भवत्यात्मनस्तु कामाय ब्रह्म प्प्रियम्भवति न वा ऽअरे क्षत्रस्य कामाय क्षत्र-म्प्रियम्भवत्यात्मनस्तु कामाय क्षत्रम्प्रियम्भवति न वा ऽअरे लोकानाङ्कामाय लोकाः प्प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्प्रिया भवन्ति न वा ऽअरे देवानाङ्कामाय देवाः प्प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्प्रिया भवन्ति न वा ऽअरे

वेदानाङ्कामाय वेदाः प्प्रिया भवन्त्यात्त्मनस्तु कामाय वेदाः प्प्रिया भवन्ति न वा ऽअरे यज्ञानाङ्कामाय यज्ञाः प्प्रिया भवन्त्यात्त्मनस्तु कामाय यज्ञाः प्प्रिया भवन्ति न वा ऽअरे भूतानाङ्कामाय भूतानि प्प्रियाणि भवन्त्यात्त्मनस्तु कामाय भूतानि प्प्रियाणि भवन्ति न वा ऽअरे सर्वस्य कामाय सर्वम्प्प्रियम्भवत्यात्त्मनस्तु कामाय सर्वम्प्प्रियम्भवत्यात्त्मा त्त्वरे द्द्रष्टव्व्यः श्श्रोतव्व्यो मन्तव्व्यो निदिद्ध्यासितव्व्यो मैत्त्रेय्य्यात्त्मनि वा ऽअरे दृष्टे श्रुते मते व्विज्ञात ऽइदꣳ सर्वं व्विदितम् ॥ ६ ॥ ब्रह्म तम्परादात् । योऽन्न्यत्त्रात्त्मनो ब्ब्रह्म व्वेद क्षत्त्रन्तम्परादाद्योऽन्न्यत्त्रात्त्मनः क्षत्त्रं व्वेद लोकास्तम्परादुर्य्योऽन्न्यत्त्रात्त्मनो लोकान्न्वेद देवास्तम्परादुर्य्योऽन्न्यत्त्रात्त्मनो देवान्न्वेद व्वेदास्तम्परादुर्य्योऽन्न्यत्त्रात्त्मनो वेदान्न्वेद यज्ञास्तम्परादुर्य्योऽन्न्यत्त्रात्त्मनो यज्ञान्न्वेद भूतानि तम्परादुर्य्योऽन्न्यत्त्रात्त्मनो भूतानि व्वेद सर्वन्तम्परादाद्योऽन्न्यत्त्रात्त्मनः सर्वं व्वेदेदम्ब्ब्रह्मेदं क्षत्त्रमिमे लोका ऽइमे देवा ऽइमे वेदा ऽइमे यज्ञा ऽइमानि भूतानीदꣳ सर्वं य्यदयमात्त्मा ॥ ७ ॥ स यथा दुन्दुभेर्हन्न्यमानस्य न बाह्याञ्छब्ब्दाञ्छक्क्नुयाद्ग्ग्रहणाय दुन्दुभेस्तु ग्ग्रहणेन दुन्दुब्भ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा व्वीणायै व्वाद्द्यमानायै । न बाह्याञ्छब्ब्दाञ्छक्क्नुयाद्ग्ग्रहणाय व्वीणायै तु ग्ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥९॥ स यथा शङ्खस्य द्ध्मायमानस्य । न

(१) "त्वरे" इति 'ग' 'ज' पुस्तकयोः ।

बाह्याञ्छब्दाञ्छक्क्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्ख-
ध्मस्य वा शब्दो गृहीतः ॥ १० ॥ स यथार्द्रैधाग्नेरभ्या-
हितस्य। पृथग्धूमा विनिश्चरन्त्येवं वा ऽअरेऽस्य महतो भूतस्य
निश्श्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस
ऽइतिहासः पुराणं विद्या ऽउपनिषदः श्लोकाः सूत्राण्य-
नुव्व्याख्यानानि व्व्याख्यानानि दत्तꣳ हुतमाशि-
तम्पायितमयञ्च लोकः परश्च लोकः सर्वाणि च
भूतान्न्यस्यैवैतानि सर्वाणि निश्श्वसितानि ॥ ११ ॥
स यथा सर्वासामपाꣳ समुद्र ऽएकायनम्। एवꣳ
सर्वेषाꣳ स्पर्शानान्त्वगेकायनमेवꣳ सर्वेषाङ्गन्धानान्ना-
सिके ऽएकायनमेवꣳ सर्वेषाꣳ रसानाञ्जिह्वैकायनमेवꣳ
सर्वेषाꣳ रूपाणाञ्चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ
श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ सङ्कल्पानाम्मन ऽएकायन-
मेवꣳ सर्वेषां वेदानाꣳ हृदयमेकायनमेवꣳ सर्वेषाङ्कर्म्मणाꣳ
हस्तावेकायनमेवꣳ सर्वेषामद्ध्वनाम्पादावेकायनमेवꣳ सर्वेषा-
मानन्दानामुपस्थ ऽएकायनमेवꣳ सर्वेषां विसर्ग्गाणा-
म्पायुरेकायनमेवꣳ सर्वासां विद्यानां वागेकायनम् ॥ १२ ॥
स यथा सैन्धवघनः। अनन्तरोऽबाह्यः कृत्स्नो रस-
घन ऽएव स्यादेवं वा ऽअर ऽइदम्महद्भूतमनन्तम-
पारङ्कृत्स्नः प्प्रज्ञानघन ऽएवैतेब्भ्यो भूतेब्भ्यः समुत्थाय
तान्न्येवानुविनश्श्यति न प्प्रेत्त्य संज्ञास्तीत्त्यरे ब्ब्रवीमीति
होवाच याज्ञवल्क्यः ॥ १३ ॥ सा होवाच मैत्रेयी। अत्रैव
मा भगवान्मोहान्तमापीपदन्न वा ऽअहमिदं विजानामि

न प्प्रेत्य संज्ञास्तीति ॥ १४ ॥ स होवाच याज्ञवल्क्यः । न वा ऽअरेऽहम्मोहम्ब्रवीम्म्यविनाशी वा ऽअरेऽयमात्त्मानुच्छित्तिधर्म्मा मात्रासꣳसर्ग्गस्त्वस्य भवति ॥ १५ ॥ यद्वै तन्न पश्श्यति । पश्श्यन्न्वै तद्द्रष्टुव्व्यन्न पश्श्यति न हि द्रष्टुर्द्दृष्टेर्व्विपरिलोपो व्विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यत्पश्श्येत् ॥ १६ ॥ यद्वै तन्न जिग्घ्रति । जिग्घ्रन्न्वै तद्घ्रातव्व्यन्न जिग्घ्रति न हि घ्रातुर्घ्राणाद्विपरिलोपो व्विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यज्जिग्घ्रेत् ॥ १७ ॥ यद्वै तन्न रसयति । व्विजानन्न्वै तद्रसन्न रसयति न हि रसयितू रसाद्विपरिलोपो व्विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्रसयेत् ॥ १८ ॥ यद्वै तन्न वदति । वदन्न्वै तद्वक्तव्व्यन्न वदति न हि वक्तुर्व्वचो विपरिलोपो व्विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्वदेत् ॥ १९ ॥ यद्वै तन्न शृणोति । शृण्वन्न्वै तच्छ्रोतव्व्यन्न शृणोति न हि श्रोतुः श्रुतेर्व्विपरिलोपो व्विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यच्छृणुयात् ॥ २० ॥ यद्वै तन्न मनुते । मन्न्वानो वै तन्मन्तव्व्यन्न मनुते न हि मन्तुर्म्मतेर्व्विपरिलोपो व्विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यन्मन्न्वीत ॥ २१ ॥ यद्वै तन्न स्प्पृशति । स्प्पृशन्न्वै तत्स्प्रष्टव्व्यन्न स्प्पृशति न हि स्प्रष्टुः स्पृष्टेर्व्विपरिलोपो व्विद्यतेऽविनाशित्त्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यत्स्पृशेत् ॥ २२ ॥ यद्वै तन्न व्विजानाति ।

व्विजानन्न्वै तद्विज्ञेयन्न विजानाति न हि व्विज्ञातुर्व्विज्ञाना-द्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्न्यद्विभक्तं यद्विजानीयात् ॥ २३ ॥ यत्र वा ऽअन्न्यदिव स्यात्। तत्रान्न्योऽन्न्यत्पश्श्येदन्न्योऽन्न्यज्जिघ्रेदन्न्योऽन्न्यद्र-सयेदन्न्योऽन्न्यदभिवदेदन्न्योऽन्न्यच्छृणुयादन्न्योऽन्न्यन्न्मन्न्वी-तान्न्योऽन्न्यत्स्पृशेदन्न्योऽन्न्यद्विजानीयात् ॥ २४ ॥ यत्र त्वस्य सर्व्वमात्मैवाभूत् । तत्केन कम्पश्श्येत्तत्केन कञ्जि-घ्रेत्तत्केन कꣳ रसयेत्तत्केन कमभिवदेत्तत्केन कꣳ शृणु-यात्तत्केन कम्मन्न्वीत तत्केन कꣳ स्पृशेत्तत्केन कं व्विजा-नीयाद्येनेदꣳ सर्व्वं विजानाति तङ्केन व्विजानीयाद्विज्ञातारमरे केन व्विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्ल्व-मृतत्त्वमिति होक्त्वा याज्ञवल्क्यः प्प्रवव्राज ॥ २५ ॥ अथ वꣳशः । तदिदं वयꣳ शौर्प्पणाय्याच्छौर्प्पणाय्यो गौतमाद्गौ-तमो व्वात्स्याद्वात्स्यो व्वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज ऽऔदवाहेश्च शाण्डि-ल्ल्याच्च शाण्डिल्ल्यो व्वैजवापाच्च गौतमाच्च गौतमो व्वैज-वापायनाच्च वैष्टपुरेयाच्च व्वैष्टपुरेयः शाण्डिल्ल्याच्च रौहि-णायनाच्च रौहिणायनः शौनकाच्च जैवन्तायनाच्च रैभ्याच्च रैभ्यः पौतिमाष्ष्यायणाच्च कौण्डिन्न्यायनाच्च कौण्डिन्न्या-यनः कौण्डिन्न्याभ्याङ्कौण्डिन्न्या ऽऔर्णवाभेभ्य ऽऔ-र्णवाभाः कौण्डिन्न्यात्कौण्डिन्न्यः कौण्डिन्न्यात्कौण्डिन्न्यः कौण्डिन्न्याच्चाग्निवेश्श्याच्च ॥ २६ ॥ आग्निवेश्श्यः सैत-वात्। सैतवः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातू-

कण्यों भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो बलाकाकौशिकाद्बलाकाकौशिकः काषायणात्काषायणः सौकरायणात्सौकरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज ऽआत्रेयात् ॥ २७ ॥

आत्रेयो माण्टेः । माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्न्याद्विदर्भीकौण्डिन्न्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य ऽआङ्गिरस ऽआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच ऽआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन ऽएकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ २८ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ सर्वोपनिषदर्थस्य ब्रह्मण उत्तरसम्बन्धार्थमनुवादः ]

पूर्ण्णमदः पूर्ण्णमिदम्पूर्ण्णात्पूर्ण्णमुदच्यते ॥ पूर्ण्णस्य पूर्ण्णमादाय पूर्ण्णमेवावशिष्यत ऽओ३म् खम्ब्रह्म खम्पुराणं वायुरङ्खमिति ह स्माह कौरव्यायणीपुत्रो वेदोऽयम्ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥ १ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ दमदानदयानां सकलब्रह्मोपासनाङ्गत्वेन प्रतिपादनम् ]

त्रयाः प्राजापत्याः । प्रजापतौ पितरि ब्रह्मचर्य्यमूषुर्देवा मनुष्या ऽअसुराः ॥ १ ॥ उषित्वा ब्रह्मचर्य्यन्देवा ऽऊचुः । ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द ऽइति व्यज्ञासिष्टा३ ऽइति व्यज्ञासिष्मेति होचुर्दाम्म्यतेति न ऽआत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥*

अथ हैनम्मनुष्या ऽऊचुः । ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द ऽइति व्यज्ञासिष्टा३ ऽइति व्यज्ञासिष्मेति होचुर्दत्तेति न ऽआत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ ३ ॥ अथ हैनमसुरा ऽऊचुः । ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द ऽइति व्यज्ञासिष्टा३ ऽइति व्यज्ञासिष्मेति होचुर्दयद्ध्वमिति न ऽआत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द ऽइति दाम्म्यत दत्त दयद्ध्वमिति तदेतत्त्रयः शिक्षेद्दमन्दानन्दयामिति ॥ ४ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

* शतम् ७५०० ।

[ कृतोपासनस्य योगिनोऽन्तकाले प्रार्थना ]

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥ ओ३म् ॥ क्रतो स्मर ॥ क्लिबे स्मर ॥ अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं विधेमेति ॥ १ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—०—

[ हृदयस्य ब्रह्मत्वेनोपासनम् ]

एष प्रजापतिर्यद्धृदयम् । एतद्ब्रह्मैतत्सर्वन्तदेतत्त्र्यक्षरꣳ हृदयमिति ह ऽइत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य ऽएवं वेद द ऽइत्येकमक्षरन्ददन्त्यस्मै स्वाश्चान्ये च य ऽएवं वेद यमित्येकमक्षरमेति स्वर्गँल्लोकं य ऽएवं वेद ॥ १ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—०—

[ हृदयाख्यस्य ब्रह्मणः सत्यत्वेनोपासनम् ]

तद्वै तदेतदेव तदास । सत्यमेव स यो हैवमेतन्महद्यक्षम्प्रथमजं वेद सत्यम्ब्रह्मेति जयतीमाँल्लोकाञ्जित ऽइन्न्वसावसद्य ऽएवमेतन्महद्यक्षम्प्रथमजं वेद सत्यम्ब्रह्मेति सत्यꣳ ह्येव ब्रह्म ॥ १ ॥

अष्टमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—०—

[ सत्यस्य ब्रह्मणः प्रथमजत्वप्रतिपादनम् ]

आप ऽएवेदमग्ग्र आसुः । ता ऽआपः सत्त्यमसृजन्त सत्त्यम्ब्रह्म ब्रह्म[1] प्प्रजापतिम्प्रजापतिर्द्देवान् ॥ १ ॥ ते देवाः सत्त्यमित्त्युपासते । तदेतत्त्र्यक्षरꣳ सत्त्यमिति स ऽइत्त्येकमक्षरन्तीत्त्येकमक्षरमित्त्येकमक्षरम्प्रथमोत्तमे ऽअक्षरे सत्त्यम्मद्ध्यतोऽनृतन्तदेतदनृतꣳ सत्त्येन परिगृहीतꣳ सत्त्यभूयमेव भवति नैवंविद्वाꣳसमनृतꣳ हिनस्ति ॥ २ ॥ तद्यत्तत्सत्त्यम् । असौ स ऽआदित्त्यो य ऽएष ऽएतस्मिन्न्मण्डले पुरुषो यश्चायन्दक्षिणेऽक्षन्न्पुरुषस्तावेतावन्न्योऽन्न्यस्मिन्न्प्रतिष्ठितौ रश्मिभिर्वा ऽएषोऽस्मिन्न्प्रतिष्ठितः प्प्राणैरयममुष्मिन्त्स[2] यदोत्क्रमिष्यन्न्भवति शुद्धमेवैतन्न्मण्डलम्पश्यति नैनमेते रश्मयः प्प्रत्यायन्ति ॥ ३ ॥ य ऽएष ऽएतस्मिन्न्मण्डले पुरुषः । तस्य भूरिति शिर ऽएकꣳ शिर ऽएकमेतदक्षरम्भुव ऽइति बाहू द्वौ बाहू द्वे ऽएते ऽअक्षरे स्वरिति प्प्रतिष्ठा द्वे प्प्रतिष्ठे द्वे ऽएते ऽअक्षरे तस्योपनिषदहरिति हन्ति पाप्मानञ्जहाति च य ऽएवं वेद ॥ ४ ॥ अथ योऽयन्दक्षिणेऽक्षन्न्पुरुषः । तस्य भूरिति शिर ऽएकꣳ शिर ऽएकमेतदक्षरम्भुव ऽइति बाहू द्वौ बाहू द्वे ऽएते ऽअक्षरे स्वरिति प्प्रतिष्ठा द्वे प्प्रतिष्ठे द्वे ऽएते ऽअक्षरे तस्योपनिषदहमिति हन्ति पाप्मानञ्जहाति च य ऽएवं वेद ॥ ५ ॥

अष्टमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

---

( १ ) 'ग' 'ज' पुस्तकयोः "ब्रह्म" इति नास्ति ।
( २ ) "न्स" इति 'ग' 'ज' पुस्तकयोः ।

[ विद्युद्ब्रह्मेत्युपासनविधानम् ]

विद्युद्ब्रह्मेत्याहुः । विदानाद्विद्युद्विद्यत्येनꣳ सर्वस्मा-त्पाप्मनो य ऽएवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥

अष्टमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

—— ० ——

[ मनउपाधिविशिष्टस्य ब्रह्मण उपास्तिः ]

मनोमयोऽयम्पुरुषः । भाः सत्त्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वैवमयमन्तरात्मन्पुरुषः स ऽएष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदम्प्रशास्ति यदिदङ्किञ्च य ऽएवं वेद ॥ १ ॥

अष्टमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

—— ० ——

[ वाग्धेनुः ब्रह्मेत्युपास्तिः ]

वाचन्धेनुमुपासीत । तस्याश्चत्त्वार स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा ऽउप-जीवन्ति स्वाहाकारञ्च वषट्कारञ्च हन्तकारम्मनुष्याः स्वधाकारम्पितरस्तस्याः प्राण ऽऋषभो मनो वत्सः ॥ १ ॥

अष्टमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

—— ० ——

[ वैश्वानराग्न्युपाधिकस्य ब्रह्मण उपासनम् ]

अयमग्निर्वैश्वानरः । योऽयमन्तः पुरुषे येनेदमन्न-म्पच्च्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णा-

वपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैतद्घोषꣳ शृणोति ॥ १ ॥

अष्टमाध्याये दशमं ब्राह्मणम् ॥ १० ॥

[ व्याधितस्तप्यमानस्य तापे तप इति दृष्टिः ]

एतद्वै परमन्तपꣳ । यद्व्याहितस्तप्यते परमꣳ हैव लोकञ्जयति य ऽएवं वेदैतद्वै परमन्तपो यम्प्रेतमरण्यꣳ हरन्ति परमꣳ हैव लोकञ्जयति य ऽएवं वेदैतद्वै परमन्तपो यम्प्रेतमग्नावभ्यादधति परमꣳ हैव लोकञ्जयति य ऽएवं वेद ॥ १ ॥

अष्टमाध्याय एकादशं ब्राह्मणम् ॥ ११ ॥

[ एतत्प्रकरणस्थानां सर्वेषामुपासनानां गतिकथनम्, अश्रुतफलोपासनानां ब्रह्मलोकफलकथनञ्च ]

यदा वै पुरुषꣳ । अस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खन्तेन स ऽऊर्द्ध्व ऽआक्रमते स ऽआदित्यमागच्छति तस्मै स तत्र-विजिहीते यथाडम्बरस्य खन्तेन स ऽऊर्द्ध्व ऽआक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेꣳ खन्तेन स ऽऊर्द्ध्व ऽआक्रमते स लोकमागच्छत्यशोकमहि-मन्तस्मिन्न्वसति शश्वतीꣳ समाꣳ ॥ १ ॥

अष्टमाध्याये द्वादशं ब्राह्मणम् ॥ १२ ॥

[ विरमितिगुणद्वयविशिष्टान्नप्राणोपाधिकब्रह्मोपासनम् ]

अन्नम्ब्रह्मेत्येक ऽआहुः । तन्न तथा पूयति वा ऽअन्नमृते प्प्राणात्प्राणो ब्रह्मेत्येक ऽआहुस्तन्न तथा शुष्यति वै प्प्राण ऽऋतेऽन्नादेते हत्वेव देवते ऽएकधाभूयम्भूत्वा परमताङ्गच्छतः ॥ १ ॥ तद्ध स्माह प्प्रातृदः पितरम् । किंस्विदेवैवं विदुषे साधु कुर्य्यांकिमेवास्मा ऽअसाधु कुर्य्यादिति स ह स्माह पाणिना मा प्प्रातृद कस्त्वेनयोरेकधाभूयम्भूत्वा परमताङ्गच्छतीति ॥ २ ॥ तस्मा ऽउ हैतदुवाच । वीत्यन्नं वै व्व्यन्ने हीमानि सर्वाणि भूतानि विष्टानि रमिति प्प्राणो वै रम्प्राणे हीमानि सर्वाणि भूतानि रतानि सर्वाणि ह वा ऽअस्मिन्भूतानि विशन्ते सर्वाणि भूतानि रमन्ते स ऽएवं वेद ॥ ३ ॥

अष्टमाध्याये त्रयोदशं ब्राह्मणम् ॥ १३ ॥

———— ० ————

[ उक्तस्य ब्रह्मण उक्थादिगुणविशिष्टत्वेनोपासनम् ]

उक्थम् । प्राणो वा ऽउक्थम्प्राणो हीदꣳ सर्वमुत्थापयत्युद्धास्मा ऽउक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यꣳ सलोकताञ्जयति स ऽएवं वेद ॥ १ ॥ यजुः । प्प्राणो वै यजुः प्प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यꣳ सलोकताञ्जयति स ऽएवं वेद ॥ २ ॥ साम । प्प्राणो वै साम प्प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि

सम्म्यञ्चि हास्मिन्त्सर्वाणि भूतानि श्रैष्ठ्याय कल्प्यन्ते[1] साम्म्नः सायुज्यꣳ सलोकताञ्जयति य ऽएवं वेद ॥ ३ ॥ क्षत्रम् । प्राणो वै क्षत्रम्प्राणो हि वै क्षत्रन्त्रायते हैनम्प्राणः क्षणितोः प्र क्षत्रमात्रमाप्नोति क्षत्रस्य सायुज्यꣳ सलोकताञ्जयति य ऽएवं वेद ॥ ४ ॥

अष्टमाध्याये चतुर्दशं ब्राह्मणम् ॥ १४ ॥

माध्यन्दिनीये शतपथब्राह्मणे षष्ठः प्रपाठकः ॥ ६ ॥

कण्डिकासंख्या ॥ १२९ ॥

—०—

[ गायत्र्युपाधिकब्रह्मोपासनम् ]

भूमिरन्तरिक्षन्द्यौरिति । अष्टावक्षराण्यष्टाक्षरꣳ ह वा ऽएकङ्गायत्र्यै पदमेतदु हास्या ऽएतत्स यावदेषु लोकेषु तावद्ध जयति योऽस्या ऽएतदेवम्पदं वेद ॥ १ ॥ ऋचो यजूꣳषि सामानीति । अष्टावक्षराण्यष्टाक्षरꣳ ह वा ऽएकङ्गायत्र्यै पदमेतदु हैवास्या ऽएतत्स यावतीयन्त्रयी विद्या तावद्ध जयति योऽस्या ऽएतदेवम्पदं वेद ॥२॥ प्राणोऽपानो व्यान ऽइति । अष्टावक्षराण्यष्टाक्षरꣳ ह वा ऽएकङ्गायत्र्यै पदमेतदु हैवास्या ऽएतत्स यावदिदम्प्राणि तावद्ध जयति योऽस्या ऽएतदेवम्पदं वेद ॥ ३ ॥ अथास्या ऽएतदेव । तुरीयन्दर्शतम्पदम्परोरजा य ऽएष तपति यद्वै चतुर्थन्तत्तुरीयन्दर्शतम्पदमिति ददृश ऽइव ह्येष परोरजा ऽइति सर्वमु ह्येष रज ऽउपर्युपरि तपत्येवꣳ

(१) "कल्पन्ते" इति 'ग' 'ज' पुस्तकयोः ।

हैव श्रिया यशसा तपति योऽस्या ऽएतदेवम्पदं वेद ॥ ४ ॥ सैषा गायत्री । एतस्मिँस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठिता चक्षुर्वै सत्यञ्चक्षुर्हि वै सत्यन्तस्माद्यदिदानीन्द्वौ विवदमानावेयातामहमद्राक्षमहमश्रौषमिति य ऽएव ब्रूयादहमद्राक्षमिति तस्मा ऽएव श्रद्दध्यात्[1] ॥ ५ ॥ तद्वै तत्सत्यम्बले प्रतिष्ठितम् । प्राणो वै बलन्तत्प्राणे प्रतिष्ठितन्तस्मादाहुर्बलᳫँ सत्यादोजीय ऽइत्येवम्वेषा गायत्र्यध्यात्मम्प्रतिष्ठिता ॥ ६ ॥ सा हैषा गयाँस्तत्रे । प्राणा वै गयास्तत्प्राणाँस्तत्रे तद्यद्गयाँस्तत्रे तस्माद्गायत्री नाम स यामेवामूमन्वाहैषैव सा स यस्मा ऽअन्वाह तस्य प्राणाँस्त्रायते ॥ ७ ॥ ताᳫँ हैके । सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम ऽइति न तथा कुर्याद्गायत्रीमेवानुब्रूयाद्यदि ह वा ऽअपि बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या ऽएकञ्चन पदम्प्रति ॥ ८ ॥ स य ऽइमाँस्त्रीँल्लोकान् । पूर्णान्प्रतिगृह्णीयात्सोऽस्या ऽएतत्प्रथमम्पदमाप्नुयादथ यावतीयन्त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या ऽएतद्द्वितीयम्पदमाप्नुयादथ यावदिदम्प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या ऽएतत्तृतीयम्पदमाप्नुयादथास्या ऽएतदेव तुरीयन्दर्शतम्पदम्परोरजा य ऽएष तपति नैव केन चनाप्यम्कुत ऽउ ऽएतावत्प्रतिगृह्णीयात् ॥ ९ ॥ तस्या ऽउपस्थानम् । गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि

---

(१) "श्रद्दध्याम" इति 'क' पुस्तके ।

न हि पद्यसे॥नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽ-सावदो मा प्प्रापदिति यन्द्विष्ष्यादसावस्म्मै कामो मा समर्द्धीति वा न हैवास्म्मै स कामः समृद्ध्यते यस्म्मा ऽएवमुपतिष्ठतेऽहमदः प्प्रापमिति वा ॥ १० ॥ एतद्ध वै तज्जनको वैदेहः। बुडिलमाश्श्वतराश्श्विमुवाच यन्नु हो तद्गायत्रीविदुब्ब्रूथा ऽअथ कथꣳ हस्ती भूतो वहसीति मुखꣳ ह्यस्याः सम्म्राण्णन विदाञ्चकरेति होवाच ॥ ११ ॥ तस्या ऽअग्निरेव मुखम्। यदि ह वा ऽअपि बह्विवाग्ना-वब्भ्यादधति सर्वमेव तत्सन्दहत्त्येवꣳ हैवैवंविद्यद्यपि बह्विव पापङ्करोति सर्वमेव तत्सम्प्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति ॥ १२ ॥

अष्टमाध्याये पञ्चदशं ब्राह्मणम् ॥ १५ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

[ विहितस्य केवलस्य कर्मणस्तत्सहितस्य च ज्ञानस्य निषिद्धयोश्च तयोः क्रमेण दक्षिणोदगधोमार्गकथनम् ]

श्वेतकेतुर्ह वा ऽआरुणेयः। पञ्चालानाम्परिषदमा-जगाम स ऽआजगाम जैवलम्प्रवाहणम्परिचारयमाणन्त-मुदीक्ष्याब्भ्युवाद कुमारा३ ऽइति स भो३ ऽइति प्प्रति-शुश्रावानुशिष्टो न्न्वसि पित्रेत्त्योमिति होवाच ॥ १ ॥ वेत्थ यथेमाः प्प्रजाः। प्रयत्त्यो विप्प्रतिपद्यान्ता३ ऽइति नेति होवाच वेत्थ यथेमँल्लोकम्पुनरापद्यान्ता३ ऽइति नेति हैवोवाच वेत्थ यथासौ लोक ऽएवम्बहुभिः पुनः पुनः प्प्रयद्भिर्न्न सम्पूर्य्यता३ ऽइति नेति हैवोवाच

॥ २ ॥ वेत्थ यतिथ्यामाहुत्याᳪ हुतायाम् । आपः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ ऽइति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदम्पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानम्प्रतिपद्यते पितृयाणं वा ॥ ३ ॥ अपि हि न ऽऋषेर्वचः श्रुतम् । 'द्वे सृती ऽअशृणवम्पितॄणामहन्देवानामुत मर्त्यानाम् ॥ ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरम्मातरञ्चे'ति नाहमत ऽएकञ्चन वेदेति होवाच ॥ ४ ॥ अथ हैनं वसत्योपमन्त्रयाञ्चक्रे । अनादृत्य वसतिङ्कुमारः प्रदुद्राव स ऽआजगाम पितरन्तᳪ होवाचेति वाव किल नो भवान्पुरानुशिष्टानवोच ऽइति कथᳪ सुमेध ऽइति पञ्च मा प्रश्नान्राजन्यबन्धुरप्राक्षीत्ततो नैकञ्चन वेदेति होवाच कतमे त ऽइतीम ऽइति ह प्रतीकान्न्युदाजहार ॥ ५ ॥ स होवाच । तथा नस्त्वन्तात जानीथा यथा यदहङ्किञ्च वेद सर्वमहन्तत्तुभ्यमवोचम्प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव ऽइति भवानेव गच्छत्विति ॥ ६ ॥ स ऽआजगाम गौतमः । यत्र प्रवाहणस्य जैवलेरास तस्मा ऽआसनमाहार्य्योदकमाहारयाञ्चकाराथ हास्मा ऽअर्घ्यञ्चकार ॥ ७ ॥ स होवाच । वरम्भवते गौतमाय दद्म ऽइति स होवाच प्रतिज्ञातो म ऽएष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्ताम्मे ब्रूहीति ॥ ८ ॥ स होवाच । दैवेषु वै गौतम तद्वरेषु मानुषाणाम्ब्रूहीति ॥ ९ ॥ स होवाच । विज्ञायते हास्ति हिरण्य-

(१) शु० य० सं० १९. ४७ ।

स्यापात्तङ्गो ऽअश्वानान्दासीनाम्प्रवराणाम्परिधानानाम्मा नो भवान्बहोरनन्तस्यापर्य्यन्तस्याभ्यवदान्यो भूदिति स वै गौतम तीर्त्थेनेच्छासा ऽइत्युपैम्म्यहम्भवन्तमिति वाचा ह स्मैव पूर्व ऽउपयन्ति ॥१०॥ स होपायनकीर्त्त्या ऽउवाच । तथा नस्त्वङ्गौतम मापराधास्तव च पितामहा यथेयं विद्येतः पूर्वन्न कस्मिँश्चन ब्राह्मण ऽउवास तान्त्वहन्तुभ्यं वक्ष्यामि को हि त्वैवम्ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥११॥ असौ वै लोकोऽग्निर्ग्गौतम । तस्यादित्य ऽएव समिद्रश्मयो धूमोऽहरर्च्चिश्चन्द्रमा ऽअङ्गारा नक्षत्राणि विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धाञ्जुह्वति तस्या ऽआहुतेः सोमो राजा सम्भवति ॥१२॥ पर्ज्जन्यो वा ऽअग्निर्ग्गौतम । तस्य सँवत्सर ऽएव समिदभ्राणि धूमो विद्युदर्च्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमञ्जुह्वति तस्या ऽआहुतेर्वृष्टिः सम्भवति ॥ १३ ॥ अयं वै लोकोऽग्निर्ग्गौतम । तस्य पृथिव्येव समिद्वायुर्धूमो रात्रिरर्च्चिर्दिशोऽङ्गारा ऽअवान्तरदिशो विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिञ्जुह्वति तस्या ऽआहुतेरन्नः सम्भवति ॥ १४ ॥ पुरुषो वा ऽअग्निर्ग्गौतम । तस्य व्यात्तमेव समित्प्राणो धूमो वागर्च्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा ऽअन्नञ्जुह्वति तस्या ऽआहुते रेतः सम्भवति ॥ १५ ॥ योषा वा ऽअग्निर्ग्गौतम । तस्या ऽउपस्थ ऽएव समिल्लोमानि धूमो योनिरर्च्चिर्यदन्तः करोति तेऽङ्गारा ऽअभिनन्दा विष्फुलिङ्गास्त-

स्म्मिन्नेतस्म्मिन्नग्ग्नौ देवा रेतो जुहव्वति तस्या ऽआहुतेः पुरुषः सम्भवति स जायते स जीवति यावज्जीवत्यथ यदा म्म्रियतेऽथैनमग्ग्नये हरन्ति ॥ १६ ॥ तस्याग्ग्निरेवाग्ग्निर्ब्भवति । समित्त्समिद्धूमो धूमोऽर्च्चिरर्च्चिरङ्गारा ऽअङ्गारा व्विष्फुलिङ्गा व्विष्फुलिङ्गास्तस्म्मिन्नेतस्म्मिन्नग्ग्नौ देवाः पुरुषञ्जुहव्वति तस्या ऽआहुतेः पुरुषो भास्वरवर्ण्णः सम्भवति ॥ १७ ॥ ते य ऽएवमेतद्विदुः । ये चामी ऽअरण्ण्ये श्रद्धाꣳ सत्त्यमुपासते तेऽर्च्चिरभिसम्भवन्त्यर्च्चिषोऽहरह्न ऽआपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान्न्षण्ण्मासानुदङ्ङादित्त्य ऽएति मासेब्भ्यो देवलोकन्देवलोकादादित्त्यमादित्त्याद्वैद्युतन्तान्वैद्युतात्पुरुषो मानस ऽएत्त्य ब्ब्रह्मलोकान्गमयति ते तेषु ब्ब्रह्मलोकेषु पराः परावतो व्वसन्ति तेषामिह न पुनरावृत्तिरस्ति ॥ १८ ॥ अथ ये यज्ञेन दानेन । तपसा लोकञ्जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्त्रिꣳ रात्त्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्न्षण्ण्मासान्दक्षिणादित्त्य ऽएति मासेब्भ्यः पितृलोकम्पितृलोकाच्चन्द्रन्ते चन्द्रम्प्राप्प्यान्नम्भवन्ति ताँस्तत्र देवा यथा सोमꣳ राजानमाप्प्यायस्वापक्षीयस्वेत्त्येवमेनाँस्तत्र भक्षयन्ति तेषां य्यदा तत्पर्य्यवैत्त्यथेममेवाकाशमभिनिष्प्पद्यन्त ऽआकाशाद्वायुं व्वायोर्व्वृष्टिं व्वृष्टेः पृथिवीन्ते पृथिवीम्प्राप्प्यान्नम्भवन्ति त ऽएवमेवानुपरिवर्त्तन्तेऽथ य ऽएतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदन्दन्दशूकम् ॥ १९ ॥

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ ज्येष्ठत्वश्रेष्ठत्वादिगुणविशिष्टप्राणोपासनम् ]

यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद । ज्येष्ठश्च श्रेष्ठश्च स्वानाम्भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानाम्भवत्यपि च येषाम्बुभूषति य ऽएवं वेद ॥ १ ॥ यो ह वै वसिष्ठां वेद । वसिष्ठः स्वानाम्भवति वाग्वै वसिष्ठा वसिष्ठः स्वानाम्भवति य ऽएवं वेद ॥ २ ॥ यो ह वै प्रतिष्ठां वेद । प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य ऽएवं वेद ॥ ३ ॥ यो ह वै सम्पदं वेद । सꣳ हास्मै पद्यते यङ्कामङ्कामयते श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा ऽअभिसम्पन्नाः सꣳ हास्मै पद्यते यङ्कामङ्कामयते य ऽएवं वेद ॥ ४ ॥ यो ह वा ऽआयतनं वेद । आयतनꣳ स्वानाम्भवत्यायतनञ्जनानाम्मनो वा ऽआयतनमायतनꣳ स्वानाम्भवत्यायतनञ्जनानां य ऽएवं वेद ॥ ५ ॥ यो ह वै प्रजातिं वेद । प्रजायते प्रजया पशुभी रेतो वै प्रजातिः प्रजायते प्रजया पशुभिर्य ऽएवं वेद ॥ ६ ॥ ते हेमे प्राणाः । अहꣳ श्रेयसे विवदमाना ब्रह्म जग्मुः को नो वसिष्ठ ऽइति तद्धोवाच यस्मिन्व ऽउत्क्रान्त ऽइदꣳ शरीरम्पापीयो मन्यते स वो वसिष्ठ ऽइति ॥ ७ ॥ वाग्घोच्चक्राम । सा सँवत्सरम्प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा कडा ऽअवदन्तो वाचा प्राणन्तः

(१) 'ग' 'ज' पुस्तकयोः "तद्धोवाच" इति पाठो नास्ति ।

प्प्राणेन पश्श्यन्तश्श्चक्षुषा श्शृण्ण्वन्तᳫ श्श्रोत्त्रेण विद्द्वाᳫंसो मनसा प्प्रजायमाना रेतसैवमजीविष्ष्मेति प्प्रविवेश ह व्वाक् ॥ ८ ॥ चक्षुर्होच्चक्क्राम । तत्त्सँव्वत्त्सरम्प्प्रोष्ष्यागत्त्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथान्धा ऽअपश्श्यन्तश्श्चक्षुषा प्प्राणन्तᳫ प्प्राणेन व्वदन्तो व्वाचा श्शृण्ण्वन्तᳫ श्श्रोत्त्रेण विद्द्वाᳫंसो मनसा प्प्रजायमाना रेतसैवमजीविष्ष्मेति प्प्रविवेश ह चक्षुᳫ ॥ ९ ॥ श्श्रोत्त्रᳫ होच्चक्क्राम । तत्त्सँव्वत्त्सरम्प्प्रोष्ष्यागत्त्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथा बधिरा ऽअश्शृण्ण्वन्तᳫ श्श्रोत्त्रेण प्प्राणन्तᳫ प्प्राणेन व्वदन्तो व्वाचा पश्श्यन्तश्श्चक्षुषा विद्द्वाᳫंसो मनसा प्प्रजायमाना रेतसैवमजीविष्ष्मेति प्प्रविवेश ह श्श्रोत्त्रम् ॥ १० ॥ मनो होच्चक्क्राम । तत्त्सँव्वत्त्सरम्प्प्रोष्ष्यागत्त्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथा मुग्ग्धा ऽअविद्द्वाᳫंसो मनसा प्प्राणन्तᳫ प्प्राणेन व्वदन्तो व्वाचा पश्श्यन्तश्श्चक्षुषा श्शृण्ण्वन्तᳫ श्श्रोत्त्रेण प्प्रजायमाना रेतसैवमजीविष्ष्मेति प्प्रविवेश ह मनᳫ ॥ ११ ॥ रेतो होच्चक्क्राम । तत्त्सँव्वत्त्सरम्प्प्रोष्ष्यागत्त्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्य्यथा क्क्लीबा ऽअप्प्रजायमाना रेतसा प्प्राणन्तᳫ प्प्राणेन व्वदन्तो व्वाचा पश्श्यन्तश्श्चक्षुषा श्शृण्ण्वन्तᳫ श्श्रोत्त्रेण विद्द्वाᳫंसो मनसैवमजीविष्ष्मेति प्प्रविवेश ह रेतᳫ ॥ १२ ॥ अथ ह प्प्राण ऽउत्त्क्रमिष्ष्यन् । यथा महासुहयᳫ सैन्धवᳫ पड्वीशशङ्कून्त्संव्वृहेदेवᳫ हैवेमान्प्राणान्त्सँव्ववर्ह ते होचुर्म्मा भगव ऽउत्त्क्रमीर्न्न वै

शक्ष्यामस्त्वदृते जीवितुमिति तस्य वै मे बलिङ्कुरुतेति तथेति ॥ १३ ॥ सा ह वागुवाच । यद्वा ऽअहं वसिष्ठास्मि त्वन्तद्वसिष्ठोऽसीति चक्षुर्यद्वा ऽअहम्प्रतिष्ठास्मि त्वन्तत्प्रतिष्ठोऽसीति श्रोत्रं यद्वा ऽअहꣳ सम्पदस्मि त्वन्तत्सम्पदसीति मनो यद्वा ऽअहमायतनमस्मि त्वन्तदायतनमसीति रेतो यद्वा ऽअहम्प्रजातिरस्मि त्वन्तत्प्रजातिरसीति तस्यो मे किमन्नङ्किं वास ऽइति यदिदङ्किञ्चा श्वभ्य आ क्रिमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास ऽइति न ह वा ऽअस्यानन्नञ्जग्धम्भवति नानन्नम्प्रतिगृहीतं य ऽएवमेतदनस्यान्नं वेद ॥ १४ ॥ तद्विद्वाꣳसः श्रोत्रियाः । अशिष्यन्त ऽआचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नङ्कुर्वन्तो मन्यन्ते तस्मादेवंविदशिष्यन्नाचामेदशित्वाचामेदेतमेव तदनमनग्नङ्कुरुते ॥ १५ ॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ श्रीमन्थाख्यं कर्म ]

स यः कामयेत । महत्प्राप्नुयामित्युदगयन ऽआपूर्यमाणपक्षे पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कꣳसे चमसे वा सर्वौषधम्फलानीति सम्भृत्य परिसमुह्य परिलिप्याग्निमुपसमाधायावृताज्यꣳ संस्कृत्य पुꣳसा नक्षत्रेण मन्थꣳ सन्नीय जुहोति ॥ १ ॥ यावन्तो देवास्त्वयि जातवेदः । तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् ॥ तेभ्योऽहम्भागधेयञ्जुहोमि ते मा तृप्ताः कामैस्तर्प्पयन्तु

(१) "कामयते" इति 'ग' 'ज' पुस्तकयोः ।

स्वाहा ॥२॥ या तिरश्ची निपद्यसे ऽअहं विधरणी ऽइति । तान्त्वा घृतस्य धारया यजे सꣳराधनीमहꣳ स्वाहा ॥ 'प्रजापते न त्वदेतान्यन्य' ऽइति तृतीयाञ्जुहोति ॥ ३ ॥ ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रोत्राय स्वाहायतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ४ ॥ भूताय स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ५ ॥ [अर्धः प्रपाठकः ॥५१॥] पृथिव्यै स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयत्यन्तरिक्षाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति दिवे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति दिग्भ्यः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ६ ॥ भूः

(१) "निपद्यसेऽहं" इति 'ग' 'ज' पुस्तकयोः ।
(२) ऋ॰ सं॰ ८. ७. ४ । शु॰ य॰ सं॰ १०. २० ।

स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ७ ॥ अग्नये स्वाहेति । अग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति तेजसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रियै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति लक्ष्म्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सवित्रे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सरस्वत्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वेभ्यो देवेभ्यः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ८ ॥ अथैनमभिमृशति । भ्रमसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि विभूरसि प्रभूरसि ज्योतिरस्यन्नमसि निधनमसि संवर्गोऽसीति ॥ ९ ॥ अथैनमुद्यच्छति । आमोऽस्यामꣳ हि ते मयि ॥ स हि राजेशानोऽधिपतिः स मा राजेशानोऽधिपतिङ्करोत्विति ॥ १० ॥ अथैनमाचामति । '[1]तत्सवितुर्वरेण्यम्' ॥ '[2]मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः' ॥ भूः

(१) शु० य० सं० ३. ३५ । (२) शु० य० सं० १३. २७ ।

स्वाहा ॥११॥ 'भर्ग्गो देवस्य धीमहि' ॥ 'मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ॥ मधु द्यौरस्तु नः पिता' भुवः स्वाहा ॥ १२ ॥ 'धियो यो नः प्रचोदयात्' । 'मधुमान्नो वनस्पतिर्म्मधुमाँ२॥ ऽअस्तु सूर्यः ॥ माध्वीर्ग्गावो भवन्तु नः' स्वः स्वाहेति सर्वाञ्च सावित्रीमन्वाह सर्वाश्च मधुमतीः सर्वाश्च व्याहृतीरहमेवेदꣳ सर्वम्भूयासम्भूर्भुवः स्वः स्वाहेत्यन्तत ऽआचम्य प्रक्षाल्य पाणी जघनेनाग्निम्प्राक्शिराः संविशति ॥ १३ ॥ प्रातरादित्यमुपतिष्ठते । दिशामेकपुण्डरीकमस्यहम्मनुष्याणामेकपुण्डरीकम्भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वꣳशञ्जपति ॥ १४ ॥ तꣳ हैतमुद्दालक ऽआरुणिः । वाजसनेयाय याज्ञवल्क्यायान्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १५ ॥ एतमु हैव वाजसनेयो याज्ञवल्क्यः । मधुकाय पैङ्ग्यायान्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १६ ॥ एतमु हैव मधुकः पैङ्ग्यः । चूडाय भागवित्तयेऽन्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १७ ॥ एतमु हैव चूडो भागवित्तिः । जानकय ऽआयस्थूणायान्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः

(१) शु० य० सं० ३. ३५। (२) शु० य० सं० १३. २८। (३) शु० य० सं० ३. ३५। (४) शु० य० सं० १३. २९।

प्ररोहेयुः पलाशानीति ॥ १८ ॥ एतमु हैव जानकिरायस्थूणः । सत्यकामाय जाबालायान्तेवासिन ऽउक्त्वोवाचापि य ऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १९ ॥ एतमु हैव सत्यकामो जाबालः । अन्तेवासिभ्य ऽउक्त्वोवाचापि य ऽएनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतन्नापुत्राय वानन्तेवासिने वा ब्रूयात् ॥ २० ॥ चतुरौदुम्बरो भवति । औदुम्बरश्चमस ऽऔदुम्बरः स्रुव ऽऔदुम्बर ऽइध्म ऽऔदुम्बर्यौ ऽउपमन्थन्यौ ॥ २१ ॥ दश ग्राम्याणि धान्यानि भवन्ति । व्रीहियवास्तिलमाषा ऽअणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान्त्सार्द्धम्पिष्ट्वा दध्ना मधुना घृतेनोपसिञ्चत्याज्यस्य जुहोति ॥२२॥

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

———०———

[ पुत्रमन्थाख्यं कर्म, आचार्यपरम्परोपदेशश्च ]

एषां वै भूतानाम्पृथिवी रसः । पृथिव्या ऽआपोऽपामोषधय ऽओषधीनाम्पुष्पाणि पुष्पाणाम्फलानि फलानाम्पुरुषः पुरुषस्य रेतः ॥ १ ॥ स ह प्रजापतिरीक्षाञ्चक्रे । हन्तास्मै प्रतिष्ठाङ्कल्पयानीति स स्त्रियꣳ ससृजे ताꣳ सृष्ट्वाध ऽउपास्त तस्मात्स्त्रियमध ऽउपासीत स ऽएतम्प्राञ्चङ्ग्रावाणमात्मन ऽएव समुदपारयत्तेनैनामभ्यसृजत् ॥ २ ॥ तस्या वेदिरुपस्थः । लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ

स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासञ्चरत्या स स्त्रीणाꣳ सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासञ्चरत्यास्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥ एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह । एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान्कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य इदमविद्वाꣳसोऽधोपहासञ्चरन्तीति ॥४॥ बहु वा इदꣳ सुप्तस्य वा जाग्रतो वा रेत स्कन्दति । तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः ॥ इदमहन्तद्रेत आददे पुनर्मामैत्विन्द्रियम्पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्णया यथास्थानङ्कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृञ्ज्यात् ॥ ५ ॥ अथ यद्युदक आत्मानम्पश्येत् । तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणꣳ सुकृतमिति ॥ ६ ॥ श्रीर्ह वा एषा स्त्रीणाम् । यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥ ७ ॥ स यामिच्छेत् । कामयेत मेति तस्यामर्थन्निष्ठाप्य मुखेन मुखꣳ सन्धायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधि

जायसे ॥ स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेति ॥ ८ ॥ अथ यामिच्छेत् । न गर्भन्दधीतेति तस्यामर्थन्निष्ठाप्य मुखेन मुखꣳ सन्धायाभिप्प्राण्यापान्यादिन्द्रियेण ते रेतसा रेत ऽआदद ऽइत्यरेता ऽएव भवति ॥ ९ ॥*
अथ यामिच्छेत् । गर्भन्दधीतेति तस्यामर्थन्निष्ठाप्य मुखेन मुखꣳ सन्धायापान्याभिप्प्राण्यादिन्द्रियेण ते रेतसा रेत ऽआदधामीति गर्भिण्येव भवति ॥ १० ॥
अथ यस्य जायायै जारः स्यात् । तञ्चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिं स्तीर्त्वा तस्मिन्नेतास्तिस्रः शरभृष्टीः प्प्रतिलोमाः सर्प्पिषाक्त्वा जुहुयान्मम समिद्धेऽहौषीराशापराकाशौ त ऽआददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीः पुत्रपशूꣳस्त ऽआददेऽसाविति नाम गृह्णाति मम समिद्धेऽहौषीः प्प्राणापानौ त ऽआददेऽसाविति नाम गृह्णाति स वा ऽएष निरिन्द्रियो विसुकृदस्म्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य जायाया ऽउपहासन्नेच्छेदुत ह्येवंवित्परो भवति ॥ ११ ॥
अथ यस्य जायामार्त्तवं विन्देत् । त्र्यहङ्कꣳसे न पिबेदहतवासा नैनां व्वृषलो न व्वृषल्युपहन्यात्त्रिरात्रान्त ऽआप्प्लूय व्रीहीनवघातयेत् ॥ १२ ॥ स य ऽइच्छेत् । पुत्रो मे गौरो जायेत व्वेदमनुब्ब्रुवीत सर्वमायुरियादिति क्षीरौदनम्पाचयित्वा सर्प्पिष्म्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १३ ॥ अथ य ऽइच्छेत् । पुत्रो मे कपिलः पिङ्गलो

* अत्र शतम् ७६०० ।

जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनम्पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १४ ॥ अथ य इच्छेत् । पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनम्पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१५॥ अथ य इच्छेत् । दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनम्पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १६ ॥ अथ य इच्छेत् । पुत्रो मे पण्डितो विजिगीथः समितिङ्गमः शुश्रूषितां वाचम्भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति माꣳसौदनम्पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्ष्णेन वार्षभेण वा ॥ १७ ॥ अथाभिप्रातरेव । स्थालीपाकावृताज्यञ्चेष्टित्वा स्थालीपाकस्योपघातञ्जुहोत्यग्नये स्वाहानुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रम्पूरयित्वा तेनैनान्त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रफर्व्यम् ॥ सञ्जायाम्पत्या सहेति ॥ १८ ॥ अथैनामभिपद्यते । अमोऽहमस्मि सा त्वꣳ सा त्वमस्यमो अहम् ॥ सामाहमस्मि ऋक्त्वन्द्यौरहम्पृथिवी त्वम् ॥ तावेहि सꣳरभावहै सह रेतो दधावहै। पुꣳसे पुत्राय वित्तय इति ॥ १९ ॥ अथास्या ऊरू विहापयति । विजिहीथान्द्यावापृथिवी इति तस्यामर्थन्निष्ठाप्य मुखेन मुखꣳ सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि 'विष्णुर्योनिं

निष्कल्पयतु त्वष्टा रूपाणि पिंशतु ॥ आसिञ्चतु प्रजापतिर्धाता गर्भन्दधातु ते ॥ गर्भन्धेहि सिनीवालि गर्भन्धेहि पृथुष्टुके ॥ गर्भन्ते ऽअश्विनौ देवावाधत्ताम्पुष्करस्रजौ ॥ २० ॥ हिरण्ययी ऽअरणी । याभ्यान्निर्मन्थतामश्विनौ देवौ तन्ते गर्भन्दधामहे दशमे मासि सूतवे' ॥ यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी ॥ वायुर्दिशां यथा गर्भ ऽएवङ्गर्भन्दधामि तेऽसाविति नाम गृह्णाति ॥ २० ॥ सोष्यन्तीमद्भिरभ्युक्षति । 'यथा वातः पुष्करिणीꣳ समिङ्गयति सर्वतः ॥ एवा ते गर्भ ऽएजतु सहावैतु जरायुणा ॥ इन्द्रस्यायं व्रजः कृतः सार्गडः सपरिश्रयः ॥ तमिन्द्र निर्जहि गर्भेण सावरꣳ सहेति ॥२२॥ जातेऽग्निमुपसमाधाय । अङ्क ऽआधाय कꣳसे पृषदाज्यमानीय पृषदाज्यस्योपघातञ्जुहोत्यस्मिन्त्सहस्रम्पुष्यासमेधमानः स्वे गृहे ॥ अस्योपसन्द्याम्माच्छैत्सीत्प्रजया च पशुभिश्च स्वाहा ॥ मयि प्राणास्त्वयि मनसा जुहोमि स्वाहा ॥२३॥ यत्कर्म्मणात्यरीरिचम् । यद्वा न्यूनमिहाकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्स्विष्टꣳ सुहुतङ्करोतु स्वाहेति ॥२४॥ अथास्यायुष्यङ्करोति । दक्षिणङ्कर्णमभिनिधाय वाग्वागिति त्रिरथास्य नामधेयङ्करोति 'वेदोऽसी'ति तदस्यैतद्गुह्यमेव नाम स्यादथ दधि मधु घृतꣳ सꣳसृज्यानन्तर्हितेन जातरूपेण प्राशयति

---

(१) ऋ० सं० ८. ८. ४१ । (२) ऋ० सं० ४. ४. २० ।
(३) "स्वगृहे" इति 'ग' 'ज' पुस्तकयोः । (४) शु० य० सं० २. २१

भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वन्त्वयि दधामीति ॥ २५ ॥ अथैनमभिमृशति। अश्मा भव परशुर्भव हिरण्यमस्तुतम्भव ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतमिति ॥ २६ ॥ अथास्य मातरमभिमन्त्रयते। इडासि मैत्रावरुणी वीरे वीरमजीजनथाः ॥ सा त्वं वीरवती भव यास्मान्वीरवतोऽकरदिति ॥ २७ ॥ अथैनम्मात्रे प्रदाय स्तनम्प्रयच्छति। '(१)यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः ॥ येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽक'रिति ॥ २८ ॥ तं वा ऽएतमाहुः। अतिपिता बताभूरतिपितामहो बताभूः परमाम्बत काष्ठाम्प्राप श्रिया यशसा ब्रह्मवर्चसेन य ऽएवंविदो ब्राह्मणस्य पुत्रो जायत ऽइति ॥ २९ ॥ अथ वंशः। तदिदं वयम्भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो गार्ग्गीपुत्राद्गार्ग्गीपुत्रः पाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो गार्ग्गीपुत्राद्गार्ग्गीपुत्रो गार्ग्गीपुत्राद्गार्ग्गीपुत्रो बाडेयीपुत्राद्बाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद्धारिकर्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पैङ्गीपुत्रात्पैङ्गीपुत्रः शौनकीपुत्राच्छौनकीपुत्रः ॥ ३० ॥ काश्यपीबालाक्यामाठरीपुत्रात्। काश्यपीबालाक्यामाठरीपुत्रः

(१) शु० य० सं० ३८. ५।

कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद्बौधीपुत्रः शालङ्काय-
नीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्षगणीपुत्रो गौ-
तमीपुत्राद्गौतमीपुत्र ऽआत्रेयीपुत्रादात्रेयीपुत्रो गौतमी-
पुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजीपुत्रा-
द्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्रा-
द्वार्कारुणीपुत्र ऽआर्त्तभागीपुत्रादार्त्तभागीपुत्रः शौङ्गी-
पुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्रः ॥ ३१ ॥ आ-
लम्बीपुत्रात् । आलम्बीपुत्र ऽआलम्बायनीपुत्रादालम्बा-
यनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रा-
न्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शा-
ण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रः
क्रौञ्चिकीपुत्राभ्याङ्क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रो
भालुकीपुत्राद्भालुकीपुत्रः प्राचीनयोगीपुत्रात्प्राचीन-
योगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः कार्शकेयीपुत्रा-
त्कार्शकेयीपुत्रः ॥ ३२ ॥ प्राश्नीपुत्रात् । आसुरिवासिनः
प्राश्नीपुत्र ऽआसुरायणादासुरायण ऽआसुरेरासुरिर्याज्ञ-
वल्क्याद्याज्ञवल्क्य ऽउद्दालकादुद्दालकोऽरुणादरुण ऽउपवेशे-
रुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो
बाद्ध्योगाज्जिह्वावान्बाद्ध्योगोऽसिताद्वार्षगणादसितो वार्ष-
गणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपा-
च्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो

( १ ) "वाद्ध्योगाज्जिह्वावा वाद्ध्योः" इति 'ग' 'ज' पुस्तकयोः।

वागम्भिण्या ऽअम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३३ ॥

नवमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे सप्तमः प्रपाठकः ॥७॥ कण्डिकासंख्यका ॥१०१॥

इति नवमोऽध्यायः ॥ ९ ॥

उपनिषन्नाम चतुर्दशं काण्डं * समाप्तम् ॥ १४ ॥

समाप्तञ्चेदं माध्यन्दिनीयं शतपथब्राह्मणम् † ।



* अस्मिन्काण्डे कण्डिकासंख्या ७९६ ।

† अत्र शतमध्यायाः १०० ।

# माध्यन्दिनशतपथब्राह्मणकण्डिकानामकाराद्यनुक्रमणिका

## (अ)

## ( आ )

## ( इ )

## ( ऊ )



## ( ऋ )



## ( ए )

* इतः पूर्वं 'प्रतीकम्' इति पाठः प्रमादात्समजनि तत्र 'प्रतीकः' इति विभावयन्तु संख्यावन्तः; 'प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम्' इत्यभियुक्तोक्तेः।

( ख )

## ( ग )



## ( घ )

## ( च )

| कण्डिकाप्रतीकः | का०अ०ब्रा०क० |
|---|---|
| तदाहुः । एतस्यै वा | १२।७।३।२० |
| तदाहुः । एतामेवाहुतिं | २।२।१।५ |
| तदाहुः । एतामेवैकां | ३।१।४।२२ |
| तदाहुः । एतावदेवोक्त्वा | ४।२।२।१४ |
| तदाहुः । कः प्रातरनुवाकस्य | ३।९।३।११ |
| तदाहुः । कतरत इष्टकायाः | ६।१।२।३१ |
| तदाहुः । कति पशवोऽग्ने | ६।१।२।३२ |
| तदाहुः । कति संवत्सर० | १२।२।१।६ |
| तदाहुः । कति संवत्सर० | १२।२।३।१३ |
| तदाहुः। कथमस्यैतच्छतरु० | ९।१।१।४३ |
| तदाहुः। कथमस्यैतच्छतरु० | ९।१।१।४४ |
| तदाहुः । कथमस्यैतत्कर्म | ६।२।२।३१ |
| तदाहुः । कथमस्यैताः पक्का | ७।३।१।२६ |
| तदाहुः । कथमस्यैताः पृथङ् | ७।३।१।४० |
| तदाहुः । कथमस्यैताः सर्वाः | ८।१।३।२ |
| तदाहुः। कथमस्यैताः सर्वै० | ७।३।१।४१ |
| तदाहुः। कथमस्यैता अन० | १०।४।३।२८ |
| तदाहुः। कथमस्यैता अहो० | ७।३।१।३८ |
| तदाहुः। कथमस्यैता अहो० | ७।३।१।३९ |
| तदाहुः । कथमस्यैते | ९।३।१।१७ |
| तदाहुः। कथमस्यैतावात्मा० | ७।४।२।२० |
| तदाहुः । कथमस्यैषा पक्का | ७।५।१।२९ |
| तदाहुः। कथमस्यैषा वसो० | ९।३।३।१८ |
| तदाहुः। कथमस्यैषा वसो० | ९।३।३।१९ |
| तदाहुः । कथमस्यैषोऽग्निः | ६।२।१।२० |
| तदाहुः । कथमस्यैषोऽग्निः | ८।१।४।५ |
| तदाहुः । कथमु ता अत्र | १०।४।३।२३ |
| तदाहुः । कथमेतं गर्भं | ४।५।२।६ |
| तदाहुः । कथमेष पुरुषः | ७।४।२।९ |
| तदाहुः । कथमेष सप्तविध | १०।२।३।५ |
| तदाहुः । कथमेषा लोकम्पृ० | ८।७।२।७ |
| तदाहुः। कस्मा उ तर्ह्युपभृति | १।३।२।१५ |
| तदाहुः । कस्मादभिस्वय० | ७.४।२।४० |
| तदाहुः। कस्मादस्या अग्नि० | ६।१।२।२९ |
| तदाहुः। कस्मादुभयतोज्यो० | १२।२।२।१ |
| तदाहुः। कस्मिन्नृतावभ्या० | १३।४।१।२ |
| तदाहुः। कस्मै कामायाग्नि० | ६।१।२।३५ |
| तदाहुः। किं देवत्यान्याज्या० | १।६।१।२० |
| तदाहुः । किं प्राणाः किं प्रा० | ८।१।३।१ |
| तदाहुः । किं हितं किमुप० | ६।१।२।१५ |
| तदाहुः। किञ्छन्दः का देव० | १०।३।२।१ |
| तदाहुः। किन्तदग्नौ क्रियते | १०।१।४।१४ |
| तदाहुः । किन्तद्यज्ञे क्रियते | ३।८।४।२ |
| तदाहुः । किन्देवत्य एष | ११।८।३।१ |
| तदाहुः । किमयनमिति | ११।१।७।३ |
| तदाहुः । किमिदं जामि | १।६।३।२७ |
| तदाहुः । कैतासामसंख्या० | ७।३।१।४३ |
| तदाहुः । केजानोऽभूदिति | ४।५।१।७ |
| तदाहुः । कैतं गर्भं कुर्या० | ४।५।२।१३ |
| तदाहुः । गायत्राणि वै | ४।३।२।१० |
| तदाहुः । दद्यादेतस्मिन्यज्ञे | ६।२।२।४० |
| तदाहुः । दश पितामहान्त्सो० | ५।४।५।४ |
| तदाहुः । दशहविषमेवैता० | ९।४।३।११ |
| तदाहुः । द्वादशारत्नी रशना | १३।१।२।२ |
| तदाहुः । द्विरुपभृति गृह्णी० | २।६।१।१३ |
| तदाहुः। न जुहुयान्नेदति० | ९।४।२।२८ |
| तदाहुः। न देवतायातिदि० | ४।३।४।३३ |
| तदाहुः। न ब्रह्मचारी | ११।५।४।१८ |

## ( छ )



## ( ज )



## ( त )

## ( द )

## ( ध )



## ( न )

## (प)

## ( फ )



## ( ब )

## ( य )

## ( श )

## ( ष )



## ( स )

## ( ह )

# * त्रुटिपरिमार्जनम् *

त्वरया प्रकाशनमुपगतायामस्यामनुक्रमणिकायां दृष्टिदोषात् तत्तत्स्थानस्खलिताः काण्डिकाप्रतीका इह निर्दिश्यन्ते—

( अ )

अंशुं गृह्णाति । सर्वत्वायैव ५।१।२।१
अंशूनेवाप्नोति । श्रेशी० ११।५।९।८
अंसदघ्ना भवति । अंस० १४।१।३।१०
अग्ने तव श्रवो वय इति ७।३।१।२९
अजायै पयसाच्छृणत्ति ६।५।४।१६
अञ्जलिना । न ह्येतस्येतीवा० ९।४।२।४
अथ पशोः प्राणानद्भिः ३।८।२।४
अथ बाहू विमार्ष्टि । मित्र० ५।३।५।२८
अथ यदा सुषुप्तो भवति १४।५।१।२१
अथ यद् ध्रुवायामाज्यं परि० ३।१।४।१७
अथ वा अतोऽह्नान्निवाहः १२।२।३।११
अथ वालखिल्या उपदधाति ८।३।४।१
अथाग्रेण शालां तिष्ठन्नभ्यङ्क्ते ३।१।३।७
अथाध्यात्मम् । प्राणो वा १०।६।२।४
अथाहवनीय एव पुष्करपर्णमुप० ७।३।१।९
अथैनञ्छङ्कुभिः परिणिहन्ति १३।८।४।१
अष्टौ वसवः । एकादश ४।५।७।२

( इ )

इदमेवान्तरिक्षम् । तस्मादे० ९।३।१।५
इन्द्रस्तुदुक्थ्यो द्वितीयमह० १३।७।१।४

( ओ )

ओ श्रावयेति वै देवाः १।५।२।२०

( त )

तदाहुः । अन्तिके मृत्युर्दूरा १०।५।२।१७
तस्य वा एतस्य ग्रहस्य ४।१।३।१५
तेऽग्निनैव त्वचं विपल्याञ्जयन्त ३।४।३।४
ते देवा वायुमब्रुवन् । वायविमं ४।१।३।७

( न )

निधायोदहरणं त्रिर्विस्ययते ९।१।२।६

( प )

पड्भिश्चतुर्भिरैदगन्निति १३।२।७।६

( फ )

फल्गुनीष्वग्नी आदधीत २।१।२।११

( य )

युनक्त सीरा वियुगा तनुध्व० ७।२।२।५

( स )

स गृह्णाति । मयि गृह्णाम्यग्रे ७।४।१।२
स यदि वृष्टिकामः स्यात् १।५।२।१९
स वै दक्षिणेऽग्नौ जुहोति २।५।२।२५

